चौखम्बा संस्कृत सीरीज आफिस, वाराणसी के संस्करण से पुनर्मुद्रित एवं प्रकाशित

चौखम्बा संस्कृत सीरीज

५८

****

श्रीखण्डदेवविरचितः

# मीमांसाकौस्तुभः

सम्पादकः

**पं० अ० श्रीचिन्नस्वामिशास्त्री**

( If any defect is found in this book, please return the copy by V. P. P. for postage to the publisher for exchange free of cost. )

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९९१

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : चौखम्बा प्रेस, वाराणसी

संस्करण : द्वितीय, वि० सं० २०४८

मूल्य : रू० ८९.०० ( नवासी रूपये )

The Publication has been brought out with the Financial assistance from the Govt. of India, Ministry of Human Resource Development.



के० ३७/९९, गोपाल मन्दिर लेन
पो० बा० १००८, वाराणसी–२२१००१ ( भारत )
फोन : ३३३४५८

अपरं च प्राप्तिस्थानम्

कृष्णदास अकादमी

पो० बा० नं० १११८
चौक ( चित्रा सिनेमा बिल्डिङ्ग ), वाराणसी–२२१००१
( भारत )
फोन : ५२३३५८

REPRINTED AND PUBLISHED FROM THE EARLIER
EDITION OF CHOWKHAMBA SANSKRIT SERIES
OFFICE, VARANASI

CHOWKHAMBA SANSKRIT SERIES

58

# MIMAMSA KAUSTUBHA

*( An exhaustive commentary of Jaiminisutra )*

BY

KHANDADEVA

Edited by

M. M. Pt. A. CHINNASWAMI SASTRI

(If any defect is found in this book, please return the
copy by V.P.P. for postage to the publisher
for exchange free of cost. )

CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-221001
1991

K. 37/99, Gopal Mandir Lane
Post Box No. 1008, Varanasi-221001 (India)
Phone : 333458

Second : Edition
1991
Price : Rs. 89-00 ( Rs. Eighty-nine )

The Publication has been brought out with the Financial assistance from the Govt. of India, Ministry of Human Resource Development.

Also can be had from
KRISHNADAS ACADEMY
Oriental Publishers & Distributors
Post Box No. 1118
Chowk, ( Chitra Cinema Building ), Varanasi-221001 (India)
Phone : 52358

श्रीः ।

# भूमिका

अद्याऽयं मीमांसाकौस्तुभाख्योऽनुत्तमो मीमांसाग्रन्थोऽध्येतॄणामत्यन्तोपकाराय मुद्राप्य प्रकाशं नीयते । केभ्यश्चन वर्षेभ्यः पूर्वमस्मदध्ययनकाले श्रीकाञ्च्यामंशतो मुद्रितोऽर्थवादभावार्थशब्दान्तरपादेष्वेवोपलब्धिमानासीदयं ग्रन्थः । तदा मद्रपुरीय-संस्कृतमहाविद्यालये विद्यामिमामधिगच्छद्भिरस्माभिः ग्रन्थस्याऽस्य मुद्रितेतरभागः, अध्ययनार्थं क्वचिद्भाट्टदीपिकापङ्क्तिपूत्पन्नानां संशयानामुच्छेदार्थञ्च अडयार् (Adyar Library) पुस्तकालयादितः स्वहस्तेन लिखित्वैव समानेतव्य आसीत् । अध्ययन-समयेऽस्माभिरनेकशो गुरुमुखाच्छ्रुतम्—ग्रन्थोऽयमसाधारणः पूर्वमीमांसाशास्त्रे, को वाऽवशिष्टमस्य भागं मुद्राप्योद्धरिष्यतीति, तथैवाऽध्यापनकालेऽपि स्वयमनुभूतञ्च । अति-संक्षिप्ताः कठिनतमा अन्तस्सारा भाट्टदीपिकापङ्क्तयो याः, तास्सर्वा अपि तत्तत्स्थली-यकौस्तुभावलोकनेन तथा विकसिता भवन्ति, यथा नितरां समुल्लसति चेतो निधिलाभ इवेति नेदं तिरोहितं मीमांसामर्मज्ञानाम् ।

यद्यप्ययं ग्रन्थः स्वतन्त्रसूत्रव्याख्यारूपः, तथाऽपि भाट्टदीपिकाया व्याख्यारूप एव, अथ वा अस्यैव सङ्कुचितं रूपं यद्भाट्टदीपिका नामेति । नवीनं पन्थानमाश्रित्य ग्रन्थ-मिममारचयता ग्रन्थकर्त्रा न केवलं नवीनानां शास्त्रान्तरपरिशीलनपरिपक्वशेमुषीणां मनीषिणां मनस्तोषितम्, मीमांसापदार्थास्तत्र तत्र सर्वे तथा सन्निवेशिताः यथा कस्य-चित्पदार्थस्य परिज्ञानार्थं अन्यग्रन्थावलुलोकयिषा नोदियात् । भाट्टमतमवलम्ब्य ग्रन्थ-मिमं रचितवताऽनेन मीमांसकशिरोमणिना शबरकुमारिलभवदेवपार्थसारथिसोमनाथा-प्पय्यदीक्षिताद्युक्तयो युक्तियुक्ता न काश्चिदप्युपेक्षिताः अनुक्तिसहा न काश्चिदपि न समालोचिताः । अत एवाऽभियुक्तानां मीमांसापारद्दश्वनामुक्तिः—'यदि कण्ठस्था खण्ड-देवग्रन्थत्रयी किमन्यैर्ग्रन्थैरि'ति नाऽतिशयोक्तिः । अतोऽस्माभिः पञ्चनदक्षेत्रे ( Tiru-vadi, Tanjore ) इदंशास्त्राध्यापकपदमधितिष्ठद्भिः भाट्टदीपिकाग्रन्थग्रन्थिभेदनार्थ-मस्य ग्रन्थस्याऽत्यावश्यकतां पश्यद्भिः तदानीमेवाऽस्य मुद्रणं मनस्यभिसंहितमासीत् । परन्तु तदुचितसामग्रीसम्पदभावेनाऽभिसन्धिमात्रेणाऽवस्थितं तेन तदा । ततो भगवता जगदर्वित्राऽत्रैव काश्यां विश्वविद्यालयेऽध्यापनार्थमानीतोऽहं श्रीमता संस्कृतवाणीपरि-चर्यैकजीवितेन चौखम्बासंस्कृतपुस्तकमालाध्यक्षेण श्रीजयकृष्णदासगुप्तमहोदयेन सह सञ्जातपरिचयो न्यवेदयमेतन्मुद्रणं तस्मै । स च समनन्तरमेव मदीयां निवेदनां सफलयिष्यन्नारभतैतन्मुद्रणम् ।

( १ ) मदीयं पुस्तकमेकं मुद्रितभागावशिष्टं अडयारपुस्तकालयतो लिखित्वाऽऽनीतम् ।

( २ ) अस्मदाचार्यवर्याणां महामहोपाध्यायाद्यनेकविरुदावलीरलङ्कुर्वतां श्रीकुप्पुस्वामिशास्त्रिमहोदयानां अनुपमया कृपया प्राच्यग्रन्थसंरक्षणालयात् ( Madras Oriental Manuscripts Library ) मदनुजेन तिरुपतिसंस्कृतमहाविद्यालये मीमांसाध्यापकेन पं० रामनाथशास्त्रिणा लिखित्वा लेखयित्वा च दत्तं पुस्तकमेकम्,

( ३ ) पण्डितकुलभूषणै राजकीयमहाविद्यालयाध्यक्षैः पं० गोपीनाथकविराजमहोदयैः पुस्तकालयात्सदयं दापितमेकम्,

( ४ ) काशीस्थेभ्यः प्रसिद्धवैदिकेभ्यो बाबूदीक्षित जडे महोदयेभ्यो गृहीतमेकम्,

इति पुस्तकचतुष्टयमवलम्ब्य शोधितोऽयं ग्रन्थः । अध्यापनादिकार्ये ग्रन्थान्तरशोधने च व्यापृतोऽहं शनैश्शनैरेव कार्यमिदं कर्तुमशकम् । अत एतावान् ज्यायान् विलम्बस्समजनि, तथाऽपि समाप्तिमेयिवानयं ग्रन्थ इति नितरां प्रमोदस्थानम् । चतसृष्वप्यासु मातृकासु पाठभेदो नाऽस्ति तावानुल्लेखनार्ह इति नोल्लिखितस्सः । विषयवाक्यानां स्थानादिकं परमन्विष्य यथोपलम्भं सूचितमधष्टिप्पण्याम् । तेषां सङ्केतशब्दानां विवरणवेदनिका सूचिकाऽपि सन्निवेशिता सर्वपरिज्ञानाय । एवं रीत्या समुद्रय प्रकाशितोऽयं मीमांसाकौस्तुभाख्यो ग्रन्थमणिः ।

## ( ग्रन्थकर्तृसमयनिर्णयः )

अस्य ग्रन्थरत्नस्य निर्माता सर्वतन्त्रस्वतन्त्रः पण्डितकुलललामभूतो देवकुलोत्पन्नो दाक्षिणात्यः श्रीखण्डदेव इति । अस्य जीवनकालः वैक्रमी सप्तदशशताब्दी, निर्याणकालश्च १७२३ परिमितो वैक्रमो वत्सर ( 1665 A. D. ) इत्यवोचं मीमांसान्यायप्रकाशभूमिकायाम् । तदुपष्टम्भके प्रमाणे चेमे—

वाराणस्यां चित्पावनाख्यदाक्षिणात्यब्राह्मणानामन्येषां च परस्परं कश्चन विवादस्समजनि । तच्छमनार्थं १७१४ वैक्रमे हेमलम्बवत्सरे मुक्तिमण्डपे पण्डितानां महती काचन सभा सम्मिलिता । तत्र व्यवस्था काचन लिखिता, यस्याः प्रतिलिपिर्नीचैरुद्धृता—

"मुक्तिमण्डपांतील निर्णय शक १५७९, सन् ई० १६५७

श्रीविश्वेश्वरो विजयतेतराम् ।

श्रीः । श्रीः । अथ देवर्षिविप्राणां काश्यां श्रीमुक्तिमण्डपे ।
यतिमिश्रत्रिपश्चिद्भिस्सद्ब्राह्मण्यं विविच्यते ॥ १ ॥

तत्र तावत् पूज्यपादपरमहंसपरिव्राजकमहाराष्ट्रकर्णाटककोंकणतैलङ्गद्राविडादि-

सकलज्ञातीयविद्वद्गृहस्थनिचयसम्मतया वेदशास्त्रलोकतो विमृश्य देवर्षिब्राह्मणा वेदशास्त्रपुराणेभ्योऽधिगतपरमार्थाः क्रतुयजनयाजनादिसदाचारशीलाः पङ्क्तिपावनाश्शरीरान्वयार्हाः अत्युत्तमब्राह्मण्यशालिनः शिष्टानुष्ठितशरीरान्वयाश्चेति सिद्धान्तितम् । दृष्टं चैतत् भट्टमीमांसकश्रीभट्टरघुनाथाख्यसूरिभिः । मणिकर्णीत्युपाख्यस्याऽनन्तभट्टस्य कन्यका । देवर्षेः प्रसमुद्वाह्य वाजपेययजिः कृता । भूयांसश्चेद्दशा अन्ये तद्वंशीया वयं च ते । ब्रुवाणा दोषमत्रार्थे विद्वद्भिः परिशोधिते । विश्वेशद्रोहिणो ब्रह्मघातिनश्च भवन्ति ते । इतिदिक् ॥ लिखितं चैतन्मीमांसकभट्टलक्ष्मणेन विद्वदनुज्ञातेन । संवति कृतवक्त्रगाब्ज १७१४ सम्मितौ नन्दशैलशरभ १५७९ मितशाके (=। 1657 A. D.) हेमलम्बशरदि समपत्रं (?) ज्ञायते सकलभूसुरवृन्दैः ।" इति ।

व्यवस्थापत्रेऽस्मिन् तदानीन्तनानां वाराणसेयानां सर्वेषां पण्डितानां हस्ताक्षराणि गृहीतानि यन्मध्ये श्रीमतां खण्डदेवमहोदयानामपि हस्ताक्षराणि विलसन्ति । अतस्तत्कालजीविन इमे इति निश्चप्रचम् ।

भाट्टदीपिकाव्याख्यायाः प्रभावल्या अन्ते तत्कर्त्रा श्रीकविमण्डनशम्भुभट्टेन खण्डदेवनिर्याणकाल उल्लिखितस्तच्छिष्येण । स चेत्थम्—

> वर्षे नेत्रद्विसप्तद्विजपतिगणिते ( सं० १७२२ ) मासि ······
> वारे जैवे प्रभाते सकलपितृतिथौ प्रोष्ठपद्याः परस्याम् ।
> काश्यां श्रीब्रह्मनाले निरुपमचरितः खण्डदेवाभिधानः
> प्राप्तः श्रीब्रह्मभावं विबुधवरगुरुर्ब्रह्मवर्यो यतीन्द्रः ॥ इति ॥

पण्डितवरेण्यैरेभिः काश्यामेवाऽवस्थाय पूर्वे वयसि गार्हस्थ्यं धर्मं यथावदनुष्ठाय चरमे वयसि संन्यासं गृहीत्वा तस्मिन्नाश्रमे श्रीधरेन्द्रयतीन्द्राभिख्यामवाप्य कञ्चन कालं यापयित्वाऽन्ते ब्रह्मभूयं गतमित्यपि प्रतीयते पूर्वोदाहृतश्लोके 'ब्रह्मवर्यो यतीन्द्रः' इति विशेषणद्वयोपादानात्, एतत्पूर्वोदाहृतश्लोके 'यः खण्डदेवनामाऽऽसीत् श्रीधरेन्द्राभिधां गतः' इति लेखनेन च । एतेषां पितरोऽपि श्रीरुद्रदेवनामानः पूर्वोत्तरतन्त्रनिष्णाता आसन्नित्यत्र, तेऽपि काश्यामेवाऽवसन्नित्यत्र च ग्रन्थेऽस्मिन् तत्तत्पादान्ते 'श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीरुद्रदेवसूनोः खण्डदेवस्य कृतौ' इत्येतद्ग्रन्थकर्तृलेखनम्, (१) 'देवादेवाऽध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्' इति जगन्नाथपण्डितोक्तिश्च प्रमाणम् ।

एतेषां गुरवः श्रीविश्वेश्वरापरपर्यायाः श्रीगागाभट्टाः दिनकरभट्टपुत्रा इति प्रसिद्धिः । तेषां परम्परा च पण्डितलोकविदितैवेति नाऽत्र विशेषतो वक्तव्यमस्ति, तथाऽपि (२) भाट्टदिनकरस्थैः दिनकरभट्टीयैरेव पद्यैस्तत्पुनस्स्मारयामि पण्डितवर्येभ्यः—

विश्वामित्रमुनीश्वरान्वयसुधासिन्धौ सुराणां द्रुमः
श्रीरामेश्वरनामधेय उदभूदाम्नायशाखोज्वलः ।
नानाशास्त्रफलैस्समस्तवसुधावृन्दारकाणां परं
सन्तोषं जनयन् रघूद्वहलसत्सेवालतालिङ्गितः ।।
श्रीरामेश्वरतस्ततस्समभवत् श्रीभट्टनारायणः
शास्त्राम्नायपरायणः खलमतध्वान्तैकविद्रावणः ।
काश्यां पातकिविद्रुतं भगवतो विश्वेश्वरस्याऽचलं
लिङ्गं भोग्यवशात्सुखाय जगतां सम्स्थापयामास यः ।।
नारायणस्याऽऽत्मज आविरासीत्
स रामकृष्णोऽर्चनहृष्टरामः ।
पराजितो वागधिपोऽपि येन
विद्यानवद्यप्रतिभाधिकेन ।।
दिनकर इति रूढस्तत्सुतो ग्रन्थमेनं
मतियुतसुखबोध्यं सर्ववक्तव्ययुक्तम् ।
असृजदथ समर्थानन्दसच्चित्स्वरूपे
रघुपतिपदपद्मे जन्मसार्थक्यमाप ।। इति

दिनकरभट्टानां सूनव इमे गागाभट्टा इति तैरेवोक्तं भाट्टचिन्तामणेरादावन्ते च ।

## ( श्रीखण्डदेवीयाः ग्रन्थाः )

एभिः पण्डितशिरोमणिभिः काश्यामेवाऽवस्थितैः मीमांसायामेव ग्रन्थत्रयी निर्मिता —भाट्टकौस्तुभः, भाट्टदीपिका, भाट्टरहस्यञ्चेति । तत्र प्रथमः प्रथमाध्यायद्वितीयपादत ( अर्थवादपादतः ) आरभ्य तृतीयाध्यायतृतीयपादस्थसप्तमाधिकरण ( बलाबलाधिकरण ) पर्यन्तः, द्वितीयश्च तत एवाऽऽरभ्य द्वादशाध्यायपर्यन्तः, तृतीयश्चाऽधिकरणसम्बन्धमनपेक्ष्य लकारार्थधात्वर्थविभक्त्यर्थनिरूपणपरश्शाब्दबोधग्रन्थः ।

यद्यपि भाट्टदीपिका प्रथमपादमारभ्य महीशूरपुरे मुद्रिता, तथाऽपि खण्डदेवविरचिता भाट्टदीपिका द्वितीयपादमारभ्यैवेति अध्ययनपरम्परायां प्रसिद्धिः । एवं भाट्टरहस्येऽपि इदानीं यावानुपलभ्यते भागस्तावानेव रचित इत्येव गुरुपरम्पराप्रणाली । कौस्तुभस्तु बलाबलाधिकरणपर्यन्तमेव रचित इति सुस्पष्टमेव श्रीशम्भुभट्ट एतच्छिष्यः स्वीयप्रभावलीग्रन्थे आदौ—'अत्र च यद्यपि बलाबलाधिकरणसमाप्तिपर्यन्तं स्वकृतेन कौस्तुभग्रन्थेन व्याख्यातार्था भाट्टदीपिके'त्यादिग्रन्थेनाऽभिदधाति ।

---

१. 'देवादेव खण्डदेवादेवेत्यर्थः' इति प्रदीपे नागेशः ।

२. भाट्टदिनकरं नाम शास्त्रदीपिकाव्याख्या दिनकरभट्टकृता ।

यद्यपीमे कौस्तुभे भाट्टदीपिकायां च स्वप्राचीनान् ग्रन्थकारान् यथावसरं खण्डयन्ति, तथाऽपि शास्त्रदीपिकाप्रकाशबालप्रकाशादिग्रंथकर्तॄणां श्रीशंकरभट्टानां खण्डने बद्धादरा आसन्निति प्रतीयते, यतः प्रायशोऽधिकतरं तेषामेव खण्डनमुपलभ्यते "यत्त्वत्र कैश्चित्" "यत्तु कैश्चित्" इत्यादिना नामोल्लेखनं विना। ते चैतेषां गुरोर्भ्रातुष्पुत्रा आसन्।

यद्यपि शङ्करभट्टखण्डने मतिरतितरां प्रासरदेषाम्, तथाऽपि तदुपरि गौरवबुद्धिरेवाऽऽसीदेषामिति ग्रंथावलोकनादवगम्यते, यतो नामोल्लेखनं न केवलं कुत्राऽपि कृतम्, परन्तु मण्डनमिश्रपार्थसारथिमिश्रप्रभृतिषु विषये "जितं मण्डनेन" "यत्त्वत्र पार्थसारथिः" "यत्वत्र पार्थसारथिना" इत्येकवचनमेव सावहेलं प्रयुञ्जानैरेभिः "कैश्चिदि"ति सबहुमानं बहुवचनप्रयोग एव कृतस्तद्विषये।

एवं खण्डदेवग्रंथेषु प्राथमिकोऽयं ग्रंथः इदम्प्रथमतया प्रकाशितः। प्रार्थये च बुधवरान् सर्वाङ्गीणसुन्दरमर्मु यथावदुपयोज्य सफलयन्तु मदीयं परिश्रममिति। सावधानेन कृतेऽपि शोधने मर्त्यमात्रसुलभा दोषाः क्वचिदवतिष्ठेरन्नेवेत्यभ्यर्थये तान् तन्मर्षणमपि।

मातृकादानेनाऽस्मभ्यं बहूपकृतवद्भ्यः पण्डितवर्येभ्यो बद्धधमर्णा वयमिति तेभ्यः कृतज्ञतामुपहरामि। शोधनादिकार्ये नितान्तमुपकृतवतेऽस्मत्प्रियशिष्याय श्रीपट्टाभिरामशर्मणे मीमांसाशास्त्रिणे बह्वीराशिषः प्रयुञ्जे। आशासे च सुरभारतीसमुद्धरणबद्धवर्मणे श्रेष्ठिवर्याय श्रीजयकृष्णदासगुप्तमहोदयाय चौखम्बासंस्कृतपुस्तकमालाध्यक्षाय श्रेयःप्राप्तिमुत्तरोत्तरामिति शिवम्।

| | |
|---|---|
| आश्विन शुक्ल द्वितीया सं० १९९०<br>२१ सितम्बर, १९३३, वाराणसी | **चिन्नस्वामिशास्त्री**<br>संशोधकः |

॥ श्रीः ॥

# मीमांसाकौस्तुभस्य विषयसूची

## प्रथमाध्यायस्य द्वितीयः पादः—



## प्रथमाध्यायस्य तृतीयः पादः—



## प्रथमाध्यायस्य चतुर्थः पादः—

द्वितीयाध्यायस्य द्वितीयः पादः—



द्वितीयाध्यायस्य तृतीयः पादः—



द्वितीयाध्यायस्य चतुर्थः पादः—

**तृतीयाध्यायस्य प्रथमः पादः—**



**तृतीयाध्यायस्य द्वितीयः पादः—**

तृतीयाध्यायस्य तृतीयः पादः—



इति विषयसूची समाप्ता ॥

## मीमांसाकौस्तुभप्रथमाध्यायतृतीयपादटिप्पणीस्थानां साङ्केतिकशब्दानामर्थविवरणम् ॥

**आप. श्रौ.......आपस्तम्बश्रौतसूत्रम्,** अत्र प्रथमा संख्या प्रश्नं सूचयति, द्वितीया कण्डिकां, तृतीया च सूत्रसंख्याम् ।

**आश्व. श्रौ.......आश्वलायनश्रौतसूत्रम्,** अत्र अध्यायकण्डिकासूत्रसंख्याः ।

**ऋ. सं.......ऋग्वेदसंहिता,** अत्र संख्याः क्रमादष्टकाध्यायवर्गान् सूचयन्ति ।

**का. श्रौ.......कात्यायनश्रौतसूत्रम्,** अत्राध्यायसूत्रसूचिके संख्ये ।

**का. सं.......काठकसंहिता,** अत्र प्राथमिकी संख्या स्थानकं बोधयति, द्वितीया तु अनुवाकम् ।

**गो. गृ.......गोभिलगृह्यसूत्रम्,** अत्र प्रपाठककाण्डिकासूत्रसूचिकाः क्रमात् संख्याः ।

**गौ. ध.......गौतमधर्मसूत्रम्,** अत्र संख्ये क्रमादध्यायसूत्रसंख्यासूचिके ।

**छा. उ.......छान्दोग्योपनिषद्,** अत्र संख्याः क्रमादध्यायखण्डब्राह्मणसंख्यासूचिकाः ।

**जै. सू.......जैमिनिसूत्रम्,** अत्र संख्याः क्रमादध्यायपादसूत्रसंख्यासूचिकाः ।

**ता. ब्रा.......ताण्डयमहाब्राह्मणम्,** अत्राध्यायखण्डब्राह्मणसंख्याः ।

**तै. आ....तैत्तिरीयारण्यकम्,** अत्र संख्ययोः क्रमात् प्रपाठकानुवाकसूचकत्वम् ।

**तै. ब्रा......तैत्तिरीयब्राह्मणम्,** अत्र क्रमात् अष्टकप्रपाठकानुवाकदशकसूचिकाः संख्याः ।

**तै. सं.......तैत्तिरीयसंहिता,** अत्र काण्डप्रपाठकानुवाकपञ्चशतां ज्ञापिकाः संख्याः ।

**तं. वा. पृ.......तन्त्रवार्तिकम्, पृष्ठम् ।**

**नि. .......निरुक्तम्,** अत्र संख्याः अध्यायपादखण्डसूचिकाः ।

**प. स्मृ.......पराशरस्मृतिः,** अत्राध्यायश्लोकसूचिके संख्ये ।

**पा. सू.......पाणिनिसूत्रम्,** अत्राध्यायपादसूत्रसूचिकाः संख्याः ।

बौ. ध.......बौधायनधर्मसूत्रम्, अत्र संख्याः प्रश्नाध्यायसूत्रसंख्याः ।

म. भा. आदि...महाभारत, आदिपर्व, अत्र संख्ये अध्यायश्लोकसंख्ये ।

म. स्मृ......मनुस्मृतिः, अत्र पूर्ववत् ।

मै. सं........ } मैत्रायणीयसंहिता, अत्र संख्याः क्रमात् काण्डप्रपाठकानुवाक-
मैत्रा. सं.... }
[ संख्याः ।

या. स्मृ....... याज्ञवल्क्यस्मृतिः, अत्राध्यायश्लोकसूचिके संख्ये ।

लाटचा. श्रौ.......लाटचायनश्रौतसूत्रम्, प्रपाठककण्डिकासूत्रसूचिका अत्रत्याः
[ संख्याः ।

व. स्मृ......वसिष्ठस्मृतिः, अत्राध्यायसूत्रसूचिके संख्ये ।

वा....... कात्यायनवार्तिकम्, अत्र संख्याः पाणिनीयसूत्रवत् ।

श. ब्रा......शतपथब्राह्मणम्, अत्र काण्डाध्यायकण्डिकाब्राह्मणसंख्याः ।

श्लो. वा......श्लोकवार्तिकम् ।

---

## मीमांसाकौस्तुभप्रथमाध्यायचतुर्थपादीयटिप्पणीस्थानां साङ्केतिकशब्दानामर्थविवरणम् ।

इदमत्रावधेयम्—ये तावत् तृतीयपादस्थाः साङ्केतिकशब्दाः अत्राप्याम्रेडिताः तेषां विवरणं तत्रैव कृतमिति न पुनस्तत्रापीदानीं व्याप्रियते । परन्तु ये ततोऽतिरिक्ता एतत्पादस्थाः तेषामेवेदानीं विवरणं क्रियते—इति ।

उ. सू. ....उणादिसूत्रम् ।

काव्यप्रका. काव्यप्रकाशः ।

का. श. काण्वशतपथब्राह्मणम् ।

कुमा.... कुमारसम्भवः ।

पू. मीं. पूर्वमीमांसा ।

बौ. श्रौ.... बौधायनश्रौतसूत्रम् ।

सत्या. श्रौ.....सत्याषाढश्रौतसूत्रम् ।

## मीमांसाकौस्तुभगतानां सूत्राणां

# सूची ॥

## मीमांसाकौस्तुभप्रथमाध्यायतृतीयचतुर्थपादयोः शुद्धाशुद्धपत्रिका

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १७ | निमुल | निर्मूल |
| ४ | १४ | यक्तिचित् | यत्किञ्चित् |
| १६ | ११ | अवभ्यक | आवश्यक |
| २२ | २१ | मप्राण्या | मप्रामाण्या |
| २३ | ११ | तारस्येन | तारतम्येन |
| २५ | ८ | प्रमाणमिति | प्रमाणमस्ति |
| २८ | १७ | गृहीतत्व | गृहीतृत्व |
| ३२ | ६ | प्रयोम | प्रयोग |
| ४० | १९ | मन्यने | मन्यते |
| ४२ | २० | पुत्राशो | पुत्रशो |
| ४४ | १४ | नेकल्पनं | नेकत्वकल्पन |
| ,, | १७ | स्मितपक्षे | स्मिन् पक्षे |
| ४८ | २३ | व्यहृति | व्याहृति |
| ५२ | २ | संस्कार्यं | असंस्कार्यं |
| ,, | १२ | अविवक्षित्वे | अविवक्षितत्वे |
| ५३ | १० | विशेषा | विशेषा |
| ,, | १६ | देर्विवक्षा | देरविवक्षा |
| ५४ | १७ | वुद्धानु | बुध्यानु |
| ,, | १८ | द्वष्टर्थं | द्वष्टार्थं |
| ५६ | ७ | नाह्यक्षा | नह्यक्षा |
| ६२ | ६ | तनेरैव | तनैरेव |
| ६८ | १६ | सापिण्डानि | सापिण्ड्यानि |
| ,, | १७ | प्रत्तेः | प्रवृत्तेः |
| ७१ | १ | विहात् | विवाहात् |
| ७५ | १ | कार्यास | कर्पास |
| ,, | ४ | द्रशाना | द्रशना |
| ७९ | ७ | कोशेय | कौशेय |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८३ | २० | प्यथाप्र | प्यर्थाप्र |
| ८५ | २२ | पूर्वेपक्ष | पूर्वपक्ष |
| ८६ | १६ | लिङ्गादिषु | लिङादिषु |
| ९९ | २४ | प्रमाणिकी | प्रामाणिकी |
| १०१ | १० | आचेरषु | आचारेषु |
| ,, | १६ | अयुक्तम् | अयुक्ता |
| ,, | १७ | जातिविशषः | जातिविशेषः सः। |
| १०६ | १२ | दक्षिणात्या | दाक्षिणात्या |
| १०९ | १८ | तदनुगत | तदननुगत |
| ११२ | २ | पम्परया | परम्परया |
| ११६ | ६ | षङ्गपदान्य | षडङ्गपदान्य |
| ११७ | १ | सूत्रणौत्सगिके | सूत्रेणौत्सर्गिके |
| ,, | १७ | जपमन्वपाठ | जपमन्त्रपाठ |
| ,, | २३ | बाधवइति | बाध इति |
| ११८ | २ | स्वरापाठेन | स्वरपाठेन |
| ११९ | ४ | इतिवदेवम् | इतिवदेकम् |
| १२२ | २५ | वाक्यार्थस्यैव | वाक्यार्थस्येव |
| १२६ | १४ | वीचमुक्तम् | बीजमुक्तम् |
| ,, | १५ | शक्तिजत्वेऽन | शक्तिजत्वेन |
| १२७ | २३ | अष्टकादो | अष्टकादौ |
| १२९ | २१ | उपस्थिन | उपस्थित |
| १४० | १६ | गमकमिनि | गमकमिति |
| १५२ | ५ | संभवतित्युक्तं | संभवतीत्युक्ते |
| १५३ | २५ | अङ्गीकारेपि भावनायां | अङ्गीकारेऽपि वा सिद्ध-रूपत्वेन भावनायां |
| १६२ | ११ | पठिव्याना | पठितव्यानाम् |
| ,, | २४ | तदुत्तमरपठितैः | तदुत्तरपठितैः |
| १६३ | १० | विधिपदोदवो | विधिपदादेवो |
| ,, | १७ | पदान्तरर्था | पदान्तरार्थं |
| १६४ | १ | दार्बल्यम् | दौर्बल्यम् |
| १६५ | १२ | यागसन्धोऽभ्यु | यागसम्बन्धोऽभ्यु |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६८ | २२ | उद्भिदीनानां | उद्भिदादीनां |
| ,, | १५ | विदारेण | विदारणे |
| १७१ | २० | अवच्छेदकम् | अवच्छेदकः |
| १८८ | २३ | पृष्ठरूप | पृष्ठेरूप |
| १९४ | २२ | एकपृष्ठ पूर्वसा | एकपृष्ठापूर्वसा |
| २०० | १६ | वहिष्यवमान | बहिष्पवमान |
| २०१ | १३ | लभ्यादम | लभ्यादिम |
| ,, | २५ | धावत्वर्थ | धात्वर्थं |
| २०४ | ६ | रूपिनिमित्त | रूपनिमित्त |
| २०६ | ३ | ख्यातवृत्ते | ख्यातावृत्ते |
| २०७ | ११ | नानुपन्नः | नानुपपन्नः |
| २०८ | १९ | दव्यादि | नञादि |
| २.९ | ६ | अप्रासद्धत्वेन | अप्रसिद्धत्वेन |
| २१४ | १ | सन्दन्शेन | सन्दंशेन |
| ,, | ६ | न्तरसद्भावात् | न्तरासद्भावात् |
| २२३ | ५ | त्यानुशासन | त्यनुशासन |
| ,, | २२ | शेषत्वापर | शेषित्वापर |
| २२६ | १४ | नचवैमपि | न चैवमपि |
| २२८ | २२ | वरमग्नय | वरमाग्नेय |
| २४६ | ४ | पुराडाश | पुरोडाश |
| २४८ | ९ | तेषामेव | येषामेव |
| ,, | १० | संवधानवगतेः | संबन्धावगतेः |
| २५३ | ६ | वैश्वदेनपदेन | वैश्वदेवपदेन |
| ,, | १० | अनुवादापत्तेः | अनुवादापत्तिः |
| ,, | ११ | ,, | ,, |
| २५४ | ११ | सर्वाद्देशेन | सर्वोद्देशेन |
| २५९ | ७ | द्वादकपाल | द्वादशकपाल |
| २७७ | ३ | वार्तिका | वार्तिके |
| २७८ | ११ | तेन्निष्ठ | तन्निष्ठ |
| २८८ | १४ | आशकयते | आशंक्यते |
| ,, | १६ | अवगतेः | अनवगतेः |

श्रीः ॥

नमश्शिवाभ्याम् ॥

श्रीखण्डदेवविरचितः

# ॥ मीमांसाकौस्तुभः ॥

## प्रथमाध्याये द्वितीयः पादः ॥ ( अर्थवादपादः )

### ( प्रथममर्थवादप्रामाण्याधिकरणम् )

विघ्नध्वान्तनिवारणैकतरणिर्भक्तैकचिन्तामणि-
र्विद्याकाननगाहनैकसरणिर्मच्चित्तभूषामणिः ।
भूयादेष कुतर्ककर्कशधियां हर्ताऽपहर्ता तथा
मोहानां सुधियां सदैव सविता कात्यायनीसूनात्मजः॥१॥
वृन्दाविपिनविहारी गिरिवरधारी स्वकीयसुखकारी ।
मच्चित्तरङ्गचारी भूयान्नृत्यप्रियः कृष्णः ॥ २ ॥
शश्वद्बोधतरङ्गा विद्यागङ्गोत्तमाङ्गे यस्य ।
श्रीरुद्रदेवसंज्ञं जनकं वन्दे सदा स्फूर्त्यै ॥ ३ ॥

**सूत्रम्—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १–२–१. ॥ ( पू )**

### ( विषयसंशयौ )

अत्र "(१)सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्"

---

१. तै. सं. १–५–१. पुरा कदाचित देवा असुरैस्साकं युयुत्सवः कदाचिदस्माकं पराजये जीवनार्थमिदं भविष्यतीति मन्वानाः स्वनिकटस्थममूल्यं वस्तुजातमग्नौ निधाय योद्धुमगच्छन् । तत दृष्ट्वा लो-

"(१)वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादयोऽर्थवादा धर्माधर्मयोः प्रमाणं नवेति सन्देहः ।

( सङ्गतिः )

अत्र लक्षणसङ्गतिर्धर्माधर्मयोः प्रमाणनिरूपणात् सुलभैव । (२)यस्यापि मते वेदप्रामाण्यनिरूपणमध्यायार्थः, तस्याप्यस्मिन्नधिकरणे तावत्सङ्गतिस्सुलभैव । पादसमनन्तरसङ्गतिस्तु विध्यतिरिक्तवेदवाक्यप्रामाण्यनिरूपणात् स्पष्टा । नामधेयस्य च विध्यन्तर्भावस्य वक्ष्यमाणत्वान्नातिप्रसङ्गः । वाक्यपदेन वा पदरूपस्य नामधेयादेर्निरासः । अनन्तरसङ्गतिरपि पूर्वाधिकरणे विध्यर्थमपि निरूपितेऽपौरुषेयत्वे कर्तृस्मरणाभावरूपयुक्तिसाम्यादर्थवादेषु प्रसक्ते तद्वदेव धर्मप्रमोत्पादकत्वमस्ति ? न वा ? इति विचाराद्द्रष्टव्या ॥

( पूर्वपक्षः )

तत्राप्रमाणं धर्माधर्मयोरर्थवादा इति पूर्वः पक्षः । तथाहि-एते किं स्वातन्त्र्येण तयोः प्रमाणम् ? विध्येकवाक्यत्वेन वा ?

---

भाकृष्टचित्तोऽग्निः तैर्वस्तुभिस्साकं पलायते स्म। युद्धे जयं प्राप्य प्रतिनिवृत्ता देवा अग्निमपश्यन्तस्तमन्विष्य क्वचित् लब्ध्वा स्वीयानि वस्तूनि ततोऽगृह्णन् इति पूर्वसन्दर्भः । एवं गृहीतः सोऽग्निः अरोदीत् । यस्मादरुदत् तस्मात् तस्य रुद्रत्वम् , इति प्रकृतवाक्यार्थः ।

१.तै. सं. २-१-१. "वायव्यं श्वेतमालभेत भूतिकामः" इति विधिसन्निधिपठितोऽयमर्थवादः। वायुः क्षेपिष्ठा क्षिप्रगामिनी देवता । वैशब्दः प्रसिद्धौ। स्वेन भागधेयेन स्वसम्बन्धिना श्वेतपशुरूपेण हविषा यजमानस्तं प्रीणयति यदि स वायुः एनं यजमानं भूतिं प्रापयत्येवेत्यर्थः

२. प्राभाकरमतमिदम् ।

आद्येऽपि किं स्वशक्त्या ? (१)लक्षणाध्याहारादिभिर्वा ? नाद्यः; सदसद्रूपसिद्धार्थबोधकत्वेन धर्माधर्मबोधानुत्पादनात् । न द्वितीयः; लक्षणादिकं हि तात्पर्यानुपपत्त्या वा स्यात्,? अन्वयानुपपत्त्या वा ? न तावत्तात्पर्यानुपपत्तिः; धर्माधर्मतात्पर्यकत्वस्य प्रमाणान्तरेणासिद्धेः । न चाध्ययनविधिनैवार्थज्ञानार्थत्वेनाध्ययनं विदधता निष्प्रयोजनार्थज्ञानस्य भाव्यत्वानुपपत्तेः प्रयोजनवदर्थज्ञानार्थत्वमध्ययनस्य बोधयता अर्थवादानां धर्माधर्मयोस्तात्पर्यमवगम्यते । अतश्च स्वरसतस्तेषां विधिवत्तदनवाप्तेः लक्षणासिद्धिरिति वाच्यम् । अर्थज्ञानार्थत्वमध्ययनस्य लोकत एव सिद्धमिति तदंशे विधिवैफल्यात् । न चार्थज्ञाने उपायान्तरस्यापि पक्षे प्राप्तत्वादध्ययननियमांशे विधेरर्थवत्तास्त्विति वाच्यम् । नियमस्याप्यध्ययने तत्कार्ये वाऽर्थज्ञानेऽनुपयोगेन विधिवैयर्थ्यात् । न चावघातादिनियमवदपूर्वसाधनत्वो-

---

१. अध्याहारोऽश्रुताक्षेपो व्यत्यासो व्यवधिः पदैः । प्रतो विपरिणामोऽसौ प्रकृतिप्रत्ययान्यथा । वाक्यान्यथात्वकरणं व्यवधारणकल्पना । इति प्राचां सङ्ग्रहश्लोकस्सार्धः । तत्राध्याहारस्योदाहरणम्-विश्वजिता यजेतेति । अत्र स्वर्गकामपदाध्याहारः ॥ अश्रुताक्षेपस्योदाहरणम्-भाट्टमते शब्दादप्रतीतस्याप्यपूर्वस्याक्षेपः ॥ 'उपहूत उपह्वयस्व' इत्यत्र क्रमवैपरीत्येन पूर्वभागस्य सोमभक्षणार्थमाज्ञाप्रश्ने उत्तरभागस्याज्ञादाने विनियोगः । पदव्यवधानोदाहरणम्—"प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यत्र ये प्रतितिष्ठन्ति प्रतिष्ठासन्ति ते एता रात्रीरुपयन्ति उपेयुः इति यच्छब्दस्य व्यवहितेन प्रतितिष्ठन्तिपदेनान्वयः ॥ विपरिणामस्याप्येतदेवोदाहरणम्; 'प्रतितिष्ठन्ति' 'उपयन्ति' इत्यनयोः प्रतितिष्ठासन्ति, उपेयुः इति विपरिणामात् ॥ व्यवधारकल्पना तु-यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्" इत्यत्र । अत्र हि उपक्रमे दातुरेवं प्रजापतेरिष्टिकरणावगमात् तदनुरोधेन प्रतिगृह्णीयात्' इत्यस्य दानार्थकता कल्प्यते ॥ लक्षणा तु सिद्धान्तिनोक्तैव ॥

पयोगादर्थवत्ता। अध्ययनविधेरनारभ्याधीतत्वेन प्रकरणादपूर्वसाधनत्वानुपस्थितेः।

न च(१) पर्णतादाविवाव्यभिचरितक्रतुसम्बन्धात्तदुपस्थानम्, अर्थज्ञानस्य क्रतुं विनाऽप्यध्यापनादिद्वारा द्रव्यार्जनोपयोगसम्भवेन व्यभिचारात्।

न च नियमस्य पुरुषार्थत्वकल्पनया स्वर्गार्थं पापक्षयार्थं वा विधिरर्थवानस्त्विति वाच्यम्, एवमप्यध्ययनविधेरर्थज्ञानार्थत्वेनाध्ययनविधाने व्यापारोऽस्ति ? न वा ? आद्ये विध्यानर्थक्यम्। अन्त्ये अर्थवादानां प्रयोजनवदर्थतात्पर्यकत्वस्याध्ययनविध्यधीनत्वाभावान्न तल्लक्षणासिद्धिः।

एतेन "अनधीयाना व्रात्या भवन्ती" तिवचनादध्ययनाकरणे प्रत्यवायावगतावपि भावनाया भाव्यापेक्षायां दृष्टत्वात्प्रयोजनवदर्थज्ञानमेव भाव्यत्वेनाध्ययनविधिस्स्वीकरोतीत्यपास्तम्। अध्ययनविधेरर्थज्ञानभाव्यकत्वे तात्पर्यस्वीकारे लोकसिद्धत्वाद्विध्यानर्थक्यम्। अस्वीकारे भावनाया लोकदृष्टनान्तरीयकतया अर्थज्ञाने भाव्यतया सम्बध्यमानेऽप्यर्थवादकृतं श्रुतार्थज्ञानमेव भाव्यतया सम्बध्येत, न प्रयोजनवदर्थज्ञानम्; विधितात्पर्याभावात्। अतश्च लक्षणाया असिद्धिस्तदवस्थैव।

किञ्च सत्यामपि लक्षणादिसिद्धौ अनेकेष्वर्थवादेषु लक्षणाद्यपेक्षयाऽध्ययनाविधेरेवैकस्य अदृष्टार्थत्वकल्पनोचिता। आवश्यकं चाध्ययनविधेरदृष्टार्थत्वं (२)हुंफडाद्यध्ययनांशे। अत एवावैरूप्यादर्थवादांशेऽप्यदृष्टार्थत्वमेव कल्प्यम्।

---

१ 'यस्य पर्णमयी जुहूर्भवति न स पाप ँ श्लोक ँ शृणोति' इति वाक्यविहितपलाशवृक्षीयत्वादिवदित्यर्थः।

२ हुंफडादीनामर्थाभावादिति भावः।

न चैवं विध्यध्ययनस्याप्यदृष्टार्थत्वापत्तेस्तेषां धर्मे प्रामाण्यानापत्तिः, तदध्ययनस्यादृष्टार्थत्वेऽपि स्वशक्त्यैव विधीनां प्रयोजनवदर्थप्रमापकत्वरूपप्रामाण्योपपत्तेः । अतोऽध्ययनविधिस्स्वर्गार्थं पापक्षयार्थमेव वाऽध्ययनं विधत्ते, यथाश्रुतार्थज्ञानार्थं वा । अध्ययनमेव वा समानपदोपात्तत्वात् भावनाभाव्यमस्तु । न चैवमन्त्यपक्षद्वये प्रवृत्त्यनुपपत्तिः, अपुरुषार्थत्वादिति वाच्यम् । "अनधीयाना" इति वाक्येनाकरणे प्रत्यवायबोधनादेव प्रवृत्तिसिद्धेः । एवंच सर्वथा नाध्ययनविधिस्तात्पर्यग्राहक इति सिद्धम् । तस्मान्न तावत्तात्पर्यानुपपत्तिर्लक्षणाबीजम् ।

नाप्यन्वयानुपपत्तिः । "वायुर्वै क्षेपिष्ठा" इत्यादिपदार्थान्वयस्योपपन्नतरत्वात् । यद्यपि "ग्रावाणः प्लवन्ते" "(१)यजमानः प्रस्तर" इत्यादिष्वन्वयानुपपत्तिर्धर्माधर्मलक्षणाबीजं शक्यते वक्तुम्, तथापि धर्माधर्मयोर्निर्धारणाभावः । ग्रावाणोऽपि प्लवन्ते अतोऽन्येन चेतनेन प्लवितव्यम्, अथ वा ग्रावाणोऽपि मूर्त्वा यत्र प्लवन्ते तत्राऽन्येन जानता कथं प्लवितव्यमिति । यदि तु निषेधकल्पनातो विधिकल्पनायां लाघवं नियामकं कल्प्येत, ततो "(२)न बाहुभ्यां नदीं तरे" दित्यादिशास्त्रविरोधो वक्ष्यमाणो दुष्परिहरः । तस्मादुभयथापि स्वातन्त्र्यपक्षोऽयुक्तः ।

अथ विधिनिषेधैकवाक्यताबलेन प्राशस्त्याप्राशस्त्यलक्षणया प्रामाण्यमुच्यते, ततो वाक्यस्वारस्येन भिन्नवाक्यत्वप्रतीतेर्नैकवाक्यत्व एव प्रमाणं पश्यामः । नचान्यत् प्राशस्त्याप्राशस्त्यलक्षणायां प्रमाणमस्ति । अध्ययनविध्यदृष्टार्थत्वस्य स्थापितत्वात् ।

किञ्च किमिदं प्राशस्त्यमप्राशस्त्यं वा ? यदि गुणवत्त्वं दो-

---

१ तै. सं. १.७.४. प्रस्तरो दर्भमुष्टि विशेषः । २ मनुस्मृ. ४.७.

षयत्वं वा तच्छब्दवाच्यत्वेन लोके प्रसिद्धम्, यद्यपि विधि-निषेधविषयत्वम्, इष्टानिष्टफलकत्वविशिष्टेतिकर्तव्यताकत्वं वा गुणदोषवत्त्वम्? तदन्यतरसिद्धत्वान्नार्थवादापेक्षम्। न च स्तु-तिनिन्दयोर्विधिनिषेधोपकारकत्वं सम्भवति, तद्धि इच्छानिच्छो-त्पादकत्वेन वा स्यात्? प्रवृत्तिनिवृत्तिप्रतिबन्धकालस्योत्साहनि-वर्तकत्वेन वा? नाद्यः; विधिनिषेधाक्षिप्तेष्टानिष्टमूलकत्वादेव तत्सि-द्धेः। नान्त्यः; प्रवृत्तिनिवृत्तिहेतुभूतविधिनिषेधाभ्यामेव तत्सिद्धेः। एतेन साक्षात्प्रवृत्तिहेतुत्वं प्रत्युक्तम्। अर्थवादोपात्तस्तुतिनिन्दा-भ्यामेव तत्सिद्धेः विधिनिषेधवैयर्थ्यशङ्का तु अर्थवादेभ्यस्स्वर-सतस्स्तुतिनिन्दयोरप्रतीतेः अध्ययनविधिवशेन च प्रयोजनव-त्त्वावगमेऽपि स्तुतिनिन्दालक्षकत्व एव प्रमाणाभावान्निराकर्तव्या।

किञ्च सत्यपि विधेः प्राशस्त्यापेक्षत्वे निरर्थवादकविधौ विधेरेव प्राशस्त्यप्रतिपादने दृष्टशक्तिकस्य प्राशस्त्यपरत्वोप-पत्तौ नादृष्टशक्तिकार्थवादापेक्षणं युक्तम्। एवंचानपेक्षितत्वाद-योग्यत्वाच्च विद्यमानोऽपि सान्निधिर्नैकवाक्यत्वकारणमिति न धर्माधर्मयोः प्रमाणमर्थवादाः। न च धर्माधर्मयोः प्रामाण्यसम्भवः; वायुक्षेपिष्ठत्वादीनां मानान्तरप्राप्तत्वेनानधिगतार्थगन्तृत्वरूपप्रा-रूप्यप्रामाण्यासम्भवात्। 'ग्रावाणः प्लवन्त' इत्यादौ याथार्थ्यल-क्षणस्याप्यसम्भवाच्च। तस्मादप्रमाणमर्थवादाः॥

सूत्रं तु आम्नायस्य(१)तद्भूताधिकरणे अंशत्रयविशिष्ट-भावनारूपक्रियाप्रतिपादकत्वेन प्रामाण्यस्य स्थापितत्वात्, अत-त्प्रतिपादकानामर्थवादानां, आनर्थक्यम् प्रयोजनवदर्थराहि-त्यम्। तस्मादप्रमाणमेवंजातीयकमर्थवादजातमिति व्याख्येयम्॥

ननु सूत्रे आदावर्थवादमन्त्रनामधेयानां त्रयाणां सामान्य-

---

१ पू. मी. १-१-७.

तोऽप्रामाण्यपूर्वपक्षं कृत्वा तथैव सिद्धान्तसूत्रे निराकरणं कृतं, तत् पृथगधिकरणे मन्त्रनामधेययोः पृथगप्रामाण्यस्य निराकरिष्यमाणत्वेन पुनरुक्तत्वादनुपयुक्तत्वाच्चोपेक्षितम् । मूले तु शिष्यशिक्षार्थं कृतमिति वेदितव्यम् ॥ १ ॥

## सू–शास्त्रदृष्टविरोधाच्च ॥ १–२–२ ॥ ( पू )

किञ्च 'वायुर्वै क्षेपिष्ठे' त्यादौ धर्मप्रमानुत्पादनेऽपि स्वार्थेऽपि तावत्सत्यत्वानिश्चयः । 'सोऽरोदी'दित्यादावप्यतीतार्थकथनेन योग्यानुपलब्ध्यभावान्न स्वार्थासत्यत्वानिश्चयः । "स्तेनं मनोऽनृतवादिनी वाग्" इत्यत्र तु स्तेयमनृतवदनशीलत्वञ्च वाङ्मनसयोरुच्यमानं योग्यानुपलब्ध्या स्वार्थेऽप्यप्रामाण्यमापादयति । यदि त्वौपचारिकं स्तेनशब्दलक्षितं प्रच्छन्नरूपत्वं मनसो, वाचश्च प्रायिकमनृतवादिनीत्वमनूद्येत, ततो (१)भूतानुवादादप्रामाण्यम् ।

अथ तु प्रामाण्यलिप्सया पूर्वोक्तदूषणगणमभ्युपगम्याप्यध्याहारादिभिर्विधिः कल्प्येत–वाङ्मनसे अपि यतः स्तेनानृतवादिनी तस्मादन्येनापि पुंसा स्तेयं मृषोद्यञ्च कर्तव्यमिति, तत्राप्ययमपूर्वविधिर्वा स्यात् ? परिसंख्याविधिर्वा ?–द्रव्यार्जनं वाग्व्यवहारं वा कुर्वन् स्तेयातिरिक्तं मृषोद्यातिरिक्तञ्चोपायं न कुर्वीतेति । नियमविधिर्वा–स्तेयं मृषोद्यञ्च कुर्वीतैवेति । नाद्यः; प्राप्तार्थत्वात्, स्वर्गार्थत्वकल्पने च गौरवापत्तेः; 'स्तेयं न कुर्यात्' 'नानृतं वदे' दित्यादिशास्त्रस्यापूर्वविषयकत्वकल्पनाय संकोचरूपबाधापत्तेश्च । न द्वितीयः; दोषत्रयापत्तेः, परिसंख्याफलकत्व-

---

१ प्रमाणान्तरसिद्धार्थबोधकत्वेनाज्ञातज्ञापकत्वाभावादिति भावः

स्य सत्यां गतावन्याय्यत्वाच्च । 'ब्राह्मणः प्रतिग्रहादिना द्रव्य-मार्जयेत्' 'सत्यमेव वदे'दित्यादिशास्त्राविरोधश्च तदवस्थः ।

एवं यद्यपि गौरवत्रैदोष्यभिया (१)ऋतौ भार्यामुपेया' दितिव-न्नियमविध्याश्रयणं, तथापि "स्तेयं न कुर्या"दित्यादिशास्त्रविरो-धस्तदवस्थ एव । न च(२) ग्रहणाग्रहणवद्विकल्पः, क्लृप्तकल्प्यत्वेन वैषम्यात् । नच(३) "न तौ पशौ करोती" तिवत् कल्प्यविधिप्रा-प्तेनापि क्लृप्तविधिविहितस्योपजीव्यत्वात् विकल्पोऽस्त्विति वा-च्यम् । तद्वदिह निषेधस्य रागप्राप्तस्तेयानृतवादोपजीवनेन कल्प्य-विध्युपजीवकत्वाभावात् । अतश्शास्त्रविरोधापत्तेरप्यप्रमाणम् ।

किञ्च "धूम एवाग्नेर्दिवा ददृशे नाग्निः" "अर्चिरेवाग्नेर्नक्तं ददृशे न धूम" इत्यादेर्दृष्टविरोधात् स्वार्थेऽप्यप्रामाण्यं निर्विवा-दम् । एवं तदुपपादकस्य-"दिवाग्निरादित्यं गतो रात्रावादि-त्यस्त "मित्यस्यापि । अतश्च निरालम्बनत्वात्सिद्धान्त्यभिप्रे-तस्तावकत्वेन विध्येकवाक्यतापि दुरुपपादा ।

तथोदाहरणान्तरेऽपि "न चैतद्विद्मो ब्राह्मणास्स्मो वयमब्रा-ह्मणा वे" त्यत्र दृष्टविरोधः ।

ननु नायं दृष्टविरोधः,(४) "सवर्णेभ्यस्सवर्णासु जायन्ते हि सजातय" इत्यादिशास्त्रगम्यत्वाद्ब्राह्मणत्वादीनाम् । ब्राह्मण-

---

१ गौ.ध. ५-१. अस्य नियमविधित्वं परिसंख्याविधित्वमित्युभ-यमप्यङ्गीकृतं शास्त्रकारैः ।

२ अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यत्र विहितप्रतिषेधात् यथा विकल्पः तथेत्यर्थः ।

३ तौ आज्यभागौ पशुयागे न करोतीत्यर्थः । अतिदेशस्य कल्प्य-त्वेन तत्प्रापितयोः आज्यभागयोः अतिदेशप्राप्तपदार्थविषयकेण निषेधेनात्यन्तबाधायोगात् विकल्प एवाङ्गीक्रियते तद्वदिहाप्यस्तु इत्याशङ्कितुराशयः ।

४ याज्ञ. स्मृ. १.९० ।

मातापितृसम्बन्धानभिज्ञस्य चक्षुस्सन्निकृष्टेऽपि ब्राह्मणोऽयमित्यननुभवाच्च। न च ब्राह्मणमातापितृसम्बन्धस्य ब्राह्मणत्वजात्याभिव्यञ्जकस्यानुपस्थितेर्न क्षतिरिति वाच्यम्, नैवोत्पादकब्राह्मणत्वजातिज्ञानस्य सहकारित्वम्, आत्माश्रयापत्तेः।

वस्तुतस्तु ब्राह्मणत्वादिजातावेव मानाभावः, विश्वामित्रादौ साङ्कर्यप्रसङ्गात्। अतो विशुद्धमातापितृजन्यत्वं, (१)"शमो दमस्तपश्शौचं सत्यमिन्द्रियनिग्रहः। ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्" इतिस्मृतेर्वा शमदमादिजन्यादृष्टवत्त्वं ब्राह्मणत्वम्। तस्य च प्रत्यक्षागोचरत्वात् कथं दृष्टविरोधोदाहरणत्वमिति चेत्—न; ब्राह्मणोऽयमित्यनुगतप्रतीत्या घटत्वादिजातिवत् ब्राह्मणत्वादिजातिस्वीकारे बाधकाभावात्। न च साङ्कर्यम्, विश्वामित्रे तपःप्रभावेन ब्राह्मणाधिकृतकर्मधिकारोत्पत्तावपि (२)ब्राह्मणत्वजातेरस्वीकारात्। एवं "मासेन शूद्रीभवति ब्राह्मणः क्षीरविक्रयादि" त्यादावपि न शूद्रत्वादिजातिमत्ता। अत एव शूद्रीभवतीत्यभूततद्भाववाचिच्विप्रत्ययप्रयोगः। न चाभिव्यञ्जकाभावः; ब्राह्मणत्वजातिमन्मातापितृसम्बन्धजन्यत्वस्याभिव्यञ्जकत्वात्। एकत्वेऽपि चोत्पादकव्यक्तिसम्बन्धित्वेनाभिव्यञ्जकत्वम्, उत्पाद्यव्यक्तिसम्बन्धित्वेन चाभिव्यंग्यतेति न विरोधः। तच्चाभिव्यञ्जकज्ञानं मातुः प्रत्यक्षेण, अन्येषां त्वाप्तोपदेशादिनेत्येतावान् विशेषः। न त्वेतावताऽभिव्यञ्जकज्ञानवतश्चक्षुषा ब्राह्मणत्वप्रत्यक्षे काश्चिद्विरोधः।

अत्र "(३)विन्नास्वेष विधिस्स्मृत" इतिवचनादभिव्यञ्जके

---

१. भगवद्गी. १. ८४.

२. ब्राह्मणत्वादि॰ इति क. पु.

३. याज्ञ॰ स्मृ. १.९२. विन्नासु विवाहितास्वित्यर्थः।

विवाहितपदं देयम् । तेन कुण्डगोलकयोर्व्यभिचारोत्पन्नयोर्न ब्राह्मणत्वमिति केचित् ।

वस्तुतस्तु गौरवापत्तेर्न विवाहितपददानम् । गोर्गव्युत्पन्नस्य गोत्ववद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नस्यैव ब्राह्मणत्वोपपत्तेः । 'विप्रास्वि'ति वचनं तु (१)ब्राह्मणादिविहितकर्मानाधिकारमात्रप्रतिपादनपरम् । कुण्डगोलकयोस्तु सत्येव ब्राह्मण्येऽवान्तरसंज्ञाकरणं कार्यविशेषविधानार्थम् । अत एव श्राद्धे(२) तयोर्निषेधो ब्राह्मणत्वेन प्रसक्तत्वात् सङ्गच्छते । न चोक्तविधाभिव्यञ्जकस्य सृष्ट्याद्यब्राह्मणेऽभावादव्यापकत्वम् । अस्मन्मते प्रलयप्रतिपादकवचनानामर्थवादत्वेन सृष्ट्यादेरनङ्गीकारात् ।

यत्तु शमादिवचनं, तन्न शमादिजन्यादृष्टवत्त्वं ब्राह्मणत्वमित्येतत्परम्, गौरवापत्तेः । नापि शमादीनां तदभिव्यञ्जकत्वपरम्, (३)शमादिमत्यदुष्टशूद्रे व्यभिचारात् । अतः प्रायिकद्योतकत्वपरम्, शमाद्यधिकारविधानार्थं वेति द्रष्टव्यम् । तस्माद्ब्राह्मणत्वस्य प्रत्यक्षसिद्धत्वात्तद्विरुद्धं "न चैतद्विद्म" इत्यादिवचनं स्वार्थेऽप्यप्रमाणम् ।

तथा "(४)को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेती" त्यादीनां स्वर्गसद्भावाज्ञानप्रतिपादनानामस्वार्थेऽपि प्रामाण्यम्; "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिशास्त्रस्य ज्ञापकस्य सत्त्वेन शास्त्रविरोधात् । अत्र शास्त्रविरोधदृष्टविरोधयोरुदाहरणद्वयं (५)परिहारभेदात् प्रदर्शितम् । व्युत्क्रमश्च परि-

१. ब्राह्मणाधिकारविहित. इति क. पु.

२. शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ । म. स्मृ. ३.१५६. इति मन्वाद्युक्तो निषेधः इत्यर्थः ।

३. शमादिमति दुष्टशूद्रे. इति. ख पु.

४. तै. सं. ६-१-१ ५. परिहारहेतुभेदात्. इति क. पु.

हारसूत्रक्रमानुरोधेन । तत्कारणं तु तत्रैव प्रदर्शयिष्यते ॥

सूत्रं निगदव्याख्यातम् ॥ २ ॥

## सू—तथा फलाभावात् । ॥ १—२—३ ॥ ( पू )

(१)गर्गत्रिरात्रब्राह्मणं प्रकृत्य श्रूयते—"शोभतेऽस्य मुखं य एवं वेद" इति । अत्र गर्गत्रिरात्रब्राह्मणार्थज्ञानकाले उच्यमानाया वर्तमानमुखशोभाया योग्यानुपलब्धिबाधितत्वात् स्वार्थेऽप्रामाण्यम् । न हि तज्ज्ञानकाले मुखशोभा दृश्यते, आयासेन विपरीतशोषदर्शनात् । अथ ज्ञानफलानुवादः, तदपि प्रत्यक्षविरुद्धम्, तदानीमजायमानत्वात् । न च कालान्तरे भविष्यतीत्यत्र (२)प्रमाणमस्ति । नच 'शोभत' इत्यस्यैव विभक्तिव्यत्ययेन भविष्यदर्थकत्वं परिकल्प्य रात्रिसत्रवत्फलपरत्वसम्भवः, ज्ञानस्य गर्गत्रिरात्रानुष्ठानयोग्यतासंपादनद्वारा तत्कर्तृसंस्कारस्य (३)तीर्थे स्नाती' त्यादिवत्परार्थत्वेन प्रयोजनानाकाङ्क्षत्वात्फलपरत्वकल्पनानुपपत्तेः । अतश्च पर्णमयीन्यायेनैवास्य फलकल्पकत्वासम्भवादप्रामाण्यम् । न च तेन पौनरुक्त्यम्—एतत्सूत्रे फलपरत्वासम्भवेनानर्थक्यमाशंक्यते,, तत्र तु फलपरत्वासम्भवेनैवार्थवादत्वं सिद्धान्त्यत इत्यदोषः ॥ सूत्रं निगदव्याख्यातम् ॥ ३॥

---

१. गर्गत्रिरात्रो नाम त्रिसुत्याकोऽहीनविशेषः । गर्गत्रिरात्रेण प्रजातिं भूमानं गच्छत्यभिस्वर्गलोकं जयति ( आप. श्रौ. २२–१५–१. ) इति विहितः ।

२ नियामकं इति क. पु.

३ तै. सं. ६–१–१ ज्योतिष्टोमप्रकरणे विहितस्य तीर्थस्नानस्य यथा तदीयकर्तृसंस्कारद्वारा ज्योतिष्टोमाङ्गत्वात् न स्वतन्त्रफलापेक्षा तद्वदित्यर्थः । तीर्थस्नानस्य क्रतुयुक्तपुरुषसंस्कारद्वारा क्रत्वङ्गत्वं तृतीयाध्यायचतुर्थपादे सिद्धान्तितम् । यत्र ऋष्यादयो महात्मानो नियमेन स्नान्ति सोऽवतारदेशस्तीर्थमित्यभिधीयते ।

## सू—अन्यानर्थक्यात् । ॥ १-२-४ ॥ ( पू )

"पूर्णाहुत्या सर्वान् कामानवाप्नोति" "पशुबन्धयाजी सर्वान् लोकानभिजयति" "तरति मृत्युं, तरति पाप्मानं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेद" इति ।

अत्रापि पर्णमय्यधिकरणन्यायेन पूर्णाहुतेराधानाङ्गभूतकर्मरूपत्वात् प्रयाजादिवत्प्रयोजनानपेक्षत्वम्। (१)मूले तु अग्निसंस्कारकत्वान्न तदित्युक्तम् । पशुबन्धस्यापि ज्योतिष्टोमाङ्गभूतकर्मरूपत्वादेव न फलापेक्षत्वम् । अश्वमेधज्ञानस्य तु गर्गत्रिरात्रब्राह्मणज्ञानवत् कर्तृसंस्कारकत्वादेव प्रयोजनानपेक्षत्वम् । अतश्चानपेक्षत्वादेवैतेषां फलकल्पकत्वासंभवः । अभ्युपेत्यापि तु फलकल्पकत्वं प्रामाण्य उच्यमाने यदि तावत्स्वतन्त्रफलार्थत्वं ततो वाक्येन कल्प्येन प्रकरणावगतक्रत्वर्थत्वबाधः । (२)अथायुरादिवदानुषङ्गिकफलार्थत्वं, ततः पूर्णाहुत्यादिनैव सर्वकामावाप्तौ जातायां तदुत्तरभाविनां क्रतुविधीनामानर्थक्यप्रसङ्गः । न हि पूर्णाहुतिमग्न्युत्पादकाधानाङ्गभूतामकृत्वा अग्निसाध्येषु कर्मस्वधिका-

---

१. भाष्यकारेण—पवमानेष्टीनां नाधानाङ्गत्वम्, किन्तु आधानवत् साक्षादेवाग्निसंस्कारद्वाराऽग्न्यङ्गत्वम्—इत्युक्तम् ।

२. दर्शपूर्णमासप्रकरणे—"सूक्तवाकेन प्रस्तरं प्रहरति" इति वाक्येन सूक्तवाकाख्यमन्त्रकरणकं प्रस्तरप्रहरणमाम्नातम् । सूक्तवाको नाम "इदं द्यावापृथिवी भद्रमभूत्" इत्यनुवाकपठितो मन्त्रविशेषः । प्रस्तरो वेद्यां हविरासादनार्थं मास्तरितो दर्भमुष्टिः । प्रहरणं अग्नौ प्रक्षेपः । तत्र "आयुराशास्ते, सुप्रजास्त्वमाशास्ते," इत्यादय आयुरादिप्रार्थनारूपा आम्नाताः प्रस्तरप्रहरणस्य दर्शपूर्णमासाङ्गभूतत्वात् तदुपकारकत्वं विनानान्यत् पृथक् फलं तस्य, तथापि तन्मन्त्रप्रतिपाद्यानामायुरादिफलानामपि आनुषङ्गिकतया प्रस्तरजन्यत्वमङ्गीक्रियते, तद्वदिति भावः ।

रस्सम्भवति । न चाग्नीषोमीयमकृत्वा ज्योतिष्टोमे साङ्गतास्ति । अश्वमेधज्ञानं विना चाश्वमेधाकरणमसामर्थ्यात् स्पष्टम् । अतश्च पूर्वभाविभिः पूर्णाहुत्यादिभिरेव तत्तत्फलावाप्तौ तदुत्तरभाविनां क्रतुविधीनामानर्थक्यप्रसङ्गो दुर्वारः ॥ (१)सूत्रं निगदव्याख्यातम् ॥

## सू—अभागिप्रतिषेधात् ॥ १—२—५ ॥ ( पू )

"न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवी"त्यत्रान्तरिक्षे दिवि वा तावच्चयनस्याप्राप्तत्वान्न प्रतिषेधयोग्यत्वम् । एवं पर्युदासोऽपि निराकर्तव्यः; अनन्तरिक्षे अदिवि च पृथिव्यां चयनस्य नित्यप्राप्तत्वात् । पृथिवीचयनप्रतिषेधोऽपि चयनविधेः प्रामाण्ये ऽप्रामाण्ये वोभयथाप्यनुपपन्नः । न हि चयनं कुर्वता पृथिवीचयन(२)प्रतिषेधार्थश्शक्यते सम्पादयितुम् । अकुर्वतस्तु प्राप्त्यभावादेव प्रतिषेधवैयर्थ्यम् । एवं पर्युदासानुपपत्तिरपि द्रष्टव्या । अतो नामान्तरेण चयनप्रतिषेधार्थमेव तादित्यङ्गीकर्तव्यम् । तथा च तद्विधिवैयर्थ्यमपि । न च(३)ग्रहणाग्रहणवत् पाक्षिकत्वसिद्ध्यर्थः प्रतिषेधोऽर्थवान् स्यादिति वाच्यम्; (४)पशुकामश्चिन्वीत' "प्रजाकामश्चिन्वीते" त्यादिवाक्यै(५)रग्नेः काम्यत्वावगमादेव पाक्षिकत्वसिद्धेः प्रतिषेधवैफल्यात् । न चैतैरग्नेः काम्यत्वावगमेऽपि "अथातोऽग्निमग्निष्टोमेने" त्यादिवचनै-

---

१. सूत्रं नियन्त्रितम् । इति क. पु.    २ निषेधार्थः इति क. पु.

३. अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति वाक्यद्वयं श्रूयते । तत्र पूर्ववाक्यविहितस्य षोडशिग्रहणस्य पाक्षिकत्वसिद्ध्यर्थं प्रतिषेध उत्तरवाक्येन क्रियते तद्वदिहापीत्यर्थः ।

४. तै. आ. १—२६—४.

५. इष्टकोपधानसम्पादितस्थण्डिलविशेषोऽत्राग्निपदार्थः ।

(१)इसंयोगपृथक्त्वन्यायेन क्रत्वर्थत्वस्यापि वक्ष्यमाणत्वात् तस्य पाक्षिकत्वार्थं प्रतिषेधोऽर्थवानिति वाच्यम्। उत्तरवेदिमात्रेणापि निरग्निकस्यापि क्रतुप्रयोगस्य "ते यद्यग्निं चेष्यमाणा भवन्ती"ति सत्रे(२) समारोपणकालादिगुणविधिपरे वाक्ये सिद्धवत्पाक्षिकत्वानुवादादिभिर्लिङ्गै(३)र्दशमे वक्ष्यमाणत्वात्। अत एव (४)अग्निं सोमाङ्गमिच्छता" मिति कात्यायनोऽप्युक्तवान्। साग्निके प्रयोगे परं(५) "उत्तरवेद्यां ह्यग्निश्चीयत" इति वचनादग्न्युत्तरवेद्योस्समुच्चयस्सङ्कर्ष उक्तः। न त्वेतावता क्रत्वर्थस्याग्नेर्नित्यत्वम्। अतश्चाग्नेः पाक्षिकत्वस्य सिद्धत्वात्तत्प्राप्त्यर्थं प्रतिषेधानर्थक्यम्। किञ्च पृथिवीचयननिषेधस्य चयनक्रियायां कल्प्यत्वेन क्लृप्तचयनविधेः पाक्षिकत्वापादनायोगः। अत एवंजातीयकं स्वार्थेऽप्यप्रमाणम्। अप्रतिषेधभागित्वादिति सूत्रार्थः॥

## सू—अनित्यसंयोगात्॥ १–२·६॥ ( पू )

(६)"बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति" इत्यत्र स्वार्थपरत्वे अनित्यसंयोगः परं प्रसज्येत। न ह्यनित्यं बबरनामानं पुरुषं प्रतिपादयतो वेदस्य स्वार्थे प्रामाण्यं सम्भवति, आदिमत्तादोषप्रसङ्गात्। यद्यपि च "(७)परं तु श्रुतिसामान्यमात्र" मित्यत्र एतद्दोषपरिहारार्थं बबरादिशब्दानां नित्यसिद्धवाय्वादिपरत्वमुक्तम्, तथाप्यत्रार्थवादानां कथमपि प्रामा-

---

१. एकस्य तूभयत्वे संयोगपृथक्त्वम्, इति न्यायः।
एकस्य कर्मणो द्रव्यादेर्द्रव्यस्य वोभयोद्देशेन विधायकं वाक्यद्वयं यत्र स संयोगपृथक्त्वन्यायः।

२. समारोप. इति ख. पु.        ३. १०–३–८
४. का. श्रौ. १६–१,२.        ५. तै. आ. १. २६–३.
६. तै. सं. ७–२–१०–२.        ७. पू. मी. १–१–३१.

ण्ये निराकृते बबरादिशब्दानां श्रौतार्थत्यागकारणाभावाल्ल लक्षणया वाय्वादिपरत्वं युक्तमाश्रयितुम् । अतश्चानित्यसंयोग-प्रसङ्गस्तदवस्थ एवेत्याक्षिप्यते । सूत्रं निगदव्याख्यातम् ॥ ६ ॥ तस्मादप्रमाणमर्थवादा इति पूर्वः पक्षः ॥

## सू—विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ १–२–७ ॥ ( सि )

### ( सिद्धान्तः )

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । सत्यमर्थवादानां न स्वार्थवृत्त्या धर्माधर्मप्रमोपयोगसम्भवः, प्राशस्त्यलक्षणया विध्येकवाक्यत्वेन तदुपयोगस्तु दुर्वारः । तत्रापि प्राशस्त्यलक्षणायां यद्यपि नान्वयानुपपत्तिर्बीजम्, तथाप्यध्ययनविध्यवगततात्पर्यानुपपत्तिरेव बीजम् । तथा हि—"स्वाध्यायोऽध्येतव्य" इत्यत्र(१०) "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति स्मृत्या तव्यप्रत्ययस्य प्रैषवाचित्वात् (११)प्रैषस्य च प्राप्तविषयत्वप्रवर्तनात्मकत्वसमुदायरूपत्वात्, ब्राह्मणे च प्राप्तविषयत्वासम्भवेन समुदायासम्भवेऽपि तदेकदेशलक्षणया तव्यप्रत्ययेन प्रवर्तनाऽभिधीयते । तस्याश्च प्रवृत्त्यनुकूलव्यापाररूपत्वात् प्रवृत्तिरूपार्थभावनापि तेनैवाक्षिप्यते । तस्याश्च भाव्यापेक्षायां कर्मोत्पन्नतव्यप्रत्ययोपात्तकर्मत्वस्य स्वाध्यायस्य भाव्यत्वेनान्वये जाते अध्ययनस्य(१२)भावार्थाधिकरणन्यायेन करणत्वेनान्वयः कल्प्यते । स्वाध्यायस्य

---

१ पा. सू. ३-३-१६३.

२. प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्तप्रापणं सर्वं विधित्वं प्रतिपद्यते ॥

३. पू. मी. २. १. २.

चाध्ययनं प्रत्युत्पाद्यत्वरूपकर्मत्वासम्भवादाप्यत्वरूपं तदाश्रीयते । ततश्चाध्ययनेनाक्षरग्रहणद्वारा स्वाध्यायं प्राप्नुयादित्यर्थः । निष्प्रयोजनस्य च स्वाध्यायस्य कर्मत्वानुपपत्तेः प्रयोजनाकाङ्क्षायां दृष्टसम्भवे ऽदृष्टकल्पनानुपपत्तेः स्वाध्यायजन्यं दृष्टमर्थज्ञानादिप्रयोजनमाश्रीयते ।

नचैवं संस्कारविध्यन्यथानुपपत्त्या प्रयोजनकल्पनायां (१)सक्तुष्वपि तदापत्तिः; प्रयोजनस्येह सामर्थ्यलभ्यत्वेनाकल्प्यत्वात् । अतश्च यथावघातादेरपूर्वसाधनीभूतव्रीहिवितुषीभावरूपसंस्कारार्थस्याप्यपूर्वार्थत्व एव विधेस्तात्पर्यम्, तथाऽध्ययनस्याप्यर्थज्ञानादिसाधनस्वाध्यायाक्षरग्रहणरूपसंस्कारसाधनस्यार्थज्ञानाद्यर्थत्व एवाध्ययनविधेस्तात्पर्यम् । एवंच निष्प्रयोजनार्थज्ञानस्य प्रयोजनत्वासम्भवात् प्रयोजनवत्तामर्थस्य स्वाध्यायविधिरवबोधयति । एवंचार्थवादानां (२)वाच्यार्थस्य निष्प्रयोजनत्वात्तदसम्भवे लाक्षणिकस्यापि प्राशस्त्यस्य गौणसामर्थ्यलभ्यत्वेन दृष्टत्वात् तत्परत्वं स्वाध्यायविधिबलादवगम्यते ।

यत्तु वार्त्तिके-साक्षादध्ययनस्यैवार्थज्ञानभावनाकरणत्वमुक्त्वा अर्थवादानां प्राशस्त्यलक्षणोपपादिता, तद्बलेन च भवदेवेनाध्ययनस्यार्थकर्मत्वं, स्वाध्यायस्य तु सक्तुन्यायेन विनियोगभङ्गं परिकल्प्याध्ययनार्थत्वमेवेत्युक्तम्, तन्न-उक्तविधया संस्कारकर्मत्वोपपत्तौ विनियोगभङ्गे प्रमाणाभावात्; वार्तिककृता तु स्थलान्तरे(३) बादर्यधिकरणादौ संस्कारकर्मत्वस्याप्युक्तत्वादातिशयार्थमत्रार्थकर्मत्वमुक्तम् । यस्त्वस्मिन् पक्षे स्वाध्यायस्य संस्कार्य-

---

१. "सक्तून् जुहोति" इत्यत्र द्वितीयाश्रवणेऽपि सक्तूनां भूतभाव्युपयोगाभावेन कर्मत्वासम्भवात् द्वितीयायाः करणत्वलक्षकत्वमङ्गीकृत्य सक्तुकरणकहोमविधिरेवाङ्गीकृतो द्वितीये, तद्विरुध्येतेति भावः ।

२ वाक्यार्थस्य इति ग. पु. । ३. पू. मी. ३-१-३.

त्वेनोद्देश्यत्वात्तद्विशेषणस्यैकत्वस्याविवक्षापत्तेः शाखान्तराधिकरणवार्तिकव्युत्पादितैकशाखाध्ययनविरोधप्रसङ्गः, स चैकत्वाविवक्षायामपि स्वाध्यायपदे स्वशब्देनात्मीयवाचिना पित्रादिपरम्परया आगताया एव शाखायाः कर्मव्युत्पत्त्या वाच्यत्वावधारणात् अनेकशाखाध्ययने च स्वशब्दवैयर्थ्यापत्तेः "अध्वर्युं वृणीत" इतिवच्चार्थज्ञानार्थतादशायामुपादेयत्वेनैकत्वविवक्षोपपत्तिरित्येवं तत्रैव निराकरिष्यते ।

यत्तु पूर्वपक्षवादिना प्रयोजनवदर्थज्ञानार्थत्वेऽध्ययनस्य लौकत एव प्राप्तत्वाद्विध्यानर्थक्यमुक्तम् , तत्र भवदेवः—शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वमन्वयव्यतिरेकासिद्धम् ; असत्यामपि शब्दशक्तौ सति तात्पर्यज्ञाने गौरश्वः, पुरुष, इत्यत्राध्याहारादिना गौर्दुह्यताम्, अश्वो गच्छति, पुरुषो वर्तते इत्येवं शाब्दबोधदर्शनात् , सत्यामपि च तस्यामसति तात्पर्यज्ञाने नानार्थस्थले(१)नार्थविशेषावधारणम् , तेन शब्दोच्चारणमात्रं शब्दवृत्तिज्ञानमात्रं वा नार्थबोधजनकम्, (२)किन्तु तात्पर्यज्ञानसहकृतं तत् , तच्च लोके पुरुषाशयवशादुन्नीयते, वेदे तु तदभावादर्थज्ञानोद्देश्यकाध्ययनविधिवशादेव तात्पर्यमुन्नेयम् । अतश्च विधिवाक्यानामप्यध्ययनविध्यभावे सति नैवार्थपरत्वमिति अध्ययनविधिरेव सकलस्य वेदस्यार्थतात्पर्यनिश्चायक इति न सत्यपि दृष्टार्थत्वे विधिवैफल्यमिति । (३)"अध्ययनविधिना इतरे सर्वे विधायकास्स्वात्मा च विनियुज्यते" इति(४)यथाश्रुतवार्तिकग्रन्था-

---

१ अर्थविशेषानवधारणं इति ग. पुस्तके ।

२ एवं च तात्पर्य इति क. पु. ।

३ तं. वा. पृ. १३. पं. २०

४ यथाश्रुतेति नास्ति क. पुस्तके ।

(१)ध्ययमर्थो निश्चीयते–इति ।

न त्वेतद्युक्तमिव–शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वे शुकादिवाक्यात्(२) निस्तात्पर्यकाच्छाब्दबोधानापत्तेः । अतो लक्षणादिजन्यशाब्दबोधे नानार्थस्थले च तस्य कारणत्वं न सर्वत्र, व्यभिचारात् । न चैककार्यकारणभावकल्पनालाघवेन शाब्दबोधत्वावच्छिन्नं प्रति कारणत्वेऽवधृते शुकादिवाक्येऽपीश्वरतात्पर्यज्ञानं शब्दनिष्ठधर्मविशेषरूपतात्पर्यज्ञानं वा कारणत्वेन कल्प्यतामिति वाच्यम्; तात्पर्यज्ञानस्यानेकार्थबोधकपदजन्यशाब्दबोधत्वावच्छिन्नं प्रति कारणत्वकल्पनेना(३)स्मन्मतेऽपि लाघवस्याविशिष्टत्वात् । अस्तु वा सर्वत्रैव कारणत्वं, तथापि शुकादिवाक्यस्थले तात्पर्यग्राहकाभावेन बोधानुपपत्तिरनिवार्यैव ।

अथ तत्र शब्दस्वभावादेव तात्पर्यमनुमाय बोधः, तदा प्रकृतेऽपि दीयतां दृष्टिरिति कृतमध्ययनविधिना ।

किंच अध्ययनविधेरर्थज्ञानतात्पर्यकत्वे किमन्यद्ग्राहकमिति या गतिस्तस्य साऽन्येषामपि विधीनामिति न किंचिदेतत् । अत एवं परिहर्तव्यम्–सामर्थ्यापेक्षया प्रत्यक्षश्रुतेश्शीघ्रप्रवृत्तत्वेनावघातादिवदध्ययनविधिरनधिगतमेव प्रयोजनवदर्थज्ञानार्थत्वमध्ययनस्यावबोधयति, तत्फलं चार्थवादेषु प्राशस्त्यतात्पर्यकत्वबोधः ।

यद्यपीदं फलं विधिषु न सम्भवति, अध्ययनविध्यभावेऽपि विधिषु शब्दस्वभावादेवार्थतात्पर्यकत्वावधारणसम्भवात्, तथाऽप्यर्थवादेष्वेव सम्भवन्नासति बाधके त्यक्तुं युक्तम् । सर्वसाधारण्येन तत्फलं त्वध्ययनविधिसिद्धार्थज्ञानवत एव पुंसो लाभात् क्रतुविधीनां ज्ञानाक्षेपशक्तिकल्पनानुपपत्तेरुपायान्तर-

१ अध्ययमर्थोऽवगम्यत इति निश्चीयते इति क. पु. ।
२ अस्तात्पर्ये इति क. पु. ३ अस्मिन् मते इति क. पु.

निवृत्तिफलका(१)ध्ययननियमः । एतद्विध्यभावे हि क्रतुविध्योऽनुष्ठेयार्थज्ञानार्थं पक्षे पुस्तकपाठाद्युपायान्तरमप्याक्षिपेरन् । अतस्तद्व्यावृत्त्या नियमफलकत्वमध्ययनविधेरुपपन्नमेव । न च येनापि त्रैवर्णिकेन नित्यत्वावेदकप्रमाणाभावान्नार्थज्ञानं सम्पादितम्, तद्विषये कथं तद्व्यावृत्तिसिद्धिः; "अनधीयाना व्रात्या भवन्ति"(२)"स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्" इत्याद्यकरणनिन्दाश्रवणोन्नीतविधिबलेन नित्यत्वप्रतीतेः । अतस्साधारण्येन नियमफलकत्वेऽपि अर्थवादादिषु प्रयोजनवदर्थतात्पर्यकत्वेऽपि न काचित्क्षतिः । वार्तिकं तु सिद्ध्यदपि प्रमाणान्तरेण विधिषु प्रयोजनवदर्थपरत्वमध्ययनविधिबलेनाऽपि सिद्ध्यतीत्येतदर्थम् ।

यत्तु स्तोभाद्यंशे अदृष्टार्थत्वादितरांशे चार्थज्ञानार्थत्वे अपूर्वविधिनियमविधित्वकृतवैरूप्यापत्तिरित्युक्तम्, तन्न; स्तोभानामपि सामभागपरिपूरकत्वेन दृष्टार्थत्वस्य (३)नवमे वक्ष्यमाणत्वान्न तदंशेऽपूर्वविधित्वम् । अतश्च दृष्टत्वेन भाव्यत्वानुगमादर्थज्ञानं सामभागपरिपूर्तिश्चेत्यनेकोद्देश्यताऽप्यनाशंक्या ।

यच्चाकरणे प्रत्यवायभियैव प्रवृत्तिसिद्धेरध्ययनमेव भाव्यमस्तीत्युक्तम्, तत् तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वोक्तेरपास्तम् । अवशिष्यते तु स्वाध्यायद्वारा यथाश्रुतार्थज्ञानस्यैव भाव्यत्वम्; तत्त्वेवं निराकर्तव्यम्—व्रात्यताबोधकवाक्येनाध्ययनस्य गृहीतपदपदार्थसङ्गतिकस्य 'स्थाणुरयं भारहारः' इति वचनाच्च यथाश्रुतार्थज्ञानस्याप्यावश्यकत्वबोधनादेव प्राप्त्युपपत्तेरेतद्वाक्यानर्थक्यप्रसङ्गात् अनेन वाक्येन प्रयोजनवदर्थज्ञानसाधनीभूतस्वा-

---

१ अध्ययनविधिनियम इति क. पु.
२. निरु. ३. पू. मी. ९. २. ५.

ध्यायोद्देशेनैवाध्ययनं विधीयत इति । तेन सिद्धाऽध्ययनवि-ध्यनुरोधेनार्थवादेषु प्रयोजनवदर्थान्तरलक्षणा । तच्चार्थान्तरं स्तुतिनिन्दारूपमेवेति विधिनिषेधापेक्षिततत्त्वान्निर्णीयते । कथम्?–सर्वत्र हि चेतनप्रवृत्तिः क्वचित्स्वेच्छया क्वचित्परप्रवर्तनाजनितयेच्छयेत्यविवादम्, तद्यत्र शब्दश्रवणोत्तरं प्रवृत्तिः, तत्र परस्य प्रवर्तनेन प्रवर्तकत्वं निश्चीयते । प्रवर्तना चेयं पुरुषप्रवृत्तिहेतुः प्रवर्तयितुर्धर्मः, प्रवर्तयितृधर्मत्वाभावे 'देवदत्तो मां प्रवर्तयति न यज्ञदत्त' इति व्यवस्थानुपपत्तेः ।

अथास्य प्रवर्तनाज्ञापनमात्रेण प्रवर्तकत्वं, नाश्रयत्वेन, ततो 'देवदत्तस्त्वां प्रवर्तयती'तिवाक्यप्रयोक्तुः यज्ञदत्तस्य प्रवर्तकत्वापत्तिः। लोके चाहमेनं प्रवर्तयामीति प्रवर्तयितुरनुभवात्तद्धर्मत्वम् । अत्र चाचार्यत्वादेः प्रवर्तयितुर्धर्मत्वेऽपि प्रवृत्तिहेतुत्वाभावादाद्यं विशेषणम् । धर्मपदश्च समवेतत्वपरम्, अतश्च लोकनिन्दादेः प्रवृत्तिहेतुत्वेऽपि प्रवर्तयितृपुरुषसमवेतत्वाभावादपरम् । पुरुषप्रवृत्तिश्च परसमवेता विवक्षिता । तेनाचार्यसमवेतफलस्य दुग्धपानादेर्गामानयेतिवाक्योच्चारणानुकूलाचार्यनिष्ठप्रवृत्तिहेतुत्वेऽपि शिष्यप्रवृत्तिहेतुत्वे प्रमाणाभावान्नातिप्रसङ्गः । स च धर्मो लोके प्रैषादिरूपः पुरुषाशयविशेषः, वेदे तु (१)तदभावाल्लिङादिनिष्ठ एव कश्चित्कल्प्यः। प्रैषादीनां हि प्रवृत्तिहेतुत्वमाचार्यप्रेषितोऽहं गामानयामीत्यनुभवसिद्धम्। हेतुत्वं चात्र न जनकत्वं प्रमाणाभावात्, अपि तु प्रयोजकत्वं, तच्च प्रवृत्तिकारणीभूतेष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । प्रवर्तनारूपस्याशयादेर्ज्ञानेनेष्टसाधनत्वानुमानात्। अतो युक्तं प्रैषादीनां निरुक्तप्रवृत्तिहेतुत्वम् ।

---

१. पुरुषाभावात् इति क. पु.

अतश्च प्रवर्तनाज्ञानकारणजिज्ञासायां शब्दश्रवणोत्तरभावित्वादावापोद्वापाभ्यां घटादिपदशक्तिवदेव वृद्धव्यवहारेण लिङादीनां प्रैषादिरूपप्रवर्तनायां शक्तिर्निश्चीयते। (१)"विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" "लाङ्च" लिङर्थे लेट्" इत्याद्यनुशासनबलादप्ययमर्थो निश्चीयते। तत्र विधिर्निकृष्टस्य प्रेरणम्; अयमेव च व्याकरणे प्रैषः। लोके तु मात्रे विषये निकृष्टस्ये प्ररणमिति विवेकः। निमन्त्रणमावश्यके श्राद्धादौ दौहित्रादेः प्रवर्तनम्। आमन्त्रणं कामचारानुज्ञा; इदमेवातिसर्गपदेनाभिधीयते। अधीष्टं सत्कारपूर्वको व्यापारः। अत्र नानार्थकत्वपरिहाराय प्रवर्तनात्वमेवैकं शक्यतावच्छेदकं घटत्वादिवत्। वस्तुतस्तु लाघवादनुकूलव्यापारत्वमेव शक्यतावच्छेदकम्, प्रवृत्तिनिरूपितत्वं तु वाक्यार्थविधया लभ्यम्, आख्यातार्थकृतौ स्वर्गादिनिरूपितत्ववत्। प्रवर्तकनिष्ठत्वं च योग्यतालभ्यमिति द्रष्टव्यम्।

अथ वा विध्यादिषु चतुर्षु वैदिके च वक्ष्यमाणे अलौकिके धर्मे प्रवर्तनात्वमखण्डोपाधिः प्रवृत्तिप्रयोजकतावच्छेदककोटिप्रविष्टतया कल्प्यते, तदवच्छिन्नविषयकज्ञानप्रयोज्यतावच्छेदकं चाव्यवहितोत्तरत्वसंबन्धेन तादृशज्ञानविशिष्टप्रवृत्तित्वम्। नातस्तदनुत्तरप्रवृत्तौ व्यभिचारः। अखण्डोपाधिरेव च लिङादिपदशक्यतावच्छेदक इति तत्त्वम्। अतो विध्यादय एव चत्वारो व्यक्तिस्थानीया लोके लक्ष्याः, सम्प्रश्नप्रार्थनयोस्त्वतिरिक्तैव शक्तिः, आनुशासनिकी वा लक्षणा। एतेषां च पुरुषाश्रयविशेषाणां प्रैषादीनां वेदे ऽसंभवात् प्रवर्तनात्वेन च शक्तेर्लिङादिषु गृहीतत्वात्तदनुरोधेन प्रवर्तनाविशेषरूपो विधिप्रेरणानियोगापरनामधेयस्सोऽलौकिको धर्मस्स्थायी कल्प्यते। स च प्रैषादिवत्प्रवर्तकधर्मत्वावगतेर्वेदे प

१ पा. सू. ३. ३. १६१. पा. सू. ३. ३..१६२. पा सू. ३. ४. ७

पुरुषाभावादन्यस्य च यागादेरसिद्धत्वेन प्रवृत्तिविषयत्वेन च प्रवर्तकत्वानुपपत्तेः पारिशेष्याल्लिङादेरेव प्रवर्तकत्वावधारणात्, लिङादेश्च वर्णरूपत्वेन स्थायित्वात्तन्निष्ठोऽवधार्यते। तस्य च प्रवृत्तिहेतुत्वादुक्तलक्षणाव्याहतिः।

अत्र षष्ठे शास्त्रदीपिकायां पार्थसारथिः—नातिरिक्तधर्मान्तरकल्पनम्, तथा सति तत्सद्भावस्तस्य च प्रवृत्तिहेतुत्वं लिङादिनिष्ठत्वं तल्लक्ष्यत्वमिति चतुष्टयकल्पनाद्गौरवापत्तेः। अतो लाघवादर्थभावनाभिधानानुकूलशक्तेरभिधाख्याया लिङादिनिष्ठत्वेन क्लृप्तायाः (१)केवलं प्रवृत्तिहेतुत्वं लिङादिलक्ष्यत्वं च कल्प्यम्। (२),अतः सैव प्रवर्तनात्वेन लिङाद्यभिहिता प्रवृत्तिहेतुर्विध्यादिपदाभिधेया चेति। तन्न; तर्हि ततोऽप्यतिलाघवेनेष्टसाधनत्वस्य प्रवृत्तिहेतुत्वेनापि क्लृप्तस्य लिङादिलक्ष्यत्वमात्रकल्पनया (३)प्रवर्तनाविशेषत्वोपपत्तेर्जितं मण्डनेन।

न चेष्टसाधनत्वस्य यागादिनिष्ठत्वेन लिङादिनिष्ठत्वाभावाद्यागादेश्चासिद्धत्वेन प्रवर्तकत्वायोगात् प्रवर्तनायाः प्रवर्तकनिष्ठत्वस्य स्थापितत्वान्नेष्टसाधनत्वस्य प्रवर्तनाविशेषत्वोपपत्तिरिति वाच्यम्; तर्हि फलेच्छाया उपायेच्छाया वा सिद्धत्वेन लिप्सा प्रवर्तयतीतिवदिच्छा मां प्रवर्तयतीत्यनुभवाच्च प्रवर्तकत्वोपपत्तेस्तन्निष्ठत्वेन क्लृप्तस्येच्छात्वस्य प्रवृत्तिहेतुत्वं इच्छात्वेन (४)कामपदाभिधेयत्वेऽपि प्रवर्तनात्वेन लिङादिवाच्यत्वं परिकल्प्य प्रवर्तनाविशेषत्वोपपत्त्या विनिगमनाविरहात्।

न चेच्छायाः प्रवर्तकत्वे इच्छात्वे प्रवृत्तिहेतुत्वाभावेऽपि हेतुतावच्छेदकत्वस्य क्लृप्तत्वाल्लाघवेन तस्यैव प्रवर्तनाविशे-

१ केवलं इति नास्ति क. पु. २ अतः इति नास्ति क. पु.
३ प्रवर्तनात्वोपपत्तेः क. पु. ४ कामपदाभिहितत्वेऽपि. इति. ग. पु.

षत्वोपपत्तौ न तदादाय शक्तेर्विनिगमनाविरहश्शंक्यः इति वाच्यम्, इच्छावत् कृतिसाध्यत्वज्ञानस्यापि सिद्धत्वेन प्रवर्तकत्वात्तन्निष्ठज्ञानत्वस्य प्रवर्तनात्वेन लिङादिपदवाच्यत्वकल्पनया प्रवर्तनाविशेषत्वोपपत्तौ तदादायेच्छात्वेऽपि विनिगमनाविरहस्यावारणात् ।

न चेच्छात्वादीनामतिप्रसक्तत्वेन प्रवर्तकमात्रनिष्ठत्वाभावान्न तेषां प्रवृत्तिहेतुत्वकल्पनाशंका; शक्तेरपि लिङादिष्वतिप्रसक्तत्वस्य तुल्यत्वात् । तस्मात् क्लृप्तैर्विनिगमनाविरहाद्धर्मान्तरकल्पनैवोचितेत्युत्पश्यामः ।

नचैवं धर्मान्तरस्यापि लिङादिनिष्ठत्वमिच्छादिनिष्ठत्वं वाऽऽदाय विनिगमनाविरहः । इच्छादेरस्थायित्वेन स्थायिधर्मान्तराश्रयत्वानुपपत्तेः । इदमेव धर्मान्तरं शाब्दीभावनेत्युच्यते ।

एवं 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न सुरां पिबे' दित्यादौ प्रवर्तनावन्निवर्तनापि लिङाद्यर्थः, साऽपि च पुरुषनिष्ठनिवृत्तिहेतुर्निवर्तयितुर्धर्मः 'अहमेनं निवर्तयामी'त्यनुभवसिद्धः । तद्विशेषाश्च प्रैषादयो लोके । धर्मान्तरञ्च निवारणानिषेधप्रतिषेधापरनामधेयं वेदे तथैव प्रसाध्यम् । तत्र त्वेतावान् विशेषः—न शुद्धो लिङादिः प्रवर्तनावन्निवर्तनामभिधत्ते । किन्तु नञ्समभिव्याहृत एव, तत्र नञो द्योतकत्वमात्रम् । लिङादेरेव तु निवर्तनायां शक्तिः, निपातोपसर्गाणां द्योतकत्वस्य व्युत्पत्तिसिद्धत्वात् । अथाऽपि तेषां वाचकत्वं स्यात्, तथाऽपि "तदन्यतद्विरुद्धतदभावेषु नञ्" इति स्मरणादभाववाचित्वेन क्लृप्तस्य नञो निवर्तनावाचित्वकल्पने मानाभावः । लिङादिसमभिव्याहाराभावे च घटो नास्तीत्यादौ निवर्तनाया अप्रतीतेः । तस्याप्रतीतद्योतकत्वकल्पने गौरवप्रसं-

गाच्च । "अमानोनाः प्रतिषेध" इति तु द्योतकत्वेनाप्युपपन्नम् । तदयमत्र वाक्यार्थः—कलञ्जभक्षणब्राह्मणकर्तृकसुराकर्मकपानादिभावनां प्रवृत्तिरूपामाख्यातवाच्यामुद्दिश्य लिङा तन्निवृत्तिफलका व्यापाररूपा निवर्तना विधीयते, नञस्तु प्रवृत्त्यभाववाचित्वेन प्रधानभूतभावनासम्बन्धेऽपि निवर्तनाद्योतकत्वमविरुद्धम् । शुद्धप्रवृत्तेश्चोद्देश्यत्वासम्भवात् हविरार्तिन्यायेन धात्वर्थतत्कारकयोरुद्देश्यान्तर्गतया कृतिविशेषणत्वस्य व्युत्पत्तिसिद्धत्वात् तद्विवक्षायामपि कर्तृकर्मादिकारकनिष्ठलिङ्गसंख्यादिविशेषणानामविवक्षा उद्देश्यविशेषणत्वादुपपन्ना ।

न च लिङः प्रवर्तनावाचित्वेन नञश्चाभाववाचित्वेन क्लृप्तस्य निवर्तनावाचित्वकल्पने गौरवापत्तेः प्रवर्तनाभाव एव निषेधाधिकारे वाक्यार्थोऽस्त्विति वाच्यम्; लिङ्निष्ठप्रवर्तनाभावबोधेऽपि रागादिना प्रवृत्तौ प्रत्यवायानापत्तिप्रसङ्गात् ।

न च रागादिनिष्ठप्रवर्तनाभाव एव वाक्यार्थः, तस्या लोके वेदे वा लिङादिवाच्यत्वेनाक्लृप्तेः, तत्रापि शक्तिकल्पने गौरवतादवस्थ्यापत्तेः ।

एतेन नञोऽभाववाचकस्यापि लिङादिसमभिव्याहारे सति निवर्तनावाचित्वम् , 'अमानोनाः प्रतिषेधे' इति प्रसिद्धेः, न तु लिङः प्रवर्तनावाचित्वेन क्लृप्तस्य, गौरवात् । अतश्च रागाद्यर्थप्राप्तां पानादिप्रवर्तनां लिङादिनोद्दिश्य नञा निवर्तना विधीयते इत्यपास्तम् । रागादिनिष्ठप्रवर्तनावाचित्वस्य लोके वेदे वा अक्लृप्तत्वेनानुवादायोगात् , स्वनिष्ठप्रवर्तनायाश्चाप्राप्तत्वेन लिङादिनाऽननुवादात् । विधाने वाक्यभेदो विकल्पापत्तिश्च । अत एवायं पक्षो वार्तिककृता "ते ( ये ) षा" मित्यादिनाऽन्यमतत्वेनोक्तः । केषांचिदत्र स्वमतत्वप्रमितिर्भ्रम एव ।

वस्तुतस्तु–लिङोऽपि न निवर्तनायां शक्तिः, किन्त्वनुकूलव्यापारत्वे ऽखण्डोपाधौ वा । तत्र यथा नञोऽभावे प्रवृत्तिनिरूपितत्वं संसर्गः, एवं नञर्थत्वे प्रवृत्त्यभावनिरूपितत्वमिति न किञ्चित्कल्प्यम् । अत्रापि निवृत्तिहेतुत्वं नाम प्रवृत्त्यभावप्रयोजकत्वमेव, न तु निवृत्तिः पदार्थान्तरं, हेतुत्वं वा जनकत्वम् , प्रमाणाभावात् । प्रजोकत्वं च प्रवृत्त्यभावकारणीभूतानिष्टसाधनत्वानुमितिजनकज्ञानाविषयत्वं पूर्ववत् । अनिष्टसाधनत्वज्ञानस्याभावकारणता च योगक्षेमसाधारणी, तत्त्वं चाभावप्रतियोगिप्रवृत्तिसामग्रीविघटकत्वम् । अनिष्टसाधनत्वे हि बुद्धेऽनिष्टबोधात्तद्गतं बलवत्त्वं झटिति बुद्ध्यत इति बलवदनिष्टानुबन्धित्वज्ञानात्प्रवृत्तिकारणीभूतबलवदनिष्टाननुबन्धित्वज्ञानाभावप्रतिबन्धस्सुलभः । अतश्चात्रापि प्रवृत्तेस्तदभावस्यानुकूलत्वस्य चान्यत एव भानाल्लिङो नातिरिक्ता निषेधस्थले शक्तिः, किन्तु विधिसाधारण्येनाखण्डोपाधावेवेति सिद्धम् । तेन सिद्धा निषेधाधिकारेऽपि निवर्तनाविशेषरूपनिवारणापरनामधेया शाब्दी भावना । चेतनप्रवृत्तिनिवृत्त्योश्चेष्टानिष्टसाधनताज्ञानं विनाऽसम्भवात् विधिनिषेधाभ्यामिष्टानिष्टसाधनत्वं प्रवृत्तिनिवृत्तिविषयस्याक्षिप्यते । तयोश्च शाब्दीभावनयोर्भाव्यापेक्षायां आख्यातवाच्या प्रवृत्तिर्विधिरूपायाम् , नञ्वाच्या च तन्निवृत्तिः निषेधरूपायां भाव्यत्वेनान्वीयते । करणाकाङ्क्षायां च प्रेरणानिवारणयोः स्वरूपेण प्रवृत्तिनिवृत्तिजनकत्वायोगाल्लिङादिजन्यं तयोर्ज्ञानमेव करणम् । केचित्तु लिङ्भावनयोः सम्बन्धरूपशक्तिस्मरणमेव करणम् । भावनाज्ञानं त्ववान्तरव्यापार इत्याहुः । इतिकर्तव्यताकाङ्क्षायां च स्तुतिनिन्दयोरन्वयः । तथा हि–विधिनिषेधाभ्यमिष्टानिष्टसाधनत्वाक्षेपात्प्रवृत्तिनिवृत्तिहेतुभूतेच्छानिच्छोत्पत्तावपि तारका-

लिकेष्टानिष्टसाधनत्वस्यापि प्रत्यक्षेणावगतेः द्वेषोत्साहसम्भवेन प्रवृत्तिनिवृत्त्यभावप्रसङ्गात्तदपनायकापेक्षायां लोके तदपनयनशक्तत्वेनावगतस्य स्तुतिनिन्दाज्ञानस्यानुग्राहकत्वं परिकल्प्यते । ज्योतिष्टोमसुरापानादिरूपसाधनयोश्च द्वेषोत्साहौ हि निसर्गसिद्धौ। तन्निवर्तकत्वं च स्तुतिनिन्दयो रुचिद्वेषोत्पादनद्वारा बहुक्षीरादिवाक्येषु लोकसिद्धमेव। अतस्स्तुतिनिन्दाप्रतिपादकापेक्षायां प्रयोजनापेक्षिणामर्थवादानामेव तल्लक्षकत्वं कल्प्यते। न च फलपदेन वा प्रशस्तफलयुक्तत्वाद्विध्यादिपदेन वा निर्दोषविधिनिषेधविहितत्वादितिकर्तव्यतापदैर्वा विशिष्टेतिकर्तव्यताकत्वात्प्रशस्तोऽप्रशस्त इत्येवं तत्प्रतिपादनसम्भवः, तेषां श्रौतफलादिपरत्वेन लाक्षणिकस्तुतिनिन्दागमकत्वकल्पनानौचित्यात् । नच रात्रिसत्रन्यायेन फलादिपरत्वेऽप्याकांक्षितप्राशस्त्यादिकल्पनापरत्वसम्भवः । प्रयोजनाकांक्षिभिस्सन्निहितैरर्थवादैरेव तत्प्रतिपादनसम्भवेनानुपपत्त्यभावात् । यत्र तु सन्निधावर्थवादाभावस्तत्राप्यानुमानिकवचनातिदेशेन तत्प्राप्तिः ।

ननु—नार्थवादानामतिदेशेन प्राप्तिः, सा हि प्रयाजाद्यतिदेशेन वा स्यात् ? भिन्नेन वा ? नाद्यः, अर्थभावनाया इतिकर्तव्यताकांक्षया कल्पितेनातिदेशेन प्राप्तानां प्रयाजादीनामर्थभावनासम्बन्धोत्तरकालमंशत्रयविशिष्टभावनावगमे सति विधिप्रवृत्तौ प्राशस्त्यापेक्षायां विरम्यव्यापारत्वेन क्लृप्तातिदेशस्य तत्प्रापकत्वानुपपत्तेः । नान्त्यः; विधेरेव प्रवर्त्तनावाचकस्यापि रात्रिसत्रन्यायेन प्राशस्त्यादिपरत्वोपपत्तौ स्वतन्त्रातिदेशकल्पने गौरवात् इति चेत् ? प्रयाजादिप्राप्तेः पूर्वमप्युत्पत्तिवाक्य इष्टसामान्यवदितिकर्तव्यतासामान्येनाप्यंशत्रयवैशिष्ट्योपपत्त्या विधेर्भावनासम्बन्धोपपत्तौ तस्य प्राशस्त्यापेक्षायामवश्यकल्प्यनैके-

नैवातिदेशेनोभयप्राप्त्युपपत्तौ विधेः प्राशस्त्यपरत्वकल्पनायां प्रमाणाभावात् ।

न च—शब्दभावनायास्साद्दश्याभावः । निर्वपतिधातुमद्वाक्यसम्बन्धित्वरूपस्य शब्दसादृश्यस्यार्थभावनायामिव शब्दभावनायामपि तुल्यत्वात् ।

नचैवं विश्वजिति ज्यौतिष्टोमिकार्थवादातिदेशे सति तत एव (१)रात्रिसत्रन्यायेनार्थवादिकफलकल्पनोपपत्तौ विश्वजिन्न्यायभङ्गप्रसङ्गः । अप्राकृतकार्यकारित्वप्रसंगेनार्थवादानां फलकल्पकत्वानापत्तेः ।

न च-फलाकांक्षायां सत्यामप्राकृतकार्यकारित्वं न दोषः। यूपावटास्तरणबर्हिषोऽपि धर्माकांक्षायां बर्हिर्धर्माणां तत्कल्पनापत्तेः ।

अथ तत्र लौकिकोपायाक्षेपकल्पनात्तन्निवृत्तिः, तदा प्रकृतेऽपि स्वर्गकल्पनयेति तुल्यम् । अस्तु वा यदि ज्योतिष्टोमे फलविधिसरूपार्थवादश्रवणं तदा विश्वजित्यतिदेशप्राप्तार्थवादिकफलकल्पनम्। सर्वथा विश्वजिति स्वर्ग एव फलम्। तदधिकरणन्यायस्तु (२)पिण्डपितृयज्ञादिविषयो भविष्यतीति न किंचिदनुपपन्नम् । तन्त्ररत्नन्यायसुधयोस्तु प्राशस्त्यानतिदेशकथनेऽभिप्रायं न विद्मः ।

एवं नामातिदेशेऽपि नाम्नाऽग्निहोत्रधर्माणामन्येषामिव प्राशस्त्यस्यापि तद्धर्मस्य लक्षणया प्राप्तिर्द्रष्टव्या । (३)"एतद्ब्राह्मणा-

---

१. रात्रिसत्रन्यायश्चतुर्थाध्यायाध्याये तृतीयपादेऽष्टमाधिकरणे द्रष्टव्यः।

२. "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति पिण्डपितृयज्ञविधायके वाक्ये फलाश्रवणात् सान्निधावर्थवादाभावाच्च रात्रिसत्रन्यायाप्रवृत्तेः अपूर्वत्वाच्च प्रकृतितोऽर्थवादातिदेशस्याप्यभावात् स्वर्गवाचकफलकल्पनेनैव तत्र फलाकाङ्क्षा शमनीयेति भावः॥

३. तै. ब्रा. १. ७. १.

नि पञ्च हवींषि" इत्यादौ वचनातिदेशे तु तत्प्राप्तिरविवादैव। यत्र तु प्रकृतावेव दर्वीहोमेषु चोपदेशातिदेशयोरभावस्तत्र विधेरेव प्राशस्त्यापेक्षत्वात्तस्यैव प्राशस्त्यकल्पकत्वमपि रात्रिसत्रन्याये-नोचितम्, न तु फलादिपदानाम्, तेषां तदनपेक्षत्वात्। यत्र तु सन्निधावर्थवादाः पठितास्तत्र विधेरुभयपरत्वकल्पने प्रमाणाभा-वादर्थवादा एव प्रयोजनापेक्षा लक्षणया प्रशस्त्यमप्राशस्त्यं वा विधिनिषेधापेक्षितं प्रतिपादयन्ति। तच्च प्राशस्त्यमप्राशस्त्यं वा रुच्यरुचियोग्यत्वरूपं निर्वाच्यम्। रुच्यरुचियोग्यत्वज्ञानस्यापि प्रवृत्तिनिवृत्तिप्रतिबन्धकरुच्यरुचियोग्यत्वज्ञानाविरोधित्वेन प्रवृ-त्तिनिवृत्त्युपयोगित्वात्। तत्त्वं च बलवदनिष्टाननुबन्धित्वानु-बन्धित्वयोग्यत्वम्। तज्ज्ञानस्य च प्रवृत्तिनिवृत्तिकारणत्वमविवाद-मेव। अत उक्तविधमेव प्राशस्त्यमप्राशस्त्यं वा सर्वत्रार्थवादैर्ल-क्ष्यते। योग्यतावच्छेदकीभूताः परं गुणदोषाः क्वचित् "वायुर्वै क्षेपिष्ठा" इत्यादौ शक्त्या प्रतिपाद्यन्ते, क्वचित्तु "यजमानः प्र-स्तरः" इत्यादौ गौण्यादिनेति विशेषः। रुच्यरुचियोग्यत्वरूप-प्राशस्त्याप्राशस्त्यलक्षणा तु सर्वत्राविशिष्टेति ध्येयम्॥

वाक्ये चेयं लक्षणा, नैकस्मिन्पदे, इतरपदानां वैयर्थ्या-पत्तेः। तेषां तात्पर्यग्राहकत्वकल्पने च विनिगमनाविरहः। ल-क्षणाप्रकारश्च गुणवादसूत्रे स्पष्टीकरिष्यते। तच्च प्राशस्त्यम-प्राशस्त्यं वा शाब्दभावनयैवान्वेति—'यागेन स्वर्गं भावयेत्प्रशस्त-त्वात्, 'न सुरां पिबेदप्रशस्तत्वा'दिति। अतश्च विध्यर्थवादयो-रेकवाक्यत्वसिद्धिः। तत्रापि पदैकवाक्यतैव, विध्यर्थवादानां स्वस्वार्थबोधे सामर्थ्याभावादित्युत्तराधिकरणे वक्ष्यते। अतश्चा-र्थवादसत्त्वेऽर्थवादप्ररोचितमेव कर्माभ्युदयकारीत्यध्ययनविधि-वशेन कल्पनान्नान्यत्प्ररोचनं कर्माङ्गमित्यपि नियमसिद्धिः। य-

त्रापि केवलार्थवादश्रवणं तत्रापि विधिकल्पनया प्रामाण्योपपत्ति(१)रौदुम्बराधिकरणे वक्ष्यते ।

तस्मात्सिद्धं साधनेतिकर्तव्यताविषयद्वेषोत्साहनिवर्तकस्तुतिनिन्दालक्षकत्वमर्थवादानां, न तु स्वार्थपरत्वमपि, प्रमाणाभावात्; युगपद्वृत्तिद्वयविरोधापत्तेश्च । एवं च यत्र सुखनरकादिरूपफले निसर्गत एव रुच्यरुची, तत्र प्रयोजनाभावात्,

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" ॥

इत्यादीनां न प्राशस्त्याप्राशस्त्यलक्षकत्वं, किन्तु विधिनिषेधापेक्षितस्वर्गनरकादिस्वरूपपरत्वमेव ।

एवं दूरस्थानामपि विनाशिदेहादिव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मप्रतिपादिकानामुपनिषदां परलोककर्मविध्यपेक्षितोक्तरूपात्मपरत्वमेव । उक्तविधात्मज्ञानस्य चानाराभ्याधीतस्यापि सामर्थ्यात्(२)"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वाक्याद्वा क्रत्वङ्गत्वाविरोधः । असंसारिसगुणनिर्गुणात्मप्रतिपादिकानां तूभयविधोपासनाविध्यपेक्षितत्वेन स्वार्थपराणामेवाभ्युदयनिश्श्रेयसहेतुत्वमिति वार्तिके व्याकरणाधिकरण उपपादयिष्यते । तेन सिद्धमर्थवादानां प्रामाण्यम् ।

सूत्रं तु-विधीनां विधेयानां, स्तुत्यर्थेन स्तावकत्वेन, विधिनैकवाक्यत्वसम्भवादर्थवादाः प्रमाणं स्युरिति व्याख्येयम् ॥ ७ ॥

## तुल्यं च सांप्रदायिकम् ॥ १-२-८ ॥

किञ्चाध्ययनधर्माणां स्वाध्यायानध्यायपरिपालनादीनां

---

१. अनन्तराधिकरणे । २. छन्दोग्य. १. १. १०.

यथा प्रमाणभूतविध्यध्ययने क्रियमाणेऽनुष्ठानं वैदिकानाम्, तथार्थवादाध्ययनेऽपि। तेषां हि न स्वातन्त्र्येण पुरुषार्थत्वम्, फलाश्रवणात्।

(१.)"तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना" ॥

इति स्मरणेन धर्माणामध्ययनाङ्गत्वावगमाच्च। न चाध्ययने तत्कार्ये वार्थज्ञाने धर्माणामनुपयोगेनानर्थक्यात्तत्पूर्वकज्योतिष्टोमादिकर्माङ्गत्वं वक्तुं शक्यम्, वाक्यप्रकरणाभ्यामध्ययनाङ्गत्वेनावधारितानां धर्माणां क्रत्वङ्गत्वे प्रमाणाभावात्। उपयोगस्त्वध्ययन एव विघ्ननिवृत्त्यर्थत्वेनोपपन्न इति द्वादशे वक्ष्यते। तेनाप्रामाण्येऽर्थवादानां तदध्ययनमध्ययनाङ्गधर्मानुष्ठानं च साम्प्रदायिकपदाभिधेयं विधिवदनुष्ठीयमानमनुपपन्नं स्यात्, अतस्तद्वदेव प्रमाणम्।

अथवा—पूर्वपक्षिणाऽप्रामाण्येऽप्यर्थवादानामध्ययनस्यादृष्टार्थत्वाङ्गीकारात्, धर्माणामपि प्रयाजादिवद्वा विघ्नसमाप्त्यर्थत्वेन वाऽध्ययनाङ्गत्वोपपत्त्या पूर्वव्याख्यायाः अयोगेऽपि अर्थवादानामर्थपरत्वाभावेऽदृष्टार्थस्याध्ययनस्य (२)सर्वौषधावघातवत्सकृत्प्रयोगापत्तेः आवृत्तेरविस्मरणप्रयोजनाभावेन च धारणाध्ययनस्य साम्प्रदायिकपदाभिधेयस्यानुपपत्तिः। प्रयोजनवदर्थपरत्वे हि व्रीह्यवघातवदावृत्तिर्धारणाध्ययनं च विधावित्रोपपद्येत। तस्माच्चद्वदेवार्थपरत्वम्। सूत्रं व्याख्यातम् ॥८॥

**अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधस्स्यात् शब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यते ॥१-२-९॥**

---

१. मनु २-१६५. २. सर्वौषधावघातश्चयने विहितः।

अनेन सूत्रेण पूर्वपक्षयुक्तानां शास्त्रविरोधादीनां सामान्यतः परिहारोऽभिधीयते । या शास्त्रविरोधादिकाऽनुपपत्तिस्साऽस्मत्पक्षमप्राप्ता, प्रयोगे अनुष्ठाने हि, स्तेयादीनामुच्यमाने, विरोधस्स्यात्, अस्माकं मते पुनः शब्दस्य श्रौतोऽर्थः, अप्रयोजनभूतः, उत्तरसूत्रोक्तरीत्याऽविवक्षित इति यावत् । अथवा-शब्दस्य विधेः, अनुग्रहार्थस्सन्नयमर्थवादः, अप्रयोगभूतः प्रयोगमप्राप्तः, न प्रयोगं विधत्त इति यावत् । तस्मात्प्रामाण्यमुपपद्येत । विधिकल्पकत्वे श्रौतार्थपरत्वे वा भवदुक्तदोषास्स्युः, न तु स्तुत्यर्थत्व इति भावः । 'अप्राप्ताच्चानुपपत्ति' मिति पाठे याऽनुपपत्तिस्तामप्राप्तां मन्यामह इत्यध्याहारः । 'अप्राप्तं चानुपपत्ति' मिति पाठे त्वस्मद्व्याख्यानमनुपपत्तिमप्राप्तमिति व्याख्येयम् ॥ ९ ॥

## गुणवादस्तु ॥ १-५-१० ॥

ननु-(१)"स एवैनं भूतिं गमयति," इत्यादिभिः पदैः स्तुतिप्रतीतावपि "वायुर्वै क्षेपिष्ठा" इत्यादिभ्यस्तदप्रतीतेः कथं तेषां स्तावकतासम्भवः ?

उच्यते-गुणागुणरूपस्तुतिनिन्दावादस्तु सर्वत्र यथासम्भवं कल्प्यः, कारणानुरूपत्वात्कार्यस्य, क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति सर्वेषामपि पदानां स्तुत्युपपादकत्वेनाविरोधात् ।

एवं-(२)"सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं, यदश्रु व्यशीर्यत तद्रजतमभवत् , पुरास्य संवत्सरात् गृहे रोदनं भवति, तस्माद्बर्हिषि रजतं न देयम्" इत्यत्रापि बर्हिश्शब्दलक्षिते यज्ञे "यथा-

१. तै. सं. २. १. १. २. तै. सं. १. ५. १.

श्रद्धं दक्षिणां ददाति" इत्यादिसामान्यविहितदक्षिणाके स्वे-च्छाप्राप्तरजतदाननिषेधस्यायमर्थवादः । तत्र स इति तच्छब्देन "तदग्निर्न्यकामयत" इति पूर्वोपक्रान्तोऽग्निः परामृश्यते । 'तद्र-जतमित्यत्र तच्छब्देनाश्रु, अत्र "पुरास्य संवत्सरा" दिति रजतदाननिन्दा । तदुपपत्तिश्च 'सोऽरोदी'दित्यादिः । कार-णानुरूपत्वात्कार्यस्य रोदनप्रभवरजतदानाद्रोदनं भवतीति रज-तदाननिन्दा । अतो रजतदाननिषेधे दोषाभावरूपगुणवादोप-पत्तिः । न च-रुद्ररोदनरजताश्रुप्रभवत्वसंवत्सररोदनादीनां प्रमाणाभावात्प्रत्यक्षविरोधाच्च निरालम्बननिन्दानुपपत्तिः । गौण्या वृत्त्या सर्वत्रालम्बनोपपत्तेः । तथाहि-रुद्रशब्दस्तावद्व्या-करणे रोदनकर्तृवाचित्वेन व्याख्यातः । स च "रुद्रमग्निं प्रजाः प्राहुः" इत्यरुदत्यप्यग्नौ रूढ्या प्रयुक्तः, तत्र च तत्सि-द्धिसूत्रोक्तन्यायेन रुद्रशब्दाभिधेयत्वसादृश्याद्रोदनकर्तृत्वमुपच-र्यते, अश्रुणश्च चक्षुर्ग्राह्यवर्णसारूप्यादन्यत्र च कार्ये समवायि-कारणसादृश्यदर्शनाद्रजते तत्प्रभवत्वोपचारः । धनत्यागेन चात्यन्तोदारस्यापि गृहे दुःखदर्शनात्तत्सामान्येन रोदनोप-न्यासः ।

अत एवासत्यार्थप्रतिपादनादप्रामाण्यं नाशङ्कयम् , अस-त्यार्थे तात्पर्याभावात्; तात्पर्यविषयीभूतायाश्च निन्दाया-स्सत्यत्वात् । असत्यार्थोपादानं तु लक्षणोपायत्वेन साधुत्वोपा-यत्वेनैवाऽसत्सत्त्विबाद्यन्वाख्यानं न विरुद्ध्यते । न ह्युपाख्यानं स्वरूपसत्प्राशस्त्याप्राशस्त्यज्ञान उपयुज्यते, अपि तु तज्ज्ञानम् । अतश्च रज्ज्वां सर्पज्ञानस्येव भयकारणत्वमसत्योपाख्यानज्ञा-नस्य प्राशस्त्याप्राशस्त्यज्ञानकारणत्वं, तस्य च प्रवृत्तिनिवृत्ति-हेतुत्वं न विहन्यते । यत्र हि न ज्ञानमात्रेणोपयोगः, यथा अर्थ-

भावनांशेषु, तत्रापि ज्ञानमात्रोपयोगे वेदस्य निष्फलत्वेनाप्रामाण्यापत्तेस्तत्रार्थ एव तात्पर्यात्सत्यत्वाश्रयणम् । शब्दभावनांशेषु तु ज्ञानमात्रोपयोगा(१)त्र सर्वांशोपायसत्यत्वादरः ।

अत एव लोकेऽर्थासत्यत्व एव स्तुतिबुद्धिः, अर्थसत्यत्वे तु वक्तारो भवन्ति—कात्र स्तुतिर्निन्दा वा सत्यमेवैतदिति । सत्यपि चार्थासत्यत्वज्ञाने प्राशस्त्याप्राशस्त्यज्ञानस्य वेदकृतत्वात्प्रवृत्तिनिवृत्तिजनकत्वोपपत्तिः । अत एव लोके मेधादिहेतुभूते वचादिभक्षणे मेधाद्यनिच्छन्तं पुरुषं प्रवर्तयितुं तदभिप्रेतं सौभाग्यमसत्यमप्युपन्यस्य तं नियुङ्क्ते । सोऽपि च सौभाग्यासत्यतां जानन्नपि सर्वथा मामयं पुरुषार्थे प्रवर्तयतीति ज्ञात्वा प्रवर्तत एवेति सर्वस्वसंवेद्यम् । तस्मादेवमादौ शक्यार्थासत्यत्वेऽपि गौण्या वृत्त्या कथञ्चिदर्थसत्यत्वमापाद्य लक्षणया निन्दोपपत्तेः प्रामाण्यं सिद्धम् । एवं स्तुत्यर्थवादेष्वप्यर्थसत्यत्वानादरो द्रष्टव्यः । एवं यत्रापि अन्यद्विधौ, अन्यच्चार्थवादे संकीर्त्यते, यथा(२) "वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति" इति, "आपो वै शान्ताश्शान्ताभिरेवास्य शुचं शमयति" इति च, तत्राप्यपां स्तुत्याऽञ्जन्यानां वेतसावकानां स्तुतिर्लक्षितलक्षणया न विरुध्यते ।

सूत्रं तु—तत्सिद्धिसूत्रोक्तरीत्या गौणवृत्तिप्रकाररूपो गुणवादः स्तुतिहेतुर्ज्ञेय इति व्याख्येयम् ॥ १० ॥

## रूपात्प्रायात् ॥ १—२—११ ॥

अतः परं पूर्वपक्षयुक्तस्तेनाद्युदाहरणेषु तत्सिद्धिसूत्रोक्तगौणवृत्तिप्रकारनिरूपणार्थानि सूत्राणि ।

तत्र—"हिरण्यं हस्ते भवति, अथ गृह्णाति" इत्यस्य विधे-

---

१. सर्वत्रांशोपायेत० ख. ग. पु. २. तै. सं. ५. ४. ४.

ऽशेषः "स्तेनं मनोऽनृतवादिनी वाक्" इति । अत्र वाङ्मन-सयोर्निन्दा हिरण्यस्तुत्यर्था । अत्यन्तप्रशस्तयोरपि हि वाङ्-मनसयोः स्तेनानृतवादयोगाद्धिरण्यादूनत्वम् । अतो 'न हि निन्दा निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुं', इति न्यायेन हिरण्यस्तुतिः, न तु निन्दया स्वतन्त्रनिषेधोन्नयनम् । निषेधैकवाक्यताविरहे नि-न्दात्वस्यैवासिद्धेः; क्लृप्तविध्येकवाक्यत्वसम्भवे वाक्यभेदापाद-कनिषेधोन्नयनस्यान्याय्यत्वाच्च । मनसश्च स्तेनस्येव प्रच्छन्नरूप-त्वात्तत्कार्यकारित्वं गौणतानिमित्तम् । । वाचश्च प्रायशोऽनृत-वादिनीत्वाद्भूमा ॥ ११ ॥

## दूरभूयस्त्वात् ॥ १–२–१२ ॥

"धूम एव" इत्यादिः,(१) "तस्माद्दिवाग्निरादित्यं गतो रात्रा-वादित्यस्तं" इत्यादिश्चोपपाद्योपपादकरूपेण सर्वोऽर्थवादः(२) "अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहा" इत्यादि(३)मिश्रलिङ्गकमन्त्र-विधिशेषः । उभयोर्देवतयोरेकत्र सन्निधानेन चोभयदैवत्यहोम-स्तुतेरुपपत्तिः ।

वस्तुतस्तु केवललिङ्गकमिश्रलिङ्गकमन्त्रविध्योर्मध्येऽयं पठि-तोऽपि मिश्रलिङ्गविधेः(४) "उभाभ्यां सायं हूयते, उभाभ्यां प्रातः, न देवताभ्यस्समदं दधाति" इत्यर्थवादान्तराम्नानात्, 'अग्नि-र्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति" इत्यादेः केवलमन्त्र-विधेरेवायं शेषः—यस्माद्दिवाग्नेरदर्शनादादित्यान्तर्गतिस्सूर्य-स्यैव चातो ज्योतिष्ट्वं, एवं रात्रावप्यग्नेः । अतः केवलदैवत्यावेव युक्ताविति । दूरस्थस्य च भूयस्त्वेन यद्दर्शनं तद्दूराशिना लक्षयि-

---

१. तै. ब्रा. २. १. २-९. २. तै. ब्रा. २. १. २. १०.
३. अग्निसूर्ययोरुभयोः प्रतिपादनान्मिश्रत्वम् ॥ ४. तै. ब्रा. २. १. २. १०.

त्वा तद्विषयत्वाभावोऽन्नयादौ नञा बोध्यत आदित्यं स्तोतुमिति पूर्ववत् भूमैवात्र गौणवृत्तिनिमित्तम् ।

वस्तुतस्तु—'न ददृश' इति वाक्यस्य मुख्यो दर्शनाविषय आकाशादिरित्यर्थः ! तद्गतस्य दूरस्थवृत्तिभूयस्त्वप्रकारकदर्शनाविषयत्वरूपस्य गुणस्यैकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणमिति न्यायेनोपस्थितस्यान्नयादौ योगादेव गौणत्वोपपत्तेर्न गुणांशेऽपि लक्षणेति तत्त्वम् । एवमेव गौण्युपपत्तिस्सर्वत्रोपपादनीया ॥ १२ ॥

## स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ( नात् ) ॥१–१–१३॥

"न चैतद्विद्म" इत्ययं प्रवरानुमन्त्रणमन्त्रविशेषशेषः । अब्राह्मणस्यापि प्रवरानुमन्त्रणेन ब्राह्मण्यं भवतीत्येतत्स्तुत्यर्थमुपपादयितुं स्वस्यैव ब्राह्मणत्वाज्ञानोपन्यासः । पूर्ववच्चात्रापि ज्ञानगतं प्राशस्त्यं 'विदि' धातुना लक्षयित्वा तद्विषयत्वं नञा ब्राह्मणत्वे प्रतिषिद्ध्यते । लक्षणां विना चोपपत्तिः पूर्ववत् । सम्भवति हि ब्राह्मणत्वस्य दुर्ज्ञानत्वं, मातुर्व्यभिचाररूपापराधसम्भवात । नचापराधेऽपि(१) "बीजाद्योनिर्बलीयसी" इति प्रसिद्धेर्मातृजात्यैव जातिनिश्चयः, "माता भस्त्रा पितुः पुत्रो ( यस्माज्जा ) येन जातस्स एव सः" इति बीजावापकर्तुः पुत्रस्सम्भवतीति स्मरणात् तस्य च नानाजातित्वोपपत्तेर्निश्चयायोगात् । अत एव क्षेत्रिजात्यापि न व्यभिचारोत्पन्ने जातिनिश्चयः । अतश्च ब्राह्मणत्वस्य दुर्ज्ञानत्वादज्ञानवचनं गौणं, प्रशंसा च गौणी निमित्तम् ॥ १३ ॥

## आकालिकेप्सा ॥ १–२–१४ ॥

"को हि तद्वेद" इत्ययं प्राग्वंशे(२) "दिक्ष्वतीकाशान् करोति"

१. मनुस्मृ. ९. ५२. २. तै. सं. ६. १. १.

इत्यस्य विधेश्शेषः । सर्वस्य हि सद्यः फलं यथाभिमतं न तथा कालान्तरभावि । अतश्चातीकाशकरणं सद्यो धूमनिर्गमफलकत्वेन प्रशंसितुं कालान्तरभाविस्वर्गनिन्दा । अत्र ऐहिकत्वदाभिमततरत्वरूपप्राशस्त्यमेवामुष्मिकफलपरामर्शिना तच्छब्देन तद्गतं लक्षयित्वा तस्यानवक्लृप्तिः "को हि तद्वेद" इत्यनेनोच्यत इति प्रशंसैव गौणीवृत्तिनिमित्तम् । (लक्षणाभावो वा पूर्ववत् )

सूत्रं तु-यत्तदानीमेवोत्पद्यते तदाकालिकं, तस्यैव चेप्सा सर्वस्याभिमता, अतस्तामभिप्रेत्यायं गुणवाद इति । अकालिकमिति पाठेऽपि, काले विप्रकर्षे, भवं कालिकं, न कालिकमकालिकमिति व्युत्पत्त्या च स एवार्थः ॥ १४ ॥

## विद्या प्रशंसा ॥ १-२-१५ ॥

"शोभतेऽस्य मुखं" इत्यादिश्च गर्गत्रिरात्रविधेश्शेषस्तत्स्तुत्यर्थः, यज्ज्ञानस्याप्येवं फलं, किमुत तस्य गर्गत्रिरात्रस्येति । शोभत एव हि शिष्यैरुद्वीक्ष्यमाणं ज्ञातुर्गुरोर्मुखम् । अतस्तदनुवादोऽयं प्रशंसार्थः, न तु ज्ञानफलं; तस्य सामर्थ्यात् क्रत्वर्थकर्तृसंस्कारकत्वेन फलानपेक्षत्वस्य त्वयैवोक्तत्वात् । यद्यपि चेयं न शोभापदाभिधेया, लावण्यादेरेव तत्पदवाच्यत्वेन लोकप्रसिद्धत्वात्, तथापि प्रीतिजनकत्वेन तत्कार्यकारित्वाद्गौण्या तदभिधानम् ।

सूत्रं-या विद्या फलहेतुत्वेनोक्ता सा प्रशंसेति व्याख्येयम् ॥ १५ ॥

## सर्वत्वमाधिकारिकम् ॥ १-२-१६ ॥

"पूर्णाहुत्या सर्वान" इत्यादयोऽर्थवादाः पूर्णाहुत्यादिवि-

धीनां शेषाः, न तु स्वतन्त्रफलविधयः, पूर्णाहुत्यादीनां त्वदुक्तरीत्यैव फलानपेक्षत्वात् । सर्वकामावाप्तिवचनं च सर्वकामजनककर्माधिकारसम्पादनाद्गौणम् । पूर्णाहुत्यादौ कृत एव हि तत्तदुत्तरकर्माधिकारः । यद्यपि चेहैव सर्वशब्दानुरोधात्सुरकन्यागमनादिजनककर्माधिकारः कथमप्यसम्भवी, तथापि सर्वमोदनं भुञ्जत इतिवत्सर्वत्वमाधिकारिकं सम्भवमात्रापेक्षमित्यर्थः ॥ १६ ॥

## फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषस्स्यात् ॥ १-२-१७ ॥

यद्यपि च पूर्णाहुत्यादेस्सर्वफलसाधनत्वं स्यात्, तथापि नान्यानर्थक्यम्, कर्मतारतम्येन फलतारतम्योपपत्तेः । अवश्यं चान्यत्राप्यग्निहोत्रदर्शपूर्णमासादिष्वेकफलकेषु कर्मस्वल्पेनैव महतःफलस्याप्तौ महति कर्मणि समानपरिमाणत्वेऽपि निस्सारशमीमयत्वादिनैव तदाप्तौ ससारहिरण्मयस्रुक्करणे प्रवृत्त्यनुपपत्तेर्विधिवैयर्थ्यप्रसङ्गात्फलतारतम्यं कल्प्यम् । दृष्टं च लोकेऽपि वृष्ट्यादितारतम्येन फलतारतम्यम् । "ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः" इति स्मरणं, "यदग्निहोत्रं जुहोत्यथ गृहमेधिनमाप्नोत्येकया रात्र्या, अथ दशसंवत्सरानग्निहोत्रं जुहोत्यथ दर्शपूर्णमासयाजिन आप्नोति", इत्याद्यर्थवादाश्चामुमेवार्थं गमयन्ति ॥ १७ ॥

## अन्त्ययोर्यथोक्तम् ॥ १-३-१८ ॥

शुद्धपृथिवीचयननिषेधो "हिरण्यं निधाय चेतव्य" मित्यस्य विधेर्नहिनिन्दान्यायेन स्तुत्यर्थो नित्यानुवादो वाङ्मनसयोरिव । तदुपपादकत्वेन चेतरावपि प्रतिषेधौ नित्यानुवादौ । यथा

चान्तरिक्षे दिवि वा चयनं न प्रसिद्धं, तथा हिरण्यरहितायां पृथिव्यामपीति हिरण्यस्तुतिः । अनित्यसंयोगस्तु अर्थवादप्रामाण्ये स्थापिते "परन्तु श्रुतिसामान्यमात्रं" इत्यनेन न्यायेन बबरशब्दस्य शब्दानुकारित्वं प्रावाहणिशब्दस्य च प्रकर्षेण वहतीति व्युत्पत्तिमङ्गीकृत्य नित्यवायुपरत्वाङ्गीकारात्तस्य च वाक्छब्दलक्षितध्वनिमात्रप्रवदनकामयितृत्वेन स्तुत्युपपत्तेः परिहृतः ॥

प्रयोजनं तु—

(१)रात्रिसत्रे प्रतिष्ठा स्या(२)दञ्जने घृतसंस्थितिः ।
(३)तथा श्येनादिशब्दानां नामता भेदकारणम् ॥
(४)वारुणेष्ट्यां तथा दानं (५)वमनं वैदिकं तथा ।

---

( १ ) 'प्रतितिष्ठन्ति ह वै एता रात्रीरुपयन्ति' इत्यर्थवादबलादेव रात्रिसत्राख्ये कर्मणि प्रतिष्ठाख्यं फलमिति निर्णीतं चतुर्थतृतीये । ( ४-३-६ )

( २ ) 'अक्ताश्शर्करा उपदधाति' इत्यत्र शर्कराणामञ्जनं केन द्रव्येणेत्यपेक्षायां स्वसन्निधिपठिते 'तेजो वै घृतं' इत्यर्थवादे घृतस्यैव स्तवनाद्विधिस्तुत्योरेकवाक्यत्वसिध्यर्थं पूर्ववाक्ये घृतस्यैव विधेयत्वमङ्गीकृत्य तेनैवाञ्जनमिति निर्णीतं प्रथमचतुर्थे । ( १-४-१९ )

( ३ ) 'श्येनेनाभिचरन्यजेते'त्यादौ श्येनपदस्य विधेयगुणसमर्पकत्वं उत कर्मनामधेयत्वमिति सन्देहे 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचारति श्येनेन' इत्यर्थवादे श्येनसादृश्योक्तिबलादेव विधिगतस्य श्येनपदस्य कर्मनामधेयत्वमुररीकृतं प्रथमचतुर्थे । ( १-४-५ )

( ४ ) 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपे' दित्यत्राश्वप्रतिग्रहीतुरेवाश्वसमसङ्ख्याकेष्टिप्रतीतावपि उपक्रमस्थार्थवादे 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्' इत्यादिनाऽश्वदातुरेव वरुणग्रहरूपजलोदरप्राप्तेः इष्टिकरणेन च तन्निवृत्त्यभिधानात्तदनुसारेण दातुरेवेयमिष्टिः, न प्रतिग्रहीतुः, इति निर्णीतं तृतीयचतुर्थे । ( ३-४-१४ )

( ५ ) 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते यस्सोमं वमिति यस्सो-

(१)सोमयागपरत्वं च ज्योतिष्टोमपदस्य यत् ॥
(२)निवेशनं च धाय्यानामिध्यमानऋगुत्तरम् ।
(३)सोमविद्याप्रजानां च नित्यत्वं षष्ठमंस्थितम् ॥

---

मवामी स्यात्तस्मा एतं सोमेन्द्रं श्यामाकञ्चरुं निर्वपेत्' इति वाक्यविहिता श्यामाकेष्टिः यागाङ्गद्रव्यसंस्कारकत्वेन विहितभक्षणविशिष्टसोमस्य वमने कर्तव्या ? उत लौकिकस्य वमनविरेकार्थमेव पीतस्य सोमस्य वमन इति संशये उपक्रमस्थार्थवादे सोमवमनकर्तुरिन्द्रियवीर्यव्यृद्धिरूपदोषश्रवणात्तस्य च लोकेऽभावेन वैदिकसोमवमन एव कस्यचनादृष्टस्य दोषस्योत्पत्त्यङ्गीकारावश्यंभावेन तन्निर्घातार्थवैदिकसोमवमन एवेयमिष्टिः, न तु लौकिके इति सिद्धान्तितं तत्रैव ।

( १ ) 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र ज्योतिष्टोमपदस्य 'त्रिवृत्पञ्चदशस्सप्तदश एकविंशः, एतानि वाव तानि ज्योतींषि, य एतस्य स्तोमाः' इत्यर्थवादबलात् त्रिवृदादिस्तोमचतुष्टयवत्सोमयाग एव वाच्योऽर्थः इति निर्णीतं चतुर्थचतुर्थे । ( ४-४-१२ )

२. प्रकृतौ दर्शपूर्णमासयोस्सामिधेनीनां पञ्चदशत्वमुक्तम् । विकृतौ च तदधिका सप्तदशैकविंशत्यादिका सङ्ख्योक्ता। तत्र संख्यासम्पत्त्यर्थं तावत्य ऋचः दाशतयीभ्यस्समानेयाः । आनीयमानानामृचामादावन्ते मध्ये वा यत्र कुत्रचिदनियमेन वा समावेशः इति संशये 'इयं वै समिध्यमानवती असौ समिद्धवती, यदन्तरा तद्धाय्या' इत्यर्थवादे समिद्धमानवतीसमिद्धवत्योरन्तराल एव धाय्याशब्दशब्दितानां निवेशकथनात्तदनुसारेण तत्रैव निवेशो धाय्याशब्दवाच्यानाम् । इतरासां त्वन्ते इति निर्णीतं पञ्चमद्वितीये । इध्यमानऋक् 'समिध्यमानोऽध्वरे' इति इध्यमानपदघटिता प्राकृतसामिधेनीषु ऋक्षु नवमीऋक् । इयमेव च समिध्यमानवती । 'समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर' इति समिद्धपदघटिता समिद्धवती दशमी ॥ ( ५-३-३ )

यत्त्वत्र न्यायमालायांमस्मिन्नधिकरणे 'समिध्यमानो अध्वरे' इत्यसावृगष्टमी । 'समिद्धो अग्न आहुत' इत्यसौ नवमी इति पाठ उपलभ्यते स लेखकप्रमादकृत इत्यभ्युपगन्तव्यम् ।

३. 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः'इत्यर्थवादे ऋणत्रयसङ्कीर्तनादेव तदपा-

(१)द्वयोः प्रणयनं मध्यपर्वणोस्सप्तमोदितम् ।
(२)अर्थवादगतैर्लिङ्गैः प्रकृतित्वं तथाष्टमे ॥
(३)स्थानापत्तिरिरादीनां (४)चरुरोदनवाच्यपि ।
(५)उत्तराणां त्र्याधिक्य(६)मृत्विक्च ब्राह्मणो भवेत् ॥

करणरूपाणां सोमयागस्य विद्यायाः प्रजोत्पादनस्य च नित्यत्वमुक्तं षष्ठतृतीये । ( ६-२-११ )

१. चातुर्मास्येषु 'द्वयोः प्रणयन्तीति' श्रुतम् । तच्चाग्निप्रणयनं कयोर्द्वयोः पर्वणोरिति संशये 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्च' इत्यनन्तरोदितार्थवादे वरुणप्रघाससाकमेधाख्यमध्यमपर्वणोः स्तवनाद्विधिस्तुत्योरेकवाक्यतासम्पत्त्यर्थं तयोरेव मध्यमयोः प्रणयनमिति निर्णीतं सप्तमतृतीये । ( ७-३-८ )

२. इष्टिपशुसोमादीनां प्रकृतिविकृतिभावस्तत्र तत्र श्रुतार्थवादबलादेव निर्णीतोऽष्टमे ।

३. "यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम," इति मन्त्रे "ऐरं कृत्वोद्गेय" मितीरापदविधानं कुत्रेति संशये "न गिरागिरेति ब्रूयात्" इति निषेधानुवादबलाद्गिरापदकार्य एवेरापदविधानमिति निर्णयः कृतो नवमप्रथमान्त्ये । ( ९-१-१७ )

४. "आदित्यः प्रायणीयः पयसि चरुः" इत्यत्र चरुशब्दस्स्थालीवाची ? उतौदनवाची ? इति संशये 'अदितिमोदनेने'ति वाक्यशेषे विवरणात् चरुशब्द ओदनवाचीति राद्धान्तितं दशमे । (१०-१-१०)

५. "वाग्यतास्तस्तो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयेत्" इति विहितमुत्तरासां गवां दोहनम । ताश्च गावः कपिञ्जलाधिकरणन्यायेन त्रित्व पर्यवस्यन्ति ? उताधिकसंख्याका दोग्धव्या ? इति संशये-"नास्यैनां रात्रिं कुमाराश्च न पयो लभन्ते, नाग्निहोत्रं जुहोती"त्यर्थवादे साकल्यप्रतीतेर्न त्रित्वनियमः, किन्तु यावत्स्वं दोहनमिति निरधार्येकादशप्रथमे । ( ११-१-७ )

६. सर्वं वैदिकं कर्म त्रैवर्णिकाधिकारिकमित्युक्तम् । तत्रार्त्विज्येऽपि त्रैवर्णिकानामधिकारः ? उत ब्राह्मणानामेवेति संशये "न

अर्थवादप्रमाणत्वे सर्वं तदुपपद्यते ॥

सर्वसाधारणं तु—पूर्वपक्षे प्रकारान्तरेणापि प्ररोचितमनुष्ठितमभ्युदयकारि, सिद्धान्ते त्वर्थवादप्ररोचितमेव (१)तदिति द्रष्टव्यम् ॥ १८ ॥

इत्यर्थवादप्रामाण्याधिकरणं प्रथमम् ॥ १ ॥

अथ द्वितीयमौदुम्बराधिकरणम् ॥

## विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥१-२-१९॥

( विषयसंशयसङ्गतयः )

(२)"औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै" इत्यादिषु विधायकत्वेन वा प्रामाण्यं (३)स्तावकत्वेनैव वेति सन्देहः । पादाध्यायसङ्गती स्पष्टे । आक्षेपिकी त्वनन्तरा । ऊर्जा अन्नरूपेणौदुम्बरेण साधनेन, अस्मै यजमानाय, ऊर्जम् अन्नरूपान पशून्, आप्नोत्यध्वर्युः । अतः पशुरूपान्नसमृद्ध्यै औदुम्बरो यूपो भवतीति वाक्यार्थः ।

---

वै देवा अहुतादो यद्ब्राह्मणाः, यदन्वाहार्यमाहरन्ति तानेव तेन प्रीणाति" इत्यर्थवादे अन्वाहार्यादिदक्षिणायां ब्राह्मणानामेवाधिकारसङ्कीर्तनात्तदनुसारेण वैदिकेषु कर्मसु ब्राह्मणानामेवार्त्विज्येऽधिकार इत्युक्तं द्वादशान्ते ( १२-४-१४ ) सर्वमिदमर्थवादप्रामाण्याभ्युपगम एव सिध्यतीति । १. मन्त्रवदिति. क पु. ।

२. तै. सं. २-१-९ सोमापौष्णं त्रैतमालभेत पशुकामः" इति वाक्यविहितकाम्यपशुयागसन्निधौ श्रुतमिदं वाक्यम । याऽजा त्रीन् वत्सान् युगपत् प्रसूते तत्रैकैकोऽपि त्रैत इत्यभिधीयते ।

३. स्तावकत्वेन वेति. क. ग. पु. ।

( पूर्वपक्षः )

तत्र श्रौतप्रथमापेक्षितानन्यलभ्यप्रधानभूतविधिपरत्वे सम्भवति न लाक्षणिकविध्यवगमोत्तरापेक्षितसम्भावितान्यलाभगुणभूतस्तुतिपरत्वमुपपत्तिमत् । नचास्य विधित्वप्रयोजनवत्तरत्वमपि । अतो विधिरेवायम् । तत्र 'पशूनाप्नोती'ति द्वितीयया पशूनां साध्यत्वमात्रावगमेऽपि योग्यतया ईप्सितत्वस्याप्यवगमाद्भाव्यत्वसिद्धिः । यस्य तु मते (१)ईप्सितत्वमेव द्वितीयार्थस्तदा कामशब्दादिकं विनैव भाव्यत्वावगमे नैव किञ्चिद्बाधकमस्ति ।

वस्तुतस्तु "ऊर्जोऽवरुद्ध्या" इति तादर्थ्यचतुर्थ्या(२)'रन्धनाय स्थाली'(३) 'सर्वेभ्यो दर्शपूर्णमासा' वित्यादिवत्कामपदाद्यभावेऽपि भाव्यत्वावगमः स्पष्टः । ततश्च पशूनां भाव्यानां साधनापेक्षत्वात्सन्निधानाद्विनैव तृतीयया यागादिवदौदुम्बरत्वजातिस्साधनत्वेन सम्बध्यते । साध्यसाधनसम्बन्धस्य च क्रियागर्भत्वाद्दण्डेन घटो भवतीतिवच्च भवनक्रियासम्बन्धे पुरुषव्यापाराविषयत्वेन वचनवैयर्थ्यापत्तेर्लक्षणयाऽन्तर्णीतणिजर्थकल्पनया वा भवतेः पुरुषव्यापारपरत्वम् । तिपैव वा लक्षणया शक्त्यैव वा भावनाप्रतीतिः । धातुस्तु साधुत्वार्थमित्यपि वक्तुं शक्यम् । तदयमर्थः- औदुम्बरत्वेन पशून् भावयतीति । साध्यसाधनसम्बन्धज्ञानादेव च प्रवृत्तिसिद्धेर्नार्थो विधिना । यदि तु विध्यभावे सन्निहिताया औदुम्बरताया एव भावनोद्देश्यत्वापत्तेर्विध्याग्रहः, तदा भवतीत्ययं पञ्चमलकारस्सन् विध्यर्थको

१. ईप्सितत्वमपीति. क. पु. ।

२. रन्धनं-पाकः, ।

३. अपेक्षितसर्वफलार्थं दर्शपूर्णमासयागौ कर्तव्यावित्यर्थः ।

भविष्यति ।

न च फलविधिपक्षेऽर्थवादसमभिव्याहाराभावे पञ्चनलकारत्वानिश्चायकाभावः, विध्येकवाक्यत्वं विनाऽर्थवादत्वानिश्चयेन तस्य तदनिश्चायकत्वात् । अतः "कपिञ्जलानालभत" इतिवदप्रामाण्यार्थकत्वेनैव तन्निश्चयः । अस्तु वाऽर्थवादस्यैव तन्निश्चायकत्वं, तथापि 'ऊर्ग्वा उदुम्बर' इत्यादेः 'ऊर्जैवास्मा' इत्यन्तस्य स्तावकत्वाङ्गीकाराददोषः । न चाश्रयाभावादविधानं; फले औदुम्बरतायाः, "सोमापौष्णं त्रैतमालभेत पशुकामः" इति प्रकृतयागस्याश्रयत्वोपपत्तेः । यद्यपि च जातेस्साक्षाद्यागसाधनत्वासम्भवः तथापि व्रीहिद्रव्यादिवदेव तदाक्षिप्तकाष्ठस्य (१)प्रदेयत्वेन साधनत्वाविघातः । काम्यत्वादेव चोत्पत्तिशिष्टपशुबाधकत्वमविरुद्धम् । यूपशब्दस्तु "उपशयो यूपो भवती" तिवदर्थप्राप्तच्छेदनादिधर्मवत्तयैवानुवादः, यूपधर्मातिदेशार्थो वा ।(२) गुणफलविधौ च भावनान्तरस्वीकारादुभयविशिष्टभावनाविधानादवाक्यभेद इति द्रष्टव्यम् । अथवाऽतिदेशप्राप्ता यूपोत्पत्तिरेवाश्रयत्वेनान्वेति । न च प्रकरणेनैवाश्रयोपस्थितिः(३)कार्येति नियमस्समस्ति, अतिदेशेनापि तदुपस्थापनसम्भवात् । तस्माद्विधायकत्वेनैवैवंजातीयकस्य प्रामाण्यम् । सूत्रं व्याख्यातम् ॥ १९ ॥

## लोकवदिति चेत् ॥१-२-२०॥

---

१. 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्यत्र कृष्णलानामनदनीयानामपि यथा यागीयद्रव्यत्वं तद्वदत्रापि भवितुमर्हतीति हृदयम् ।

२. द्वितीयद्वितीये (२. २. १३.) इन्द्रियकामाधिकरणे निपुणतरमुपपादितमिदम् ।

३. कर्तव्येति. पा. ।

ननु-यत्रापि लोके बुद्धिपूर्वकारिणो मात्रामपि निष्प्रयोजनां न प्रयुञ्जते, तत्रापीयं गौः क्रेतव्येत्यस्य बहुक्षीरा(१)ऽप्रत्ययेत्यादिना स्तुतिरेव दृष्टा, न तु फले विधानं, अतः कथं स्तुत्यपेक्षया विधेरर्थवत्तरत्वमिति चेत् ॥ २० ॥

## न पूर्वत्वात् ॥ १—२—२१ ॥

युक्तं लोके बहुक्षीरत्वादीनां विदितपूर्वत्वात्क्रियाजन्यत्वाच्च फलविध्यसम्भवेनागत्या स्तुतिपरत्वम्, वेदे त्वविदितफलजनकत्वविधिसम्भवे विधिबलेनैव सम्भवल्लाक्षणिकस्तुतिपरत्वकल्पनं को नामाश्रयेत् ! ॥ २१ ॥

( इति पूर्वपक्षः । )

## उक्तं तु वाक्यशेषत्वम् ॥ १—२-२२ ॥ (सि)

( सिद्धान्तः )

सत्यं फलपरत्वं युक्तं, न तु तत्सम्भवः । तथाहि—यद्यपि तावत्पशूनां भाव्यत्वं गम्येत तथापि भावनायां विधिसमभिव्याहृतायामपि सन्निहितेप्सितयूपपदार्थस्यैव "खादिरो यूपो भवती" तिवद्भाव्यत्वोपपत्तौ न विप्रकृष्टानां पशूनां तत्कल्पनं युक्तम्, यूपभवनाक्षिप्तायां भावनायां यूपस्यैव भाव्यत्वौचित्याच्च । एवं सत्यपि यदीन्द्रियकामादिपदवदनन्यपरं फलश्रवणं भवेत् ततः सन्निहितातिलङ्घनमप्याश्रीयेत । न तु पशूनां भाव्यत्वे प्रमाणमस्ति । (२)न हि द्वितीया भाव्यत्वाभिधायिनी,

---

१. जीवदपत्येति. क. पु. ।

२. इदं च द्वितीयाध्यायद्वितीयपादे सम्मार्गाधिकरणे ग्रन्थकृता स्पष्टीकृतम् ।

जन्यत्वमात्राभिधायित्वात् । यद्यपि चेप्सितत्वाभिधायिनी, तथापि "पशूनाप्नोती" ति वर्तमाननिर्देशाद्वर्तमानफलस्य चानुपलब्ध्या बाधाद्भविष्यदर्थकल्पना ऽऽवश्यकी । न च रात्रिसत्रवत्तदङ्गीकारेऽप्यदोषः, औदुम्बरत्वादेर्यूपार्थत्वेनैव नैराकाङ्क्ष्येण रात्रिसत्रवत्फलानपेक्षत्वादिति(१)वर्णमय्यधिकरणे वक्ष्यामः । न चैवं पुनरुक्तता, अनेन फलमात्रपरत्वनिराकरणेन स्तुतिपरत्वे स्थिरीकृते तत्र रात्रिसत्रवदर्थवादस्यैव सतः फलपरत्वमाशङ्क्य निराकरिष्यते ।

यत्तु–"सर्वेभ्यो दर्शपूर्णमासा" वित्यादिवत्तादर्थ्यचतुर्थी फलप्रतिपादिकेत्युक्तम् , तदपि तादर्थ्ये सति–'देवाय पुण्यं, 'ब्राह्मणाय दुग्ध' मितिवत्प्राधान्यमात्रावगमेऽपि भाव्यत्वानवगमादसाधकमिति भवदेवेनोक्तम् । "सर्वेभ्यो दर्शपूर्णमासा"वित्यादौ त्वगत्या लक्षणया भाव्यत्वावगतिः ।

किञ्च आश्रयालाभादपि न गुणफलसम्बन्धोपपत्तिः । तथा हि–न तावत्पशुयाग आश्रयः । तत्र हि प्रदेयपरिच्छेदकत्वेन वा गुणस्य सम्बन्धः प्रकारान्तरेण वा ? (२)न तावदन्त्यः, अयोग्यत्वात् । आद्ये यूपग्रहणानर्थक्यम् । न च यूपपदं धर्मातिदेशकम् । तथा सति यूपधर्मवानुदुम्बरप्रकृतिक इत्यर्थावगमेऽपि विशेष्याश्रवणेन साकाङ्क्षत्वप्रसङ्गात् । अध्याहृतविशेष्यस्यैव गुणद्वयविशिष्टस्य विधौ (३)गौरवाच्च । न च प्रधानभूतयागस्याश्रयत्वासम्भवे '(४)आनर्थक्यतदङ्ग' न्यायेन यूपेऽवतारः, आश्रयत्वस्य 'आनर्थक्यतदङ्ग'न्यायाविषयत्वेन (५)रेवत्यधिकरणे

---

१. ४-३-१. २. नान्त्य इति. क. पु. ।
३. गौरवप्रसङ्गाच्चेति क. पु. ।
४. आनर्थक्यात्तदङ्गेषु० इति न्यायः तृतीयप्रथमे नवमाधिकरणे ।
५. २-२-१४

स्थापयिष्यमाणत्वात् । सत्यपि विषयत्वे यूपमात्रावतारे प्रमाणाभावाच्च । नापि यूपोत्पत्तिः पशुनियोजनं वाऽऽश्रयः, तयोरातिदेशिकत्वेनाप्रकृतत्वात् । अतिदेशस्य सर्वाङ्गसाधारणस्यैकत्वेन तयोर्विशिष्योपस्थित्यभावाच्च । साधारणोपस्थित्या चाश्रयत्वाङ्गीकारे जुह्वादीनामप्याश्रयत्वापत्तिः । इष्टापत्तौ च यूपपदवैयर्थ्यतादवस्थ्यम् । अनेनैव च वाक्येन यूपस्याश्रयत्व उच्यमाने वाक्यभेदः । तेनाश्रयाभावादपि न गुणफलसम्बन्धः । तेनातिदेशप्राप्तयूपोद्देशेनैवौदुम्बरत्वविधिः । तत्स्तुतिश्च सर्वोऽयमर्थवादः । अत उक्तरीत्या वाक्यशेषत्वमेव युक्तमिति सूत्रार्थः ॥ स्तुत्यालम्बनं च पूर्णाहुतिवत्प्रधानफलानुवादाद्दुष्टव्यम् ॥ २२ ॥

## विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ १-२-२३ ॥

किञ्च—तुल्यन्यायत्वात्सर्व एव फलविधिसरूपवद्द्रव्यदेवतागुणक्रियाविधिसरूपास्तथा विधायकत्वेनाऽऽशङ्कनीयाः, यथा—(१)"यजमानः प्रस्तरः" इत्यादयो द्रव्यस्य, "आग्नेयो वै ब्राह्मणः" इत्यादयो देवतायाः, (२)"यो विदग्धस्स नैर्ऋतः, योऽशृतस्स रौद्रः" इत्यादयो गुणस्य,(३)"निवीतं मनुष्याणाम्" (४)"इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत" (५)"वायुर्वै क्षेपिष्ठा देवता" (६)"अप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः" इत्यादयः क्रियायाः । तत्र यद्यपि निवीतादिक्रियाविधिषु शक्यार्थविषयत्वं,तथापि वायुवेतसादीनां क्षेपिष्ठत्वाब्जन्यत्वस्य स्वभावादेव सिद्धेरश्वादौ च तस्य प्रयत्नेनाप्यनिष्पत्तेरनर्थको विधिः । तस्मात्स्तुतिः प्र-

---

१. तै. सं. २. ६.५. २. तै सं. २. ६.३. ३. २. ५.११.
४. शत. ब्रा. १. १.२. ५. तै. सं. २. १.१. ६. तै ब्रा. ३.८.१९

तीयेत । स्तुतिप्रकारश्च वायूदाहरणे पूर्वमेव प्रदर्शितः । वेतसावकयोस्त्वेवम् "अप्सु योनिर्वा अग्नेरोऽप्सुजो वेतसः स्व एवैनं योनौ प्रतिष्ठापयति" इत्ययं(१) "वैतसे कटेऽग्निं चिनोति" इत्यस्य विधेश्शेषः । तत्र वेतसेऽब्जन्यत्वस्य प्रत्यक्षत्वादवकाया अपि पुराणेष्वब्जन्यत्वप्रसिद्धेः, कार्यकारणयोरभेदोपचारेण वेतसप्रकृतिभूतास्वप्सु चयनादग्नेरस्य स्वयोनौ प्रतिष्ठापनं कृतं भवतीति चयनस्तुतिः ।

यद्यपि च—स्वयोनिप्रतिष्ठापनमात्रेण न काचित्स्तुतिबुद्धिः, तथापि(२) "आपो वै शान्ताः" इत्यर्थवादान्तरेऽपां शान्तत्वेन यजमानकष्टनाशयितृत्वात्तथाविधप्रशस्त्यवतीष्वप्सु प्रतिष्ठापनेन चयनस्य स्तुतिः प्रत्येतव्या । अतश्च तत्समानन्यायेतरेष्वपि सर्वविधिस्वरूपेषु तथात्वं द्रष्टव्यम् । नचैवं (३)'तत्सिद्धि' सूत्रादावपि विध्यर्थवादविचारस्य करिष्यमाणत्वात्पौनरुक्त्यम्, तत्सिद्धिसूत्रस्य तावद्गुणवादनिमित्तमात्रकथनपरत्वेनात्रत्यस्यैव विध्यर्थवादविचारस्य तदर्थस्मारणात् । (४)निवीताद्यधिकरणानि तु कृत्वाचिन्तात्वेन व्याख्येयानि । अर्थवादत्वकथनं तु तत्र कृत्वाचिन्तोद्घाटनम् । एवं षाष्ठमपि (५)माषपाकाधिकरणं व्याख्येयम् । सूत्रं व्याख्यातम् ॥ २३ ॥

**प्रकरणे च सम्भव(६)न्नपकर्षः कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ १-२-२४ ॥**

किञ्च—'यो विदग्ध" इत्यादौ यदि तावद्यच्छन्दानुरोधेन

---

१. तै ब्रा. ३.८.१९. २. तै. सं. ५. ४.४. ३. पू. मी. १.४.२३,
४. पू. मी. ३. ४. १. ५. पू. मी. ६. ६. ११.

६. यद्यपि अपकर्षो न कल्प्येत इ सेव सर्वत्र पाठस्समुपलभ्यते, तथापि हस्तलिखितकौस्तुभपुस्तकयोर्नञ्रहितस्यैव पाठस्यदर्शनात् तथैव ग्रन्थकृता व्याख्यातत्वाच्च स एव पाठो निवेशितो मया ।

दर्शपूर्णमासप्रकरणस्थविदग्धत्वे निमित्ते निर्ऋत्यादिदेवतान्तरविधिः, तदा स्तावकत्वेन गतिसम्भवे नित्यस्याप्युत्पत्तिशिष्टदेवतान्तरस्य बाधाख्योऽपकर्षः कल्प्येत । अथैतद्दोषभयाद्व्यवहितकल्पनयापि 'यो नैर्ऋत' इति तद्धितान्तपदलक्षितनिर्ऋतिदैवत्ययागीयद्रव्योद्देशेन विदग्धत्वविधानं, तदा(१) "पूषा प्रपिष्टभाग" इति वत्प्रकरणादपकर्षः कल्प्यः । दर्शपूर्णमासप्रकरणे निर्ऋतिदेवताभावेन दर्शपूर्णमासकर्म प्रति विध्यानर्थक्यात् । न च प्रकरणे एव कर्मान्तरविधिशङ्क्यः, यत्तच्छब्दान्वयानुपपत्तेः । "अविदहता श्रपयितव्य" इति विध्येकवाक्यत्वसम्भवे वाक्यभेदाङ्गीकारायोगाच्च । तथाचोत्तरसूत्रे वक्ष्यति—"विधौ च वाक्यभेदस्स्यात्" इति । तस्मात्स्तावकत्वमेव युक्तम् ॥

सूत्रं व्याख्यातम् ॥ २४ ॥

## विधौ च वाक्यभेदस्स्यात् ॥ १-२-२५ ॥

इदं सूत्रम् स्तुतिपरस्यापि "ऊर्जोऽवरुद्ध्या" इत्यस्य फलपरत्वे शङ्क्यमाने—यदि तावत् श्रूयमाणस्यैवोभयपरत्वम् , तदा तात्पर्यानेकत्वनिमित्तो वाक्यभेदः । रात्रिसत्रन्यायेन श्रुतस्य शब्दस्य स्तुतिमात्रपरत्वेऽपि विहितस्यौदुम्बरत्वस्य फलापेक्षायां कल्पितेन शब्देन फलविधौ शङ्क्यमाने तु गौरवलक्षणो वाक्यभेदः । यद्यपि चेयं शङ्का पर्णमय्यधिकरणे निराकरिष्यते, तथाप्यत्रापि प्रसङ्गान्निराकृतेति मूले व्याख्यातम् । वस्तुतस्तु—अनन्तरसूत्रानुगुण्याद्विदग्धादिवाक्येष्वेव कर्मान्तरशङ्कानिराकरणार्थं वेदितव्यम् । निराकरणप्रकारश्च पूर्वमेव दर्शितः ॥ २५ ॥

इति द्वितीयमौदुम्बराधिकरणम् ॥ २ ॥

( विधिवन्निगदाधिकरणम् )

---

१. तै. सं. २. ६. ८.

अथ तृतीयं हेतुवन्निगदाधिकरणम् ॥

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ १-२-२६ ॥ ( पू )

( विषयसंशयसङ्गतयः )

चातुर्मास्येषु-(१)"शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" इति श्रुतम् । तत्र 'तेन ह्यन्नं क्रियत' इत्यस्य हेतुविधायित्वेन प्रामाण्यं स्तावकत्वेन वेति सन्देहः । पादाध्यायसङ्गती(२) स्पष्टे । अनन्तरा तु पूर्वत्र कामपदाद्यभावात्फलपरत्वं निराकृतम्, इह तु हेतुप्रतिपादक'हि'शब्दश्रवणाद्धेतुविधित्वसम्भव इति पूर्वपक्षोत्थानात्पूर्वाधिकरणसिद्धान्तहेतुप्रत्युदाहरणरूपा । अत एव न पौनरुक्त्यमपि ।

( पूर्वपक्षः )

तत्र हिशब्दश्रुत्याऽन्नकरणत्वस्य हेतुत्वमुच्यते । हेतोश्च साध्यापेक्षायां सन्निधानाल्लाघवाच्च होमसाधनत्वं साध्यत्वेन सम्बद्ध्यते ।

यद्यपि च पूर्वं व्याप्त्यवगममन्तरेण लोके प्रायशो न हेतुत्वावगमः, तथाप्यनवगतव्याप्तेरपि पुंसो धूमो वह्नेर्हेतुरित्याप्तोपदेशादेव व्याप्त्यनुमानवद्वेदावगतहेतुत्वान्यथानुपपत्त्या व्याप्तिवचनं कल्प्यते—यद्यदन्नकरणं तेन तेन होतव्यमिति । अस्ति च दर्वीपिठरशूर्पादीनामन्नकरणत्वम; पाकादिरूपव्यापारवत्त्वात्, विप्रकृष्टलाङ्गलाद्यपेक्षया साधकतमत्वाच्च ।

अत्र च तच्छब्देन शूर्पपरामर्शोऽपि न तस्य हेतौ प्रवेशः, हिश-

---

१. चातुर्मास्यान्तर्गतवरुणप्रघासाख्ये द्वितीये पर्वण्याम्नातमिदम् ।
२. सङ्गतिस्स्पष्टेवेति० क. ख. पु. ।

द्दोपात्तहेतुत्वविधावुद्देश्यस्य तृतीयोपात्तस्य करणत्वस्य प्रातिपदिकोपात्तेन शूर्पेण विशेष्टुमशक्यत्वात्। शूर्पस्य पक्षत्वेन तद्वृत्तित्वस्य हेतुतावच्छेदकत्वानुपपत्तेश्च। अत्र च 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्युभयत्रापि वर्तमाननिर्देशाद्धोमसमानकालीनान्नक्रियाप्रतीतेस्तादृश्याश्चासम्भवेन तन्निरूपितकरणत्वस्य होमसाधनत्वं प्रति हेतुत्वासम्भवात् 'क्रियत' इत्यत्र कृञा स्वार्थविषयिणी शक्तिर्लक्ष्यते—तेन कर्तुं शक्यत इति। अन्नक्रियाजनकशक्तेश्च सर्वदा वर्तमानत्वान्न लटोऽनुपपत्तिः।

वस्तुतस्तु शक्तिं प्रति तृतीयोपात्तस्य करणत्वस्यानन्वयापत्तेश्शक्तिव्यतिरिक्तकरणत्वाभावाच्च शक्तिलक्षकत्वानुपपत्तेर्लट एव भूतत्वे भावित्वे वा लक्षणा। आवश्यकी चेयं लक्षणा स्तुत्यालम्बनार्थं सिद्धान्तिनोऽपि। तेन तादृशान्नक्रियाकरणत्वस्य हेतुत्वोपपत्तिः। अत्र च होमस्य (१)"करम्भपात्राणि जुहोति" इत्युत्पत्तिवाक्येनैव प्राप्तत्वात्तदनुवादेनान्नकरणत्वहेतुकमन्नकरणमात्रस्य दर्वीपिठरादेस्साधनत्वं श्रुतानुमितैकदेशनिष्पन्नवाक्येन विधीयते। शूर्पपदं चा(२)वयुत्यानुवादोऽन्नकरणमात्रोपलक्षणं वा। दर्वीपिठरादीनामपि होमसाधनत्वसिद्धिश्च व्याप्तिकल्पकस्य हेतोः प्रयोजनमिति नानर्थक्यम्। नचैवं प्राशस्त्यसमर्पकाभावः, विधेरेवाप्राप्तिनललब्धप्राशस्त्यलाभोपपत्तेः।

---

१. का. श्रौ. सू. ५. ५. १०. दक्षिणाग्नौ यवानीषद्भर्जयित्वा तान् पिष्ट्वा ( चूर्णीकृत्य ) जलेन संयुत्य तेन पिष्टेन यजमानस्य यावत्यः प्रजाः स्युः तत एकाधिकानि पात्राणि क्रियन्ते। तानि करम्भपात्राणि। तानि च नवीने शूर्पे निक्षिप्य तत् शूर्पं पत्नी स्वशिरसि निक्षिप्य यजमानान्वारब्धा दक्षिणेऽग्नौ जुहुयात्। एष सम्प्रदायः॥

२. अवयुत्य समुदायात् पृथक्कृत्यानुवादः।

हेतुसमर्पकस्यैव वा(१)रात्रिसत्रवदुभयपरत्वकल्पनया प्राशस्त्य परत्वोपपत्तिः । तस्माद्धेतुविधिरेवायम् "न ह्यत्रानूयाजान्यक्ष्यन् भवती" तिवत् ॥ सूत्रं व्याख्यातम् ॥ २६ ॥

( इति पूर्वः पक्षः )

## स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥१-२-२७॥(सि)

( सिद्धान्तः )

नैवम् ; प्रथमोपस्थितविध्युद्देशवर्त्यनन्यप्रयोजनशूर्पपदवैयर्थ्यप्रसङ्गात् । अतश्शूर्पं तावदवश्यं विधेयम् । तेन प्रत्यक्षश्रुतेन शूर्पेणाऽऽनुमानिकैर्दर्व्यादिभिर्न विकल्पः, न वा तस्य तैर्बाधः । समुच्चयोऽपि शूर्पस्य नैरपेक्ष्यबाधादयुक्तः । तथा हि —"(२)समर्थः पदविधिः" इति सूत्रेण तावत्पदमात्रसम्बन्धिविधौ सामर्थ्यं विधीयत इति निर्विवादम् । (३)न चैतस्य समासप्रकरणस्थत्वात्पदमात्रे न सामर्थ्यविधायकत्वम्, एतस्य परिभाषारूपत्वेन प्रकरणेनानियमात् । अन्यथा तद्धितविधावप्यस्य प्रवृत्त्यनापत्तेः । न च तत्र "(४)समर्थानां प्रथमाद्वा" इति सूत्रेण सामर्थ्यापेक्षत्वविधिः, अस्य सूत्रस्य 'समर्थानां पदाना' मित्यनूद्य 'प्रथमाद्वा प्रत्ययोत्पत्ति' रित्येतद्विधिपरत्वात् ।

वस्तुतस्तु नास्य समासप्रकरणस्थत्वम् । अतस्समासवत्पदस्य सतो विधिरित्यर्थासम्भवेऽपि प्रातिपदिकादनुशिष्टस्यापि तद्धितस्य पदसम्पादकत्वात्, उभयसाधारण्येन पदस-

---

१. रात्रिसत्रे स्तावकस्यार्थवादस्य फलपरत्वमपि यथा कल्प्यते तद्वदुभयपरत्वमिति भावः । २. पा. सू. २. १. १.

३. न च तस्येति ख. पु. । ४. पा. सू. ४. १. ८२ ।

म्बन्धिविधिमात्रम् । पदविधिशब्दार्थो महाभाष्ये प्रसिद्धः । एवं च सुप्तिङ्विधेरपि धातुप्रातिपदिकादनुशिष्टत्वेन पदसम्बन्धित्वा-त्सामर्थ्यापेक्षत्वमविरुद्धम् । अतश्शूर्पेणेत्यत्रापि सामर्थ्यापेक्षत्वा-दन्यापेक्षत्वे च सामर्थ्यभङ्गापत्तेर्न समुच्चयः ।

ननु—"समर्थः पदविधिः" इत्यत्र महाभाष्यकारेण द्विविधं सामर्थ्यमुक्तम्—व्यपेक्षालक्षणमेकार्थीभावलक्षणं च । तत्र यदि तावदन्योन्यापेक्षत्वरूपं व्यपेक्षालक्षणम्, यथा 'राजपुरुष' इत्यत्र राजपदस्योत्थिताकाङ्क्षत्वं पुरुषपदस्य चोत्थाप्याकाङ्क्षत्वम्, तथा सति शूर्पेणेत्यत्र द्रव्यान्तरसाकाङ्क्षत्वेऽपि प्रकृतिप्रत्यययोः परस्प-रसापेक्षत्वान्न विरोधः । न चैवमृद्धपदसाकाङ्क्षत्वेऽपि राजपुरुष इति समासापत्तिः, "सविशेषणानां वृत्तिर्नेष्यते" इति वार्तिकेन तन्निषेधात् ।

अथ तु सूत्रवार्तिकयोरेकवाक्यतया पदान्तरसापेक्षत्वे-ऽप्यसामर्थ्यं स्यात्, तथापि शाब्दान्वयसापेक्षत्व एव तत्, नत्वर्थान्तराकाङ्क्षत्वेऽपि । व्रीह्यादीनामवघाताद्यपेक्षत्वेऽपि साम-र्थ्याविघातात् । अथैकार्थीभावलक्षणं तत्; तथापि समास-वच्छूर्पकरणत्वयोर्विशेषणविशेष्यभावमात्रेणैकार्थ्योपपत्तेर्न द्रव्या-न्तरसापेक्षत्वेऽपि सामर्थ्यभङ्ग इति चेन्न; विशेषणत्वस्यान्य-योगव्यावृत्तिं विनाऽसम्भवेन द्रव्यान्तरसापेक्षत्वे विशेषणत्व-स्यैवानुपपत्तावेकार्थीभावलक्षणसामर्थ्यानुपपत्तेः ।

यद्यपि चायोगव्यावृत्तिरूपनियमफलकत्वेनापि विशेषणत्वो-पपत्तिः, तथापि शूर्पस्याविशेषाद्धोमीयसकलद्रव्याधारत्वेन वि-धानात्तत्र चायोगव्यावर्तनरूपस्य नियमस्य द्रव्यान्तरव्यावृत्ति-मन्तरेणासिद्धेर्न समुच्चयोपपत्तिः ।

एवञ्च यद्यपि "समर्थः पदविधि" रित्यनेन पदमात्रविधौ

सामर्थ्यविधिर्न स्यात्, तथापि द्रव्यविधेर्नियमविधित्वात्तस्योक्तविधया द्रव्यान्तरव्यावृत्तिमन्तरेणासिद्धेर्व्यावृत्तितात्पर्यावगतेस्समुच्चये च तदसिद्धेर्न पुरुषेच्छामात्रेण समुच्चयोपपत्तिः । आवृत्त्यापादनेन तु समुच्चयपक्षो गुणानुरोधेन प्रधानावृत्त्ययोगादयुक्तः । विस्तरेण चैतदुपपादितम्—

(१)"समासस्सति सामर्थ्ये तच्चापीष्टं विशेषणे ।
विशेषणं व्यवच्छेत्तृ विशेष्यस्यापि चोच्यते ॥"

इत्यादिना रथन्तरचरणे वार्त्तिककृता । तस्मान्न समुच्चयोऽपि ।

अतश्च प्रत्यक्षश्रुतेन शूर्पेणैव होमस्य निराकाङ्क्षत्वात् नानुमानिकानां दर्वीपिठरादीनामन्वयः ।

न च शूर्पासम्भवेऽनुकल्पत्वेनान्वयश्शंक्यः, हिशब्दश्रुतेरपेक्षितस्तुतिमात्रपरत्वसम्भवेऽनपेक्षितहेतुपरत्वकल्पने प्रामाण्याभावेन दर्वीपिठराद्यन्वयविधायिन्याश्रुतिकल्पने गौरवात् ।

न च स्तुतिपरत्वे लक्षणापत्तिः, अपेक्षानुरोधेन तस्या अप्याश्रयणीयत्वात् ।

वस्तुतस्तु हिशब्दो हेतुत्वमेव वदन् विधिं प्रति हेतोरनपेक्षितत्वात् आनर्थक्यतदङ्गन्यायेन स्तुतिं प्रत्याश्रीयते—अन्नकरणत्वात्प्रशस्त इति । अतो विधिशब्दापेक्षापूर्वकत्वात् स्तुतिरेव न्याय्या, यतोऽन्नकरणत्वस्य हेतुत्वेऽपि दर्वीपिठरादेः साधकतमत्वाभावेनाकरणत्वात्, साधकतमस्य च पाकादेः होमसाधनत्वायोगात्, अचोदनेत्येव सूत्रार्थः ॥ २७ ॥

## व्यर्थे स्तुतिरन्याय्येति चेत ॥ १-२-२८ ॥

नन्वेवं शूर्पेऽपि साधकतमत्वाभावात् स्तुत्याकाङ्क्षनकपार्थरहिते स्तुत्यनुपपत्तिः ॥ २८ ॥

---

१. तं. वा. पृ. ५७९ ।

## अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ १-२-२९ ॥

अस्मत्पक्षे त्वेतस्य विधिशेषत्वेनानुवादकत्वात् , अनुवादस्य च यथाप्राप्ति वर्णनीयत्वात् , यादृशं लोके शूर्पस्य विप्रकृष्टलाङ्गलाद्यपेक्षयाऽन्तरङ्गत्वादन्नं प्रति साधकतमत्वं दृश्यते, तादृशस्यैव स्तुत्यालम्बनार्थमनुवादो नानुपपन्नः । एवमेव वर्तमाननिर्देशोऽपि अनुवादत्वादुक्तरीत्या करोतेश्शक्तिलक्षकत्वेन लटो वा भूतभविष्यत्काललक्षकत्वेन व्याख्येयः । अनुवादत्वादेव च लक्षणापि न दोषः । प्रत्युत स्तुत्युपपादकत्वाद्गुण एव । न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने । न वा वर्तमानशक्तिके तादृशी यादृशी फलोपहिते । अतो वर्तमानशक्तिकं हेतुं कृतं करिष्यमाणं वा स्तोतुमस्मत्पक्षे 'क्रियत' इति निर्देशोपपत्तिः । हेतुविधिपक्षे तु प्रमाणान्तरसिद्धार्थानुवादकत्वाभावाद्यथाश्रुतादीषदप्यन्यथात्वकल्पनं दोष एव ।

अत एव यत्र हेतुविधिपक्षेऽपि न लक्षणा । यथा -(१)आतिथ्यायां "चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानूयाजान्यक्ष्यन्भवती" त्यत्र । तत्र हेतुरेवानूयाजाभावः चतुर्गृहीतत्वविधिफलीभूताष्टगृहीतगतग्रहणचतुष्कनिवृत्तौ । अतश्च तत्र हेतुबलेन व्याप्तिकल्पनायामातिथ्याव्यतिरिक्तायामपि खण्डेष्टावनूयाजाभावे सति चतुर्गृहीतत्वप्राप्तेरष्टगृहीतानिवृत्तिसिद्धिः । प्रकृतौ च "अष्टावुपभृति गृह्णाति" इत्यत्र चतुष्कद्वयलक्षणाद्योतनार्थत्वादेतस्य प्रयाजार्थं जुह्वां समानयने नियोगतोऽर्द्धमेव समानेतव्यमिति लभ्यते । अन्यथा हि प्रयाजानूयाजयोर्मिलित्वा पञ्चसंख्याकत्वात्

---

१. सोमयागे दीक्षानन्तरदिने सोमक्रयणानन्तरं क्रियमाण इष्टिविशेष आतिथ्या ।

(१)'समं स्यादश्रुतत्वा' दितिन्यायेन प्रयाजद्रव्यार्थं किञ्चिदधिक स्रुवत्रयस्यैवानयनं प्रसज्येत । यथा च न प्रकारान्तरेण चतुष्कद्वयसिद्धिः, तथा चतुर्थे(२) उपपादयिष्यते । अतश्च तत्र लक्षणाभावाद्धेतुविधित्वमेव, प्रकृते तु लक्षणाप्रसङ्गात् स्तुतिपरत्वाङ्गीकारः ॥ २९ ॥

## (३)यदि च हेतुरवतिष्ठेत निर्देशात् ॥ १-२-३० ॥

यद्यपि चायं हेतुविधिस्स्यात् , तथापि शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वमवतिष्ठेत, न दर्वीपिठरादिगतस्यापि, शूर्पस्यैव होमसाधनत्वनिर्देशात् । न च शूर्पगतहोमसाधनत्वे साध्ये ऽन्यगतान्नकरणत्वस्य(४) हेतुता सम्भवति, सामानाधिकरण्याभावात् । सन्निहितपरामर्शिसर्वनामोत्तरतृतीयाश्रवणेन पदश्रुत्या तद्गतस्यैवान्नकरणत्वस्याभिधानाच्च । न चान्नकरणत्वस्य हेतुत्वं प्रत्युद्देश्यत्वात्तद्विशेषणाविवक्षा, अन्नकरणत्वस्य स्वरूपतो लोकावगतस्यापि सोमादिवद्विधेयत्वेनानुद्देश्यत्वात् ।

यत्तु धूमादिवत्पक्षवृत्तित्वेन हेतोरविशेषणमित्युक्तम् । तन्न; धूमादौ विशेषधर्मेण व्याप्त्यनवगमाद्युक्ता धूमत्वादिना सामान्येन हेतुता । वेदे तु प्रमाणान्तरेण व्याप्त्यनवगमात् , विशेषतश्श्रुतहेतत्वन्यथानुपपत्तेर्विशेषव्याप्तिकल्पनयाऽप्युपपत्तौ न श्रुतपरित्यागे प्रमाणमस्ति । दृष्टं च लोकेऽपि विशेषतस्तृणधूमदर्शनात् तृणाग्नेरनुमानम् । अतो यद्यदन्नकरणं शूर्पं तेन तेन होत-

१. जै. सू. १०-३-५३.
२. चतुर्थप्रथमान्त्याधिकरणे 'तदष्टसंख्य'मित्यत्र ।
३. इतस्सूत्रत्रयमेकसूत्रतया परिगणितं भाष्यादौ ।
४. त्वस्यापि. क. पु. ।

व्यमिति व्याप्तिकल्पनादसमर्थशूर्पव्यावृत्तिः परं भवेत्, न तु दर्व्यादिप्राप्तिः । इदं च वस्तुतो लक्षणाप्रसंगेन स्तुतिपरत्वस्यैवोक्तत्वादभ्युपेत्यवादेनैवोक्तम् । तत्प्रयोजनं च नानूयाजाभावमात्रस्य हेतुत्वम्, किन्तु बहुवचनश्रवणात् बह्वनूयाजाभावस्यानूयाजसामान्याभावरूपस्य । अतोऽवभृथे बर्हिरनूयाजमात्राभावेऽपि न व्यभिचारः ॥ ३० ॥

## सामान्यादिति चेत् ॥ १-२-३१ ॥

ननु—अविशेषप्रवृत्ततृतीयारूपप्रत्ययश्रुत्यनुरोधेन पदश्रुतिबाधादन्नकरणसामान्यस्यैव हेतुत्वं स्यादिति चेत् ?-॥ ३१ ॥

## अव्यवस्था विधीनां स्यात् ॥ १-२-३२ ॥

प्रत्ययश्रुत्यंगीकारे हि यद्यद्गृहीतं तस्य तस्य काचिदन्ननिमित्तताऽस्त्येवेत्यनवस्थितत्वाद्यत्किञ्चित् द्रव्यं होमे प्रसज्येत । तादृशस्य च होमाक्षेपादेव प्राप्तत्वादनर्थकोऽन्नकरणशब्दः । अतश्च प्रत्ययश्रुतेरानर्थक्यप्रतिहतत्वाद्दुर्बलश्रुत्यनुरोधो न दोषाय॥३२॥

इति तृतीयं हेतुवन्निगदाधिकरणम् ( हेत्वधिकरणम् )

---

### अथ चतुर्थं मन्त्राधिकरणम् ॥

## तदर्थशास्त्रात् ॥ १-२-३३ ॥ ( पू )

( विषयसंशयसङ्गतयः )

'मन्त्रानर्थक्य'मित्यन्तस्य एकसूत्रत्वेऽपि व्याख्यासौकर्यार्थं खण्डशः प्रत्येकं पञ्चम्यन्तसूत्रावयवोपन्यासः । इह मन्त्रानुदा-

त्वस्य किं तेषां धर्मे प्रामाण्यमुत नेति-विचारः । अत्र पादाध्यायसङ्गती पूर्ववत् ॥

( पूर्वपक्षः )

तत्र यद्यप्यर्थवादवदेवाऽध्ययनविधिनाऽध्ययनसंस्कार्यता मन्त्राणामवगता, तथापि मन्त्राणामुपयोगापेक्षायां न तावत् विधिवत्स्वतो विधायकत्वेनोपयोगसम्भवः, विधिविहितार्थानुवादकत्वात्; यच्छब्दादिना विधिशक्तिप्रतिबन्धाच्च ।

नापि स्तावकत्वेन, अर्थवादवत्प्रदेशान्तरविहितस्तुत्यसम्भवात्। तथा हि—मन्त्राणां स्तावकत्वमर्थवादवत्पदैकवाक्यतया वा ? वाक्यैकवाक्यतया वा ? नाद्यः ; प्रदेशान्तरस्थत्वात् । नान्त्यः; पदार्थविधया लक्ष्यस्तुतिमात्रप्रतिपादनेऽपि अर्थवादवदेव स्वार्थबोधे समाप्त्यभावात् । अतो न स्तावकत्वम् । विस्तरेण चैतत्(१)द्वितीये द्वयमपि निराकरिष्यते । अत एवार्थवादप्रामाण्यहेतुप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानादर्थवादविचारसङ्गतिः । अनन्तराधिकरणद्वयस्य त्वाक्षेपसमाधानार्थत्वेनार्थवादाधिकरणशेषत्वादव्यवधायकत्वम् । प्रकरणान्तरत्वेन चानन्तरसङ्गत्यभावेऽपि न दोषः ।

नापि स्मारकत्वेन; तथाङ्गीकारेऽप्यनधिगतार्थगन्तृत्वरूपस्य प्रमाकरणत्वरूपस्य वा प्रामाण्यस्य तावदयोगस्तदवस्थ एव । किञ्च इदं स्मरणमपि यत्किञ्चित्स्वार्थमात्रविषयकम् ? कर्मसमवेतानुष्ठेयार्थविषयकं वा ? नाद्यः, अनुपयोगात् ; साम्नां मन्त्रत्वस्य(२)द्वितीये वक्ष्यमाणत्वात्तेषां चार्थाभावेनाव्यापकत्वाच्च । नान्त्यः, अनुष्ठेयार्थस्मरणस्य ध्यानादिनाप्युपपत्तौ

१. पू. मी. २. १. ७.    २. पू. मी. २. १. १२.

मन्त्रवैयर्थ्यात्; वाचकमन्त्रशब्दस्मरणस्यार्थस्मरणाधीनत्वेन वैपरीत्याच्च ।

किञ्च—प्रोत्साहनानुमन्त्रणादिमन्त्राणां (१)"अगन्म सुव" रित्यादीनां कर्मसमवेतार्थाभिधायित्वेऽप्यननुष्ठेयार्थकत्वान्न स्मरणोपयोग इत्यव्यापकत्वं तदवस्थमेव । जपादिमन्त्राणां तु कर्मासमवेतार्थाभिधायित्वमपि प्रायशो लक्ष्यते । एवं यत्रापि करणमन्त्रे समवेतार्थाभिधायित्वं तत्रापि द्वित्राणामेव निर्वापादिपदानां तत्, न तु (२)'देवस्य त्वा' दिपदानाम् । साममन्त्राणां तु गीत्यात्मकत्वेनाऽवाचकत्वान्नार्थाभिधायित्वमपि । अतः स्मारकत्वेनाप्युपयोगासंभवात्, अध्ययनसंस्कृतानां चोपयोगापेक्षायां प्रकरणपठितानामनारभ्याधीतानां च यथासम्भवं श्रुतिवाक्याधिकाराख्यप्रकरणक्रमसमाख्यादिभिः प्रधानाङ्गत्वेनावगतानां प्रधानविधिना मन्त्रस्वरूपमेवाङ्गीक्रियते, न तु ब्राह्मणवाक्यवदर्थोऽपि, अनुपयोगात् । मन्त्रस्वरूपस्य च स्वतोऽक्रियारूपत्वाद्यद्यपि नैतिकर्तव्यतात्वेनान्वयो योग्यः, नापि स्वरूपेण प्रधानोपकारकत्वसम्भवः, तथापि प्रमाणान्तरावगतमन्त्रस्वरूपाङ्गत्वनिर्वाहायोच्चारणक्रियाद्वारेण व्रीह्यादिवत्कारकत्वेनान्वयोऽङ्गीक्रियते । प्रायशश्च वेदे मन्त्रेणा 'मित्याहो' पनिबद्धत्वादुच्चारणक्रिया श्रुतैव । यत्रापि (३)"बर्हिर्देवसदनं दामी" त्यादौ सा न श्रुता, तत्रापि परिशेषात्सैव कल्प्या । न हि (४)प्रत्यायनस्य पुरुषकृत्यसाध्यस्य व्यापारत्वं (५) घटते । अत उच्चारणमेव व्यापारः । तस्य चोक्तविधया दृष्टप्रयोजनासम्भवाददृष्टार्थत्वम् ।

---

१. तै. सं. १. ६. ६. २. तै. सं. ४. १. १. ३. मै. सं. १. १. २.
४. अर्थप्रत्यायनस्येति ख. पु. ५. सम्भवति इति ग. पु.

नचैवमर्थपरत्वाभावे स्वाध्यायाध्ययनविधेरदृष्टार्थतापत्तिः, हुंफडाद्यध्ययनवन्मन्त्राध्ययनस्यापि कर्मकालीनोच्चारणप्रयोगप्राशुभावसिद्ध्यर्थत्वेन दृष्टार्थत्वात् । अत उच्चारणक्रियाद्वारेण मन्त्राणां प्रधानभावनाग्रहणम् ।

न च मन्त्राणामशाब्दत्वाच्छाब्दक्रतुभावनानन्वयः, क्रमादिकल्पितया अनेन मन्त्रेणास्य प्रधानस्योपकुर्यादित्येवंविधया श्रुत्या मन्त्राणामपि शाब्दत्वात् । एवंचार्थप्रत्यायनार्थत्वाभावाल्लिङ्गेन तत्तदवान्तरकार्ये बर्हिर्लवनादौ विनियोगायोगाद्दर्शपूर्णमासादिप्रकरणपठितानां सर्वेषां मन्त्राणां यत्रक्वचित्प्रयोगे प्राप्ते केषाञ्चिन्मन्त्राणां क्रियाविशेषानुष्ठानकालीनोच्चारणविधायिशास्त्रस्याप्युपपत्तिः, अन्यथा हि लिङ्गादेवानुष्ठेयक्रियाङ्गत्वसिद्धेः पुनस्तदङ्गत्वप्रतिपादकस्य शास्त्रस्य वैयर्थ्यमेव स्यात् । यथा (१)“अभ्रिरसि नारिरसी” त्यादयोऽग्निप्रकरणाम्नाताश्चत्वारो मन्त्रा लिङ्गादेवाग्न्यङ्गेष्टकार्थमृत्खननसाधनीभूताभ्र्यादाने प्राप्ता इति (२)‘तां चतुर्भिरादत्त’ इति वचनं व्यर्थम् ।

न च चतुस्सङ्ख्याविधानार्थं तत्; सा ह्यादानोद्देशेन वा विधीयते मन्त्रोद्देशेन वा ? न तावदाद्यः, सङ्ख्यायाः (३) ‘स्तिस्र आहुती’ रितिवत्कर्मसामानाधिकरण्याभावेन साक्षादादानसबन्धायोगात् । न चारुणैकहायनीन्यायेन मन्त्रसामानाधिकरण्योपपत्तिः । तत्रैकहायन्या अप्राप्तत्वेन विधेयत्वात्तत्परिच्छेदकापेक्षायां युक्तः पार्ष्ठिक आरुण्येन सम्बन्धः । मन्त्राणां तु लिङ्गादेव विकल्पेनैकसङ्ख्यानां प्राप्तत्वेन परिच्छेदकानपेक्षत्वान्न ग्रहैकत्ववद्युक्तश्चतुस्सङ्ख्यायास्सम्बन्धः । नान्त्यः, स्वरूपेणैव मन्त्राणां चतुस्सङ्ख्यात्वेन वचनवैयर्थ्यात् । आदान-

१. तै. सं. ४. १. १.  २. तै. सं. ५. १. .१  ३. तै. सं. २. ३. ९.

विशिष्टमन्त्रोद्देशेन सङ्ख्याविधौ विशिष्टोद्देशे वाक्यभेदः। उभयाविशिष्टादानविधिपक्षस्तु आदानस्यार्थप्राप्तत्वान्मन्त्राणां लिङ्गादेव प्राप्तेरनाशङ्क्य एव। अतो न सङ्ख्याविधिः।

नापि समुच्चयविधिः, तद्वाचकशब्दाद्यभावात्। अस्मत्पक्षे तु चतुस्सङ्ख्याकमन्त्रोच्चारणस्याऽऽदानाङ्गत्वसिद्ध्यर्थो विधिरर्थवान्।

तथाग्निचयनप्रकरणाम्नात एव मन्त्रः (१)"इमामगृभ्णन्रशनामृतस्य" इत्ययं लिङ्गादेव तत्रत्याश्वरशनाग्रहणे प्राप्त इति पुनस्तत्र "(२)इत्यश्वाभिधानीमादत्त" इति वचनं व्यर्थम्; न ह्यत्र पूर्ववत्किञ्चिद्विधेयान्तरमप्याशङ्कितुं शक्यम्, आदानस्य स्वरूपेणाश्वाभिधानीसंस्कारार्थत्वेनार्थान्मन्त्रस्य च लिङ्गादेव प्राप्तेः। न च मन्त्रस्याश्वाभिधान्यादान इव लिङ्गाविशेषेण गर्दभरशनादानेऽपि प्राप्तेस्तत्परिसङ्ख्यार्थं वचनमर्थवद्भविष्यतीति वाच्यम्। परिसङ्ख्या हि प्राप्त्युत्तरकालं शाब्दी वा स्यात्? लैङ्गिकप्राप्तेः पूर्वमेवाश्वाभिधान्यादाने मन्त्रविधौ कृते पश्चाद्विधेः फलत्वेन वा? आद्येऽप्यादानविषयिणी मन्त्रविषयणी वा? नाद्यः, गर्दभरशनादानाभावे गर्दभबन्धनासम्भवेन रशनावैयर्थ्यप्रसङ्गात्। अश्वाभिधानीसम्बन्ध्यादानस्य श्रौतस्य सामर्थ्यादेव प्राप्तेरविधेयत्वात्स्वार्थस्य विधेयत्वहानिः, गर्दभाभिधान्यादाननिवृत्तेश्च लक्षिताया विधेयत्वात् परार्थस्य विधेयत्वकल्पना, अर्थाक्षेपप्रमाणेन प्राप्तस्य गर्दभरशनादानस्य बाधः, इति त्रैदोष्यापत्तेश्च। त्रैदोष्यापत्त्यैव गर्दभाभिधानीतो मन्त्रविषयपरिसङ्ख्यापक्षोऽपि निराकार्यः।

अथ लिङ्गस्यार्थाक्षेपस्य वा श्रुतिकल्पकत्वेन मन्त्र-

१. तै. सं. ४. १. २. २. तै. सं. ५. १. २.

रप्रवृत्तित्वात्ततः पूर्वमेवाऽश्वाभिधान्यङ्गत्वेन मन्त्रविधौ मन्त्र-विशिष्टादानविधौ वा स्वार्थस्यैव विधेयत्वात्, परार्थे चाकाङ्क्षा-विरहेण लिङ्गस्य श्रुत्यकल्पकत्वेन गर्दभरशनायां मन्त्रस्य प्रापकप्रमाणाभावेऽर्थसिद्धत्वेनाविधेयत्वात् । अत एव प्राप्त्यभावेन प्राप्तबाधस्याप्यभावात्, त्रैदोष्यानापत्तेः फलतः परिसङ्ख्यापक्षो युक्त इति चेत्

अश्वाभिधान्यङ्गत्वेन मन्त्रविशिष्टादानविधावप्यश्वाभिधानीस्वरूप आनर्थक्यप्रसङ्गेनापूर्वसाधनत्वलक्षणायां रशनाद्वयस्याप्येकया प्रणाड्या एकापूर्वसाधनत्वा(१)द्व्रीहिष्विवावघातादेर्मन्त्रस्य गर्दभरशनायामपि प्राप्तेर्दुर्वारत्वात् । अतो द्विविधाया अपि परिसङ्ख्याया असम्भवान्मन्त्रस्य लिङ्गविनियोज्यत्वे वचनवैयर्थ्यापत्तिः; अस्मन्मते तु सत्यपि रशनाद्वयसाधारण्ये रशनाद्वयादानाङ्गत्वेनैव मन्त्रविधिरर्थवान् । तथा दर्शपूर्णमासप्रकरणाम्नातः (२) "उरु प्रथस्वोरु ते यज्ञपतिः प्रथता" मित्ययं मन्त्रः लिङ्गादेव तत्रत्यपुरोडाशप्रथने प्राप्त इति पुनः "इति पुरोडाशं प्रथयती" ति वचनं व्यर्थम् । न ह्यत्र पूर्ववन्मन्त्रस्यान्यनिवृत्तिश्शक्यते शङ्कितुम्; । लिङ्गेनान्यत्र प्राप्त्यभावात् ।

ननु अत्र प्रथनमेव विधीयते, न मन्त्रः, लिङ्गादेव प्राप्तेः । न च पुरोडाशान्यथानुपपत्त्या प्रथनमपि प्राप्तमेव । त्वराविशेषेणाऽप्रथितस्यापि पिष्टपिण्डरूपपुरोडाशस्य निष्पत्तिदर्शनादिति भवदेवेनोक्तत्वात् । अतः प्रथनमात्रविधायके वाक्ये लिङ्गप्राप्तमन्त्रोपादानं (३) "यज्ञपतिमेव तत्प्रजया पशुभिश्च

१. "व्रीहीनवहन्ती" त्यनेन विहितोऽप्यवघातो दर्शपूर्णमासापूर्वरूपैकापूर्वसाधनीभूतेषु यवेष्वपि यथा प्राप्नोति तद्वदित्यर्थः ।

२. तै. सं. १. १. ८. ३. तै. ब्रा. ३. २. ८.

प्रथयती" त्यर्थवादकृतयज्ञपतिप्रथनफलकत्वरूपप्रथनस्तुत्याल-म्बनोपपादनार्थम्। मन्त्रे हि पुरोडाशं प्रत्यध्वर्युर्ब्रूते—उरु ते यज्ञपतिः प्रथतामिति, यश्चैवं ब्रूते स प्रथयत्येव । अतोऽध्वर्योराशीर्दानकर्तृत्वं यज्ञपतिप्रथनोत्पादनकर्तृत्वेनोपचर्यते । अतः पुरोडाशप्रथनस्तुतिसिद्धिः । तेन मन्त्रपुनश्श्रवणस्यार्थवादार्थत्वान्न वैयर्थ्यमिति चेन्न; मन्त्रोपादानाभावेऽपि लैङ्गिकविनियोगेन मन्त्रस्य तावत्प्राप्तत्वात्तदभिप्रेतस्तुतिसिद्धेः । पुरोडाशप्रथनस्याप्यर्थप्राप्तत्वेनाविधेयत्वाद्विधिशेषत्वायोगेनार्थवादत्वस्यैवानुपपत्तेश्च ।

न च भवदेवोक्तविधया प्रथनविधिश्शङ्क्यः, अष्टाकपालादिशब्दैरेवाष्टसङ्ख्यावच्छिन्नकपालाधिकरणसंस्कारसंस्कृतद्रव्यविधानात् "कपालेषु पुरोडाशं श्रपयती" ति च तादृशस्यैवाधिकरणत्वस्यानुवादात्कपालाधिकरणत्वस्यैव प्राप्तेः, तस्य च प्रथनमन्तरेणायोगात्प्रथनस्य प्राप्तत्वेन विध्यनुपपत्तेः। न च पिष्टस्य द्रवतरत्वे सति स्वत एव प्रथनसम्भवात् तदनुकूलकर्तृव्यापारविधानम्। तदा हि तादृशमेव पिष्टं क्रियते येन प्रथयितव्यं भवतीति वाच्यम् । कपालोपरि निधानात्पूर्वमेव "(१)मखस्य शिरोऽसीत्याह यज्ञो वै मखः, तस्यैतच्छिरः, यत्पुरोडाशः" इति वाक्येन समन्त्रकपिष्टपिण्डरूपपुरोडाशकरणस्योक्तत्वात्, द्रवतरकरणे च पिण्डासम्भवात् स्वतः प्रथनासम्भवेन यावत्कपालाधिकरणतासम्पत्त्यै प्रथनकर्तव्यताया अपि नित्यप्राप्तत्वात् । अतो विधेयाभावेन तदर्थवादत्वस्यैवायोगात्तदर्थत्वेनार्थवन्मन्त्रपुनश्श्रवणमिति दुर्घटम्। अस्मन्मते तु प्रथनानुवादेनापूर्वस्य मन्त्रस्य विधेयत्वात् स्तुतित्वेन चार्थवादत्वस्योपपत्तेः न

१. तै. ब्रा. ३. २. ८.

किञ्चिदनर्थकम् । अतश्च मन्त्रप्रामाण्ये तेषां विनियोजकरूपार्थ-शास्त्रवैयर्थ्यप्रसङ्गादुच्चारणमात्रद्वारेण च प्रधानोपकारकत्वोपपत्तेरप्रामाण्यमेव युक्तमाश्रयितुम् ॥ ३३ ॥

## वाक्यनियमात् ॥ १-२-३४ ॥

(१)"अग्निर्मूर्धा दिवः ककु" दित्यादौ नियतक्रमकपदसमूहरूपवाक्याम्नानमुच्चारणार्थत्वपक्षे व्युत्क्रमे उच्चारणजन्यादृष्टे प्रमाणाभावादर्थवत् , अर्थप्रत्यायनार्थत्वपक्षे तु व्युत्क्रमेऽपि मूर्धाग्निरित्युच्चारणादर्थप्रत्ययस्याविशेषान्नियतक्रमकपदसमूहरूपवाक्याम्नानमनर्थकम् । न चार्थपराणामपि प्रकृतिप्रत्ययसमासादिपदानां यजेत, इन्द्राग्नी, नीलोत्पलं, राजपुरुषः, निष्कौशाम्बिरित्यादीनां क्रमनियमो दृश्यते एवेति वाच्यम् । तेषु विपर्ययेऽपशब्दत्वप्रसङ्गात् । तथा हि—

प्रत्ययस्य तावत्परत्वं "(२)प्रत्ययः परश्च" इत्यनेनैव प्रसिद्धम् । इन्द्रशब्दस्य च "(३)अजाद्यदन्त" मित्यनेन पूर्वनियमः । नीलशब्दस्य च विशेषणत्वात् '(४)विशेषणं विशेष्येण बहुल' मित्यनेन च प्रथमानिर्दिष्टस्य विशेषणस्य "(५)प्रथमानिर्दिष्टं समास उपसर्जन" मित्यनेनोपसर्जनसंज्ञायां कृतायां, "(६)उपसर्जनं पूर्व"मिति पूर्वनिपातः। राजशब्दस्य च षष्ठ्यन्तत्वात् "(७)षष्ठी" त्यनेन प्रथमानिर्दिष्टस्य पूर्ववदेव निपातः । चित्रशब्दस्य विशेषणत्वात् "(८)सप्तमीविशेषणे बहुव्रीहा"वित्यनेन पूर्वनिपातः । निरादीनाञ्च "(९)निरादयः क्रान्ताद्यर्थे पञ्चम्ये" त्यनेन

---

१. तै. सं. ४. ४. ४. २. पा. सू. ३. १. १. ३. पा. सू. २. २. ३३.
४. पा. सू. २. १. ५७. ५. पा. सू. १. २. ४३. ६. पा. सू. २. २. ३०.
७. पा. सू. २. २. ८. ८. पा. सू. २. २. ३५. ९. वा १. ४. १७.

प्रथमानिर्दिष्टानां पूर्वनिपातः । अतस्सर्वत्र विपर्ययेऽपशब्द-त्वापत्तेः क्रमनियमाश्रयणम् । यस्तु "अग्नीन्द्रा" वित्याश्वलाय-नसूत्रे प्रयोगः, स इन्द्रशब्दस्योक्तरीत्या पूर्वनिपातस्मरणात् "(१)देवताद्वन्द्वे चे" ति स्मृतस्यानङोऽप्यदर्शनाच्छान्दस एव । राजपुरुषादिषु त्वर्थान्यत्वादपि क्रमनियमाश्रयणम् । निष्कौ-शाम्बिरित्यादौ च विपर्यये ऽर्थशून्यत्वादपि तत् । "अग्निर्मूर्द्धे" त्यादौ तु विपर्ययेऽप्यसाधुत्वादीनामभावात्क्रमनियमानर्थक्यम् ।

न चेहापि क्रमान्यत्वे अमन्त्रत्वापत्तिः; नियमार्थवतां मते हि मन्त्रस्याखण्डत्वात्क्रमान्यत्वेऽमन्त्रत्वं स्यात् । तव तु ज्ञानार्थत्वान्मनोतेर्मन्यतेर्वा "(२)गुधृवीपचिवचियमिमनितनि-सदिच्छादिक्षिदिभ्यस्त्रः" इत्यौणादिके 'त्र' प्रत्यये कृते मन्त्रशब्दव्युत्पत्तिरूपान्वाख्यानानुरोधेनार्थज्ञापकत्वातिरिक्तस्य मन्त्रत्वस्याभावात्, विपर्ययेऽपि च तदनपायादमन्त्रत्वाना-पत्तेः क्रमानर्थक्यम् । न च क्रमनियमाददृष्टं कल्प्यते । तथा सति मन्त्रनियमादृष्टस्याप्यर्थप्रत्यायनार्थत्वपक्षेऽत्र कल्प्यत्वेन द्विरदृष्टकल्पनापत्तेः । अस्मन्मते तु नियतक्रमोच्चारणादेकमेवा-दृष्टमिति लाघवम् ॥ ३४ ॥

## बुद्धशास्त्रात् ॥ १-२-३५ ॥

(३)"अग्नीदग्नीन्विहर" इत्यादावाग्नीध्रेण स्वकर्तव्येष्वग्नि-विहरणादिषु प्रयोगाद्बहिरेवावधारितेषु पुनः प्रैषशास्त्रं पिष्टपेष-णन्यायेनानर्थकम् । न चाविद्वद्विषयत्वेन प्रैषस्यार्थवत्ता(४ )"न

१. पा. सू. ६. ३. २६. २. पा. उ. सू. ६१६.
३. तै. सं. ६. ३, १. ४. जै. सू. ३. ८ १८.

णविद्वान्विहितोऽस्ती" त्यनेन न्यायेन यजमानस्येव ऋत्विजामप्यविदुषामनधिकारात् ।

न च प्रयोगाद्बहिरवबुद्धानामपि प्रयोगान्तस्स्मरणार्थं मैत्रोपयोगः, ब्राह्मणाभ्यासजनितसंस्कारादेव पूर्वपदार्थसमाप्त्युद्बुद्धात्स्मरणोपपत्तेः, अस्मत्पक्षे तु नैतद्दोषप्रसक्तिः ॥ ३५ ॥

## अविद्यमानवचनात् ॥ १-२-३६ ॥

(१)"चत्वारि शृङ्गा त्रयो अस्य पादा" इत्यादौ चतुश्शृङ्गत्वादिमतः कर्मणः तत्सम्बन्धिनो वा द्रव्यादेः प्रकृतौ विकृतौ वाऽप्रसिद्धेर्न तत्प्रकाशनार्थत्वेनास्यार्थवत्त्वासम्भवः । यद्यपि च गौण्या वृत्त्या होत्रादीनामेव यज्ञशृङ्गत्वाद्युपचर्य यज्ञाभिधानं, तथापि गौणरूपस्यानुष्ठेयत्वाभावान्न स्मृत्या कार्यम् । यज्ञप्रकाशनेऽपि च प्रधानमात्रप्रकाशनस्य याज्यादिनैव सिद्धत्वात् प्रयोगप्रकाशने च प्रयोगस्य विततत्वेनास्मिन्प्रदेशेऽस्य प्रयोग इत्यनवधारणात् । प्रयोगोपक्रमस्य च कामनाद्यनुरोधेनैव बुद्धिस्थत्वेन स्मारकानपेक्षत्वात् सर्वदोच्चारणशङ्कानुपपत्तेः पाठक्रमानुरोधेनैवास्योच्चारणापत्तेर्नानुष्ठेयार्थप्रकाशनार्थत्वोपपत्तिः। एवम् "मा मा हिँसी" रित्याद्यप्यप्रसक्तायां हिंसायां हिंसाप्रतिषेधानर्थक्यादविद्यमानार्थकमुदाहर्तव्यम् ॥ ३६ ॥

## अचेतनेऽर्थबन्धनात् ॥ १-२-३७ ॥

न खलु(२) "ओषधे त्रायस्वैनं"(३) "शृणोत ग्रावाणः" इत्यादीनां पशुत्राणविषये अचेतनस्य दर्भस्य (४)प्रातरनुवाक-

---

१. ऋ. सं. ३. ८. १०. २. तै. सं. १. २. १. ३. तै. सं. १. ३. १३

४. ज्योतिष्टोमे प्रातस्सवने होत्रा पठ्यमानश्शस्त्रविशेषः।

श्रवणविषये चाचेतनानां ग्राव्णामाभिमुख्यासम्भवेन सम्बोधनानर्हत्वात्प्रैषरूपत्वमर्थविवक्षायामुपपत्तिमत् ॥ ३७ ॥

## अर्थविप्रतिषेधात् ॥ १-२-३८ ॥

(१)"अदितिर्द्यौरदितिरन्तरिक्ष"मित्यादावदितेर्देवताया द्युशब्दरूपत्वेनैव तावद्द्युत्वादि विप्रतिषिद्धम् । पुनश्चैकस्या एव द्युत्वमन्तरिक्षत्वं च तथा । न च स्तुत्यर्थत्वेनाविरोधः, आर्थवादिकस्तुतिवन्मान्त्रवर्णिक्याः स्तुतेः प्रदेशान्तरस्थत्वेन विधिनाऽग्रहणस्य (२)द्वितीये वक्ष्यमाणत्वात्, स्वतन्त्रायास्स्तुतेश्चानुपयोगात्॥ ३८॥

## स्वाध्यायवदवचनात् ॥ १-२-३९ ॥

स्वाध्यायाध्ययनकाले हि यत् कर्मण्युपयुक्तं तस्याभ्यासः कार्यः, नान्यस्य । तद्यद्यर्थप्रकाशनस्य उपयोगः, तदा तदेवाभ्यस्येत । अक्षराणामेवेत्वभ्यासात्तदुच्चारणमेवोपयोगीति निश्चीयते ॥३९॥

## अविज्ञेयात् ॥ १-२-४० ॥

(३)"अम्यक् सा त इन्द्र ऋष्टिरस्मे" इत्यादौ सामान्यत इन्द्रस्तुतिरूपवाक्यार्थावगमेऽप्यम्यगादिपदार्थाज्ञानात् विशेषतो वाक्यार्थाज्ञानम् । (४)"सृण्येव जर्भरी" त्यादौ सामान्यतोऽपि वाक्यार्थानवगमात् । अर्थप्रत्यायनार्थत्वपक्षे किमेते अभिदध्युः ? ॥४०॥

## अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥१-२-४१॥

(५)"किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तप-

---

१. ऋ. सं. १. ६. १६ २. पू. मी. २. १. ६. अधिकरणे ।
३. ऋ. सं. २. ४. ८. ४. ऋ. सं. ८. ६. २. ५. ऋ. सं. ३. ३. २१.

न्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखम्मघवन्र-न्धया नः" इत्यादावनित्यार्थप्रतिपादनात् , तस्य चाकर्माङ्गत्वात्प्रतिपादनमनर्थकम् । तथाहि—एतस्य हि विश्वामित्र ऋषिः । तेन किल इन्द्रः प्रार्थितः,—भो मघवन् ! कीकटेषु देशविशेषेषु, या गावस्ताः ते तव, किं कुर्वन्ति ? यतः आशिरं सोमसंस्कारार्थं पयः, न दुह्रे, न च घर्मं तपन्ति, अतः प्रमगन्दस्य राज्ञः, नैचाशाखं नाम नगरं, वेदः धनं च, नः अस्माकं, आभर, इत्येतन्नो मघवन् , रन्धय साधयेति । दीर्घश्छान्दसः । अत्र नैचाशाखप्रमगन्दादीनामनित्यानां संयोगान्मन्त्रानर्थक्यमिति पूर्वः पक्षः ॥ ४१ ॥

( इति पूर्वः पक्षः )

## अविशिष्टस्तु वाक्यार्थः ॥ १-२-४२ ॥(सि)

( सिद्धान्तः )

सिद्धान्तस्तु—नोच्चारणार्था मन्त्राः । तथाहि—उच्चारणं प्रति मन्त्राणां विषयतासम्बन्धेन कारणत्वात् उच्चारणस्य मन्त्रजन्यत्वेऽपि तस्य क्रत्वनपेक्षितत्वेनादृष्टार्थत्वापत्तेः, दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वाच्च, उच्चारणस्य द्वारत्वानुपपत्तेः मन्त्राणां च श्रुत्यादिबोधितक्रत्वङ्गभावानां साक्षाद्व्यापारं विना क्रत्वङ्गत्वानुपपत्तेः, व्यापारापेक्षायामर्थाभिधानमेव व्यापारत्वेनाङ्गीक्रियते । उच्चारणस्य पुंव्यापारत्वेन मन्त्रनिष्ठत्वाभावान्मन्त्रनिष्ठस्यार्थाभिधानस्यैव तद्व्यापारत्वकल्पनौचित्याच्च । अतश्चानुष्ठेयार्थप्रतिपादकानां करणमन्त्राणां तावदनुष्ठानहेतुभूतस्मृतिजनकत्वात् कर्मौपयिकार्थाभिधानस्य तेषु व्यापारत्वं सुलभमेव ।

यत्रापि मन्त्रात्स्वरसतो नानुष्ठेयार्थावगतिः, इतिकरणादिना च मन्त्रो विनियुज्यते (१)"इषे त्वेति शाखामाच्छिनत्ति" (२)"चतुर्होत्रा पौर्णमासीमभिमृशेत्" "याज्यया यजती"त्यादौ तत्रापि शब्दस्यार्थाभिधानद्वारं विना दृष्टविधयाऽन्यद्वारा करणत्वासम्भवादध्याहारादिनाऽप्यर्थाभिधानस्यैव व्यापारत्वम् ।

क्रियमाणानुवादिषु तु(३) "युवा सुवासा" इत्यादिषु यद्यप्यर्थाभिधानं न स्वरसतः कर्मविध्यपेक्षितम्, तथाऽपि यूपपरिव्याणादिक्रियाया अनेकक्षणव्यासक्तत्वेन कदाचिन्मध्येऽपि बुद्धिविच्छेदे सति स्मृतिसिद्ध्यर्थं स्मारकापेक्षोपपत्तेः, अनाकाङ्क्षितत्वेऽपि वा मन्त्राकाङ्क्षयैव कर्मणामप्याकाङ्क्षोत्थापनसम्भवात् कर्मणोऽप्याकाङ्क्षां परिकल्प्यानुष्ठीयमानकर्मस्मृतिदार्ढ्यहेतुत्वेन दृष्टविधयैव मन्त्रान्वयोपपत्तौ अदृष्टार्थोच्चारणार्थत्वकल्पनानुपपत्तेरर्थाभिधानस्यैव व्यापारत्वम् ।

अत एव "युवा सुवासाः परिवीत आगादित्याहे"त्याहशब्दस्य ब्रूञादेशत्वेन वच्यपरपर्यायब्रूञर्थपरिभाषणरूपार्थाभिधानपरत्वादाहशब्देन विनियोगोऽप्यवकल्पते । अत एवानुमन्त्रणजपादिमन्त्रेष्वपि वेदे प्रायश आहशब्दोपबन्धादर्थाभिधानव्यापारकत्वसिद्धिः । अतएवोक्तं(४) तन्त्रसारे—

---

१. आप. श्रौ १.१. ११. आपस्तम्बश्रौतसूत्रस्यार्थतोऽनुवादोऽयम् ।

२. आप. श्रौ. २. ११. ५. ३. ऋ. सं. ३. १. ३.

४. ग्रन्थोऽयं न्यायसुधाकारेण भट्टसोमेश्वरेण रचित इति तत्र तत्र ग्रन्थोल्लेखनादवगम्यते । परं तु मनुपलम्भदोषदूषितः ।

"इत्याहोपनिबन्धश्च मन्त्राणां दृश्यते विधिः ।
सूत्रादेशश्चादृष्टश्चाऽदृष्टसोऽभिधानाभिधायक" इति ॥

(१)न्यायसुधायामपि—

"सर्वसाधारणत्वेन विचारस्य प्रयोजनम् ।
कर्मकाले ऽनुसन्धेयो मन्त्रार्थोऽर्थपरत्वत" इति ॥

तत्रानुमन्त्रणमन्त्रेषु तावत् कृतस्यापि यागादेरकृतत्वशङ्कायां (२)"यदेव श्रद्धया करोति" सेतद्वाक्यविहितश्रद्धाभावनिमित्तवैगुण्यापत्तेस्तन्निवृत्त्यर्थं कृतप्रत्यवेक्षापेक्षत्वात् । अनपेक्षत्वेऽपि वा पूर्ववदाकाङ्क्षोत्थापनेनानुष्ठितकर्मस्मृतिदार्ढ्यहेतुत्वकल्पनात् दृष्टविधयैवार्थाभिधानव्यापारकत्वम् । अत एव—

"मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरन् ।
वीक्षिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्" ॥

इति तल्लक्षणमपि सङ्गच्छते ।

एवं च यत् तन्त्ररत्नेऽनुमन्त्रणमन्त्राणामदृष्टार्थत्वमुक्तं पञ्चमे, तदनादरादिति(३)तत्रैवोपपादयिष्यामः ।

एवं यत्रापि प्रमाणान्तरेण करणमन्त्रादीनामपि समुच्चयावगमः, तत्राऽप्येकेन स्मृतिसिद्धावन्येषां पूर्ववद्दार्ढ्यार्थत्वकल्पनाद्दृष्टविधयैवाभिधानव्यापारकत्वम् ।

एवं प्रोत्साहनार्थानामपि (४)"अगन्म सुव" रित्यादीनां श्रद्धाजननार्थमननुष्ठेयस्यापि कर्मसमवेतस्य फलादेस्स्तुतेरवोधितत्वात्तदर्थत्वेन दृष्टविधयैवोक्तव्यापारासिद्धिर्नवमे(५)भाष्य एवो-

---

१. न्याय सु. पृ. ९८.        २. छा. उ. १. १. १०.
३. भाट्टदीपिकायां पञ्चमप्रथमस्य तृतीयाधिकरणे ।
४. तै. सं. १. ६. ६. ।  ५. पू. मी. ९. १. ६.

पपादिता। उपस्थानमन्त्रेषु तु अभिधानार्थत्वं (१)सप्तम एवोपपा-
दयिष्यते।

एवं स्तोत्रशस्त्रमन्त्राणामपि गुणरूपस्तुत्यङ्गत्वेन क्रमादि-
नाऽवगतानां स्पष्टमेवाऽभिधानार्थत्वम्। अभिधानरूपयोः स्तो-
त्रशस्त्रयोः परमारादुपकारकत्वं (२)द्वितीये साधितमित्यविरोधः।

नचैवं "सूक्तं शंसती"त्यादौ सूक्तस्याभिधानं प्रति कर्म-
त्वासम्भवात्, अतएव शस्त्या अर्थप्राप्त्यभावेन सकृत्वादिव-
ल्लक्षणया विनियोगभङ्गशङ्कानुपपत्तेरगत्या शंसतेरुच्चारण-
लक्षकत्वावसायात्, उच्चारणे च सूक्तादीनां कर्मत्वोपपत्तेरु-
च्चारणार्थत्वमेव युक्तमिति वाच्यम्। 'गां दोग्धि पय' इत्यादिवत्

"दुह्याच्पच्दण्ड्रुधि प्रच्छि चि ब्रूञ्शासु जि मथ्मुषाम्।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्"॥

इति महावार्तिकात् (३)"अकथितं चे"ति सूत्राच्च, दुहादिधातू-
नां कर्मकारकेण युक्तस्याऽप्यपादानादिकारकविशेषैरविवक्षितस्य
कर्मसंज्ञास्मरणात्, "अर्थनिबन्धनेयं संज्ञे" ति स्मरणाच्च ब्रूञ्स-
मानार्थकस्य शंसतेरपि कर्मकारकेण गुणेन युक्तस्य सूक्तादेः
कर्मसंज्ञोपपत्तेर्द्वितीयाविरोधाभावात्।

न च सूक्तस्यास्मिन्वाक्ये करणत्वरूपकारकविशेषस्य विव-
क्षितत्वात् कर्मसंज्ञानुपपत्तिः; सूक्तस्य क्रमादिप्रमाणान्तरेण
स्तुत्यङ्गत्वस्य सिद्धत्वादस्मिन्वाक्येऽविवक्षायामपि बाधका-
भावात्। शंसतेरुच्चारणलक्षकत्वे "देवताश्शंसती" त्यत्र
देवतानामुच्चारणकर्मत्वस्य कथमप्यनुपपत्तेश्च। अत उपपन्नं

---

१. पू. मी. ७. ३. १२. २. पू. मी. २. १. ६. ३. पा. सू. १. ४. ५१.

स्तोत्रशस्त्रमन्त्राणामप्यर्थाभिधानार्थत्वम् ॥

जपादीनां तु "वैष्णवीमृचमनूच्य वाचं यच्छती"त्यत्रानूच्येति वच्यर्थाभिधानार्थत्वस्य स्फुटमवगमात्, "याः पुरस्तादिति जपे" दित्यादावपि "जपव्यक्तायां वाची" त्यनेन वच्यर्थाभिधानार्थत्वावगमात्, अर्थस्य च कर्मासमवेतत्वेऽपि तदभिधानस्यादृष्टार्थत्वोपपत्तेः, न मन्त्राणामुच्चारणार्थत्वं कल्पनीयम्। अत एव(१)"मन्त्रो हीनस्स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह" इत्यादीनि स्वरयुक्तजपादिमन्त्राणामप्यर्थपरत्वलिङ्गानि सामान्यतः प्रवृत्तानि न सङ्कोचितानि भवन्ति।

यत्तु (२)द्वादशे जपादीनामदृष्टार्थत्वमुक्तम्, तन्मन्त्रसाध्यार्थाभिधानस्यादृष्टार्थत्वाभिप्रायेण। अस्तु वा जपादीनां कर्मासमवेतार्थाभिधायिनामुच्चारणमात्रार्थत्वम्, नैतावता कर्मसमवेतार्थाभिधायिनामपि करणमन्त्रादीनां दृष्टविधयोपयोगसम्भवेऽदृष्टार्थोच्चारणार्थत्वकल्पना युक्ता। न चानुष्ठेयार्थस्मृतेर्ध्यानाद्युपायान्तरेणापि सिद्धेर्मन्त्रानर्थक्यम्। मन्त्राम्नानानुपपत्त्या मन्त्रेणैव स्मर्तव्यमिति नियमकल्पनात्। तस्य चावघातनियमस्येव दृष्टासम्भवेनादृष्टार्थत्वकल्पनोपपत्तेरुपायान्तरानिवृत्तिसिद्धेः। यथा च क्रियाजन्यादृष्टकल्पनापेक्षया नियमादृष्टकल्पने लाघवं तथा(३)द्वितीय उपपादयिष्यामः।

यत्तु वाचकमन्त्रस्मरणस्यार्थस्मरणाधीनत्वेन वैपरीत्यमुक्तम्, तत् पूर्वपदार्थस्यैव मन्त्रस्मारकत्वोपपत्तेर्नावश्यमर्थस्मरणाधीनत्वमिति परिहर्तव्यम्।

---

१. पा. शि. ५२.  २. पू. मी. १२. ४. १.  ३. पू. मी. २. १. ३.

यदपि करणमन्त्रे द्वित्राणामेव पदानां कर्मसमवेतार्थाभिधायित्वेऽपीतरेषां "देवस्यत्वे" इत्यादीनामुच्चारणार्थत्वमावश्यकमिति तदपि "देवस्यत्वे" इत्यादिपदानामेवोच्चारणमात्रार्थत्वे भिन्नप्रयोजनकत्वेन "निर्वपामि" पदैकवाक्यताभङ्गापत्तेस्तद्वाऽऽदेवस्यत्वेत्यादिपदार्थविशिष्टनिर्वापप्रकाशनस्यैवाभ्युदयकारित्वकल्पनया तेषामपि स्वार्थाभिधायकत्वस्य(१)नवमे वक्ष्यमाणत्वादकिञ्चित्करम् । तेन सिद्धं मन्त्राणामर्थप्रत्यायनार्थत्वम् ।

नचैवं मन्त्राक्षरानुसन्धानमात्रेणैव मन्त्रार्थानुसन्धानसिद्धेः कर्मकाले मन्त्रोच्चारणानापत्तिः, मन्त्राणां तदनुसन्धानस्य वा स्वतः पुरुषव्यापाराविषयत्वेन मन्त्रविनियोजकविधिविषयत्वायोगात् विधिविषयत्वसिद्ध्यर्थं मन्त्रविषयोच्चारणस्यावश्यं कल्पनीयत्वात् ।

नचैवमनुसन्धानानुकूलव्यापारस्यैव विधिविषयत्वं कल्प्यतां किमुच्चारणेनेति वाच्यम् ? उच्चारणस्य मन्त्रविषयत्वात् , मन्त्रविषयकानुसन्धानजनकव्यापारापेक्षया प्रत्यासन्नत्वेन तस्यैव मन्त्रविनियोजकविधिविषयत्वौचित्यात् । उच्चारणविधानाभावे उच्चारणैकान्तिकोच्चैष्ट्वादिस्वरविध्यनुपपत्तेश्च ।

अत एव(२) "मिथ्या प्रयुक्त" इति प्रयोगरूपोच्चारणानुवादोऽप्युपपद्यते । तेन कर्मकाले उच्चारणसंस्कृतानामेव ऋगादिमन्त्राणामुपयोग इति सिद्धम् ।

साममन्त्राणां तु गीत्यात्मकत्वेनार्थाभावात्तदभिधानद्वारोपयोगासम्भवेऽपि ऋगक्षराभिव्यक्तिद्वारा गुणाभिधानरूपस्तोत्रकरणत्वात् दृष्टविधयैवोपयोगसम्भवे नादृष्टार्थोच्चारणप्रयोजनकत्वकल्पना युक्तेति(३)नवमे निरूपयिष्यते । अतएव

१. पू. मी. ९. १. १२. २. 'मन्त्रो हीन' इत्यस्य खण्डोऽयम् ।
३. पू. मी. ९. २. २.

"साम्ना स्तुवीते" ति तृतीयया साम्नः स्तोत्रं प्रति करणत्वमुक्तम् ।

न चैवं साम्नस्सन्ध्यक्षरेषु विश्लेषरूपकगक्षराभिव्यक्तिजनकत्वेऽपि तदभाव एव सन्ध्यक्षरैर्गुणाभिधानरूपस्तोत्रजननात् कथं स्तोत्रकरणत्वं साम्न इति वाच्यम् ? प्रगीतमन्त्रसाध्यगुणसम्बन्धाभिधानव्यक्तेरेवाभियुक्तप्रसिध्या स्तोत्रपदवाच्यत्वात् । अन्यथा ब्राह्मणादावपि गुणाभिधानस्य सत्वेन स्तोत्रपदप्रयोगापत्तेः । तादृशस्य च गीतिरूपसामाभावेऽनिष्पाद्यमानत्वेन करणत्वोपपत्तेः । अतश्चार्थाभिधानविशेषकरणत्वं साम्नामप्यव्याहतमेव ।

यश्चाऽत्र(१)स्तोभाक्षराधिरूढो गीत्यंशः, तस्यार्थाभिधानकरणत्वासम्भवाददृष्टार्थत्वम् । अतश्च रथन्तरादिसाम्नामाश्रयिकर्मवदुभयार्थत्वम् । यानि त्वनृक्कानि प्रजापतिहृदयादीनि, तेषां स्तोभाक्षराधिरूढत्वात् , स्तोभाक्षराणां चाभिधेयशून्यत्वस्य नवमे(२) वक्ष्यमाणत्वात् नाऽर्थाभिधानरूपस्तोत्रकरणत्वमित्यगत्या सामविनियोगानुसारेणोच्चारणमात्रद्वाराऽदृष्टार्थत्वमेव ।

न च तत्राऽपि स्तोभाक्षराभिव्यक्त्यर्थत्वेन साम्नो दृष्टार्थत्वमेव, स्तोभाक्षराणामेव परमुच्चारणद्वाराऽदृष्टार्थत्वकल्पनाऽस्त्विति वाच्यम् ; स्तोभाक्षराणां गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वस्य (३)नवमे वक्ष्यमाणस्य सामान्तरेष्विवाऽनृक्सामस्वपि सम्भवेनाऽदृष्टार्थत्वकल्पनायां प्रमाणाभावात् । न च विनिगमनाविरहः, अनृक्साम्नां चयनादिकर्मणि विनियोगस्यैव विनिगमकत्वात् । अन्यथा हि स्तोभानामेव विनियोगः क्रियेत न साम्नां, अर्थसिद्धत्वात् । तत्सिद्धं सर्वमन्त्राणां प्रयोजनवत्त्वम् ।

---

१. स्तोभलक्षणं नवमे (९–२–१०.) द्रष्टव्यम् । २. ३. पू. मी. ९. २. ९.

नन्वेवं प्रयोजनवत्त्वे सिद्धेऽपि कथं प्रामाण्यम् ? न तावदनधिगतार्थगन्तृत्वलक्षणम्, विधिनाऽधिगतस्यैवाऽर्थस्य स्मरणात् । अत एवानुभावकत्वाभावान्न प्रमाकरणमिति चेत्—

अत्र भवदेवः—न प्रतिवेदवाक्यमनधिगतार्थगन्तृत्वमुपपादनीयम् । (१)"य एवं विद्वान् पौर्णमासीं यजते" इत्यादावनुवादकत्वेन तदभावात् । किं तर्हि धर्मप्रमित्युपयोगित्वम् ? तच्च विद्वद्वाक्यस्येव मन्त्राणामप्युक्तविधया सम्भवत्येवेति नाप्रामाण्यशङ्केति । तत्र यद्यपि मन्त्रब्राह्मणसमुदायात्मके ग्रन्थविशेषे वेदत्वमेकं न प्रत्येकवाक्यवृत्ति, तथाऽपि न तदनाधिगतार्थगन्तृत्वप्रयोजकम्; अपि तु लौकिकवाक्यवद्वाक्यत्वमेव । अतश्च तस्य प्रत्येकवृत्तित्वाद्विधिवाक्यस्याऽनधिगतार्थगन्तृत्वसिद्धावपि मन्त्रवाक्यस्य तदसिद्धेरप्रामाण्यप्रसङ्गः । (२)"वेदोऽखिलो धर्ममूल" मित्यादिस्मृत्या अखिलवेदस्य धर्ममूलत्वस्मरणानुपपत्तिश्च ।

किञ्च मन्त्रजन्यस्मरणस्य धर्मोत्पत्त्युपयोगित्वेऽपि न धर्मप्रमोत्पत्त्युपयोगित्वम्, तदभावेऽपि विधिवाक्याद्धर्मप्रमोत्पत्तेर्जायमानत्वात् । अतो मन्त्राणां न परम्परयाऽपि धर्मप्रमोत्पत्त्युपयोगित्वम् । विद्वद्वाक्यस्य परम्परया धर्मप्रमोत्पत्त्युपयोगित्वेऽपि साक्षादप्यनधिगतार्थगन्तृत्वं समुदायप्रतीतेरनन्यलभ्यत्वादस्तीति वैषम्यम् ।

(३)सोमेश्वरस्तु—'बर्हिर्देवसदनं दामी' त्यादावपूर्वसाधनीभूतबर्हिर्लवनाङ्गत्वं मन्त्रसामर्थ्यादेवावगम्यत इति मन्त्रः स्वाङ्गत्वबोधे प्रमाणम् । क्वचिच्च मान्त्रवर्णिकद्रव्यदेवतायागादिकल्पनेऽपि प्रमाणम् । तच्च तत्र तत्राऽधिकरणे स्पष्टीभविष्यति ।

१. तै. सं. १. ६. ९. २. मनु. २. ६. ३. न्यायसु. पृ. ९८.

सर्वसाधारण्येन तु मन्त्रार्थाऽनुसन्धानकर्तव्यताविषये प्रामाण्यम् । मन्त्र एव हि स्वाङ्गत्वसिध्यर्थं स्वनिष्ठमर्थाभिधानाख्यं व्यापारं कल्पयतीति तत्र प्रामाण्यमित्याह ।

तदपि न, अर्थाऽनुसन्धानजनकत्वेन वा मन्त्राणां प्रामाण्यं मन्यसे ? अर्थाऽनुसन्धानरूपव्यापारकल्पकत्वेन वा ? नाद्यः ; अनुसन्धानस्य जपमन्त्रेष्वनधिगतविषयत्वेऽपि करणादिमन्त्रेष्वाधिगतविषयत्वात् स्मृतिरूपत्वेन तज्जनकस्य प्रमाणत्वानुपपत्तेः । नान्त्यः; लिङ्गादिविनियुक्तेषु स्वयं तत्कल्पकत्वेऽपि स्तोत्रशस्त्रादौ 'आह' त्येवं विनियुक्तेषु च त्वयैवाभिधानस्य क्लृप्तत्वाभिधानेनाऽव्यापकत्वात् । किञ्च साममन्त्रेष्वेवमप्यव्याप्तिर्दुर्वारा । तेषामर्थाभावेन तदनुसन्धानाजनकत्वात् । अथ तेषामपि प्रगीतमन्त्रसाध्यगुणाभिधानरूपस्तोत्रलक्षणशाब्दप्रमाजनकसामग्र्यन्तर्गतत्वेन प्रामाण्यं, ततोऽप्यनृक्साम्नां तदभावादप्रामाण्यापत्तिस्तदवस्थैव ।

एतेन मन्त्राणां स्मारकत्वेनानुभावकत्वघटितप्रमाकरणत्वरूपप्रामाण्याभावेऽपि यथार्थज्ञानकरणत्वलक्षणं प्रामाण्यं सम्भवत्येवेति कैश्चिदुक्तमपास्तम्; अनृक्सामसु तस्याप्यसम्भवात् ।

अत एवं वाच्यम्—सर्वत्र गामानयेत्यादौ संसर्गविषयकशाब्दबोधं प्रति यथा शब्दः करणं, पदार्थज्ञानमवान्तरव्यापारः तथा पदार्था एव करणम्, तज्ज्ञानमवान्तरव्यापारः । शब्दस्तु पदार्थज्ञानं प्रति करणत्वेनोपक्षीण इत्यपि मतान्तरमाचार्यैस्तर्कपादे

(१)पदार्थानां तु मूलत्वं युक्तं तद्भावभावतः'

१. श्लो. वा. अ. ७. श्लो. १११. पृ. ८७७.

इत्यादिनोपपादितम् । न च भूतभाविपदार्थानां नियतपूर्ववृत्तित्वाभावात्करणत्वानुपपत्तिः, भूतभाविपदार्थानां स्वरूपेणाऽविद्यमानानामपि ज्ञानविषयत्वेन सत्त्वाज्ज्ञाततायामिव शाब्दबोधं प्रत्यपि करणत्वोपपत्तेः ।

अत एवोक्तं न्यायसुधाकृता—'अतीतानागतयोरप्यतिक्रान्तदिवसादिगतसङ्ख्यादिवज्ज्ञाततायां करणत्वोपपत्ति'रिति । नैयायिकमते मौनिवाक्यस्थले शब्दस्याऽप्यविद्यमानत्वाच्च । अतश्च यथा ज्ञानविषयत्वेनैव शब्दस्य करणत्वोपपत्तिः, तथा मन्मतेऽप्युपपत्तिः । तेन पदार्थानामपि शाब्दप्रमितिकरणत्वात्सर्वमन्त्राणाञ्च स्वविनियोगविधौ प्रयोगविधौ च पदार्थत्वेनान्वयाद्धर्मविषयकशाब्दप्रमाकरणत्वोपपत्तेर्युक्तं प्रामाण्यम् ।

न चैवं व्रीह्यादीनामपि पदार्थविधया प्रामाण्यापत्तिः, इष्टापत्तेः । न च (१)'चोदनालक्षणोऽर्थो धर्म' इत्यस्मिन् सूत्रे धर्मे चोदनारूपस्य वेदशब्दस्यैव प्रामाण्यमिति नियमकरणात् व्रीह्याद्यर्थस्य प्रामाण्याङ्गीकारे च तद्भङ्गापत्तिरिति वाच्यम् । तत्रत्यचोदनाशब्दस्य (२)'चोदनेति क्रियायाः प्रवर्तकं वाक्यम्' (३)'चोदनाचोपदेशश्च विधिश्चैकार्थवाचिन' इति भाष्यवार्तिकस्वरसाद्विधिमात्रवचनत्वेन तस्मिन् सूत्रे ईदृशानियमाकरणात् । अत एव तत्सूत्रं न प्रथमाध्यायार्थप्रतिज्ञापरम्, अपि तु प्रथमपादव्युत्पाद्यविधिप्रामाण्यप्रतिज्ञापरमेवेति (४) स्मृत्यधिकरणे वक्ष्यामः। नियमोऽपि तेनेदृश एव क्रियते—धर्मे एव प्रमाणं चोदनेति । यद्यपि च चोदनैव प्रमाणमित्यपि नियमः क्रियेत, तथाऽपि प्राधान्येन सैव प्रमाणमित्येवंपरो द्रष्टव्यः । न त्वेतावताऽन्येषां

---

१. जै. सू. १. १. २. २. शा. भा. पृ. ३. पं. ९.
३. श्लो. वा. अ. ५. श्लो. ११. पृ. २११. ४. पू. मी. १. ३. १.

प्रामाण्यनिषेधः । तस्मात्सिद्धं पदार्थविषया सर्वमन्त्राणां प्रामाण्यमिति ।

अस्तु वा मन्त्राणां प्रमाजनकत्वाभावेऽप्युक्तविधया प्रयोजनवत्त्वमात्रेणैवोपयोगो धर्मे, तावतैवाध्ययनविधेरुपपत्तेरुपयोगविशेषविचार एव मन्त्राधिकरणशरीरम् । अर्थवादोपयोगप्रसङ्गाच्चाध्यायासङ्गतोऽप्यर्थो नासङ्गत इति द्रष्टव्यम् । साङ्गवेदोपयोग एव वा जिज्ञासितत्वादध्यायार्थ इत्यपि सुवचम् । उपयोगोऽपि मन्त्राणां प्रायशो धर्म एव, नत्वधर्म इत्यपि च ध्येयम् ।

सूत्रं तु—यथैव लोके वाक्यस्य वाक्यार्थप्रमापकत्वं दृष्टं, तथा तन्मन्त्रेष्वप्यविशिष्टमिति व्याख्येयम् ।

यत्तु लिङ्गादेव विनियोगोपपत्तौ पुनः क्वचित्तद्विषये विनियोजकशास्त्रवैयर्थ्यमिति तन्न; (१)तत्र शास्त्रस्य मन्त्रविनियोजकत्वानभ्युपगमात् ॥ ४२ ॥

ननु तर्हि(२) "तां चतुर्भिरादत्त" इत्यत्रादानस्यार्थप्राप्तत्वात्, मन्त्राणां च तत्र लिङ्गादेव प्राप्तेः, सङ्ख्यायाश्चादाने मन्त्रे वा विधातुमशक्यत्वस्य (३)पूर्वमेवोक्तत्वात्, विधेयाभावेन पुनश्श्रवणानर्थक्यमिति चेत्—

## गुणार्था वा पुनश्श्रुतिः ॥ १-२-४३ ॥

श्रुतार्थानुपपत्तिरूपस्याक्षेपस्य श्रुतिकल्पनाधीनप्रामाण्यस्य लिङ्गस्य वा प्रत्यक्षश्रुत्यपेक्षया मन्थरप्रवृत्तित्वात्, ततः पूर्वमेव प्रत्यक्षश्रुत्या मन्त्रसङ्ख्योभयविशिष्टादानविधानोत्तरं(४)अरुणैकहायनीन्यायेन मन्त्रसङ्ख्ययोः पार्ष्ठिकान्वयोपपत्तावर्थात्स-

१. तत्रेति नास्ति. ख. पु. २. तै. सं. ५. १. १.
३. अस्मिन्नेवाधिकरणे 'तदर्थं' सूत्र इत्यर्थः ४. पू. मी. ३. १. ६.

मुच्चयसिद्धेः एतद्विधयभावे(१)चाक्षेपमन्त्रालिङ्गाभ्यामादानम-न्त्रयोः प्राप्तिसम्भवे तद्विषये विधिप्रवृत्तिफल आलोच्यमानेऽन-न्यलभ्यसङ्ख्याविधानार्थं तच्छ्रवणमिति फलावधारणात् वस्तुतो विशिष्टविधिरूपत्वेऽपि फलतो गुणविधानार्था पुन-श्श्रुतिः । न चात्र "चतुर्भि" रिति तृतीयया चतुर्णामपि म-न्त्राणां करणमन्त्रत्वावगतेराद्यमन्त्रत्रयजन्यस्मृतेश्च नष्टत्वेना-न्तिममन्त्रोच्चारणानन्तराक्रियमाणक्रियां प्रति करणत्वानुपपत्तिः । (२)"तुषपक्वा भवन्ती"त्यादौ परम्परयाऽपि करणत्वस्य बहुशो दृष्टत्वेनाऽऽद्यानां त्रयाणां संस्कारद्वाराऽपि करणत्वोपपत्तेः ॥४३॥

## परिसङ्ख्या ॥ १-२-४४ ॥

"इमामगृभ्णन्" नित्यादेश्च परिसङ्ख्यार्थत्वेन न वैयर्थ्यम् । न च परिसङ्ख्यायां(३) त्रैदोष्यं, अप्राप्तपरिसङ्ख्याङ्गीकारात् । तथाहि—यावल्लिङ्गेन श्रुतिं कल्पयित्वा मन्त्रस्य रशनाद्वयादा-नाङ्गत्वमवगम्यते, तावदश्वाभिधान्यङ्गत्वेन प्रत्यक्षया श्रुत्या म-न्त्रस्य विनियोगान्न तावत्स्वार्थस्य विधेयत्वहानिः; अश्वाभि-धान्यङ्गत्वस्य प्राग्वचनादस्मादप्राप्तेः । अत एव गर्दभाभिधान्य-ङ्गत्वनिवृत्तिरूपपरार्थस्य विधेयत्वं न कल्प्यम्, तस्याः प्रापकप्र-माणाभावादेव सिद्धेः । अत एव प्राप्तत्यभावान्न प्राप्तबाधोऽपि । अतोऽत्राश्वाभिधान्युद्देशेनैव मन्त्रो विधीयते । आदानं त्वर्थप्रा-प्तमनूद्यते । अतश्च पूर्ववद्विधिप्रवृत्तेः फल आलोच्यमाने लिङ्ग-कल्प्यश्रुतिप्रतिबन्धद्वारा गर्दभरशनानिवृत्तेः फलत्वकल्पनात् फलतः परिसङ्ख्येति भाष्यकाराभिप्रायः ।

---

१. भावेऽपि चेति. ख. पु. २. तै. सं. ५. २. ४. निर्ऋतिदेवताकाः तिस्र इष्टकास्तुषैः पक्वा भवेयुरित्यर्थः । ३. त्रैदोष्यापत्तिरिति. ख. पु.

वार्तिककारास्तु–याव(१) दादानमपि प्राप्यते तावत्प्रत्यक्षया श्रुत्या मन्त्रविशिष्टादानस्यैवाश्वाभिधान्यङ्गत्वेन विध्युपपत्तौ न धातुपारार्थ्यम् । कारकयोश्च मन्त्राश्वाभिधानीरूपयोरन्योन्यसम्बन्धो युक्तः । न च विशिष्टविधौ षष्ठविधिप्रकारापत्तेर्भाष्यकाररीत्या चतुर्थविधिप्रका(२)राश्रयणमेव युक्तमिति वाच्यम् । आक्षेपतोऽपि पूर्वं शीघ्रप्रवृत्तिकस्याऽऽक्षेपप्रतीक्षायां प्रमाणाभावेन तस्यामवस्थायामादानस्य प्राप्त्यभावेन विशिष्टविधित्वोपपत्तेः अन्यफलकत्वेनाऽस्य विशिष्टविधेर्दोषत्वाभावाच्च । अतो मन्त्रविशिष्टादानस्याश्वाभिधानीसंस्कारार्थत्वेन विधानाद्गर्दभाभिधान्यादानेऽप्राप्ते त्रैदोष्याप्रसङ्गात् वस्तुतोऽपूर्वविधित्वेऽपि पूर्ववत् फलतः परिसङ्ख्यात्वव्यपदेशासिद्धिः। अत एव सर्वत्रापूर्वविधित्वेऽपि यत्रैवाप्राप्तप्रापणं विधिप्रवृत्तेः फलं स एवापूर्वविधिशब्देन व्यपदिश्यते । यत्र त्वप्राप्तांशपूरणं तस्याः फलं स नियमविधिपदेना(३)भिधीयते ।

अत एव "व्रीहीनवहन्ती" त्यत्र यावदर्थाक्षेपात्पुरोडाशनिष्पत्त्यर्थं वितुषीभावजनकत्वेन विदलनादिसाधारण्येनावघातः पक्षे प्राप्यते, तावत्पूर्वमेव प्रत्यक्षया श्रुत्याऽवघाते विधीयमाने न तत्प्राप्तिरेव तत्र विधिप्रवृत्तेः फलम्। एतद्विध्यभावेऽर्थाक्षेपादेवावघातस्य प्राप्तिसम्भवात् । किन्तु यथाऽवघातोऽर्थाक्षेपात्प्राप्यते, तथा विदलनादिकमपि विकल्पेन । अतश्च विदलनादिप्राप्तिपक्षेऽवघातस्याऽप्राप्तत्वात् तदप्राप्तांश(४)प्रापणरूपो नियम एव विधेः फलम् । न च विदलनादिनिवृत्तिरेव विधेः फलं किं न स्यादिति वाच्यम् ? अप्राप्तांशप्रापणरूपस्य नियमस्याक-

---

१. यावदर्थादा इति. क. पु. २. राद्धीकरणमिति. क. ख. पु.
३. अभिधीयत इति नास्ति. ख. क. पु. ४. पूरण इति. क.ख. पु.

रणे उपायान्तराक्षेपस्य निराकर्तुमशक्यत्वात् । करणे चार्थादेवान्यनिवृत्तेस्सिद्ध्युपपत्तेः फलत्वायोगात्, नियमस्य विधेयावघातगतत्वेन प्रत्यासन्नत्वाच्च ।

यत्र तु प्रत्यक्षविध्यभावे द्वयोश्शेषयोरेकस्मिन् शेषिणि शेषिद्वये वैकस्य शेषस्य नियता प्राप्तिर्दुर्बलप्रमाणेन सम्भाव्यते, यथा गृहमेधीये आज्यभागप्रयाजयोरतिदेशेन, प्रकृतमन्त्रस्य वाऽश्वगर्दभरशनादानयोर्लिङ्गेन, तत्र प्रत्यक्षविधेः (१)प्रवृत्तत्वात् । वस्तुतोऽपूर्वविधित्वेऽपि(२) "आज्यभागौ यजति" इत्यनेन विहिताभ्यां क्लृप्तोपकाराभ्यामाज्यभागाभ्यामेव गृहमेधीयाकाङ्क्षानिवृत्तेरतिदेशाकल्पनात् फलतः प्रयाजादिशेषान्तरनिवृत्तिः ।

"इमामगृभ्णन्" नित्यस्य च प्रत्यक्षश्रुत्याऽश्वरशनादान एव विनियुक्तस्य निराकाङ्क्षत्वेन लैङ्गिकश्रुत्यकल्पनादर्थाद्गर्दभाभिधानीरूपशेष्यन्तरानिवृत्तिः । अत्र हि विधेयस्य नियतप्राप्तत्वान्नैं(३)तत्प्राप्तिर्नियमो वा फलम्, अपित्वन्यनिवृत्तिरेवाऽगत्या फलत्वेनाऽऽश्रीयते । अतः फलतः परिसङ्ख्याङ्गीकरणान्न त्रैदोष्यमित्याहुः ।

यत्र तु प्रापकप्रमाणोत्तरं शास्त्रप्रवृत्तिः यथा(४)"पञ्च पञ्चनखा भक्ष्याः" इत्यादौ, तत्र त्रैदोष्यम् । तत्र भक्षणस्य रागप्राप्तत्वात्, ततः (५)पूर्वमेव विधाने फलकल्पनापत्तेः, अभक्ष्यप्रकमाच्चाविधेयत्वात् स्वार्थहानिः । पञ्चातिरिक्तपञ्चनखभक्षणस्यापि रागप्राप्तत्वान्निवृत्तेश्शास्त्रमन्तरेणासिद्धेः(६) विधेयत्वकल्पना । अत एव प्राप्तबाधोऽपि । प्रापकप्रमाणोत्तरं प्रवृत्ता-

---

१. पूर्वप्र. इति. क. ख. पु.
२. मै. सं. १. १०. १५.
३. न तदिति क. पु.
४. वाल्मी. रा. कि. १७. ३९.
५. पूर्वमेव चेति क. ख. पु.
६. विधिविधेयत्व इति. ख. पु.

अपि च यत्र नञादिश्रवणमेवकारो वा, तत्र प्राप्तपरिसङ्ख्यायामपि स्वार्थहानिपरार्थकल्पनयोरभावान्न त्रैदोष्यम् । यथा (१)"नाऽनृतं वदेत्" "अत्र ह्येवाऽऽवपन्ती"त्यादौ ।

यत्तु न्यायसुधायामेवकारस्थले श्रौतो नियम इत्युक्तम्, तत् 'सत्यमेव वदे'दित्यादौ सत्यवदनस्य नियतप्राप्त्यभावादेवकारस्याऽयोगव्यावृत्त्य(२)भिप्रायेण ।

यत्र तु नियता कर्तव्यस्य प्राप्तिस्तत्रायोगव्यावृत्त्यसम्भवादन्ययोगव्यावृत्त्यर्थकत्वमादाय श्रौतपरिसङ्ख्यात्वमावश्यकम् । अत एव त्रिवृद्धस्तोमकेषु "एकविंशेनाऽतिरात्रेण प्रजाकामं याजयेयु"रित्यादिवाक्यविहितेषु क्रतुषु सङ्ख्यायाः पृथक्त्वनिवेशात् तत्सम्पत्तये अनियमेन सर्वस्तोत्रेषु साम्नामृचां चागमेनावापे प्राप्ते "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् ; अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्ती"त्यनेन गायत्र्यादिष्वेवाऽऽवापो नान्यत्रेति परिसङ्ख्या । अतश्च गायत्र्यादीनां पवमानेष्वेव सत्त्वात् तद्विषय एवाऽयमावापः, नान्यस्तोत्रेषु । सोऽपि च साम्नामेव न ऋचां, तासामृगधिकरणत्वस्यासम्भवात् । अतश्च तत्राऽऽगम्यमानसामाधारभूतगायत्र्यादीनामभ्यास एव । स्तोत्रान्तरेषु तु साम्नामपि नाऽऽवापः, किन्त्वभ्यासेनैव सङ्ख्यासम्पत्तिः

यद्यपि नाऽयं सामावापो बहिष्पवमाने सम्भवति, तत्र सामैकत्वस्य प्रत्यक्षशिष्टत्वात् । तथाऽपि माध्यन्दिनपवमानार्भवपवमानयोरेव गायत्र्यादिसत्त्वान्निविशते । बहिष्पवमाने त्वेकस्य साम्नोऽभ्यास एव । ऋचां तु सङ्ख्यायाः (३)पृथक्त्वनिवेशित्वात्तत्सम्पत्तये "पराग्बहिष्पवमानेन स्तुवत" इति परावच्छ-

---

१. तै. सं. २. ५. ५.    २. वृत्त्यर्थकत्वाभीति. क. ख. पु.
३. पृथक्त्वेन निवेशीति. क. ख. पु.

च्छवाच्यानभ्यासविधानादागम एव । स्तोत्रान्तरेषु तु यद्यपि सङ्ख्यासम्पत्तये न्यायेनाऽऽगम एव प्रसक्तः, तथाऽपि बहिष्पवमाने न्यायप्राप्तऋगागमप्राप्तिफलकानभ्यासपुनर्विधिः (१)स्तोत्रान्तरे तदागमपरिसङ्ख्यार्थस्सम्पद्यत इति तच्छ्रुत्याप्यभ्यास एव । तत्सिद्धं "अत्र ह्येवाऽऽवपन्ती" त्ययं स्तोत्रान्तरे सामागमपरिसङ्ख्यार्थ एवकार इति । एवं यत्र विवृद्धस्तोमक्रतुशेषत्वेनौपदेशिकं कौत्सादिसाम विहितम्, तत्र तस्य प्रतिप्रधानं गुणावृत्तिन्यायेन सर्वस्तोत्रेषु प्रकृतसामबाधेनापि निवेशस्य नियमेन प्राप्तत्वादत्र ह्येवावपन्तीत्ययं पवमानद्वयव्यतिरिक्तविषयपरिसङ्ख्यार्थ एव ।

न च कौत्सादेः कण्वरथन्तरादिवत्स्वयोनिष्वेव गेयत्वप्राप्तेः प्राकृतगायत्र्यादिष्वप्राप्तत्वेन परिसङ्ख्यानुपपत्तिः, कण्वरथन्तरयोर्हि वैश्यस्तोम(२)प्रकरणपठितत्वेन तदङ्गत्वावगमात्प्राकृतऋगाधारत्वानुपपत्तिर्युक्ता । कौत्सादीनां त्वनारभ्याधीतत्वेन सत्यपि वचनेन क्रत्वङ्गत्वावगमे तदाधारभूताया योनेः प्रकरणपाठाभावेनाङ्गत्वानवगमात् प्राकृतऋगाधारत्वस्य(३)दशमे वक्ष्यमाणत्वात् । ये त्वविवृद्धस्तोमकाः क्रतवो यथा(४) "त्रिवृदग्निष्टुदग्निष्टोम" इत्यादयः तेषु सङ्ख्यानुरोधेन प्राकृतसर्वस्तोत्रेषु सर्वसामसु तदाधारभूतासु च ऋक्षु निवृत्तासु यत्तदङ्गत्वेनौपदेशिककौत्सादिसामाम्नातं तन्निवेशार्थमनियमेन(५)प्राकृतसामोद्वापे प्राप्ते 'अत एवोद्वपन्ती' त्यनेन गायत्र्यादिभ्य एवेति नियमकरणात्स एव परं श्रौतो नियमः, न तु 'अत्र ह्येवावपन्ती' त्ययम्, किन्तु श्रौतः परिसङ्ख्याविधिरेवेति सिद्धम् ।

---

१. स्तोत्रान्तरागमेति. क. पु. २. प्रकरणे पाठेनेति. क. पु.
३. पू. मी. १०. ४. १०. ४. तां. ब्रा. १७. ६. १.
५. यतः कृतश्चिरमा. इति. क. ख. पु.

वस्तुतस्त्वेवकारस्यान्ययोग(१)व्यवच्छेदार्थकत्वेन श्रौतप-रिसङ्ख्यारूपत्वे तस्या निषेधतुल्यतया(२) "न तौ पशौ क-रोती" तिवद्विकल्पापत्तेर्नेयं श्रौती परिसङ्ख्या, अपि तु याव-न्न्यायेन सर्वत्र सामागमः प्राप्यते तावत्पूर्वमेव गायत्र्याधारक-त्वेन विधीयते । अतश्चाप्राप्तविधिरेवायं परिसङ्ख्याफलको न तु श्रौती परिसङ्ख्या ।

यद्यपि च गायत्र्यादिषु सामावापविधौ कृते न स्तोत्रा-न्तरेषु तदाकाङ्क्षाशान्तिरिति प्रापकप्रमाणप्रतिबन्धाभावान्नाऽत्र फलतः परिसङ्ख्यात्वं शक्यते वक्तुम् । तथाऽप्यत्रावापविधौ कृते तत्प्रयोजनजिज्ञासायां प्रयोजनान्तरासम्भवेन गमकविध-या स्तोत्रान्तरेऽनभ्यासविधिकल्पनेन परिसङ्ख्याफलकत्वोप-पत्तिः । अतश्चाऽऽवपन्ती(३)त्यत्र धात्वर्थविधिरपि सम्पद्यते । एवकारस्तु फलप्राप्तानुवादो न तु स्वार्थविधायक इति द्रष्टव्य-म् । एवञ्च रागप्राप्त एवाऽर्थे यत्रैवकारस्य नञो वा श्रवणं तत्रैव श्रौती परिसङ्ख्या नाऽन्यत्र । अत एव श्रौतपरिसङ्ख्यायां 'नाऽनृतं वदे' दि(४)त्युदाहरणमुक्तं न्यायसुधाकृता । प्रकृते तु लौकिकप्राप्तेः पूर्वं प्रत्यक्षश्रुतेः प्रवृत्तत्वात् फलतः परिसङ्ख्यैवे-त्युक्तम् ।

यच्चाश्वाभिधान्युद्देशेन मन्त्रविशिष्टादानविधानेऽप्यश्वाभि-धानीस्वरूप आनर्थक्यादपूर्वसाधनलक्षणया प्रकृतैका-पूर्वसाधनत्वाद्यवे ऽपि गर्दभाभिधान्यामपि मन्त्रप्राप्तिरनिवार्येति, तन्न । "व्रीहीन्प्रोक्षती" त्यादौ व्रीहिपदेनाऽपूर्वसाधनत्वे लक्ष्यमा-णे प्रकृतापूर्वसाधनत्वमेव लाघवाल्लक्ष्यते, न तु प्रकृतापूर्वसा-

१. त्वाकृत्स्यर्थं इति. क. ख. पु.  २. कापि. श्रा. ३. ५.
३. त्ययमिति क. पु.  ४. त्येकोदाहरणेति. ख. पु.

धनीभूतव्रीहित्वमपीति युक्ता यवेषु धर्मप्राप्तिः। प्रकृते त्वपूर्वसाधनत्वमात्रलक्षणायां लिङ्गकल्प्यश्रुत्यविशेषेण प्रत्यक्षश्रुतिवैयर्थ्यापत्तेरगत्या प्रकृतापूर्वसाधनीभूताऽश्वाभिधानीत्वलक्षणाश्रयणान्न गर्दभाभिधान्यां मन्त्रापत्तिः।

न चात्राऽपि सर्वस्य यजुर्वेदस्याऽऽध्वर्यवसमाख्यानाद्यजुर्वेदविहितपदार्थानामध्वर्युकर्तृकत्वावगतेः प्रत्यक्षश्रुत्याऽऽदानाविधाने च तदासिद्धेस्तात्सिध्यर्थमर्थप्राप्तादानविधानेन श्रुतेरर्थवत्त्वोपपत्तेरश्वाभिधानीत्वलक्षणायां प्रमाणाभावाद्गर्दभाभिधान्यां मन्त्रप्राप्तिरनिवार्येति वाच्यम्। रशनाबन्धनस्य प्रत्यक्षश्रुतिविहितत्वेनाध्वर्युकर्तृकत्वे सिद्धे बन्धनार्थादानस्यान्यकर्तृकत्वानुपपत्तेरध्वर्युकर्तृकत्वस्य विधिं विनैव सिद्धेः।

एतेन(१) 'यदि यजुष्टो यज्ञो आर्तिमार्च्छेत् भुव इति दक्षिणे' त्यस्यापि प्रायश्चित्तस्योपक्रमानुसारेण वेदधर्मत्वस्य(२)तृतीये व्यवस्थापयिष्यमाणत्वाद्विध्यभावे अविज्ञातप्रायश्चित्तापत्तेरतत्प्रायश्चित्तप्राप्त्यर्थो विधिरर्थवानिति परास्तम्। आदानविध्यभावेऽपि मन्त्रस्यैव यजुर्वेदपाठितत्वेन एतत्प्रायश्चित्तप्राप्त्युपपत्तेः। आदानभ्रेषे बन्धनभ्रेषस्यावश्यम्भावेन तन्निमित्तमेतत्प्रायश्चित्तस्योपपत्तेश्च। किञ्च यथा(३)"रथन्तरे प्रस्तूयमाने सम्मीलयेत्, बृहति प्रस्तूयमाने समुद्रं मनसा ध्याये" दित्यादौ प्रतिनियतनिर्देशान्यथानुपपत्त्याऽपूर्वसाधनीभूतरथन्तरत्वादिलक्षणापक्षस्याप्याश्रयणान्न धर्माणा साङ्कर्यमिति(४)वक्ष्यते, तथाऽत्रापि(५)"युञ्जाथां रासभं युवमिति गर्दभ" मित्येवं प्रतिनि-

---

१. श. ब्रा. ११. ५. ८. ६.
२ पू. मी. ३. ३. १.
३. तां. ब्रा. ७. ७. १५.
४. नवमाद्वितीयचतुर्दशे
५. तै. सं. ५. १. २.

यतानिर्देशान्यथानुपपत्त्याऽश्वाभिधानीत्वादेरेव लक्षणेति न मन्त्रसाङ्कर्यम् ।

न च तत्रत्यमस्त्ररसकारणं कण्वरथन्तरादौ बृहद्रथन्तरधर्मप्रसक्तिरूपमत्रास्ति, अश्वाभिधानीकार्यापन्नस्य विकृतावसिद्धेः । अतो बृहद्रथन्तरस्थल एव परं पृष्ठस्तोत्रजन्यापूर्वैक्येऽपि बृहद्रथन्तरसामाश्रयतत्प्रतिपाद्यगुणाभिधानजन्यापूर्वरूपावान्तरकार्यसाधनलक्षणाश्रयणात्प्रकृतौ (१)धर्मव्यवस्थोपपत्तेः । कण्वरथन्तरे च स्वाश्रयऋग्वाच्यगुणाभिधानस्य प्राकृतगुणाभिधानजन्यापूर्वार्थत्वस्यैव लाघवेन हिरण्यगर्भमन्त्रवत्कल्पनात्प्राकृतकार्यापन्नत्वेन तत्प्रयुक्तधर्मप्राप्त्युपपत्तिः । प्रकृते त्ववान्तरकार्यभेदाभावात्प्रतिनियतनिर्देशबलादश्वाभिधानीत्वलक्षणायामपि न किञ्चिद्बाधकमस्तीति युक्तैयं परिसङ्ख्या ।

अत्र च परिसङ्ख्यादिलक्षणेषु विधिरसायनोक्तदूषणाऽनवकाशार्थमेवं यतितव्यम्—यत्र निषेधापरपर्याया निवृत्तिः शब्दतः फलतो वा शास्त्रतात्पर्यविषयीभूता, स परिसङ्ख्याविधिः । उक्तपरिसङ्ख्योदाहरणेषु लक्षणसमन्वयस्तु स्फुट एव । तत्र निषेधप्रतियोगी विधिविषयः भावरूपोऽभावरूपो वा(२)उपाधिर्यः कश्चिद्बोध्यः । तेनाऽनृतवदनगर्दभाभिधानीप्रयाजादीनां नाऽसङ्ग्रहः । न वाऽनेकाभावप्राप्त्येकाभावपरिसङ्ख्यायाः । अभावस्य परिसङ्ख्यायाश्च तत्र चान्यत्र च प्राप्तिरौत्सर्गिकी, न तु नियता । "नाऽनृतं वदे" दित्यादौ सत्यानृतयोरेकस्मिन्नर्थावबोधे पक्षप्राप्तत्वेन नियतप्राप्त्यभावात् । अत एव सा न लक्षणघटिका ।

---

१. धर्मव्यवस्थाया उप. इति. क. पु.

२. उपाधिरिति नास्ति ख. क. पु.

न चैवं " व्रीहीनवहन्ती " त्यादाववघाताभावव्यावृत्तेरपि तात्पर्यविषयत्वात्परिसङ्ख्यालक्षणस्याऽतिव्याप्तिः, यत्प्रतियोगिकाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणं, तस्य शास्त्रस्य तत्परिसङ्ख्याविधित्वमिति विवक्षितत्वात् । सर्वत्र हि परिसङ्ख्याविधौ परिसङ्ख्येयप्रतियोगिकाभाव एव तात्पर्यविषयीभूतः । नियमविधौ त्ववघाताभावाभावरूपो नियमः । अत एवाभावाभावत्वस्य तात्पर्यविषयतावच्छेदककोटिप्रविष्टत्वेऽपि पर्याप्त्यधिकरणत्वाभावान्नातिव्याप्तिः । अत एव शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमो यस्य शास्त्रस्य तात्पर्यविषयीभूतस्स नियमविधिः । उक्तोदाहरणेषु लक्षणसमन्वयस्स्फुट एव । पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिबन्धनो विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिबन्धनश्चेत्यादिप्रकारेण बोध्यः । "व्रीहीनवहन्ती"त्यादौ "उत्तरेऽहन् द्विरात्रस्य गृह्यत" इत्यादौ चाऽऽद्यः । एतद्विध्यभावे आक्षेपेणाऽवघातस्याऽतिरात्रसंस्थाकद्वितीयद्विरात्राऽहनि च षोडशिग्रहणस्यातिदेशेन पक्षप्राप्तत्वात् । "व्रीहिभिर्यजेते"त्यादौ द्वितीयः । यवविध्यभावसहितैतद्विध्यभावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात् ।

न चैवं पाक्षिकायोगभेदेन लक्षणभेदात्परस्पराव्याप्त्यतिव्याप्तिप्रसङ्गेन विधिरसायनोक्तदूषणतादवस्थ्यं, विदलनाद्युपायान्तरप्रसक्तिप्रसञ्जितयत्प्रतियोगिकाभावकूटाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणं, तस्य तन्नियमविधित्वमिति विवक्षाङ्गीकारेण पाक्षिकत्वभेदस्य लक्षणकोटावप्रवेशात् ।

वस्तुतस्तु अवघातत्वावच्छिन्नप्रतियोगिताकाभावाभावत्व-

मेवोक्त(१)लक्षणे प्रवेश्यत इति कूटाद्यप्रवेशादपि लाघवम् । तथा च यद्धर्मावच्छिन्नप्रतियोगिताकाभावाभाववत्वं तात्पर्यावच्छेदकतापर्याप्त्यधिकरणं तस्य तद्धर्मवत्परिसङ्ख्याविधित्वमिति निर्गलितोऽर्थः । तावतैव च परिसङ्ख्याविधितोऽपि भेदसिद्धेर्न कूटादिप्रवेशस्यापि प्रयोजनम् ।

एवं च यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणम्, तस्य शास्त्रस्य तद्धर्मवत्परिसङ्ख्याविधित्वम् । एवं च "व्रीहीनवहन्ती" त्यादौ यच्छब्देनाऽवघातत्वस्य ग्रहणे नियमविधित्वमेव । अवघाताभावत्वग्रहणे तु परिसङ्ख्याविधित्वाङ्गीकारेऽपि न क्षतिः । वक्ष्यमाणविधया साङ्कर्यस्यानिवार्यत्वात् ।

न चैवमपि "व्रीहीन्प्रोक्षती" त्याद्यपूर्वविधावपि प्रोक्षणाभावाभावस्य प्रोक्षणस्यैव तात्पर्यविषयत्वादतिव्याप्तिः । निषेधमुखप्रतीतिकतयाऽभावाभावस्याऽतिरिक्तस्य प्रतियोगस्वरूपत्वानङ्गीकारेणाऽपूर्वविधौ लाघवाच्छुतत्वाच्च प्रतियोगिन एव तात्पर्यविषयत्वाङ्गीकारेणाऽभावस्य तात्पर्यविषयत्वाभावात् । नियमविधौ तु प्रतियोगिनः प्राप्तत्वात्(२) सामान्याभावाभाव एव तात्पर्यविषयीभूतः । यदि तु सामान्याभावाभावोऽप्याक्षेपेण प्राप्त इत्याशङ्क्येत, तदा विदलनाद्युपायान्तरप्रसक्तिप्रसाञ्जितसामान्याभावत्वावच्छिन्नप्रतियोगिताकाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणं, तस्य शास्त्रस्य तद्धर्मावच्छिन्ननियमविधित्वमित्यादिरूपेण बोध्यम् । न तु कूटप्रवेशः । सामान्याभावे ह्यवघाताकरणप्रसञ्जितत्ववद्विदलनकरण-

---

१. विधिलक्षण इति. ख. पु.     २. स्वसामान्येति क.,ख. पु.

प्रसञ्जितत्वमप्यस्तीति विशिष्टाभावप्रवेशा(१)न्न कूटप्रवेशः। तावतैव विदलनाद्युपायान्तरप्रसक्तिप्रसञ्जितावघाताभावकूटाभावस्य सिद्धेर्विदलनादिव्यावृत्तिसिद्धेश्च। यदि तु सामान्याभावे विदलनकरणप्रसञ्जितत्वे प्रमाणाभाव इति विभाव्यते; ततः पूर्वोक्तलक्षणमेव साधीयः। माऽस्तु वा नियमविधौ पर्याप्तिविवक्षा।

यत्तु दृष्टार्थत्वं नियमविधिलक्षणं कैश्चिदुक्तम्, तत् "उत्तरेऽहन् द्विरात्रस्य गृह्यत" इत्यादावव्याप्तत्वादुपेक्षितम्। षोडशिग्रहयागाभ्यासस्याऽदृष्टार्थत्वात्। एवं च नियमपरिसङ्ख्यातिरिक्तफलकविधित्वमपूर्वविधित्वमि(२)ति लक्षणम्। (३)एवं च यद्विषयको विधिरुक्तफलद्वयातिरिक्तफलतात्पर्यकः, तत्त्वं तदपूर्वविधित्वम्। लक्षणसमन्वयस्तु सर्वत्राऽप्यपूर्वविधौ सुधीभिरनुसन्धेयः। तच्च फलं "व्रीहीन्प्रोक्षती" त्यादौ विधेयमेव प्रोक्षणादि, "तमुक्थ्येने" त्यादौ गुणकामप्रवृत्त्यादिविधेयवचनाद्यन्यद्वेति प्रकारभेदेऽपि न कश्चिद्विरोधः। एतेषां चोपाधीनां क्वचिदुदाहरणे विषयभेदेन वा विषयैक्येन वा साङ्कर्येऽपि न कश्चिद्दोषः।

न ह्येवंविधलक्षणसाङ्कर्याङ्गीकारे दीक्षितदण्डादन्यो दण्डो मैत्रावरुणकर्तृके प्रैषानुवचने प्रसज्येतेत्यादिदूषणानां प्रसङ्गलेशोऽप्यस्ति। (४)"क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती" त्यस्या(५)भावे दीक्षितदण्डस्य यजमानधारण एव विनियोगाल्लौकिकस्यैव दण्डस्य नियमविधिः, 'दण्डी'

१ न कूटप्रवेश इति नास्ति ख. पु.

२. इति लक्षणमिति नास्ति. ख.पु. ३. तत्त्वञ्चात क. पु.

४. तै. सं. ६. १.४. ५. दण्डीत्यस्य चोभयोर. इति ख. पु.

त्यस्यैवाभावे च दीक्षितदण्डस्य मैत्रावरुणाय दत्तस्य प्रयोजनापेक्षायामालम्बनतया कार्यमात्रे समुच्चित्य प्राप्तौ दण्डीत्ययं प्रैषानुवचनातिरिक्तकार्यान्तरपरिसङ्ख्याविधिस्सम्पद्यते। ततश्च तदुभयाङ्गीकारे(१) लौकिकदण्डस्यापि ग्रहणापत्तिरिति हि (२)दूष-

---

१. तत्साङ्कर्याङ्गीकार इति क. ख. पु.

२. दूषणमिदं श्रीमदप्पय्यदीक्षितैर्विधिरसायने 'यद्येकानेकविध्यप्रसृतिमुखभव' इति दशमश्लोके 'दैक्षादन्योऽपि दण्डः प्रकृतिजुषि भवेत्प्रैषकार्ये प्रशास्तु' रित्यादिना दत्तम् । तस्याऽयं पिण्डीभूतोऽर्थः—ज्योतिष्टोमे दीक्षाप्रकरणे 'दण्डेन दीक्षयती' त्यनेन दीक्षाभिव्यञ्जकतया दीक्षितहस्ते दण्डदानं विहितम् । तत्र द्वितीयदिनकर्तव्यसोमक्रयणानन्तरं तस्यैव दण्डस्य मैत्रावरुणाय दानं विहितं 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती'ति । तत्रैव च मैत्रावरुणकर्तृकेषु प्रैषानुवचनेषु दण्डवैशिष्ट्यमपि विहितं 'दण्डी प्रैषानन्वाहे' ति । तथा च दीक्षितेन दत्तं दण्डमवलम्ब्यैव तिष्ठन्मैत्रावरुणः अग्नीषोमीयपश्वादौ प्रैषानुवचनं करोतीति स्थितिः ।

सति चैवं तन्मात्रविध्यप्रवृत्तिदशायां विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिदशायां वा या पाक्षिकी अप्राप्तिस्तादृशाऽप्राप्तांशपूरको नियमविधिरिति नियमविधिलक्षणमङ्गीकरणीयम् । अतश्चानियमेनैकानेकविध्यप्रवृत्ताविति विवक्षणे 'दण्डी प्रैषानन्वाहे' त्यत्र तन्मात्रविध्यप्रवृत्तिविवक्षायां 'क्रीते सोम' इति विधेस्सत्त्वात्तत्प्रापितस्य मैत्रावरुणदण्डस्य कार्यापेक्षायां सत्यां तत्कर्तृकप्रैषानुवचनवत्कार्यान्तरेष्वपि दण्डस्य समुच्चित्य प्राप्तिसंभवात्तादितरकार्यान्तरव्यावृत्तिरूपपरिसङ्ख्याविधित्वं 'दण्डी प्रैषानि' ति वाक्यस्य प्राप्नोति । 'क्रीते सोम' इति वाक्याप्रवृत्तिसहकृतैतद्विध्यप्रवृत्तिविवक्षणे तु 'दण्डेन दीक्षयती'ति विधिमात्रसत्वेन तत्प्रापितदीक्षितदण्डस्य आन्तं दीक्षितेनैव धारणीयत्वमापतेत् । ततश्च मैत्रावरुणस्य प्रैषानुवचनसमये आलम्बनापेक्षायामनियमेन यस्य कस्यचिदालम्बनप्राप्तौ दण्डस्यैवालम्बनत्वं विदधदयं नियमविधिस्संपद्यते । अतश्चैकस्मिन्नेव वाक्ये नियमपरिसङ्ख्याविधिलक्षणसाङ्कर्यमेकानेकप्रवृत्ति-

णम्; तच्च न युज्यते, तार्किकफलानेकत्वेऽपि वस्तुतः "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती" त्यनेन मैत्रावरुणार्थत्वेन विनियुक्तस्य(१)दीक्षितदण्डस्य प्रयोजनापेक्षायां 'दण्डी प्रैषानन्वाहे' त्यनेन कार्यविधानादन्यस्याऽप्रसक्तेः। एवमन्यत्राप्यूह्यम्। एतानि च लक्षणानि सुधीभिर्विधिरसायनोक्तोदाहरणेषु योज्यानि।

न चान्यत्र सुयोज्यत्वेऽपि(२) 'यदि सोमं न विन्देत् पूतीकानभिषुणुया' दित्यादौ सोमाभावे पूतीकानां मन्दसदृशतया प्राप्त्यभावेन तत्र पूतीकप्राप्तेरेव तात्पर्यविषयत्वात्, तदभावाभावस्य प्रोक्षण इव तात्पर्यविषयत्वे च प्रमाणाभावान्नियमविधित्वानुपपत्तिः, एतद्वचनस्य मुसदृशप्राप्तिन्यायप्रवृत्त्युत्तरप्रवृत्तौ प्रमाणाभावेन पूर्वप्रवृत्तस्याऽस्य पूतीकप्रापकत्वानुपपत्तेः।

यत्र तु(३) "हिरण्यगर्भस्समवर्तताऽग्र इत्याघारमाघारयती" त्यादौ हिरण्यगर्भप्रकाशकस्य मन्त्रस्य ऐन्द्राघारे कथमपि प्राप्त्यसम्भवः, तत्र सत्यपि क्लृप्तनियमादृष्टजनकत्वेनोत्तराघारे मन्त्रविधौ(४) 'औदुम्बरो यूपो भवती' तिवदपूर्वविधित्वेऽपि न क्षतिः।'सर्वे द्रव्यविधयो नियमविधय'इत्यादिवादस्तु(५) शेषा-

---

विवक्षणकृतमापद्यते। किञ्च द्वितीयपक्षे दैक्षे पशौ दीक्षितदण्डादन्यस्यैव लौकिकदण्डस्य प्राप्त्यापत्तिरिति।

१. दीक्षितेति नास्ति ख, पु, २. तां. ब्रा. ९. ५. ३.

३. अग्निचयनाङ्गभूतवायुदेवताकः पशुयागो विहितः। तदङ्गत्वेन प्रकृतित अतिदिष्टयोराघारयोर्द्वितीयाघारे मन्त्रोऽयं विहितः॥

४. तै. सं. २. १. ९.

५. 'सौभरमुक्थ्यानां ब्रह्मसाम भवती'ति वाक्यविहितसौभराख्यसामविशेषस्य वृष्ट्यादिफलोद्देशेन विधानं 'यो वृष्टिकामो योऽन्नाद्यकामो यस्स्वर्गकामस्स सौभरेण स्तुवीते'ति। तस्यैव च तत्तत्फल-

दीनां वृष्ट्यादिफलार्थत्वे अपूर्वविधित्वापत्तेरित्यादिव्यवहारा-दौत्सर्गिक एव । अत एव सर्वेष्वेव वाक्येषु विषयभेदेन विषयै-क्येन वा क्रमेण यौगपद्येन वा अनेकफलतात्पर्यकत्वेऽपि क्वचित्केनचिद्व्यवहारो मूले नाऽनुपपन्नः । तद्यथा—प्रकृतौ 'स्रुवेणाऽऽघारमाघारयती' त्यत्रैवाऽप्राप्तहोमप्रापणमभ्युदयाशिर-स्कत्वं, याजुर्वेदिकप्रायश्चित्तप्राप्तिरित्याद्यनेकफलतात्पर्यकत्वाद-पूर्वविधित्वं, पुनश्च तस्मिन्नेव विषये अध्वर्युकर्तृकत्वादिफलमादाय नियमविधित्वं, पुनश्च स्रुवविषये तदित्यनेकरूपता । न ह्येषां मध्ये एकस्यैव तात्पर्यविषयता नाऽन्येषां, अनुनिष्पन्नत्वादिति वाच्यम् । तात्पर्याभावे तदभावप्रयुक्तवैगुण्यानापत्तेः । अत ए-वाऽप्राप्तप्रापकविधावपि न तद्विधिजन्यबोधस्याऽऽवश्यकत्वं स-र्वेषामिष्टम् । एवं वार्तिकोक्ते "व्रीहीन्प्रोक्षती" त्यत्रापि(१) 'अग्न-ये वो जुष्टं प्रोक्षामी' त्येतन्मन्त्रकल्प्यविधितः पूर्वप्रवृत्तेरप्राप्तप्रो-क्षणप्रापकत्वं, तार्किकतत्प्राप्त्यालोचनोत्तरकालं त्वभ्युदयाशिर-स्कत्वं, प्रायश्चित्तप्राप्तिरध्वर्युकर्तृकत्वं, चेत्यादिफलप्रापकत्वादने-करूपता । 'व्रीहीनवहन्ती' त्यत्राप्याक्षेपतः पूर्व(२) प्रवृत्ताऽवघा-तप्रापकत्वादपूर्वविधित्वं, तार्किकतत्प्राप्त्यालोचने तु तन्नियम-फलकत्वं, तार्किकतन्मन्त्रवर्णकल्प्यावघातनियमप्राप्त्यालोचने त्वभ्युदयाशिरस्कत्वं, प्रायश्चित्तप्राप्तिं च(३) तद्विषयामङ्गीकृत्याऽपू-

साधनत्वेन विधियमानस्य हीषादयो नियम्यन्ते 'हीषिति वृष्टिका-माय निधनं कुर्यादूर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाये'ति । वृ-ष्टिसाधनीभूतसौभरे हीषिति निधनं पठेदिति तदर्थः । प्रस्तावोद्गीथ-प्रतिहारोपद्रवनिधनाख्यभागपञ्चकात्मनस्साम्नोऽन्तिमो भागो नि-धनमित्युच्यते ॥

१. तै. सं. १. १. ५. २. प्रवृत्तावप्राप्तावघातेति. क. ख. पु.
३. तात्पर्यविषयामङ्गीकृत्येति ख. पु.

र्वविधित्वं, अध्वर्युकर्तृकत्वाद्यादाय च नियमविधित्वमित्यादि तत्तद्विधित्वनेकरूपत्वेऽपि क्वचित्केनचिद्रूपेण व्यवहार इति नाऽत्र रूपान्तरलक्षणातिप्रसङ्गोद्भावनं युक्तम् ।

वस्तुतस्तु 'अवरक्ष' इत्यवघातमन्त्रस्य नाऽवघाते स्फुटं लिङ्गमिति तेन नाऽवघातनियमप्राप्तिः, "अग्नये वो जुष्टं प्रोक्षामी" ति प्रोक्षणलिङ्गमन्त्रस्याऽप्याग्नेयाङ्गभूतदर्भादिसाधारण्यापत्तेर्व्रीहिमात्रविषयतया प्रोक्षणप्राप्त्यनुपपत्तेः "व्रीहीन्प्रोक्षती" त्ययं दर्भादिपरिसङ्ख्यार्थ इत्यपि शक्यते वक्तुमिति ध्येयम् ।

न चैवं प्रोक्षणावघातादिविधीनां यवादिपरिसङ्ख्याफलकत्वरूपाप्यापत्तिः, सम्भावितेषु ह्यनेकेषु फलेषु यदेकमनेकं वा प्रामाणिकं फलं तत्रैव शास्त्रस्य तात्पर्यं, न तु प्रमाणबाधितेऽपि । प्रमाणबाधाऽबाधौ च तत्र तत्राऽधिकरणे स्फुटावेव । यत्रापि च न स्फुटौ तत्रापि स्वयमूह्यौ । यथाऽत्रैव यवादिपरिसङ्ख्यायाम् । व्रीहिपदेन ह्यपूर्वसाधनत्वमात्रमेव लाघवाल्लक्ष्यते, न तु तत्साधनीभूत(१) व्रीहित्वजातिरपि, गौरवात् । अतश्च गौरवपरास्तत्वान्न परिसङ्ख्याफलकत्वम् । (२)"इमामगृभ्णन्नि" त्यादौ(३) "युञ्जाथाँ रासभं युवमिति गर्दभ" मिति प्रतिनियतनिर्देशान्यथानुपपत्त्या गौरवाश्रयणेनाऽपि परिसङ्ख्याफलकत्वम् ।

न च लिङ्गादेव 'युञ्जाथामि'ति मन्त्रस्य गर्दभाङ्गत्वसिद्धेर्नाऽयं प्रतिनियतनिर्देश इति वाच्यम् , युवमिति पुरुषाश्वयोरुपादानेन लिङ्गसाधारण्यात् । अतः तत्राऽगत्याऽन्यपरिसङ्ख्याफलकत्वाङ्गीकारेऽपि न प्रकृते तदाश्रयणम् । अत एव यत्र परिसङ्ख्याङ्गीका-

---

१. व्रीहित्वमपीति ख. पु. २. तै. सं. ४. १. २.
३. तै. सं. ५. १. २.

हेऽपि न गौरवं, तत्र वाक्यस्याऽभ्युदयातिरिक्तत्वयाजुर्वेदिकप्राय-श्चित्तादिप्राप्तिरूपफलान्तरतात्पर्यकत्वेऽपि परिसङ्ख्याफलकत्वम्। यथा(१) 'आज्यभागौ यजती'त्यादौ। अत एव क्वचिदेव नियम-विधित्वसम्भवेऽपूर्वविधित्वानङ्गीकारः, यत्राऽपूर्वविधित्वं गौरव-पराहतम् । यथा व्रीह्यादौ व्यवस्थार्थत्वसम्भवे गुणफलसम्बन्ध-स्याऽदृष्टान्तरकल्पनापादकस्य, न तु सर्वत्र। "पुरोडाशं प्रथयती" त्यादावध्वर्युकर्तृकत्वनियमफलकत्वेऽपि याजुर्वेदिकप्रायश्चित्त-प्राप्तिफलकत्वेनाऽपूर्वविधित्वविरहसम्भावात् । अतस्सर्वत्रैव प्रा-यशः फलसाङ्कर्यसत्वेन मूले क्वचित्केनाचिद्व्यवहारस्यैच्छिकत्वा त्तत्रेतरलक्षणातिप्रसङ्गकथनं न युज्यते । अतश्चोक्तलक्षणानां तदुदाहरणानां च वार्तिकाद्युक्तानामनुपपत्त्यभावाद्विधिरसायनो-क्तलक्षणाक्षेप उदाहरहणाक्षेपश्च न सङ्गच्छेते । आक्षेपाक्षेपप्रस-ङ्गेन न्यायशैथिल्यकरणन्तु तत्तदधिकरणप्रसङ्गेन तत्र तत्र प्राय-शो निराकरिष्यत इति विधिरसायनोक्तदूषणानामनवकाशः॥४४॥

## अर्थवादो वा॥ १-२-४५ ॥

"उरु प्रथस्वेति पुरोडाशं प्रथयती" त्यत्र मन्त्रोपादानं "य-ज्ञपतिमेवे" त्यर्थवादालम्बनार्थम् । आलम्बनप्रकारश्च पूर्वमेव प्रदर्शितः ।

यत्तु प्रथनस्याप्यर्थप्राप्तत्वेनाऽविधेयत्वाद्विधिशेषत्वाभावेनाऽर्थ-वादत्वस्यैवानुपपत्तिरिति, तत्प्राप्तस्यापि प्रथनस्याऽध्वर्युकर्तृक-त्वार्थं विधानोपपत्तेः परिहर्तव्यम्। तस्माद्यज्ञपतिप्रथनफलकत्वेन पुरोडाशप्रथनं स्तोतुं मन्त्रोपादानम् । न च यज्ञपतिप्रथनस्य पुरो-

---

१. चातुर्मास्यान्तर्गतगृहमेधीयेष्टिसन्निधिपठितेति ।

डाशप्रथनफलकत्वज्ञापनार्थत्वेन रात्रिसत्रवन्मन्त्रोपादानं विनाऽप्यर्थवादोपपत्तिः, पुरोडाशप्रथनस्य पुरोडाशसंस्कारार्थत्वेन परार्थत्वादर्थवादस्य फलकल्पकत्वानुपपत्तेः ।

न च सूक्तवाकन्यायेन मन्त्रादेव फलकल्पनोपपत्तेः मन्त्रोपादानं विनाप्यर्थवादोपपत्तिः, वैषम्यात् । तृतीयया इतिकरणेन वा यत्र मन्त्रविनियोगस्तत्र सकलस्य मन्त्रस्य क्रियां प्रति करणत्वावगमादुत्सर्गतस्तावदयमर्थः प्रतीयते—सकलेनापि क्रियैव प्रकाशनीयेति । तदसम्भवे चाऽवगतक्रियासम्बद्धद्रव्यादि, तस्याऽप्यसम्भवे स्वार्थस्य क्रियासम्बन्धकल्पनं, तस्याप्यसंभवे च समवेतमर्थं स्तोतुं स्वार्थस्य तदुपसर्जनत्वकल्पनमिति । तद्यथा "सूक्तवाकेन प्रस्तरं प्रहरती" त्यत्र सकलस्य सूक्तवाकस्य तृतीयावगतकरणतान्यथानुपपत्त्या प्रहरणक्रियाप्रकाशकत्वावगतावपि तदसम्भवेऽवगतक्रिया(१) सम्बद्धं प्रस्तराख्यं द्रव्यं "यदनेन हविषे" त्यादिपदैः प्रकाश्यते, अवशिष्टैश्चाग्न्यादिपदैः(२) आयुरादिपदैश्च स्वार्थस्य फलदेवतात्वेन सम्बन्धकल्पनं, तस्याप्यसम्भवे "इदं द्यावे" त्यादिपदानां समवेतद्रव्यदेवताफलस्तावकत्वमात्रकल्पनमिति । एवं "ममाऽग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाती" त्यादावपीतिकरणविनियुक्तेऽप्यन्वाधानस्य वर्चःप्रभृत्यानुषङ्गिकफलकल्पनं द्रष्टव्यम् ।

यत्रापि क्रमादिविनियुक्तो मन्त्रः, यथा उपांशुयाजादौ याज्यानुवाक्यारूपः, तत्राऽपि क्रियाप्रकाशनासम्भवे स्वार्थस्य देवतात्वादिना क्रियासम्बन्धकल्पनमिष्टमेव । तत्र त्वेतावान्विशेषः—यत्क्रमादिविनियोगेऽप्ये यागापेक्षितं देवताद्येव क्रि-

---

१. सम्बन्धि प्रस्तरेति. ख. पु. । २. आयुरादिपदैरिति नास्ति. ख.पु.

थासम्बन्धित्वेन कल्प्यते न तु सर्वमन्त्रप्रतिपाद्यम् । एकसम्बन्ध-कल्पनेनाऽपि मन्त्रस्य प्रयोजनाकाङ्क्षानिवृत्तेः, तृतीयादिविनियुक्तवत्सकलमन्त्रकरणत्वानवगमाच्च । प्रकृते तु "उरु प्रथस्वे"-त्यस्य लिङ्गविनियुक्तत्वात्प्रथनक्रियाप्रकाशकत्वेनैव मन्त्रनैराकाङ्क्ष्योपपत्तेस्सूक्तवाकादिवत्सकलस्य करणत्वानवगमेन फलकल्पकत्वानुपपत्तिः ।

न चैवं "ममाग्ने वर्च" इत्यस्यापि इन्धाना इति लिङ्गादेव विनियोगात्फलकल्पकत्वानापत्तिः, इन्धाना इति लिङ्गादग्निधारणार्थत्वावगमेऽप्याद्याग्निधारणमात्रार्थत्वस्य "इति पूर्वमग्निं परिगृह्णाती"ति विधिं विनाऽसिद्धेरितिकरणविनियुक्तत्वेन फलकल्पकत्वोपपत्तेः । न हि(१) पूर्वमिति पदं पूर्वाग्निरूपाहवनीयपरं, गार्हपत्येन्धनेऽस्य विनियोगात् । तत्वेऽपि वा(२) इतिकरणविनियुक्तत्वात्फलकल्पकत्वे न किञ्चिद्बाधकम् । प्रकृते तु लिङ्गविनियुक्तत्वान्न प्रथनफलत्वं यज्ञपतिप्रथनस्य कल्पनीयम् , किन्तु प्रथनफलानुवादकत्वमेव "आयुर्दा अग्ने" इत्यादिव"दुरु ते यज्ञपतिः प्रथता" मित्यस्य द्रष्टव्यम् । तस्मान्मान्त्रवर्णिकफलकल्पनानुपपत्तेरर्थवादालम्बनार्थमुक्तविषया मन्त्रोपादानमर्थवदिति सिद्धम् । यद्यपि च मन्त्रोपादानाभावेऽपि लैङ्गिकविनियोगेन मन्त्रस्य प्राप्तत्वात्तावतैव स्वाभिमतस्तुत्यालम्बनासिद्धिः, तथापि स्पष्टीकरणार्थं मन्त्रोपादानम् ॥ ४९ ॥

---

१. पूर्वपदमिति क. ख. पु. २. इतिकरणविनियुक्तत्वानपगमेन फलकल्पकत्वोपपत्तेश्चेति क. ख. पु.

## अविरुद्धं परम् ॥ १-२-४६ ॥

यत्तु नियतक्रमाम्नानं, तदर्थपरत्वे सति नियमादृष्टकल्पनयाऽप्यविरुद्धम् । आवश्यकी च क्रमनियमाऽदृष्टकल्पना पूर्वपक्षिणोऽपि । क्रमान्यत्वेऽपि (१)मन्त्रोच्चारणे विशेषाऽनवगमेनोच्चारणादेवाऽदृष्टोत्पत्तौ बाधकाभावात् । प्रयाजादिक्रमवदुच्चारणक्रमस्याप्यदृष्टार्थत्वावश्यम्भावात् ॥ ४६ ॥

## संप्रैषे कर्मगर्हानुपालम्भस्संस्कारत्वात् ॥ १-२-४७ ॥

या च "अग्नीदग्नीन्विहरे" ति संप्रैषे बुद्धबोधनासम्भवादभिधानरूपकर्मगर्हाऽभिहिता, सा स्वाध्यायकालीनज्ञानस्य क्षणिकत्वेन नष्टत्वात्स्मरणाख्यसंस्काररूपबोधसम्भवेन नोपालम्भः । प्रैषनियमाच्च नोपायान्तरस्य पूर्वपदार्थसमाप्त्यादेस्स्मारकत्वम् । न चैवं "विभूरसी" त्यादिमन्त्रान्तरस्याऽपि विहरणाङ्गत्वेनाम्नानात्प्रैषानर्थक्यं, मन्त्रद्वयाम्नानबलात्स्मृतिदार्ढ्यहेतुत्वेन प्रैषस्य वा साङ्गाग्निविहरणभावनास्मारकत्वा· "द्विभूरसी" त्यादेश्चाग्निविहरणमात्रस्मारकत्वादग्निविहरणाङ्गभूतमन्त्रस्मारकत्वेनैव प्रैषार्थवत्त्वोपपत्तेः ॥ ४७ ॥

## अभिधानेऽर्थवादः ॥ १-२-४८ ॥

(२)"चत्वारि शृङ्गे" त्यस्य कर्मसमवेतार्थप्रकाशनार्थं चतस्रो होत्राः, त्रीणि सवनानि, द्वे पत्नीयजमानौ,(३) सप्त छन्दां·

---

१. मन्त्राक्षरोच्चारणेति क. पु. २. ऋ. सं. ३. ८. १०.

३. गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीरूपाणि सप्त छन्दांसि ।

सि यस्य सः, त्रिभिर्वेदैर्बद्धः, कामान्वर्षतीति वृषभः, रोरवीति फलार्थं महां कुरुतेत्यावेदयति, महो देवः, मर्त्यान् मनुष्यान्, अधिकारित्वेन स्वीकृतवानिति गौण्या वृत्त्या यागस्तुतिरिति भाष्यकारेण व्याख्यातम् ।

तद्विनियोगाऽननुसारित्वाद्वार्तिककृताऽन्यथा व्याख्यातम् । अयं हि ऋग्वेदे विषुवत्संज्ञके एकाहे अतिदेशप्राप्तेषु होत्रादीनां चतुर्णामाज्यसंज्ञकेषु शस्त्रेषु मध्ये होतुराज्ये 'आग्नेयं होता शंसती' ति वचनादग्निस्तावके विनियुक्तोऽग्निप्रकाशक इत्यविवादम् । विषुवतश्च "सूर्यदेवत्यं ह्येतदह" रिति श्रुतेरादित्यदेवतात्वेन संस्तवात्तेजस्त्वसामान्यादादित्यरूपेणाऽग्नेः स्तुतिरुपवर्ण्यते—चत्वारो दिवसयामाः, त्रयः शीतोष्णवर्षाकालाः, द्वे अयने, सप्त अश्वाः शृङ्गादिरूपेण यस्य सः, सवनत्रये बद्धः, वृष्टिहेतुत्वाद्वृषभः, रोरवीति गर्जितेन, महो देवो मर्त्यानाविवेश उत्साहकारित्वात् । अतश्च यद्यपि स्तोत्रशस्त्राणामदृष्टार्थत्वान्नाऽस्य कर्मसमवेताऽग्निप्रकाशनार्थत्वं, तथाऽपि 'त्रयो अस्य पादा' इति सर्वनाम्ना सन्निहिताऽग्निपरामर्शेनाऽग्निस्तुत्यर्थत्वेनाऽवधारणान्नाऽऽनर्थक्यम् । एवं(१) "ओषधे त्रायस्वैन" मित्यादावप्यचेतने स्तुत्यर्थं चैतन्याध्यारोपेण सम्बोधनरूपत्वमुपपादनीयम् ॥ ४८ ॥

## गुणादविप्रतिषेधस्स्यात् ॥ १-२-४९ ॥

यस्तु(२) "अदितिर्द्यौरदितिरन्तरिक्ष" मित्यादावर्थविप्रतिषेधश्शङ्कितः, स द्युत्वादीनां स्वरूपेणाऽविवक्षितत्वाद्गौण्या वृत्त्या स्तुत्यर्थमेवोपात्तत्वात्, त्वमेव माता त्वमेव पितेत्यादिवत्

---

१. तै. सं. १. २. १.  २. ऋ. सं. १. ८. १६.

दोषाय ॥ ४९ ॥

विद्याऽवचनमसंयोगात् ॥ १-२-५० ॥

यत्तु स्वाध्यायाऽध्ययनकालेऽर्थप्रकाशनानभ्यासरूपं विद्याया अवचनं, तत्कर्मकाल एवाऽर्थाभिधानस्याऽभ्यासमन्तरेणैव सौकर्यादिति द्रष्टव्यम् ॥ ५० ॥

सतः परमविज्ञानम् ॥ १-२-५१ ॥

यदपि परमर्थाज्ञानाख्यं कारणमुक्तं, तत्सत एवाऽर्थस्य प्रमादालस्यादिनाऽविज्ञेयत्वाद्द्रष्टव्यम्। अर्थसत्ताऽवधारणं तु निगमनिरुक्तव्याकरणप्रकरणऋषिदेवतास्मरणादिना यथासम्भवमुपपादनीयम्। तद्यथा—

"अम्यक्सात इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधाति प्रयांसि"॥

इत्यस्यामृचि (१)छन्दोमद्वितीयेऽहनि विनियुक्तायामगस्त्येन

---

१. द्वादशाहे द्वादश दीक्षाः द्वादशोपसदः द्वादश सुत्याः। तत्र द्वादशसु सुत्यासु प्रथमोत्तमे अहनी वर्जयित्वा मध्यगतानां द्वादशानामह्नां कॢप्तिरेवमाम्नाता—'पृष्ठ्यष्षडहस्त्रयश्छन्दोमाः अविवाक्यं दशममह' रिति। अस्याऽयमर्थः—यष्षडहस्स पृष्ठ्यः, पृष्ठस्तोत्रसाधनीभूतरथन्तरादिविशिष्टः। माहेन्द्रस्तोत्राख्यं यत्पृष्ठस्तोत्रं तत्प्रथमदिने रथन्तरेण साम्ना कर्तव्यं, द्वितीयदिने बृहता, तृतीयदिने वैरूपेण, चतुर्थदिने वैराजेन, पञ्चमदिने शाक्वरेण, षष्ठादिने रैवतेनेति यावत्। ततस्त्रयश्छन्दोमाः। यदीयास्तोमाः गायत्रीबृहत्यनुष्टुप्छन्दोगतसङ्ख्याभिर्मीयन्ते ते छन्दोमा इत्युच्यन्ते। गायत्र्यादिसमसङ्ख्याकस्तोमविशिष्टान्यहानीति यावत्। तेषां त्रयाणामह्नां मध्ये यद्द्वितीयमहः अर्थाद्द्वादशाहीयनवमहस्तत्रेत्यर्थः॥

ऋषिणा इन्द्रो मरुत्वान् धनं प्रार्थितः । अत एव (१)"त्वंतून इन्द्र तं रयिं दा" इति वक्ष्यमाणेन सम्बन्धात्प्रथमतृतीयपादयोर्द्वितीयचतुर्थपादयोश्च सम्बन्धादयमर्थोऽवगम्यते—हे इन्द्र ! ते, या ऋष्टिः आयुधविशेषः, अभ्यक् अमा सह अञ्चतीत्यभ्यक् , नित्यं सहचारिणी अतिवल्लभाऽपि सा, त्वत्प्रसादेन अस्मे अस्माकमेव । येऽपि मरुतो मेघाः, सनेमि पुराणं, अभ्वं तोयं, जुनन्ति क्षिपन्ति, तेऽप्यमी त्वत्प्रियसखाः, अस्मे अस्माकमेव । कीदृशी ऋष्टिः ? अतसे शुष्कतृणे, शुशुक्वान दीप्तवान् , अग्निरिव । हि स्म प्रसिद्धौ, चिदित्युपमार्थः । कीदृशाश्च मेघाः ? नेत्युपमार्थे । आपो यथा द्वीपं पुलिनं प्रति, प्रयांसि अन्नाद्यानि, दधति धारयन्ति, तथेति । एवं साधारणद्रव्ये भवानस्माकं, रयिं धनं, दाः देहि, इति ॥ एवं—

"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु" ॥

इत्यस्यामृचि भूतांशेन ऋषिणा जरामरणनिवृत्त्यर्थमाश्विनौ स्तुताविति(२) "आभूतांशो अश्विनोः काममप्राः" इत्युपसंहारादवगम्यते । सृणिः अङ्कुशः, तत्र साधू सृण्यौ, अर्थात्कुञ्जरौ, ताविव जर्भरी जृम्भमाणौ, तुर्फरीतू हिंसितारौ, नितोशनं बधः, तत्कारिणौ नैतोशौ योद्धाराविति यावत् । ताविव, तुर्फरी त्वरमाणौ, पर्फरीका शोभायुक्तौ, उदन्या पिपासा, सा च चातकस्य विवक्षिता । तत्काले प्रावृषि जातौ चातकौ यथा जेमना उदकवन्तौ सन्तौ उदकलाभेन मदेरू मत्तौ भवतः, तथा यौ मदेरू मत्तौ, तौ, मे, जरायु मरायु जरामरणधर्मकं शरीरं, अजरं अमरं च कुरुतमित्यध्याहारः ॥ ५१ ॥

---

१. ऋ. सं. २. ४. ८. २. ऋ. सं. ८. ६. २.

## उक्तश्चाऽनित्यसंयोगः ॥ १-२-५२ ॥

यश्च "किन्ते कृण्वन्ती" त्यत्राऽनित्यसंयोगश्शङ्कितस्स(१) "परन्तु श्रुतिसामान्यमात्र" मित्यत्र परिहृत एव । कीकटाः कृपणाः, प्रमगन्दः कुसीदवृत्तिः, तस्य वेदः धनं, नीचाशाखः षण्डः, तदीयं धनं नैचाशाखं, तच्चोभयमपि (२)न कर्माऽर्हं, तेषां कर्मण्यनधिकारात्; अतस्तदस्माकमाहरेति । एवं हि गौण्या वृत्त्या प्रमगन्दादिशब्दानामर्थे क्रियमाणे सर्वेषां प्रवाहनित्यत्वान्ना-स्त्यनित्यसंयोगः ॥ ५२ ॥

## लिङ्गोपदेशश्च तदर्थवत् ॥ १-२-५३ ॥

किञ्च "आग्नेय्याऽऽग्नीध्रमुपतिष्ठत" इत्यर्थाभिधानलिङ्गेनोप-स्थानोपदेशोऽर्थाभिधानपरत्व एवोपयुज्यते, नोच्चारणार्थत्वे । आग्नेय्येति देवतातद्धितोऽयम् । देवतात्वञ्चाऽत्र प्राधान्येन कर्मजन्यस्तुतिभाक्त्वम्, न त्वभिधीयमानत्वमात्रं, एकदेवत्येऽपि मन्त्रेऽनेकदेवतान्तरपदप्रयोगे सति तद्देवत्यव्यपदेशाभावात् । न च प्राधान्यमर्थपरत्वं विना सम्भवतीत्यर्थपरत्वनिश्चयः ॥५३॥

## ऊहः ॥ १-२-५४ ॥

तथा ऊहदर्शनं "न माता वर्द्धते न पिते" त्यादिकम-प्यर्थपरत्व एवाऽर्थवत् । न ह्यनेन(३)पितृमात्रादीनां स्थौल्यादि-रूपा वृद्धिः प्रतिषिध्यते, प्रत्यक्षविरोधात् । अतश्शब्दवृद्धिः प्रतिषेद्धव्या । सोऽपि च न वर्णान्तरोपजननेन, न वा स्थूलो-च्चारणेन । वर्णान्तरोपजनने पदान्तरत्वापत्तेः प्रकृतिप्राप्त-

---

१. जै. सू. १. १. ३१. २. अकर्माऽर्हमिति. ख. पु.
३. पशुमात्रादीति. ख. पु.

दवृद्ध्यसम्भवात् । स्थूलोच्चारणस्य च नादधर्मत्वेन शब्दवृत्ति-त्वाऽसम्भवात् । अतो द्विवचनबहुवचनान्तत्वेनाऽर्थगताधिक्य-द्वारा शब्दवृद्धिरूहात्मिका तेन वचनेन प्रतिषिध्यत इति वक्त-व्यम् । प्रतिषेधश्च प्राप्तिसापेक्षः । प्राप्तिश्च पशुगणे सर्वत्र मा-त्रादीनामभिधाने कर्तव्येऽवकल्पते नाऽन्यथा । अतश्चाऽयं प्र-तिषेधः यथाऽध्रिगुप्रैषस्याऽर्थपरत्वे लिङ्गं तथाऽन्यमन्त्राणामप्यर्थ-र्थपरत्वे । सत्यां हि सर्वत्राऽर्थपरत्वेन ऊहप्राप्तौ क्वचित्तन्निषेधोऽव-कल्पते नाऽन्यथा ।

यद्यपि च नाऽयं निषेधविधिः, इडानिगदगतयज्ञपतिशब्द-वन्मात्रादीनां पशुविशेषणानां (१)परार्थत्वेनोहाविषयत्वात् । (२)अर्थपरत्वेऽपि च पशुभेदेऽपि यत्रैकमात्रादिजन्यत्वं तत्रोह-स्याऽप्रसक्तत्वादेव निषेधानुपपत्तिः । यत्र तु मात्रादीनां भेद-स्तत्राऽपि मातृत्वादीनां स्त्रीत्वादिसमानाधिकरणजनकत्वादिरू-पाणां ससम्बन्धिकत्वात्प्रतिसम्बन्धिपशुभेदप्रतीत्यैव मात्रादि भेदप्रतीतिसिद्धेर्न मात्रादिभेदप्रतीतिसिध्यर्थमूहप्रसक्तिः, तथा ऽपि न्यायसिद्धानूहानुवाद एवाऽन्यत्र मन्त्रान्तरे न्यायसि द्धोहोपोद्बलकत्वादर्थपरत्वाविवक्षायां लिङ्गमित्यविरोधः । तथा "यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्ये" ति वचनमपि वाय्वव्यादिपशौ ऊहनिषेधकमन्यत्र ऊहप्राप्तलिङ्गमुदाहृतं वार्ति-ककृता । इदं हि (३)"त्वं ह्यग्ने प्रथमो मनोते" ति मनोता सूक्तस्याऽग्नीषोमीयाद्वायव्यादिपशावतिदेशेन प्राप्तस्योहप्रसक्तौ आग्नेय्येव कार्येत्येवमूहप्रतिषेधार्थं वचनम् ।

वस्तुतस्तु अस्य सूक्तस्य केवलाग्निप्रकाशकस्योभयदेव-

---

१. अर्थपरत्वेनेति. ख. पु. २. अपाराथ्येऽपीति. क. ख. पु.

३. ऋ. सं. ४. ४. ३५.

त्येऽग्नीषोमीये लिङ्गेनाऽविनियोगादुत्कर्षे प्राप्ते, ज्योतिष्टोमप्रकरणबहिर्भूतकेवलाऽग्निदेवत्ये पशुयागे च सामान्यसम्बन्धबोधकप्रमाणाऽभावेनोत्कर्षाऽयोगेऽपि ज्योतिष्टोमप्रकरणादस्य सूक्तस्य केवलज्योतिष्टोमसम्बन्धावगतेः, साक्षाच्च(१) 'मनोतायै हविषोऽवदीयमानस्याऽनुब्रूही'ति प्रैषवशेनाऽवदीयमानपश्वाख्यद्रव्यसम्बन्धित्वेनाऽवगतस्य मनोतासूक्तस्य ज्योतिष्टोमसम्बन्धाऽयोगादानर्थक्यतदङ्गन्यायेन ज्योतिष्टोमाङ्गभूतकेवलाग्निदेवत्यसवनीयपशुयाग उत्कर्षः प्रसक्तः, तन्निवृत्त्यर्थत्वेन प्रकृतावैतस्य वचनस्योत्कर्षनिवृत्त्यर्थत्वेनोपपत्तौ न वायव्यादिपशावप्रसक्तऋगूहनिवृत्त्यर्थत्वकल्पनमुपपात्तिमत् । न हि मनोतास्थाऽग्निशब्दस्यैव ऐन्द्रीन्यायेनाऽग्नीषोमीयदेवतालक्षकत्वात्प्रकृतावन्वायनिगदस्य वायव्यादिपशावूहप्रसक्तिरस्ति ।

नन्वेतस्याऽग्निपदस्य प्रकृताऽपूर्वसाधनीभूतदेवताप्रथमाधिष्ठानप्रकाशकत्वेन मुख्यार्थत्वोपपत्तौ ऐन्द्रीन्यायानुपपत्तेरस्यैव सोमापौष्णयागादौ प्रथमाधिष्ठानप्रकाशनार्थमूहप्रसक्तिः, न च "पूयति वा एतदृचोऽक्षरं यदेनदूहती"ति ऋगक्षरोहनिषेधादप्रसक्तिः, अक्षरोहनिषेधेऽपि प्राकृत्या ऋचोऽसमर्थत्वेन निवृत्तायाः प्रथमाधिष्ठानप्रकाशनरूपोपकारस्य जनकापेक्षायां ऋगन्तरागमरूपस्योहस्य दुर्निवारत्वादिति चेन्न, अग्निपदस्य मनोतापदसमानाधिकरणत्वेनैन्द्रीन्यायेन प्रकृतापूर्वसाधनीभूतदेवतालक्षकस्यैवाऽङ्गीकारात् । मनोतापदं हि 'मनोतायै हविषोऽवदीयमानस्ये'ति प्रैषे अवदीयमानयागीयपश्वाख्यद्रव्योद्देश्यत्वरूपदेवतात्ववाचिचतुर्थीयोगाद्देवतापरम् । तदुद्देशेन च मनोतानुवचनस्य प्रैषबलेन विध्यवगतेर्मनोतामन्त्रो देवताप्रकाशनार्थं

---

१. आप. श्रौ. ७. २५. १.

एव । अतस्तत्समानाधिकरणमग्निपदमपि मन्त्रे देवतालक्षणार्थमेव । लक्षणाऽपि च नाऽन्यधिष्ठानकत्वसम्बन्धेन, यतो धान्यशब्दवद्वायव्यादिपशौ सम्बन्धाभावादूहः प्रसज्येत । तस्य त्वव्याप्यवृत्तित्वाद्व्याप्यवृत्तिसम्बन्धेन लक्षणासम्भवे चाऽव्याप्यवृत्तिसम्बन्धेन तद्योगाद् 'ग्निमुखा वै देवा' इत्यर्थवादानुसारेणाऽग्निमुखत्वसम्बन्धेन लक्षणाश्रयणम् । अतश्च तस्य वायव्यादिपशौ सम्भवेन "तस्यै शृत" मित्यादिवदनूहः । अत एवाऽऽग्नेय्येवेत्यत्राऽग्निपदलक्ष्यदेवतातद्धितोपपत्तिः । विस्तरेण चैतद्दशमे(१) वक्ष्यते । अतोऽन्यात्यनिगदत्वादूहाप्रसक्तेरलिङ्गमिदम् ।

एवं 'छागस्य वपाया' मिति मन्त्रस्य गोपशावतिदेशप्राप्तस्याऽनेकैर्गोपर्यायैरूहप्रसक्तौ 'उस्राया वपाया' इति मन्त्रविशेषाम्नानं नियममात्रकरणलाघवायाऽर्थपरत्वमेव ज्ञापयति ॥५४॥

## विधिशब्दश्च ॥ १-२-५५ ॥

ब्राह्मणाख्यविधिशब्दश्च 'शतं हिमा' इति मन्त्रगतहिमाशब्दव्याख्यार्थः 'शतं वर्षाणी' त्याद्यर्थवादरूपो मन्त्राणामर्थप्रत्यायनार्थत्व एवाऽवकल्पते, नाऽन्यथा । प्रयोजनं तु—

(२)अग्निहोत्रपदं नाम, (३)आधारे यागकल्पनम् ।

---

१. पू. मी. १०. ४. १४.

२. 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहे' ति मन्त्रस्य विवक्षितार्थत्वे सत्येवा 'ग्निहोत्रं जुहोती' त्यत्राऽग्निहोत्रपदस्य कर्मनामधेयत्वं सिध्यति । एतच्च १-४-४ अधिकरणे विचारितम् ॥

३. 'इन्द्र ऊर्ध्वोऽध्वर' इत्याऽऽघाराङ्गत्वेन विहितेन मन्त्रेण देवतायाः प्रापितत्वाद्द्रव्यदेवतासम्बन्धान्यथाऽनुपपत्त्या यागकल्पने द्वितीयोक्तं ( २-२-५ ) सङ्गच्छते ॥

(१)मुख्यार्थे विनियोगोऽयं (२)आमिक्षा पय एव च ॥
(३)मन्त्रक्रमबलीयस्त्वं (४)छागस्य नियमस्तथा ।
(५)अग्नौ पृष्ठपदं मन्त्रलक्षणार्थं वदिष्यते ॥
(६)अभिमर्शनमन्त्राणां विकल्पस्सौर्य इष्यते ।
(७)ऊहोऽथ नवमे यस्तु(८)आघारे मन्त्रबाधनम् ॥

---

१. मन्त्राणामर्थपरत्वे सत्येव 'बर्हिर्देवसदनं दामि' त्यादिमन्त्राणां मुख्ये कुशलवनरूप एवार्थे विनियोगः न पुनरुलपराजिलवनादाविति तार्तीयीको निर्णयः ( ३-२-१ ) सङ्गतो भवति ॥

२. 'जुषन्तां युज्यं पयः' इति मन्त्रस्याऽर्थप्रकाशकत्वे सत्येव तत्प्रतिपादितं पय एवाऽऽमिक्षापदवाच्यं न तु दध्यपीति चातुर्थिको निर्णयः ( ४-१-९ ) उपपद्यते ॥

३. आग्नेयाऽग्नीषोमीययोः ब्राह्मणपाठक्रमस्याऽन्यथात्वेऽपि मन्त्रपाठक्रमादेव तयोः क्रमः । ब्राह्मणपाठापेक्षया अन्तरङ्गत्वेन मन्त्रपाठस्य प्राबल्यादिति पाञ्चमिको ( ५-१-९ ) निर्णयः मन्त्राणां विवक्षितार्थत्व एव घटते ॥

४. एवमग्नीषोमीयपशुयागाङ्गभूतमन्त्रे 'छागस्य वपाया मेदस' इत्यस्मिञ्छागपदश्रवणाच्छागीयः पशुरज एवेति निर्णीतं षष्ठाष्टमान्स्याधिकरणे ॥

५. पृष्ठैरुपातिष्ठत' इति चयनप्रकरणे श्रुते वाक्ये पृष्ठशब्दः पृष्ठस्तोत्रसाधनरथन्तराद्याधारभूतऋग्लक्षक इत्युक्तं सप्तमतृतीयाऽन्त्याधिकरणे ॥

६. 'चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावास्या' मिति पौर्णमास्यमावास्याकालिकयागीयहविरभिमर्शनाङ्गत्वेन विहितयोः 'पृथिवी होते' त्यादिमन्त्रयोः सौर्येष्टौ विकल्पेन प्राप्तिः । तस्योभयकालिकाभेयद्वयविकृतित्वादित्युक्तमष्टमप्रथमषष्ठे ॥

७. नवमे मन्त्राणां प्रकृतौ पठितानां प्राकृतकार्यभिन्नकार्यप्रकाशकत्वेन विकृतावूह उक्तः ॥

८. अवभृथपशौ 'हिरण्यगर्भस्समवर्तताऽग्र इत्याघारमाघारय' तीति विहितस्य वैकल्पिकमन्त्रस्य प्राकृते 'ऊर्ध्वोऽध्वर' इति मन्त्रबाधकत्वमुक्तं दशमतृतीयद्वितीयाधिकरणे ॥

(१)मन्त्रावृत्तिर्दीक्षितस्याऽभिवृष्ट्यादिदर्शने ।
(२)तथा करणमन्त्राणां विकल्पो द्वादशेऽपि यः ॥
सर्वमेतत्तदा सिध्येन्मन्त्रार्थश्चेद्विवक्षितः ।
तस्मादर्थप्रत्यायनार्था मन्त्रा इति सिद्धं प्रामाण्यम् ॥९९॥

इति मन्त्राधिकरणम् ॥ ४ ॥

मीमांसाम्बुनिधिं प्रमथ्य विविधैर्न्यायोच्चयैर्निर्जरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥
श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या प्रथमेऽध्याये द्वितीयाङ्घ्रेः ॥

इति पूर्वोत्तरमीमांसापारावारपारीणश्रीरुद्रदेवसूनोः
खण्डदेवस्य कृतौ मीमांसाकौस्तुभे प्रथमाध्याये
द्वितीयः पादः समाप्तः ॥

---

१. दीक्षितस्य प्रयाणमध्ये वृष्ट्यादिसम्भवे पठनीयत्वेन विहितस्य मन्त्रस्य प्रतिनिमित्तमावृत्तिरित्युक्तमेकादशे ॥

२. 'भगो वां विभजत्वि' त्यादिकरणमन्त्राणां व्रीहियववद्विकल्प इति द्वादशतृतीयत्रयोदशाऽधिकरणे निर्णीतम् ।

सर्वमेतन्मन्त्राणां विवक्षितार्थत्व एव साधु सङ्गच्छते अविवक्षितार्थत्वे तु प्रतिपादनीयस्यैवाऽर्थस्याऽभावात्सर्वमिदं दत्तजलाञ्जलि स्यादिति भावः ॥

श्रीगणेशाय नमः ।

श्रीखण्डदेवविरचितः

# मीमांसाकौस्तुभः ।

## प्रथमाध्यायस्य तृतीयः पादः । ( स्मृतिपादः )

### (१)स्मृत्यधिकरणम् ।

**सू–धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥**

**१–३–१ (पू.)**

अत्र मन्वादिस्मृतीनां वैदिकाचाराणां च धर्माधर्मयोः प्रामाण्यमस्ति न वेति विचारः । यद्यपि च नेदं वेदप्रामाण्यनिरूपणं, तथापि (१)"अथाऽतो धर्मजिज्ञासा"इत्यत्र धर्मस्वरूपादिजिज्ञासावत् धर्माधर्मप्रमाणजिज्ञासाया अपि प्रथमाध्यायार्थत्वेन प्रतिज्ञातत्वात् स्मृत्याचारयोरपि धर्माधर्मप्रामाण्यनिरूपणं प्रथमाध्याये नासंगतम् । नचैवं जिज्ञासासूत्रेणैव स्मृत्याचारयोरपि प्रामाण्यप्रतिज्ञाने अथातःशब्दोक्तवेदाध्ययनानन्तर्यहेतुत्वयोस्तत्रानन्वयः, अथातः शब्देन "शौचाचारांश्च शिक्षये" दित्यादिवचनबलेन सांगवेदाध्ययनस्येव स्मृत्याचाराध्ययनस्यापि गुरुमुखावगमरूपस्य कृतत्वेन स्मृत्याचारप्रामाण्ये तदानन्तर्यहेतुत्वयोरप्यविशेषेणोक्तत्वात् । (२)"चोदनालक्षणोऽर्थो धर्मः" इति सूत्रं तु प्राधान्यात्प्रथमपादव्युत्पाद्यविधिनिषेधरूपचोदनाप्रामाण्यप्रतिज्ञापरं । चोदनाशब्दस्य (३)"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"इति वार्तिकस्वारस्येन विधिनिषेधमात्रपरत्वात् । न च चोदनाशब्दस्य वेदपरत्वा-

---

१. जै सू. १–१–१, २. जै. सू. १–१–२. ३. श्लो. वा.

गीकारेण प्रथमाध्यायार्थप्रतिज्ञापरं; स्मृत्याचारप्रामाण्यनिरूपणस्य प्रथमाध्याये असंगतिप्रसङ्गादित्युक्तं तर्कचरणे । तेनाध्यायसंगतिः सिद्धा ।

पादसंगतिस्तु वेदातिरिक्तधर्माधर्मप्रमाणनिरूपणस्य पादार्थत्वात्सुलभैव ।

अनन्तरसंगतिस्तु स्मृत्याचारयोर्विधिनिषेधमूलकत्ववत् "(१)महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्" इत्यादिस्मृतेः "तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाईत्युक्षाणं वेहतं वा क्षदन्त" इत्यर्थवादमूलकत्वस्य, (२)"न पचेदन्नमात्मने" इत्यादिस्मृतेश्च (३)"मोघमन्नं विन्दते अप्रचेताः" इत्यादिमन्त्रमूलकत्वस्यापि दर्शनेन तत्प्रामाण्योपजीव्यत्वरूपा । अत एव कस्याश्चिदपि स्मृतेर्नामधेयमूलत्वादर्शनेन ततः प्रागारंभोऽपि नानुचितः ।

तत्र पूर्वः पक्षः—अप्रमाणं स्मृतयः आचाराश्च । तथाहि । स्मृतयस्तावत् दृढकर्तृस्मरणेन पौरुषेयत्वादवश्यं तत्प्रणेतृभिः अष्टकास्वर्गयोः साध्यसाधनभावं केनचित् प्रमाणेनावधार्य प्रणीता इत्यविवादम् । साध्यसाधनभावावधारणं च न तावत्प्रत्यक्षादिना; तेषां धर्माधर्मयोरप्रवृत्तेः साधितत्वात् । शब्देनापि कृतकेन वा स्मृतिरूपेण स्यात् नित्येन वा? । नाद्यः । स्मृत्यन्तरमूलकत्वस्य शिष्टाकोपाधिकरणे निराकरिष्यमाणत्वात् । नापि नित्येन शब्देन । सोऽपि च प्रत्यक्षेणावगम्यते? प्रमाणान्तरेण वा ? न तावदाद्यः, अनुपलंभात् । न चास्मदादिभिरनुपलंभेऽपि मन्वादिभिः प्रत्यक्षपाठेनोपलब्धः, इदानीं च पुरुषप्रमादादुत्सन्नः, देशान्तरे वा कैश्चित्पठ्यमानोऽपि नास्माभिरुपलभ्यते, अस्माभिरपि वा पठ्यमानोऽपि परप्रकरणादिपठितत्वात् नास्माभिः स्मृतिमूलत्वेन ज्ञायते इति यथासंभवं कल्पनोपपत्तेः न नित्यशब्दासद्भावनिश्चय इति वाच्य-

---

१. या. स्मृ. अ. १. १०९. २. या. स्मृ. अ. १. १०४.
३. तै. ब्रा. २-८-८-३.

म् । मन्वादिस्मृतेर्भ्रान्त्यादिमूलकत्वेनाप्युपपत्तावेतादृशकल्पनायां प्रमाणाभावात्; (१)अन्यथा शाक्यादिस्मृतीनामपि प्रामाण्यापत्तिः । नच—वैदिकपरिग्रहेण मन्वादिस्मृतीनां श्रुतिमूलत्वेऽवगते अनुपलब्धिविरोधपरिहारमात्रार्थत्वेनोत्सन्नत्वकल्पना; न शाक्यादिग्रन्थानां तदापत्तिः । स्वरूपेण वर्णानां नित्यत्वेऽपि क्रमविशेषनिमित्तत्वाद्वेदत्वस्य क्रमस्य नित्यविभुवर्णेषु स्वरूपेणावस्थानानुपपत्तेः उच्चारणद्वारकत्वेन तन्निष्ठत्वांगीकरणादुच्चारणस्य च क्षणिकत्वेनानित्यत्वात्तन्नित्यत्वेन वेदनित्यत्वानुपपत्तेरविच्छिन्नाध्ययनेनैव वेदनित्यत्वस्य प्रथमपादे स्थापितत्वात्स्मृतिमूलश्रुतीनां अध्ययनविच्छेदे अनित्यत्वप्रसंगादुत्सन्नत्वकल्पनानुपपत्तेः ।

किंचोत्सादोऽपि किं एकैकस्य स्मृतिमूलभूतवाक्यस्य कल्प्यते ? उत स्मृतिमूलश्रुतिवाक्यसंघातात्मकशाखारूपस्य वा ? । नाद्यः, यात्रामात्रार्थानामपि अध्येतॄणां अनेकस्मृतिमूलश्रुतिवाक्यत्यागकल्पनानुपपत्तेः । यत्तु—सर्वानुक्रमणीकारस्य "जातवेदसमेके" इत्यादिना (२)वाक्योत्सादस्मरणं तद्विशिष्टक्रमकस्यैव स्वाध्यायपदवाच्यत्वात् तदध्ययनाभावे सर्वकर्मस्वनधिकारापत्तेर्निर्मूलमेव । नान्त्यः; 'एकविंशाध्वसंयुक्तमृग्वेदमृषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताधिकम् । नवधाथर्वणोऽन्येतु प्राहुः पंचदशाध्वकम् ॥' इति षड्गुरुशिष्येण शाखापरिगणनात् तासां च सर्वासामेकस्मिन् देशे अपाठेऽपि देशान्तरे पाठसद्भावादुत्सादकल्पनानुपपत्तेः । अतो न तावदुत्सन्नश्रुतिमूलताम् ।

नापि देशान्तरपठ्यमानश्रुतिमूलत्वम्, तथा सति वेदरक्षा-

---

१. किञ्चैवमुत्सन्नशब्दमूलत्वकल्पने शाक्यादिग्रन्थानामपि तथात्वकल्पनया प्रामाण्यापत्तिः । इति पा.

२. क्योच्छेद. इति पा.

र्थं प्रवृत्तैर्मन्वादिभिः ता एव सर्वपुरुषान्प्रतिप्रचारार्थमध्याप्येरन्, न तु (१)विच्छेदकारिण्यः स्मृतयः प्रणीयेरन्निति स्मृतिप्रणयनानुपपत्तिः । अत एव परप्रकरणादिपठितानां स्मृतीनां श्रुतिमूलत्वकल्पनाप्यपास्ता । नच-परप्रकरणस्थत्वादिज्ञानार्थमेव स्मृतिप्रणयनमिति-वाच्यं, परप्रकरणपठितस्य (२)"मलवद्वाससा न संवदेत" इत्यादेः पुरुषार्थत्वस्य पुरुषार्थप्रायपठितस्य च सामिधेनीसाहचर्यादेः क्रत्वर्थत्वस्य "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इति विध्यन्तरशेषस्यापि च विधिपरत्वस्य मीमांसान्यायेन सिद्धिवत् अन्यत्रापि परप्रकरणपठितत्वादिज्ञानोपपत्तेः स्मृतिप्रणयनवैयर्थ्यात् । तस्मान्न तावन्मन्वादिभिः प्रत्यक्षेण स्मृतिमूलभूताः श्रुतीरुपलभ्य स्मृतयः प्रणीताः ।

नाप्यनुमानेन । लिङ्गादिकल्प्या इव श्रुतीरुपलभ्य श्रुत्यनुमापकस्य लिङ्गादिवत्कस्यचिद्धेतोरभावात् । न च-स्मृत्यन्तरमेव तदनुमापकम् । पौरुषेयस्य स्मृत्यन्तरस्य सामान्यतो यत्किंचिन्मूलप्रमाणव्याप्तस्यापि श्रुत्यैकान्तिकत्वाभावेन तदननुमापकत्वात् ।

किंचैवं स्मृत्यन्तरकारस्य स्वस्मृतिमूलभूतस्य श्रुत्यनुमानहेतोरभावात् ततोऽपि स्मृत्यन्तरस्यानुमापकत्वाङ्गीकारे अनवस्थानादन्धपरंपरापत्तिः ।

न च-यथा बीजांकुरस्थले नानवस्था, यथा वा प्रत्यक्षश्रुतिपाठस्यैकपुरुषगतस्य चोदनायाथात्म्यनिश्चायकत्वादाविच्छिन्नपारंपर्यस्य निश्चायकत्वेऽप्यनादित्वान्नानवस्था; एवं स्मृतिपारंपर्येणाप्यनुमाने नानवस्था दोषायेति—वाच्यम् । अनवस्था हि उत्पत्तिप्रतिबन्धेन वा ज्ञप्तिप्रतिबन्धेन वा दोषः । तत्र बीजांकुरयोर्ज्ञप्तिप्रतिबन्धस्यानाशंक्यत्वादुत्पत्तिः प्रतिबध्येत, सापि च व्यक्तिभेदान्न प्रतिबध्यते । वेदस्य नित्यतयात्रापि चोत्पत्तिप्रतिबन्ध-

१. वेदोच्छेद. इति पा. २. तै. सं. २-५-१५.

स्तावदनाशंक्य एव । ज्ञप्तिप्रतिबन्धस्तु प्रत्यक्षेणैव श्रुतिनिश्चयादना-दित्वस्य चाप्रामाण्यशंकापनोदनमात्रे व्यापारादनाशंक्य एव । स्मृतिप्रणयनस्य तु स्मृत्यर्थज्ञानाधीनत्वात्तत्रैवानन्तरस्था प्रतिब-न्धिकेति वैषम्यम् । अत एव लिङ्गादीनामपौरुषेयत्वेन श्रुतिकल्प-कत्वाविरोधाद्वैषम्यं द्रष्टव्यम् । तस्मान्नानुमानेन मूलश्रुत्युपलम्भः ।

एवमाक्षेपकाभावादर्थापत्तिरपि निराकार्या । उपमानं तु अदृष्टे अदृष्टसदृशे वा न प्रवर्तत इत्यनाशंक्यमेव ।

आगमोऽपि श्रुतिमूलत्वविषयः नित्यो वा स्यात् कृतको वा ? नाद्यः; मूलश्रुत्यनुपलंभात् । नित्यस्यानित्यस्मृतिमूलप्रतिपादना-शक्तेश्च । नान्त्यः; कृतकस्य स्मृतिवदेवाविश्रंभणीयत्वात् । न च (१)"धन्वन्निव प्रपा असि" त्यादिमन्त्रमूलकत्वस्य "प्रपा प्रव-र्तयितव्या' इत्यादिस्मृतिषु दर्शनात् मन्त्रादीनां वेदमूलार्थाभि-धायित्वेन सत्यत्वादित्वावगतेस्तद्दृष्टान्तेनान्यस्मिन्नपि कृतके वि-श्वासोपपत्तिरिति वाच्यम् । मन्त्रादीनां विधिशून्यत्वेन स्वतः स्मृ-तिमूलत्वायोगात् ।

न च—"उपरि हि देवेभ्यो धारयती"त्यादेरिव मन्त्रादीनां विधिशून्यानामप्यप्राप्तार्थानां स्वतन्त्रविधिकल्पकत्वात्प्रपादिस्मृती-नां मन्त्रकल्प्यविधिमूलत्वोपपत्तिरिति वाच्यम् । "उपरि हि देवेभ्य"इतिवत् धन्वन्निवेत्यादौ प्रपाकर्तव्यतानुवादाभावात् सिद्ध-वत्प्रपामात्रानुवादस्य च यदृच्छासिद्धवत्प्रपाविषयत्वेनाप्युपपत्तेः विध्यकल्पकत्वात् । अतो भावगोचरप्रमाणपंचकाप्रवृत्तेः योग्या-नुपलब्ध्या श्रुत्यभावनिश्चयः । न च—श्रुतिमूलत्वासम्भवेऽपि योगजधर्मवत्वेनाष्टकास्वर्गसाध्यसाधनभावानुभवः; योगजधर्मस्य सर्वज्ञवादे निराकरणात्, (२)योगजधर्मेण खपुष्पादिवत्प्रमा-

---

१. तै. सं. २-५-१२.

२. सत्वेऽपि वा तेन प्रमाणान्तरसिद्धपदार्थविषय एवानुभवजननाच्च, अन्यथा तेन खपुष्पस्यापि प्रत्यक्षतापत्तिः । इति पा०

जान्तराविषयीभूतार्थग्रहणानुपपत्तेश्च ।

किंचाप्तोक्तजन्यव्यवहारेषु प्रामाण्यहेतुभूतस्य सन्मूलत्वस्य स्वस्मरणेन व्याप्तत्वात् व्यापकस्मरणाभावे व्याप्यसन्मूलत्वस्याभावः प्रसिद्ध एव । तस्मात्प्रमाणमूलत्वासंभवात् भ्रान्तिप्रतारणमूलत्वमेवैषां स्मृतिवाक्यानां ।

एवमाचारानुष्ठानस्यापि ज्ञानपूर्वकत्वात् पूर्वानुष्ठातॄणां ज्ञानकारणजिज्ञासायां प्रमाणमूलत्वासंभवात् भ्रान्त्यादिमूलत्वमेवावसीयते ।

सूत्रं तु—धर्मस्य चोदनारूपशब्दमूलत्वात् अशब्दं अनुपलभ्यमानशब्दकं स्मृत्यादि सन्मूलानपेक्षं भ्रान्त्यादिमूलकं अप्रमाणं स्यादिति व्याख्येयम् । अनपेक्ष्यं इति पाठे अनादरणीयमित्यर्थः ।

## सू—अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात ॥
## १–३–२(सि)

नैतदेवम्, अदृष्टकल्पना हि या दृष्टाविरोधिनी लघुभूता च सा प्रमाणं; तदत्रावश्यं कल्प्ये कस्मिंश्चित्स्मृतिमूले यदि तावद्भ्रान्तिः कल्प्यते ततः अष्टकादिवाक्येभ्यो धर्मत्वावगतिर्दृश्यमाना विरुध्येत । सर्वाभ्युपेततत्प्रमाण्यबाधश्च । अद्ययावच्च मन्वादिभ्रान्तेरनुवृत्तिः, मन्वादेश्च स्वग्रंथग्राहिणः पुरुषान्प्रति स्वभ्रान्तिपरिहारोपन्यास इत्यनेकदृष्टविरोधिनी चादृष्टकल्पना । विप्रलंभेऽपि आद्यदोषद्वयं तदेव; (१)अन्यच्च विप्रलंभः, तत्प्रयोजनं, लोकस्य च तत्र भ्रान्तिः, तस्याश्चेयन्तं कालमनुवृत्तिः, इत्यनेकादृष्टकल्पनम् । श्रुतिरूपमूलकल्पने तु(२) न तत्कल्पनमिति लाघवम् सकलशिष्टप्रामाण्याभ्युपगमादयस्तु तदनुगुणा एवेति न विरोधशंकापि । संभाव्यते च मन्वादीनां श्रुत्युपलंभः, त्रैवर्णिकत्वात् ।

१. तदवस्थमेव इति पा० २. तत्कल्पनमात्रं इति पा०

अतो दृष्टसकलत्रैवर्णिकशिष्टपरिग्रहान्यथानुपपत्तिप्रसूतया दृष्टार्थापत्त्या श्रुतिमूलत्वमेव स्मृत्याचारयोः कल्प्यते, न तु भ्रान्त्यादिमूलत्वम् ।

केचित्तु—साक्षात्प्रामाण्ये श्रुतिमूलत्वकल्पनायां चानुमानं प्रमाणमित्याहुः, तन्न; प्रामाण्ये तावत् मन्वादिस्मृतिर्धर्मे प्रमाणं, वेदार्थानुष्ठातृभिरनुष्ठीयमानार्थत्वात्; वेदवत् । श्रुतिमूलत्वेऽपि स्मृत्याचारौ वेदमूलौ, वेदवादिकर्तृत्वात्, प्रत्यक्षवेदमूलकस्मृत्याचारवत् इति । तत्र अर्थकामानुसारिस्मृत्याचारेष्वनैकांत्यात्, आद्यानुमाने अपौरुषेयवाक्यस्वरूपस्योपाधेः सत्त्वाच्च, द्वितीयानुमानदृष्टान्ते चास्मदादिभिरवगम्यमानवेदमूलत्वेनैव हेतोः व्याप्तिग्रहात्साध्यधर्मिविशेषसाधनाद्विरुद्धत्वम् । अतः उक्तरीत्या अर्थापत्तिरेव श्रुतिकल्पनायां प्रमाणम् । श्रुतिश्च प्रत्यक्षपाठेनैवावधारिता मन्वादिभिः । नचैवं—अस्मदादिभिरप्युपलभ्येत, प्रलीनश्रुतिमूलकत्वनिराकरणादिति वाच्यम्, शाखान्तराधिकरणे एकशाखाध्ययनस्यैव स्थापयिष्यमाणत्वेन शाखान्तरगतश्रुतीनामुपलंभायोग्यत्वात् । अध्ययनं विनैवोपायान्तरेणावधारणेऽपि तत्तद्देशीयपुरुषाधीतशाखानां प्रमादालस्यादियुक्तैः पुरुषैः तद्देशागमनेन श्रोतुमप्यशक्तेरयोग्यत्वम् ॥ एकशाखाधीतानामपि च श्रुतीनां क्रतुप्रकरणगतानां तद्धर्मत्वं बाधित्वा पुरुषधर्मत्वस्य, पुरुषधर्माधिकारगतानां च तद्धर्मत्वबाधेन क्रतुधर्मत्वस्य मन्त्रार्थवादादिकल्प्यविधीनां चेदानींतनैः पुरुषैः निर्णेतुमशक्तेः स्मृतिमूलत्वावधारणेऽयोग्यत्वम् ।

नचेदानीन्तनानामपि न्यायेनावधारणसंभवात्तदर्थं स्मृतिप्रणयनवैयर्थ्यम् । इदानींतनैर्न्यायस्यापि विवेक्तुमशक्यत्वात् । मन्वादीनां तु संभवति विदितसकलवेदार्थतत्त्वानां न्यायनिर्णायकत्वमिति अस्मदाद्यनुग्रहार्थं स्मृतिप्रणयनमित्यर्थवत्त्वोपपत्तिः । नचैवं—वेदवाक्यान्येव किमर्थं नोद्धृत्य प्रवर्तितानि ? येन निर्मूलत्वाशांकापि तावन्न

स्यादिति वाच्यम्; वेदवाक्यप्रवर्तने क्रमान्यत्वेन स्वाध्यायनाशापत्तेः। नचावश्यं मन्वादिभिः शाखान्तरवाक्यान्येवावधारितानीति नियमः समस्ति; येनोक्तृत्याध्याप्येरन्, तदध्यायिपुरुषेभ्योऽर्थमात्रं च श्रुत्वाऽपि स्मृतिप्रणयनोपपत्तेः।

यत्तु अवश्यसमर्पणीयस्य मूलस्यासमर्पणादभावनिश्चय इति; तन्न (१)"वेदोऽखिलो धर्ममूलं (२)"स सर्वोऽभिहितो वेदे"इति सामान्यतो वेदाख्यमूलसमर्पणात् संप्रदायविनाशभीत्या च विशेषतोऽसमर्पणादसाधकम्। अतः सिद्धं प्रत्यक्षपठितश्रुतिमूलत्वेनैव स्मृत्याचारयोः प्रामाण्यम्, तथाचाष्टकादिस्मृतिमूलं लिंगमपि "यां जनाः प्रतिनंदन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमंगली॥ अष्टकायै सुराधसे स्वाहा" इति अष्टकादेवताप्रकाशकमन्त्ररूपम्, 'एषा वै संवत्सरस्य पत्नी यदेकाष्टका' इत्यर्थवादरूपं च वेदे प्रत्यक्षेणैव दृश्यते। तथा प्रपादिस्मृतिमूलं 'धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन्' इत्ययं मंत्रो यथा धन्वनि निरुदके कृताः प्रपाः परेषामुपकुर्वन्ति तथा त्वमित्येवमग्निस्तुतिपरोऽपि सिद्धवत्प्रपासंस्तवः तस्याश्च पारार्थ्यं गमयन् लिंगम्।

तथा तडागस्मृतेः (३)"स्थलयोदकं परिगृह्णन्ति" इत्ययमर्थवादो लिंगम्। अत्र हि (४)"जानपदकुण्डगोणस्थल"इत्यादिसूत्रेण अकृत्रिमे स्थले ङीप्प्रत्ययविधानात्कृत्रिमे सामान्यविहितटाप्प्रत्ययात्प्रतीयते स्थलाशब्दस्य कृत्रिमतडागवाचित्वम्।

यत्त्वत्र भाष्यकारेण प्रपातडागादिस्मृतीनां लिंगदर्शनस्वरसेन दृष्टविधया परोपकारार्थत्वेन प्रामाण्यम्, न तु धर्मजनकत्वेनेत्युक्तम्, तत् स्वर्गादिफलार्थत्वेनैव प्रपादीनां स्मृतत्वादानुषंगिकपरो-

---

१. मनु. स्मृ. अ. २-६, २. मनु. अ. २-७. ३. तै. सं-१-६-११-"

पकारार्थत्वाभिप्रायेण द्रष्टव्यम् । एवमग्निमोदाहरणेऽपि (१)"यत्र बाणाः संपतंति कुमारा विशिखा इव" इति च शिखाकर्मस्मृतेः प्रामाण्ये लिङ्गम् । शिखाकर्मापि चादृष्टार्थमेव, संस्कारेषु पाठात् ।

यत्तु—आर्षसंख्याकाशिखाविधानेन गोत्रचिह्नत्वावगतेस्तस्य च "वासिष्ठानां नाराशंसो द्वितीयः प्रयाजः" इत्यादौ गोत्रज्ञानसाध्ये कर्मण्युपयोग इति भाष्यकारेणोक्तं, तत् पूर्ववदानुषंगिकत्वेन व्याख्येयम् । तथा गुर्वनुगमनाद्याचाराणां चयनप्रकरणे मृदाहरणार्थं पुरुषाश्वगर्दभेषु अध्वर्युणा नीयमानेषु गर्दभपश्चाद्भावविधेः शेषः (२)"तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेती"त्ययमर्थवादो लिङ्गम् । एतेऽपि चादृष्टार्था एव । यद्प्यत्र गुर्वनुगमनादीनां गुरुप्रीतिद्वारा ततो विद्याग्रहणार्थत्वमेवेत्युक्तं भाष्ये, तदप्यतिशयार्थम् । सत्यपि गुरुप्रीत्यर्थत्वे उपायान्तरेणापि तत्सम्भवे एतन्नियमस्यादृष्टार्थत्वावश्यंभावात् ।

वस्तुतस्तु निष्पन्नविद्येनापि फलाभिसंधिविरहेऽप्य एवं क्रियमाणत्वादाचारानुमितविधेरधिकारिविशेषणापेक्षायामावश्यकत्वोपपत्तये गुरुगमनस्य निमित्तत्वेनाधिकारिविशेषणत्वकल्पनान्नैमित्तिकत्वेनादृष्टार्थत्वमावश्यकम् । अत एव षष्ठे प्रतिनिमित्तं अनुगमनाद्यचिरुक्ता । अन्यथा केवलदृष्टार्थस्य षष्ठे विचार्यत्वानुपपत्तेः । धर्मजिज्ञासाया एव प्रतिज्ञातत्वात् । अतः सिद्धमदृष्टार्थानां स्मृत्याचाराणां धर्मे प्रामाण्यम् ।

ननु—ग्रन्थरूपाणां स्मृतीनां शब्दत्वेन लौकिकवाक्यवत् शाब्दप्रमाजनकत्वसंभवेऽपि अष्टकास्वर्गसाध्यसाधनभावरूपे धर्मे विधेरेव प्रमाण्यात् पुंवाक्यस्थलिङश्च विध्यर्थकत्वानुपपत्तेर्न धर्मप्रमाजनकत्वसंभवः । श्रुत्यनुमापकत्वेन च स्मृतीनां प्रामाण्य उच्यमाने अनुमानविधया प्रामाण्यात्तस्य च धर्मे प्रामाण्यस्य निरस्तत्वाद्नुमि-

१. तै. सं. ४-६-५-४.　२. मैत्रा-सं ३-१-३.

तश्रुतीनामेव च तदा धर्मप्रमाजनकत्वोपपत्तेस्तदनुमान एवोपक्षीणानां स्मृतीनां न धर्मे प्रामाण्यं संभवति । आचाराणां तु अशब्दात्मकत्वात्सुतरां प्रामाण्यासंभव—इति चेत् । सत्यम्, मूलभूतश्रुतिरूपप्रमाणोपस्थापनेनैव धर्मप्रमाजनकत्वाभावेऽपि धर्मप्रमाप्रयोजकत्वात् प्रामाण्यव्यवहारो भाक्त एव लिंगादीनामिवेति द्रष्टव्यम् ।

यत्तु स्मृतिपुराणेतिहासेषु अर्थकामाद्यर्थकवाक्यजातम्, यदपि चोपाख्यानादिप्रतिपादकं, यच्च पृथिवीविभागवंशानुक्रमण्यादि, तत्सर्वमर्थवादन्यायेन वेदमूलधर्माधर्ममोक्षप्रतिपादकविधिशेषभूतमपि साक्षात्सुखादिहेतुत्वादर्थाद्युपायभूतराजनीत्याद्युपदर्शकत्वाच्च प्रयोजनवत् । मूलं तु तस्य क्वचिद्वेदः क्वचित्प्रत्यक्षादीत्यन्यत्र विस्तरः ।

एवं षडंगानामपि यथासंभवं लोकवेदमूलत्वं कल्पनीयम्, यच्च शिक्षायां तावत् यत् वर्णानां स्वरकरणादिस्वरूपकथनं तत् लोकमूलम्, तद्विज्ञानस्य च प्रयोगे फलविशेषजनकत्वस्मरणं अज्ञानाच्च प्रत्यवायस्मरणं वेदमूलम् । वेदबोध्यधर्मप्रमोपयोगिस्वरादिप्रतिपादनाच्च शिक्षाया वेदाङ्गत्वम् ।

कल्पसूत्रेष्वनुष्ठेयकर्मप्रतिपादनं प्रायो वेदमूलम् । क्वचित्तु ऋत्विजां(१) "को यज्ञ" इति प्रश्नोत्तरव्यवहारप्रतिपादनं लोकमूलम् । प्रकीर्णानां शाखान्तरस्थानां विधीनामर्थवादमिश्राणां च तदुद्धारेणैकत्वोपसंहारो न्यायलभ्यानां चार्थानां तात्पर्यनिर्णयः प्रयोजनं इति पूर्ववदेव वेदांगत्वमिति कल्पसूत्राधिकरणे वक्ष्यते ।

व्याकरणं च शब्दापशब्दविभागकथनं वृद्धव्यवहारमूलम् । साधुशब्दप्रयोगस्य क्रत्वर्थपुरुषार्थरूपत्वम् असाधुशब्दप्रयोगस्य च क्रतुवैगुण्यापादकत्वं वेदमूलकं वैदिकपदरक्षोहादिकथनेन च वेदांगतेति व्याकरणाधिकरणे वक्ष्यामः ॥

छन्दःशास्त्रे च लौकिकवैदिकछन्दःकथनं वृद्धव्यवहारमूलम् ।

---

१. आप. श्रौ. १०-१-३.

तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति "यो ह वा अविदितछन्दो-दैवतार्षेयब्राह्मणेन मन्त्रेण यजति याजयति वा" इति प्रत्य-क्षश्रुतिमूलं। तत्र लौकिकछन्दःकथनं वैदिकविवेकज्ञानार्थं, लौकि-कपदव्याकरणवत् । वैदिकछन्दःकथनं तु वैदिकवाक्यपरि-माणज्ञानाय । "गायत्रमेतदहर्भवति" इत्यादिपदार्थज्ञानाय उप-युज्यत इति तस्य वेदाङ्गत्वम् । एवं निगमनिरुक्तयोरपि; निर्वचना-दिना वैदिकपदार्थज्ञानोपयोगित्वाच्च वेदांगतेति द्रष्टव्यम् ॥

ज्योतिःशास्त्रेऽपि तिथ्यादिज्ञानं ग्रहनक्षत्रादिगतेः प्रत्यक्षस्वा-द्युपरागादिसंवाददर्शनसहकृतान्वयव्यतिरेकावधृतव्याप्तिकगणितलिंग-कानुमानगम्यत्वाच्च लौकिकप्रमाणमूलम् । ग्रहसौस्थित्यदौःस्थित्यनि-मित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तन्निमित्ताश्च शान्त्यादि-विधयः वेदमूलाः । तिथ्यादिकालज्ञानस्य वैदिककर्मप्रयोगोपयोगा-द्वेदांगतेति ॥

अयं च न्यायः सामुद्रिकायुर्वेदवास्तुविद्यानीतिशास्त्राश्वकृषि-कविद्याशालिहोत्रहस्तिशिक्षासूपशास्त्रादौ द्रष्टव्यः ॥

एवं पूर्वोत्तरमीमांसयोरविच्छिन्नपंडितव्यवहारावगतयुक्तिमूल-कत्वं मंत्रार्थवादोपनिषत्प्रसूततर्कमूलकत्वं च । असंभावनाविपरीत-भावनानिवर्तनेन च धर्मब्रह्मविषयदृढीकरणं प्रयोजनम् ।

एवं न्यायस्यापि पंडितव्यवहारमूलकत्वं, वेदवाक्यार्थोपयो-गिजात्यादिपदार्थविवेकश्च प्रयोजनम् । एवं काणादेऽपि। सांख्यस्य तु युक्तिमूलकत्वम्, मोक्षसाधनीभूतजीवब्रह्मैक्योपासनारूपज्ञानौ-पयिकजीवस्वरूपप्रतिपादनं प्रयोजनम् । पातंजलं च लोकोप-निषदादिमूलं तत्वज्ञानोपयोगिचित्तैकाग्र्यरूपयोगोपायज्ञानप्रयोज-नम् । संगीताद्यपि चैतत्प्रयोजनमेव प्रत्यक्षादिमूलम् ।

शैववैष्णवाद्यागमाश्चोपनिषन्मूलाः श्रेयःफलाश्च । किं बहुना यत्र विज्ञानमात्रक्षणभंगनैरात्म्यादिवाद्ग्रंथानामपि अन्यपरार्थवा-

दौपनिषन्मूलानां विषयेष्वात्यंतिकवैराग्योत्पादकत्वेनार्थवत्त्वा तत्रा-न्येषां विद्यास्थानानां निष्प्रयोजनत्वमित्यसंबद्धम् । तस्मात्सिद्धं तेषां प्रामाण्यम् ॥

सूत्रं तु स्मृत्यादि यतो मूलभूतश्रुतिकल्पकं दृढवैदिकपरिग्रहा-न्यथानुपपत्तिरूपं अनु पश्चात्प्रत्यक्षोत्तरं प्रवृत्तत्वादनुमानपदाभिधे-यं प्रमाणं विद्यते, अतः प्रमाणं स्यात् । संभाव्यते हि मन्वादीनां वैदिककर्मकर्तृत्वसामान्याद्वेदसंयोग इति व्याख्येयम् ॥

## ( २ ) अथ विरोधाधिकरणम् ॥

## (सू)विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥
## ॥ १-३-३ ॥ ( सि० १ )

अत्र याः प्रत्यक्षश्रुतिविरुद्धाः स्मृतयः "औदुम्बरी सर्वा परि-वेष्टयितव्या (१)"अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं" "क्रीतराजको भोज्यान्नः"इत्याद्याः ताः प्रमाणमप्रमाणं वेति संदेहः । पादाध्याय-संगती स्पष्टे । आपवादिकीत्यनन्तरा ।

तत्र उत्सूत्रः पूर्वः पक्षः । यथा हि शिष्टत्रैवर्णिकप्रणीतत्वाद-ष्टकादिस्मृतीनां श्रुतिमूलत्वाङ्गीकारेण भ्रान्त्यादिमूलत्वम् नाश्रितं तथा प्रत्यक्षश्रुतिविरोधेऽपि मन्वादिप्रणीतत्वाविशेषात्तन्नाश्रयितुं यु-क्तम् । अन्यथा ह्यनाश्वासान्मन्वाद्युक्तं सर्वमेवाप्रमाणं भवेत् । न च श्रुतिविरोधस्यैवान्यत्र श्रुतिमूलत्वाभावसाधकस्याभावान्न भ्रान्त्या-दिमूलकत्वकल्पनावसरः । प्रत्यक्षश्रुतिविरोधस्य ग्रहणाग्रहणादिषु बहु-शो दर्शनेन अनैकान्त्यादभावसाधकत्वानुपपत्तेः, अतः "औदुंबरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या सर्ववेष्टनस्मृतेः, "जातपुत्रः कृष्णकेशोऽग्नी-नादधीत"इत्यनया च अष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतेः, (२)"न दी-क्षितस्यान्नमश्नीयात्" इति निषेधापेक्षितावधिसमर्पिकया (३)"चाग्नी-

१. बौ. स्मृ. २. मै. सं. ३-६-७. ३. मै. सं. ३-७-८.

षोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्" इत्यनया राजक्रयात्रधिकत्वस्मृतेः विरोधेऽपि प्रमाणत्वोपपत्तिः । विकल्पाङ्गीकाराच्च विरोधपरिहारः ।

नचैवं—स्मृतेः श्रुत्यधीनत्वेन मन्थरप्रवृत्तित्वात् मन्थरस्यापि च प्रथमतरप्रवृत्तेन बाधानंगीकारे श्रौतेनापि लैङ्गिकस्य बाधानापत्तिरितिवाच्यम् । युक्तं 'मैन्द्र्या गार्हपत्य'मित्यनया प्रत्यक्षश्रुत्या गार्हपत्याङ्गत्वेनैव मंत्रस्य नैराकाङ्क्ष्ये अकाङ्क्षामूलिकाया लैंगिकश्रुतेरेवाकल्पनान्मूलोच्छेदलक्षणं लिङ्गादेर्बाधनम्, प्रकृते तु स्पर्शश्रुत्या वेष्टनस्मृतेर्मूलाकाङ्क्षाया अनुच्छेदान्न मूलोच्छेदलक्षणो बाधः संभवतीति मन्थराया अपि स्मृतेः श्रुतिकल्पकत्वेन प्रामाण्याविघातः; अत एव प्रबलेनोपदेशेन धर्माणां प्रकृत्यङ्गत्वावगमेऽपि विकृत्याकाङ्क्षानुच्छेदादुर्बलस्यापि अतिदेशस्य न बाधनम् ।

नचैवं श्रुत्या गार्हपत्याङ्गत्वावगमेन मन्त्रस्याकाङ्क्षानिवृत्तावपि विकृतिवदिन्द्रस्याप्याकाङ्क्षानुच्छेदाल्लिङ्गस्य श्रुतिकल्पकत्वोपपत्तेर्बाधानापत्तिः; इन्द्रस्य ध्यानाद्युपायान्तरेणापि स्मारकाकाङ्क्षानिवृत्तेति विकृतिवैषम्यात् । अतो विकृत्याकाङ्क्षावत् स्मृतेः मूलाकाङ्क्षाया अनिवृत्तेः श्रुतिकल्पकत्वाविघाताद्विकल्पो युक्त एव । अत एव शैत्यानुमान इवात्र न प्रमेयापहारलक्षणोऽपि बाधः शंक्यः; न हि तत्र विकल्पेन विरोधपरिहारः संभवति, वस्तुनि विकल्पासंभवात् । स्वरूपेण च शैत्यौष्ण्ययोः परस्परात्यन्ताभावसमानाधिकरणयोर्विरोधस्य प्रत्यक्षसिद्धत्वात् विरोधे चौष्ण्यप्रत्यक्षेणाग्नेर्विपक्षत्वावगतौ तद्वृत्तिहेतोर्व्याप्तिविरहाद्युक्तः शैत्यानुमानस्य प्रमेयापहारलक्षणो बाधः । इह तु स्पर्शवेष्टनयोः स्वरूपेण परस्परात्यन्ताभावसमानाधिकरणयोरपि विकल्पेनानुष्ठानसंभवान्न स्मार्त्तविधेरनुष्ठापनरूपस्य प्रमेयस्यापहारः ।

येषां तु मते इष्टसाधनत्वमेव लिङर्थः तेषामसत्यप्यनुष्ठाने साध-

नत्वरूपायाः शक्तेः अरण्यस्थ दण्ड इव स्मार्तविधिनिष्ठाया अनपा-
यात्स्मार्तविधेः शक्तिरूपस्य प्रमेयस्यानपहारः स्पष्ट एव ।

एवं तावत्सत्यपि विरोधे विकल्पेन तत्परिहार उक्तः । अथ वा
वेष्टनस्मृतेर्द्वित्र्यंगुलव्यतिरिक्तविषयत्वात् स्पर्शश्रुतेश्च तन्मात्रविष-
यत्मात् चाण्डालादिस्पर्शे वस्त्रान्तरितेऽपि स्पर्शव्यवहारात्सर्वौदुंबरी-
वेष्टनेऽपि वा स्पर्शोपपत्तेः कृष्णकेशाधानश्रुत्यष्टाचत्वारिंशद्वत्सर-
ब्रह्मचर्यस्मृत्योश्च गार्हस्थ्ययोग्यायोग्यविषयकत्वात्कृष्णकेशत्वादेर्वा
कस्मिंश्चित्पुरुषे अष्टाचत्वारिंशद्वर्षोत्तरमपि संभवात् राजक्रयाग्नीषो-
मीयावध्योश्चापदनापद्विषयत्वाद्विरोधपरिहारः कार्यः । तस्मान्न तावत्
प्रत्यक्षश्रुतिविरोधः स्मृतेः अप्रामाण्यबीजम् । लोभाद्युत्प्रेक्षयाप्रा-
माण्योक्तिरष्टकादिस्मृतेरप्यप्रामाण्यापत्तेः अयुक्तेति प्राप्ते—

भाष्यकारेण तावदेवं सिद्धान्तितम् । तथाहि—सर्वत्र धूमा-
दिदर्शनानंतरं व्याप्त्यादिस्मरणे सत्यपि जिज्ञासाविरहे अनुमित्यनुद-
यात् परोक्षज्ञानमात्रेऽनुमित्यर्थापत्त्योरेव वा जिज्ञासायाः कारणत्व-
मवसीयते । अतश्च स्पर्शश्रुत्याऽवेष्टितत्वरूपेणौदुम्बर्याः परिच्छिन्न-
त्वात् वेष्टनविषयजिज्ञासाया विरहेण सत्यपि स्मरणरूपेऽनुमापके न
मूलश्रुत्यनुमित्युदयः । अत एव शैत्यानुमाने न केवलं व्याप्तिविघट-
नेनैवानुमित्युदयः, किन्तु जिज्ञासाविरहादपि स इति द्रष्टव्यम् ।
अत एव लिङ्गादिवत् शैत्यानुमितावपि जिज्ञासारूपकल्पनामूलोच्छे-
दादेव बाधोपपत्तेः प्रमेयापहारलक्षणबाधप्रकारविषयाभावात् बाधद्वै-
विध्यानापत्तिरप्यदोषः ।

केचित्तु—शैत्याद्यनुमितौ जिज्ञासायाः प्रमेयकल्पनामूलत्वेऽपि
प्रमाणस्य द्रव्यत्वादिहेतोः वेष्टनस्मृतेर्वा क्लृप्तत्वेन तन्मूलत्वाभावात्
प्रमेयापहारलक्षणबाधप्रकारविषयत्वं शैत्यानुमितेर्वेष्टनस्मृत्या श्रुत्य-
नुमितेश्च युक्तम् । लिङ्गादौ तु मन्त्राद्याकाङ्क्षाया इन्द्राद्यङ्गत्वबोध-
कश्रुतिरूपप्रमाणकल्पनामूलत्वेन अङ्गत्वरूपप्रमेयकल्पनामूलत्वाभा-

वात् कल्पनामूलोच्छेदलक्षणबाधप्रकारविषयत्वमिति वदन्ति । तन्मः शैत्यानुमितौ तावदौष्ण्यप्रत्यक्षेण व्याप्तेरेव विघटितत्वात्प्रमाणमक्लृप्तम् । वेष्टनोदाहरणेऽपि वेष्टनं वा प्रमेयं तवाभिप्रेतं? तद्विषयिणीश्रुतिर्वा? आद्ये लिङ्गादिवदेव श्रुतिः तत्र प्रमाणं, न तु स्मृतिः। अतश्च जिज्ञासाया मन्त्राकाङ्क्षावत् श्रुतिरूपप्रमाणकल्पकत्वमेव, स्मृतिरपि लिङ्गादिस्थानीया तत्कल्पिकैव । अन्त्ये लिङ्गादिकल्प्यश्रुतेरपि तद्वदेव प्रमेयत्वापत्तिः । तस्माद्द्वैविध्याभावेऽपि न कश्चिद्दोष इत्येव द्रष्टव्यम् । द्वैविध्यांगीकारेऽपि वा सामान्यविशेषादिरूपे बाधे प्रमाणस्य सामान्यशास्त्रस्य क्लृप्तत्वेन जिज्ञासिततयोदयायोगात् पदहोमेष्वाहवनीयप्राप्तिरूपः प्रमेयापहाररूप एव प्रकारोंगीक्रियते इति सोऽस्य विषयः, न तु शैत्यानुमानम्, वेष्टनस्मृतिर्वा ॥

न च—शैत्यानुमानादौ वस्तुनि विकल्पासंभवादगत्या युक्तो बाधः, स्मृतेस्तु कार्यप्रमेयतया विकल्पेनाप्युभयोपपत्तौ बाधांगीकरणमन्याय्यमिति—वाच्यम् । विकल्पस्यैव तावदष्टदोषदुष्टत्वेनान्याय्यत्वात् । तथाहि—व्रीह्यनुष्ठाने तावद्यवशास्त्रस्यैव निर्दोषस्य सतोऽननुष्ठापकत्वात् प्रतीतप्रामाण्यत्यागरूप एको दोषः, अप्रतीताप्रामाण्यकल्पनं च निष्प्रमाणकमपरम्। यद्यपि च सन्देहविपर्ययजनकत्वरूपमप्रामाण्यं सन्देहविपर्ययोर्दोषजन्यत्वाद्वेदे च तदसंभवात्कल्पयितुमप्यशक्यं, तथापि प्रामाण्याभावरूपमेवाप्रामाण्यं कल्प्यते, तस्य च प्रामाण्यानुपलंभप्रमाणकत्वात् यवशास्त्रे च प्रामाण्यस्य प्रत्यक्षमुपलभ्यमानत्वेन तदनुपलंभाभावादप्रमाणकत्वम् । तृतीयचतुर्थौ च पुनः यवानुष्ठानवेलायां यवशास्त्रस्यैव परित्यक्तप्रामाण्योज्जीवनात्कल्पिताप्रामाण्यत्यागाच्चापरौ दोषौ । एवं व्रीहिशास्त्रेऽपि चत्वारो दोषाः । एवमेते अष्टौ दोषाः ।

यत्र द्वयोरपि तुल्यबलत्वं तत्र विकल्पव्यतिरेकेण गत्यभावादगत्याऽश्रीयते । यथा व्रीहियवादौ । न च तत्रापि प्रयो-

गादिद्वयगतसर्वांगोपसंहारबलेन समुच्चयसंभवादगत्यभावः । यत्र हि विनियोगविधिवेलायां द्वयोः पदार्थयोरेकावान्तरोपकारजनकत्वमन्योन्यनैरपेक्ष्येणैवावगम्यते, यथा प्रयाजानुयाजादौ यथा वा दशानामपि क्रयाणामेकसोमप्राप्तौ, तत्र प्रयोगविधिः सर्वांगोपसंहारायालम् । यत्र तु विनियोगवेलायामेव दृष्टार्थत्वबलेन तृतीयाद्यवगतनैरपेक्ष्यबलेन वा नियमविधिबलेन वा एकस्मिन्नेव पुरोडाशनिष्पत्तिरूपावान्तरकार्ये नैरपेक्ष्येण साधनत्वावगतिः तत्र तदुत्तरकालकल्प्यप्रयोगविधिबलेन समुच्चयावगतिः निष्प्रमाणिका। यत्र तु न तुल्यबलत्वं तत्रान्यसापेक्षया स्मृत्या अन्यनिरपेक्षायाः प्रत्यक्षश्रुतेः पाक्षिकाप्रामाण्यस्य कल्पयितुमशक्यत्वान्न विकल्पांगीकरणं युक्तम् ।

न च तस्या अन्यसापेक्षत्वेऽपि अवश्यकस्मृतिमूलभूतया श्रुत्यैव पाक्षिकत्वापादनसंभवः । श्रुत्यनुमाने जिज्ञासाया अपि कारणत्वस्य स्थापितत्वेन तद्विरहे श्रुतिकल्पनस्यैवानुदयात् ।

किं च समशिष्टविकल्पस्थले एकानुष्ठाने इतरशास्त्रस्यापि निर्दोषत्वात्संशयविपर्ययज्ञानजनकत्वरूपाप्रामाण्यकल्पनासंभवादगत्या अप्रमाणकमपि प्रामाण्याभावरूपमप्रामाण्यमाश्रितम्। प्रत्यक्षश्रुत्यर्थानुष्ठाने तु स्मृतिशास्त्रस्य पौरुषेयत्वेन भ्रमजनकत्वरूपमुख्याप्रामाण्यस्यैव सप्रमाणकस्य संभवेन श्रुतिमूलत्वायोगादप्रामाण्यं तदवस्थमेव।

न चैवं-येन प्रथमतः स्मृत्यर्थ एवानुष्ठितः तस्य स्मृतिमूलश्रुतिकल्पनायां बाधकाभावात्तदर्थानुष्ठाने च प्रत्यक्षश्रुतेर्निर्दोषत्वेन प्रामाण्याभावरूपस्यैवाप्रामाण्यस्य कल्पनाद्विकल्पोपपत्तिरिति—वाच्यम्। प्राक्कल्पितस्यापि श्रुतिमूलत्वस्य औत्तरकालिकेन पूर्वनिरपेक्षेण प्रत्यक्षश्रुतिदर्शनेन बाधोपपत्तेः । तस्मान्न तावदुभयोर्विध्योर्विकल्पेन विरोधपरिहारः ।

यदपि- इष्टसाधनत्वरूपलिङर्थवादिनां मते साधनत्वरूपायाः शक्तेरण्यस्थदण्डवदननुष्ठानेऽपि सत्त्वाच्छक्तिमात्रस्यैव च विधिप्रमेयत्वान्न स्मृतेरप्रामाण्यं-इति । तन्न, सर्वथाननुष्ठाने "सागरं तरेदि"

स्वादिवत् शक्तिसत्त्वे प्रामाणाभावात् । यदवच्छेदेन शक्तिस्तदवच्छिन्नस्य कदाचित्फलोपधाननियत्याच्च ।

किञ्चैवंवादिनां सामान्यविशेषादिबाध्यबाधकभावोऽपि दुर्घटः । यद्धोमे आहवनीयानुष्ठानेऽपि आहवनीयवाक्यैरनपायात् ।

वस्तुतस्तु इष्टसाधनत्वस्य विधिरांशेषादेवावगतिसिद्धेः वाच्यत्वकल्पने प्रमाणाभावः । प्रवर्तकव्यापाररूपप्रवर्तनायास्तु 'देवदत्तो मां प्रवर्तयति' इत्यनुभवसिद्धाया अनन्यलभ्यत्वाद्वाच्यत्वकल्पनमावश्यकम् । न च देवदत्तस्येष्टसाधनताबोधकत्वेनैव प्रवर्तकता, देवदत्तस्त्वां गामानयेति वदती' सत्र यज्ञदत्तस्येष्टसाधनताबोधकत्वात् प्रवर्तकतापत्तेः । अतः इष्टसाधनत्वस्य लिङादिवाच्यत्वाभावात्प्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनैव लिङादिवाच्या । विस्तरेण चेदमुपपादितमर्थवादाधिकरणे । प्रवृत्त्यनुकूलत्वमपि नासत्यानुष्ठाने संभवति । नियतस्य स्वरूपयोग्यस्य फलावश्यंभावनियमात्, तेन कादाचित्कफलोपहितत्वं विवक्षितम् । अतोऽवश्यंफलमात्रानुष्ठाने उक्तविधप्रवृत्त्यनुकूलव्यापारत्वरूपविधिप्रमेयासंभवात् अपरस्यप्रामाण्यमभ्युपगन्तव्यम् ।

यत्तु द्वित्र्यङ्गुलव्यतिरिक्तविषयत्वेनापि स्मृतेरुपपत्तेः स्पर्शश्रुतेश्च तावन्मात्रविषयत्वादविरोध इत्युक्तम्, तत् परिशब्दानुपपत्तेः परास्तम् ।

यत्तु वस्त्रान्तरितचाण्डालादिस्पर्शवत् वस्त्रान्तरितौदुम्बरीस्पर्शेऽप्यविरोध इत्युक्तम्, तन्न; त्वगिन्द्रियजन्यप्रत्यक्षविषयकज्ञानस्य स्पृशिधात्वर्थत्वात्कुशवस्त्रान्तरितौदुम्बरीस्पार्शनप्रत्यक्षस्यानुपलब्धिबाधितत्वात्तत्कल्पनानुपपत्तेः । यस्तु अन्तरायेऽपि औदुम्बरी स्पृष्टेति प्रयोगः स संयुक्तसंयोगेन गौणः । न च स्मृत्यनुरोधेन श्रुतौ गौणताङ्गीकरणं युक्तम्, तथात्वेऽपि वा भूमिस्पर्शेनैव तत्सिद्धेः स्पर्शविधिवैयर्थ्यात् । न च भूमिस्पर्शे औदुम्बरी स्पृष्टेति बुध्यभावात् स्पृशिधातोः संयुक्तसंयोगलक्षकत्वानंगीकारेऽपि स्पार्शनप्रत्यक्षवाचि-

स्वांगीकारेणैव वस्त्रान्तरितायां औदुम्बर्यां वस्त्रान्तरितचण्डालस्पर्श-वत् स्पर्शप्रयोगसत्त्वादेवानुभवकल्पनोपपत्तेः न स्पर्शविधिवैयर्थ्यमिति वाच्यम् । निष्प्रमाणकानुभवकल्पने प्रमाणाभावेन वस्त्रान्तरितस्प-र्शप्रयोगस्यौपचारिकत्वात् । नचैवं वस्त्रान्तरितचाण्डालस्पर्शे स-चेलस्नानानापत्तिः, चण्डालस्पर्शनिमित्तकस्नानविधौ औपचारिक-स्पर्शाङ्गीकरणदोषस्य तुल्यत्वादिति वाच्यम् । (१)"पतितचाण्डालसू-तिकोदक्याशवस्पृष्टितत्स्पृष्टिस्पर्शने सचेलो जलमाविशेदि"तिवचनेन चण्डालस्पर्शवत्तत्स्पृष्टवस्त्रस्पर्शस्यापि स्नाननिमित्तत्वा(२)वसायात् तादृशविषये चण्डालस्पर्शस्य निमित्तत्वासंभवेऽपि वस्त्रस्पर्शस्यैव निमित्तत्वोपपत्तेः ।

न च वस्त्रस्य चाण्डालवत् स्वतोऽशुचित्वाभावान्मनुष्यवच्च नि-षेधाधिकाराभावेन चण्डालस्पर्शरूपनिषिद्धाचरणनिमित्ताशुचित्वस्या-प्यभावादुक्तवचनस्य च चण्डालादिस्पृष्टमनुष्यमात्रविषयत्वेनाप्युपप-त्तेः चाण्डालस्पृष्टलोष्टकाष्ठादिस्पर्शस्येव तत्स्पृष्टवस्त्रस्पर्शस्यापि न सचेलस्नाननिमित्तत्वमिति वाच्यम् । सचेलस्नानविधिबलेन वस्त्रस्या-पि प्रक्षालनरूपशुद्धिविधिप्रतीतेः शुद्धिविधानेनैव चाण्डाल(३)स्पर्श-मात्रस्यैव वस्त्रादावशुचित्वापादकतया साम्याद्वस्त्रस्यापि सचेल-स्नाननिमित्तत्वोपपत्तेः । काष्ठादीनां चण्डालादिस्पृष्टानामपि मा-रुतशुद्धिविधानान्न तत्स्पर्शस्य स्नाननिमित्तता ।

अत एव यत्र गवादौ चाण्डालादिस्पर्शेऽपि प्रक्षालनादिरूपा शुद्धिर्नोक्ता तत्र तत्स्पृष्टस्पर्शेऽपि न स्नानानुष्ठानम् । अतो यथा च-ण्डालासंयुक्तेऽपि तत्स्पृष्टेऽपि वस्त्रे स्पृष्टे सचेलस्नानं, तथा तत्संयु-क्तवस्त्रस्पर्शेऽपि तदिति न वस्त्रान्तरितचाण्डालस्पर्शस्य स्नाननि-मित्तत्वम्, अतश्च सिद्धं न वस्त्रान्तराये स्पर्शोपपत्तिरिति ॥

यदपि अन्त्योदाहरणद्वये गार्हस्थ्ययोग्यायोग्यविषयत्वेन आप-

१ गौ. ध. १४. ३०. २. स्नानपायात् । इति पा. ३. संयोग इति पा.

दनापद्विषयत्वेन च व्यवस्थोपपत्तेरविरोध इत्युक्तम्, तत् प्रत्यक्षश्रुति-विरोधे स्मृतिमूलभूतश्रुतिकल्पनस्यैवानुदयात् स्मृतिप्रामाण्याभावेन स्वकपोलकल्पितव्यवस्थाभ्युपगमे प्रमाणाभावात् परिहर्तव्यम् ।

यच्च द्वितीयोदाहरणे जातपुत्रत्वस्य कृष्णकेशत्वस्य च कस्मिंश्चित्पुरुषे अष्टाचत्वारिंशद्वर्षोत्तरमपि संभवादविरोध इत्युक्तं, तन्न; अष्टाचत्वारिंशद्वर्षोत्तरकालं पुत्रजन्मप्रतीक्षणे बहुकालातिक्रमेण कृष्णकेशत्वापगमात् । न चानयोरधिकारिविशेषणयोर्विकल्पः । अर्थादधिकारिविशेषणत्वेऽपि उपादेयकर्तृविशेषणयोरनयोः एकवाक्योपादानात्समुच्चयप्रतीतेः ।

वस्तुतस्तु प्राप्ताधानानुवादेनोभयविधाने वाक्यभेदापत्तेर्दारपरिग्रहोत्तरकालं च कृष्णकेशस्य नियमेनाधानप्राप्तेः कृष्णकेशत्वश्रवणस्य पलितकेशपरिसंख्यार्थत्वापत्तेरजातपुत्रस्यापि हरिश्चन्द्रादेः पुत्रार्थयागोपाख्यानेन आहिताग्नित्वदर्शनात्स्वरूपेणानयोर्विशेषणतानुपपत्तेः (१)“अर्धमन्तर्वेदि मिनोति” इतिवत् “युवैव धर्ममन्विच्छेत्” इति वचनानुसाराच्च यौवनावस्थाविशेषलक्षकत्वावसायात्तस्याश्च चरकसुश्रुतादौ पञ्चाशद्वर्षपर्यन्तत्वश्रवणान्न विरोधपरिहारोपपत्तिः । तेन सिद्धं प्रत्यक्षश्रुतिविरोधे स्मृतीनामप्रामाण्यमिति । सूत्रं स्पष्टम् ॥

## सू—हेतुदर्शनाच्च ॥ १–३–४

यदा च प्रत्यक्षश्रुतिविरोधे श्रुतिमूलत्वासंभवः तदा स्मृतेर्मूलाकाङ्क्षायां भ्रान्त्यादिमूलत्वमेव परिशेषात् यथासंभवं कल्पयितुमुचितम् । तत्र वेष्टनस्मृतेस्तावद्वस्त्रलोभः; अष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतेश्च नपुंसकत्वप्रच्छादनम्, राजक्रयावभिस्मृतेस्तु बुभुक्षैव । संभाव्यते हि भ्रान्त्यादिमूलत्वं, पौरुषेयत्वात् । अदृष्टश्रुतिकल्पनापेक्षया लोभादेर्दृष्टरूपत्वाच्च ॥

---

१. मै. सं. ३–९–४.

अधिकरणान्तरंवेदं सूत्रम् ॥

## सू—हेतुदर्शनाच्च ॥ १–३–४. (मि)

ननु–सर्वत्र व्याख्यानान्तरं पूर्वत्रापरितोषाद्वा विषयान्तरव्याप्त्यर्थं वा क्रियते तदत्र किं कारणं व्याख्यानान्तरे इति चेत्—अत्रोच्यते। श्रुतिविरोधस्यैव वेष्टनादिस्मृत्यप्रामाण्ये मुख्यं हेतुत्वम्, लोभादिहेतुदर्शनस्य तु अन्वाचयहेतुत्वादपरितोषः। अथवा यत्र न श्रुतिविरोधः यथा "वैसर्जनहोमीयं वासोऽध्वर्युः प्रतिगृह्णाति" "यूपहस्तिनो दानमाचरन्ति" इत्यादौ, तत्रापि लोभादमूलकत्वकथनाद्विषयान्तरव्याप्तिरप्यत्रास्ति तत्र प्रत्यक्षश्रुतिविरोधाभावे दानधर्मादिस्मृतिवत् श्रुतिमूलत्वमेवासामिति प्राप्ते—

यद्यपि मन्वादिमहर्षिप्रणीतत्वादस्य श्रुतिकल्पकत्वं लोभादिदर्शनेन न प्रतिबध्यते, तथापि (१)"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" इत्यत्र लोभादिदृष्टसंभव एवाचारे स्मृतिमूलत्वस्य वक्ष्यमाणत्वादेतासां च होलाकादिस्मृतिवदाचारानुमितेदानींतनप्रणीतस्मृतिरूपत्वेन मन्वादिप्रणीतत्वाभावात् दृष्टविधया लोभादिमूलकत्वे संभवति अदृष्टश्रुतिकल्पनं न प्रमाणवत्। संभाव्यते हि वैसर्जनहोमीयवासोदानस्मृतेर्लोभमूलत्वम्, यूपहस्तिपदवाच्ययूपपरिव्याणवस्त्रदानस्मृतेरपि तत्। यद्यपि चेदानींतनैर्धर्मबुद्ध्यैवेदमनुष्ठीयते, तथापि स्मृतिप्रणेतॄणां लोभमूलकत्वसंभवाद्प्रमाणम्।

वार्तिककारस्तु नेदमधिकरणद्वयमपि युक्तिमत्। तथाहि—प्रत्यक्षश्रुतिविरोधे स्मृतीनां मूलभूतश्रुत्यभावः साधकाभावाद्वावधार्यते? बाधकसद्भावाद्वा? न तावदाद्यः, मन्वादिमहर्षिप्रणीतत्वादेः शिष्टत्रैवर्णिकपरिग्रहादेश्चाष्टकादिस्मृतिष्विव मूलश्रुतिसाधकस्याविशेषात्। न च—उक्तविधसाधकसत्त्वेऽपि जिज्ञासाया अपि सा-

धकत्वस्य स्थापितत्वात् तस्याश्च प्रत्यक्षश्रुतिविरोधेऽभावेन मूलश्रुत्यभाव इति वाच्यम् । परमाण्वादौ कदाप्यनुपलब्धत्वात् व्यवहारानुपयोगित्वाच्चाजिज्ञासितेऽपि उपलब्धस्थूलकार्यानुपपत्तिपरिहारार्थं प्रमाणप्रवृत्तिदर्शनेन जिज्ञासायाः साधकत्वे प्रमाणाभावात् । धूमादिदर्शनानन्तरं अग्न्याद्यजिज्ञासायामपि अनुमित्यादेरानुभाविकत्वाच्च । सत्यपि वा जिज्ञासायाः कारणत्वे स्पर्शश्रुत्या औदुम्बर्याः परिच्छेदेऽपि किमियं स्मृतिः प्रमाणं न वेति जिज्ञासयैव श्रुत्यनुमानोपपत्तेश्च । दृष्टा च प्रमाणान्तरेण परिच्छिन्नेऽपि शंखशौक्ल्ये शंकितापित्तोपहतस्य किं मे चक्षुर्दुष्टं न वेति जिज्ञासयैव चक्षुर्विस्फारणप्रवृत्तिः ।

किंच स्मृतेर्मूलोपस्थापनमात्रेण कृतार्थत्वाच्छ्रुतिरेव प्रमेयं न त्वौदुम्बरी, तस्याः श्रुतिप्रमेयत्वात् । अतश्च स्मृतिमूलभूतश्रुतेः स्पर्शश्रुत्यविषयत्वेनापरिच्छिन्नत्वात्तज्जिज्ञासोपपत्तेः नानुमानप्रतिबन्धः । अतश्च स्मृतिमूलश्रुतिकल्पनावश्यंभावे यद्यन्याविषयत्वेनापि कल्प्यश्रुत्यवकाशो भवेत् तदा औदुम्बर्याः स्पर्शश्रुत्या अवच्छिन्नत्वरूपेण परिच्छेदाद्वेष्टनाकाङ्क्षाविरहेण बर्हिःकार्यस्य शरैर्निराकाङ्क्षत्वादतिदेशस्यावश्यकल्प्यस्यापि कुशव्यतिरिक्तप्रयाजादिरूपाङ्गविषयत्वेन सावकाशस्य कुशाविषयत्वाकल्पनवत् कल्प्यश्रुतेरपि औदुंबरीविषयत्वाकल्पनात् संकोचरूपबाधोऽपि कल्प्येत तावत् । तस्यास्त्वनन्यविषयत्वेन निरवकाशत्वेन वा विरोधेऽपि व्रीहियवादिवदगत्या विकल्पोऽङ्गीक्रियते, न त्वप्रामाण्याश्रयणम् ।

न चैवं—लिंगेनाप्यवश्यं स्वप्रमेयश्रुतिकल्पनापत्तेर्मन्त्रस्य श्रुत्यवगतगार्हपत्याङ्गत्वेन निराकाङ्क्षस्यापि लिङ्गकल्प्यश्रुतेरनन्यविषयत्वादगत्या विकल्पसमुच्चयाङ्गीकरणोपपत्तेः कल्पनामूलोच्छेदलक्षणबाधानापत्तिरिति वाच्यम् । मन्त्रस्य प्रयोजनाकाङ्क्षाविरहे इन्द्राङ्गत्वविनियोगयोग्यत्वरूपलिङ्गस्य पाकादौ विनियोक्तुं योग्यस्यापि देवदत्तस्याकाङ्क्षाविरहे तत्र विनियोगाकल्पनव-

द्विनियोजकश्रुतिकल्पकत्वस्यैवाभावात् । प्रकृते तु श्रुतिकल्पनावश्यंभावाद्विकल्पो युक्त इति वैषम्यम् । अत एव यत्र दुर्बलेनापि समाख्यादिना श्रुतिरवश्यं कल्पनीया यथा प्रत्यक्षश्रुतिविहितवषट्कारादिनिमित्ते भक्षे सत्यपि यजमानचमससमाख्यया तत्रागतयोरपि समुच्चय एवाश्रयितुं युक्त इति तृतीये वक्ष्यते । तस्मान्न तावत्साधकाभावः ।

नापि बाधकसद्भावः । तद्धि विरुद्धश्रुतिदर्शनरूपं वा स्यात् ? तदनुपलब्धिरूपं वा ? नाद्यः, तस्य व्रीहियवादिश्रुतिषु बहुशो दर्शनेनानैकान्तिकत्वात् । न द्वितीयः, विप्रकीर्णशाखान्तरगतश्रुतीनामस्मदादिभिरनुपलम्भेऽपि मन्वादिभिरप्यनुपलम्भस्यासिद्धेः । न च स्मर्तृपुरुषप्रत्यक्षमात्रेण स्वादृष्टश्रुतावनाश्वासः । अग्निहोत्रादिश्रुतीनामपि वर्णस्वरूपस्य प्रत्यक्षेणावगतावपि अनादिपुरुषागतत्वस्याध्यापकपुरुषाधीनत्वेनानाश्वासापत्तेः । परप्रत्यक्षशाखान्तरगतश्रुतिविहितानामपि पदार्थानां स्वशाखाविहितपदार्थैः सह विकल्पस्य शाखान्तराधिकरणे वक्ष्यमाणत्वाच्च । अतो न तावत्प्रत्यक्षश्रुतिविरोधे स्मृतीनां श्रुतिमूलत्वासम्भवः ।

किं च सर्ववेष्टनस्मरणस्य मूलभूता शाट्यायनिशाखिनामौदुम्बरीप्रकरणे "तामूर्ध्वदशेन परिवेष्टयती"ति प्रत्यक्षैव श्रुतिः । अत एव जैमिनिनापि छान्दोग्यानुपदसंज्ञके स्वग्रन्थे औदुम्बरीवेष्टनमूलत्वेनेयमेव श्रुतिरुदाहृता । किञ्च स्मृतेर्द्वित्राङ्गुलव्यतिरिक्तविषयत्वेनाप्युपपत्तेर्नावश्यमप्रामाण्याश्रयणम् । न ह्यत्र सर्वपदं श्रूयते । परिशब्दस्तु यथा कर्णयोर्मूले वा वेष्टनाभावेऽपि समन्तत्वमात्रपरतयाप्युपपन्नः तथोद्गातृस्पर्शविषयौदुम्बरीमध्योत्तरभागव्यतिरिक्तविषयत्वेनोपपन्न एव ।

एवमष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतेरपि अथर्ववैदिकप्रत्यक्षश्रुतिमूलत्वं द्रष्टव्यम् । तत्र त्वेवं विरोधपरिहारः—ये तु अन्धपङ्ग्वा-

द्यो गृहस्थाधिकृतकर्मानधिकारित्वाद्गार्हस्थ्याश्रमायोग्याः, वस्तुके-शत्वाच्च नैष्ठिकब्रह्मचर्यं वानप्रस्थाश्रमं वा अविरक्तत्वाच्चादावेव सं-न्यासमपि गृहीतुमशक्नुवन्तः, तैरष्टाचत्वारिंशद्वर्षपर्यन्तं वेदब्रह्मचर्यं चरित्वोपरिष्टाद् यथोचितं गार्हस्थ्यातिरिक्तं आश्रमान्तरं कार्यमित्य-ष्टाचत्वारिंशद्वर्षब्रह्मचर्यपक्षस्तद्विषयः ।

न च तस्याग्निहोत्रादिकर्मानधिकारात्तं प्रति वेदाध्ययनतदर्थ-ज्ञानयोरनुपयोगः । ब्रह्मयज्ञे तदाश्रमविहितकर्मसु तदुत्तरं क्रियमा-णाश्रमान्तरविहितकर्मसु च श्रवणादिषूपयोगसंभवात् । यस्तु मेधावि-तया शीघ्रमेव वेदचतुष्टयं गृहीतुं समर्थो गृहस्थाधिकृतकर्माधिकारी च, तेन यौवनावस्थायामेवाधानकरणाज्जातपुत्रश्रुतेस्तद्विषयत्वम् । अत एव तं प्रति मेधातारम्येन ब्रह्मचर्यादौ पक्षान्तराण्युक्तानि (१)"तदर्धि-पादिकं वापि ग्रहणान्तिकमेव वा "इत्यादिना मन्वादिभिः ॥

तथा राजक्रयात्वर्थिकभोज्यान्नत्वस्मृतेरपि मूलभूता अथर्ववेदे प्रत्य-क्षैव श्रुतिः "तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवती"ति । श्रेयोऽर्थमयं यजते न प्रायश्चित्तार्थमित्येवं विज्ञातस्ये-त्यर्थः । न च अथर्ववेदस्यैकर्त्विक्साध्यशान्तिकपौष्टिकाभिचारादि-विषये प्रामाण्येऽपि वेदत्रयाधिकृतयज्ञादिविषयत्वाभावात् दीक्षितान्न-भोजननिषेधावधिविषये प्रामाण्यासंभवः । दीक्षितान्नभोजननिषेधस्य सर्वपुरुषसाधारणस्य पुरुषार्थत्वेन यज्ञाङ्गत्वाभावात् । अतश्चैवं तत्र विरोधपरिहारः । (२)"न दीक्षितस्यान्नमश्नीयादि "त्यनेन पुरुषार्थत-या निषिद्धस्य दीक्षितान्नभोजनस्य मुख्योऽवधिः अग्नीषोमीयप्रयो-गसंस्थारूपः (३)"अग्नीषोमीये संस्थिते "इत्यनेन विधीयते । आपदि तु ऐतरेयब्राह्मणगतेना "शितव्यं हुतायां वपायां"इत्यनेन वपा-प्रचाररूपः । ततोप्यत्यन्तापदि राजक्रयात्वधिरूपः ।

यद्यपि च(४) "जीवितात्ययमापन्नो योन्नमद्यात्तस्ततः ।

---

१. म. अ. ३-१.  २. मै; सं. ३. ६. ७.  ३. मै. सं. ३. ७. ८.
४. म अ. १०-१०४.

आकाश इव पङ्केन न स पापेन लिप्यते" इति मनुवचनेनापदि सामान्येन निषिद्धमात्रान्नभोजनस्याभ्यनुज्ञानं कृतम् । तथापि विशेषाभ्यनुज्ञाविधिबलाद्दोषतारतम्येनाभ्यनुज्ञाविधीनां व्यवस्था द्रष्टव्या । अतश्चात्यन्तापदि राजक्रयात्पूर्वं दीक्षितान्नभोजने मनुवचनेन सामान्यतोऽभ्यनुज्ञानात्किंचिन्न्यूनो दोषः, राजक्रयादूर्ध्वं च आर्थर्ववैदिकविशेषाभ्यनुज्ञाविधिबलाद्दोषाभावः । अत्यन्तापदभावे तु दोष एव, स्वल्पापदि तु वपाप्रचारात्पूर्वं दोषः, न तु तदुत्तरम् । अनापदि तु अग्नीषोमीयप्रयोगसमाप्तेः पूर्वं दोष एवेति ।

यस्तु अथर्ववेद एव "तस्माद्दीक्षितस्याविज्ञातस्याक्रीतराजकस्याभोज्यं भवती"ति प्रतिषेधः सः न दीक्षितस्येत्यनेनैव क्रीतराजकवदक्रीतराजकस्यापि निषेधसिद्धेर्न तत्प्रतिषेधार्थो विधिः, किन्त्वविज्ञातान्नभोजन एव । यथा जीवितात्ययव्यतिरिक्तात्यन्तापद्यपि अक्रीतराजकान्नभोजनं सदोषम्, तथा अविज्ञातान्नभोजनमपि सदोषमेवेत्येवं सदृष्टान्तं निन्दितुमनुवादः । अन्यथा पृथङ्निषेधे वाक्यभेदापत्तेः । अत एव नाविज्ञातविशेषणं अक्रीतराजकपदम् । निषेध्यस्य निषेधाधिकारेऽनुवाद्यत्वेन तद्विशेषणविवक्षायोगात् । अत एव क्रीतराजकावधिविधौ विज्ञातपदमपि यथाह्यत्यन्तापदि विज्ञातान्नभोजनं न दोषाय, तथा राजक्रयादूर्ध्वं दीक्षितान्नभोजनमपीति सदृष्टान्तं स्तुत्यर्थमनुवादः, परिशेषसिद्धविज्ञातपरत्वानुवादो वा । यदा ह्यविज्ञातान्नभोजननिषेधो न राजक्रयावधिकः, किन्तु यावद्दीक्षानिवृत्त्यनुवर्तते तदा सावधिकदीक्षितान्नभोजननिषेधो र्थाद्विज्ञातपर एवावतिष्ठते । अतश्च राजक्रयावधिवाक्ये विज्ञातपदमर्थसिद्धानुवादः । अतोऽत्र सर्वाभ्यनुज्ञाविधीनां आपदनापद्विषयत्वेन व्यवस्थेति सिद्धम् ।

यत्तु वार्तिके पक्षान्तरमुक्तम्—आथर्ववैदिकोऽपि राजक्रयात्पूर्वं विज्ञातदीक्षितान्नभोजनविषयेऽपि निषेधविधिरेव। तस्यत्ववधिरा-

थर्ववैदिको राजक्रयरूपः । "न दीक्षितस्येति"तु(१)"नेक्षेतोद्यन्तमादित्यं" इतिवत् फलार्थमभोजनसङ्कल्पविधिः । यद्यपि चात्र वद्व्रतशब्दोपक्रमो न विद्यते तथापि एतस्य निषेधविधित्वे आथर्ववैदिकप्रतिषेधस्यानर्थक्यापत्तेरवधिद्वयवैयर्थ्यप्रसङ्गाच्चागत्या लक्षणाश्रयणम् । तस्य त्ववधिद्वयं वपाप्रचाराग्नीषोमीयप्रयोगसंस्थारूपं फलतारतम्यकल्पनया नानुपपन्नं इति । न्यायसुधायां चायमेव पक्षः संमतत्वेनोक्तस्तदनादरादिति द्रष्टव्यम् । न हि 'नेक्षेतोद्यन्त' मित्यादिवदत्र सङ्कल्पलक्षणायां प्रमाणमिति । आथर्ववैदिकस्थक्रीतराजकपदस्याविज्ञातनिषेधैकवाक्यत्वेन अनुवादरूपत्वात् । सत्यपि च तस्य विधित्वे विशेषनिषेधस्य "ब्राह्मणं न हन्यात् परिव्राजकं न हन्यादि"तिवद्दोषाधिक्यख्यापनार्थत्वेनाप्युपपत्तेः ।

किञ्चाथर्ववैदिकनिषेधस्य स्ववाक्य एव विज्ञातावधिकस्यावध्यन्तरापेक्षाभावान्नाथर्ववैदिकावधेस्तच्छेषत्वम् । यत्तु त्रयीगतावध्यंतरदर्शनजनितदोषशङ्कानिराहरणार्थत्वेनास्य तच्छेषत्वमुक्तं, तत् त्रयीगतावधीनां त्वन्मतेऽभोजनसंकल्पविधिशेषत्वात् आथर्ववैदिकनिषेधस्य च स्ववाक्ये निर्ज्ञाताविधिकत्वेनावध्यंतरशङ्कानुपपत्तेः पुरुषशङ्कानिवृत्त्यर्थत्वस्य च वेदवाक्ये क्वाप्यनिष्टत्वेनायोगादयुक्तम् । यदपि चावधिद्वयवैयर्थ्यप्रसंगात्संकल्पलक्षणेत्युक्तम्, तत् आपदनापद्विषयत्वेन वैयर्थ्यस्य सुपरिहरत्वान्न किंचित् । तस्मादुदाहरणायोगादयुक्तं भाष्यकारीयप्रथमाधिकरणम् ।

द्वितीये तु उक्तस्मृतीनामपि शिष्टत्रैवर्णिकैर्धर्मबुद्ध्या तदर्थानुष्ठानाद्दानधर्मादिस्मृतिवल्लोभादिमूलकत्वकल्पनायां नैव किंचित्प्रमाणं पश्यामः । "अपि वा कारणाग्रहणे प्रयुक्तानी" त्यत्र तु न दृष्टमूलासंभवमात्रेणाचारप्रामाण्यमुच्यते, किन्तु धर्मबुद्ध्यानुष्ठीयमानत्वेनैव । अन्वाचयहेतुमात्रं तु दृष्टमूलासंभव इति न विरोधः । अ-

---

१. म. स्मृ. ४-३७.

तोऽन्यथा सूत्रं व्याख्येयम्। यावद्धि प्रत्यक्षश्रुतिविरुद्धासु स्मृतिषु मूलभूतश्रुतिः स्वयं नोपलभ्यते तावत्तदर्थाननुष्ठानलक्षणमप्रामाण्यम्। तस्याः परप्रत्यक्षत्वेऽपि स्वप्रत्यक्षत्वाभावात्। स्वप्रत्यक्षस्य हि विश्रम्भणीयत्वादनुष्ठेयत्वप्रतीतिः स्वारसिकी, परप्रत्यक्षस्य तु मूलानुसंधानसापेक्षत्वाद्दुर्बलेति तयोर्विरोधे यदनपेक्षं यस्य वान्यदपेक्ष्यं नास्ति तत्र श्रौतं विज्ञानं तावदेव प्रमाणमादरणीयं स्यात्, यावत्स्मार्तश्रुतिः प्रत्यक्षेण नोपलभ्यते; तदुपलंभोत्तरं तु द्वयोरपि विकल्पेन व्यवस्थया वा आदरः कार्यः।

नचैवं प्रामाण्याविशेषेऽपि यत्किंचिद्विशेषेणैकार्थादरे भिन्नशाखागतयोः उदितानुदितहोमश्रुत्योरपि स्वपाठित्वविशेषेणैकार्थादरापत्तेः "एवंप्रातरुपोदयं व्युषित उदिते वा" इत्यादिना आश्वलायनस्य समविकल्पाभिधानानापत्तिः, वैषम्यात्। न ह्यस्माभिर्यत्किंचिद्विशेषेणैकार्थादर उच्यते, किन्तु स्मृतेः श्रूयमाणविधिमूलकत्ववन्मन्त्रार्थवादकल्प्यविधिमूलकत्वस्यापि संभवात् "नैकस्यै बहवः सहपतयः" इत्याद्यर्थवादाक्षिप्तस्य च निषेधस्य न्यायेन "नैका बहून् पतीन् विन्देत" इति श्रुतनिषेधानुसारेण वा विवक्षितसाहित्यरूपविशेषणकानेकपतिमात्रनिषेधपरतया व्याख्यानदर्शनात् "य अश्वदाः सहते सूर्येण" इत्यादिमन्त्राक्षिप्तस्य चाश्वदानविधेः "न केसरिणो ददाति" इति श्रुतनिषेधविधिबलेन साक्षाद्विहिताश्वदानविषयत्वेन व्याख्यादर्शनात्। किं बहुना। यत्र श्रूयमाणविधिष्वपि "ग्रहं संमार्ष्टि" पुरोडाशं चतुर्धा करोति" इत्यादिषु न्यायेन "आग्नेयं चतुर्धा करोति" इति वचनान्तरेण वा अनेकग्रहविषयत्वाग्नेयमात्रविषयत्वरूपव्याख्यानदर्शनात्तन्मूलभूतानां स्मृतीनां प्रत्यक्षश्रुतिविरोधेऽन्यथा व्याख्यानसंभवेन परप्रत्यक्षस्यापि मूलस्य यावद्दर्शनं याथार्थ्यानिश्चयेनाप्रामाण्यशङ्कोदयात् स्मृत्यर्थाननुष्ठानेन श्रुत्यर्थादरः कार्य इत्युच्यते। न चैतादृशी शङ्का शाखान्तरप-

ष्ठितेऽस्ति । तस्याश्चधीनत्वे स्वप्रत्यक्षत्वात् । अतश्चानुष्ठानलक्षणा· प्रामाण्यपरतया पूर्वसूत्रं योज्यम् । हेतुदर्शनसूत्रं तु पूर्वाधिकरणशेषतया व्याख्यापक्षे न्यायाभासभ्रान्त्यादिसंभवदर्शनादिसेवं योज्यम् ।

अधिकरणान्तरत्वपक्षे तु आचारमूलकेदानींतनस्मृतिविगाने संभवन्मूलान्तराया अनादृत्यत्वोक्त्यर्थमिति द्रष्टव्यम् ।

एवं च 'सर्वत्र च प्रयुक्तत्वा'दित्यनेन प्रत्यक्षश्रुतिविरोधे न्यायाभासमूलकस्मृतीनामनादरइत्येतत्रोक्तगतार्थत्वापत्तेर्वार्तिककारैर्व्याख्यानान्तरं कृतम् । तद्यथा—

यानि ब्राह्मणीयानि शाक्यादिनिबन्धनानि यानि च सांख्ययोगपांचरात्रपाशुपतादिग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि तानि किं धर्मे प्रमाणं न वेति सन्देहः । तत्र शाक्यादेरपि क्षत्रियादित्वप्रसिद्धेः त्रैवर्णिकत्वादुपपन्नो वेदसंयोगः । अतश्च मन्वादिस्मृतिवदेव त्रैवर्णिकप्रणीतत्वरूपहेतोरविशेषाद्वेदमूलत्वापत्तेर्युक्तं प्रामाण्यम् । सांख्ययोगपांचरात्राद्यागमेषु तु शिष्टत्रैवर्णिकपरिग्रहोऽप्यनुवर्तत एव ।

किं च शाक्यादिग्रन्थेष्वपि अहिंसादिवचनानां तावन्निः स्संदिग्धमेव वेदमूलत्वम् । अतश्च तेषां सत्यवादित्वावगतेरन्यत्रापि वेदमूलत्वानुमानं नानुपपन्नमुपनयनादिस्मृतिदृष्टान्तेनवाष्टकादिषु । न हि शाक्यादिग्रन्थानां वेदमूलत्वं क्वचिन्निराकृतम् । कल्पसूत्राधिकरणे वेदवत् स्वातन्त्र्यस्य, प्रत्यक्षसूत्रे च प्रत्यक्षमूलकत्वाङ्गीकारेण धर्मप्रामाणस्य निराकरणात् । अतश्च मन्वादिस्मृतिवदेव शाक्यादिस्मृतीनामपि प्रामाण्यमिति प्राप्ते—

पूर्वसूत्रेण सिद्धान्तः । पूर्वाधिकरणे हि कर्तृसामान्यरूपसंभावनाहेतुसहकृतः शिष्टत्रैवर्णिकपरिग्रह एव मुख्यो हेतुः । न चासौ शाक्यादिनिबन्धनेष्वस्ति । अत एवात्र पूर्वाधिकरणमुख्यहेतुप्रत्युदाहरणरूपेण संगतिः ।

यत्तु योगादौ पांचरात्राद्यागमेषु च शिष्टत्रैवर्णिकपरिग्रहोऽप्यभि-

शिष्ट इत्युक्तम्, तन्न; विरुद्धसांख्ययोगादेः त्रैवर्णिकपरिगृहीतत्वाभावात् अविरुद्धे तु प्रामाण्यं नैवानिष्टम्। पांचरात्राद्यागमस्य तु शिष्टत्रैवर्णिकापरिगृहीतत्वात् आगमप्रचुरत्वात्सर्वस्यैवाप्रामाण्यम्। अत एव त्वागमरहितानां नृसिंहरामगोपालाद्युपासनाप्रतिपादकानां गौतमीयतन्त्रप्रभृतीनामागमानां सकलशिष्टत्रैवर्णिकाविगीतपरिग्रहात् तापिन्यादिप्रत्यक्षश्रुतिमूलकत्वदर्शनाच्च प्रामाण्यमिष्टमेव।

यदपि च पांचरात्राद्यागमेषु इतरागमसंवादिषूपासनाजातं तदपि चागमप्रचारसिद्ध्यर्थमेवोपनिबद्धमिति तदनुष्ठानं न त्रैवर्णिकानां तन्मूलकम्, अपि तु सदागममूलकमेवेति न विरोधः।

एतेन बाह्यग्रन्थेष्वहिंसादिवचनान्यपि व्याख्यातानि। अतश्च बाह्यग्रन्थादिष्वविगीतशिष्टपरिग्रहाभावादप्रामाण्यम्। यस्तु त्रैवर्णिकप्रणीतत्वाख्यो हेतुः स पूर्वाधिकरण एवान्वाचयहेतुत्वेनोक्त इति न तद्बलेन प्रमाण्याध्यवसानम्। किं च वेदद्वेषिभिरेव प्रणीतत्वात्तैरेव च परिगृहीतत्वान्न वेदमूलकत्वकल्पनावसरः। अतश्च वेदविद्वेषरूपे विरोधे अनपेक्षं इति सूत्रार्थः।

अथ वा शाक्यस्य क्षत्रियत्वप्रसिद्धेः तस्य च प्रवक्तृत्वप्रतिगृहीतत्वनिषेधात् शाक्यस्य च तदनुष्ठातृत्वात् स्वधर्मविरोधे अनपेक्ष्यं इत्यर्थः। न चैवं मनोरपि क्षत्रियत्वेन प्रवक्तृत्वानुपपत्तिः(१) "यद्वै किंच मनुरवदत्तद्भेषजम्" इति श्रुत्या मनुवचनस्याभ्यनुज्ञानात्। सर्वदा च प्रवाहनित्यतया मनुस्वीकारान्नानित्यसंयोगः। न चैवं शाक्यस्याभ्यनुज्ञास्तीत्यप्रमाणमेव तन्निबन्धनम्।

लोभादिकारणांतरदर्शनं चात्राविगीतमेव। शाक्यादिभिश्च स्वप्रतिपाद्यानि सर्वाणि हेतुभिरेवोपन्यस्यन्ते। अतश्च हेतुमूलकत्वस्य स्फुटत्वान्न वेदमूलत्वाध्यवसानम्। न हि मन्वादयः स्वप्रतिपाद्ये सर्वत्र हेतून् वदन्ति। यदपि क्वचित्तेषां हेतूपदर्शनं तदपि "(२) वेद एव

१. तै. सं. २-२-१०-२. २. या. स्मृ. २-४०.

द्विजातीनां निःश्रेयसकरः परः" इत्यादिना प्राधान्येन वेदमूलत्वस्यैव तैरुक्तत्वात् "नेन ह्यन्नं क्रियते" इतिवद्धेत्वर्थवादमात्रम् । अत एव शाक्यादीनां हैतुकत्वात् "हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् इति स्मरणादसंभाष्यत्वम् । तदीयग्रन्थानां च(१) "या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः"इति वचनान्निष्फलत्वस्मृतेरनादरणीयत्वम् ।

न चैवं तेषां हेतुमूलत्वेनैव तर्हि प्रामाण्यं स्यादिति वाच्यम् । तेषामसद्धेतुत्वेनासाधकत्वात् । अतोऽसद्धेतुदर्शनाच्च इति द्वितीयसूत्रार्थः । अतः प्रमाणाभासमूलकान्येव तानीति सिद्धम् ।

यत्तु स्मृत्यधिकरणे सांख्यबाह्यग्रन्थादीनामर्थवत्त्वं वैराग्याद्युत्पादकतयोक्तम्, तत् तदीययुक्तिशास्त्रस्य, न तु धर्मोपदेशशास्त्रस्येति न विरोधः ॥ इति विरोधाधिकरणम् ॥

## ( ३ ) शिष्टाकोपाधिकरणम् ॥

### सू—शिष्टाकोपेऽविरुद्धमिति चेत् ॥ १–३–५ (सि)

एवं भाष्यकारमते श्रुतिविरुद्धानां स्मृतीनां स्वरूपेणैवाप्रामाण्ये, वार्तिककारमते चाननुष्ठानलक्षणाप्रामाण्ये स्थिते संप्रति प्रत्यक्षश्रुतिविरोध एव क्वास्ति क्व नास्तीति विचार्यते ।

अत्र "आचान्तेन कर्म कर्तव्यम्" यज्ञोपवीतिना कर्तव्यम "दक्षिणाचारेण कर्तव्यम" इत्यादिषु स्मृतिषु प्रत्यक्षश्रुतिविरोधाविरोधसन्देहात्प्रामाण्याप्रामाण्यसन्देहः । यद्यपि चात्र भोजनादिनिमित्तकस्याचमनस्य पुरुषार्थत्वान्न विरोधाशङ्का, तथापि क्रत्वर्थे क्षुतादिनिमित्तके पदार्थद्वयमध्ये प्रसक्ते प्रत्यक्षश्रुत्यादिविहितक्रमादिविरोधाशङ्कया जायमानत्वादुदाहरणत्वम् । अत एव

१. म. स्मृ १२–१५.

न सर्वप्रयोगादौ क्रियमाणस्याप्युदाहरणत्वम् । अत एव च वितैत्त्विकपदार्थकरणवेलायामश्रुक्षुतादिनिमित्तोपनिपातेऽपि आचमनविध्यभावान्न तस्योदाहरणत्वम् । किन्तु "क्षुते निष्ठीविते चैव परिधानेऽश्रुपातने । न तु कर्मस्थ आचामेद्दक्षिणं श्रवणं स्पृशेत्" इति स्मृतिविहितस्य दक्षिणकर्णस्पर्शस्यैवोदाहरणत्वम् । तत्राप्यैकपदार्थगतसन्ततानुष्ठानरूपधर्मविरोधशङ्कया जायमानत्वात् । यज्ञोपवीतस्यापि(१) "सदोपवीतिना भाव्यं सदा बद्धशिखेन च" इति सदाशब्दसंयोगात्पुरुषार्थस्यापि "विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्" इत्युत्तरार्धेन कर्तव्यकर्ममात्राङ्गत्वेन विधानात्क्रत्वर्थस्य स्वरूपेणाविरोधेऽपि स्रस्तस्य पुनःसमीकरणेन नष्टस्य वा पुनर्धारणेन क्रमादिविरोधोपपत्तेरुदाहरणत्वम् । अत एव शिखाबन्धनमप्युदाहरणम् ।

दक्षिणाचारवाक्ये "दक्षिणेनाचरती" सेवं कर्तृविशेषणस्यापि "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इतिवद्प्राप्तदक्षिणहस्तस्य विधानात् दक्षिणहस्तस्य च भोजनादौ पुरुषार्थतया विहितस्य क्रमादिविरोधासंभवेऽपि क्रत्वर्थस्य वक्ष्यमाणरीत्या प्रयोगेयत्तादिविरोधशङ्कासम्भवादुदाहरणत्वम् । अतश्च पूर्वाधिकरणकोष्ठशोधनिकारूपेणास्याधिकरणस्य सङ्गतिः ।

अथ वा सत्यपि प्रत्यक्षश्रुतिविहितक्रमादिविरोधे स्मार्तानामप्याचमनादिपदार्थानां प्रधानत्वेन क्रमादीन् प्रति बलवत्त्वादाचमनादिस्मृतीनां प्रामाण्यं सम्भवति न वेति विचारः । तदा चास्यापवादिकयेव सङ्गतिः । पादाध्यायसङ्गती तु स्पष्टे एव ।

तत्र सिद्धान्तेनोपक्रमः । क्रमप्रयोगपरिमाणप्रधानासत्तिपूर्वाङ्गाद्यनतिक्रमप्रयोगप्राशुभावादीनां प्रत्यक्षश्रुतिशिष्टत्वेऽपि पदार्थप्राप्त्युत्तरकालीनत्वात् क्रमादिप्राप्तेः पूर्वं उपदेशातिदेशप्रमाणकान्याङ्गप्रा-

१. भृगु स्मृ.

क्षित्वदाचमनादीनामपि स्मृत्याचारप्रमाणकानां प्राप्तेरविरोधेन शिष्टाकोपनात् । विरोधेऽपि वा पदार्थत्वेन पदार्थगुणभूतक्रमादीन् प्रत्यबाध्यत्वेन शिष्टैरकोपनादाचमनादिस्मृत्याद्यप्यविरुद्धं प्रमाणमेवेति ॥

## सू—न शास्त्रपरिमाणत्वात् ॥ १–३–६. ॥ (पू)

नाचमनादिस्मृतीनां प्रामाण्यम् । शास्त्रेणैव हि क्रत्वङ्गभूताः पदार्थाः क्रमपरिमाणकालैरेतावन्त एवेत्येवं परिमिताः, तत्रान्येषामाचमनादीनां प्रवेशे तद्बाधापत्तिः । तथाहि—क्रमस्तावच्छ्रुत्यर्थपाठादिपाञ्चमिकषट्प्रामाणमात्रगम्यः प्रत्यक्षश्रुतिशिष्ट एव । तत्र श्रुतिक्रमस्तावत् "वेदं कृत्वा वेदिं करोती" त्यादौ प्रत्यक्षश्रुतिविहित इत्यविवादम् । आर्थादिक्रमस्यापि प्रयोगविधिविधेयत्वात् प्रत्यक्षश्रुतप्रधानविधेरेव चाङ्गविध्येकवाक्यतामात्रकल्पनया प्रयोगविधिपदव्यपदेश्यत्वात् श्रुतविधिविहितत्वाविरोधः । तस्य च क्षुतादिनिमित्ताचमनेनायासस्रस्तयज्ञोपवीतपुनःकरणेन च व्यवधाने बाधापत्तिः । न हि स्मार्तानां क्षुतादिनिमित्तकाचमनादीनां वैदिकैः सह क्रमनियामकं किञ्चित् प्रमाणमस्ति । अतः क्रमप्रमाणैर्वैदिकानामेवाङ्गानां क्रमावधारणात् प्रयोगविधानाच्च नियतक्रमकाणामेव पदार्थानां विधानात्तद्बहिर्भूतमाचमनादि न क्रतुप्रयोगविधिना परिगृह्यते ।

तथा किं कश्चित्पदार्थो विस्मृतः किं वा सर्वं कृतं इति सन्देहेन वैगुण्यशङ्कोदये फलावश्यम्भावनिश्चयरूपश्रद्धाविरहाच्छ्रद्धायाश्च (१)"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति"इति वचनेनातिशयवाचितरप्रत्ययप्रयोगेन फलातिशयहेतुत्वावधारणात् तद्विरहेऽर्थात्क्षयावगमात् दैवात्सकलवैदिकपदार्थानुष्ठाने कृतेऽपि संपूर्णफलप्राप्तये कृताकृतसंदेहस्यावश्यापनेयत्वात् तदपन-

१. छा. उ. १–१–१०.

यस्य चानुष्ठेयपदार्थसंख्यासंपत्तिपर्यालोचनं विना कर्तुमशक्यत्वा-त्प्रयोगवचनेनेयत्ताख्यप्रयोगपरिमाणमपि विधीयते । तच्च प्रयोग-विधेर्वैदिकत्वाद्वैदिकांगगतमेव शीघ्रमुपतिष्ठते । अतश्च पश्चादवग-म्यमानस्मार्ताचमनाद्यनुष्ठाने तद्बाधापत्तिः ।

तथा कालोऽपि त्रिविधः श्रौत एव सन् विरुध्यते । तत्राङ्गप्रधा-नप्रत्यासत्तिः पदार्थान्तराव्यवधिरूपप्रयोगशैघ्र्यं च प्रयोगविध्या-क्षिप्तत्वात्पूर्ववदेव श्रौतं वैदिकमात्रविषयं च ॥ पूर्वाह्णाद्यनतिक्रमस्तु वाचनिक इत्यविवादमेव । अतश्च त्रिविधस्यापि कालस्य स्मार्तेना-चमनेन आयासस्नानयज्ञोपवीत पुनःकरणेन च दक्षिणहस्तमात्रसाध्या-नुष्ठानेन विलम्बापत्तेर्बाधापत्तिः ।

न चैवमपि क्रमपरिमाणयोः स्वातन्त्र्येणाननुष्ठेयत्वादङ्गभूतपदा-र्थावच्छेदकत्वेन च पदार्थधर्मत्वावगतेः कालस्य च स्वतन्त्रद्रव्यत्वेऽ-प्यननुष्ठेयत्वादनुष्ठेयपदार्थावच्छेदकत्वेन विधेयत्वात्पदार्थधर्मत्वावग-तेः आचमनादीनां च स्वतन्त्रविधेयत्वरूपधर्मित्वसद्भावात् "धर्मधर्मिवि-रोधे च धर्मिणो बलवत्तरा" इति न्यायेनाचमनादीनां बलवत्त्वावग-तेर्युक्त एव क्रमादीनां बाध इति वाच्यम् । क्रमादीनां श्रौतत्वात् स्मार्तेभ्य आचमनादिभ्यो बलवत्त्वावगतेः । न चैवं बलाबलद्वयस-न्निपाते निर्णायकाभावः । श्रौतत्वस्मार्तत्वरूपप्रमाणबलाबलस्य मा-नाधीनत्वेन "मानाधीना मेयसिद्धिः" इति न्यायेन प्रमेयत्वस्य-प्रमाणोपजीवकत्वादसञ्जातविरोधित्वेन बलवत्त्वावगतेर्निर्णायकस-त्त्वात् । अतश्च श्रौतक्रमादि विरोधे स्मार्ताचमनादिनिवेशायोगा-दप्रमाण्यमेव तत्स्मृतीनामिति पूर्वः पक्षः ॥

सू—अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥
॥ १—३—७ ॥ (सि)

शिष्टैः प्रयुक्तानि आचमनादीनि प्रमाणत्वेन प्रतीयेरन् । बलव-

तो बाधकारणस्यागृह्यमाणत्वात् । तथाहि—श्रौतस्यापि क्रमादेः पदार्थावच्छेदकत्वेन तद्धर्मत्वादाचमनादिपदार्थापेक्षया बलवत्त्वायोगात् । न च प्रमाणबलाबलस्यासञ्जातविरोधित्वेन बलवत्त्वात् क्रमाद्यनुग्रह इति वाच्यम् । प्रमाणयोः स्वरूपेणान्योन्यमहितत्वाद्विरोधाभावेन विरुद्धप्रमेयप्रमापकत्वेनैव विरोधप्रतीतेः । प्रथमं प्रमाणस्वरूपालोचनेऽपि प्रमेयस्वरूपालोचनं विना विरोधाप्रतीतेः तत्स्वरूपालोचनोत्तरं च विरोधप्रतिसन्धाने तद्गतेन धर्मधर्मिरूपप्रमेयबलाबलेनासञ्जातविरोधिना आचमनादेरेव बलीयस्त्वनिश्चये सति क्रमाद्यनुग्रहानुपपत्तेः ।

अत एव प्रमेयविरोधानुसंधानोत्तरक्षणे तद्गतबलाबलोपस्थितिकाले यद्यपि विरुद्धप्रमेयप्रतिपादकत्वेन प्रमाणयोरपि विरोधोपस्थितिः स्यात्, तथापि तत्र प्रमेयबलाबलोपस्थित्युत्तरक्षणे असंजातविरोधित्वानिर्णये सति तन्निर्णयवेलायां प्रमाणगतबलाबलोपस्थितिरितीतरस्य निर्णयपदवीमगतस्य श्रुतिलिङ्गादिवदेवोत्तरभाविनो दौर्बल्यम् । नचैवमाचमनादिभिः क्रमादिबाधे श्रुतेरत्यन्तबाधापत्तिरिति वाच्यम् । श्रुतेराचमनादिनिमित्तोपनिपाताभावे सावकाशत्वात् ।

एवं सामान्यविशेषसावकाशनिरवकाशनित्यनैमित्तिकत्वादिरूपबलाबलेनापि श्रुतेरन्यपरत्वव्याख्योपपत्तेर्बलवद्विरोधाभावेन स्मृतिप्रामाण्याविघातः । अत एव कामश्रुतीनामप्यविशेषप्रवृत्तानां (१) "यस्मिन् देशे मृगः कृष्णः तस्मिन्धर्मान्निबोधत" । इत्यादिविशेषस्मृत्या संकोच इष्ट एव ॥

एवं स्मृत्याचारविरोधे वक्ष्यमाणदौर्बल्यस्याप्याचारस्य प्रमेयकृतबलाबलवैपरीत्ये विशेषरूपत्वे वा स्मृतिसंकोचकत्वमिष्टमेव । अत एव "दीपोच्छिष्टं न भक्ष्यं" इति स्मृतेर्दाक्षिणात्यानां अष्टमी चतुर्दशीमात्रविषयेण कुलधर्मप्रयुक्तदीपोच्छिष्टभक्षणाचरणेन संकोचः । तस्मात्सत्यापि विरोधे बलवद्विरोधाभावात् युक्तमाचमनादि-

१. या. स्मृ-१-२.

स्मृतीनां प्रामाण्यम् । सूत्रं व्याख्यातम् ।

अथ वा "तेष्वदर्शनाद्विरोधस्य" इत्यन्तं सूत्रम्, तदाचानेन सूत्रेण विरोध एव नास्तीति प्रतिपाद्यते । तथा हि–प्रयोगविधिस्तावदनुष्ठापकत्वादुत्पत्तिविध्युत्पादितान् विनियोगविधिविनियुक्तांश्च तत्तत्पदार्थानपेक्ष्य पश्चात्प्रवर्तते इत्यविवादम् । क्रमादयश्च सति प्रयोगविधिनानुष्ठानबोधे केन क्रमेण कस्मिन् कालेऽनुष्ठेयाः पदार्था इत्यपेक्षायां श्रुत्यादिभिः पदार्थप्रयोगावच्छेदकत्वेन विधीयन्त इति ते सुतरां पदार्थप्राप्त्युत्तरकालीनाः । अतश्च यथैव वैदिकत्वाविशेषेऽपि शीघ्रप्रवृत्तश्रौताङ्गमात्रेण प्रयोगविधिसंपत्तिमापाद्य क्रमाद्यकल्पनम्, कृत्वपूर्वस्यानिर्ज्ञातोपायपरिमाणत्वेन श्रौताङ्गमात्रेण नैराकाङ्क्ष्यायोगात् । किन्तु समाख्यादिदुर्बलप्रमाणकानारभ्याधीतशाखान्तरविहितयावदङ्गकलापसंबन्धोत्तरं प्रयोगविधिसंपत्त्यङ्गीकारेणैव तदिति शाखान्तराधिकरणे वक्ष्यते । तथैव स्मृत्याचारप्रमाणकाङ्गसंबन्धोत्तरकालमेव प्रयोगविधिः क्रमाद्यपेक्षा चेति द्रष्टव्यम् ।

न चैवं शाखान्तराधिकरणवक्ष्यमाणन्यायेनैव क्रमादीनां पश्चाद्भावसिद्धेः पौनरुक्त्यापत्तिः; आचमनादीनां स्मार्तत्वाशङ्कायाः आधिक्यात् । अतश्च प्रयोगावच्छेदकत्वेन विधीयमानं क्रमादिकं पदार्थविनियोगवेलायां अविधीयमानत्वात्तदानीं तावत् पदार्थैर्न विरुध्यते । तदुत्तरमपि च पदार्थोपजीवित्वान्नैव विरोद्धुमर्हतीति यथापदार्थमेव क्रमादिकल्पनम् ।

न चार्थक्रमादेः प्रयोगविध्यधीनत्वेऽपि श्रौतक्रमस्य प्रातिस्विकविधिविधेयत्वात् पदार्थद्वयधर्मत्वाच्च न सकलपदार्थप्राप्त्यपेक्षप्रधानप्रयोगविध्यधीनत्वमिति वाच्यम् । पदार्थद्वयधर्मस्यापि क्रमस्य स्वरूपेण पदार्थैः क्रमानपेक्षणाद्द्वित्रपदार्थप्रयोगावच्छेदकत्वेनैव तस्य विधेयत्वात् प्रयोगस्य च सर्वपदार्थसाधारण्येनैव प्रयोगविधिना विधानात्तदधीनत्वोपपत्तेः । अतश्च यथैव अर्थपाठाद्युपस्थापितः क्रमः प्रयोग-

विधिनैव विधीयते तथा प्रातिस्विकविध्युत्पादितोऽपि श्रुतिक्रमः प्रयोगविधिनैव विधीयते । अतश्च षट्प्रमाणकस्यापि क्रमस्य सकलपदार्थप्राप्त्युत्तरकालीनत्वात् न तैः सह विरोध इति सिद्धम् ।

यत्तु स्मार्तैः सह वैदिकपदार्थानां क्रमे न नियामकं प्रमाणमस्तीत्युक्तम्, तत्र यन्नैमित्तिकं स्मार्तमङ्गं तस्य निमित्तसन्निपातादेवोपस्थितत्वात्स्थानमेव क्रमनियामकम् । न च वैदिकपदार्थयोः श्रुत्यादिना बलवता क्रमस्य(१) निश्चितत्वात्स्थानस्य बाधः । स्थानबाधे प्रधानभूतस्य पदार्थस्यैव बाधापत्तेर्बलवत्प्रधानाश्रितस्य दुर्बलस्यापि बाधायोगात् । श्रुत्यादिक्रमस्य निमित्तासन्निपातेऽप्युपपत्तेश्च । अत एव वैदिकस्यापि भेदनहोमादेः स्थानेनैव क्रमनियमः ।

एवं यत्र (२)स्थलविशेषपुरस्कारेणैव स्मार्तपदार्थविधिः तत्रापि (३)स्थलाम्नानादेव क्रमः । तत्र त्वेतावान् विशेषः । श्रुतिस्मृतिविहितक्रमविरोधे स्मार्तक्रममात्रबाधनम्, पदार्थस्त्वन्त एवानुष्ठेयः ।

एवं यत्र क्रत्वङ्गत्वेन स्मृतौ पदार्थमात्रविधिः, न तु स्थलविशेषाम्नानं तत्रापि "आगन्तुकानामन्ते निवेश" इति न्यायेन अन्त एवानुष्ठानम् । इयत्तारूपप्रयोगपरिमाणस्य तु अविस्मृतसमस्तपदार्थानुष्ठानस्य ध्यानाद्युपायान्तरेणाऽपि सिद्धेः प्रयोगवचनेनानाक्षेपात् आक्षेपेऽपि वा क्रमवदेव समस्तपदार्थप्राप्त्युत्तरकालीनत्वात् पदार्थाविरोधः स्पष्ट एव ।

तथा कालस्याप्यङ्गप्रधानासत्तिरूपस्य प्रयोगविधौ तन्त्राभिधानाद्यवगतस्य तदाक्षिप्तस्य च प्रयोगदैर्घ्यस्य प्रयोगविध्यधीनत्वात् स्पष्ट एव पदार्थैरविरोधः ।

एवं पूर्वाह्णादिरूपस्यापि कालस्योत्पन्नवाक्ये श्रूयमाणस्य कर्मस्वरूपेऽनपेक्षणात् स्वमन्त्रविधेयप्रयोगविशेषणत्वेनैव विधेयत्वात्तदधीनत्वम् । यत्रापि स उत्पत्तौ श्रुतस्तत्रापि कर्मस्वरूपे तस्यानपे-

१. नियतत्वात्,　　२. स्थाम,　　३, स्थानादेव,

क्षितत्वात् प्रमाणान्तरानवगम्यप्रयोगद्वारकत्वेनैव (१)विधेयतेति तद-धीनत्वम् ।

किं च यत्र कालविधिवाक्ये करणत्वेन धात्वर्थश्रवणं, यथा पौर्णमास्यां पौर्णमास्या यजेत" इत्यादौ तत्र सेतिकर्तव्यताकस्यैव करणत्वात् 'उच्चैः मवर्ग्येण' इतिवत् साङ्ग एव कालान्वय इति समस्ताङ्गप्राप्त्यधीनत्वमावश्यकम् । न चैवं भूयसां स्मार्तानां पदार्था-नामनुष्ठाने पूर्वाह्णाद्यतिक्रमापत्तिः । साक्षात्प्रधानोद्देशेन विहितस्य कालस्य प्रयोगद्वारकत्वस्याभाव्येनाङ्गेष्ववतीर्णत्वात् प्रधानमात्रे तत्सं-पादनमादृत्य यथासंभवमङ्गेषु तत्संपादनादरस्योपपत्तेस्तदतिक्रम-स्यादोषत्वात् । तस्मात्सिद्धं क्रमाद्यविरोधित्वं पदार्थानामिति ।

किं च प्रकृतोदाहरणे क्षुतादेरशुध्यापादकत्वेन तन्निमित्तस्याच-मनस्योत्तरकर्मापेक्षितशुद्धिसंपादकत्वेनोत्तरकर्माङ्गत्वात् "वेदं कृ-त्वा वेदिं करोति" त्यनेन साङ्गयोर्वेदवेदिकरणयोः क्रमविधानात् वेदिकरणाङ्गेनैवाचमनेन व्यवधानानुपपत्तेः सुतरां क्रमो न विरुध्यते। अतस्तेषु आचमनादिषु क्रमादिविरोधस्यादर्शनादवैदिकप्रणी-तत्वरूपाप्रामाण्यकारणस्याग्रहणे शिष्टैः प्रयुक्तानि आचमनादी-नि प्रमाणत्वेन प्रतीयेरन्निति सूत्रार्थः । एवं भाष्यकारेणा-धिकरणार्थ उपवर्णितः ।

वार्तिककारस्तु विनियोगविधिव्यापारपूर्वकत्वात्प्रयोगविधेः प्रयोगाङ्गतया संगृहीतस्य च क्रमादेः स्मृत्याचारपर्यन्तैः प्रमा-णैर्विनियुक्तेषु सर्वेषु पदार्थेषु सत्सु पश्चात्प्रवृत्तेरविरोधस्य स्फुट-त्वाद्विरोधपूर्वपक्षायोगेनात एवाभ्युपेत्य विरोधं प्रमाणबलपूर्वपक्षायो-गेन चाधिकरणवैयर्थ्यम् ।

न चोदाहरणान्यपि युक्तानि । आचमनविधेस्तावत् (२)उपविश्य हस्ताववनिज्य द्विराचम्य द्विः परिमृज्य दर्भाणां

---

१. विधीयतइति, २. तै, आ, २-११ ।

महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीत" इति प्रत्यक्ष एव श्रुतौ पाठः । यद्यपि चेदं ब्रह्मयज्ञप्रकरणे श्रूयते तथापि ब्रह्मयज्ञाध्ययनस्य कल्पसूत्राधिकरणे(१) "कर्माभ्यासानुसन्धानं विध्यर्थश्चानुगम्यते" इत्यत्र प्रयोगप्राशुभावोपयोगिकर्मानुसन्धानप्रयोजनत्वस्य वक्ष्यमाणत्वेन केवलदृष्टार्थत्वात् तत्स्वरूपार्थत्वे आचमनस्यानर्थक्यापत्तेः साक्षात्तज्जन्यापूर्वाभावेन च ब्रह्मयज्ञापूर्वसाधनलक्षणायोगात्स्वाध्यायसम्बन्धिकर्ममात्रजन्यापूर्वसाधनीभूतस्वाध्यायोच्चारणमात्रलक्षणया प्रयोगाद्बहिर्भूतब्रह्मयज्ञोच्चारण इव प्रयोगान्तःपातिमन्त्रोच्चारणाङ्गत्वेनाप्याचमनविध्यवगतेः कर्मकालीनत्वाविरोधः ।

यत्तु न्यायसुधाकृताऽन्यैश्च ब्रह्मयज्ञाद्यध्ययनस्य केवलदृष्टार्थत्वेऽपि वेदत्वस्य यूपत्वादिवददृष्टरूपत्वात्तत्सिध्यर्थमाचमनादिविधानोपपत्तेः प्रयोगान्तःपातिमन्त्रोच्चारणेष्वपि वेदत्वसिध्यर्थमाचमनाद्यपेक्षितम् ।

अत एवाध्ययनस्यापि केवलदृष्टार्थत्वात्तदीयमङ्गजातमप्यदृष्टरूपे वेदत्व उपयुज्यत इत्युक्तम्, तन्न; वेदत्वस्य प्रत्यक्षावगतानुपूर्वीविशेषत्वातिरिक्तस्य सद्भावे प्रमाणाभावात् । अन्यथा शूद्रादिना तादृशानुपूर्वीकग्रन्थपाठेऽपि धर्मविशेषाननुष्ठानाददृष्टरूपवेदत्वानुत्पत्तेर्वेदाक्षरपाठजन्यदोषानापत्तिः । अदृष्टरूपवेदत्वस्वीकारेऽपि च प्रकरणानुरोधाद्ब्रह्मयज्ञोच्चारणमात्रजन्यवेदत्व एवाचमनोपयोगसम्भवे सर्वार्थत्वकल्पनानुपपत्तिः । अत एवापूर्वाध्ययनाङ्गानामपि न सर्वार्थत्वमिष्टम् । या च तेषां वेदत्वोपयोगितोक्ता सापि द्वादशे निर्विघ्नपरिसमाप्त्यर्थत्वस्य वक्ष्यमाणत्वादयुक्ता । तस्मात्पूर्वोक्त एव वार्तिकाभिप्रायः ।

तथा(२) "स वै व्रतमुपेष्यन्नन्तराहवनीयं च गार्हपत्यं चोप-

---

१. तं. वा. पृ. १७७. २. श. ब्रा. १-१-१

विश्याप आचामती" इयमप्याचमनविधिः प्रत्यक्ष एव । यद्यपि चेदं प्रयोगबहिर्भूतमनैमित्तिकं च नोदाहरणत्वेन संमतम् । तथापि अशुध्यादिनिमित्तकस्यापि "न सोमेनोच्छिष्टा भवन्ति" इति वैदिकनिषेधोन्नीतविधिसिद्धत्वान्नात्यन्तस्मार्तोदाहरणता ।

तथा यज्ञोपवीतमपि(१) "उपव्ययते देवलक्ष्ममेव तत्कुरुते इत्यस्य दर्शपूर्णमासयोः उत्तरीयवस्त्रविन्यासविध्यर्थत्वेऽपि सर्वकर्माङ्गत्वेन त्रिसूत्रनवतन्तुकयज्ञोपवीतविधेः,(२) तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या" इति काठके अनारभ्याधीतत्वाच्छ्रौतम् ।

तथा दक्षिणाचारत्वप्रापकमपि लिङ्गं "प्रागुदक्प्रवणं देवयजनं प्रत्यक्दक्षिणाप्रवणं श्मशानकरणं, यथा वै दक्षिणः पाणिरेवं देवयजनं यथा सव्यः तथा श्मशानकरणं" इति देवयजनगुणविधिपरे वाक्ये औचित्येन स्तुत्यर्थम् । दक्षिणहस्तोपमानं हि दक्षिणहस्तस्य सर्वयज्ञाङ्गत्वेऽवकल्पत इति श्रौतलिङ्गगम्यत्वाद्दक्षिणहस्तस्य न स्मार्तोदाहरणत्वावकाशः ।

वस्तुतस्तु ब्रह्मयज्ञस्यापि "अहरहः स्वाध्यायमधीयीतेति" नित्यत्वश्रुतेरकरणे च प्रायश्चित्ताम्नानाददृष्टार्थत्वावगतेः कर्माभ्यासानुसन्धानस्य चानुषङ्गिकफलत्वेनाप्युपपत्तेरदृष्टोपायापेक्षत्वाच्च त्प्रकरणपठितस्याप्याचमनस्य सर्वकर्मार्थत्वे प्रमाणाभावः । "स वै व्रतमुपेष्य" न्नित्यस्य तु क्रमाद्यविरोधित्वादेवानुदाहरणत्वमिष्टमेव । "न सोमेनोच्छिष्टा भवन्ती"त्यस्य स्मृतिमात्राचमनप्रतिषेधार्थत्वेनाप्युपपत्तेः स्वतो विध्यकल्पकत्वात् कल्पकत्वेऽपि वोच्छिष्टतानिमित्तकस्यैवाचमनविधेः कल्पनेन क्षुतादिनिमितकस्य कल्पने प्रमाणाभावः ।

एवं दक्षिणहस्तोपमानस्यापि प्राङ्मुखावस्थितस्य पुंसो द-

---

१. तै. सं. २-१-११-१. २. तै. आ. २-१-१.

क्षिणहस्ततलं प्रागुदक्प्रवणं भवतीति प्रत्यक्षगृह्यवचनेनैव साक्षाद्रूपेणोपपत्तेर्यज्ञाङ्गत्वबोधकविध्यकल्पकत्वात् कल्पकत्वेऽपि वा सव्यहस्तोपमानस्यापि प्रेतकर्माङ्गभूतसव्यहस्तविध्याक्षेपकत्वापत्तिः । अतश्चानयोः श्रौतत्वादनुदाहरणत्वोक्तिरभ्युच्चयवादमात्रम् ।

यत्तु—न्यायसुधायामन्यत्र च यज्ञोपवीतस्यानारभ्याधीतत्वेऽपि अयागरूपेषु दर्वीहोमादिषु प्राप्त्ययोगात्तेष्वपि कथंचिद "स एष यज्ञः पञ्चविधोऽग्निहोत्रं" इत्यादौ यज्ञशब्दप्रयोगात्प्राप्तिसम्भवेऽपि जपश्राद्धदानादौ प्राप्त्ययोगेन स्मार्तविध्यावश्यकत्वात्तगतेर्यज्ञोपवीतस्यापि श्रौतत्वोक्तिरभ्युच्चयवादमात्रमित्युत्युक्तम् । तन्न । यज्ञोपवीतविधावध्ययनयजनयाजनाद्युद्देश्यानेकत्वकृतवाक्यभेदापत्तिभयेन "अर्धमन्तर्वेदि" इतिवल्लक्षणया विहितक्रियामात्रोद्देशेनैव यज्ञोपवीतविधिप्रतीतेर्दानश्राद्धादावपि प्राप्तिसम्भवेन श्रौतत्वोपपत्तिः ।

वस्तुतस्तु एतद्वाक्यशेषे "(१)अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यं इति यज्ञोपवीतं" इत्यादिना वासोविन्यासप्रतीतेस्तस्यैव श्रौतत्वान्न ब्रह्मसूत्ररूपयज्ञोपवीतस्य श्रौतत्वमिति तस्य तदुक्तिरपि प्रौढैव । तस्माद्भाष्यरीत्याधिकरणवर्णनासम्भवात् सूत्राण्यन्यथा व्याख्येयानि ।

तत्राद्यं सूत्रद्वयं विरोधाधिकरणव्युत्पादितशाक्यादिग्रन्थाप्रामाण्यस्याक्षेपसमाधानार्थम् । तथा हि—यानि शाक्यादिप्रणीतान्येव विहारारामशमवैराग्यध्यानसत्यदमदयाऽहिंसावचनानि वेदाविरुद्धानि तेषां शिष्टत्रैवर्णिकपरिग्रहरूपस्य मुख्यस्य स्मृतिप्रामाण्यहेतोः सत्त्वात् मन्वादिस्मृतिवत् प्रामाण्योपपत्तिरित्येवमाद्यसूत्रेणाक्षिप्य उत्तरसूत्रं योज्यम् । न तेषामपि प्रामाण्यसम्भवः । धर्मप्रतिपादकानां शास्त्राणां परिमितत्वात् । परिमितान्येव हि "(२)पु-

१. तै. आ. २-१-१. २. या. स्मृ. १-३.

राणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश'' इत्यादिना, 'आयुर्वेदो धनुर्वेदो गान्धर्वं चेति तत्त्रयम् । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु' इत्यादिना चतुर्दशत्वाष्टादश वा धर्मप्रतिपादकानि शास्त्राणि । अतश्चानुष्ठानतोऽहिंसाद्यर्थस्य शिष्टपरिग्रहेऽपि तस्य वेदमूलकत्वेनाप्युपपत्तेस्तद्विषयशाक्यादिवचसां शिष्टैः प्रामाण्यानभ्यनुज्ञानेन शिष्टापरिग्रहान्न ततो ज्ञातं सदनुष्ठितं श्रेयःसाधनं भवतीति न तद्विषयशाक्यादिवचसां धर्मे प्रामाण्यसम्भवः ।

न च शिष्टानभ्यनुज्ञानेऽपि सम्वादादेव प्रामाण्यसम्भवः । तथासति अधिगतार्थविषयत्वाच्छाक्यादिवचसां सुतरां प्रामाण्यानुपपत्तेः । अत एव श्रुत्यविरुद्धमिदानींतनसङ्कल्पवाक्यादवगतं सदनुष्ठितमपि कर्म न श्रेयःसाधनं भवति । अध्ययनविधिवशेन वेदादेवावगम्यानुष्ठितं कर्म फलदं भवतीति नियमप्रतीतेः ।

न चैवं याज्ञवल्क्यादिग्रन्थानामपि प्रामाण्यानापत्तिः । तेषां धर्मप्रवक्तृत्वस्य ''(१)वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्, इत्यादिना मनुनाभ्यनुज्ञातत्वान्मनुवचनस्य च (२)''यद्वै किञ्च मनुरवदत्तद्भेषजम्''इति वेदेनैव प्रामाण्यस्याभ्यनुज्ञातत्वात् ।

न च तस्य वाक्यस्य मनुवचनप्रामाण्याभिधायित्वे अनित्यसंयोगापत्तेः मन्यते ज्ञायते अनेनेति व्युत्पत्त्या मनुशब्दस्य वेदवाचित्वमेव कल्प्यतामिति वाच्यम् । क्लृप्तरूढित्यागेन अवयवार्थपरत्वकल्पनायां प्रमाणाभावात् । मन्वादीनां तद्ग्रन्थानां च प्रवाहनित्यताङ्गीकारेण वानित्यसंयोगानापत्तेः । यद्यपि चास्मन्मते प्रलयाद्यस्वीकारवद्युगकल्पादिव्यवस्थाया अपि स्वीकारे प्रमाणाभावः, तथापि घटादिवदेव सर्वत्र कस्यचिन्मनोः स्वीकारान्न प्रवाहनित्यताव्याघातः ।

अत एवेतिहासपुराणादीनां कृत्रिमाणामपि (३)''ऋग्वेदं भगवो-

१ म स्मृ. २-६. २. तै. सं. २-२-१०-२. ३. छा. उ. ७-१-२-

ध्येोमि यजुर्वेदं सामवेदं अथर्ववेदं चतुर्थं इतिहासपुराणं पञ्चम''मिति वेदेनैवाऽभ्यनुज्ञानादुपपन्नम् । तथा नित्यब्रह्मयज्ञविषयत्वं च ।

अत एव ऋग्वेदादिविहितयज्ञाङ्गभ्रेषे प्रायश्चित्तविशेषानभिधाय 'यद्यविज्ञात' इति प्रायश्चित्तान्तरं विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते। अन्यथा हि सर्वस्य प्रत्यक्षवेदे (१)विहितत्वादविज्ञातपदं निर्विषयमेव स्यात् । अतो मन्वादिस्मृतिमाम्ाण्यस्य वेदाऽभ्यनुज्ञातत्वात् साक्षाद्वेदात् तदभ्यनुज्ञातादाऽवगम्यानुष्ठितोऽर्थः श्रेयःसाधनमिति शास्त्रार्थावधारणादध्ययनविध्यवगतनियमभङ्गाप्रसङ्गेन न तत्प्रामाण्यविघातः ।

बाह्यस्मृतीनां तु धर्मप्रवक्तृत्वस्य वेदाननुज्ञानान्मन्वादिभिश्च धर्मप्रवक्तॄणां धर्मप्रतिपादकशास्त्राणां च परिगणनाच्छाक्यादीनां च प्रत्युत धर्मविप्लावकत्वेनैव स्मरणान्न संवादेऽपि प्रामाण्योपपत्तिरिति ।

तृतीयं तु सूत्रं अनिबन्धनानां सदाचाराणां वसन्तोत्सवप्रभृतीनां आत्मतुष्टेश्च प्रामाण्यप्रतिपादनपरम् । यद्यपि च तेषां स्मृत्यधिकरण एव प्रामाण्यं सिद्धं तथाप्यत्र तदेवाक्षिप्य समाधीयते । तत्र उत्सूत्रं पूर्वपक्षं कृत्वा अपि वेसनेन सिद्धान्तः ।

अथवा 'न शास्त्रपरिमाणत्वा'दित्यस्य पूर्वाधिकरणसिद्धान्तसूत्रस्यापीह पूर्वपक्षपरत्वं द्रष्टव्यम् । तत्र यद्यपि स्मृतिवदेव वैदिकपरिग्रहादेः प्रामाण्यहेतोरविशेषः तथाप्याचाराणां स्मृतिवदनिबद्धत्वादप्रामाण्यम् । यदि ह्याचारमूलभूताः श्रुतयः मन्वादीनां प्रत्यक्षाः स्युः तदाष्टकादिवदेव निबध्येरन् वसन्तोत्सवादयः ।

यदपि च "(२)स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनां", (३)"यस्मिन्देशे य आचारः स सदाचार उच्यते" इत्यादि सामान्यतो निबन्धनं तदपि विशेषतः श्रुत्यदर्शनस्य साधकम् ।

---

१. विज्ञातत्वात्.　　२. म. स्मृ. २-६.　　३. म. स्मृ. २-१८.

किं च सामान्यतो निबन्धनमपि सामान्यत एकां श्रुतिं कल्प-यत्यनेकां वा ? नाद्यः। तत्तद्देशजातिकुलभेदभिन्नानामनन्तानामाचा-चाराणामेकोपलक्षणाभावेन एकश्रुतिमूलकल्पनानुपपत्तेः। यदि तु सामान्यस्मृतिवदेव शिष्टाचारः प्रमाणं इत्येवं रूपैव श्रुतिः कल्प्येत, तत आचारमूलिकैव श्रुतिः स्यात् न श्रुतिमूल आचार इति वैप-रीत्यापत्तिः। नान्त्यः। अनन्तश्रुतिकल्पने तावतां पाठासम्भवा-दपठितानां च मूलत्वस्य स्मृत्यधिकरणे निरासात्। अतः सामा-न्यस्मृतेरेव परं श्रुतिसंवाद्याचारप्रामाण्यविषयिणीति वक्तुं युक्तम्।

किं च क्रियारूपाणामाचाराणामशब्दात्मकत्वात् पुरुषहितबो-धकत्वानुपपत्तेः शास्त्रत्वायोगात्प्रामाण्यानुपपत्तिः।

एवमात्मतुष्टेरप्यशब्दात्मकत्वेनाशास्त्रत्वान्न प्रामाण्यम्। किं च आत्मतुष्टेः प्रामाण्ये अशुभेऽपि कर्मणि कस्यचित् तुष्टेर्जायमानत्वा-दव्यवस्थापत्तिः। अत एवोक्तम्–(१)"शूद्रान्नभोजनेनापि तुष्यन्त्य-न्ये द्विजातयः। स्वमातुलसुतां प्राप्य दाक्षिणात्यो हि तुष्यति। अ-न्ये तु सव्यलीकेन मनसा तन्न कुर्वते" इत्यादिना।

किं च श्रुतिस्मृतिविरुद्धस्यार्थस्य शिष्टैराचरणान्न तदाचरणा-त्मतुष्टीनामेकान्तेन प्रामाण्याध्यवसानम्। तथाहि—प्रजापतेरेव ता-वत् 'प्रजापतिरुषसमभ्यैत्स्वां दुहितर'मिति श्रुतेरगम्यागमनम्। इन्द्र-स्याहल्यागमनम्। इन्द्रे च वृत्रब्रह्महत्याभयादपक्रान्ते तत्पदस्थस्य नहुषस्य शचीगमनम्। वसिष्ठस्य पुत्रशोकाज्जलप्रवेशेनात्महत्योपक्रमः।

एवमेव पुरूरवसोप्यूर्वशीनियोगात्। विश्वामित्रस्य चाण्डालया-जनम्। भीष्मस्यानाश्रमिणोऽवस्थितिः। क्रतुकरणं च। धृतराष्ट्रस्या-न्धस्य यागः। युधिष्ठिरस्य अर्जुनेन राक्षसविधिनोढाया द्रौपद्याः परिणयः। तस्यैवाचार्यविप्रद्रोणवधार्थमनृतभाषणम्। अर्जुनस्य मा-तुलदुहितुः सुभद्रायाः परिणयः। तस्य चो'भौ मध्वासवक्षीबौ दृष्टौ

---

१. तं. वा. पृ. १२९.

मे केशवार्जुना''विति मद्यपानम् ।

व्यासस्य गृहीतनैष्ठिकब्रह्मचर्यस्य भ्रातृभार्ययोरम्बिकाम्बालिकयोर्विधवयोर्धृतराष्ट्रपाण्डूत्पादनम् । अत एव न नियोगस्यायं विषयः । तस्य ब्रह्मचारिव्यतिरिक्तविषयत्वेनाप्युपपत्तेः । (१)"यस्या म्रियेत कन्यायां वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः" इति मनुवचनेन नियोगस्य वाग्दत्ताविषयत्वस्मृतेश्च । दास्यां विदुरोत्पादनं च दासीत्वादेवायुक्तम् ।

इदानींतनानामपि चाहिच्छत्रमथुरानिवासिनीनां ब्राह्मणीनां सुरापानम् । उदीच्यानां केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयाः । भार्यापत्यमित्रसहभोजनानि । दाक्षिणात्यानां मातुलसुतापरिणयः । आसन्दीस्थभोजनादि च । प्रतिपुरुषजातिकुलावस्थितान्यधर्माचरणान्यनन्तानि । अतश्च श्रुतिस्मृतिविरुद्धत्वात् परस्परविरुद्धत्वाच्चाप्रामाण्यम् । सम्भवति चात्र सर्वत्र विगानहेतुदर्शनमिसत्प्रमाणमेव शिष्टाचरणात्मतुष्टी इति प्राप्ते—

स्मृतिवदेव धर्मत्वेन शिष्टत्रैवर्णिकपरिग्रहो नासति वेदमूलत्वे आचाराणामवकल्पते । अत एव यत्र लोभादिकारणस्यैव स्मरणं तत्र शिष्टानां धर्मत्वस्मरणाभावादेवावेदमूलत्वोक्तिः सिद्धसाधनमेव ।

एवं श्रुतिस्मृतिविरुद्धाचारेषु क्वचित्सत्यपि धर्मत्वस्मरणे मातुलदुहितृपरिणयनादौ श्रुतिस्मृतिविरुद्धत्वादेव वेदमूलकत्वकल्पनानवकाशः । तत्र श्रुतिविरोधे तावद्विरोधाधिकरणन्यायेन श्रुत्यकल्पनम् । स्मृतिविरोधेत्वग्रे वक्ष्यते । अतश्च श्रुतिस्मृत्यविरुद्धानां शिष्टैर्धर्मबुद्ध्यानुष्ठीयमानानामाचाराणां वेदमूलकत्वम् । अत एव स्मृतौ 'श्रुतिस्मृत्यविरुद्धो यः स सदाचार उच्यते' इत्युक्तम् । वार्तिके तु आर्यावर्तनिवासिशिष्टप्रयाज्यत्वमेव सदाचारत्वोपलक्षणम् । अतश्च तत्रैव श्रुतिकल्पनमित्युक्तम् ।

---

१. म. स्मृ. ९–६९.

वस्तुतस्तु आर्यावर्तगतानामप्याचाराणां श्रुतिस्मृतिविरोधेऽग्राह्यत्वात्तस्यैव सदाचारोपलक्षणत्वं न युक्तम्। अतश्चाचाराणामपि श्रुतिमूलकत्वात् प्रामाण्योपपत्तिः। अत एव स्मृतिकारैरप्याचाराणां (१)"तद्विदां च स्मृतिशीले" इत्यादिना धर्मप्रमाजनकत्वमभ्यनुज्ञातम्। वेदेऽपि महाव्रते "प्रेङ्खमारुह्य होता शंसती"त्यस्यार्थवादे "यदा वै प्रजा मह आविशन्ति प्रेङ्खं तर्ह्यारोहन्ति" इति महशब्दवाच्योत्सवाचारप्रसिद्धिरनूद्यमाना आचारप्रामाण्यं गमयति।

यत्तु क्रियारूपत्वेनाशब्दात्मकत्वादाचाराणां अशास्त्रत्वेन प्रामाण्यानुपपत्तिरित्युक्तम्, तत् मूलभूतशब्दानुमापकत्वेन प्रामाण्यस्य स्मृत्यधिकरण एवोक्तत्वादकिञ्चित्करम्।

यदपि सत्यपि धर्मत्वेन शिष्टपरिग्रहे निबन्धनाभावादाचारमूलभूतस्मृत्यकल्पनं, तदपि मन्वादिभिः सामान्यतो निबन्धनाद्ग्रन्थगौरवभयेन च विशेषतोऽनिबन्धनादसाधकम्।

यदपि च मूलश्रुतेरेकत्वानेकत्वकल्पनं तदप्युभयथाप्युपपत्तेरकिञ्चित्करमेव। तथाहि— यद्यपि तावदेकैव श्रुतिः स्मृत्यनुरूपा कल्प्येत, तथापि तावत्प्रामाण्योपपत्तिः।

यस्त्वस्मिन्पक्षेऽनन्तविलक्षणानामेकोपलक्षणं विना एकविधिविधेयत्वायोगाच्छिष्टाचारत्वेन चोपलक्षणे आचाराच्छास्त्रप्रवृत्तिः शास्त्रादाचरणमितीतरेतराश्रयत्वापत्तिरित्युक्तम्। तत् गोदोहनादिवदाचारस्वरूपमात्रस्य लोकत एव सिद्धेः शास्त्रेण च फलसम्बन्धमात्रकरणाददूषणम्।

न च व्यापाररूपत्वादाचाराणां आग्नेयादिशास्त्रगम्ययागादिस्वरूपेणेवाचारस्वरूपेणापि शास्त्रगम्येनैव भवितव्यम्। अतश्च तत्रोपलक्षणान्तराभावाच्छिष्टाचारत्वस्य चोपलक्षणत्वे इतरेतराश्रयापत्तिरनिवार्यैवेति वाच्यम्। शिष्टव्यवहारतद्बोधकशास्त्रयोरना-

---

१. गौ. ध. १-२.

दित्वेनादोषत्वात् । अतश्च यथैवानादिलोकव्यवहारसिद्धं व्रीह्याद्यु-पजीव्यैव 'व्रीहिभिर्यजेत' इत्यस्य प्रवृत्तावपि न तस्यादिमत्ता, तथै-वानादिवृद्धव्यवहारसिद्धमाचारस्वरूपमुपजीव्यैव तदुत्पत्तिविधिशा-स्त्रस्य फलसम्बन्धबोधकशास्त्रस्य च प्रवृत्तावपि न तस्यादिमत्ता ।

न चैवं शिष्टव्यवहारादेवाचारस्वरूपावगतौ तदुत्पत्तिविधि-वैयर्थ्यम् । आचारस्वरूपस्य प्रमाणान्तरेणावगतावपि शिष्टानामे-वाचारः कर्तव्यः नान्येषां इत्येवं नियमपरत्वेनाप्युपपत्तेः । अतश्च एकेनैव शास्त्रेणानेकाचारविधानोपपत्तेरेकश्रुतिमूलकत्वेनाचारप्रा-माण्योपपत्तिः ।

वस्तुतस्तु आचारस्वरूपस्य शिष्टव्यवहारादेवावगत्यङ्गीका-रे आग्नेयादिस्वरूपस्यापि तत एवावगतिसम्भवादाग्नेयादिशास्त्र-स्य वैयर्थ्यापत्तेरशिष्टाचारे धर्मबुद्ध्यभावेन तद्व्यावृत्त्यर्थमुत्पत्तिवि-धिसार्थक्यानुपपत्तेरेकेन सदाचारत्वेनोक्तरीत्या कथंचिन्नानाविधा-चाराणामुपलक्षणसम्भवेऽपि च विजातीयाचारसम्बन्धिनां नाना-फलानामेकोपलक्षणासम्भवादेकविनियोगविध्युपसङ्ग्रहानुपपत्त्यैकश्रु-तिमूलकत्वकल्पनानुपपत्तेः (१)"अश्रीरा तनूर्भवति रुशती पापयाऽमु-या । पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सति" इत्यादीनां च स्त्रीवा-सःपरिधानाद्याचारमूलभूतानां बहूनां श्रुतिवाक्यानां दर्शनात्प्र-त्येकश्रुतिकल्पनमेव युक्तम् ।

न चैवमनन्तश्रुतिकल्पने पाठासम्भवान्मूलत्वानुपपत्तिः । अ-नेकेषामपि वाक्यानां प्रपाठकमात्रेणोपसंहारोपपत्तेः ।

एवं शिष्टात्मतुष्टेरपि धर्मजनकत्वसन्देहे निर्णायकत्वेन प्रामा-ण्यम् । न हि नियतवेदमार्गानुसारिप्रतिभानां शिष्टानामुन्मार्गेण प्र-तिभानं सम्भवति । अत एव "यदेव किञ्चनानूचानोऽभ्यूहत्यार्षं तद्भवति" इति वेदेनैव शिष्टात्मतुष्टेः प्रामाण्यमभ्यनुज्ञातम् । अतश्च

१. ऋ. सं. ८-३-२५.

-धर्मसन्देहे शिष्टात्मतुष्टेरपि निर्णायकत्वेन प्रामाण्यम् ।

तथात्मतुष्ट्या स्वविषयस्य कस्यचिच्छ्रुत्याद्यविरुद्धस्य भोजनव्यतिरेकेणाहं जलं न पास्ये इत्यादिनियमरूपस्य कर्मणः श्रेयःसाधनताशक्तिरज्ञातैव ज्ञायते। अत एव (१)"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" इति याज्ञवल्क्यवचनं "वैकल्पिकविषये स्वस्यात्मनः प्रियं धर्ममूलम्, यथा "गर्भाष्टमेऽष्टमे वाब्दे" इत्येवं व्याख्याय विज्ञानेश्वरयोगिना "सम्यक्सङ्कल्पज" इत्यनेनात्मतुष्टेः श्रुतिस्मृत्यविरुद्धविषये धर्मत्वज्ञापकत्वमुच्यते इत्येवं व्याख्यातम् । अतश्च श्रुत्याद्यविरुद्धविषयात्मतुष्टेर्धर्मे अज्ञातज्ञापकतयापि प्रामाण्यम् ।

यत्तु न्यायसुधायामात्मतुष्ट्या स्वविषयस्य श्रेयःसाधनत्वशक्तिरुत्पाद्यत इत्येतादृशविषये तस्याः कारकहेतुत्वमेवेत्युक्तम् । तत् धर्ममूलपदस्य बिना कारणं वेदाद्यंशे धर्मज्ञापकत्वं आत्मतुष्ट्यंशे च धर्मकारकत्वं इत्यर्थद्वयपरत्वाङ्गीकरणस्यायुक्तत्वादुपेक्षितम् । अतश्च सिद्धं शिष्टाचारात्मतुष्टीनां धर्मे प्रामाण्यम् ।

यत्तु प्रजापत्यादीनां विरुद्धाचरणान्न प्रामाण्याध्यवसानमिति, तन्न; प्रजापतेस्तावत् "प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्" इत्यस्य प्रजानां पतिरादित्य एव उषसंप्रातः संध्यां आदित्यादुद्भूतत्वेन स्वां दुहितरं उद्यन्नभ्येतीति श्रुतिसामान्यमात्रत्वेनोपपत्तेः न विरुद्धाचरणम् ।

अथ वा प्रजापतीन्द्रतत्पदस्थनहुषशचीनां मनुष्यत्वाभावाच्छास्त्रस्य मनुष्याधिकारकत्वान्न दोषः । व्यासवासिष्ठविश्वामित्राणां तु तपोबलेन "सर्वं बलवतः पथ्यं" इति न्यायाद्विरुद्धाचरणेऽपि न क्षतिः ।

भीष्मस्यापि रत्यर्थं पुत्रार्थं वा पत्न्यभावेऽपि धर्मार्थं तत्सद्भाव-

१. या. स्मृ. १-७.

कल्पनेऽपि नास्ति बाधकम् । अनश्रमाश्रमित्वं क्रतुकरणं चोपपन्नम् । न चैवमपि धर्मार्थायामप्यृतुस्नातायामगमने दोषापत्तिः । पितृभक्तिवशेन गृहीतस्य ब्रह्मचर्यनियमस्य नैमित्तिकत्वान्नित्यर्तुगमनबाधेऽपि न क्षतिः ।

नचैवमप्यनपत्यत्वेन पितृऋणानपाकरणात् प्रत्यवायापत्तिः । (१)"भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्" इति मनुवचनबलेन भ्रातृपुत्रे धृतराष्ट्रादिभिरप्यानृण्यसिद्धेः । न चानुक्तदारकल्पने प्रमाणाभावः । (२)"अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति" इति विशेषणोपादानसामर्थ्यात्पूर्वं दारसद्भावप्रतीतेः ।

एवं धृतराष्ट्रस्य यथैव व्यासानुग्रहवशात्पुत्रदर्शनं, तथैव क्रतुकालेऽप्याज्यादिदर्शनोपपत्तिः । यद्वा "अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः इत्यत्राश्वमेधसमफलादिदानादीन्येव 'यजदेवपूजासंगीतकरणदानेष्वि'त्यनुशासनादुच्यन्ते इति न विरोधः ।

यत्तु भीष्मस्यापि दानादिकरणेनैव क्रतुकरणश्रवणोपपत्ते र्भार्याकल्पने प्रमाणाभाव इति कैश्चिदुक्तम्; तत् क्रतुकरणोपपत्तावपि अनाश्रमित्वविरोधस्य दुष्परिहरत्वा(३)दयुक्तम् । ब्रह्मचर्याश्रमित्वं तु गुरुकुलनिवासभिक्षाटनाद्यभावान्नैवाशङ्क्यम् "स्त्रीसहस्रैः परिवृतं समग्राङ्गमरोगिणम् । ऋते शान्तनवाद्भीष्मान्न पश्याम्यूर्ध्वरेतसम्" इति स्त्रीश्रवणाच्च ।

द्रौपदीपरिणयस्तु पञ्चानां द्रौपद्या वेदि(४)मध्योत्पत्तिकत्वेनामानुषीत्वात्तस्याः श्रियोंशत्वाच्च श्रियश्च सर्वोपभोगेऽपि बाधकाभावात्, ईश्वरेण च पंच ते पतयो भविष्यन्तीति वरदानेन प्रतिसङ्गमं च कन्यात्वप्रार्थनाच्चादोष इति व्यासेनैव स्पष्टीकृतम् ।

---

१. म. स्मृ. ९–१८२. २. म. भा. आदि. १००–९४.

३. उपेक्षणीयम्. ४. मध्योत्थितत्वेन.

द्रोणवधार्थमनृतभाषणं त्वधर्म एव । अत एव तत्प्रायश्चित्तरूपोऽश्वमेधोऽपि तेन कृतः । कामकृतेऽपि ब्रह्मवधे (१)"कामकृतेऽप्येके" इति स्मरणेन प्रायश्चित्तानुज्ञानादश्वमेधस्य च ब्रह्महत्यातरणफलकत्वस्य (२)"तरति ब्रह्महत्याम्" इत्यनेनोक्तत्वात्प्रायश्चित्तरूपत्वाविघातः ।

एवमर्जुनस्य मातुलकन्यायाः सुभद्रायाः परिणयेऽपि सुभद्राया वसुदेवकन्यात्वस्य साक्षात्क्वचिदप्यश्रवणात् "अनुजा वासुदेवस्य सुभद्रा वरवर्णिनी" इत्यस्य च कृष्णसपत्नीमातृरोहिणीदुहितृत्वप्रसिद्धेः रोहिणीभगिनीदुहितृत्वेनाप्युपपत्तेः, पितृष्वस्रीयाया वा लाटादिषु भगिनीशब्दाभिलप्यत्वेन प्रसिद्धत्वाद्रोहिणीपितृष्वस्रीयासुता सुभद्रा तत्सपत्नीसुतस्य कृष्णस्य भगिनीत्येवमुपपत्तेः मातुलकन्यात्व एव प्रमाणाभावात्परिहर्तव्यम् ।

ननु अर्जुनमातुः पृथायाः वसुदेवभगिन्या अपि पित्रा शूरेण कुन्तिभोजाय दत्तकविधिना दत्तत्वात् दत्तायाश्च "पिण्डगोत्रे जनयितुः न भजेदत्रिमः क्वचित्" इतिवचनात्सापिण्ड्यनिवृत्तेस्तत्सुतस्यार्जुनस्य वसुदेवकन्याया अपि सुभद्रायाः परिणयाविरोधाद्व्यवधानकल्पनमनर्थकमिति चेत्—

अत्र केचित् । "(३)पुत्रं प्रतिग्रहीष्यन्व्याहृतिभिर्जुहुयादिति" दत्तकविधिवाक्ये पुमपत्यप्रतिग्रहस्यैव श्रवणाद्दत्तकविधिना कन्याप्रतिग्रहे प्रमाणाभावात् पृथायाः कुन्तिभोजप्रतिग्रहश्रवणस्य च पालयितृत्वेनाप्युपपत्तेः सापिण्ड्यनिवृत्त्यसंभवेन नानर्थकं व्यवधानकल्पनमिति, तन्न; रागतः प्राप्तस्यापत्यकार्ये अन्यापत्यप्रतिग्रहस्यात्र व्याहृतिहोमं प्रतिलिङ्गश्रुत्या निमित्तत्वरूपोद्देश्यत्वेनोपादानात् विशेषणस्य पुंस्त्वस्याविवक्षितत्वात् । न चात्र पुंस्त्वं प्रातिपदिकार्थः, पुत्रप्रातिपदिकस्यापत्यमात्रवाचित्वात् । अन्यथा पु-

---

१. व. स्मृ. २०. २. २. तै. सं. ५-३-१२-२. ३. व. स्मृ. १५-६.

ऽतिस्त्रीप्रत्ययानुपपत्तेः । अतश्चापत्यमात्रप्रतिग्रहे दत्तकविधिः । अत एव रामायणादौ सर्वत्र कन्याप्रतिग्रहोऽपि श्रुतः, मदनपारिजातादिनिबन्धेष्वपि निबद्धः अविगीतशिष्टाचारश्च तद्विषयको दृश्यते ।

अस्तु वा पुंस्त्वविशिष्टापत्यं प्रातिपदिकार्थः, तथाऽपि पुंस्त्वविशिष्टापत्यत्वस्य उद्देश्यतावच्छेदककोटिप्रवेशे गौरवापत्तेः लाघवेनापत्यत्वमात्रस्य प्रवेशप्राप्तौ रामायणाद्यनेकविधतात्पर्यग्राहकमपि पुंस्त्वांशेऽविवक्षासूचकनयोपोद्बलकम् ।

अस्तु वा पुंस्त्वाविवक्षा । तथापि नैमित्तिकोऽयं व्याहृतिहोमः कन्याप्रतिग्रहे मा जायताम् । कन्याप्रतिग्रहस्तु रामायणादिप्रामाण्याद्भवत्येव । न हि व्याहृतिहोमोऽयमदृष्टरूपपुत्रत्वोत्पादकः, तादृशपुत्रत्वे प्रमाणाभावात्; व्याहृतिहोमानाधिकारिणः प्रतिग्रहमात्रेण पुत्रत्वानुत्पत्तिप्रसङ्गाच्च । तस्मादपुत्र एवायं पुत्रकार्ये विधीयते, प्रतिग्रहमात्रेण वा पुत्रत्वमुत्पद्यते, व्याहृतिहोमस्तु नैमित्तिक एव । अतश्च कन्याप्रतिग्रहोऽप्यविरुद्धः ।

अत एवं परिहर्तव्यम् "(१)ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च, मातृबन्धुभ्यश्च पञ्चमादि" तिस्मृतेः बीजिसन्तानजाया अपि परिणयनिषेधः । पिण्डगोत्रेति तु पिण्डदानावश्यकत्वनिषेधार्थम्, न तु सापिण्ड्यनिषेधार्थमिति न विरोधः ।

यत्तु अर्जुनस्य मद्यपानं तत् "(२)नित्यं मद्यं ब्राह्मणः (वर्जयेत्)" इति स्मृतेः न क्षत्रियस्यार्जुनस्य दोषावहम् ।

यत्तु(३) "सुरा वै मलमन्नानां पाप्मा वै मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" इति वाक्यम् तत् वाक्यशेषादन्नविकारपैष्टसुराया एव त्रैवर्णिकं प्रति निषेधार्थम् । यदपि(४) "गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा । यथैवै

---

१. गौ. ध. ४-३.        २. गौ. ध. २-२०.
३. म. स्मृ. ११-९३.        ४. म. स्मृ. ११-९४.

का तथा सर्वा न पेया ब्रह्मवादिभिः" इति मनुवचनं तदपि न त्रै-वर्णिकपरम्। अन्यथा पैष्टीनिषेधाधिकारे त्रैवर्णिकप्रक्रमादेव गौडी-माध्व्योरपि त्रैवर्णिकविषयत्वोपपत्तौ यथैवैकेति उत्तरार्धानर्थक्य-प्रसङ्गः।

अत एव ब्रह्मवादिभिरिति ताच्छील्यादिवाचिणिनिप्रत्यय-स्याप्युपपत्तिः। अन्यथा हि वेदोच्चारणशीलत्वादेस्त्रयाणामपि व-र्णानां सत्वात्ताच्छील्यादिवाचकस्य णिनेरविशेषकत्वेनानर्थक्यापत्तेः। शूद्रनिवृत्तिश्च कर्तृमात्रवाचितृजादिप्रयोगमात्रेण सिद्धैव।

यद्यपि दुष्टशूद्रस्यावैधवेदोच्चारणकर्तृत्वसम्भवान्न तृजादि-प्रत्ययेन तन्निवृत्तिः। अतश्च वैधत्वावेदकणिनिप्रत्ययसार्थक्य-मप्याशङ्कितुं शक्यम्, तथापि सकलोत्तरार्धैवयर्थ्यभिया वदतेः प्र-वचनपरत्वाङ्गीकारेण णिनेश्च दुष्टक्षत्रियादेरवैधवेदप्रवचनकर्तृत्वसम्भ-वात्तद्व्यावृत्त्यर्थत्वेनार्थवत्त्वोपपत्तेः मनुवचनस्य ब्राह्मणमात्रविषय-त्वावगतिः।

अत एवोत्तरवाक्ये(१)"यक्षरक्षः पिशाचान्नं मद्यं मांसं सु-रासवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः" इति स्पष्टं ब्राह्मणग्रहणम्। सत्यपि च तालाद्येकादशविधमद्यनिषेधे विशि-ष्य गौडीमाध्वीनिषेधो दोषाधिक्यख्यापनार्थः। श्रुतावपि(२)"पा-प्मा वै माल्व्यं तस्माद्ब्राह्मणस्सुरां न पिबेत्, न पाप्मना संसृज्यते। तदेतत् क्षत्रियो ब्राह्मणं ब्रूयान्नैनं सुरा पीता हिनस्तीति य एवं वि-द्वान् सुरां पिबतीति" ब्राह्मणस्यैव गौडीमाध्वीनिषेधो न क्षत्रिय-स्येति स्पष्टम्।

इदं च, न पैष्टीविषयम्। मनुना नित्यं पैष्टीनिषेधस्य त्रैवर्णिक-विषयत्वेनोक्तत्वात्। एतस्य चान्यार्थदर्शनमात्रत्वेन स्वतोऽविधायक-त्वात्। अतश्चार्जुनस्य क्षत्रियत्वान्माध्वीसुरापानेऽपि न क्षतिः।

---

१. म. स्मृ. ११-९५. २. का. सं. १२-१२. मै. सं. २-४-२.

यत्तु अहिच्छत्रब्राह्मणीनां सुरापानं, दाक्षिणात्यानां च मातुलकन्यापरिणयादि, तत्र केचिदेवं परिहरन्ति । "येषां परंपरामाप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः" इत्यापस्तम्बवचनात् (१)"येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति" इति मनुवचनाच्च देशव्यवस्थया स्मृत्याचारयोः प्रामाण्यम् । अतश्च यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः, अतस्तदन्यदेशविषयैव तन्निषेधस्मृतिरिति न विरोध इति । तन्न; (२)"देशाचारधर्मांश्चाम्नायैरविरुद्धाः प्रमाण"मिति गौतमेन स्मृतिविरुद्धानामप्याचाराणामप्रामाण्यस्वीकारात् । न चात्राम्नायपदं वेदपरं "आम्नायः स्मृतिधारक" इति शङ्खलिखिताभ्यां स्मृतिग्रन्थेऽप्याम्नायशब्दप्रयोगात् ।

अत एव बौधायनेन (३)"पञ्चधा विप्रतिपत्तिः दक्षिणत अनुपनीतेन च भार्यया च सह भोजनं, पर्युषितभोजनं, पितृष्वसृमातुलदुहितृपरिणयनमिति । तथोत्तरतः पञ्चधा ऊर्णाविक्रयः, सीधुपानं, उभयतोदद्भिर्व्यवहारः, आयुधीयकं समुद्रयानमिति," इति स्मृतिविरुद्धशिष्टाचरणान्यनुक्रम्य "इतर इतरस्मिन् कुर्वन् दुष्यति नेतरस्मिन् देशप्रामाण्या"दित्यनेनापस्तम्बोक्तमेवोपन्यस्य, (४)"मिथ्यैतदिति गौतमः, उभयंत्वेतन्नाद्रियन्ते शिष्टस्मृतिविरोधा"दित्यनेन निराकृतम् । आपस्तम्बवचनं तु गर्हानिराकरणपरतया व्याख्येयम् । मनुवचनं तु सतां मार्गं इति विशेषणादविरुद्धाचारपरं व्याख्येयमिति न विरोधः । अतश्चाहिच्छत्रब्राह्मणीसुरापानादेरनाचारत्वमेव ।

ननु "ब्राह्मणो न सुरां पिबे" दित्यत्र ब्राह्मणस्योपादेयत्वात्तद्विशेषणस्य पुंस्त्वस्य पशवेकत्ववद्विवक्षितत्वेन ब्राह्मणीनां सुरापानस्य स्मृतिविरुद्धत्वाभावादनाचारत्वे प्रमाणाभावः । न ह्यत्र ब्राह्मणं

---

१. म. स्मृ ४-१७८.    २. गौ. ध. ११-२०.
३. बौ. ध. १-१-२०.    ४. बौ. ध. १-१-२५.

हन्यादितिवद्ब्राह्मणस्योद्देश्यत्वं शाब्दम् । येनाविवक्षा आशङ्क्येत ।

अत एव वधनिषेधे ब्राह्मणस्य भूतभाव्युपयोगाभावेन संस्कार्यत्वादनुपादेयपक्षक्रव्यतिरेकेऽपि "ब्राह्मणं न हन्यात्, ब्राह्मणो न हन्तव्यः" इत्यादौ तव्यद्वितीयायोगेनोद्देश्यत्वस्य शब्दवृत्त्यैवोक्तत्वात् तद्गतयोर्लिङ्गसङ्ख्ययोरविवक्षा । यस्तु ब्राह्मणस्त्रीवधे द्वादशाब्दप्रायश्चित्तमहापातकित्वाद्यभावः स च वाचनिकः ।

अत एव तद्विशेषे आत्रेय्यामेव केवलायां ब्राह्मण्यां हतायां भ्रूणहत्याप्रायश्चित्तविधानात् पुनः पातित्यादिप्रतिप्रसवोऽप्युपपन्नः । सुरापाननिषेधे तु सत्यपि ब्राह्मणस्य प्रत्यवायध्वंसात्मकत्वानुग्राह्यत्वात्स्वर्गकामादिवदधिकारितयोद्देश्यत्वे 'ब्राह्मणो न सुरां पिबेत्' 'ब्राह्मणेन सुरा न पेया' इत्यादौ प्रथमातृतीयाभ्यां कर्तृत्वेनोपादेयत्वस्य शब्दवृत्त्योक्तत्वात्तद्गतस्य लिङ्गसंख्यादेरविवक्षित्वे प्रमाणाभाव इति चेत्—

न; ब्राह्मणस्योपादेयत्वेऽपि अनुवाद्यत्वेन तद्विशेषणस्य लिङ्गसंख्यादेः विवक्षायोगात् । तथाहि—नोपादेयत्वोद्देश्यत्वे विवक्षाऽविवक्षाकारणम्, किन्तु विशेष्यस्य विशेषणापेक्षानपेक्षे, ते च विशेष्यस्य ज्ञातरूपत्वे अज्ञातरूपत्वे च भवत इति फलतो विध्यनुवादावेव विवक्षाविवक्षाकारणम् ।

अत एव "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन" इत्यादावुद्देश्यस्याप्यमावास्याकालस्याप्राप्तत्वेन विधेयत्वात्तद्विशेषणस्यापराह्णसाहित्यस्य विवक्षा । "सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्" इत्यत्र चाख्यातोपात्तस्य कर्तुरुपादेयत्वेऽप्युदवसानसमानकर्तृकत्ववाचिक्त्वाप्रत्ययबलेनैव प्राप्तस्य तस्याख्यातेनानुवादात् तद्विशेषणस्य साहित्याविवक्षा । "शुक्रं यजमानोऽन्वारभते" इत्यादौ तु स्वरूपेण प्राप्तस्यापि यजमानस्य कर्तृत्वेन विधेयत्वात्तद्विशेषणैकत्वविवक्षायां न कश्चिद्विरोधः ।

अतश्च निषेधवाक्येऽपि ब्राह्मणकर्तृकसुराकर्मकपानकरणकप्रवृत्तिरूपामार्थीभावनामेवाख्यातवाच्यामनूद्य नञ्सहकृतेन लिङा प्रवृत्त्यभावरूपनिवृत्तिजनकव्यापाररूपाया निवर्तनाया विधानाद्ब्राह्मणस्यानुवाद्यत्वेन निर्ज्ञातविशेषणस्य विशेषणान्तरानपेक्षत्वान्न तद्विशेषणस्य लिङ्गसंख्यादेर्विवक्षासम्भवः ।

नचैवमनुवाद्यायाः प्रवृत्तेर्विशेषणानां ब्राह्मणादीनामपि विवक्षानापत्तिः निर्विषयायाः निष्कारकायाश्च प्रवृत्तेः पानस्य च निषेद्धुमशक्यत्वेन हविरार्तिवदगत्यानुवाद्यविशेषणस्यापि विवक्षाङ्गीकारात् । न हि कर्तृसामान्यगतं सुरापानं प्रतिषेद्धुं शक्यम् । पश्वादिगतस्यापि तस्य प्रतिषेधापत्तेः । अतः कर्तृविशेषापेक्षायां यावन्न्यायेन सामर्थ्याद्यालोच्य विशेषनिर्णयः तावत्प्रत्यक्षश्रुतेन ब्राह्मणपदेन विशेषसमर्पणाद्युक्ता तद्विवक्षा । तावतैव च निषधस्य पर्यवसानात् नातिरिक्तब्राह्मणादिगतलिङ्गसंख्यादिविवक्षा युक्ता ।

अत एव वधनिषेधेऽपि ब्राह्मणस्य न शब्दवृत्त्यैवोद्देश्यत्वेन विशेषणाविवक्षा । तथा सति 'वेदविदे गां ददाति' इत्यत्रापि गोर्द्वितीयायोगेन शब्दवृत्त्योद्देश्यत्वात्तद्गतस्य स्त्रीत्वादेर्विवक्षापत्तिः । अपि तु अनुवाद्यत्वेनैव, अतश्चोभयत्राप्यनुवाद्यत्वान्न तद्विशेषणस्याविवक्षितत्वम् ; किमुत यदा सुरापाननिषेधवाक्ये ब्राह्मणस्य प्रसवायत्व्यावृत्त्याऽनुग्राह्यत्वादधिकारित्वेन प्राधान्यावगतेः स्वर्गकामादिवन्मुख्यमेवोद्देश्यत्वं, तदा तद्गतेक तद्विशेषणविवक्षायां न किंचित्साधकं पश्यामः । तस्माद्ब्राह्मणीनामपि सुरापानस्य श्रुतिस्मृतिविरुद्धत्वात्तद्विषयकाशिष्टाचारस्य न श्रुतिमूलत्वमिति सिद्धम् । अतश्च तादृशाविषये धर्मत्वप्रसिद्धेरेवाभावेन श्रुसकल्पनेऽपि बाधकाभावाद्धर्मत्वप्रसिद्धिविषयाणामाचाराणां श्रुतिमूलकत्वेन प्रामाण्यं सिद्धमेव ॥

॥ इति शिष्टाकोपाधिकरणम् ॥

## ( ४ ) यववराहाधिकरणम् ।

### सू०—तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् । १–३–८( पू ) ॥

इह भाष्यकारेण तावत् "यवमयश्चरुः, 'वाराही उपानहौ' "वैतसे कटे प्राजापत्यान् संचिनोति" इत्यादौ यववराहवेतसशब्दाः बहुभिरार्यैः प्रियङ्गुवायसजम्बूवृक्षेषु प्रयुज्यन्ते । कैश्चिदेव तु दीर्घशूकसूकरवञ्जुलेषु । तत्रैतेषां शब्दानां किमुभयत्र शक्तिरुतैकत्रैवेति विचारितम् । अत्र पूर्वाधिकरणे आचारप्रामाण्यस्य स्थापितत्वात्तत्प्रसंगेन शब्दार्थप्रयोगरूपाचारविप्रतिपत्तौ बलाबलचिन्तनात्सङ्गतिः।

यद्यपि च भाष्यकारेण पूर्वाधिकरणे आचारप्रामाण्यं न स्थापितम् तथापि स्मृत्यधिकरण एवोभयोरपि स्मृत्याचारयोः प्रामाण्यस्य स्थापितत्वाद्विरोधाधिकरणे चोभयोरपि श्रुतिविरोधे प्रामाण्यस्यापोदितत्वात्, शिष्टाकोपाधिकरणे चोभयोरपि श्रौतक्रमादिविरोधे प्रामाण्यस्य प्रतिप्रसूतत्वात्स्मृतिप्रामाण्यवदाचारप्रामाण्यस्यापि प्रस्तुतत्वेन शब्दार्थप्रयोगाचारविप्रतिपत्तौ बलाबलचिन्तनस्य युक्तैव प्रसङ्गसङ्गतिः ।

ननु पूर्वाधिकरणे धर्मबुद्ध्यानुष्ठीयमानानामेवाचाराणां श्रुतिमूलकत्वाभिधानात् स्वार्थे शब्दप्रयोगरूपाचारस्य च केवलदृष्टार्थत्वेन धर्मबुद्ध्यानुष्ठीयमानत्वाभावादेव पूर्वाधिकरणाप्रस्तुतत्वेन कथं प्रसङ्गसङ्गतिः? धर्मप्रमाजनकत्वाभावाच्च धर्मप्रमाणजिज्ञासाभावेन कथं लक्षणसङ्गतिरपीति चेत् —

न; व्याकरणाधिकरणे 'साधूनेव प्रयुञ्जीत नासाधून्, इत्यस्याः स्मृतेर्वेदमूलत्वाभिधानेनानादिवाचकाख्यसाधुशब्दप्रयोगस्यापि धर्मबुद्ध्यानुष्ठीयमानत्वाविशेषात्साधुशब्दप्रयोगस्य (१)साक्षाद्धर्मरूपत्वा-

१. न साक्षाद्धर्मरूपत्वेऽपि.

भावेऽपि अनुषंगतः पदार्थप्रतिपत्तिमुखेनापि धर्मप्रमोपयोगितया प्रामाण्यसंभवेन धर्मप्रमाणजिज्ञासोपपत्तेः । अतः सङ्गत एवायं विचारः ।

तत्र प्रयोगप्रत्ययोरुभयत्राप्यविशेषादुभयत्रापि शक्तिः । न च तयोरेकत्र गौणार्थविषयत्वकल्पनेनाप्यन्यथासिद्धिः, विनिगमनाविरहेणोभयत्र शक्तिकल्पनस्यैव न्याय्यत्वात् ।

न च प्रयोगगताल्पत्वबहुत्वाभ्यामेव विशेषग्रहणम् । अक्षादिशब्दानां बिभीतकादावल्पप्रयोगसत्त्वेऽपि वाचकत्वानपायात् । अत एवोक्तं निरुक्तकृता (१)"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते कंबलः कमनीयो भवति विकारमस्यार्या भाषन्ते (शवमितिमृतशरीराभिधानात्)" इति । तस्मात् समेयमभिधानविप्रतिपत्तिः ।

न च वाचकत्वाविशेषेऽपि देशविशेषव्यवस्थया वाच्यविशेषव्यवस्थोपपत्तेः समविकल्पो न युक्त इति वाच्यम् । वाच्यत्वापादिकायाः शक्तेस्सत्त्वे तद्देशीयपुरुषाणामिवान्यदेशीयपुरुषाणामपि प्रतीतेरनिवार्यत्वेन व्यवस्थानुपपत्तेः । अतो यवादिशब्दानामर्थद्वयवाचकत्वेऽपि शक्यतावच्छेदकभेदेन शक्तिद्वयकल्पनात् युगपद्वृत्तिद्वयाविरोधभयेन च समुच्चयेनार्थद्वयपरत्वकल्पनानुपपत्तेः सैन्धवादिशब्दवत् असति तात्पर्यग्राहके विकल्पेनैवार्थद्वयपरत्वम् । एवं च यवादिशब्दवद्व्रीह्यादिशब्दानामपि देशविशेषे नीवारादौ प्रयोगसत्त्वे उभयोरपि शक्यत्वापत्तेः प्रकृताविव 'नैवारश्चरुर्भवति' इत्यादौ नीवारेष्वपि व्रीहिपदस्यैव प्रयोगोपपत्तेः(२) 'व्रीहीणां मेध'इति मन्त्रे ऊहाप्रसंगेनार्षचोदकानुग्रहान्न विरोधः स्यात् । अन्यथा व्रीहिपदस्य नीवाराद्यवाचकत्वेनानतिदेशाद्व्रीहिपदप्रापिचोदकविरोधः स्यात् । अतोऽस्मत्पक्षे विरोधादर्शनादपि समेयमभिधानविप्रतिपत्तिः इति सूत्रार्थः ।

---

१. नि. २-१-४.　　　　२. तै. ब्रा. ३-७-४४.

## सू०—शास्त्रस्था वा तन्निमित्तत्वात्। १—३—९ (सि)

न प्रयोगप्रत्ययाभ्यामुभयत्र शक्तिर्युक्ता कल्पयितुम्। तयोर्गौण्या वृत्त्या शक्तिभ्रमेण वाप्युपपत्तेः। अत एव चैकत्रैव मुख्यत्वप्रतीतिः प्रमारूपा, नोभयत्र। एवं चानेकशक्तिकल्पनाक्लेशो न भविष्यति। अन्यथा हि शक्तेर्वाचकशब्दनिष्ठाया वाच्यार्थनिरूपिताया्श्च यथैव वाचकानेकत्वकृतं नानात्वं तथैव वाच्यानेकत्वकृतमपि तत्प्रसज्येत। नाह्यक्षादिशब्देषु शक्यतावच्छेदकनानात्वे सति यथैव शक्त्या विदेवनादेरुपस्थितिः तथैवेन्द्रियादेरपि सम्भवति, एकाकारबुद्धिप्रसङ्गात्। युगपद्बुद्धिप्रसङ्गाच्च।

अत एव पुष्पवन्तावित्यादौ दिवाकरनिशाकरयोर्युगपदुपस्थितेरेकशक्त्यङ्गीकारेऽपि न क्षतिः।

वस्तुतस्तु तत्रापि शक्यतावच्छेदकनानात्वाच्छक्तिभेद एव। युगपद्बोधात्तु शक्तिद्वयस्यापि युगपद्बोधजनकत्वाङ्गीकरणम्। अत एव क्त्वाप्रत्ययादौ समानकर्तृकत्वपूर्वकालत्वयोः विशेषणविशेष्यभावे नियामकाभावाच्छक्तिद्वयं परिकल्प्य युगपद्बोधजनकत्वं कल्प्यते। अक्षादौ तु बोधयौगपद्याभावाच्छक्यतावच्छेदकभेदेन शक्तिनानात्वकल्पनमावश्यकम्। एवं प्रकृतेऽपि शक्तिद्वयकल्पनाप्रसङ्गः।

तथा यवमानयेत्यादौ नियामकाभावे व्यवहारानुपपत्तिः, अदृष्टोपदुष्टविकल्पापत्तिश्च।

किञ्च शब्देनार्थमभिधत्त इत्यत्र करणकर्मणोः शब्दार्थयोः स्वर्गयागयोरिवैकस्यामभिधानक्रियायां सम्बन्धात्तया वशीकृतयोः परस्परानियमे सति शक्तिग्रहवेलायां यस्यामभिधानक्रियायां योऽर्थः कर्म तस्यां तच्छब्दस्यैव करणत्वं, यस्यां च तस्य करणत्वं तस्यामेव च तदर्थस्य कर्मतेत्येवं नियमावगतेः वाच्यानेकत्वे वाचकानेकत्व इव तद्भङ्गापत्तिः। तदिदं दोषचतुष्टयं अक्षादिशब्देष-

गृह्यमाणविशेषत्वाद्विनिगमनाविरहेणाङ्गीक्रियते, प्रकृते तु सति विनिगमके दोषचतुष्टयाङ्गीकरणं नोपपत्तिमत् ।

किं पुनरत्र विनिगमकम् ? वाक्यशेषरूपशास्त्रमेव । यवे तावत्(१) "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" इत्ययं "यवमतीभिरद्भिरौदुम्बरीं प्रोक्षति।"त्यस्य विधेर्वाक्यशेषः बह्वीषु शाखासूपलभ्यः । भाष्यकारेण तु वारुणमधासिक्यत्रमयकरम्भपात्रविधिशेषत्वेनोदाहृतः । अत्र फाल्गुने अन्यौषधिम्लानतायामपि प्रियंगूणां मोदाभावः। यदा च तेषां वर्षासु मोदः तदा नान्यौषधिम्लानिः । दीर्घशूकास्तु अन्यौषधिम्लानिदशायामेव फाल्गुनादौ मोदन्त इति त एव वाच्याः ।

अत्र च वाक्यशेषस्य सत्यप्यन्यत्राश्ववालादौ शक्तिग्राहकत्वे यवादिशब्दस्थले शक्तिनिश्चायकत्वमेव लाघवात्कल्प्यते । शक्तिग्राहकस्तु प्रयोग एव । अत एव फाल्गुनादौ गोधूमादेर्मोदमानत्वेऽपि न तत्र वाच्यत्वप्रसक्तिः, प्रयोगाभावात् ।

एवं "वराहं गावोऽनुधावन्ति" इत्यर्थवादात् वराहशब्दस्य सूकरवाचित्वनिश्चयः । तं हि ते अनुधावन्ति, न खेचरं वायसम् । 'अप्सुजो वेतस' इत्यर्थवादाच्च वञ्जुल एव वेतसशब्दवाच्यः, न तु जम्बूवृक्षः । तस्य स्थलरूपाधिकरणे उत्पद्यमानत्वेन जलाधिकरणकोत्पत्तिकत्वाभावात् । तस्माच्छास्त्रानुसारिणामेव प्रतिपत्तिर्बलीयसी; शास्त्रस्य तन्निश्चायकत्वादिति सूत्रार्थः इति भाष्यकारः ।

वार्तिककारस्तु यववराहवेतसशब्दानां प्रियङ्गुवायसवृक्षेषु क्वापि देशे शिष्टप्रयोगादनुदाहरणत्वम् । न चान्यदपि त्रिवृदादि वाक्यशेषनिर्णयाभिधेयं सम्भवत्युदाहरणम् । तस्य शिष्टप्रयोगविप्रतिपत्तिविषयत्वाभावात्, न हि त्रिवृदादिशब्दाः कैरपि शिष्टैः स्तोत्रीयानवकादौ प्रयुज्यन्ते, अपि तु त्रैगुण्यादावेव । वाक्यशेषेणैव परं स्तोत्रीयानवकादिवाचित्वनिर्णयः । अतो नास्त्यस्या अप्युदाहरणत्व-

१. श. ब्रा. ३-६-१-१०.

म् । "सन्दिग्धेषु वाक्यशेषा"दित्यनेन पुनरुक्तश्चायं न्यायः ।

यद्यपि च तत्राञ्जनसाधनद्रव्यविशेषोपादानसंदेहे वाक्यशेषेण निर्णयः । अत एव तत्र यावद्वाक्यशेषमेव घृतोपादानम् । तदभावे त्वन्यत्राञ्जनादिसमर्थयत्किंचिद्द्रव्योपादानमेव, प्रकृते त्वाभिधेयसन्देहे तस्य निर्णायकत्वम् ।

अत एव वाक्यशेषाभावेऽपि 'यवमयश्चरु'रित्यादौ प्रदेशान्तरस्थवाक्यशेषावगतशक्त्यनपायाद्दीर्घशूकादेरेव ग्रहणमिति पौनरुक्त्यपरिहारः संभाव्यते, तथाप्युभयत्र न्यायफलवैषम्येऽपि व्युत्पाद्यस्य विधिस्तुत्योरेकविषयत्वनियमात्स्तुत्यस्यैव विधेयत्वमिति न्यायस्य समानत्वात् पौनरुक्त्यापरिहारः ।

तस्माद्वाक्यशेषं विनैव यत्रार्यम्लेच्छयोरभिधानविप्रतिपत्तिः यथा (१)"पैलवौदुम्बरौ दण्डौ वैश्यस्य" इति गौतमस्मृतौ श्रुतः पीलुशब्दो वृक्षविशेषे प्रयुज्यते आर्यैः । म्लेच्छैस्तु हस्तिनि । तत्रोभयोरपि शब्दवाच्यत्वं उतैकत्रैवार्यप्रसिद्धेऽर्थे शक्तिः, अन्यत्र तु शक्तिभ्रमात्प्रतीतिरिति सन्देहः ।

यद्यपि च शब्दार्थविषये म्लेच्छप्रयोगरूपाचारस्याद्यापि प्रामाण्यं न प्रतिपादितम् । अतस्तद्विरोधे बलाबलचिन्तापि नातीव सङ्गता, तथापि पिकनेमाधिकरणे तत्प्रामाण्यस्य वक्ष्यमाणत्वात्तदालोचनेन प्रसङ्गाद्विरोधे बलाबलचिन्तापि नासङ्गता ।

तत्र यद्यप्यदृष्टार्थविषये म्लेच्छानामनभियोगाद्दौर्बल्यं तथापि दृष्टार्थव्यवहारविषये म्लेच्छानामप्यभियोगस्य तुल्यत्वान्न विशेषावधारणम् । अतश्च प्रयोगप्रत्यययोरविशेषादुभयत्रापि शक्तिः ।

न च अवाचकेष्वपि गाव्यादिशब्देषु प्रयोगप्रत्ययदर्शनान्न तन्मात्रेण पीलवादिशब्दानां म्लेच्छप्रसिद्धेऽर्थे वाचकत्वशक्तिकल्पनोचितेति वाच्यम् । शक्तेः कारणाश्रितत्वादर्थप्रत्ययकारणस्य च

---

१. गौ. ध. १-२३. सूत्रमिदमिदानींतनेषु मुद्रितपुस्तकेषु "आश्वत्थपैलवौ शेषे" इत्येवोपलभ्यते ।

गान्यादिशब्दस्य व्याकरणाननुगतत्वादादिमत्त्वेनानादिशक्त्याश्रयत्वायोगादवाचकत्वावगतेरर्थप्रत्ययस्याविद्यमानशक्त्यारोपकल्पनयोपपत्तिकल्पनाक्लेशोऽप्यगत्यानुभूतः; पीलवादिशब्दस्य तु व्याकरणानुगतस्य यादृशस्यार्यैः प्रयोगः तादृशस्यैव म्लेच्छैरिति अनादित्वात् अनादिशक्त्याश्रयत्वोक्तेः नाविद्यमानशक्त्यारोपकल्पनाक्लेशो युक्तः ।

न च पीलुशब्दस्वरूपस्य व्याकरणानुगमेऽपि अर्थान्तरे तदनुगमाभावात् भ्रमादिमूलक एव शक्तिग्रहः स्यादिति वाच्यम् । गमेर्डो इत्यादिशब्दस्मृतिविरुद्धेऽप्यर्थे प्रयोगप्रत्ययाभ्यां शक्तिकल्पनदर्शनाच्छब्दस्मृतेः प्रयोगमूलकत्वाच्चेह प्रयोगबलेन सर्वेषां वाच्यत्वेऽवधारिते एकमात्रविषयककोशादेरुपलक्षणत्वांगीकरणात् ।

न चानेकशक्तिकल्पनादिदोषचतुष्टयापत्तेर्न म्लेच्छप्रसिद्धेऽर्थे शक्तिकल्पनं युक्तम् । अगृह्यमाणविशेषत्वेनाक्षादिशब्दवदगत्यात्राप्यनेकशक्तिकल्पनोपपत्तेः । न हि म्लेच्छप्रसिद्धिरादिमती, येन विशेषोऽवगम्येत, अवध्यस्मरणात्तु आर्यप्रसिद्धिवदेवानादित्वाविशेषः ।

न च म्लेच्छसम्बन्धमात्रं शक्त्यभावसाधकं, अप्रयोजकत्वात् । म्लेच्छदेशस्थधूमादेरपि अग्न्यवबोधकशक्तत्वेनानैकान्तिकत्वाच्च । तस्मात्प्रमेयप्रमिधानविप्रतिपत्तिः इति पक्षे गजदन्तमयो दण्डः पक्षे च वृक्षप्रकृतिक इति प्राप्ते—

अभिधीयते—ये शास्त्रस्थाः शिष्टास्तेषां प्रतिपत्तिर्बलीयसी, नेतरापि । अनेकशक्तिकल्पादिदोषचतुष्टयप्रसङ्गात् । न च नियामकाभावः । (१)'तत्र तत्त्वमभियोगविशेषात् स्या'दिति न्यायेनाभियोगानभियोगयोरेव नियामकत्वात् । शिष्टा हि शब्दैकसमधिगम्यधर्माधर्मलिप्सया श्रुतिपरिपालनवच्छब्दार्थतत्त्वं विविच्य परिपालयन्ति । वैद्याश्च रसवीर्यविपाकानां भेदाच्छब्दार्थतत्त्वावबोधे यतन्ते । म्लेच्छास्तु

१. जै० सू १-३-२६.

दृष्टार्थव्यवहारस्य यथाकथंचित्सिद्धेः प्रयोजनाभावान्नानिष्प्लुतिमिद्धौ यतन्ते । अतश्च शिष्टानामार्यावर्तनिवासिप्रभृतीनां वैदिकानां वैद्यानां च शब्दार्थविषयेऽभियोगविशेषात् तत्प्रयोगप्रतीत्योरेव शक्तिकल्पकत्वम् । अन्यदीययोस्तु प्रयोगप्रत्यययोः शक्तिभ्रमेणाप्युपपत्तेर्गाव्यादिशब्दवदेवानेकशक्तिकल्पनाप्रसङ्गादिदोषचतुष्टयापादकशक्त्यन्तरकल्पनानवकाशः ।

एवं आर्यावर्तनिवासिमध्येऽपि "अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः। ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्त्वतो भवेत्" इति भाष्यमप्यस्मिन्नेवार्थे व्याख्येयम् । वाक्यशेषस्थोक्तिस्तु अतिशयार्थेति न विरोधः ॥

स्मृत्याचारविरोधे चेदं सूत्रद्वयं भाष्यमनादृत्य व्याख्यातम् । तद्यथा—(१)"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां तद्वत्त्यक्त्वा चान्द्रायणं चरेत्" इति शातातपवचनस्मृत्या निषिद्धस्य मातुलकन्यापरिणयनस्य आन्ध्रदेशे आचारः स प्रमाणम प्रमाणं वेति सन्देहः । तदर्थं च स्मृत्याचारयोर्विरोधे किं तुल्यबलत्वं उताचारो बलवान् अथवा स्मृतिरिति ।

तत्र द्वयोः श्रुत्यनुमापकत्वाविशेषात्तुल्यबलत्वम् । नह्याचारस्य स्मृतिकल्पनाद्वारा श्रुतिकल्पकत्वम्, प्रमाणाभावात् । धर्मत्वेन शिष्टैस्त्रैवर्णिकपरिग्रह एव खलूभयोरपि श्रुतिकल्पकत्वे प्रमाणम् । अथवाचार एव बलवान्, यथा हि प्रत्यक्षश्रुतिविरुद्धस्मृतेर्न मूलश्रुत्यनुमितिप्रतिबन्धलक्षणो बाधः, किन्तु यथा [२]श्रुतमूलानि श्यादनुष्ठानरूपफलापहारलक्षण इत्युक्तम् । तथात्रापि स्मृतिविरोधे आचारमूलभूतायाः श्रुतेर्याथार्थ्यानिश्चयेन फलापहारलक्षणो बाधो वाच्यः । नचासावनुष्ठानात्मकस्याचारस्य सम्भवति ।

---

१. नेदानीन्तनायां मुद्रितायां शातातपस्मृतौ वचनमिदमुपलभ्यते ।

२. यथाश्रुति ।

किञ्च स्मृतेर्वाक्यात्मकत्वेनानेकार्थप्रतिभानात् प्रत्यक्षश्रुत-विरुद्धार्थप्रतिपादनपरश्रुतिकल्पनेन यथाश्रुतार्थत्यागलक्षणो बाधोऽपि वक्तुं युक्तः। आचारस्य त्ववाक्यात्मकत्वेनान्यथात्वस्यापि कल्पयितुमशक्यत्वान्नेदृशोऽपि बाधः सम्भवतीति मिथ्यात्वलक्षणो बाधो वाच्यः। न चासौ सम्भवति। शिष्टत्रैवर्णिकपरिग्रहस्य दृढत्वात्। अतस्तेष्वाचारेषु स्मृत्यपेक्षया शीघ्रमेव मूलश्रुतिकल्पनया लब्धात्मकेषु बलवद्विरोधादर्शनाद्बलीयस्त्वमेव युक्तम्। तदनङ्गीकरणे तु परं समा विप्रतिपत्तिः भवेत् न तु स्मृतिप्राबल्यं इति सूत्रार्थः।

सिद्धान्तस्तु स्मृतिशास्त्रस्यैव प्रतिपत्तिर्बलीयसी मन्वादेर्हि 'साक्षात्कृतधर्माण ऋषयः' इति स्मृतेः सकलधर्मज्ञानसम्पन्नत्वावसायाद्धर्मप्र(१)वक्तृत्वेनावधारिताचार्यत्वस्य मन्वादेः 'आचार्यवचः प्रमाणम्' इति श्रुत्या सत्यवादित्वावगमात् अप्रतारकत्वेन विश्वास्यत्वात् तत्प्रणीतायाः स्मृतेर्वेदविरोधेऽपि श्रुतिमूलत्ववारणाशक्यत्वस्योपपादितत्वादाचारविरोधे तद्वारणवाचोयुक्तिर्दुर्घटैव। आचारस्य तु मन्वादिगतस्यास्मदादिभिरनुपलम्भादर्वाचीनानां च सकलधर्मतत्त्वज्ञानाभावात् प्रमादादिसम्भवेन चाविश्वास्यत्वात्तदाचारस्य श्रुतिमूलत्वकल्पने श्रुतिविरोधवत् स्मृतिविरोधः प्रतिबन्धक एव।

किञ्च आचाराणां स्मृतिकल्पनादिद्वारेणैव श्रुतिकल्पकत्वं, न साक्षात्। तथाहि—न ह्याचारस्य नित्यानुमेयश्रुतिमूलत्वम्, येन साक्षादेव स्मृतिवत् श्रुतिकल्पकत्वं स्यात्। अपि तु स्मृतिवदेव प्रत्यक्षपठितश्रुतिमूलत्वम्। नचेदानींतनानामनुष्ठातॄणामितस्ततो विप्रकीर्णशाखान्तरगतश्रुतिविषयानुभवसम्भवः। अतोर्वाचीनाचारान् दृष्ट्वा न झटित्येवार्वाचीनानां श्रुतिविषयानुभवकल्पनम्।

---

१. प्रवर्तकत्वेन.

बाधितत्वात् । किन्तु परम्परया मन्वादिभ्योऽधिगमकल्पनम् । तदनुष्ठानदर्शनकल्पनं वा । मन्वाद्युपदेशेनैवाद्ययावदर्वाचीनपर्यन्तं एतदाचारानुष्ठानम् । मन्वादेरनुष्ठानदर्शनेन वाऽद्ययावदनुष्ठानमिति । मन्वादिभिस्तु परं एतदाचारमूलिका श्रुतिः दृष्टेति कल्प्यते; तेषां सकलवेदार्थतत्त्वदर्शनवत्त्वात् । अतो मन्वादिभिरेवैतदाचारमूलां श्रुतिमुपलभ्य स्मृत्वा तदानीन्तनेभ्य उपदिश्य तदानीन्तनरैव वा मन्वाद्याचारं दृष्ट्वा स्वयमनुष्ठित इत्येवं परम्परयार्वाचीनपर्यन्तमाचारानुष्ठानमित्येवं पूर्वपूर्वाचाराकल्पनया मन्वादिस्मृतिं प्रकल्प्य पश्चात् श्रुतिकल्पनामिति विप्रकर्षः । मन्वादिनिबन्धनरूपाणां तु स्मृतीनां मन्वादिष्वेव श्रुत्युपलम्भपूर्वकं तदर्थस्मृतिमात्रकल्पनेनापि निबन्धनोपपत्तेरर्थस्मृतिकल्पनाद्वारा झटित्येव श्रुतिकल्पनात्सन्निकर्षः । अतश्च लिङ्गवाक्यादिवदेवार्थविप्रकर्षादप्याचारदौर्बल्यम् । यद्यप्यर्वाचीनानामपि कतिपयाचारमूलभूतश्रुतिदर्शनं सम्भवति; यथा—अग्निचयनप्रकरणाम्नातायाः [१]"यत्सप्तदशवतीमुपदधाति अन्नमेवोभयतो दधाति तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति" इत्याद्यायाः पात्रधारणपूर्वकभोजनाचारमूलभूतायाः श्रुतेर्दर्शनं, तथापि परप्रकरणपठितत्वविध्यन्तशेषत्वादिना तस्या आचारमूलत्वानध्यवसायात् तदध्यवसायस्य चेदानीन्तनानामशक्यत्वादाचारपरम्परया मन्वादिनिष्ठाध्यवसायकल्पनमावश्यकमेव ।

एवं शिष्टात्मतुष्टेरपि सन्दिग्धार्थनिर्णये स्वविषयस्य धर्मतत्त्वबोधे च प्रामाण्यस्य स्थापितत्वात्तस्या अपि श्रुतिविरोध इव स्मृत्याचारविरोधेऽपि दौर्बल्यं द्रष्टव्यम् ।

ननु चास्याः स्वविषयस्य धर्मतत्त्वबोधकश्रुत्यनुमापकत्वेऽपि आचार इवात्मतुष्टेः स्वमात्रनिष्ठत्वेन तत्परम्पराकल्पनाद्वारकस्मृति-

---

१. का. सं० २०-१२.

कल्पनाभावात् कथं स्मृत्यपेक्षया दौर्बल्यम् ।

वस्तुतस्तु तस्याः श्रुत्यनुमापकत्वस्यैवासम्भवः; नित्यानुमेयत्वस्य पूर्वमेव निराकरणात्; प्रत्यक्षश्रुत्यनुभवस्य च स्वस्मिन् प्रत्यक्षबाधितत्वात् । अतः प्रामाण्यमेवास्या गगनकुसुमायमानमिति दूरे बलाबलवार्तेति चेत्—

अत्र केचित् प्रामाण्यप्रकारमेवं तावत्समर्थयन्ते । यथौपनिषदानां "श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते" इति वचनात् गृहस्थविमुक्तावुपरत्याख्यसन्यासो जन्मान्तरीय एव श्रवणज्ञानाङ्गत्वपक्षयोः कल्प्यते तद्वदिहाप्यात्मतुष्टेः प्रामाण्यस्मरणात्तद्बलेनैहिकश्रौतानुभवबाधेऽपि जन्मान्तरीयतच्छ्रवणकल्पनात्प्रामाण्योपपत्तिरिति ।

तन्न; जन्मान्तरीयानुभवकल्पनायां प्रमाणाभावात् । प्रामाण्यस्य चेच्छायाः श्रुत्यननुमापकत्वेऽपि सुवचत्वात् । तथाहि—इच्छा तावत्स्वविषयस्य धर्मत्वमनुमापयतीति सा तत्र प्रमाणम् । इच्छाविषयत्वस्य च धर्मत्वव्याप्तिर्न लोकसिद्धेति 'आत्मनस्तुष्टिरेव च' इत्यादिका स्मृतिरेव तत्र प्रमाणम् । तस्याश्च स्वतः प्रामाण्यायोगात् मन्वादेस्तन्मूलभूतश्रुत्यनुभवकल्पनमिति अस्मदादीनां श्रुत्यनुभवाभावेऽपि मन्वादेरेव तत्कल्पनात् श्रुतिमूलत्वोपपत्तिः। श्रुतिरपि चैतद्विषये शिष्टात्मतुष्टिविषयो धर्म इत्येवमेकैव कल्प्यते । न तु भोजनव्यतिरेकेण जलपाननियम इष्टसाधनमिति, प्रातिस्विकश्रुतिकल्पनागौरवापत्तेः ।

वस्तुतस्तु "यदेव किञ्चनानूचानोऽभ्यूहत्यार्षं तद्भवति" इत्यस्या इच्छाविषयस्य धर्मत्वबोधकश्रुतेः प्रत्यक्षत्वात् इदानीन्तनानामपि श्रुत्यनुभवाविरोधः । अतश्च इच्छाविषयत्वावच्छेदेन धर्मत्वस्य बोधितत्वेऽपि इच्छया विशिष्य पदार्थविशेषे धर्मत्वानुमानात् युक्तं तस्या अपि प्रामाण्यम् ।

न चैवं प्रामाण्योपपत्तावपि परम्पराकल्पनाभावाद्दौर्बल्यानुपपत्तिः, यदेव किञ्चनेत्यस्याः श्रुतेः सामान्यविषयत्वेन विशेषविषयैः श्रुतिस्मृत्याचारैः शिष्टाकोपाधिकरणन्यायेनाविरुद्धविषये संकोचोपपत्तेः। अत एव 'सम्यक् संकल्पितः काम' इति वचने सम्यक्पदममुमेवार्थं द्योतयति। तस्मादाचारवत् शिष्टात्मतुष्टेरपि स्मृतिविरोधे आचारविरोधे च दौर्बल्यं सिद्धम्।

किञ्च आचारे शिष्टात्मतुष्टौ च कर्तव्यस्वरूपमात्रं क्लृप्तं, न तु कर्तव्यता। सा तु धर्मबुद्ध्यादिना अर्थसुखादिरूपहेत्वन्तरासम्भवसह(१)कृतेन कल्पनीया। स्मृतौ तु लिङादिशब्देनैव कर्तव्यतावगतेति वैषम्यम्। एवं च प्रकृतोदाहरणे श्रुतिविरोधवत्स्मृतिविरोधरूपबलवद्धेतुबलादेव तावदनुपलभ्यमानमपि भ्रान्त्यादिकारणान्तरं धर्मबुद्धेः कल्प्यते इति न सहकारिपरिशेषसम्भवः। किमुत यदा मातुलकन्यापरिणयादौ कामादिहेत्वन्तरमेव स्फुटतरं सम्भाव्यते कस्यचिन्मूलानुष्ठातुः पुंस इति तस्य तावद्धर्मबुद्धिरप्यप्रसिद्धैव। इतरेषां तु तदनुयायिनामधर्म एव धर्मबुद्धिर्भ्रममूलेति तस्याः सहकारिपरिशेषा(२)लाभः। देशान्तरगतानां तु न केवलं धर्मबुद्ध्यभावः, प्रत्युताधर्मबुद्धिरेव महतीति निष्प्रमाणकं तन्मूलश्रुतिकल्पनम्।

किं च 'यजेत स्वर्गकाम' इत्यादिविधिषु यथा विधेयस्येष्टसाधनत्वं विधिनाऽऽक्षिप्यते पुरुषप्रवृत्तिसिद्ध्यर्थं, तथा निषेधेषु निषेध्यस्यानिष्टसाधनत्वमपि निवृत्तिसिद्ध्यर्थमाक्षिप्यत एव। एवं च निषेधेन मातुलकन्यापरिणयस्य प्रत्यवायसाधनत्वावगतेराचारकल्पितविधिना तदभावावगतेः वस्तुनि विकल्पायोगेनैकस्यैव प्रत्यवायोत्पादकत्वतदनुत्पादकत्वरूपधर्मविरोधः।

---

१. तैव.
२. षाभावः।

नचाचारकल्पितविधिनापि इष्टसाधनत्वस्याक्षेपात् स्वर्गादिरूपफलकल्पनायां सत्यां मातुलकन्यापरिणयः कार्यः, असत्यां तु तस्यां क्रियमाणमातुलकन्यापरिणयात् प्रत्यवायोत्पत्तिरिति न विरोध इति वाच्यम् । आचारकल्पितविधेरभ्यनुज्ञाविधित्वेन स्वर्गादिफलकल्पकत्वाभावात् । तथाहि—प्रमाणान्तरप्रतिपन्नानिष्टसाधनत्वस्य तदभावावधारणमात्रफलको विधिरभ्यनुज्ञाविधिः । यथा 'न दीक्षितस्यान्नमश्नीयात्" इति निषेधेनावगतानिष्टसाधनत्वस्य दीक्षितान्नभोजनस्य तदभावावधारणफलको विधिः 'क्रीतराजको भोज्यान्नः' इत्ययमभ्यनुज्ञाविधिः ।

केचित्तु अभ्यनुज्ञाविधेः निषिद्धविषयत्वेनानिषिद्धविषयत्वेन च द्वैविध्यम् । तत्रान्त्यो 'ब्राह्मणः प्रतिग्रहादिना द्रव्यमर्जये'दित्यादिः । लक्षणं च यस्याकरणे करणे वा न प्रत्यवायो नापि धर्मः तद्विषयो विधिरभ्यनुज्ञाविधिरित्याहुः ।

तन्न; प्रतिग्रहादेः रागत एव प्राप्तत्वेन तद्विषयत्वे विधिवैफल्यापत्तेः । अतः तत्र ब्राह्मणस्य जयाद्युपायान्तरव्यावृत्तिफलकप्रतिग्रहादिनियमपरत्वं वा जयाद्युपायान्तरव्यावृत्तिपरत्वमेव वाऽङ्गीकर्तव्यम् । उभयथापि नियमविधिः परिसंख्याविधिर्वा स्यात्, नत्वभ्यनुज्ञाविधिः । अत एव 'पंच पंचनखा भक्ष्याः" इत्ययं नाभ्यनुज्ञाविधिः । किन्तु परिसंख्यैवेति दशमे भाष्यकारो वक्ष्यति ।

वस्तुतस्तु प्रतिग्रहादिविधिरभ्यनुज्ञाविधिरेव, तत्रापि (१)'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्, इत्यनेन निषिद्धस्यैवापद्यभ्यनुज्ञानात् ।

तदिहाचारकल्पितविधेरभ्यनुज्ञाविधित्वेन स्वर्गादिफलकत्वाभावादभ्यनुज्ञाविधेश्च निषेधप्रतिपन्नानिष्टसाधनत्वाभावबोधकत्वादेकस्यैव मातुलकन्यापरिणयस्य प्रत्यवायोत्पादकत्वं तदनुत्पादकत्वं

१. म. स्मृ. ४–१८६

चेति विरोधः।

अत एव तत्र नाभ्यनुज्ञाविधित्वं यथा—"अतिरात्रे षोडशिनं गृह्णाती" त्यत्र "नातिरात्रे षोडशिनं गृह्णाती"ति निषेधस्यैतद्विध्युपजीवित्वेन तत्प्रवृत्त्युत्तरप्रवृत्तेः। अतस्तत्र प्रयाजादिवाक्यवदेव षोडशिग्रहणस्य क्रतूपकाररूपेष्टसाधनताक्षेपकत्वमेवातिरात्रग्रहणविधेः कल्प्यते। न तु निषेधप्रतिपन्नानिष्टसाधनत्वाभावमात्राक्षेपकत्वम्, निषेधस्यैतद्विध्युत्तरप्रवृत्तत्वेनानिष्टसाधनत्वस्यैवाप्रतिपन्नत्वात्।

अत एव निषेधेनापि तत्र क्रतुवैगुण्यरूपानिष्टसाधनत्वमपि(१) 'नानृतं वदेदि' त्यादिवन्नाक्षिप्यते, एकस्यैव षोडशिग्रहणस्येष्टानिष्टसाधनत्वविरोधात्। नापि क्रतूपकाररूपेष्टसाधनत्वाभावमात्रमाक्षिप्यते। वस्तुनि विकल्पायोगेन एकस्यैव साधनत्वतदभावयोर्विरोधात्। किन्तु षोडशिग्रहणाभावेऽपि तन्निरपेक्षैरेवांगजातैरन्यैः महोपकारसिद्धिराक्षिप्यते। एवं च षोडशिग्रहणविरहेऽप्युपकारसिद्धौ षोडशिग्रहणे प्रवृत्त्ययोगापत्तेः षोडशिग्रहणेन फलभूयस्त्वं कल्प्यते। अतश्च तत्रोभयोरपि विधिनिषेधयोः विकल्पेन प्रामाण्योपपत्तेर्न विरोधः। प्रकृते त्वाचारकल्पितस्य विधेरभ्यनुज्ञाविधित्वाद्वस्तुनि विकल्पायोगेन विरोधो दुःपरिहरः।

न च देशभेदेन व्यवस्थोपपत्तेर्विरोधपरिहारः, अत एवापस्तम्बादिभिरेवंविधानाचारानुक्रम्य "इतर इतरस्मिन्न दुष्यति देशप्रामाण्यात्" "येषां परम्परामाप्ताः पूर्वजैरप्यनुष्ठिताः। त एव तैर्न दुष्यन्ति आचारैर्नेतरे जनाः" इत्युक्तमिति वाच्यम्। आचारस्य तन्मात्रनिष्ठत्वाद्वा देशव्यवस्थाभ्युपगम्यते बलवत्स्मृतिविरोधाद्वा? नाद्यः। होलाकाधिकरणे सर्वविषयत्वस्य स्थापयिष्यमाणत्वात्। नान्त्यः; दुर्बलविगीताचारानुरोधेन बलवत्स्मृतिसंकोचस्यान्याय्यत्वात्। अत एव बौधायनेन 'इतर इतरस्मिन्' इत्यादिना आपस्तम्बमतमुपन्यस्य

१. तै-सं. २-५-५.

'मिथ्यैतदिति गौतमः, शिष्टस्मृतिविरोधा'दित्युक्तम् । आपस्तम्बवचनं तु गर्हानिराकरणार्थमित्युक्तम् । तस्माद्विरोधपरिहारासम्भवादप्रामाण्यमेव स्मृतिविरोधे मातुलकन्यापरिणयाद्याचाराणाम् ।

अत्र न्यायसुधाकृत्स्मृतिचन्द्रिकाकारप्रभृतयः मातुलकन्यापैतृष्वस्रेयीपरिणयाचारस्योदाहरणत्वं न मन्यन्ते । तथाहि—य आचारः प्रत्यक्षश्रुतलिङ्गमूलकः तस्य शिष्टस्मृतिविरोधेऽपि नाप्रामाण्यम् । बलाबलाधिकरणे प्रत्यक्षलिङ्गविरोधे स्मृतिकल्पितश्रुतेर्याथार्थ्यनिश्चयाभावेन दुर्बलत्वस्य वार्तिककृतैव वक्ष्यमाणत्वात् । तदिह मातुलकन्यापैतृष्वस्रेयीपरिणयस्य प्रत्यक्षश्रुतलिङ्गमेव मूलम् यथा—(१)गर्भे नु नौ जनिता दंपती कः । देवस्त्वष्टा सविता विश्वरूप"इति अत्र वैवस्वतयोः यमयम्योः संवादः । पश्चयुग्भिर्यमी मिथुनार्थं यमं प्रोवाच । स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे"इति शौनकस्मृतेः, यम्याः स्वभ्रातरं यमं प्रति उक्तिरिति गम्यते । कः प्रजापतिः विश्वनिरूपको देवः त्वष्टा सवनशीलः नौ आवयोर्गर्भे उदरे दम्पती जायापतीरूपे अपत्ये जनिता जनयिष्यतीति । अतश्च 'मम पुरुषान्तरात् तव च स्त्र्यन्तरे जनयिष्यमाणयोस्तावत्स्त्रीपुंसयोर्दम्पतीत्वमवश्यंभावि, तद्द्वारकावयोरेव तदन्योन्यसम्भोगादस्तु' इत्यभिधानेन भ्रातृभगिन्यपत्ययोर्दांपत्यौचित्यद्योतनान्मातुलकन्यापैतृष्वस्रेयीपरिणये लिङ्गमिदम् । तच्चाप्राप्तस्यानुवादायोगाद्रागादपि च नियमेनाप्राप्तेः नित्यवदनुवादोपपत्त्यर्थं प्रापकं विधिमनुमापयति ।

तथा(२)"आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वस्रेयी वपामिव" इत्यत्रापि हे इन्द्र ईडितेभिः प्रशस्तैः मार्गैः नोऽस्माकं इमं यज्ञमायाहि तृप्तां आज्यसिक्तां वपां स्वीयं भागधेयं जुषस्व, यथा

१. ऋ. सं. ७-६-६-५.　　　　२. ऋ. सं. प. ५-४-२३.

मातुलस्य जह्नुः अपत्यं अर्थात् भागिनेयस्य योषा स्त्रीरूपत्वेन भागः, यथा च पैतृष्वस्रेयी अर्थान्मातुलपुत्रस्य भागस्तथा तव वपेत्यर्थाभिधानेनेदमपि लिङ्गं विध्यनुमापकम् ।

तथा स्रुग्व्यूहनविधिवाक्यशेषे श्रुतं "तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायते। उत तृतीये सङ्गच्छामहै । चतुर्थे सङ्गच्छामहै इति। तदेव दीव्यमाना जात्या आसत" इति । समानादेकस्मात्पुरुषात् अत्ता भार्याया भोक्ता पुरुषः । अद्यश्च भोग्यो भार्यालक्षणो जायत इत्युक्तेः । नचैवं सति एकस्मादुत्पन्नयोर्भ्रातृभगिन्योरेव जायापतित्वमुक्तं स्यात्, तत्राह—उत तृतीय इति । उतशब्दः शङ्कानिराकरणार्थः । तेन कूटस्थाज्जाते तृतीये चतुर्थे वा विवाहाख्यां सङ्गतिं कुर्मः इत्येवं दीव्यमानाः क्रीडमाना जात्या कुलीना अप्यासते । इदमपि च मातुलकन्यापैतृष्वस्रेयीपरिणये लिङ्गं "उपरि हि देवेभ्यो धारयति"त्विवद्विध्यनुमापकम् ।

अतश्चानन्यगतिकानेकलिङ्गबलेन स्मृतिरेव पुत्रिकाकरणे आसुरादिविवाहेषु च दुहितुर्जामात्रे दानाभावेन स्वत्वनिवृत्त्यभावात्सापिण्डानिवृत्तेः (१)असपिण्डां यवीयसीं" इति सपिण्डोद्वाहनिषेधमत्तेस्तद्विषयत्वेन व्याख्येया ।

अत एव(२)"पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरे"दिति गमने प्रायश्चित्तमुक्त्वा(३) "एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः (४)पतितोह्युपयन्नरः" इति पैतृष्वस्रेय्यादिपरिणयननिषेधे ज्ञातित्वमेव सापिण्ड्याख्यं हेतुत्वेनोक्तम् ।

किञ्च भगिनीत्वस्य पैतृष्वस्रेयीविशेषणत्वाभावे चतुष्टयापत्तेस्तिस्र इत्यस्यानुपपत्तिप्रसङ्गात् । पितृष्वसुः पुत्रिकाकरणे 'पु-

१ या. स्मृ. १–५२. २ म. स्मृ. ११–१७१. ३ म. स्मृ. १७२.
४ पततिह्युपयन्नधः ।

त्रः पुत्रिकैवे'ति स्मृत्या पुत्रिकायाः पुत्रत्वश्रवणात्पुत्रिकाभ्रातुः पुत्रिकापुत्रं प्रति पितृव्यत्वापातात् पितृव्यदुहितुश्च भगिनीत्वप्रसिद्धेः भगिनीत्वविशेषणेन पुत्रिकायाः पितृष्वसुर्या दुहिता सा पैतृष्वस्रेयीति प्रतीयते मातृभ्रातुश्चासत्वविशेषणेन पुत्रिकाया मातुर्यो भ्राता सपिण्डत्वेनाप्तः तस्य दुहितरं गत्वा इत्यर्थावगमेन मनोरपि पैतृष्वस्रेयीमातुलदुहितृपरिणयनिषेधः पुत्रिकाकरणविषय एवाभिप्रेतो लक्ष्यते । एवं च बौधायनस्यैतत्परिणये अनाचारत्वस्मृतिः 'पितृसन्ताने सप्तमान्मातृसन्ताने च पञ्चमादर्वाक्पुत्रिकाकरणाभावमनिश्चित्य परिणयविषयेति ज्ञेयम् । तेन ब्राह्मादिविवाहत्रये दुहितुर्दानविधानेन स्वत्वगोत्रयोरिव सापिण्ड्यस्यापि निवृत्तेस्तत्परिणयेऽपि न किञ्चिद्बाधकम् ।

न चैवं सति तादृशी मातृष्वसृदुहिताऽपि परिणेया स्यादिति वाच्यम् । तस्य लोकविद्विष्टत्वेनाप्रसक्तेः । अत एव (१)पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" इति याज्ञवल्कीयमपि पुत्रिकाकरणादिविषय एव व्याख्येयम् ।

अथ वा एतस्य सर्वविषयत्वेऽपि मातुलकन्यादीनां सत्यापि सापिण्ड्ये विशिष्य श्रुत्याऽभ्यनुज्ञानात्तदतिरिक्तविषयोऽयं 'असपिण्डां यवीयसीम्" इति निषेधः । अत एव तदूर्ध्वं चतुर्थपञ्चमादिषु पुरुषान्तरेषु भ्रातृभगिन्योरिव मातृष्वसृदुहित्रादीनां चाविवाह्यतोपपत्तिः इति ।

तदेतदपरे न मन्यन्ते । तथा हि–योयं श्रौतलिङ्गानुमितो विधिः स किं नियमविधिरूपो वा (२)"ऋतौ भार्यामुपेयादि"तिवत्; आहोस्विदभ्यनुज्ञाविधिरूपो वा ? नाद्यः । (३)'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पात्यते नात्र संशयः'इत्यादिवदकरणे निन्दाश्रवणाभावेन नियमविधित्वानुपपत्तेः ।

---

१ या. स्मृ. १-५३. २ गौ. ध. ५-१. ३. प. स्मृ.

अत एव यो निषेधातिक्रमेण रागादेवानुतिष्ठति तस्य रागप्राप्तानुवादमात्रेणैवान्यपरमन्त्रार्थवादाद्युपपत्तौ 'यज्ञोपवीती हि देवेभ्यो दोहयती' तिवन्न स्वतन्त्रविधिकल्पनं प्रमाणवत् ।

अत एव न द्वितीयोऽपि । अभ्यनुज्ञाविधित्वेऽपि हि तस्य दोषाभावमात्रपरत्वेन रागप्राप्त्युपजीवित्वात् रागेण च सर्वदा सर्वस्य परिणयनप्राप्त्यभावात् पाक्षिकानुवादान्न मोक्षः । अतश्च विनैवात्र विधिकल्पनं रागप्राप्तस्यैव पाक्षिकानुवादोऽस्तु । अन्यथा 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरं' इत्यादावपि अभ्यनुज्ञाविधित्वकल्पनापत्तिः ।

न च तत्र विध्यनुमानेऽपि प्रजापतिसम्बन्धितयैव तदनुमानादन्येषां निषेधतादवस्थ्यमिति वाच्यम् । महदाचरितत्वेनानुवादस्य विधिकल्पनोपायत्वेनोपायभूतपूर्वाचरितुर्विधावननुप्रवेशात् । अत एव "(१)इति ह स्माह बटूकुर्वार्ष्णिः माषान्मे पचत" इत्यत्र कृत्वाचिन्तायां षष्ठे माषपाकविधेः कल्पनेऽपि वृष्णिविषयत्वं नाङ्गीकृतम् ।

किञ्चैवं प्रकृतेऽपि यमयमीसन्तानविषय एव विधिः कल्प्येत । यदपि सपिण्डोद्वाहनिषेधैकवाक्यतया दानाभावेनानिवृत्तसापिण्ड्यपुत्रिकाकरणासुरविवाहादिविषया स्मृतिः न सापिण्ड्यनिवर्तकब्राह्मादिविवाहविषयेति । तदपि न । पुत्रिकाकरणेऽपि "(२)अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्" इति वसिष्ठवचनेन दानप्रतिपादनात् । अतश्च दानसत्त्वेऽपि तस्याः पुत्रकार्यकर्तृत्वं वाचनिकसंवित्करणबलादेव द्रष्टव्यम् । न च ब्राह्मादिविवाहे दानेन गोत्रसापिण्ड्यादिनिवृत्तिः, दानस्य स्वत्वमात्रनिवर्तनस्वभावत्वात् ।

वस्तुतस्तु नेदृशविषये दानं स्वत्वस्यापि निवर्तकम्, कन्यात्वाद्यतिरिक्तस्य स्वत्वस्याभावात् । कन्यात्वादेश्च दानेनानिवृत्तेः । अत एव कन्यादानादौ ददातिर्गौण इति षष्ठे वक्ष्यते ।

गोत्रनिवृत्तिस्तु ब्राह्मादिविवाहे सप्तपदागमनादिक्रियान्तरत एव

---

१ श. ब्रा. १-१-१-१० २ व. स्मृ. १७. १८.

वाचनिकी । "स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे" इति स्मरणात् । अत एव सप्तपदीगमनेनासुरविवाहादौ पुत्रिकाकरणे च गोत्रनिवृत्तौ प्रसक्तायां लौगाक्षिः "मातामहादिगोत्रेण मातुः पिण्डोदकक्रियाम् । कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः । आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्" इत्यादिना तदपवादोऽपि वाचनिक एव । अतो दत्तकस्थल एव परं दानेन वाचनिकी गोत्रनिवृत्तिः; न तु ब्राह्मादिविवाहेऽपीति अस्त्येव मातुलकन्यायाः सापिण्ड्यम् ।

अत एव "सप्तमात्पञ्चमादूर्ध्वं मातृतः पितृतस्तथा" इति वचनमप्यसंकुचितवृत्त्युपपन्नं भवति । मातृष्वस्रेयादिपरिणयप्रसङ्गश्च दुःपरिहरः । तस्मान्मातुलकन्यापरिणयनाद्याचाराणां दुराचारत्वमेवेति सिद्धम् ।

अत एव वार्तिककृता 'कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि' इत्युपक्रम्य 'स्वमातुलसुतां प्राप्य दाक्षिणात्यो हि तुष्यति' इति दुराचारत्वमुक्तम् । 'वसुदेवाङ्गजाता तु कौन्तेयस्य विरुध्यते' इति च । तस्मादिदमप्युदाहरणमेवेति सिद्धम् ॥

अथ वा यत्र लोकवेदयोः शब्दार्थविप्रतिपत्तिः, यथा—त्रिवृच्चर्वश्ववालैक्षवीस्तोमशब्देषु । त्रिवृच्छब्दो हि त्रिभिर्वर्तत इति व्युत्पन्नो लोके त्रिवृद्रज्जुः त्रिवृद्ग्रन्थिरित्यादौ त्रैगुण्यवाचितया प्रसिद्धः । वेदे तु 'त्रिवृद्बहिष्पवमानं' इत्युक्त्वा 'उपास्मै गायता नरः' 'दविद्युतत्या रुचा' 'पवमानस्य ते कवे' इति तृचत्रयानुक्रमणात् 'नवभिस्तुवन्ती'ति च श्रुत्यन्तरदर्शनात् स्तोत्रीयानवकपरत्वं प्रतीयते ।

चरुशब्दस्यापि लोकात् स्थालीपरत्वम्, वेदे तु 'आदित्यः प्रायणीयः पयसि चरुः' इति विधाय 'आज्यस्यैनं चरुमभिपूर्य चतुर आज्यभागान् यजति, पथ्यां स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति, अग्नीषोमाविष्ट्वा सवितारं यजति, अदितिमोदनेन, इति क्रमविधिपरे वाक्ये सिद्धवदोदनानुवादादोदनपरता विज्ञायते । तत्रापि याज्ञिकप्रसि-

ध्या अनवस्रावितान्तरूष्मपक्वौदनविशेषवाचित्वमेव न त्वोदन-सामान्यवाचित्वम्, अवस्रावितेऽभक्तौदने याज्ञिकानां चरुशब्दप्रयोगाभावात् ।

एवं अश्ववालशब्दस्यापि लोके अवयवयोगेनाश्वकेशपरत्वम् । वेदे तु "आश्ववालः प्रस्तरः" इत्यस्य वाक्यशेषे च "यज्ञो ह वै देवेभ्योऽश्वो भूत्वापाक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतः, स वालान्मुक्त्वाविवेश,ते वालाः काशतां प्राप्ताः" इति श्रवणात् काशपरत्वम् ।

'ऐक्षवीतिधृती'इत्यत्र च ऐक्षवीशब्दस्य लोकावगतयोगबलेनेक्षुवयवपरत्वम्, वाक्यशेषात्तु काशमूले । वाक्यशेषश्च वार्तिके त्विशिष्यानुदाहृतोऽपि सामान्योक्त्यैवास्तीत्यनुमीयते ।

एवं स्तोमशब्दस्यापि ब्राह्मणस्तोमः इत्यादिप्रयोगाल्लोके समुदायमात्रपरत्वम् । वेदे तु स्तोत्रीयासंख्याकृतस्तुतिसंख्यावचनः 'त्रिवृदेव स्तोमो भवति' पञ्चदश स्तोमो भवति" इति सामानाधिकरण्यनिर्देशात्, 'स्तुतेर्मानं स्तोम' इति याज्ञिकप्रसिद्धेः (१)'स्तोमे डविधिः पञ्चदशाद्यर्थं' इति व्याकरणबलाच्चायमर्थो निश्चीयते । अतश्चैतेषु लोकवाक्यशेषयोः शब्दार्थविप्रतिपत्तौ किं द्वयोः साम्यम्, अतश्च त्रिवृद्बहिष्पवमानमित्यादौ अर्थद्वयविकल्पः, उत लोकस्यैवात्र बलवत्त्वम् । वाक्यशेषस्था प्रतिपत्तिर्बलीयसी इति सन्देहः ।

अत्र च वाक्यशेषाभावे त्रिवृद्बहिष्पवमानमित्यादिविधेः लौकिकप्रसिध्युपजीवनेन निर्णयकरणात्सन्देहाभावेन न भाष्यकारीययवाद्युदाहरणतुल्यत्वम्, यवाद्युदाहरणे हि उभयथा प्रसिद्धिसत्वे वाक्यशेषस्य निर्णायकत्वमात्रम्, न तु स्वतन्त्रार्थशक्तिग्राहकत्वम्, प्रकृते त्वेकत्रैव लोकप्रसिद्धेः इतरार्थविषयशक्तिग्राहकत्वमेव वाक्यशेषस्येति विशेषः । अत एव नात्र 'सन्दिग्धेषु वाक्यशेषा'दित्यनेन

---

१ वा. ५-१-५८.

गतार्थताशङ्का ।

तत्रादृष्टार्थविषये स्मृत्याचारेभ्यो वेदस्य बलवत्त्वेऽपि शब्दार्थावधारणेऽनादिसिद्धवृद्धव्यवहाररूपादाचाराद् वृद्धस्मरणाद्वा वेदस्याधिक्ये प्रमाणाभावेन विशेषादर्शनात्समा विप्रतिपत्तिः स्यात् । न च एकत्रैव शक्तिकल्पनेनेतरत्र तत्सादृश्येन प्रयोगोपपत्तौ नानेकशक्तिकल्पनमुपपत्तिमदिति वाच्यम् । अर्थद्वयस्यापगस्तत्वै-लक्षण्येन सादृश्याभावाद् । सत्यपि च सादृश्ये विनिगमकहेत्वभावाच्च । अतोऽनन्यथासिद्धप्रमाणद्वयबलेनोभयोरपि वाच्यत्वावधारणात्तुल्यबलत्वेन विकल्पः । अतश्च लौकिकार्थग्रहणपक्षे बहिष्पवमाने एकस्तृचः कर्तव्यः, तृचान्तराम्नानं "नवभिः स्तुवन्ती" ति वचनं च पाक्षिकत्वेनाप्युपपन्नम् ।

तथा चरुशब्देन स्थाली कृष्णलवत्प्रदेयत्वेन विधीयते । पयश्च तदधिकरणत्वेनैव । अधिकरणतापि च मैत्रावरुणादिश्रयणवद-दृष्टार्थैव । अर्थवादस्तु पाक्षिकानुवाद इति द्रष्टव्यम् ।

यत्तु कैश्चित् चरुरिति प्रथमा सप्तम्यर्थे । सप्तमी च पयसीति प्रथमार्थे । तेन चर्वधिकरणं पय एव देवतासम्बन्धि लोकप्रसिद्ध्याश्रयणपक्ष इत्युक्तम् ।

तन्न; विकल्पपक्षे वचनव्यक्तिभेदेन वाक्यभेदापत्तेः । लक्षणाद्वयस्वीकारे प्रमाणाभावाच्च । अत एवैतद्दोषपरिहारार्थं विकल्पोक्तिर्मूले न प्रकृतोदाहरणभूतप्रायणीयविषया; किन्तु "सौम्यं चरुं" इत्येतद्विषयेति कस्यचिदुक्तिरपास्ता । प्रस्तुतोदाहरणेऽप्युक्तरीत्या विकल्पस्य सुवचत्वात् ।

यत्तु तत्रोपपत्त्यन्तरमुक्तं—प्रस्तुतोदाहरणे अर्थवादेनौदनविषय एव विधेस्तात्पर्यग्रहात्सिद्धान्तवत्पूर्वपक्षद्वयेऽपि गौण्या वृत्त्या चरुशब्देनौदनग्रहणान्नानुष्ठाने विशेषः । 'सौम्यं चरुं' इत्यत्र तु अर्थवादाभावेन तात्पर्यग्राहकाभावात्साम्यपक्षे विकल्पः । लोकप्र-

सिद्धिप्राबल्यपक्षे च स्थालीपात्रग्रहणमिति विकल्पोक्तिः तन्मात्र-विषयेति ।

तदपि न; लोकप्रसिद्धिप्राबल्यपक्षे तावद्विधेरपि लोकप्रसि-द्ध्यैव स्थालीतात्पर्यकत्वावगतेरर्थवादस्यैव तदनुरोधेनौदनसम्बन्धे-न स्थालीलक्षकत्वेनोपपत्तौ ओदनग्रहणे प्रमाणाभावात् ।

साम्यपक्षेऽपि क्लृप्तया लोकप्रसिद्ध्यैवावधारिते विध्यर्थे अर्थ-वादानर्थक्यभयेन कल्प्यस्यौदनवाचित्वस्य पाक्षिकत्वेनाप्योदनमा-पकत्वोपपत्तौ न लोकावगतस्थालीवाचकत्वसम्भव इति विकल्पो-क्तिः प्रस्तुतोदाहरणविषयाप्युपपन्नैव ।

एवं आश्ववालैक्षवीस्तोमशब्देष्वपि विकल्पेनार्थद्वयपरत्वम् । अर्थवादश्च पाक्षिक इति द्रष्टव्यम् । तस्मात्साम्यमेव लोकवेदप्रसि-द्ध्योरिति प्रथमः पक्षः ॥

द्वितीयस्तु लोकप्रसिद्धेरेव प्राबल्यम् । तस्या अन्यनैरपेक्ष्येणै-वात्मलाभात् । वैदिकप्रसिद्धेः पुनः लोकप्रसिद्धपदान्तरसामाना-धिकरण्याधीनसिद्धित्वेन विलम्बितत्वात् । अतोऽनुपसंजातविरो-धित्वेन लौकिक्येव बलीयसी । अतश्च यत्र न विरोधः तत्रैव सा आत्मानं लभते, नान्यत्र । न चाविरोधेऽपि न तस्या आत्मलाभः, 'स-म्बन्धस्याशास्त्रहेतुत्वा'दिति सूत्रे निराकरिष्यमाणत्वादिति वाच्य-म् । तस्य विधिवाक्यस्य स्वविधेयत्वनिराकरणपरत्वात् । अतः अ-र्थवादादिरूपशास्त्रस्य सम्बन्धानुमापकत्वमिष्टमेवाविरोधे । विरोधे तु लोकप्रसिद्धेः अनुपसंजातविरोधित्वाद्बलवत्ता ।

किञ्चार्थवादानां प्ररोचनामात्रपरत्वेन 'यजमानः प्रस्तरः' इ-त्यादिवद्गौणत्वेनाप्युपपत्तेर्नावश्यं संज्ञासंज्ञिसम्बन्धप्रतिपादनपरत्व-म् । अतश्च नानर्थक्यप्रतिहतत्वेन विकल्पाश्रयणमपि । अनन्योपायप्ररो-चनापरस्यार्थवादस्य सम्बन्धप्रतिपादनपरत्वे वाक्यभेदप्रसङ्गाच्च ।

अत एव मन्त्रादिप्रसिद्धिरपि त्रिवृच्छब्दस्य त्रैगुण्यविषयैव प्र-

तीयते (१)"कार्यासमुपवीतं स्यात् विप्रस्योर्ध्ववृतं त्रिवृत्" "त्रिवृता ग्रन्थिनैकेन" इत्यादौ रज्वारम्भकेषु तन्तुषु नवसंख्यासद्भावेऽपि त्रिवृच्छब्दस्योपवीतारम्भकायां रज्जवां त्रैगुण्यविध्यर्थत्वदर्शनात्, वेदे 'त्रिवृद्दर्भशाना भवती' त्यादा त्रैगुण्यार्थकत्वस्य याज्ञिकप्रसिद्धत्वाच्च । तस्माल्लोकप्रसिद्धिरेव बलीयसीति प्राप्ते—

शास्त्रस्था वैदिक्येव प्रसिद्धिर्बलीयसी । तथाहि—अर्थवादादेरपि तावदस्मिन् विरोधे वृद्धव्यवहारकोशानुशासनादिवच्छक्त्यनुमापकत्वं भवतोऽपि नानिष्टम् । अतश्च त्रिवृदादिशब्दार्थव्युत्पित्सुर्बालः यथैव लोकव्यवहारात् त्रैगुण्यं शब्दार्थत्वेनाध्यवसातुमुपक्रमते तथार्थवादादिवशात् नवकादिकमपीति तुल्यम् ।

नचात्रार्थवादादेः लोकप्रसिद्धपदान्तरसामानाधिकरण्याधीनसिद्धित्वेनान्यापेक्षत्वाद्दौर्बल्यम् । लोकप्रसिद्धेरपि पदान्तरार्थविषयलोकप्रसिद्धिसापेक्षत्वस्य समानत्वात् । अतश्च त्रिवृद्बहिष्पवमानमित्यत्र त्रिवृच्छब्दार्थावधारणवेलायां अनन्तरमेव तृचत्रयानुक्रमणा 'नवभिः स्तुवन्ती' ति वचनान्तराच्च स्तोत्रीयानवके तावच्छक्तिकल्पनया शब्दार्थत्वावधारणम् । न हि तत्रानुपस्थितेन सम्भवद्विप्लवेनावयवार्थशक्तिग्रहसापेक्षेण च लोकव्यवहारेण झटिति त्रैगुण्यार्थकत्वावगतिर्भवति । यद्यपि कस्यचित् स्यात् तथापि निर्दोषया वैदिकप्रसिद्ध्या बाध्यते । अतोऽत्र तावत् स्तोत्रीयानवकमेव विधेयम् ।

नचैवमपि तृचत्रयानुक्रमणादिनैव नवकप्रतीतिसिद्धेस्त्रिवृत्पदानर्थक्यमिति वाच्यम् । स्तोत्रीयानवके रूढ्या त्रिवृत्पदवाच्यत्वस्य त्रिवृत्पदश्रवणाभावेऽप्रतीतेः । तत्फलं च तृचत्रयानुक्रमणाद्यभावेऽपि 'त्रिवृदग्निष्टुदग्निष्टोम' इत्यादौ सर्वस्तोत्रेषु स्तोत्रीयानवकप्राप्तिः । अन्यथा हि बहिष्पवमाने तृचत्रयाद्यनुक्रमणात्प्राप्तुवत्यपि स्तोत्रीयानवकेऽग्निष्टुति त्रिवृच्छब्दस्य रूढ्या स्तोत्रीयानवक-

---

१. म. स्मृ. २-४४.

वाचित्वानवधारणाल्लोकप्रसिद्धावयवयोगेन सर्वसंख्याकार्ये त्रै-गुण्यविधायित्वमेवापद्येत । सति तु प्रस्तुतोदाहृतवाक्ये त्रिवृच्छ-न्दश्रवणे तृचत्रयाद्यनुक्रमणवशेन स्तोत्रीयानवके समुदायप्रसिद्धौ कल्पितायां अग्निष्टुत्यपि क्लृप्तया रूढ्या योगबाधात् सर्वस्तोत्रे-षु स्तोत्रीयानवकमेव विधीयत इति दशमे वक्ष्यते; एतदधिकरण-प्रयोजनकथनपरत्वादेव च तदधिकरणस्य न पौनरुक्त्यम् ।

यत्र तु स्तोत्रसम्बन्धासम्भवो यथा—'त्रिवृता यूपं परिवी-य" इत्यादौ तत्र त्रैगुण्यमेव लोकप्रसिद्धावयवयोगबलेन विधीय-ते । न हि लोकप्रसिद्धिस्त्रैगुण्ये लाक्षणिकी । शक्यसम्बन्धाभावेन लक्षणानुपपत्तेः । अवयवशक्तेः क्लृप्तत्वाच्च । अतस्तत्र क्लृप्तावयव-योगेन त्रैगुण्यमेव विधेयं, न तु नवकम् । अवयवयोगेनैवार्थप्रती-त्युपपत्तौ लाक्षणिकत्वे प्रमाणाभावात् । त्रिवृत्पदं हि स्तोत्रसम्बन्धि-तृचत्रयाद्यनुक्रमणान्नवकमात्रे न शक्तम् । अपि तु स्तोत्रीयानवके । अतश्च विशिष्टवाचकस्य पदस्यैकदेशपरत्वे लक्षणेतिन्यायात् 'त्रि-वृता यूपं' इत्यादौ नवकमात्रग्रहणे लाक्षणिकत्वप्रसङ्गो दुर्वार एव । अतश्चैतादृशविषये त्रैगुण्यमेव ।

एवं यज्ञोपवीतविधावपि त्रिवृच्छब्देन त्रैगुण्यमेव विधीयत इति द्रष्टव्यम् । नचैवमपि त्रिवृच्छब्दस्य बहिष्पवमानरूपस्तोत्रवि-शेषसम्बन्धितृचत्रयानुक्रमणात् तत्सम्बन्धिस्तोत्रीयानवकवाचित्व-मेव स्यात्, न सामान्यतः स्तोत्रीयानवकवाचित्वमिति वाच्यम् । तथात्वे 'त्रिवृद्बहिष्पवमानमि'त्यत्र त्रिवृद्ग्रहणस्य फलाभावेन वै-यर्थ्यापत्तेः । न हि तदाग्निष्टुति त्रिवृच्छब्देन सर्वस्तोत्रेषु नवकं विधातुं शक्यते । 'त्रिवृता यूपं' इत्यादिवल्लाक्षणिकत्वप्रसङ्गेन त्रैगुण्य-विध्यर्थकत्वस्यैवापत्तेः । बहिष्पवमाने चातिदेशेनैव नवकस्य प्राप्त-त्वात् तत्र तद्विध्याशङ्कायाः सुतरामनुपपत्तेः ।

अथ अग्निष्टुद्वाक्यस्थत्रिवृच्छब्देन तत्रत्यबहिष्पवमाने त्रैगुण्य-

प्रसक्तेस्तोत्रस्तुतिफलको बहिष्पवमानगतस्तोत्रीयानवकशक्तिग्रहोऽर्थवान्, तथा सति अग्निष्टुद्वाक्यस्थत्रिवृच्छब्दाभावेऽपि विवक्षितार्थसिद्धेः तत्रत्यत्रिवृत्पदवैयर्थ्यम् । ततश्च पुनरपि प्रस्तुतवाक्यस्थत्रिवृत्पदानर्थक्यं तदवस्थमेव । अतः फलाभावेन त्रिवृत्पदवैयर्थ्यप्रसंगाद् सामान्यतः स्तोत्रीयानवक एव त्रिवृत्पदस्य शक्तिरिति सिद्धम् ॥

एवं चरुशब्दार्थव्युत्पित्सायामपि लोकव्यवहारादिव वाक्यशेषस्याप्यन्यत्र शक्तिग्राहकत्वावगमाद् प्रकृते च विरोधे सति वाक्यशेषस्यैव पूर्ववदेव बलीयस्त्वाद् विधिस्तुत्योः समानविषयत्वनियमाच्चौदन एव शक्तिश्चरुशब्दस्येत्येवं निश्चीयते । लोकप्रसिद्धिस्तु स्थाल्यां अनेकशक्तिकल्पने गौरवापत्तेः त्रिवृदादिपदवच्च योगाभावादोदनैकान्तिकसम्बन्धलक्षणयैव । अतश्च 'सौम्यं चरुं' इत्यादौ वाक्यशेषाभावेऽपि ओदनपरत्वमेव । शक्यार्थपरत्वसंभवे लक्षणाया अन्याय्यत्वाद् इति दशमे वक्ष्यते । पौनरुक्त्यं च पूर्ववदेव परिहर्तव्यम् ।

एवं आश्ववालैक्षवीशब्दयोरपि त्रिवृच्छब्दवदेव लोकप्रसिद्ध्या यौगिकयोरर्थवादवशेन काशादौ रूढिकल्पनाद् तद्वशेनार्थवादराहित्येऽपि काशादिग्रहणमेव, न तु यौगिकार्थग्रहणम् ।

न चावयवार्थे अवयवशक्तिकल्पनस्यावश्यकत्वादश्ववालशब्दस्य दीर्घत्वादिना यौगिकार्थकेशसादृश्येनैव गौण्या वृत्त्या काशप्रतीत्युपपत्तौ शक्त्यन्तरकल्पनानुपपत्तेः अर्थवादसत्त्वे तद्वशेन गौणार्थग्रहणेऽपि तदभावे गौणार्थग्रहणे प्रमाणाभावाद्यौगिकार्थग्रहणमेव स्यादिति वाच्यम् । केशसादृश्येन काशविवक्षायां अर्थवादे केशप्रकृतिकत्वान्वाख्यानस्य वैयर्थ्यापत्तेः । न हि गौणार्थे क्वचिदन्वाख्यानं दृश्यते, विधौ जघन्यवृत्त्याश्रयणस्य दोषत्वाच्च न गौणत्वकल्पनम् ।

न च तर्ह्यर्थवाद एव काशपदं केशरूपवाललक्षणार्थमस्तु, कृतं शक्त्यन्तरकल्पनेनेति वाच्यम्। 'ते वालाः काशतां प्राप्ताः' इत्यनन्वयापत्तेः। अतोऽश्ववालपदं काशेषु रूढमेव। केशप्रकृतित्वकथनं तु 'यदाजिमीयुः' इति वदन्वाख्यानमात्रमिति द्रष्टव्यम्।

अस्तु वाश्ववालपदं काशे गौणम्, तथाऽप्यन्वाख्यानानुरोधेन निरूढगौणीस्वीकारः, श्येनपदस्येव यागे। अत एव यथैव 'समानमितरच्छ्येनेन'' इत्यादौ गौणार्थस्यैव यागस्य श्येनपदेन ग्रहणं तथा इहार्थवादाभावेऽपि वेदक्लृप्तत्वप्रत्यासत्तेः गौणार्थस्यैव काशस्य ग्रहणमिति सिद्धम्।

अयं च प्रकारः तिसृच्छन्दे सम्भवन्नपि तादृशसादृश्याभावान्नोपन्यस्तः।

एवं स्तोमशब्दस्यापि 'त्रिवृदेव स्तोमो भवति' इति वैदिकसामानाधिकरण्यात् 'स्तुतेर्मानं स्तोम' इति याज्ञिकप्रसिद्धेश्च 'स्तोमे डविधिः पञ्चदशाद्यर्थं' इति शाब्दिकस्मृतेश्च स्तोत्रीयासंख्याकृतस्तुतिसंख्यावचनत्वं व्युत्पित्सुनाऽवधार्यते। 'ब्राह्मणस्तोम' इत्यादिलोकप्रसिद्धेस्तु लाक्षणिकत्वं शक्त्यन्तरकल्पकत्वं वा आश्रयणीयम्। तदपि च सैन्धवादिवदेव प्रकरणादिनाऽर्थविशेषावधारणमिति क्वचिदुक्तविधा संख्या, क्वचित्तु समुदायमात्रमिति व्यवस्थैव, नत्व्यवस्थितविकल्पः।

न्यायसुधाभवदेवयोस्तु वैदिकसामानाधिकरण्यादिना स्तोत्रीयासमुदायवचनत्वम्, लोकप्रसिद्ध्या तु समुदायमात्रवचनत्वम्। तत्र वैदिकप्रसिद्धेर्बलवत्त्वाल्लौकिकप्रसिद्धिर्लक्षणयापि नीयमाना न दुष्यतीत्युक्तम्। न च वैदिकप्रसिद्ध्या उक्तविधसंख्यावाचित्वमुक्तम्। यथा तथा वास्तु। सर्वथा शास्त्रप्रसिद्धिर्बलीयसीति सिद्धम्।

॥इति यववराहाधिकरणम्॥

## (५)पिकनेमाधिकरणम् ।

### सू०—चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ १–३–१०॥(सि)

इह बलवत्प्रमाणांतरविरोधाभावे शब्दार्थव्यवहारविषये म्लेच्छानामपि प्रामाण्यं संभवति नेति विचार्यते। यथा–पिक, नेम, सत, तामरस, पत्रोर्ण, वारवाण, शब्देषु, ते हि कोकिला, र्ध,बृहत् परिमण्डल शतच्छिद्रदारुमयपात्र, पद्म, धौतकौशेय, कञ्चुकवाचित्वेन म्लेच्छेषु प्रसिद्धाः ।

तत्र यद्यविरोधे म्लेच्छप्रसिद्धिः प्रमाणं ततः 'पिकमालभेत' इत्यादिवाक्येषु तत्प्रसिद्धार्थस्य ग्रहणम्, अथ तु न प्रमाणं ततो वेदप्रयुक्तानां शब्दानां आनर्थक्यासम्भवात् यथाकथंचित् निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थं प्रकल्प्य तस्यैव ग्रहणम् ।

विप्रतिपत्तिग्रहणप्रत्युदाहरणरूपेणात्र सिद्धान्तकरणात्सङ्गतिः । शास्त्रास्थप्रसिद्धेर्वा कल्प्यत्वेनाप्रमाणत्वकथनादापवादिकी ।

तत्र म्लेच्छेषु यथैव अनभियोगाच्छब्देषु विप्लुतिरसाधुशब्दप्रयोगात् दृष्टेति न तेषां शब्दतत्त्वावधारणे प्रामाण्यम्, तथैव तदर्थावधारणेऽपि पील्वादिषु विप्लुतिदर्शनान्न प्रामाण्यसम्भवः । न च तेषु पिकादिशब्दानामप्यविप्लुतिर्दृश्यते, येन तत्प्रसिद्धार्थमात्रग्रहणं शङ्क्येत । प्रातिपदिकमात्रप्रयोगेन तेषामप्यपभ्रष्टत्वात् । अतश्च वेदप्रयुक्तसंस्कृतसदृशशब्दैः प्रयुज्यन्ते, न तु त एव । न च सादृश्यमात्रेण संस्कृतपिकादिशब्दानां तत्प्रसिद्धार्थकल्पनम् । शालाशब्दस्यापि सादृश्येन मालाशब्दार्थवाचित्वापत्तेः । विस्तरेण चात्र वार्तिककृता आन्ध्रद्राविडभाषयोरेव सादृश्येनाधिकाक्षरप्रक्षेपादिना च संस्कृतशब्दत्वकल्पनया तदर्थकत्वकल्पने अनेकविरोधोत्प्रेक्षासं-

भत्राद्यत्रस्थितशब्दार्थात्रधारणासंभव उपपादितः किमुत तदा तेभ्यो-ऽपि प्रसन्तत्रासिनां पारसीरोमकादीनां भाषासु तदत्रधारणमिति न म्लेच्छप्रसिद्धेः शब्दार्थनिर्णयेऽपि धर्माधर्मयोरिव प्रामाण्यम् ।

एवं सत्यपि शब्दार्थतत्त्वावधारणस्य वृद्धव्यवहारमात्रप्रमाणकत्वात् यद्यभिधेयनिर्णये म्लेच्छव्यवहारस्य प्रामाण्यमभ्युपगम्यते तथापि तद्व्यवहारस्य तान्प्रत्येव तत्प्रयुक्तशब्दविषये निर्णायकत्वं स्यात्, नार्यान् प्रति। आर्यप्रयुक्तशब्दविषये म्लेच्छानां वैदिकशब्दवच्छ्रवणाभावात् । तच्छ्रात्रिणां चार्याणां म्लेच्छसम्भाषणतद्भाषाप्रयोगयोः निषेधेन तत्प्रसिद्धार्थसम्बन्धग्रहणासम्भवात् । अतश्च गृहीतसम्बन्धस्य शब्दस्यार्थाभिधायकत्वात् म्लेच्छानां सम्बन्धग्रहणसम्भवेऽपि आर्याणां तदसम्भवान्न तान् प्रति म्लेच्छव्यवहारस्य निर्णायकत्वम् ।

किञ्च म्लेच्छप्रसिद्धार्थग्रहणे निगमादीनामानर्थक्यापत्तिः । सर्वत्र व्यवहारादेवार्थनिर्णयोपपत्तेः । न च यत्र म्लेच्छप्रसिध्यापिं नार्थनिश्चयः तादृशविषये निगमाद्यर्थवत्तेति वाच्यम् । म्लेच्छदेशानामानन्त्येन सर्वान्वेषणस्याशक्यत्वात्प्रसिद्ध्यभावनिश्चयानुपपत्तेः । अतश्च सर्वदेशान्वेषणबाधशङ्काया दुष्परिहरत्वान्न क्वचिन्निगमादिना अर्थनिर्णय इति तद्वैयर्थ्यापत्तिः । अस्मत्पक्षे तु आर्यावर्तस्याल्पत्वेन तदन्वेषणस्य सुकरत्वात्तदप्रसिद्धार्थकशब्दविषये निगमादीनामर्थवत्त्वोपपत्तेर्नानर्थक्यम् ।

अत एव यद्यपि म्लेच्छप्रसिद्धिः समुदायप्रसिद्धिरूपा क्लृप्ता च, निगमादिप्रसिद्धिस्तु अवयवप्रसिद्धिरूपा कल्प्या च । अतश्च रथकाराधिकरणन्यायेन क्लृप्तकल्पनान्यायेन च म्लेच्छप्रसिद्धेरेव बलीयस्त्वं भवेत् । तथापि निगमादिवैयर्थ्यापत्तेरानर्थक्यप्रतिहतन्यायेन म्लेच्छप्रसिद्धेरेव दौर्बल्यमभ्युपगन्तुं युक्तम् । एवं च पीलत्वधिकरण-

व्युत्पादितम्लेच्छप्रसिद्धिगतम्लेच्छरूपाश्रयदौर्बल्यन्यायः शिष्टाकोपाधिकरणन्यायाद् पराहतोऽपि पुनरुज्जीवितो भवति ।

तथाहि—यद्यपि प्रसिद्ध्याश्रयभूतार्यम्लेच्छगतबलाबलापेक्षया प्रसिद्धिस्वरूपगतस्य क्लृप्तत्वकल्प्यत्वकृतबलाबलस्य समुदायावयवप्रसिद्धिकृतबलाबलस्य च शिष्टाकोपाधिकरणव्युत्पादितप्रमेयबलाबलन्यायेन बलवत्त्वान्निगमादार्यम्लेच्छगतबलाबलस्यात्र नावकाशो भवेद्, तथापि स्वरूपगतबलाबलद्वयस्यात्र निगमाद्यानर्थक्यप्रसङ्गेन बाधितत्वाद् बाधकबाधे बाध्यस्य निरपवादत्वादिति न्यायेनाश्रयकृतबलाबलस्य पुनरुज्जीवनादपि न म्लेच्छप्रसिद्धार्थग्रहणसिद्धिः ।

यदा तु वार्तिककारमते शिष्टाकोपाधिकरणेन प्रमेयबलाबलस्य बलवत्त्वनिरूपणं तदा प्रसिद्धिस्वरूपगतबलाबलत्वस्यात्रैव विचार्यत्वादाश्रयदोषेण च दुष्टस्य क्लृप्तस्याप्यनाश्रयणीयत्वादाश्रयकृतबलाबलेनैव सुतरां न म्लेच्छप्रसिद्धार्थग्रहणलाभः । अतो निगमादिवशेनैव धातुतोऽर्थप्रकल्पनम् ।

यद्यपि च निगमादिभ्योऽनेकार्थप्रतिभानं तथाऽपि अक्षादिशब्दवत्प्रकरणादिवशेनार्थविशेषावधारणं, तदभावे, तु असम्भवद्व्युत्पत्तिकपदार्थ (१)व्यावृत्त्या सम्भवद्व्युत्पत्तिकपदार्थविशेषरूपेणैवावधारणं भविष्यतीति नानुपपन्नम् । तस्माच्छास्त्रस्थार्यप्रसिद्धिरेव बलीयसीति प्राप्ते---

अभिधीयते—शब्दान्तरेषु विप्लुतिशङ्कानिराकरणाशक्तावपि पिकादिशब्दानां वेदादिप्रयुक्तत्वेनाविभक्तिकम्लेच्छप्रयोगेऽपि प्रातिपदिकमात्रस्य तावदविप्लुतिनिश्चयान्नित्यवेदप्रयुक्तत्वेन च जात्यादिरूपनित्यार्थवाचित्वकल्पनावश्यंभावे सति मुख्यार्थान्तराप्रसिद्ध्या कोकिलादौ तत्सदृशे गौणत्वायोगात् स्वसमानार्थकोकिला-

---

१. व्याकृत्त०

दिशब्दासादृश्याच्च गाव्यादिशब्दवत् तन्मूलकस्य शक्तिभ्रमस्याप्यसम्भवेनार्थस्याप्यविप्लुतिनिश्चयादनादिम्लेच्छव्यवहारोऽपि वाचकत्वकल्पक इत्युपपन्नं तस्याप्यभिधेयनिर्णये प्रामाण्यम् ।

न च तान् प्रति तत्पूर्ववृद्धव्यवहारस्य प्रामाण्यसंभवेऽपि म्लेच्छानां वैदिकशब्दश्रवणाभावादार्याणां च तत्संभाषणतद्भाषाशिक्षणयोर्निषेधान्न तत्प्रसिद्धेऽर्थे आर्याणां सङ्गतिग्रहसम्भव इति वाच्यम् । अतिक्रान्तनिषेधेभ्यः द्वैभाषिकेभ्यो म्लेच्छानां वैदिकशब्दग्रहणसम्भवात्तैरेव चार्येभ्यो म्लेच्छप्रसिद्धार्थोपदेशोपपत्तेः सङ्गतिग्रहे बाधकाभावात् ।

यत्तु तेषामनभियुक्तत्वात्तत्प्रसिद्धेरनादरः इत्युक्तम्, तददृष्टार्थधर्माधर्मविषये तेषामभियोगाभावेऽपि असति बलवति विरुद्धे प्रमाणान्तरे अभिधेयार्थनिर्णये प्रामाण्यस्य सुखोपपादत्वादयुक्तमेव । दृष्टार्थव्यवहारेषु च तेषामार्येभ्योऽपि महानभियोगो गृह (१)सेवाकृषिगृहनिर्माणादिषु । आवश्यकं च क्रोमादिशब्देषु म्लेच्छप्रसिद्ध्यपेक्षणमार्याणाम्, अन्यथा विशस्तपश्ववयवाधिकारात् सामान्यतः पश्ववयववाचित्वज्ञानेऽपि विशेषापेक्षायां निरुक्तादिभ्योऽपि विशेषनिर्धारणस्य कर्तुमशक्यत्वेन तदर्थानुष्ठानायोगप्रसङ्गात् । अतश्च पश्ववयवत्वसामान्यांशे म्लेच्छप्रसिद्धेः सम्वादेन अगत्या प्राणिवधाभियुक्तम्लेच्छप्रसिद्धार्थग्रहणमावश्यकम् । तेन यथैव निषादेष्ट्यां (२)'कूटं दक्षिणा' इति विहिते य एवैतेन द्रव्यान्तरमिश्रहिरण्यरूपेण कूटेन व्यवहरन्ति तेभ्य एवार्थतत्वं ज्ञायते, तथैवेहाऽपि पिकादिशब्दानां वेदप्रयुक्तानां आर्येभ्यश्चाप्रतीयमानार्थकानां म्लेच्छेभ्योऽप्यर्थप्रतीतिर्न विरुध्यते ।

किञ्च कोकिलादिरूपस्यार्थस्यार्यदेशे प्रसिद्धत्वात्तदर्थं म्लेच्छानपेक्षणेऽपि पत्रोर्णवारवाणाद्यर्थानां स्वरूपेणार्यदेशेऽप्रसिद्धेः

---

१. सेवाऽऽकृति २. मै. सं.२-२-४.

तदर्थं तावद् म्लेच्छापेक्षणमावश्यकम्। अतश्च कोकिलादिष्वपि पिकादिपदवाच्यत्वेनार्येष्वप्रसिद्धेः तदर्थमपि म्लेच्छप्रसिध्यपेक्षणे को विरोधः।

यत्तु म्लेच्छप्रसिद्धार्थाङ्गीकरणे निगमाद्यानर्थक्यमित्युक्तम्, तन्न; निगमादीनां हि आर्यम्लेच्छव्यवहारादिना प्रसिद्ध एवार्थे तन्निर्वचनकरणादिना निमित्तमात्रोक्तौ व्यापारः, नत्वपूर्वार्थप्रतिपादने।

यत्तु तेषामपि क्वचिदपूर्वार्थप्रतिपादनम्, यथा (१)'उत त्वः पश्यन्' इत्यादौ त्वादिशब्दानामेकाद्यपूर्वार्थप्रतिपादनं निरुक्ते, सधि हिंसायामित्यादौ च सध्यादिशब्दानां हिंसाद्यपूर्वार्थप्रतिपादनं व्याकरणे, तत्प्रायिकं प्रासङ्गिकं च। न त्वेतावता म्लेच्छप्रसिध्यङ्गीकारे तेषामानर्थक्यम्, तेषां निमित्तकथनरूपस्वव्यापाराविघातात्। न च तेषामपूर्वार्थप्रतिपादनपरत्वाभावे निमित्तमात्रप्रतिपादनपरत्वे तत्प्रयोजनाभावादानर्थक्यम्, षडङ्गवेदाध्ययनविधिबलात् निरुक्तादिजन्यपदार्थनिर्वचनज्ञाने सत्येव तत्पूर्वककर्मानुष्ठानात्फलसिद्धिः, नत्वन्यतोऽपि निर्वचनज्ञाने अव्युत्पन्नपदार्थस्वरूपज्ञानेऽपिचेति कल्पनेन सार्थक्योपपत्तेः।

अथ वा अस्तु निगमादीनामपूर्वार्थप्रतिपादनेऽपि व्यापारः, न निमित्तकथनमात्र एव, तथापि यत्र पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमित्यर्थकल्पनोपायोक्तेः यत्र म्लेच्छानामप्यथाप्रसिद्धिनिश्चयः तद्विषये निगमाद्यर्थवत्तेति न वैयर्थ्यम्।

म्लेच्छदेशानन्त्येऽपि च देशान्तरागतपुरुषवार्तापरम्परया सर्वम्लेच्छदेशप्रसिध्यभावनिश्चयोपपत्तिर्न विरुध्यते। एवं सत्यपि यदि बाधशङ्का दुःपरिहरेत्याशंक्येत ततो धूमस्याग्निसम्बन्धेऽपि (२)व्यभिचारशङ्कायाः दुष्परिहरत्वाद्धूमादप्यग्निनिश्चयेन न भवित-

---

१. ऋ. सं. ८-२-२३. २. बाध.

व्यम् । अतश्च निगमादेरर्थवत्त्वेनानर्थक्यप्रतिहतत्त्वाभावान्म्लेच्छप्र-सिद्धेः क्लृप्तत्वसमुदायप्रसिद्धिरूपत्वाभ्यामपि बलवत्त्वमव्याहतम् ।

न च म्लेच्छरूपाश्रयदौर्बल्यदोषेण दुष्टस्य क्लृप्तस्याप्यनाश्र-यणीयत्वम्, म्लेच्छानां धर्माधर्मप्रतिपादनविषये दुर्बलत्वेऽपि दृष्टार्थ-व्यवहारविषये दुर्बलत्वाभावात् । एवं सत्यपि यदि पिकादिशब्दाना-मर्थान्तरं विशेषरूपेण निगमादिभिरुदाह्रियेत, ततः पीलवादिवदेव म्लेच्छप्रसिद्धिरपि गौणत्वादिना नीयेत, नत्वेतत्तथोदाह्रियते । सा-मान्यतस्तु अनेकार्थसाधारणं धातुतोऽर्थप्रकल्पनं कल्प्यत्वावयवप्र-सिद्धिरूपत्वाभ्यां दुर्बलमेव ।

किञ्च पिकादिशब्दानां निरुक्तादिवशेनापि अवगतार्थान्वाख्या-नं पिबति,पाति,पचतीत्यनेकधातुसाधारणत्वान्म्लेच्छप्रसिद्ध्यनुगु-णमेव, कोकिलादीनामपि पानादियोगस्य प्रसिद्धत्वात् । अतो विरोधाभावादपि म्लेच्छप्रसिद्ध एवार्थः पिकादिविधावाश्रय-णीय इति सिद्धम् ।

सूत्रं तु बलवत्प्रमाणेनाविरुद्धं उपदिष्टं वैदिकविधौ ग्राह्यत्वे-न प्रतीयेत इति व्याख्येयम् ।

इति पिकनेमाधिकरणम् ।

## (६) कल्पसूत्राधिकरणम् ।

### सू—प्रयोगशास्त्रमिति चेत् ॥ १—३—१२ ॥ (पू०)

इह कल्पसूत्राण्युदाहरणम् । तत्र कल्पा नाम प्रयोगं कल्पयं-तीति व्युत्पत्तिसिद्धरूपप्रयोगप्रतिपादका ग्रन्थाः बौधायनीयवाराह-माशकाद्याः । सूत्राणि तु सूचयन्तीति व्युत्पत्त्या 'ऋचं पादग्रहण' इत्यादिसंज्ञापरिभाषादिरूपेण प्रयोगविशेषोन्नायकलक्षणप्रतिपादकाः

आश्वलायन, बैजवाप, कात्यायनादिकृताः । ते च किं वेदवदपौरुषेयाः सन्तः स्वतः प्रमाणम् ? उत तेऽपि वेदरूपा एव, किं वा पौरुषेयास्सन्तः स्मृत्यधिकरणन्यायेन वेदमूलतया प्रमाणमिति संदेहः ।

अत्र पादाध्यायसङ्गती तावत्स्पष्टे । म्लेच्छाचाराणां केषांचिदनादित्वेन शिष्टाचारतुल्यतया स्वतः प्रामाण्येऽभिहिते इहापि वेदत्वेन वेदतुल्यतया वा स्वतः प्रामाण्योपपत्तेः नैषां वेदमूलत्वं तद्विरोधे चाप्रामाण्यं युक्तं इत्यनन्तराधिकरणव्युत्पादितस्वतःप्रामाण्योपजीवनेन स्मृतिविरोधाधिकरणद्वयाक्षेपात्तु प्रकृतसङ्गतिः । स्वतः प्रामाण्याभावाच्चानन्तरा ।

नचैवं स्मृत्यधिकरणसिद्धवेदमूलत्वाक्षेपे उच्यमाने स्मृतिष्वपि तदापत्तेः कल्पसूत्रमात्रोदाहरणानुपपत्तिः । कल्पसूत्राणां सर्वत्र प्रत्यक्षपठितवेदार्थोपनिबन्धनेन वेदमूलत्वे तत्प्रणयनवैयर्थ्यापत्तेः शाखान्तरवद्वेदत्वस्य वेदतुल्यत्वस्य वा शङ्कितुं शक्यत्वेऽपि स्मृतीनां सामस्त्येन तदभावात्स्वातन्त्र्यशङ्काऽनुपपत्तेः ।

अस्तु वा (१)'अङ्गं वा समभिव्याहारादि'त्यादिकल्पसूत्रेष्वपि अनुपलभ्यमानवेदमूलेषु स्वातन्त्र्यशङ्कानुपपत्तेस्तुल्यत्वात् तत्र वा तदुपपत्तौ स्मृतिष्वपि तदापत्तेः सकलं विद्यास्थानजातमिहोदाहरणम् ।

अथ वा अङ्गान्यत्रोदाहरणम्, तेषां हि 'षडङ्गमेके' इति वेदत्वस्मरणात्स्वातन्त्र्यशङ्कोपजायते । यदा तु वार्तिककारमते विरोधाधिकरणे शाक्यादिग्रन्थानां वेदमूलत्वासम्भवेनाप्रामाण्यं प्रतिपादितम्, तदा इहापि तेषां स्वातन्त्र्येण प्रामाण्यसम्भवात्तदधिकरणसिद्धाप्रामाण्याक्षेपेणेह पूर्वपक्षकरणात्तेषामप्युदाहरणत्वम् ।

तदेवमत्र कल्पसूत्रादिकमुदाहृत्य किमेषां स्वातन्त्र्येण प्रामाण्यं सम्भवत्युत नेति विचारः । तत्रैवं पूर्वपक्षवाद्यभिप्रायः—यथैव स्मृत्यधिकरणे भ्रान्त्यादिकल्पनातो वेदमूलत्वकल्पनाया लघुभूत-

---

१. का. श्रौ. ४. २९.

त्वाद्वेदमूलत्वमेवाश्रितं तथैव दृढत्रैवर्णिकपरिग्रहेणावश्यवक्तव्ये प्रा-
माण्ये वेदमूलत्वकल्पनापेक्षयाप्यपौरुषेयत्वकल्पनाया लघुत्वात्तदेव युक्तमाश्रयितुम् । वेदमूलत्वकल्पने हि पुरुषः, तन्मूलप्रमाणं वेदः, तन्नित्यत्वं, इति त्रितयं कल्प्यं, तद्वरमकर्तृकतैव युक्ता समाश्रयितुम्। अतश्चापौरुषेयत्वसाम्यादेतेषामपि वेदत्वम् । यदि तु तेषु वेदशब्दप्रयोगाभावाद्वेदत्वासम्भव आशंक्येत ततोऽस्तु वेदतुल्य-
म्। सर्वथा न वेदमूलकत्वेन प्रामाण्यम् ।

अङ्गानां तु 'मन्त्रब्राह्मणयोः वेदनामधेयं, षडङ्गमेके, इति गौ-
तमेन वेदत्वस्मृतेः शक्यं वेदत्वमप्याश्रयितुम् ।

किञ्च कल्पसूत्राणां प्रायशः सकलजनप्रत्यक्षवेदार्थोपनिबन्ध-
नात् तन्मूलत्वे च तत्प्रणयनवैयर्थ्यापत्तेः शाखान्तरवदेवापौरुषेय-
त्वाश्रयणम् ।

किञ्च पौरुषेयत्वे अमीषां विधायकोपस्थापनमात्रेण चरितार्थ-
त्वान्न धर्मप्रमाजनकत्वमिति धर्ममूलत्वस्मरणानुपपत्तिः । न हीष्टसा-
धनत्वमात्रेण धर्मत्वम्, कृष्यादावपि तदापत्तेः । अपि तु विध्यनु-
ष्ठापितत्वपर्यन्तेन, न च विधिः पौरुषेयेषु लिङ्गादिषु समस्ति, तेषां पुरुषाभिप्रायमात्रप्रतिपादकत्वस्य स्थापितत्वात् ।

किञ्च मन्त्रैरेव स्मर्तव्यं इति नियमवद्वेदेनैवावगतं कर्माभ्युदयका-
रि भवति इति स्वाध्यायविधिवशेन नियमावगमान्मन्त्रादिग्रन्थानां चावेदत्वे तज्जन्यावगमस्याभ्युदयकारित्वाभावात्प्रणयनवैयर्थ्याप-
त्तिः । कथं चैषां पौरुषेयत्वे नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिः ? । श्रूयते हि (१)"अहरहः स्वाध्यायमधीयीत" इत्युक्त्वा "यदृचोऽधीते, यद्यजूंषि, यत्सामानि, यद्ब्राह्मणानीतिहासान् पुराणानि कल्पा"नि
ति । न च प्रवाहनित्यत्वकल्पनया तदुपपत्तिः । तत्कल्पनस्य गौर-
रवग्रस्तत्वेनाप्रामाणिकत्वात् ।

---

१. तै. आर. १०.

एवं शाक्यादिग्रन्थेभ्योऽपि धर्माधर्मविषयावगतिस्तावत्स्वसंवेद्या, तस्याश्च स्वतः प्रामाण्यस्य स्थापितत्वादाप्तोक्तत्वलक्षणगुणाभावेऽपि नाप्रामाण्यम् । न च मीमांसकैः स्वतः प्रामाण्याभ्युपगमेऽपि शाक्येन तदनभ्युपगमात् तदङ्गीकारे अपसिद्धान्तापत्तिः । 'उत्पाताद्वा तथागतानां अनुत्पाताद्वा स्थितैवैषां धर्मनित्यतेति' शाक्येन प्रवाहनित्यत्वेन कूटस्थनित्यत्वेन वा धर्मनित्यत्वस्योक्तत्वात् तन्नित्यत्वस्य च तत्प्रतिपादकागमनित्यत्वमन्तरेणानुपपत्तेः, नित्यानां चागमानामस्वतस्त्वे प्रामाण्यानिर्वाहात्स्वतस्त्वाभ्युपगमेऽप्यपसिद्धान्तानापत्तेः । एवं सत्यपि यदि सकर्तृकत्वमभ्युपगम्येत ततः कर्तृदोषेण प्रामाण्यावगतिर्बाध्येतापि, न तदभ्युपगमः शक्यते कर्तुम् । तत्कर्तृपुरुषस्य तन्मूलभूतभ्रान्त्यादेश्च कल्पनेऽतितरां गौरवापत्तेः । अतश्च लाघवादेतेषामकर्तृकतैवाभ्युपगन्तुं युक्ता ।

न च मानवमाशकबौद्धादिसमाख्यया सकर्तृकत्वावगमादकर्तृकत्वानुमानपराहतिः शंक्या । समाख्यायास्तृतीये प्रमाणान्तरप्राप्तकर्तृविशेषनियामकत्वमात्राभ्युपगमेनाप्राप्तकर्तृप्रमापकत्वाभावाल्लाघवेन चाकर्तृकत्वानुमितौ जातायां सामान्यतः कर्तृप्राप्त्यभावेन समाख्यायास्तन्नियामकत्वानुपपत्तेः । अतश्च काठकादिसमाख्यावदेव मानवादिसमाख्यापि प्रवचननिमित्तत्वेनोपपादनीया ।

न च समाख्यया अनुमानपराहतावपि 'मशकेनेदं कृतं' इति दृढाविच्छिन्नाध्येतृस्मरणेन तत्पराहतिः शंक्या । "शैशवं भवति शिशुर्वा आङ्गिरसो मंत्रकृतां मन्त्रकृदासीत्" इत्यादाविव करोतेः 'गन्धनावक्षेपणछेदनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ्" इति स्मृत्यालोचनया अनेकार्थत्वावगतेः प्रकथनाभिप्रायेणाप्युपपत्तेः । न चार्थवादाद्यभावेन वेदमुद्रारहितत्वादवेदत्वानुमानेन सत्प्रतिपक्षता शङ्क्या । अरुणपराशरशाखाब्राह्मणस्याप्येवंविधत्वेनानैकांतिकत्वात् । वेदतुल्यत्वानुमानस्य वेदमुद्रारहितत्वेऽप्यव्याहतत्वाच्च । अत एव

लाट्यद्राह्यायणसूत्रकाराभ्यां बाधकं प्रकटयोक्तम् (१)"तत्प्रत्यक्षविहितं त्वार्षकल्पेन तत्रानुमानं न विद्यते इति।

तस्मादेवंजातीयकमिदं प्रयोगशास्त्रं साक्षादेव विधायकं, न तु मूलभूतप्रमाणानुमानेन न वा सर्वथा अप्रमाणमिति सूत्रार्थः॥

## सू—नासन्नियमात् ॥ १–३–१२ ॥ (सि)

नैतेऽपौरुषेयाः, लाघवं हि प्रमाणोपष्टम्भकम्। न तु प्रमाणान्तरोपमर्देन स्वतः प्रमाणम्। तदिहात्र हढानिच्छिन्नाध्येतृपरम्परया मन्वादीनां कर्तृत्वस्मरणेन तावत्सकर्तृकत्वं प्रमितम्। न चैतादृशतदभावसाधकं किंचित्प्रमाणमस्ति स्मर्तव्यास्मरणमेव हि दृश्यादर्शनवत्तदभावसाधकं स्यात्, न तु तदस्ति। लाघवस्य तु तर्कविधया प्रमाणोपष्टम्भकमात्ररूपत्वान्न स्वतः प्रमाणत्वम्। अन्यथा कालिदासादिवाक्येष्वपि लाघवेनाकर्तृकत्वापत्तेः।

वेदेऽपि तु न लाघवमात्रेणाकर्तृकत्वसिद्धिः; किन्तु स्मर्तव्यास्मरणादेव। न हि तत्र वेदाध्येतॄणां परम्परया सकर्तृकत्वस्मरणम्।

यदपि तार्किकादीनां ईश्वरप्रणीतत्वादिस्मरणं तदपि न वेदाध्येतृपरम्परास्मरणमूलकम्। अपि तु अनुमानादिरूपन्यायाभासमूलमेव। आभासत्वं च तेषां लाघवतर्कसहकृतस्मर्तव्यास्मरणादेवावगम्यते। अतश्च वेदस्योक्तरीत्याऽपौरुषेयत्वावगतेः क्वचिदन्यपरे वाक्ये 'मन्त्रकृतां मन्त्रकृदासी' दित्यादौ लाक्षणिकानुशासनबलेन प्रकथनार्थतयापि व्याख्यानं नानुपपन्नम्।

मन्वादिस्मृतीनां तु कर्त्रभावसाधकप्रमाणाभावेन प्रत्युत तत्स-

---

१ लाट्या. श्रौ. १०–२०–११ "प्रत्यक्षविहितमेतदार्षेयकल्पेन सर्वसत्रं तत्र तस्मिन् अनुमानं न विद्यते। ......न च शक्यं प्रत्यक्षविहितमनुमानेन प्रत्याख्यातुं विकल्पयितुं वा. तद्यथाऽऽर्षेयकल्पेन कृतं तद तथैव स्यात्" इत्यग्निस्वामी।

ज्ञात्वसाधकप्रमाणस्यैव सत्त्वात् न प्रकथनार्थतया व्याख्याने (१)प्रमाणमस्ति । अतश्च कर्तुः सामान्यतः प्राप्तेः सत्त्वात् मानवादिसमाख्याया अपि कर्तृविशेषनियामकत्वोपपत्तिः ।

एवं सत्यापि यदि त्रैवर्णिकानां धर्ममूलत्वस्मरणं अपौरुषेयत्वं विना नोपपद्येत ततः कल्प्येतापि तत् । तत्तु वेदमूलत्वेनाप्युपपन्नतरमिति नापौरुषेयत्वसिद्धिः । यदपि च 'षडङ्गमेके' इत्यङ्गानां वेदत्वस्मरणं तदप्येकग्रहणादेव पूर्वपक्षत्वप्रतीतेर्मन्त्रब्राह्मणयोर्वेदनामधेयं' इत्यस्य च एकपदरहितस्य सिद्धान्तत्वप्रतीतेरसन्मूलकम् ।

शाक्यादिग्रन्थानां तु अपौरुषेयत्वं स्वसिद्धान्तभङ्गापत्तेश्चायुक्तम् । तन्मते हि प्रतिसंख्यानिरोधाख्यस्य ध्वंसस्य अप्रतिसंख्यानिरोधाख्यस्य च प्रागभावस्य व्योम्नश्च(२) वरणाभावरूपस्यावस्तुत्वेन नित्यत्वेऽपि तदतिरिक्तस्य वस्तुनो वर्णादेः क्षणिकत्वाभ्युपगमात् तद्घटितपदवाक्यसमुदायात्मकस्यागमस्य कूटस्थनित्यत्वं तावद्दुरभ्युपगमम् ।

प्रवाहनित्यत्वमपि च तद्गतस्य कस्यचिज्जात्यादेः कूटस्थनित्यतामन्तरेणानुपपन्नमिति जात्यादेः कूटस्थनित्यताङ्गीकारे तदवस्थैव क्षणिकत्वाभ्युपगमभङ्गापत्तिः । अतश्चैषामपौरुषेयत्वासम्भवाद्वेदविरोधित्वेन च वेदमूलत्वस्याप्ययोगादप्रामाण्यमेव ।

कल्पसूत्रादीनां तु स्मृत्यधिकरणन्यायेन वेदमूलत्वोपपत्तेर्नाप्रामाण्यम् ।

यत्तु—प्रत्यक्षवेदार्थोपनिबन्धनेन कल्पसूत्राणां प्रणयनवैयर्थ्यापत्तेः शाखान्तरतुल्यतेत्युक्तम् । तन्न ; नानाशाखागतानां वैकल्पिकानां एकादशनवद्वादशकपालत्वादीनां समुच्चितानां च प्रयाजा-

---

१. किञ्चित् कारणमस्ति　　२. धारणाभाव.

अनुमन्त्रणमन्त्रादीनां शाखान्तरीयवाक्याधीनबाधोपसंहारपरिस-ङ्ख्यापदार्थलक्षणापूर्ववाक्यादेश्चोपसंहारो मीमांसाभिज्ञैः स्वशाखा-मात्राध्यायिभिः क्वचिदुदाहरणविशेषे ज्ञायमानेऽपि सर्वोदाहरणेषु ज्ञातुमशक्यत्वात्तदर्थस्मृतिविक्षेपकार्थत्वादस्यांगेन साङ्गस्यानुष्ठानस्य कर्तुमशक्यत्वाच्च प्रणयनार्थवत्त्वोपपत्तेः । प्रत्युत इह शाखान्तरवद-ध्येतृभेदाभावात्स्वमत एव तुल्याध्येतृकत्वात् विध्यन्तरानर्थक्यम् । अतश्चाभ्यासाधिकरणन्यायेन अनेकादृष्टकल्पनानुविद्धकर्मान्तरत्व-कल्पनायामत्यन्तगौरवापत्तिः । अस्मन्मते तु प्रत्यक्षविधिविहितार्था-नुवादकत्वेऽप्यनुष्ठानसौकर्यार्थं कल्पादिद्वारोपस्थापनमर्थवत् ।

यत्तु—स्वाध्यायविधिवशेन वेदजन्यावगमस्यैवाभ्युदयकारित्वा-वगमात् न कल्पसूत्राणां तदुपस्थापकत्वमिति, तन्न 'ब्राह्मणेन षड-ङ्गो वेदोऽध्येयो ज्ञेयश्च' इति वचनैकवाक्यतया साङ्गवेदजन्यावगमस्यै-वाभ्युदयकारित्वावगमेन कल्पसूत्राणामपि तदुपपत्तेरनर्थकम् ।

किञ्चार्थावगमं प्रति वेदमात्रनियमेऽपि अर्थतात्पर्यावधारणाफ-लकमीमांसावदेव कल्पादीनामपि अनुष्ठानसौकर्यफलकत्वेन भिन्न-कार्यत्वान्न निवृत्तिः । न हि व्रीहिनियमेऽप्युपस्तरणाद्यर्थस्याज्यस्य निवृत्तिरिष्टा । अतश्च कल्पादिप्रणयनवैयर्थ्यमनाशङ्क्यमेव ।

नन्वेवमप्यनेकोपस्थापनवैयर्थ्यम्, स्वाध्यायविधाविव यथाऽध्या-यपदोक्तायाः शाखायाः स्वशब्देन विशेषणात् पारम्पर्यागतैकशाखा-ध्ययननियमः तथा (१)"यद्यल्पं वा स्वगृह्योक्तं यस्य यावत् प्रचो-दितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" इत्यस्मिन्शा-खान्तराधिकरणसिद्धसर्वाङ्गोपसंहारानुकल्पविधौ गृह्यसूत्रस्य स्व-शब्देन विशेषणात्पारम्पर्यागतैकगृह्यसूत्राध्ययननियमप्रतीतेः । न

१. वचनमिदं शातातपवचनत्वेनोपन्यस्तं स्मृतिमुक्ताफले । पर-न्तु नैवोपलब्धं इदानींतनमुद्रितशातातपस्मृतौ लघुशातातपस्मृतौ वृद्धशातातपस्मृतौ वा

चात्र सूत्रग्रहणं विवक्षितम् । तच्चरणपरिगृहीतकल्पसूत्राणामपि पारम्पर्यपरिग्रहनिमित्तत्वस्याविशिष्टत्वात् । अतश्चानेककल्पसूत्राध्ययनस्याप्रसक्तत्वान्नानेकैरुपस्थापनवैयर्थ्यम् ।

अस्तु वा मनुयाज्ञवल्क्यादिस्मृतिवत् कल्पसूत्राणामनेकेषामध्ययनप्रसक्तिः, तथापि एकमेव कर्म श्राद्धादिवदग्निहोत्रादिकं विकल्पेनैकेनैव कल्पसूत्रेणोपस्थापितमनुष्ठेयमिति नानेकैरुपस्थापनवैयर्थ्यम् ।

यदपि विधायकोपस्थापनमात्रेण चरितार्थत्वान्नैषां धर्मप्रमाजनकत्वसम्भव इत्युक्तम्, तदपि यत्रैषां मूलभूता श्रुतिः न प्रत्यक्षा तत्र तावत्पौरुषेयत्वेन लौकिकवाक्यवद्धर्मप्रमाजनकत्वाभावेऽपि मूलभूतप्रमाणोपस्थापकत्वेन धर्मप्रमाप्रयोजकत्वाद्भाक्त एव प्रामाण्यव्यवहार इति स्मृत्यधिकरण एव निरस्तम् । यत्रापि मूलभूता श्रुतिः प्रत्यक्षा तत्रापि तात्पर्यावधारणस्य कल्पसूत्राद्यधीनत्वात्तात्पर्यविषयीभूतार्थविषयप्रमाजनकत्वात्प्रामाण्योपपत्तिः ।

अत्र केचित्—'षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति षडङ्गानामपि धर्मप्रमाजनकत्वबोधनेन साङ्गवेदादेवावगतं कर्माभ्युदयकारि भवतीति नियमावगतेरभ्युदयसाधनीभूतस्य कर्मणो या प्रमा तज्जनकत्वेन कल्पादीनां प्रामाण्यम् ।

एवं मन्त्राणामपि स्मारकत्वनियमात्तज्जन्याया एव स्मृतेरभ्युदयकारित्वावगमेन तादृशकर्मविषयप्रमाजनकत्वेनैव तेषामपि प्रामाण्यमित्याहुः ।

तन्न; अभ्युदयशिरस्कत्वरूपविशेषणविषयकप्रमाजनकत्वेन वा प्रामाण्यमभिप्रेतम्? ज्योतिष्टोमादिकर्मरूपविशेष्यविषयकप्रमाजनकत्वेन वा? । नाद्यः; अभ्युदयशिरस्कत्वस्य 'षडङ्गो वेदोऽध्येयः' इति षडङ्गाध्ययनविधिप्रमेयत्वेन कल्पादिप्रमेयत्वाभावात् । मन्त्रेष्वपि हि अभ्युदयकारित्वं तन्नियमविधेरेव प्रमेयं, न मन्त्राणाम् । अत एव मन्त्राणां पदार्थविषयैव प्रामाण्यमित्युक्तं मन्त्रा[illegible]ण ।

नान्त्यः ; ज्योतिष्टोमादेः स्वस्वविधिप्रमेयत्वेन कल्पादिप्रमेयत्वाभावात् । तस्मात् श्रुतितात्पर्यविषयीभूतार्थविषयप्रमाजनकत्वेनैव प्रामाण्यं कल्पादेः । न चैवं अहिंसादिविषयशाक्यादिवचनानामाधुनिकप्रणीतग्रन्थस्य वा श्रुतितात्पर्यज्ञानजनकत्वेन प्रामाण्यापत्तिः । तत्कर्तुः श्रुतितात्पर्यज्ञानवत्त्वस्य निश्चेतुमशक्यत्वेनाप्रामाण्यशङ्कास्कन्दितत्वाद्ग्रन्थानां तात्पर्यप्रमाजनकत्वासम्भवेन प्रामाण्यानापत्तेः । मन्वादीनां तु ऋषित्वेन तात्पर्यज्ञानवत्त्वस्य निश्चेतुं शक्यत्वात्तद्ग्रन्थानामप्रामाण्यशङ्कानास्कन्दितप्रमाजनकत्वसम्भवेन युक्तं प्रामाण्यम् ।

यत्तु—कल्पादीनां पौरुषेयत्वे नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तिरित्युक्तम् । तत् एवंजातीयकानां ग्रन्थानां सर्वकालं केषांचित्संभवेन प्रवाहानित्यतया व्रीह्यादिवदेव परिहर्तव्यम् । यथा च तत्र व्रीहित्वादिजातिमादायानित्यसंयोगविरोधपरिहारः तथा सर्वग्रन्थेषु वाक्यत्ववत्कल्पत्वजात्यनङ्गीकारेऽपि क्लृप्तविधात्वर्थानुसारेण वेदार्थप्रकल्पकत्वरूपेणैकेनोपाधिना सूपपादत्वादेवानित्यसंयोगपरिहारो द्रष्टव्यः ।

सूत्रं तु प्रागमतमेव कल्पादीनां निबन्धनरूपनियमस्मृतेर्नापौरुषेयत्वमिति व्याख्येयम् ।

## सू—अवाक्यशेषाच्च ॥ १. ३. १३. ॥

प्रायशो वेद(?)व्याख्यारूपस्यार्थवादादेः कल्पादावसत्त्वादपि नापौरुषेयत्वकल्पनया वेदत्वाध्यवसानम् । एवं सत्यपि यद्यरुण, पराशरशाखाब्राह्मणवत् दृढवेदत्वस्मरणं भवेत् तदा अभ्युपगम्येतापि तत् । न तु तदस्तीत्युक्तमेव ।

यत्तु प्राशकं प्रकृत्य 'तत्रानुमानं न विद्यते' इति लाट्यायन-

णसूत्रकारवचनं तदस्मदादिप्रत्यक्षश्रुतिमूलत्वेन स्मृतिपुराणादिवैषम्यप्रतिपादनपरं द्रष्टव्यम् ।

## सू–सर्वत्र च प्रयोगात् सन्निधानशास्त्राच्च ॥ १.३.१४.॥

ननु यदि कल्पादीनां वेदमूलत्वेनापि प्रामाण्यं नियतमेव, (१)तदापि किं विचारप्रयोजनम्? तदुच्यते—यत्र प्रत्यक्षश्रुतिविरुद्धं अनुपलभ्यमानश्रुति च वचनमुच्यते तत्र यावच्छ्रुतिदर्शनं विरोधाधिकरणन्यायेनाननुष्ठानलक्षणमप्रामाण्यम् ।

यत्रापि च न्यायोपन्यासपूर्वकं किञ्चिदुच्यते, तत्रापि तन्मूलभूतश्रुतिसत्त्वे न्यायोपन्यासवैयर्थ्यापत्तेर्न्याय एव तन्मूलं, न श्रुतिः इत्यवधारणात् न्यायस्य च मीमांस्यमानस्याभासत्वावधारणे तस्याप्यननुष्ठानलक्षणमप्रामाण्यं यावच्छ्रुतिदर्शनमभ्युपगन्तव्यम् । श्रुतिदर्शनोत्तरं तु न्यायोपन्यासस्य हेत्वर्थवादत्वमङ्गीकृत्य वचनेन प्रतिपक्षन्यायस्यैवाभासीकरणं द्रष्टव्यम् ।

यत्र तु न्यायोपन्यासं विनैव वेदोपस्थापितन्यायान्तरविरुद्धं चोच्यते तत्र सत्यपि न्यायविरोधे तन्मूलभूतश्रुत्यनुमानस्य बलवद्बाधकाभावेन निरोद्धुमशक्यत्वादनुमितश्रुतिमूलकेनापि कल्पसूत्रेण न्यायस्यैव बाधः । अत एव नवमे न्यायेन अग्निष्टुति सुब्रह्मण्यानिगदगतानां हरिवदादिशब्दानामनूहे साधिते याज्ञिकस्मरणेनोहितपाठानुमानान्न्यायस्यैवाभासत्वं 'तदेतन्न रोचयन्ते याज्ञिकाः' इत्यादि भाष्यवार्तिकयोः स्पष्टीकृतम् ।

अतश्चास्मिन्नधिकरणे यद्वार्तिके अविशेषेण न्यायस्य कल्पसूत्रबाधकत्वमुक्तं तदपि न्यायोपन्यासपूर्वक एव तस्मिन्नित्यवगन्तव्यम् । तद्यथा,—सवनीयपशुपुरोडाशं प्रकृत्य '(२)अक्रियामेके, अ-

---

१. सिद्धान्ते ऽभिमतम्.　　२. आश्व. श्रौ. ५-१३-९.

न्यत्र तदर्थवादवदनात्" इत्याश्वलायनसूत्रे अर्थवादोत्थापितन्यायमूलकतैव तदुपन्यासादवगम्यते, न स्पष्टश्रुतिमूलकता ।

तथाहि-अयं हि तस्यार्थः । अग्नीषोमीये हि पशुपुरोडाशस्य छिद्रापिधानार्थत्वं रात्रिसत्रवत् "(१)सुषिरो वै तर्हि पशुर्यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो भवत्यपिधानाय" इत्यर्थवादादवगम्यते । अतश्च सवनीये उपकारपृष्ठभावेनातिदेशात्प्राप्तस्य पशुपुरोडाशस्य (२)"अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते अपिहित्या अच्छिद्रताया" इत्यर्थवादादेव छिद्रापिधानार्थत्वेन विधीयमानैः सवनीयपुरोडाशैरेव कार्यसिद्धेः प्रत्याम्नानेन बाधात् (३)'वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने' इति लिङ्गेन प्रतिप्रसवाद्विकल्प इति ।

एतस्य हि न्यायस्य द्वादशाधिकरणन्यायेनैवाभासत्वम् । तत्र हि 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपति" इत्यनेन विहितस्य पुरोडाशस्य वाक्येन देवतासंस्कारकत्वस्य दशमे स्थापितत्वाच्छिद्रापिधानार्थत्वं पर्णमयीन्यायेन प्रत्यक्षविरोधाच्चार्थवादमात्रं इति नित्यमेवातिदेशेन पुरोडाशः सवनीये कर्तव्य इत्युक्तम् । अतश्च न्यायेनैव सूत्रोक्तस्य न्यायस्याभासत्वावगमाद्यावच्छ्रुतिदर्शनं सिद्धमननुष्ठानलक्षणमप्रामाण्यम् ।

यत्तु शास्त्रदीपिकायां न्यायोपन्यासरहितं पश्वैकादशिनीप्रकरणस्थं '(४)जाघनीभिः पत्नीः संयाजयन्ति' इत्यापस्तम्बसूत्रमुदाहृतं, तत् यद्यपि द्वादशाधिकरणे सर्वप्रकृतिभूतयोर्दर्शपूर्णमासयोः "(५)जाघन्या पत्नीः संयाजयन्ति, आज्येन वा" इति विहिताया वैकल्पिक्या जाघन्याः पशावग्नीषोमीयेऽतिदेशेन प्राप्ताया

१. मै. सं. ३-१०-२. २. तै. सं.६-५-११-४. मै. सं.३-१०-३. ३. मै. सं. ३-९-७. ४ आप श्रौ. १४-७-११. ५. आप. श्रौ. ३-८-१०.

'जाघन्या पत्नीः संयाजयन्ती'ति पुनः श्रवणं नियमार्थं, न तु प्रतिपत्तित्वार्थं, लक्षणाप्रसङ्गाद्‌गाकृतकार्यकारित्वापत्तेश्च । अतश्च जाघन्या उपादेयत्वेन विवक्षितसङ्ख्यात्वादेकैव या काचिज्जाघनी पश्वैकादशिन्यां ग्राह्येत्यभिधानान्यायविरुद्धम्, तथापि न्यायोपन्यासाभावेन तस्य श्रुतिमूलकत्वाभावानिश्चयाद्दूहितसुब्रह्मण्यास्मरणस्येव श्रुतिमूलकत्वोपपत्तेरुपेक्ष्यम् ।

प्रत्यक्षश्रुतिविरोधे तु कल्पादीनामननुष्ठानलक्षणाप्रामाण्ये भाष्यकारेण (१)'आपौर्णमास्या अमावास्या नात्येति' 'आमावास्यायाः पौर्णमासीति' गृह्यकारवचनं द्वितीयादिसर्वतिथिषु दर्शपूर्णमासानुष्ठानबोधकमुदाहृत्य 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिप्रत्यक्षश्रुतिविरोधादप्रमाणमित्युक्तम् ।

वार्तिके तु एतस्य गृह्यकारवचनत्वेन तदधिकृतपार्वणस्थालीपाकविषयत्वान्न तदनधिकृतदर्शपूर्णमासविषयत्वम् । अतश्च यथा (२)'आसायमाहुतेः प्रातराहुतिः नात्येति, आप्रातराहुतेः सायमाहुतिः' इत्यस्य गृह्यकारवचनत्वात्स्मार्तहोमविषयत्वं, न तु श्रौताग्निहोत्रविषयत्वम्, एवमेतस्यापि दर्शपूर्णमासविषयत्वाभावान्न प्रत्यक्षश्रुतिविरोधोदाहरणत्वं घटत इत्युक्तम् ।

वस्तुतस्तु सत्यप्येतस्य दर्शपूर्णमासविषयत्वे 'स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः' इति वचनान्तरानुरोधाद्गौणकालविधायकत्वावगतेर्न मुख्यकालविधायकप्रत्यक्षश्रुतिविरोधः । न च कालस्यानुपादेयत्वेन यथाशक्तिन्यायाविषयत्वस्य षष्ठे वक्ष्यमाणत्वान्न मुख्यकालासम्भवे कालान्तरप्रतिनिधिनियमो युक्त इति वाच्यम् । प्रतिनिधिनियमत्वासम्भवेऽपि मुख्यकालाभावे कालान्तरविधिन्यायेनोपपत्तेः । अतश्च भाष्यकृदुक्तोदाहरणासम्भवादुदाहरणान्तरं द्रष्टव्यम् ।

---

१. २. गो. गृ. १-९-१४.

तद्यथा—(१)'पुरोडाशं पर्यग्नि करोति' इति प्रत्यक्षश्रुतिविरुद्धं (२)'सर्वाणि हवींषि पर्यग्नि करोति' इत्यापस्तम्बवचनं यावच्छ्रुतिदर्शनमननुष्ठेयत्वादप्रमाणम्। एतन्मूलकश्रुतिदर्शनोत्तरं तु तस्याः सर्वशब्दोपेतत्वात् सर्वशब्देन च सर्वनाम्ना 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इतिवत् प्रकृतयावद्धविर्विशेषपरामर्शस्य स्पष्टत्वात् (३)'सामान्यविधिरस्पष्टः संह्रियेत विशेषत' इत्युपसंहारन्यायाभावात् प्रत्युत 'स्पष्टस्य तु विधेर्नान्यैरुपसंहारकल्पने'तितदपवादकन्यायस्यैव सत्त्वात् 'पुरोडाशं पर्यग्नि करोती'त्यनेनोपसंहारानुपपत्तेः विकल्प एव युक्तः।

यत्त्वत्र कैश्चिदुक्तम्—सर्वत्वस्योद्देश्यविशेषणत्वेनाविवक्षितत्वाद्विवक्षितत्वेऽपि वा (४)'सर्वत्वमाधिकारिकम्' इति न्यायेन वचनान्तरानुरोधेन पुरोडाशमात्रविषयत्वोपपत्तेः श्रुतिदर्शनोत्तरमप्येतस्याप्रामाण्यमेवेति। तत् सर्वशब्दोपेतश्रुतेः पुरोडाशमात्रविषयत्वे कल्पसूत्रस्य सुतरां तदुपपत्तेः हारियोजने च प्रकरणमात्रसंकोचितायाः सर्वशब्दश्रुतेः (५)'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ती'ति पूर्वप्रकृतचमसिमात्रविषयतया संकोचवदिहापि तदनुपपत्तेरयुक्तमित्युपेक्षणीयम्।

सूत्रं तु सर्वश्रुतिविरुद्धेऽप्यर्थे कल्पकारैः स्ववाक्यस्य प्रयुक्तत्वात्तस्य च सन्निहितेन प्रत्यक्षेण शास्त्रेण विरोधाद्वेदमूलत्वे अप्रामाण्योपपत्तेः स्वातन्त्र्ये च प्रामाण्योपपत्तेरस्ति प्रयोजनमिति व्याख्येयम्।

इति कल्पसूत्राधिकरणम्॥

---

१. श. ब्रा. १-२-६-१२. २. आप. श्रौ. १-२५-८.
३. तं. वा. ३-४-१८. पृ. १०२०. ४. जै. सू. १-२.-१६.
५. श ब्रा. ४-४-.३-१०.

## (७) होलाकाधिकरणम् ॥

### सू—अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ (पू)१-३-१५. ॥

एवं तावत् स्मृतीनामाचाराणां च सापवादं वेदमूलकत्वेन प्रामाण्ये दृढीकृते सम्प्रति केषुचित् स्मृत्याचारेषु मूलभूतवेदगतो विशेषो विचार्यते। होलाकाद्याचारा हि प्राच्यैरेव क्रियन्ते, करञ्जादिपूजात्मकगाःह्वीनैबुकं दाक्षिणात्यैरेव ; उद्वृषभयज्ञादय उदीच्यैरेव।

तथा क्वचिद्देशविशेषे कैश्चिदेव किञ्चित् वर्ज्यते। तत्र तन्मूलभूता विधिप्रतिषेधाः किं तन्मात्रविषयत्वेन व्यवस्थिताः कल्प्यन्ते ? उत सर्वसाधारणाः ? इति।

तथा पुराणमानवेतिहासव्यतिरिक्तगौतमादिप्रणीतधर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते। तद्यथा—गौतमीयं गोभिलीयं च छन्दोगैरेव पठ्यते, वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं वाजसनेयिभिः, आपस्तम्बबौधायनीयं तैत्तिरीयैरेव। अतश्च तत्रापि तन्मात्रविषयैव कल्पनीया ? उत सर्वविषयेति विचारणीयम्। एवं च व्यवस्थिताव्यवस्थितमूलकत्वविचारस्य प्रमाणलक्षणसङ्गतस्यैवाधिकरणशरीरत्वादेतद्विचारफलीभूतस्य किमनुष्ठातॄणां प्राच्यादीनामेवाधिकारः अथवा सर्वेषामित्येवंविधविचारस्य षष्ठविषयत्वेऽपि न काचित्क्षतिः।

केचित्तु अत्र होलाकाद्याचाराः स्मृतयश्च प्राच्यादिभिन्नान्प्रति प्रमाणं, अप्रमाणं वेति यथाश्रुतभाष्यानुसाराद्विचारस्वरूपमाहुः। तद् प्रामाण्यस्यालोकवत्सर्वपुरुषसाधारण्याद्व्यवस्थाशङ्कानुपपत्तेरुपेक्षितम्। न हि राजसूयवाक्यस्य ब्राह्मणादीन् प्रत्यप्रत्वावपि तान् प्रत्यप्रामाण्यम्। निर्दुष्टज्ञानोत्पादकत्वलक्षणस्य ताम-

सभ्यविशिष्टत्वात् । अत उक्तविध एव विचारोऽधिकरणशरीरम् ।

तस्य च पादाध्यायसङ्गती स्मृत्याचारप्रामाण्यहेतुपारिशेषनात्म-कत्वादुपपन्ने एव । अवसरसंगतिस्त्वनन्तरा ।

यत्तु न्यायसुधाकृता गृह्यादीनामभ्यविशेषेण नोदाहरणत्वम्, किन्तु यदेव किंचित्पुरुषधर्मत्वेन क्वचिदेव गृह्यादौ विहितम्—यथा (१)'कपालं भगालमिति ब्रूयात्, (२)अभद्रं भद्रमिति'इति गौतमोक्तम् तत्रैव हि पूर्वपक्षे व्यवस्थयानुष्ठानं शङ्कितुं शक्यम् ; न तु नान्यगृ-ह्यविहितानां पार्वणस्थालीपाकादीनाम् । तेषां हि शाखान्तरन्यायेना-भेदावगमात् सर्वविषयत्वप्रतीतेः तदङ्गानामपि च दर्शपूर्णमासा-द्यङ्गवदेव(३) 'न चैकं प्रति शिष्यते' इति न्यायेनैव सर्वविषयत्वप्र-तीतेः न व्यवस्थाशङ्कोपपत्तिः ।

एवमुपनयनोपाकरणादीनां वेदाध्ययनाङ्गत्वात्तत्तच्छाखाध्यय-नस्य भेदेनेतिकर्तव्यतापेक्षायां भेदेनैव तत्तद्गृह्याम्नातोपनयनादीनां अङ्गत्वावगमेन सिद्धान्तेऽपि व्यवस्थाप्रतीतेः अन्यथा 'बहुलं वा स्वगृह्योक्तं' इत्यस्य निर्विषयत्वेनात्यन्तानर्थक्यप्रसंगापत्तेः सर्वधर्म-त्वाभावात्तद्विषयत्वेऽपि गृह्यादीनां नोदाहरणत्वमित्युक्तम् ।

तन्न ; शाखान्तराधिकरणन्यायेन गृह्यगतपार्वणस्थालीपाकाद्य-भेदेऽपि पूर्वपक्षे तदङ्गेषु विधिपाठव्यवस्थया व्यवस्थितमूलत्वकल्प-नस्य पुरुषार्थैष्टिवत्प्रावर्जनीयत्वात् । एवं च यथैव कर्मैक्येऽपि "वा-सिष्ठानां नाराशंसो द्वितीयः प्रयाजः" इत्यादिवचनबलात्पुरुषविशेष-पुरस्कारेणाङ्गविशेषविधिर्नानुपपन्नः, तथैव स्थालीपाकाद्यैक्येऽपि 'तदङ्गमिदं छन्दोगैरेव कार्यम्' इत्येवंविधव्यवस्थितश्रुतिकल्पनया पुरुषविशेषपुरस्कारेणाङ्गविशेषविधिराशंक्यमानः केन वार्येत ।

यदपि चोपनयनादीनां सिद्धान्तेऽपि व्यवस्थेत्युक्तम्, तदपि न ; अध्ययनस्योपनयनादीनां च शाखान्तरन्यायेनैवाभेदावगमात्त-

---

१. गौ, ध. ९–२१. २. गौ. ध. ९–२०. ३. जै. सू. २–४–१८.

दङ्गानामपि "न चैकं प्रति शिष्यते' इति न्यायेनैव दर्शपूर्णमासाद्य-
ङ्गवत्सर्वपुरुषसाधारण्योपपत्तेरव्यवस्थायां प्रमाणाभावात् । नचाध्य-
यनस्यैकत्वेऽपि अध्येतव्यानां शाखानां भेदाद्भेदेनेतिकर्तव्यतापेक्षा-
यां भेदेनैवोपनयनाद्यङ्गग्राहकत्वोपपत्तिः, उपनयनादीनां तदङ्गानां च
शाखास्वरूपे आनर्थक्येनाध्ययन एवाविघ्ननिवृत्त्यर्थत्वेनोपयोगस्य
द्वादशे वक्ष्यमाणत्वात्तस्य च शाखान्तरन्यायेनैकत्वावगमेन भेदे-
नाङ्गग्राहित्वायोगात् व्यवस्थानुपपत्तेः ।

यत्तु व्यवस्थानभ्युपगमे 'बह्वल्पं वा स्वगृह्योक्तं' इत्यस्य निर्वि-
षयत्वापत्तिरित्युक्तम्, तत् शाखान्तरन्यायसिद्धसर्वाङ्गोपसंहाराशक्तौ
अनुकल्पत्वेन स्वगृह्योक्तमात्रानुष्ठानबोधकमिति पूर्वाधिकरण एवो-
क्तत्वादकिंचित्करम् ।

अत एव तत्र गृह्यग्रहणस्याविवक्षितत्वाच्छ्रौतेऽपि स्वशाखोक्त-
मात्रं स्वकल्पसूत्रमात्रोक्तं वानुष्ठेयमित्यनुकल्पविधिर्भवत्येव । तस्मा
त्सर्वविषये गृह्यादिकमत्रोदाहरणम्। न तु पुरुषार्थविषय एवेति सिद्धम् ।

अत्र व्यवस्थितमूलकत्वाव्यवस्थितमूलकत्वरूपसंशयासिद्ध्यर्थं किं
तन्मूलश्रुतौ कर्तृविशेषवाचिप्राच्याद्युपपदं शक्यते कल्पयितुं ? उत
न ? इति विचारणीयम् । किं तावत् प्राप्तम् । व्यवस्थितमूलत्वमे-
वेति । कुतः ? यथैव हि धूमस्य पर्वतप्राप्तित्वदर्शनाद्वह्नेरपि पर्वतप्राप्ति-
त्वेनैवानुमानम्, तथैव श्रुत्यनुमापकस्य स्मृत्याचाररूपस्य लिङ्गस्य
केषुचिदेव व्यवस्थितत्वदर्शनादनुमीयमानायाः श्रुतेरपि व्यवस्थित-
विषयत्वमेव कल्पयितुं युक्तम् ।

यदि तु स्मृत्यधिकरणे स्मृत्याचारयोरनुमानविधया न श्रुत्यनु-
मापकत्वम्, किन्तु अर्थापत्तिविधयेत्युक्तत्वादन्यथानुपपत्तेश्च तद्वि-
षयश्रुतिकल्पनमात्रेण परिहारान्नियतकर्तृकल्पना न प्रमाणिकी-
त्याशंक्येत ततो व्यवस्थितत्वाव्यवस्थितत्वाभ्यामुभयथापि कल्प्य-
श्रुतेरुपपत्तौ कल्पकव्यवस्थाया एव नियामकत्वात् सामान्यश्रुतिक-

ल्पन एव प्रमाणं न पश्यामः ॥

वस्तुतस्तु सामान्यश्रुतिकल्पने तत्प्रवर्तितयोः स्मृत्याचारयोरपि सर्वविषयत्वापत्तेः नानुपपत्तिपरिहारोऽपि । अतश्च यथैवाग्निहोत्रादीनां नियतकर्तृकाधानोपनयनजन्याग्निविद्यासाधनकत्वान्यथानुपपत्त्या नियतविषयत्वलाभः तथाऽत्रापि नियतकर्तृविषयश्रुतिकल्पनं विना स्मृत्याचारयोर्नियतकर्तृत्वानुपपत्तेर्नियतविषयैव श्रुतिरनुमीयते। दृष्टं च शिखाकच्छादिरूपस्मृत्याचाराणामपि केषांचिद्ब्राह्मणत्वजात्यादिपुरस्कारेण तदवान्तरभेदरूपगोत्रकुलादिपुरस्कारेण वा नियतविषयश्रुतिकल्पकत्वम्, तद्वद्धोलाकाद्याचाराणामपीति तुल्यम् ।

न च तत्र जातिगोत्रादिवाचकोपपदसम्भवाद्युक्ता नियतविषयश्रुतिकल्पना, प्रकृते तु होलाकाद्याचारानुष्ठातृवाचकस्योपपदस्य प्राच्यादिशब्दरूपस्य तावत्तद्धितान्तत्वेन यौगिकत्वावगतेस्तद्धितप्रकृतिभागस्य च प्रागादिशब्दस्य दिग्विशिष्टदेशवाचित्वाद्दिशश्चापेक्षिकत्वेनानवस्थितत्वात्सर्वस्यापि किंचिदपेक्षया प्राच्यत्वोपपत्तेस्तद्धितस्य च (१)"तत्र भवः,(२) तत आगतः, (३)सोऽस्य निवासः, इत्यादिषु अनेकेष्वर्थेष्वनुशासनेनाननुगतत्वात्सर्वार्थाश्रयणेऽपि च दक्षिणदेशनिवासिप्राच्यसन्ततौ प्राच्यशब्दप्रयोगेन व्यभिचारादुभयथापि प्रकृतिप्रत्ययार्थपर्यालोचनयाऽव्यवस्थितार्थकत्वावगमेन प्राच्यादिपदरूपोपदस्यासम्भवादन्यस्य निरूपयितुमेवाशक्यत्वात् कथं नियतविषयश्रुतिकल्पनोपपत्तिरिति वाच्यम् । अन्योपपदासम्भवेऽपि अहं प्राच्य इत्यभिमानविशेषवाचिप्राच्याद्युपपदस्यैव सम्भवात् । स्मृतिमूलभूतश्रुतौ तु चरणविशेषवाचितैत्तिरीयाद्युपपदस्य शिखाकल्पादिश्रुताविव सम्भवः स्पष्ट एव ।

सूत्रं तु अनुमानस्य कल्पकस्य व्यवस्थितत्वात्प्रमाणमूलभूता श्रुतिः व्यवस्थापकोपपदसंयुक्ता स्यादिति व्याख्येयम् ।

---

१. पा. सू. ४-३-५३. २. पा. सू. ४-३-७४. ३. पा. सू. ४-३-८९.

## सू—अपि वा सर्वधर्मस्स्यात् तन्न्यायत्वाद्विधानस्य ॥ १.३.१६. ॥ (सि)

न व्यवस्थितमूलत्वं भवितुमर्हति। अपि तु सर्वधर्मः स्यात्। मूलभूते विधायके वाक्ये सर्वधर्मत्वोपपादकस्य न्यायस्य सत्त्वात्। तथाहि—सर्वत्रैव हि कर्तृविशेषज्ञानं सामर्थ्यान्निषेधवशादुपपदाद्वा। यथा—'स्वर्गकामो यजेत' इत्यादावविशेषश्रवणेऽपि अग्निविद्यादिराहित्येनासमर्थस्य शूद्रादेः कर्तृत्वासम्भवात् षष्ठोक्तरीत्या समर्थः सामर्थ्यादेव कर्ता विधीयते। पतितषण्डादीनां तु निषेधवशात्। 'राजा राजसूयेन' इत्यादौ तु उपपदानुरोधेन। न तावत्सामर्थ्याद्धोलाकाद्याचारेषु उदीच्य दिव्यावृत्तिः, नापि निषेधानुरोधेन, तयोरशक्तपतितादिव्यावर्तकत्वेऽपि तद्भिन्नोदीच्यव्यावर्तकत्वासम्भवात्। उदीच्यैर्होलाकादि न कार्यमित्येवंविधनिषेधकल्पनस्य तु उदीच्याद्युपपदाधीनत्वात् तस्य च वक्ष्यमाणरीत्या निराकरिष्यमाणत्वादयोगो द्रष्टव्यः।

उपपदवशेन कर्तृव्यवस्था तु स्मृत्याचारयोरध्येत्रनुष्ठातृमात्रवृत्तित्वेन उपपदार्थस्य निर्वक्तुमशक्यत्वादेवायुक्तम्। तथाहि—न तावज्जातिविशेषः, तन्मात्रवृत्तिजातेरप्रतीतेः। नापि व्यक्तिरूपः। अनन्तत्वात्। नह्यनन्तानां व्यक्तीनां एकं किंचिदभिधानोपलक्षणं विना एकमुपपदं सम्भवति। नचात्रैवं किञ्चिज्जातिगुणाद्यात्मकमुपलक्षणं सम्भवति, सर्वस्य व्यभिचारित्वेनाननुगतत्वात्। तस्मादुपपदासम्भवान्न तावदाचारमूलभूतश्रुतेर्व्यवस्थितविषयत्वम्।

स्मृतिमूलश्रुतिषु तु यद्यपि चरणविशेषवाचितैत्तिरीयाद्युपपदं सम्भवति, तथापि न तत्कल्पनायां प्रमाणमस्ति। तथाहि—यद्धि तत्र श्रुतिकल्पकं स्मृतिवाक्यं न तत्रोपपदश्रवणमस्ति। यस्तु पाठस्तैत्तिरीयादिमात्रव्यवस्थितो दृश्यते, नासौ श्रुतिकल्पकः, पाठं वि-

नाप्यवगतमात्रस्य स्मृतिवाक्यस्यैव मन्वादिवाक्यस्येव श्रुतिकल्पकत्वोपपत्तेः। अतश्चैकाङ्गविकलत्वादुपपदकल्पनायां प्रमाणाभावः। नचैवं पाठव्यवस्थानुपपत्तिः, कर्तुस्तच्चरणत्वात्। कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगानेव स्वग्रन्थं दैवादध्यापितवान्, तेऽप्यन्यान् छन्दोगानेवेत्येवं दैवादेव पाठव्यवस्थोपपन्नेति न तदन्यथानुपपत्त्याऽपि श्रुतिव्यवस्थाकल्पनासिद्धिः॥

## सू—दर्शनाद्विनियोगः स्यात्॥ १-३-१७.॥

यत्तु जातिकुलगोत्रधर्मव्यवस्थितविध्यनुमानमित्युक्तम्। तत्, यत्र प्रत्यक्षश्रुतावेव जात्यादिपुरस्कारेण विधिः, यथा "ब्राह्मणो यजेत, राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाजः, इत्यादौ तत्र व्यवस्थितो विनियोगः स्पष्ट एवेति श्रुत्यनुमानाभावादेव वैषम्यम्।

यत्रापि शिखाकल्पे स्मृत्या श्रुत्यनुमानं तत्र कल्पके 'मुण्डा भृगवः' इत्यादिके गोत्रोपपदश्रवणाद्युक्ता तत्कल्प्यश्रुतावपि गोत्रोपपदकल्पना।

एवं यत्र शिखाकल्पाचारेणैव श्रुत्यनुमानं तत्रापि कल्पकस्याचारस्य गोत्रादिरूपविशेषनिष्ठत्वात्तद्दर्शनेन तत्कल्प्यश्रुतावपि गोत्रादिरूपोपपदकल्पनं युक्तमेव। नहीदं प्राच्यत्वादिवदसम्भवान्निर्लक्षकम्, अगस्त्याद्यपत्यत्वरूपस्य गोत्रस्य सर्वप्रमाणसिद्धत्वात्।

एवं कुलधर्माणामपि अष्टमीचतुर्दश्योरिष्टदेवताराातिकादीनां मूलभूतश्रुतिकल्पने कुलरूपोपपदसम्भवाद्व्यवस्था द्रष्टव्या। तथाहि—यद्यपि तत्तत्कुलधर्माणां प्रत्येकं श्रुतिकल्पने तत्तत्कुलविशेषवाच्युपपदासम्भवस्तुल्यः, तथापि 'कुलधर्मः कार्यः' इति सामान्यतः सर्वकुलधर्ममूलभूतत्वेन कल्पितस्यैव विधेः कुलशब्दस्य स सम्बन्धिकत्वाद्यस्य यत्कुलं तेन स कुलधर्मः कर्तव्य इत्यर्थपर्यवसानात्, 'स्वाध्या-

योऽध्येतव्य' इतिवद्विधिविषयविशेषणभूतकुलपदोपादानमहिम्नैवार्था-त्कर्तृविशेषावधारणसिद्धेः युक्ता व्यवस्था ।

नचैवं होलाकाद्याचारकल्प्यश्रुतेरपि सर्वसाधारण्येनैकस्या एव कल्पनायां कुलशब्दोपेताया एव कल्पनीयत्वोपपत्तौ पूर्ववदेव होलाकाद्याचारतृकुलमात्रविषयत्वोपपत्तेर्व्यवस्थापत्तिरिति वाच्यम् । एवं सति कुलधर्मः कर्तव्य इत्येवंविधश्रुतिमूलकत्वेनैव तेषामपि होलाकादीनां कुलधर्मत्वापत्तेः । न चेष्टापत्तिः; अभियुक्तानामेतेषु कुलधर्मव्यपदेशाभावात् । अतोऽत्र न कुलोपपदयोगः शक्यः ।

केचित्तु अत्र होलाकादौ अभियुक्तानां देशधर्म इति व्यपदेशात्तत्र मूलश्रुत्या कुलोपपददाने तदनुपपत्तेस्तदुपपदायोग इत्याहुः । तत्र देशधर्मव्यपदेशस्य सिद्धान्तिनोऽपि भूम्ना व्याख्येयत्वाद्गौणत्वेनासाधकत्वादनादरणीयम् । तेन सिद्धं जातिकुलगोत्रधर्मवैषम्यं होलाकादीनाम् ॥

## सू—लिङ्गाभावाच्च नित्यस्य ॥ १-३-१८. ॥

ननु जातिव्यक्तिवाच्युपपदासम्भवेऽपि 'श्यामा बृहन्तो लोहिताक्षाः' इत्यादिगुणसंस्थानविशेषवाच्युपपदं सम्भवत्येव 'शुक्लो होता' 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादिवदिति चेत्—आचारसमनियतस्य कर्तुरधिकारिणो वोपलक्षणीभूतस्य लिङ्गस्याभावात । न हि श्यामत्वादिकमाचारितृमात्रवृत्ति, तदन्येष्वपि वृत्तेः । तेष्वपि क्वाचिदवृत्तेश्च । तस्माद्गुणसंस्थानविशेषवाच्युपपदासम्भवादपि सर्वधर्मत्वम् ॥

## सू—आख्या हि देशसंयोगात ॥ १-३-१९. ॥

ननु जात्यादिवाच्युपपदान्तरासम्भवेऽपि प्राच्यादयुपपदस्यैव

सम्भवाद्व्यवस्था स्यात् । न हि तत्र पूर्ववद्व्यभिचारः । आचारतृप्तावृत्तित्वात्प्राच्यादिसमाख्यायाः । अतः समाख्यायुक्तश्रुतिकल्पनाद्व्यवस्थोपपत्तिरिति चेत्—

न । प्राच्यादिसमाख्या हीयं प्राग्देशसंयोगनिमित्ता स्यात् ? । अन्यनिमित्ता वा? नाद्यः; व्यभिचारादेव । प्राग्देशाद्दक्षिणदेशे समागतानां पुत्रादिसन्ततावपि प्राच्यपदप्रयोगात् । दक्षिणदेशात्प्राग्देशे समागतेष्वप्रयोगाच्च । किञ्चैवं सर्वस्यापि किञ्चिदपेक्षया प्राग्देशत्वात्सर्वेषां प्राच्यत्वापत्तिः । तस्मान्न तावद्देशसंयोगनिमित्तेयं समाख्या ॥

## सू—न स्याद्देशान्तरेष्विति चेत् ॥ १-३-२० ॥

इदं द्वितीयपक्षानुभाषणार्थं सूत्रम् । सति देशनिमित्तत्वे देशान्तरे न स्यादिति व्यभिचार उद्भाव्येत, जात्यादिनिमित्तका त्वियं समाख्या । तथाहि—प्राच्योऽयमित्यनुगतव्यवहारान्यथानुपपत्त्या ब्राह्मणत्वादिजातिवत्प्राच्यत्वादिजातिरपि सर्वाचरितृमात्रनिष्ठाभ्युपगम्यते । अतस्तन्निमित्ता समाख्यैव कल्प्यश्रुतावुपपदं द्रष्टव्यम् ।

अस्तु वा पूर्वपक्ष्युक्तरीत्या अभिमानविशेष एव प्राच्यादिपदनिमित्तम् । उभयथाप्युपपदसम्भवो दुरपह्नवः ।

## सू—स्याद्योगाख्या हि माथुरवत् ॥ १-३-२१ ॥

अत्र मूले एवं परिहृतम् । प्राच्यशब्दस्य व्याकरणे माथुरादिशब्दवदेव तत्र भवः, तत्र जातः, सोऽस्य जातः, तत्र गतः, तत्र प्रस्थितः इत्यादिष्वर्थेष्वनुशासनात्पाचकादिशब्दवदेव यौगिकत्वावगतेः क्लृप्तावयवार्थपरित्यागेन रूढिकल्पने जात्यन्तराङ्गीकारे च प्रमाणाभावः । अत्र भवशब्देन गर्भसम्भवो जातशब्देन च तदुत्पत्तिर्विवक्षितेति द्रष्टव्यम् ।

न च तद्देशनिवासादीनामननुगतत्वान्न प्राच्यशब्दप्रवृत्तिनि-
मित्ततेति वाच्यम्। सर्वानुगतस्य प्राग्देशसम्बन्धित्वस्यैव प्रवर्तनासा-
मान्यवन्निमित्ततोपपत्तेः। न च सर्वस्यापि किञ्चिदपेक्षया प्राच्यत्वा-
पत्तिः। विन्ध्यापेक्षयैव प्राग्देशसम्बन्धस्य तन्निमित्तत्वप्रतीतेः। न
चायं प्राग्देशसम्बन्धः क्वचित् व्यभिचरितः; दक्षिणदेशनिवासिप्रा-
च्यसन्ततौ प्राच्यशब्दप्रयोगाभावात्। अतोऽव्यभिचाराद् देशनिमि-
त्तैवेयं समाख्या, न तज्जात्यादिनिमित्ता, नाप्यभिमाननिमित्ता।
अतश्च तदुपपदत्वे प्राग्देशसम्बन्धिभिः प्राच्यसन्ततिस्थैः पुरुषैः
होलाकाद्यकरणापत्तेः प्राग्देशसम्बन्धिभिश्च दाक्षिणात्यसन्ततिजैः
करणापत्तेर्न कल्पकाचारानुविधायित्वं प्राच्योपपदस्येति॥

अत्र चोदयन्ति—सर्वानुशासितार्थानुगतप्राग्देशसंबन्धित्वाभावेऽ-
पि प्राच्यशब्दस्तावद्दक्षिणदेशनिवासिप्राच्यसन्ततौ सकललोकप्रसिद्ध-
व्यवहारो दुरपह्नवः। अत एव मूले चिरनिर्गतपुत्रपौत्रादीनामित्यु-
क्तेरचिरनिर्गतानां ये पुत्रादयः तेषु प्राच्यशब्दप्रयोगोऽस्तीति गम्य-
ते। अतश्च तेष्वनुशासितस्य प्राग्देशसम्बन्धस्याभावादश्वकर्णादि-
शब्दवदेव रूढिकल्पना जात्यादिकल्पना वा नानुपपन्ना। न चैवम-
नुशासनवैयर्थ्यम्। तस्य प्रयोगविरोधे 'गर्मेडौ' इति वत्साधुत्वान्वा-
ख्यानमात्रार्थत्वात्। अतश्च युक्ता आचरितृपात्रानुवृत्तप्राच्यत्वादि-
जातिवाचिप्राच्याद्युपपदकल्पनेति॥

अत्र भवदेवः—सत्यं जातिः स्वीक्रियते तथापि तु न तद्वा-
च्युपपदकल्पना युक्ता, तथात्वे दाक्षिणात्यस्यापि सांकेतिकप्राच्या-
दिनाम्नो होलाकाद्यनुष्ठानप्रसङ्ग इति। तदयुक्तम्। नित्यस्य वेद-
स्यादिमत्साङ्केतिकार्थविषयत्वेऽनित्यसंयोगप्रसङ्गात्। अन्यथा 'राजा
राजसूयेन' इत्यादावपि साङ्केतिकराजपदाभिधेयस्य ब्राह्मणादेरपि
राजसूयानुष्ठानप्रसंगो दुर्वारः।

अत एवं परिहर्तव्यम्—गवादिशब्दानां हि न गमनकर्तृत्वेन

रूपेण गवाद्युपस्थापकत्वं, किन्तु गोत्वादिमत्त्वेनैव । तद्रूपाज्ञानेऽपि गवादिशब्दादर्थोपस्थितेः सकलजनानुभवसिद्धत्वात् । अतश्च युक्तं तत्र गमेर्डो इत्यस्यानाख्यानार्थत्वम् । इह तु प्राग्देशसम्बन्धिषु पुरुषेषु प्राच्यशब्दप्रयोगस्यावयवार्थयोगेनैवानुभवसिद्धत्वाद्रूढिकल्पने जातिस्वीकारे वा प्रमाणाभावः ।

यस्तु दक्षिणदेशनिवासिप्राच्यसन्ततौ प्राच्यशब्दप्रयोगः स तत्सम्बन्धादेव लाक्षणिकः । अत एव तत्संततौ प्राच्यसंततित्वज्ञाने सत्येव प्राच्यशब्दप्रयोग इति नाश्वकर्णादिशब्दवत् अतिरिक्तरूढिकल्पनाप्याशङ्कनीया । अतश्च मूलश्रुतौ प्राच्योपपदकल्पनेऽपि विश्वजित्सर्वपृष्ठ इतिवल्लाक्षणिकार्थग्रहणे प्रमाणाभावेन नाचरितृमात्रानुवृत्तत्वम् प्राच्याद्युपपदस्य । नचैवं प्राच्यशब्दस्य प्राग्देशसम्बन्धनिमित्तत्वे प्राग्देशवर्तिनां दक्षिणात्यादीनामपि प्राच्यपदवाच्यत्वापत्तिः । पङ्कजादिशब्दवत् प्राच्यशब्दस्यापि योगरूढिस्वीकारात् । रूढ्यवच्छेदकमपि च प्राग्देशसंबन्धिव्यक्तिविशेषनिष्ठप्राच्यत्वजातिविशेष एव । न चैतावता दक्षिणदेशवासिप्राच्यसन्ततावपि सा जातिः कल्प्यतामित्यापादनीयम् । तस्यां तत्कल्पने प्रमाणाभावात् । कल्पनेऽपि वा योगरूढानां शब्दानां रूढिमत्त्वेऽपि योगाभावेन स्वार्थानवगमकत्वोपपत्तेश्च । अवगमकत्वाङ्गीकारेऽपि वा प्राच्यसन्ततित्वज्ञानाभावेऽपि गमकत्वापपत्तेश्चेति दिक् । तस्मात्प्राच्यशब्दस्य देशसम्बन्धनिमित्तकत्वान्नाचरितृमात्रानुवृत्तोपपदत्वसम्भवः ॥

## सू—कर्मधर्मो वा प्रवणवत् ॥ १—३—२२ ॥

ननु कर्तॄणामानन्त्यादेकविशेषणाभावेन कर्तृविध्यनुमानासम्भवेऽपि देशस्यैकत्वात्तदुपलक्षणस्यैकस्य कस्यचित्सम्भवेन 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इतिवत् 'कृष्णमृत्तिकाप्राये विन्ध्यप्राग्भागे वा होलाकादि कुर्वीत' इति प्राग्देशादिविशिष्टविध्यनुमानं भवत्विति चेत्—

## सू—तुल्यं तु कर्तृधर्मेण ॥ १–३–२३ ॥

कृष्णमृत्तिकात्वादेरपि कर्तृधर्मत्वे श्यामत्वादिवत्प्राग्देशसम्बन्धित्वस्यान्वयव्यतिरेकतश्च व्यभिचाराद्दुपलक्षणत्वानुपपत्तिः तुल्यैवेति उपपदासम्भवाच्च व्यवस्थितमूलकत्वमिति सिद्धम् ॥

इति होलाकाधिकरणम् ॥

### ( ८ ) व्याकरणाधिकरणम् ॥

## सू—प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ १-३-२४ ॥ ( पू )

एवं तावत्स्मृतीनामाचाराणां च वेदमूलत्वेन प्रामाण्ये साधिते व्याकरणस्यापि स्मृतित्वेन प्रामाण्ये धर्मोपयोगिसाधुत्वं प्रति सिद्धेऽपि 'साधुभिर्भाषेत' इति व्याकरणमूलभूतश्रुतौ पूर्वाधिकरणव्युत्पादितव्यक्त्याकृतिवाचिव्यवस्थितकर्तृप्रतिपादकोपपदासम्भववत् व्यक्त्याकृतिवाचिव्यवस्थितकरणप्रतिपादकोपपदासम्भवेनेह प्रामाण्यमाक्षिप्य समाधीयते ।

तत्र पादाध्यायसङ्गती स्पष्टे एव । अनन्तरा तु पूर्वाधिकरणव्युत्पादितोपपदासम्भवरूपहेतूपजीवनेन पूर्वपक्षोत्थानात् द्रष्टव्या । आक्षेपसमाधानोपयोगितया च किं व्याकरणस्मृतेर्मूलं सम्भवति ? उत नेतीत्यपि विचारणीयम् ।

तत्र समूलत्वे तत्प्रामाण्यात्तदनुगता एव गवादयः शब्दा ज्योतिष्टोमादिकर्मणि प्रयोक्तव्याः, न तु तदननुगता गाव्यादयोऽपि । निर्मूलत्वे तु तत्प्रामाण्याभावान्नियामकाभावेन प्रत्यायकत्वाविशेषात्सर्वेषां प्रयोगः सिद्धो भवति ।

तत्र व्याकरणेन तावन्नियमद्वयं क्रियते। साधुनैव प्रयुञ्जीतेत्येकः प्रयोगनियमः। अपरश्च गवादय एव साधवः न गाव्यादय इति साधुस्वरूपनियमः। तत्र न तावदाद्यो नियमः सम्भवति। स हि प्रयोगस्वरूपार्थो वा स्यात्? तत्कार्यरूपार्थाभिधानार्थो वा?।

नोभयथापि सम्भवी। उभयोरपि नियमाभावेऽपि असाधुभ्यो जायमानत्वात्।

न च यथाऽवघातादिनियमस्यावघाते तत्कार्ये वा वितुषीभावे उपयोगासम्भवेऽपि तज्जन्ये यागापूर्वे उपयोगसम्भवस्तथाऽत्रापि स्यादिति वाच्यम्। तद्वदिह प्रयोगस्याविहितत्वेनादृष्टार्थत्वाभावात्।

अथार्थप्राप्तप्रयोगाश्रितः साधुनियमो धर्माय रागप्राप्तभोजनाश्रितप्राङ्मुखत्वनियमवद्विधीयते। अत एव महावार्तिककारेणोक्तम्—"सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेष्वि"ति। अस्यार्थः। शब्दश्चार्थश्च तयोः सम्बन्धश्च तस्मिन् लोकत एव सिद्धे शब्दप्रयोगे च ज्ञाप्यार्थप्रयुक्ते अर्थत एव सिद्धे व्याकरणशास्त्रेण परं धर्माय साधुनियमः क्रियते।

यद्यपि धर्मनियम इत्ययं षष्ठीसमास एव, प्रकृतिविकारभावाभावेन चतुर्थीसमासस्यासम्भवात्, तथापि सम्बन्धसामान्यस्य विशेषापेक्षायां योग्यत्वात्तादर्थ्यलाभसिद्धिः। यथा लोके क्षुत्प्रतिघातार्थमर्थप्राप्त एव भक्षणे भक्ष्याभक्ष्यप्राङ्मुखत्वादिनियमः, वेदे वा 'पयोव्रतं ब्राह्मणस्य' इत्यादिनियम इति दृष्टान्तार्थः। अतश्च कथं नियमानुपपत्तिरिति चेत्—

न; मूलासम्भवात्। न तावदत्र प्रत्यक्षादिकं मूलं सम्भवति। तेषां धर्माधर्माविषयत्वस्य स्थापितत्वात्। वेदवाक्यं पुनः प्रतिशब्दं 'गोशब्देनाभिदध्यान्न गावीशब्देने'त्येवं कल्प्येत। 'साधुभिराभिद(१)

१- भाषेत

ध्यान्नासाधुभि'रित्येव वा ? न तावदाद्यः ; तत्रानन्तश्रुतिवाक्यपाठा-सम्भवात् । न चापठितानामेव मूलत्वम् । नित्यानुमेयश्रुतिमूलत्वस्य निराकृतत्वात् । एकैकस्यैव साधुशब्दस्य गावीगोण्याद्यनेकाप-शब्ददर्शनात्तद्विषयप्रतिषेधानां प्रतिपदं कल्पनेऽत्यन्तमेवानन्त्य-प्रसङ्गात्पाठानुपपत्तिः । अत एव 'नाभ्युपेयः पदानां प्रतिपत्तौ प्र-तिपदं पाठ' इति महाभाष्यकारेणैवोक्तम् ।

द्वितीयपक्षस्तु विधिनिषेधयोर्विधेयनिषेध्ययोश्चाप्युपपदासंभवान्नि-राकर्तव्यः । तथाहि—साध्वसाधुशब्दावेव खलु तत्रोपपदत्वेन भवद-भिमतौ । तयोश्च यदि गवादिशब्दे व्यक्तिवाचित्वं तदा पूर्ववदे-वानन्त्यम् । यदि तु जात्याद्येकोपलक्षणवाचित्वं ततः पूर्वाधिकर-णवदेव तन्निर्वचनानुपपत्तिः । तथाहि—न तावद्गवादिष्वेवानुवृत्ता गा-व्यादिभ्यश्च व्यावृत्ता साधुत्वं नाम जातिः सम्भवति । लोके गवा-दिशब्दमात्रवृत्तिसाधुशब्दप्रयोगाभावेन तदङ्गीकारे प्रमाणाभावा-त् । वक्ष्यमाणरीत्याऽभिव्यञ्जकस्य निर्वक्तुमशक्यत्वेन तदयोगाच्च ।

अत एव गवादय एव साधवो न गाव्यादयः इत्यस्यापि सा-धुस्वरूपनियमस्य निर्वचनासम्भवादेवासम्भवो द्रष्टव्यः ।

किञ्च साधुत्वं व्याकरणानुगतशब्दवृत्त्यैव जातिः स्वीक्रिय-ते ? तदनुगतशब्दवृत्त्यापि वा ? । आद्ये वचन्तीत्यस्यापि साधुत्वाप-त्तिः । तस्य व्याकरणानुगतत्वेऽपि लोके प्रयोगाभावेनासाधुत्वात् । नान्त्यः । गवादिशब्देष्वपि तदापत्तेः । यदि तु यत्र प्रयुज्यमान-त्वे सति व्याकरणानुगतत्वं तत्र साधुत्वं जातिरित्यभ्युपगम्येत ततो गवादिपदस्यानेकक्रमिकवर्णसमुदायात्मकत्वेन यौगपद्यासम्भवात् 'अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवे' दिति न्यायेन पदत्वा-दिजातिवदेव साधुत्वजातिरपि गवादिपदानिष्ठा निराकर्तव्या ।

तन्न तावत्साधुत्वं जातिः, नाप्युपाधिः, स हि न तावच्छब्द-स्वरूपोऽर्थप्रत्यायकत्वरूपो वा, गाव्यादावपि तदापत्तेः । नच श-

क्त्यार्थप्रत्यायकत्वं साधुत्वम् 'गङ्गायां घोषः' 'अग्निर्माणवक' इत्यादौ गङ्गाग्निशब्दयोस्तीरमाणवकादिविषये शक्त्यभावेऽपि तत्र साधुत्वप्रसिद्धेः । अथ तत्र प्रवाहादिविषयकयैव शक्त्या तीरादौ साधुत्वं ततो गोणीशब्दस्याप्यावपनाविषयशक्तिसद्भावात्सास्नादिमति साधुत्वापत्तिः । देवदत्तादिशब्दानां चादिमत्संकेतेनार्थप्रतिपादकानां अनादिपदनिष्ठशक्त्यभावादसाधुत्वापत्तिः ।

किञ्च शक्त्यार्थप्रतिपादकत्वं गाव्यादिष्वतिप्रसक्तम् । तेष्वपि हि प्रयोगप्रत्ययानुपपत्त्या शक्तिकल्पनस्यावश्यकत्वात् । न च लक्षणया गौण्या वा तदुपपत्तेर्न तत्कल्पनावश्यकत्वं लक्षणागौण्यो(१)स्तत्सिद्धिसूत्रे अर्थान्तरशक्तिपूर्वकत्वस्य वक्ष्यमाणत्वेन गाव्यादिशब्दानां क्वचिदप्यर्थे शक्त्यनङ्गीकारे गौणीलक्षणयोरप्यसम्भवात् । न च शक्तिभ्रमात्प्रयोगप्रत्ययौ ; निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकाभावे भ्रमत्वानुपपत्तेः । न च व्याकरणशास्त्रं बाधकम् । तस्य निर्मूलत्वेनाबाधकत्वात् । न चाबाधिमत्त्वं बाधकम् । गवादिशब्दशक्तिग्रहस्येव गाव्यादिपदशक्तिग्रहेऽप्यवध्यस्मरणस्याविशिष्टत्वात् ।

न च गोशब्दसादृश्येनैव गावीशब्दस्य तदर्थप्रत्यायकत्वोपपत्तेर्नातिरिक्तशक्तिकल्पनावसर इति वाच्यम् । शालाशब्दस्यापि सादृश्यात् मालाशब्दार्थप्रत्यायकत्वापत्तेः । वैपरीत्यस्यापि सम्भवेन विनिगमनाविरहाच्च ।

अत एव यववराहाधिकरणोक्तरीत्या प्रसज्यमानं प्रत्यक्षपठ्यमानानेकशक्तिकल्पना, नियामकाभावेन च व्यवहारानुपपत्तिः, अष्टदोषदुष्टविकल्पस्य चापत्तिः, शब्देनार्थमभिधत्ते इति चैकाभिधानक्रियायां सम्बद्धयोः करणकर्मरूपयोः शब्दार्थयोः पार्ष्ठिकान्वयावगतपरस्परानियमभङ्गापत्ति,रित्येतद्दोषच-

१. जै. सू. १-४-२३.

तुष्टयमक्षादिशब्देष्विव विनिगमनाविरहादेव स्वीक्रियमाणमपि न दोषमावहति ।

वस्तुतस्तु आद्यदोषविषये अक्षादिवैलक्षण्यमप्यत्र सुवचम् । नह्यत्रैकत्रानेकशक्तिकल्पना, अक्षादिवत् । शक्तेः शब्दाश्रितत्वेन एकस्मिन् शब्दे एकस्या एव शक्तेः कल्पनात् । न हि शक्तिरर्थाश्रिता ; येनैकत्रानेकशक्तिकल्पनाप्रसङ्गोऽत्राप्याशङ्क्येत । यत्र हि कारणात्कार्यदर्शनं तत्र शक्तेरस्तित्वं सम्प्रतीयते इति न्यायेन शक्तेः कारणाश्रितत्वेन शब्दमात्रसमवेतत्वात् । युक्तं चैतत् । शक्तिमत्कारणमिति कारणलक्षणात् शक्तेश्च कारणतावच्छेदकत्वस्वीकारादवच्छेदकत्वस्य चान्यूनानतिरिक्तवृत्तित्वस्वाभाव्येनार्थाश्रितत्वे तदभावप्रसङ्गाच्छब्दाश्रितैव शक्तिरिति ।

न चैवं कारणतावच्छेदकीभूतायाश्शक्तेरर्थज्ञानकारणीभूतशब्दज्ञानमात्रवृत्तित्वापत्तेः शब्दाश्रितत्वानुपपत्तिः । शब्देनार्थमभिधत्त इत्यादिप्रतीत्यनुसारेण शब्दस्यैव ज्ञानव्यापारकस्य कारणत्वाङ्गीकारात् ।

यत्तु न्यायसुधायां अर्थाश्रितत्वे सर्वशब्दवाच्यत्वमर्थस्यापद्येतेत्युक्तम् । तत् शब्दाश्रितत्वेऽपि सर्वार्थवाचकत्वं शब्दस्यापद्येतेति तुल्यम् । अथ अर्थविशेषावच्छिन्नैव शब्दे शक्तिः कल्प्यत इति न दोषः तदा शब्दविशेषावच्छिन्नैवार्थेऽपीति तुल्यत्वादुपेक्षणीयम् । तस्मादुक्तप्रकारेणैव शब्दनिष्ठत्वं साधनीयम् ।

अतश्चैकत्रानेकशक्तिकल्पनाभावान्नाद्यो दोषः । तस्माद्गाव्यादीनामपि शक्त्यैवार्थप्रतिपादकत्वान्न तावच्छक्त्यार्थप्रतिपादकत्वं साधुत्वम् ।

नापि व्याकरणलक्षणानुगतत्वं तत् । वचंतीत्यादावपि तदापत्तेः । नापि व्याकरणानुगतत्वे सति प्रयुज्यमानत्वं 'कृष्णशं वासः' इत्यादौ कृष्णशादिशब्दानां व्याकरणेन कृष्णदशत्वादावननुगता-

नामसाधुत्वापत्तेः। अत एवोक्तं वार्तिककृता—कृष्णशं वास इत्यादेर्व्याकरणशतेनाप्यनवगतोऽर्थोऽध्येतृपरम्परयैवावगम्यते" इति। तेनोभयविधस्यापि नियमस्य मूलत्वासम्भवान्निर्मूलं व्याकरणम्।

किञ्च प्रयोजनासम्भवादपि नियमवैयर्थ्यम्। तथाहि—यद्यपि तावत्साधुस्वरूपनियमस्य प्रयोगनियमार्थत्वादेव प्रयोजनवत्त्वलाभः तथापि प्रयोगनियमस्य प्रयोजनासम्भवाद्वैयर्थ्यम्। अत एव तत् सूत्रकारेण नोक्तम्, कथं ह्यन्यथा बुद्धिपूर्वकारिशिष्यप्रवृत्त्यर्थं प्रवृत्तः पाणिनिः प्रयोजनमेव नाभिदध्यात्। न च सुज्ञेयत्वादेव नाभिधानम्। एवं हि तस्य सुज्ञेयत्वं यद्यापि वार्तिककारभाष्यकारादयो विवदन्त एव।

वार्तिककृता हि किं साधुशब्दज्ञानाद्धर्मः उत प्रयोगादिति सन्दिह्य साधुशब्दज्ञानाद्धर्मोऽर्थात्तत्प्रतियोग्यसाधुज्ञानस्याप्यवर्जनीयत्वेन ततो (१)'न म्लेच्छभाषां शिक्षेत' इति निषेधपर्यालोचनयाऽधर्मस्याप्यापत्तेराद्यं पक्षं निरस्य प्रयोगाद्धर्मपक्षे व्याकरणानभिज्ञस्यापि साधुशब्दप्रयोगे धर्मापत्तेः व्याकरणानर्थक्यप्रसङ्गात् द्वितीयं च निरस्य शास्त्रपूर्वकप्रयोगे धर्म इति सिद्धान्तितम्।

भाष्यकृता तु तत्सर्वं व्याख्याय 'अथ वा पुनरस्तु ज्ञाने धर्मः' इत्यनेनाद्यं पक्षं स्वमतत्वेन प्रतिज्ञाय तत्रोक्तो दोष एवं परिहृतः। नापशब्दज्ञानस्याधर्मसाधनत्वं, तद्बोधकप्रमाणाभावात्। 'न म्लेच्छभाषां शिक्षेत' (२)'तस्माद्ब्राह्मणे न न म्लेच्छितवै (नापभाषितवै,) 'आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपेत्'इत्यादिवचनानां तु म्लेच्छपदवाच्यत्वेन प्रसिद्धानां बर्बरादीनां या भाषा तन्मात्रज्ञानादिनिषेधकत्वमेव, न त्वार्यावर्तनिवासिभाषाज्ञानादिनिषेधकत्वम्। अत एव 'म्लेच्छ अव्यक्तायां वाची'त्यवयवार्थोऽपि तेषु सङ्गच्छते।

---

१. व्यासः २. श. ब्रा. ३-२-१. २४.

यद्यपि चासावन्यत्रापि सम्भाव्येत तथापि रूढेर्बलवत्त्वान्न क्षतिरिति । अन्यदपि परिहारद्वयं यदुक्तं तद्विस्तरभयान्नं लिख्यते । अत्रश्चैवंविधे विवादे सति कथं प्रयोजनस्य सुज्ञेयत्वम् ?। न चैत-योर्वार्तिककारभाष्यकारोक्तयोः पक्षयोरन्यतरोऽपि युक्तः । उभ-योरपि व्याकरणशास्त्रोत्थज्ञानतत्पूर्वकप्रयोगयोः व्याकरणग्रन्थसा-पेक्षत्वेन धर्मसाधनत्वबोधकश्रुतिकल्पनानुपपत्तेः । न ह्यनित्यस्य ग्र-न्थस्य नित्यवेदप्रतिपाद्यत्वं सम्भवति । न च कल्पादिवत्प्रवाहानित्य-त्वकल्पना, कल्पादौ यत्कल्पान्नारार्शसानिति पूर्वोदाहृतवचनबलेन तत्कल्पनस्य प्रामाणिकत्वात् । न च (१)'तस्मादेषा व्याकृता वागु-द्यत' इतिवचनं प्रकृतेऽपि कल्पकं प्रमाणत्वेन शङ्क्यम् । तस्य स्वर-वर्णमात्राक्रमैरविप्लुतैर्व्याकृता निरूपिता इत्येवं वैदिकवाग्विषयत्वे-नाप्युपपत्तेः ।

अत एव 'न म्लेच्छितवै' 'आहिताग्निरपशब्दं प्रयुज्य' इत्यादि-वाक्यानामपि वैदिकशब्दविनाशतन्निमित्तप्रायश्चित्तविधानार्थत्वेना-प्युपपत्तिः सुवचा । गाव्यादिरूपापशब्दप्रतिषेधविषयत्वे हि कथं त-द्व्यापणे शिष्टानां विगीतत्वबुद्धिर्नोपपद्येत । प्रत्युत महर्षीणामेवावि-रतमपशब्दप्रयोगो वार्तिके एव प्रपञ्चितः ।

किं बहुना पाणिन्यादीनामप्यपशब्दप्रयोगो गाव्यादिरूपाप-शब्दप्रतिषेधविषयत्वे उक्तवचनानां कथमवकल्पेत । तथाहि—सूत्रस्यैव तावत् '(२)जनिकर्तुः प्रकृतिः' इति सूत्रे 'इक्श्तिपौ धातुनिर्देशे' इति तदुक्तपरिभाषानुसारादेव जनिपदं शब्दपरम्, नत्वर्थपरमित्यायाति । न च तदिष्टं, जननरूपार्थकर्तुरेव प्रकृतेरपादानसंज्ञास्वीकारात् । अत इदं व्याकरणविरुद्धत्वादपशब्द एव ।

तथा कर्तृवाचिभ्यां तृजकाभ्यां योगे(३)'कर्तरि च' इति सूत्रेण षष्ठीसमासनिषेधात्तद्विरुद्धं षष्ठीसमासाश्रयणम् । कात्यायनपतञ्जलि-

---

१. तै.सं. ६-४-७-३. २. पा.सू. १-४-३०. ३. पा. सू. २-२-१६

ग्रन्थयोरपशब्दलिखनं वार्तिक एव प्रपाञ्चितम् । विस्तरभयादत्र न लिख्यते । अतश्च शिष्टविगर्हाभावान्न गाव्यादिरूपापशब्दप्रतिषेधविषयत्वमेषां वचनानाम् । तेन व्याकरणग्रन्थस्य प्रवाहनित्यत्वे प्रमाणाभावात्तद्धाटितश्रुतिकल्पनानुपपत्तेः धर्मप्रयोजनत्वानुपपत्तिः ।

नापि रक्षोहादीनि भाष्योक्तानि प्रयोजनानि, तेन हि 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति मुख्यानि पञ्च प्रयोजनान्युक्त्वा त्रयोदशान्यानि गौणान्युक्तानि । तत्र रक्षा तावद्वैदिकानां वा पदानां ? लौकिकानां वा ? । नाद्यः; वाक्यरक्षणवत् पदरक्षणस्यापि अध्येतृप्रसिद्ध्यैव सिद्धेः । न हि व्याकरणेन वाक्यं व्याक्रियते, अपि तु पदमेव । अतश्च यथैव वाक्यं तेनारक्ष्यमाणमप्यध्येतृप्रसिद्ध्यैव रक्ष्यते तथा पदमपीति न वैदिकपदविनाशभीत्या व्याकरणप्रणयनोपपत्तिः । न द्वितीयः । लोकत एव सिद्धेः । व्याकरणस्यापि लोकप्रसिद्ध्युपजीवित्वाच्च ।

तथोहस्यापि व्याकरणाधीनत्वं ऊहस्वरूपांशे वा ? ऊह्यमानपदस्वरूपांशे वा ? नाद्यः; मीमांसाव्युत्पादितन्यायैः मुख्यदृष्टार्थत्वादिभिरेव सिद्धेः । अन्त्यस्तु पूर्वोक्तवदेव लोकतः सिद्ध्या परिहर्तव्यः ।

एवमागमोऽपि 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति स्मृतिरूपो न तावत्स्वरूपेणैव व्याकरणाध्ययनप्रयोजनम् । तस्य षडङ्गवेदाध्यापनविधायित्वेन प्रयोजनत्वानुपपत्तेः । नाप्यागमोक्तस्य धर्मज्ञानस्यैव व्याकरणाध्ययनप्रयोजनत्वाभिप्रायेण लक्षणया आगमप्रयोजनत्वोक्तिव्याख्यानाद्व्याकरणस्य धर्मप्रयोजनत्वाशङ्का । धर्मस्य साधुशब्दज्ञानप्रयोगादिरूपस्य तद्भिन्नस्य वा ज्योतिष्टोमादिरूपस्य निर्मूलत्वादिपूर्वोक्तयुक्त्यैव प्रयोजनत्वासम्भवात् ।

अथ स्वतन्त्रधर्मप्रयोजनत्वासम्भवेऽपि वेदवाक्यार्थरूपधर्मज्ञानोपयोगिपदाद्यन्वाख्यानद्वारा व्याकरणस्य धर्मप्रयोजनकत्वाव-

क्षायादीदृशधर्मज्ञानप्रयोजनकत्वेनैव चानेनागमेन व्याकरणाध्ययनवि-
धानाल्लक्षणया आगमप्रयोजनोक्तिव्याख्योपपत्तेः व्याकरणस्य धर्म-
प्रयोजनत्वमाशङ्क्येन । तत्रैवं तावत्परिहारं न्यायसुधाकृता—उदाहृतव-
चने षडङ्गो वेदोऽध्येयो धर्मो ज्ञेयश्चेत्यन्वये सति चशब्दस्वारस्याद्ध-
र्मज्ञानस्यापि क्रत्वनुष्ठानोपयिकत्वेन वेदाध्ययनवाद्विधेयत्वावगमान्न
तावदत्र धर्मज्ञानस्य षडङ्गवेदाध्ययनप्रयोजनत्वावगमः । न चैवं वि-
धेयानेकत्वनिमित्तो वाक्यभेदः । पौरुषेयत्वेनात्र वाक्यभेदस्यादो-
षात् । प्रत्युत निष्कारणशब्देनाप्रयोजनत्वाभिधानात् तस्य च श्रेयः-
साधनत्ववाचिधर्मपदेनान्वयाद्वेदस्यापि च सप्रयोजनत्वावगमेन
तत्रानन्वयात्षडंगैर्नैवान्वयावगतेः व्याकरणस्यानेनागमेन विपरीतं
निष्प्रयोजनत्वमेवावगम्यते । अतश्च सत्यपि वेदवाक्यार्थज्ञानोपयोगि-
पदान्वाख्यानद्वारा व्याकरणस्य धर्मप्रयोजनकत्वे एतदागमोक्तत्वा-
भावान्नैतस्य प्रयोजनेषु पाठो युज्यते ।

वस्तुतस्तु प्रातिशाख्यवत्सामस्त्येन पदान्वाख्यानस्याप्यकर-
णान्न तद्द्वारापि धर्मप्रयोजनत्वावगम इति ।

अत्र त्विदं वक्तव्यम्—ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेन पुरुषकृ-
त्यसाध्यस्य कथं विधेयत्वोपपत्तिः ? । अथ स्वरूपेणाविधेयस्यापि
क्रत्वङ्गताबोधनफलक एव विधिरभ्युपगम्यते तथापि सामर्थ्यत एव
प्रातिशाख्यवत्क्रतुजननसिद्धेर्विधिवैफल्यम् । न च क्रतोरन्यदुपस्था-
पकमप्यस्ति, तस्माद्धर्मज्ञानस्याविधेयत्वात्षडंगवेदाध्ययनफलत्वेनै-
वात्र सङ्कीर्तनम् । न चैवं चशब्दानुपपत्तिः । प्रयोजनप्रयोजनीभूत-
क्रियाद्वयसमुच्चयार्थत्वेनापि तदुपपत्तेः । निष्कारणशब्दश्चायमपौ-
रुषेयत्ववचनो (१)पयोगित्वाद्वेदेन न सम्बध्यते इति न तद्बलादपि
निष्प्रयोजनत्वलाभः ।

अत एवं परिहर्तव्यम्—नात्र षडंगपदेन व्याकरणादिग्रन्थानामु-

---

१ योग्यत्वात्

पादानम्, तद्धि यदि पदान्वाख्यानद्वारा धर्मोपयोगफलत्वज्ञापनार्थं, तदा तस्य लौकिकप्रमाणसिद्धत्वाद्विधिवैयर्थ्यम् ।

अथोपायान्तरेणापि तत्सिद्धेर्नियमार्थो विधिरित्युच्येत, ततो नियमस्य दृष्टार्थत्वाभावादभ्युदयकारित्वरूपाददृष्टार्थत्वस्य च श्रुतिकल्पनं विनाऽनुपपत्तेः । कल्प्यश्रुतेरादिमव्याकरणादिविषयत्वे(१)ऽनित्यसंयोगः । न च षडङ्गपदान्यथानुपपत्त्यैव तस्य प्रवाहनित्यत्वकल्पनं, गौरवप्रसङ्गात् । षडङ्गपदं तु श्रुत्यादिविनियोजकप्रमाणषट्कपरं वार्तिक एव व्याख्यातम् । न च तस्य वेदाध्ययनविधिनैव सिद्धेः पृथग्ग्रहणवैयर्थ्यम् । विविक्तश्रुत्यादिस्वरूपतत्प्रामाण्यप्रकारज्ञानपूर्वकमेवाधीताद्वेदादर्थज्ञानस्य कर्माङ्गत्वकल्पनेन तत्सार्थक्योपपत्तेः । तस्मान्नागमोक्तधर्मज्ञानस्य प्रयोजनत्वादागमप्रयोजनकत्वम् ।

अत एव आगमस्य प्रयोजनत्वासम्भवेऽपि षडङ्गाध्ययनविधायित्वात् व्याकरणप्रयोजनकत्वोपपत्तेः भाष्यस्थं प्रयोजनपदं प्रयोजकत्वपरमिति व्याख्यातॄणां व्याख्याप्यपास्ता । व्याकरणाध्ययनविधायकश्रुतेरनित्यसंयोगप्रसङ्गात् । रक्षादौ प्रयोजनत्वपरस्य सकृदुच्चरितस्य प्रयोजनपदस्य प्रयोजकत्वपरत्वे वैरूप्यप्रसङ्गाच्च ।

यदपि लाघवं लक्षणेन शब्दज्ञानस्य प्रयोजनमित्युक्तम्, तदप्यलौकिकसंज्ञापरिभाषादिनिबद्धैर्धातुपाठादिभिः अत्यन्तविषमैश्च भाष्यवार्तिकादिभिः विपरीतगौरवाश्रयणादसम्बद्धम् ।

यदपि 'स्थूलपृषतीमनड्वाहीमालभेत' इति विधौ स्थूला चासौ पृषती चेति कर्मधारयः, स्थूलानि पृषन्ति यस्यास्सेति बहुव्रीहिर्वेति सन्देहे व्याकरणविहितस्वरेणैव निश्चयः । तथाहि—कर्मधारयपक्षे

---

१ अनित्यत्वप्रसङ्गः,

२ एतेन प्रयोजनशब्दस्य प्रयोजकपरत्वाद्वेदबोधितं व्याकरणाध्ययनमिति अर्थावगमांशेन प्रयोजनशब्दस्य फलपरत्वमिति व्याख्यातॄणां व्याख्याप्यपास्ता ।

'अन्त' इत्यनुवर्तमाने (१.)'समासस्य' इति सूत्रणौत्सर्गिकेऽन्तोदात्तत्वे विहिते (२)'अनुदात्तं पदमेकवर्जम्' इति सूत्रेण पूर्वेषां चतुर्णामपि अचामनुदात्तः स्यात् । तथा च पृषतशब्देन मत्वर्थलक्षणया गोरेव बिन्दुमत्त्वान्वयात्स्थूलत्वस्यापि च तत्रैवान्वयात् स्थूला बिन्दुमती च गौर्यागसाधनमित्यर्थः सिद्ध्यति ।

बहुव्रीहौ तु(३) 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सूत्रेण सामान्यविहितान्तोदात्तत्वबाधेन पूर्वपदस्य प्रकृतिस्वरविधानात् स्थूलशब्दगतलकारोत्तराकारे उदात्तस्वरः प्राप्नोति, तदा च स्थौल्यस्य पृषत्त्वेनान्वयात्स्थूलबिन्दुमती स्वतः स्थूलाऽस्थूला वा गौः यागसाधनमित्यर्थः सिध्यति । तत्र लकारोत्तराकारोदात्तत्वपाठाद्बहुव्रीह्यनुसारिस्वरेणार्थनिश्चय इत्यसंदेहोऽपि व्याकरणप्रयोजनमित्युक्तम् । तदप्ययुक्तम् । यथाहि वाक्यार्थसन्देहो मीमांसान्यायमूलकव्याख्ययैवापनीयते, एवमयं पदार्थसन्देहोऽप्यर्थप्रकरणादिनिर्णयोपायमूलकव्याख्ययैवापनीयते । दृष्टश्च लक्षणसन्देहे वैयाकरणानामपि व्याख्यानतो निर्णयः, 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति महाभाष्योक्तेः । अतश्चार्थप्रकरणादिभिरेव पदार्थनिर्णयस्याप्युपपत्तेर्न व्याकरणावगतस्वरेणार्थनिश्चयः । नचैवं स्वरपाठानर्थक्यम् । ब्रह्मयज्ञजपमन्त्रपाठाद्यङ्गत्वेनार्थवत्त्वोपपत्तेः । तस्मान्नासन्देहोऽपि प्रयोजनम् ।

यत्तु कैश्चिदनड्वाहीपदरहितमेव वाक्यमुदाहृत्य कर्मधारयपक्षे पृषतीति शब्दस्य हरिणीरूपजात्यन्तरवाचित्वमङ्गीकृत्य तेन प्राकृतच्छागजातिबाधः, बहुव्रीहिपक्षे तु स्थूलबिन्दुमत्तारूपगुणमात्रविधानेन न प्राकृतच्छागजातिबाधव इति सन्देहमुपन्यस्याद्युदात्तस्वरपाठेन निर्णयमभिधायास्मदुक्तरीत्यैव दूषणमभिहितम् । तत्, महाभाष्ये न्यायसुधायां च अनड्वाहीपदयुक्तस्यैवं वाक्यस्य पाठात्तेन च गोरूप-

१. पा.सू. ६-१-२२३. २. पा.सू. ६-१-१५८. ३. पा. सू. ६-२-१.

जात्यंतरविधानेन पक्षद्वयेऽपि प्राकृतछागजातिबाधात् लकारोत्तराकारेचोदात्तस्वरापाठेनाद्युदात्तस्वरपाठाभावान्न केवलं महाभाष्याज्ञाननिबन्धनम्, अपि तु स्वग्रन्थाज्ञानानिबन्धनमपीत्युपेक्षणीयम् ।

तदेवं मुख्यपञ्चप्रयोजनासम्भवे आनुषङ्गिकाणां त्रयोदशप्रयोजनानां व्याकरणाध्ययनप्रयोजकत्वस्य कृष्णलेषु मुख्यवितुषीभावासम्भवे आनुषङ्गिकनियमादृष्टस्यावघातप्रयोजकत्ववद्दूरापेतत्वात् । यथाकथंचित्प्रयोजकत्वांगीकारेऽपि वा तद्दूषणं वार्त्तिक एव प्रपञ्च्यते । तत्सिद्धं प्रयोजनासम्भवादपि नियमवैयर्थ्यम् ।

प्रत्यक्षवेदादिविरोधश्चास्य स्फुटोऽवगम्यते । '(१)दृष्टं साम' इत्यधिकारात् '(२)कलेर्ढक्' (३)'वामदेवाड्ड्यड्ड्यौ' विति सूत्रेण कलिना वामदेवेन वा दृष्टं कालेयं, वामदेव्यं, इति रूपानुगमात् दर्शननिमित्तत्वप्रतीतेर्वेदे च(४) 'यदकालयत्तत्कालेयस्य कालेयत्वम्' इत्येतस्मात्(५)"आपो वा ऋत्वियमार्छन्, तासां वायुः पृष्ठे व्यवर्तत, ततो वामं वसु समभवत्, तन्मित्रावरुणौ पर्यपश्यतां, तावब्रूतां वामं मत्यं इदं देवेभ्योऽजनि तस्माद्वामदेव्यम्" इत्येतस्माच्चार्थवादात्कालेयशब्दस्यासुरोत्कालनक्रियानिमित्तत्वप्रतीतेः, वामदेव्यशब्दस्य च वामं देवेष्विति समभिव्याहृतपदद्वयोच्चारणक्रियानिमित्तत्वप्रतीतेः वेदविरोधे सति व्याकरणमप्रमाणम् ।

तथा न्यायविरोधश्च वाक्यस्य वाक्यार्थे शक्त्यङ्गीकारे प्रसज्यते । तथाहि—वैयाकरणास्तावदेवं प्रतिपादयन्ति । यत्र वक्तृवाक्यप्रयोगानन्तरं श्रोतृप्रवृत्तिं दृष्ट्वा व्युत्पित्सुस्तावत्संपूर्णे वाक्ये विशिष्टवाक्यार्थविषयिणीं शक्तिं प्रथमतो निश्चिनोतीत्यविवादम् । पश्चादावापोद्वापाभ्यां प्रत्येकपदनिष्ठैव शक्तिः, न तु तत्पदघटितवाक्यनिष्ठा । तत्पदघटितानां वाक्यानां अनन्तत्वेनानन्तशक्तिकल्पनापत्तिरि-

१. पा. सू. ४-२-७. २. पा. सू. ४-२-८. ३. पा. सू. ४-२-९. ४. ता. ब्रा. ८-३-१. ५. ता. ब्रा. ७-८-१.

त्येवं प्रत्येति । अतश्च पश्चाल्लाघवतर्कसहकृततत्पदनिष्ठशक्तिग्रहेण वा-
क्यशक्तिग्रहो यद्यपि मिथ्येत्याभाति, तथापि तस्य प्रथमोत्पन्नत्वेना-
सञ्जातविरोधित्वादुपजीव्यत्वाच्च प्रमात्वमेवावधारयाति । तत्र च द्वयी
गतिः अखण्डमेव वाक्यं वर्णव्यङ्ग्यम् एकः पटः इतिवदेवं वाक्यमि-
त्यबाधितप्रतीतेः सत्त्वात्तदेव च विशिष्टार्थे शक्तं तत्र च पदवर्णादी-
नामसतामेव वाक्यान्तरावयवसारूप्यमात्रेणावभासः, न तु वस्तुतोऽ-
वस्थानम् । प्रकृतिप्रत्ययादिरूपेण व्याकरणव्याख्यानमपि कल्पित-
रूपस्यैव पदादेः पारमार्थिकत्वाभावेऽपि न विरुध्यते ।

अथ वा आनुपूर्वीविशेषविशिष्टानि पदान्येव वाक्यं, तस्यैव
वाक्यार्थे शक्तिः, न तु लाघवतर्कसहकृतापि पदार्थे, एवं पदानाम् ।
अन्यथा 'दधीदं' 'विष्णोऽव' इत्यादौ ह्रस्वेकारयुक्तस्यैव इदं दधि-
पदद्वयस्य प्रत्येकं पदार्थे शक्तिग्रहात्तत्संयुक्तप्रयोगे च ह्रस्वेकारप्रयो-
गाभावेन पदार्थानुपस्थितौ तत्संसर्गबोधकत्वानुपपत्तेः ।

एवं 'विष्णो अव' इत्यत्र प्रत्येकशक्तिग्रहे 'विष्णोऽव' इत्य-
वाकारलोपे सति पदार्थानुपस्थितौ तत्संसर्गबोधानुपपत्तिर्द्रष्टव्या । न
च तत्रादेशेन स्थानिनमनुमाय तेन पदार्थोपस्थितिः । स्थानिनां व्या-
करणभेदेनाननुगतत्वाद्व्यभिचारेण ह्रस्वेकारान्तपदद्वयस्यैव नियमेना-
नुपपत्तेः । अतस्तत्र तावदवश्यं वाक्यस्यैव वाक्यार्थे शक्तिः कल्प्ये-
ति सर्वत्र तथैव स्वीकर्तव्यम् । वाक्यशक्तिग्रहश्च प्रत्येकपदशक्तिग्र-
हाभावे 'गामानय' इत्यतो वाक्यार्थबोधस्याजायमानत्वात् पदशक्ति-
ग्रहसत्त्वे च अपूर्ववाक्यश्रवणेऽपि झटिति वाक्यार्थबोधस्य जायमा-
नत्वादन्वयव्यतिरेकाभ्यां पदशक्तिग्रहजन्य इत्यध्यवसीयते । अतश्च
'भू सत्तायाम्' इत्यादिपदार्थव्याख्यानमपि कारणीभूतपदशक्तिवि-
षयत्वान्न विरुध्यत इति ।

तदेतत् न्यायमूलत्वात् न्यायस्य चाभासमानरूपतया मूलत्वा-
सम्भवान्निराकर्तव्यम् । तथाहि—न तावदखण्डं वाक्यं वर्णव्यङ्ग्यम्

तद्धि शुद्धवर्णव्यङ्ग्यम्। आनुपूर्वीविशिष्टवर्णव्यङ्ग्यं वा? नाद्यः; सरो रस इत्यादौ वर्णभेदाभावेन अर्थविशेषप्रतीत्यनापत्तेः। नान्त्यः; आनुपूर्वीविशेषविशिष्टानामेव वर्णपदादीनां वाक्यत्वोपपत्तौ अखण्ड-वाक्यस्वीकारे प्रमाणाभावात्। अत एव च पदवर्णादिप्रतीतेः स-कलजनानुभवसिद्धायाः भ्रान्तत्वकल्पनया अविद्यमानविषयत्वकल्प-नमन्याय्यमेव। न च वाक्यान्तरावयवसारूप्येणासौ भ्रम इत्यपि सुवचम्। वाक्यान्तरावयवस्याप्यसत्यत्वेन तत्सारूप्यस्यानुपपत्तेः।

न च लेख्यगवयाद्यवयवानां मुखादिरूपेणासत्यानामपि मुख्य-गवयाद्यवयवमुखादिसारूप्यवत्प्रकृतेऽप्युपपद्येतेति वाच्यम्। ले-ख्यगवयाद्यवयवानां मुखादिरूपेणासत्यानामपि स्वरूपेण सत्यत्वा-त्सादृश्योपपत्तेः। प्रकृते तु वर्णपदादीनां स्वरूपेणाप्यसत्यत्वान्न त-दुपपत्तिरिति वैषम्यम्। अत एव वैयाकरणैरपि 'नायं पक्षः पारमा-र्थिक' इत्युक्तम्।

किञ्च पक्षद्वयेऽपि वाक्यशक्त्यङ्गीकारे उक्तयुक्त्या पदशक्तिग्रह-स्य कारणत्वमवश्यं वक्तव्यम्। अतश्चावश्यकत्वेन पदशक्तिस्मर-णादेव पदार्थोपस्थितिद्वारा वाक्यार्थबोधोपपत्तौ वाक्यशक्तिकल्पनं निष्प्रमाणकम्। न च 'दधीदं' 'विष्णोऽवे'त्यादौ वाक्यार्थानुपपत्ति-रेव वाक्यशक्तिकल्पने प्रमाणमिति वाच्यम्। तत्रापि तत्र वाक्यार्थ-बोधानुपपत्तेस्तुल्यत्वात्। तत्रापि हि वाक्यशक्तिग्रहं प्रति अवयव-शक्तिग्रहस्य कारणत्वमङ्गीक्रियते? न वा? अन्त्येऽवयवशक्तिग्रहाभा-वेऽपि वाक्यश्रवणात्तदर्थबोधापत्तिः। आद्ये ह्रस्वेकारान्तपदद्वयश्र-वणाभावेन तद्गतशक्तिस्मरणाभावाद्वाक्यशक्तिग्रहानुपपत्तेः, यथाकथं-चिच्छक्तिस्मरणाङ्गीकारे वा तदाश्रयपदस्मरणस्याप्युपपत्तेरवयव-शक्तिमात्रेण विनैव वाक्यशक्तिं वाक्यार्थबोधोपपत्तिः।

अत उभाभ्यामेव परिहर्तव्यम्—आदेश एवैतादृशविषये स्थानिन उपस्थापकः। अत एवानधीतव्याकरणस्य स्थानिमत्वाज्ञाने दाधिशब्द-

व्युत्पत्तिमतोऽपि दधीदमिति प्रयोगाच्छाब्दबोधो न जायते । न च व्याकरणभेदेन स्थानिनामननुगतत्वाद्व्यभिचारः शङ्क्यः व्यापकाननुगमस्य दोषरूपत्वेऽपि स्मारकाननुगमस्यादोषत्वात् । नह्येकसंबन्धिदर्शनेनापरसंबन्धिस्मरणे प्रतिसंबन्धी अनुगंतुं शक्यते । अपित्वननुगमेऽपि यद्विषय एव संस्कारोद्बोधः तस्यैव स्मरणं, नान्यस्य । अतश्च यस्य यद्व्याकरणज्ञानं, यद्विषय एव संस्कारोद्बोधस्तस्य तद्विषये एव स्मरणसंभवान्नातिप्रसङ्ग इति सर्वमनवद्यम् । विस्तरेणैवैतन्निरूपितं तद्भूताधिकरणे वार्तिककृता । अतश्च पदानामेव पदार्थेषु शक्तिकल्पनाद्वाक्यार्थस्य च समभिव्याहारादेव लक्षणया भानोपपत्तेर्न तत्र वाक्यस्य शक्तिर्युक्ता ।

ननु वाक्यार्थः संसर्गः, न च तस्य लक्षणया भानं संभवति । तथाहि—स्वबोध्यसंबन्धो हि लक्षणा, सा च ज्ञातैव कारणं न स्वरूपसती 'गङ्गायां घोष' इत्यादौ प्रवाहसंबन्धज्ञानाभावे तीरानुपस्थितेः, तदत्र घटः शुक्ल इत्यादौ जातिगुणयोः तत्तत्पदबोध्ययोर्लक्ष्येणैकार्थसमवायसंबन्धेन यः संबन्धः स्वरूपसंबन्धरूपः, स किं ज्ञातो ? न वा ? आद्ये संबन्धज्ञानं प्रति संबन्धिज्ञानस्य कारणत्वाल्लक्षणाज्ञानात्पूर्वं एकार्थसमवायसंबन्धस्य ज्ञातत्वाभ्युपगमे तस्यानाधिगतत्वाभावात्तत्र शब्दस्य प्रामाण्यानुपपत्तिः । अन्त्ये लक्षणाज्ञानाभावान्न तज्जन्यत्वं संसर्गरूपवाक्यार्थबोधस्य युक्तमिति चेत्—

सत्यं लक्षणानुपपत्तिरस्ति । अत एव समभिव्याहारनिमित्ता लाक्षणिकीत्यादिशास्त्रदीपिकाग्रन्था अपि न यथाश्रुता एव नीयन्ते । अपि तु शक्त्यभावेऽपि गम्यमानत्वपरतया । कथं तर्हि शक्तिलक्षणयोरभावे वाक्यार्थबोधः ? तदुच्यते—पदानि तावत्पदार्थानेव शक्त्या लक्षणया वा प्रतिपादयन्ति, न तु वाक्यार्थम् । स तु पदजन्यपदार्थज्ञानेनैवाकांक्षायोग्यतासन्निधिज्ञानसहकृतेन ज्ञाप्यते । न तु तत्र शक्तिलक्षणान्यतरवृत्तिरूपपदव्यापारकल्पना, अनुपलभ्यत्वात् ।

नन्वेवं पदानां पदार्थबोधमात्रेण व्यापारपर्यवसाने वाक्यार्थबोधस्य शब्दजन्यत्वाभावाद्वाक्यार्थस्याशाब्दत्वापत्तिः। अत्र न्यायरत्नाकरे पार्थसारथिः–पदार्थेषु पदानां पदार्थबोधजनकीभूतवृत्तिरूपव्यापारपर्यवसानेऽपि पदार्थबोधमात्रस्य प्रमाणान्तरसिद्धत्वेन निष्फलस्यानुद्देश्यत्वाद्वाक्यार्थबोधस्यैवातज्जन्यत्वेऽपि शब्दप्रयोगोद्देश्यत्वावगतेः शब्दस्य वाक्यार्थे तात्पर्यावगमात्तात्पर्यविषयत्वेन वाक्यार्थस्य शाब्दत्वोपपत्तिरिति।

नचैतादृशतात्पर्यविषयत्वस्य शाब्दत्वप्रयोजकत्वे पदार्थानामनुद्देश्यत्वेन तदसम्भवादशाब्दत्वापत्तिः। तेषामपि शक्तिलक्षणान्यतरवृत्तिविषयत्वेन शाब्दत्वोपपत्तेः। नचैवं तात्पर्यस्यावृत्तिरूपत्वेन शाब्दत्वप्रयोजकाननुगमः शंक्यः। तात्पर्यस्यापि वृत्तित्वाङ्गीकारात्।

अत एव न्यायसुधाकृतापि भावार्थाधिकरणादौ कृदन्तशब्दस्थले ऽवाच्यत्वेऽपि भावनायास्तात्पर्यवृत्त्या शाब्दत्वं इत्यादिग्रन्थे तात्पर्यस्यापि वृत्तित्वमङ्गीकृतम्।

वस्तुतस्तु उद्देश्यताख्यतात्पर्यस्वीकारे शुकादिवाक्यस्थले वेदे चोद्देश्यताख्यतात्पर्यासंभवेन वाक्यार्थस्य च शाब्दत्वानापत्तिप्रसंगः।

अथोद्देश्यताख्यतात्पर्यानङ्गीकारेऽपि शब्दनिष्ठस्य तात्पर्याख्यधर्मविशेषस्यैव शब्दत्वानुमेयस्य स्वीकारात्तद्विषयत्वमेव शाब्दत्वप्रयोजकमित्युच्येत, ततोऽक्लृप्तधर्मान्तरस्वीकारे प्रमाणाभावाद्वैयाकरणमततुल्यमेव गौरवम्। अतो यथाश्रुतवार्तिकानुसारेणैवं परिहर्तव्यम्। वाक्यार्थस्य पदजन्यपदार्थोपस्थितिजन्यज्ञानत्वेन स्वतो ऽशाब्दत्वेऽपि पदार्थानां शक्तिलक्षणागौण्यन्यतमरूपवृत्तिगम्यत्वेन स्वतः शाब्दत्वोपपत्तिः। अत एवोक्तं वार्तिककृता–(१)"तन्मात्रावासितेष्वेषु पदार्थेभ्यः स गम्यते। अशाब्देऽपि च वाक्यार्थे न पदार्थेष्वशाब्दता। वाक्यार्थस्यैव नैतेषां निमित्तान्तरसम्भवः" इति।

१ श्लो. वा. वाक्याधिकरणे. श्लो.२२९.

एवं संसर्गे शाब्दत्वामीसनुव्यवसायोऽपि शब्दप्रयोज्यत्वाच्छब्दा-नुपूर्वीज्ञानकारणकत्वाद्वाक्यार्थबोधस्य नानुपपन्नः । अत्र च संसर्गबोधः शक्यपदार्थसंबन्धबोधव्यतिरेकेणैव जायत इति न तत्र लक्षणा अ-ङ्गीकृता । तीरादिबोधस्य तु शक्यसंबन्धबोधव्यतिरेकेणाजायमान-त्वाल्लाक्षणिकत्वव्यवहार आनुपूर्वीज्ञानाजन्यत्वादपि वेति वैषम्यम् ॥

एवं च शाब्दत्वप्रयोजकाननुगमोऽप्यापाद्यमानो नातीव दोषमा-वहतीति सर्वमनवद्यम् । तदेवं वाक्यार्थस्य पदजन्यपदार्थोपस्थिति-लभ्यत्वेन तत्र वाक्यशक्त्यनङ्गीकारात्तत्प्रतिपादकं व्याकरणं न्याय-विरोधादप्यप्रमाणम् । अतश्च प्रयोगोत्पत्तौ प्रयोगनियमे व्याक-रणस्याशास्त्रत्वाच्छब्देषु गोगाव्यादिरूपेषु न व्यवस्था स्यादि-ति सूत्रार्थः ॥

## सू—शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ १—३—२५ ॥ (सि)

नाप्रमाणं व्याकरणम्, स्मृत्यधिकरणन्यायेनैव मन्वादिस्मृतिवदेवै-तस्यापि प्रामाण्यसिद्धेः । न च निर्मूलत्वम् । प्रयोगनियमस्य ताव-च्छ्रुतिमूलकत्वेनैवोपपत्तेः । न चानेकश्रुतिकल्पने पाठासंभवादेक-श्रुतिकल्पनस्य चैकोपलक्षणमन्तरेणासिद्धेरुपलक्षणस्य च साधुत्वादेः पूर्वोक्तरीत्या निर्वक्तुमशक्यत्वान्निर्मूलत्वमिति वाच्यम् । साधुत्वस्यै-वैकस्योपलक्षणत्वात् ।

अथ किमिदं साधुत्वम् ? उच्यते—अभियुक्तानां तावदपभ्र-ष्टपदेषु गोशब्दादिषु साधुशब्दप्रयोगाद्वर्णमात्रादिना अपभ्रष्टेषु च गाव्यादिषु असाधुशब्दप्रयोगात्तदालम्बनं किञ्चिदवश्यं वक्तव्यम् । तच्च प्रमितया वृत्त्याऽर्थप्रतिपादकत्वं साधुत्वम् । तदभावोऽसाधुत्व-म् । वृत्तिश्च शक्तिलक्षणागौण्यन्यतमरूपा । न चेदं गाव्यादिष्वपि

मुख्यार्थान्तराभावेन लक्षणागौण्योस्तावदनाशङ्कनीयत्वात्। शक्तिकल्पनस्य तु प्रयोगप्रसिद्धयोर्वक्ष्यमाणरीत्याऽन्यथाप्युपपन्नत्वेन निष्प्रमाणत्वमेव। अतश्च गाव्यादिशब्देषु प्रमितवृत्त्या अर्थप्रत्यायकत्वाभावान्नातिव्याप्तिः।

अत्र यद्यपि अनपभ्रष्टत्वापभ्रष्टत्वधर्मावच्छिन्नेष्वेव शब्देषु साधुत्वासाधुत्वे इति न्यायसुधास्वारस्यात्प्रतीयते। तथापि तत्प्रायिकमेव। अन्यथा घटादिशब्दस्यापि पटे साधुत्वापत्तेः। न च तत्र लक्षणया प्रतीत्यङ्गीकारादिष्टापत्तिः। अप्रयुक्तलक्षणाया अनङ्गीकारात्। अत एवोक्तम्—"काश्चिन्नैवाप्रयोगतः" इति गोणीशब्दस्यापि आवपनवाचिनोऽनपभ्रष्टस्य गवि साधुत्वापत्तेश्च। न चाधुनिकसङ्केतितार्थकत्वेऽव्याप्तिः। 'द्वादशेऽहनि पिता नाम कुर्या'दिति सामान्यविधिना पुत्रत्वोपाधिनैव सर्वेषां देवदत्तशब्दादीनां संकेतकरणेन शक्तेः प्रमितत्वात्। अत एवोक्तं हरिणा—'पुत्रादिनामकरणे गृह्येषु नियमश्रुतेः। अनादिशक्तिताः संज्ञास्त्वपि नैव विरुध्यते' इति। यत्तु स्वेच्छयैव सङ्केतिताः डित्थभादयः शब्दाः तेषामलक्ष्यत्वादेव नाव्याप्तिः। तदप्युक्तं तेनैव—"यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते डित्थभादयः। कथं तु तासां साधुत्वं नैव ताः साधवो मताः" इति।

वस्तुतस्तु वृत्तिग्रहाभावे डित्थभादीनामप्यर्थबोधकत्वानुपपत्तेः स्वयं सम्पादितसङ्केतितत्वेन च गाव्यादिशब्दवत् गोशब्दोपस्थापकतया शक्तिभ्रमेण वा बोधकत्वानुपपत्तेर्मुख्यार्थान्तराभावे च लक्षणागौण्योरप्यनुपपत्तेः साम्प्रतिकशक्तिरूपवृत्तिस्वीकारेणैव डित्थभादीनामर्थबोधकत्वं वाच्यम्। अतश्च प्रमितवृत्त्या अर्थबोधकत्वरूपसाधुत्वेऽपि न क्षतिः। अत एव पाणिन्यादे (१)'वृ' रित्यादौ पष्ठ्यन्तप्रयोगोऽप्युपपद्यते। स्वेच्छासङ्केतितस्य हि साधुत्वाभावे कथमिव

१. पा. सू. ६-४-१४३

षष्ठ्यन्तत्वोपपत्तिः ।

यत्तु कैश्चित्षष्ठ्यन्तत्वोपपत्तये 'टे' रित्यादेः शब्दानुकरणत्वमङ्गीकृत्य शब्दपरत्वे चार्थपरत्वाभावाच्छब्दस्यैव लोपादिकार्यान्वयापत्तिमाशङ्क्य शब्दपरस्यैव लक्षणयार्थपरत्वाङ्गीकारेण परिहृतम् । तैस्तावच्छब्दानुकरणत्वेन साधुत्वं हरिग्रन्थानुसारेण पूर्वमनङ्गीकृतमपि पश्चादङ्गीकृतमिति पूर्वापरविरोधः सुधीभिस्तद्ग्रन्थ एव विभावनीयः ।

किञ्च शब्दानुकरणत्वमपि टेरित्यादेरितिकरणाद्यभावे न सङ्गच्छते । सम्भवे ऽपि वा शब्दपरत्वस्य वृत्तिव्यतिरेकेणासम्भवात् । वृत्तावपि च लक्षणागौण्योश्शक्यपूर्वकत्वाच्छक्तिकल्पनाया एव वाच्यत्वात्, अन्यथा लक्षणयाऽर्थपरत्वस्याप्ययोगापत्तेः । शक्तिकल्पने च लाघवेन शब्दविषयशक्तिकल्पनापेक्षयार्थविषयशक्तिकल्पनाया एव न्याय्यत्वाच्च । तस्मात्स्वेच्छाशब्दानामपि टिघुभादीनामनादिशक्त्यभावेऽपि सादिशक्तिसद्भावाद्वृत्त्या प्रमितयाऽर्थप्रतिपादकत्वरूपस्य साधुत्वस्य वक्तुं शक्यत्वान्नाव्याप्तिः ।

यत्तु पार्थसारथिना अनादित्वे सति वाचकत्वं साधुत्वमित्युक्तं, तन्न मनोरमम्; तथा हि—अनादित्वं किं शब्दविशेषणम् ? । अर्थविशेषणं वा ? तथा वाचकत्वमपि शक्तिप्रमयाऽर्थप्रत्यायकत्वं ? वृत्तिमात्रप्रमया वा ? । तत्र पक्षद्वयस्याप्याद्यनिर्वचने गङ्गाग्निपदयोस्तीरमाणवकयोरसाधुत्वापत्तिः । न चास्मन्मते शक्यार्थस्यैव तीराद्युपस्थापकत्वात् गङ्गादिपदानां तीरादिप्रत्यायकप्रवाहादिवाचकत्वेनैव तीरादौ साधुत्वनिर्वचनं शक्यम् । एवमपि शब्दगतानादित्वविशेषणस्य वैयर्थ्यापत्तिः । लक्ष्यार्थप्रत्यायकशक्यार्थवाचकत्वरूपस्य लक्ष्येऽप्यसाधुत्वस्य शक्यार्थेऽसम्भवेनाव्याप्तत्वाच्च ।

एवं शब्दनिष्ठानादित्वस्य वृत्तिप्रमाप्रयोज्यार्थप्रतिपादकत्वपक्षेऽपि विशेषणत्वानुपपत्तिः वैयर्थ्यापत्तेरेवोद्भावनीया, उभय-

विषमप्रमाणप्रयोज्यार्थप्रत्यायकत्वस्यानादित्वं विशेषणं इति पक्षेऽपि अनादित्वस्य व्यर्थविशेषणता तुल्या। न च स्वेच्छाशब्दानां टि-घुभादीनां सादिवाचकत्वसद्भावेऽपि साधुत्वाभावादर्थवत्त्वोपपत्तिः। आधुनिकसंकेतितेषु त्वया सादित्वस्यानङ्गीकारात्। अङ्गीकारेऽपि वा साधुत्वस्याप्यङ्गीकारापत्तेः। अन्यथा असाधुषु टिघुभादिषु 'टे' रित्यादिषष्ठ्यङ्गीकरणमनुपपन्नमेव स्यात्। अथ तत्र शब्दानुकरण-त्वाङ्गीकारेण साधुता, तथापि शब्दपरत्वस्याप्यनादित्वाभावाद्व्यर्थ-विशेषणता तदवस्थैव। तस्मादुक्तलक्षणमेव साधुत्वमसाधुत्वं च वृ-त्तिभ्रमेणार्थप्रत्यायकत्वम्। सम्भवति हि गाव्यादिशब्देषु स्वरवर्णा-देः प्रयत्नेनोच्चारणाभावाच्छक्तिभ्रमरूपापराधभागित्वम्। अतो न तावत्सर्वेषामेव वाचकत्वं युक्तमिति सूत्रार्थः॥

## सू–अन्यायश्चानेकशब्दत्वम्॥ १-३-२६॥

यत्तु प्रयोगप्रत्ययान्यथानुपपत्तिरेवोभयत्र वाचकत्वकल्पनाबी-जमुक्तं तत्र एकत्रैव शक्तिकल्पनादन्यशब्दप्रयोगस्य चाद्यप्रयोक्तुर्वा-चकशब्दप्रयोगाशक्तिजत्वेऽनाप्युपपत्तेर्मूलशब्दोपस्थानेनार्थप्रत्याय-कत्वाविरोधादन्येषां चाशक्तिजत्वापरिज्ञानेन शक्तिभ्रमेणैव बो-धोपपत्तौ यववराहाधिकरणोक्तरीत्याऽनेकशक्तिकल्पनादिदोषचतुष्ट-याङ्गीकरणस्यान्याय्यत्वादयुक्तमेव। यद्यपि चात्र नैकस्मिन्शब्देऽने-कशक्तिकल्पना, तथापि शक्त्यन्तरकल्पना तावत्प्रत्यां गत्यन्तरा-दयैव। अत एव यत्र करपाण्यादिशब्देषु विनिगमकाभावो न वा गांगाव्यादिवत्परस्परमादृश्यम्। तत्र गत्यन्तराभावाद्दोषचतुष्टयम-प्यङ्गीक्रियत एव। न च प्रकृतेऽपि विनिगमनाविरहः। तत्रोच्यते–

## सू–तत्र तत्त्वमभियोगविशेषात्स्यात्॥ १-३-२७॥

तत्त्वनिर्णयस्तु व्याकरणोक्तलक्षणश्रवणाभ्यासरूपादभियोगा-

त्तेन च यल्लक्ष्यान्तरज्ञानं तद्रूपादिशेषादेव स्यात् । तथा च व्याकरणानुगतत्वमेव शक्तिनिर्णयद्वारा साधुत्वाभिव्यञ्जकं द्रष्टव्यम् । वचन्तीत्यादौ तु 'नहि वचिरन्तिपरः प्रयुज्यते'इति कात्यायनोक्तत्वादेव व्याकरणाननुगमः। कृष्णशमित्यादौ तु 'बहुलं छन्दसि' त्यादिनैव तदनुगमो द्रष्टव्यः । लक्षणादिरूपवृत्तिनिर्णयस्तु यद्यपि न सर्वत्र व्याकरणेन भवति तथापि प्रयोगानुसारेण सम्पादनीयः । तथा च यत्र व्याकरणानुगतस्य शब्दस्य वृत्तिप्रमापूर्वकप्रयोगस्तत्र साधुत्वाभिव्यक्तिरिति द्रष्टव्यम् ।

नन्वेतस्य व्याकरणस्य निर्मूलत्वेन न शक्तिनिर्णायकत्वम् । तथाहि—न तावदत्र वेदो मूलं, तस्य धर्माधर्मभिन्ने अप्रवृत्तेः । (१)'सम्बन्धस्याशास्त्रहेतुत्वा'दिति न्यायेन विशिष्य शक्त्यनिर्णायकत्वाच्च । नापि व्यवहारः; तस्य गवादिष्विव गाव्यादिष्वपि तुल्यत्वेन शक्त्यनिर्णायकत्वादिति चेत्—

न ; साधुत्वाश्रयाः शब्दास्तावत्प्रत्यक्षसिद्धाः । तेषां वृत्तिप्रमया अर्थप्रत्यायकत्वमपि फलानुमेयम् । वृत्तिप्रमात्वानिश्चय एव केवलं व्याकरणाधीन इति तत्रापि व्याकरणान्तरमूलकत्वान्न दोषः । नचात्र कल्पादिवत्प्रवाहनित्यत्वकल्पने प्रमाणाभावः । व्याकरणस्य चतुर्दशविद्यास्थानान्तर्गतत्वेन स्मृतिपरिगृहीतस्य प्रवाहनित्यत्वकल्पनावश्यंभावात् । प्रत्युत वेद एव 'सविभक्तिकं प्रयाजान् यजती'त्यादौ विभक्तिशब्दप्रयोगात्तस्य च तत्प्रतिपादकव्याकरणनित्यत्वं विनानुपपत्तेरपि प्रवाहनित्यत्वकल्पना ।

नचैवमष्टकादिवत्स्मृत्यन्तरमूलत्वे अन्धपरम्परापत्तिः । अदृष्टमाधनत्वस्य हि अष्टकादौ प्रत्यक्षाविषयत्वाद्भवेदन्धपरम्परा । प्रकृते तु यथैव ब्राह्मणाद्ब्राह्मण्यां जातो ब्राह्मणः इति स्मृत्युक्ताभिव्यञ्जकज्ञानसहकृतचक्षुर्ग्राह्यत्वं ब्राह्मणत्वस्य, यथा वा रत्नतत्त्वपरीक्षा-

---

१. जै. सू. ३-२-४.

सङ्गीतशास्त्रोक्ताभिव्यञ्जकज्ञानसहकृतचक्षुःश्रोत्रगम्यत्वं रक्ततत्त्वषड्जादिरागविवेकस्य न विरुध्यते तथा पूर्वपूर्वव्याकरणावगतप्रकृतिप्रत्ययाद्यभिव्यञ्जकाभ्यासजनितसंस्कारसहकृतेन अर्थज्ञानान्यथानुपपत्तिसहकृतेन च श्रोत्रेन्द्रियेणैव साधुशब्दज्ञानं न विरुध्यते । अतश्च 'गवादय एव साधवः न गाव्यादयः' इति साधुस्वरूपनियमस्य तावत्स्मृत्यन्तरमूलत्वादेव न निर्मूलत्वम् ।

यस्तु 'साधूनेव प्रयुंजीत नासाधून्' इति प्रयोगनियमः तस्यादृष्टार्थविषयकत्वाद्वेदमूलत्वेन प्रामाण्यम् । प्रत्यक्ष एव चात्र पठ्यते वेदो न त्वष्टकादिवदनुमेय एव, वाजसनेयिशाखायां हि (१)तेऽसुरा हेलयो हेलय इति वदन्तः पराबभूवुस्तस्मान्न म्लेच्छितवै ( नापभाषितवै ) म्लेच्छो ह वा एष यदपशब्दः'' इति कृत्यार्थे विहितेन तव्यप्रत्ययेन न म्लेच्छितव्यमित्यर्थावगमात्प्रत्यक्ष एवापशब्दभाषणनिषेधः । न चायं म्लेच्छितवैशब्दो रूढ्या म्लेच्छभाषावचनत्वान्न गाव्याद्यपशब्दविषय इति शङ्क्यम् । उपक्रमोपसंहारार्थवादपर्यालोचनया अपशब्दविषयत्वप्रतीतेः । उपक्रमे हि अरय इति वक्तव्ये रेफस्थाने लप्रयोगेण (२)'प्लुतप्रगृह्या अची'ति विहितप्रकृतिभावाभावाच्चापशब्दभाषणस्य पराभवरूपानिष्टहेतुत्वोक्त्याऽपशब्दमात्रप्रतीतेः । न चालय इति म्लेच्छभाषा, येन विध्यर्थवादयोरेकविषयत्वमाशङ्क्येत । अतश्चोपक्रमस्थार्थवादानुरोधेन विधिगतोऽपि नम्लेच्छितवैशब्दोऽपशब्दमात्रभाषणनिषेधार्थः । स च ज्योतिष्टोमप्रकरणे पाठात्तदङ्गम् ।

यद्यपि च 'वाग्योगविद्दुष्यति चापशब्दै'रिति स्मृत्या 'वाचा

---

१. श. ब्रा. ३-२-१-२४. अत्र महाभाष्येऽपि हेऽलयो हेऽलयः इत्येव पाठः स्वीकृतः । शतपथे तु हेलवो हेलव इत्युपलभ्यते पाठः । "ते असुराः आत्तवचसः देवैः स्वीकृतवचसः हे अरयः हे अरयः इत्युच्चारयितुमशक्ताः हेऽलवो हेऽलव इति वदन्तः पराभूता " इति तद्भाष्यरूपो वेदार्थप्रकाशः । २. पा. सू. ६-२-१२५.

चैव हि मनसा च यज्ञो वर्तत' इति लिङ्गदर्शनेन वाग्योगशब्दस्य यज्ञपरत्वावगतेस्तद्विदो यजमानस्यापशब्दभाषणे न दोष इत्यर्थावगमेन यज्ञमात्र एवायं निषेधः प्रतीयते । तथा 'याज्ञे कर्मणि साधुनियमो ऽन्यत्रानियमः'' इति महाभाष्यस्मृत्या साधुशब्दभाषणनियमोऽपि यत्रापि यज्ञमात्रविषयतया प्रतीयते, अतश्च यज्ञमात्रविषयेण साधुशब्दभाषणनियमेनासाधुशब्दभाषणनिषेधेन वा ज्योतिष्टोमेऽपि निषेधसिद्धेः निषेधानर्थक्यं तथापि साधुनियमेनार्थान्निवृत्तानामप्यसाधूनां साधुप्रयोगासम्भवे अवघातासम्भव इव दलनादेः प्रतिनिधित्वेनासाधूनां प्रसक्तौ (१)''अयज्ञिया वै माषा'' इति वन्निषेधार्थम् । अतश्च ज्योतिष्टोमेऽसाधुशब्दवर्जमक्षिसंकेतादेरेव साधुप्रयोगासंभवे प्रतिनिधित्वं माप्रवर्जमिव नीवारादीनां व्रीह्यभाव इति न किंचिदनर्थकम् ।

यस्तु 'वाग्योगवि'दिति प्रतिषेधः स साधुनियमे सति अर्थादेवासाधुनिवृत्तिसिद्धे'र्न गिरा गिरे'तिवत् अनुवादमात्रम् । तत्प्रयोजनं च 'यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले । सोऽनंतमाप्नोति फलं परत्र' इतिचरणत्रयविहितस्य पुरुषार्थस्य साधुनियमस्य औचित्येन स्तुतिः ।

नचैवं ज्योतिष्टोमप्रकरणस्थेन निषेधेनानारभ्याधीतस्य स्मार्तस्यासाधुभाषणानियमस्योपसंहार एव किं न स्यादिति वाच्यम् । अनुपस्थितज्योतिष्टोमातिरिक्ततत्तत्प्रकरणाम्नातयज्ञेषु नियमव्यावर्तनफलकत्वापेक्षाया उपस्थितज्योतिष्टोमविषयप्रतिनिधिप्रतिषेधार्थकत्वस्यैव न्याय्यत्वात् । अत एव 'आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपे'दिति प्रायश्चित्तविधावाहिताग्निग्रहणं यज्ञमात्रविषयत्वे संगच्छते । अन्यथा हि ज्योतिष्टोममात्रविषयत्वेऽकिंचित्करं स्यात् ।

न चैतस्य वाक्यस्यानारभ्याधीतत्वेन क्रत्वासंभवाद्धिरण्य-

---

१. मै. सं. १-४-१०.

नाशेष्ट्यादिवत् सत्यप्याहिताग्निग्रहणे पुरुषार्थत्वस्यैवापत्तेर्यज्ञविषयत्वे प्रमाणाभावः। एतस्याः 'प्रायश्चित्तीया मा भूमे'ति महाभाष्यालोचनया प्रायश्चित्तरूपत्वेन दोषनिर्घातार्थत्वावगमादपशब्दभाषणरूपस्य च दोषस्य 'याज्ञे कर्मणि साधुनियमः अन्यत्रानियमः' इत्यादिपूर्वोदाहृतवाक्यपर्यालोचनया यज्ञान्वयप्रतीतेः तन्निर्घातार्थाया इष्टेरपि तद्द्वारा क्रत्वङ्गत्वप्रतीतेः। अतश्च यथैव सोमवमननिमित्ताया इष्टेर्दोषनिर्घातार्थाया लौकिकसोमवमनस्यानिषिद्धत्वेनादुष्टत्वाद्वैदिकसोमवमनस्य सम्यग्जरणान्तविहितप्रतिपत्तिलोपेन दोषजनकत्वावगतेस्तन्निर्घातार्थाया इष्टेस्तद्द्वारा क्रत्वङ्गत्वावगमः, तथात्रापि परिशेषाख्यप्रमाणसहकृतनिमित्तश्रुत्युपस्थापितक्रत्वङ्गत्वावगमे न किंचिद्बाधकमस्ति। अत एव हरदत्तोऽपि प्रायश्चित्तविधेर्यज्ञमात्रविषयत्वमेवाह।

हिरण्यनाशेष्ट्यादेस्तु दोषनिर्घातार्थत्वे प्रमाणाभावान्नोक्तविधया क्रतूपस्थापनेन क्रत्वङ्गत्वमिति विशेषः॥

यत्तु कैश्चित् प्रायश्चित्तविधेर्यज्ञमात्रविषयत्वे प्रमाणाभावादाहिताग्नेरेव यज्ञेऽधिकारादाहिताग्निग्रहणवैयर्थ्यापत्तेः प्रायश्चित्तविध्यन्यथानुपपत्त्यैव पुरुषार्थस्य भाषणनिषेधस्य कल्पनीयत्वावगतेः 'वाग्योगविदि'ति वाक्येन चाहस पुरुषार्थमपि असाधुभाषणस्य निषेधात्तत्रापि दोषसत्वेन वरुणेष्टिन्यायाभावात् प्रायश्चित्तविधिः पुरुषार्थ एव। अन्यत्रानियम इति वचनं त्वपस्मृतिरेवेत्युक्तम्।

तन्न; वाग्योगविच्छब्दस्य तावत् पूर्वोक्तविधया यज्ञविद्यजमानपरत्वेन एतन्निषेधस्य यज्ञमात्रविषयत्वेन न्यायसुधाकृतैव व्याख्यातत्वात्। वार्तिके क्रत्वर्थसाधुभाषणनियमातिक्रमैवगुण्योक्तिप्रसंगेन 'यथोक्त'मित्यादिना एतन्निषेधलिखनाच्च। वस्तुतोऽपि च पूर्वोक्तविधया चरणत्रयविहितपुरुषार्थसाधुनियमस्तावत्क्रत्वैनैकवाक्यत्वसम्भवे वाक्यभेदापादकस्वतन्त्रपुरुषार्थनिषेधकल्पनमन्याय्यमेव। अत एव 'याज्ञे

कर्मणि' इत्यादिस्मार्तवचनस्थयज्ञपदेन स्मार्तपाकयज्ञादीनामपि ग्रहणप्रसक्तौ तन्निवृत्तिफलकत्वेनाहिताग्निग्रहणस्याप्युपपत्तिः । अत्र हि 'आहिताग्निरपशब्दं प्रयुज्य' इति आहिताग्नेरेवापशब्दभाषणस्य प्रायश्चित्तविध्यर्थं सिद्धवद्दोषत्वेनानुकीर्तनात्तन्निषेधकवाक्येऽपि यज्ञादिपदमाहिताग्निसाध्ययज्ञमात्रपरमित्यवगम्यते । अतः प्रायश्चित्तविध्यन्यथानुपपत्त्या पुरुषार्थनिषेधकल्पनाप्ययास्ता ।

वस्तुतस्तु प्रायश्चित्तविधावपशब्दभाषणस्य निमित्तत्वात्तद्विशेषणत्वेनाहिताग्निकर्तृकत्वस्य विवक्षानुपपत्तेरिष्टेश्च स्वत एवाहिताग्निकर्तृकत्वस्य प्राप्तत्वेनेष्टिकर्तृविशेषणत्वेनापि विवक्षानुपपत्तेरनुवादमात्रमाहिताग्निपदमिति न तद्वैयर्थ्यं स्वतन्त्रनिषेधकल्पनायै प्रभवति । प्रत्युत तथा कल्पिते अन्यत्रानियम इति वाक्यस्याप्रामाण्यापत्तिः । न चेष्टापत्तिः । प्रमाणाभावात् । तथा हि–न तावत् श्रुतिविरोधः । आहिताग्निग्रहणस्योभयथाप्यविवक्षितत्वात् । अन्यस्य पुरुषार्थासाधुनिषेधकस्य श्रुतिवाक्यस्याभावाच्च । नापि स्मृतिवाक्यविरोधः; वाग्योगविदित्यादीनां क्रत्वर्थपरत्वस्यैव स्थापितत्वात् । पुरुषार्थपरत्वेऽपि वा कात्यायनोक्तत्वेन पतञ्जल्युक्तानियमस्मृतेरेवो'त्तरोत्तरं मुनीनां प्रामाण्यं' इति न्यायेन प्रमाणत्वावगमाव वाग्योगविदित्यादीनामेवाप्रमाणत्वापत्तिः ।

यदपि पार्थसारथिना वार्तिकोक्ताभ्युच्चययुक्त्यवलंबनेनैव 'नानृतं वदेत्' इति श्रुतौ अर्थानृतवच्छब्दानृतस्यापि अपशब्दभाषणरूपस्य निषिद्धत्वोक्तेः असाधुभाषणनिषेधस्य पुरुषार्थत्वावगमात्तद्विरोधेनानियमस्मृतिरप्रमाणमिति ।

तदप्ययुक्तम्; वदेदित्यस्यार्थाभिधानार्थकत्वात् शब्दे चोच्चारणार्थकत्वादनृतपदस्याप्यर्थविषये ऽसत्यपरत्वाच्छब्दविषये चापभ्रष्टपरत्वात्सकृच्छ्रुतस्य शब्दस्यानेकार्थपरत्वायोगेनोभयनिषेधकत्वायोगात्, प्रत्युत 'प्रातः प्रातरनृतं ते वदन्ति' इत्यादिश्रुतिपर्यालोचनया अनृतशब्दस्यार्थासत्य एव शक्त्यवधारणादपशब्दपरत्वानु-

पपत्तेः 'नानृतं वदे'दित्यस्यापशब्दभाषणनिषेधकत्वकल्पने प्रमाणाभावेन तदभिधायकस्य वार्तिकग्रन्थस्य प्रौढिमात्रत्वेन न्यायसुधाकृतैव व्याख्यातत्वात् ।

किञ्च सम्भवत्यप्युभयपरत्वे 'अन्यत्रानियमः' इति विशेषस्मृत्यैव सामान्यश्रुतेरर्थानृतमात्रपरत्वनिश्चयः । भवति हि विशेषस्मृत्यापि सामान्यश्रुतेः संकोचः यथा—अत्रैव विवाहादिविषयेऽनृतभाषणाभ्यनुज्ञापिकया स्मृत्या अनृतवदननिषेधश्रुतेः सङ्कोचः । तस्मादनियमस्मृतेर्बलवत्प्रमाणान्तरविरोधाभावादपस्मृतित्वकल्पनानुपपत्तेरसाधुनिषेधस्य पुरुषार्थत्वाभावात्सारस्वतीष्टेरपि क्रत्वङ्गभूतैवेति सिद्धम् । अतश्चासाधुभाषणे यज्ञरूपक्रतुवैगुण्येऽपि न तदितरवैदिककर्मवैगुण्यम्, न वा पुरुषस्य प्रत्यवाय इति सिद्धम् । अत एव सकलदेशीयाः शिष्टा अपि हरिनामगुणसंकीर्तनादौ व्यवहारकाले च भाषाशब्दानप्यविगानेन प्रयुञ्जते ।

ये तु बर्बरादिभाषाशब्दाः तेषां पुरुषार्थोऽपि निषेधः समस्त्येव, 'न म्लेच्छभाषां शिक्षेत' इत्यनेन तच्छिक्षणस्यैव निषेधात् । न चात्र म्लेच्छशब्दस्य रूढ्यर्थत्यागे पूर्ववदुपक्रमादिरूपं कारणमस्ति । अतश्च बर्बरादिभाषानिषेधस्यैव केवलं पुरुषार्थत्वम्, अन्यभाषानिषेधस्य क्रत्वर्थत्वमेवेति सिद्धम् ।

यस्तु 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवती' त्ययमनारभ्याधीतो विधिः तत्रार्थप्राप्तशब्दप्रयोगाश्रितः साधुनियमः फलाय विधीयते भोजनाश्रितप्राङ्मुखत्वस्येवायुष्याद्यर्थतया । अत्र शास्त्रपदेन रूढ्या विद्यास्थानवाचिना व्याकरणमेवोच्यते । अतस्तदन्वितः साधुरित्यर्थः । अज्ञातस्य च तस्य प्रयोगाश्रितत्वासम्भवात् व्याकरणोत्थज्ञानकर्मत्वं प्राप्तमिति सम्यग्ज्ञानपदमनुवादो 'यउ चैनमेवं वेद' इतिवत् । अतश्च ज्ञानादेव धर्म इत्यादिभाष्योक्तपक्षोऽप्यभ्युपेत्यवादेनैव व्याख्येयः ।

अत एव ज्ञानफलप्रतिपादकानामपि वचनानां (१)'योऽश्वमेधेन यजते, य उचैनमेवं वेदे'तिवत्[1] ज्ञानस्य साधुनियमार्थत्वेन परार्थत्वावगमात् पर्णमयीन्यायेनार्थवादत्वमेव ।

यदपि वार्तिककारेयं शास्त्रोक्तज्ञानपूर्वकप्रयोगस्यैव धर्महेतुत्वाभिधानम्, तदपि तदाश्रितसाधुनियमस्यैव धर्महेतुत्वज्ञापनार्थम् । प्रयोगस्य रागप्राप्तत्वेनाविधेयस्य भोजनवत्फलसम्बन्धासम्भवात् ।

ननु प्रयोगभोजनयोः रागप्राप्तत्वेऽपि प्रकरणाभावाद्वाक्येन चाश्रयसमर्पणे वाक्यभेदप्रसङ्गादाश्रयत्वानुपपत्तेः कथं तदाश्रितयोः साधुशब्दप्राङ्मुखत्वनियमयोः फले विधानम् ?।

न च प्रकरणस्य स्वत एवाश्रयाविधायकत्वेन तदुपस्थितिमात्रे व्यापारात्प्रकरणोपस्थापितस्य होमादेः गुणफलसम्बन्धविध्यन्यथानुपपत्तिकल्पितेन विधिनैवाश्रयत्वेन विध्युपगमात् प्रकृतेऽपि रागोपस्थितस्यैव प्रयोगभोजनादेः गुणफलसम्बन्धविध्यन्यथानुपपत्त्या आश्रयत्वेन विधानोपपत्तिरिति वाच्यम् । रागेण प्रयोगभोजनाद्युपस्थितिवत् स्मरणविहारादीनामपि उपस्थितसाविशेषात्तेषामप्याश्रयत्वापत्तेः । तथात्वे च 'भुञ्जीत, सुप्रयुंक्त' इत्याद्यनुवादानुपपत्तिः । अतो लौकिकक्रियाया आश्रयत्वासम्भवात् कथं तदाश्रितस्य गुणस्य फलसम्बन्धविधिरिति चेत्—

न; भोजनादौ तावत्पूर्वं तदुद्देशेन कलञ्जादिद्रव्यादिनिषेधस्याम्नानादधिकाराख्यप्रकरणेन भोजनाद्युपस्थितेः सत्त्वादाश्रयत्वोपपत्तेः गुणफलसम्बन्धविधानोपपत्तिः। प्रकृते तु 'तस्मादेषा व्याकृता वागुद्यत' इति वाक्येनैव प्रकृतिप्रत्ययान्वाख्यानरूपेण व्याकृतायाः साधुशब्दरूपाया वाचो भाषणधात्वर्थाश्रयसम्बन्धविधानात् गुणफलसम्बन्धविधानोपपत्तिः स्पष्टैव । इदं हि वचनं न तावत् साधुत्वस्वरूपोत्पत्तिपरम्, तस्या व्यवहारव्याकरणैकसाध्यत्वा-

---

१. तै. सं. ५-३-१२-२.

व । नापि साधुनियमस्य क्रतुसम्बन्धविधिपरम्; अनारभ्याधीतत्वेन क्रतुसम्बन्धबोधकप्रमाणाभावात् ।

यत्तु न्यायसुधायां तस्मादेषेतिसर्वनाम्ना वैदिकत्वसामान्येन वैदिकवाग्वदनस्यैवोपस्थितेः फलकल्पनाभावाच्च तदुद्देशेनैव व्याकृतत्वविधानात्क्रत्वर्थत्वसिद्धिरित्युक्तम् । तत् विश्वजित्सुवर्णधारणादीनामपि फलकल्पनाभयेन क्रत्वर्थत्वप्रसङ्गात्सर्वनाम्नश्च पूर्वनिर्दिष्टमतिनिर्देशकस्यानिर्दिष्टक्रतुनिर्देशकत्वानुपपत्तेर्व्याकृतपदसामानाधिकरण्याच्च व्याकृतत्वस्यैव पूर्वनिर्देशप्रतीतेरुपेक्षणीयम् ।

अतश्च गुणफलसम्बन्धविधानोपपत्तेः साधुनियमस्य पुरुषार्थतापि सिद्धा । अतश्चोक्तविधधर्मोपयोगिसाध्वसाधुज्ञानमेव व्याकरणप्रयोजनमित्यपि सिद्धम् ।

रक्षोहाद्यपि च यथासम्भवं सिध्यन्न निराकर्तुमुचितम् । तस्मात्प्रयोजनवत्त्वात् प्रत्यक्षश्रुतिमूलत्वाच्च सत्यपि प्रत्यक्षश्रुतिविरुद्धविषये न्यायविरुद्धविषये चाप्रामाण्ये अन्यत्र प्रमाणं व्याकरणमिति सिध्यति, तेन गवादिष्वेव शक्तिर्न गाव्यादिष्विति तत्त्वनिर्णयः । अतश्च गाव्यादिशब्दानां शक्तिभ्रमादेव प्रत्यायकत्वमिति सिद्धम् ।

## सू—तदशक्तिश्च तदनुरूपत्वात् ॥ १-३-२८ ॥

शक्तिभ्रमश्च गाव्यादिशब्दानां गवादिशब्दसारूप्यादुपपन्न एव ।

## सू—एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥१-३-२९॥

यथैव पटः, पटं, पटेनेत्यादिविभक्तिव्यत्ययेऽपि एकदेशसारूप्येणवार्थप्रत्ययः तथैव गाव्यादिशब्दानामपि किञ्चिद्वैरूप्येऽपि गवादिशब्दसारूप्येणार्थप्रत्यायकत्वात्रविरोधः ।

इति व्याकरणाधिकरणम् ॥

## (९)लोकवेदाधिकरणम् ॥

### सू—प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ १-३-३०॥

एवं तावदाक्षिप्ते व्याकरणप्रामाण्ये समाहिते इदानीं कात्यायनादिप्रतिपादितस्य व्यक्तिरेव वाच्येति पक्षस्य प्रसक्तं प्रामाण्यमपोद्यते। अत एव पादाध्यायाधिकरणसङ्गतयः स्पष्टाः।

तत्र शब्दस्तावच्चतुर्विधः—नाम, आख्यातो, पसर्ग, निपातरूपः। नामापि च जाति, गुण, क्रिया, यदृच्छा, द्रव्य, सर्वनाम, भेदात् षड्विधम्। तत्राख्यातार्थस्य तावत् द्वितीये प्रतिपादयिष्यमाणत्वेन पौनरुक्त्यापत्ते र्नेहाख्यातस्योदाहरणत्वम्।

निपातोपसर्गयोस्तु द्योतकत्वमात्राङ्गीकारात्तदर्थद्योतकत्वं तयोः तस्यैवोदाहरणत्वं न त्वनयोः, संशयाभावात्। वाचकत्वाङ्गीकारेऽपि वा स्वातन्त्र्येणार्थप्रतिपादकत्वाभावात् 'अनु' 'पश्चा'दित्येवं निपातोपसर्गमात्रप्रयोगे पदान्तरप्रयोगात्पूर्वं अर्थसामान्यस्याप्यप्रतीतेः पदान्तरसम्बन्धे च 'अनु भवति 'पाश्चत्यं' इत्यादौ अर्थविशेषस्यैव प्रतीतेः सन्देहाभावेनानुदाहरणत्वम्।

एवं गुणशब्दानां शुक्लादिपदानामपि शुक्लादिगुणस्य घटत्वादिजातिवन्निखैकत्वाभ्युपगमाच्छुक्लाद्यवान्तरभेदाभावेन शुक्लत्वादिजात्यन्तरानङ्गीकाराच्छुक्लगुणमात्रवाचित्वेन निर्णीतानां संशयाभावादेव नोदाहरणत्वम्।

गौः शुक्ल इत्यादौ विशेष्यनिघ्नानां तु किं गुणमात्रवाचिता ? उत गुणोपलक्षितव्यक्तिवाचितेति संदिह्यमानत्वादुदाहरणत्वमस्त्येव।

एवं पाकादिक्रियाशब्दानामप्यवान्तरभेदाभावेनैवानुदाहरणत्वं द्रष्टव्यम्। यदृच्छाशब्दानां तु देवदत्तादिसंकेतितव्यक्तिमात्रवाचित्वादनुदाहरणता स्पष्टैव। कृदन्तादिशब्दानां च द्रव्यमात्रवाचित्वस्यारुणाधिकरणे वक्ष्यमाणत्वादनुदाहरणत्वम्। सर्वनामशब्दा-

नामपि सन्निहितत्वोपलक्षितव्यक्तिमात्रवाचित्वस्य गुणाधिकरणे वक्ष्यमाणत्वादेवानुदाहरणत्वम् । अतो जातिशब्दानामेवात्रोदाहरणत्वमिति केचित् ।

वस्तुतस्तु द्रव्यत्वावान्तरव्याप्यगोत्वादिजात्यङ्गीकारवत् गुणत्वावान्तरव्याप्यजातिशुक्लत्वाद्यङ्गीकारेऽपि बाधकाभावात्कर्मत्वावान्तरजातीनां च ज्योतिष्टोमत्वादीनां शब्दान्तरादिप्रमाणगम्यत्वेनाभ्यासाधिकरणे साधयिष्यमाणत्वात् तेषामपि गुणक्रियाशब्दानामुदाहरणत्वम् ।

एवमाख्यातस्यापि प्रकृतिप्रत्यययोः धात्वर्थभावनावाचित्वे भावार्थाधिकरणे साधितेऽपि तद्गतजात्युपाध्यन्यतरधर्मवाचित्वम् ? अथ वा तदुपलक्षितव्यक्तिवाचितेति विचारसंभवादुदाहरणत्वं युक्तम् ।

अतश्च जातिगुणक्रियाख्यातशब्दानां आकृतिर्वा वाच्या ? व्यक्तिर्वेत्येवंविधविचारसिद्ध्यर्थं इदं तावत्प्रथमं चिन्तनीयम्—किं लोकवेदयोः पदानां तदर्थानां च भेदः ? अथवा ऐक्यमिति । यदि पदानां तदर्थानां च भेदो भवेत्तदा नायं जातिव्यक्तिवाच्यत्वविचारः क्रियेत । तथाहि—स किं लौकिकपदविषयो वा स्यात् ? वैदिकपदविषयो वा ? नाद्यः, वैयर्थ्यापत्तेः; एतद्विचारप्रयोजनं हि नार्थप्रतिपत्तिमात्रं, तस्योभयथापि सत्त्वात् । किन्तु सामान्यविशेषशास्त्रयोर्बाध्यबाधकभावः । पूर्वपक्षे हि 'यदाहवनीये जुहोती' त्यत्र जुहोतेरितरहोमव्यक्तिवाचित्ववत् पदहोमव्यक्तिवाचित्वस्यापि सत्त्वात् पदहोमव्यक्तौ पदवदाहवनीयस्यापि श्रुत्यैव संबन्धः प्राप्येतेति न सामान्यशास्त्रं बाध्येत ।

यदा तु एतदधिकरणसिद्धान्तयुक्त्या जुहोतेर्होमत्वजातिवाचित्वेनाक्षेपाद्व्यक्तिभानं, तदा सामान्यशास्त्रस्थले साधारण्येनाक्षेपाद्व्यक्तिमात्रभानेऽपि यावद्दूरस्था पदहोमव्यक्तिर्हृदयमानीयोपस्थाप्यते तावत् प्रकरणात् स्ववाक्यगतविध्यन्यथानुपपत्त्या वोपस्थितायाः पदहोमव्यक्तेरेव 'पदे जुहोति' इत्यत्र होमत्वसामान्यवाचिनापि

जुहोतिना झटित्याक्षेपात्सिध्यति सामान्यशास्त्रस्य बाधः ॥

वस्तुतस्तु व्यक्तिवाचित्वपक्षेऽपि सिध्यत्येवाहवनीयबाधः । स हि यद्यपि न सामान्यविशेषभावेन सिध्येत्, तथापि सावकाशनिरवकाशन्यायेन तावत् सिध्यत्येव।

अत एव (१)'यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु' इत्यत्र यत्किंचिदिति सर्वनाम्ना प्रकृतविशेषपरामर्शिना अग्नीषोमीयप्राग्भाविपदार्थव्यक्तिमात्रे उपांशुत्वप्राप्तावपि सावकाशत्वादेव 'मन्द्रं प्रायणीयायाम्' इत्यनेन निरवकाशेन प्रायणीयापदाभिहितप्रायणीयात्वजात्याक्षिप्तप्रायणीयामात्रव्यक्तिसंबन्धितया मन्द्रत्वविधायकेनापि बाध्यत एवोपांशुत्वम् ।

अतश्च निरवकाशेन होमव्यक्तिविशेषसंबन्धिना पदेन साधारणव्यक्तिसंबन्ध्याहवनीयो बाध्यत एवेति नेदं विचारप्रयोजनम्, किन्तु एतदधिकरणव्युत्पाद्यस्य नागृहीतविशेषणान्यायस्य 'रथन्तरमुत्तरयोर्गायति' इत्यादौ प्रयोजनं समस्त्येव । पूर्वपक्षे हि रथन्तरशब्दस्य गीत्युपलक्षितऋग्वाचित्वाल्लाक्षणिकगीत्यतिदेशकत्वायोगाच्चरमोपस्थितोत्तराशब्दलक्षितोत्तराकार्यं 'एवं कृत्वोद्गेयं' इतिवदुत्तराबाधेन योनिऋग्विधिरापद्येत । सिद्धान्ते तु—गीतिमात्रवाचित्वात्सिद्धत्युत्तरयोरेव ऋचोर्गीत्यतिदेशः ।

इदं तु प्रयोजनं वेदे सम्भवदपि न लोके सम्भवति, तत्र जातिवाचित्वाभावेऽपि विवक्षितार्थस्य(२) "लोके कर्मार्थलक्षणम्' इति न्यायेन तात्पर्यादेव सिद्धेः । अतोऽयं विचारः न लौकिकपदविषयः ।

वैदिकपदविषये तु सप्रयोजनोऽप्युपायाभावादेवासम्भवी । न हि वैदिकानां पदानां तदर्थानां चान्यतो वृद्धव्यवहारादिरूपः शक्तिग्रहोपायः सम्भावयितुमपि शक्यते । 'यूपं छिनत्ति' इत्यादौ यूपादिपदानां तु लोकप्रसिद्धछेदनादिपदसमभिव्याहारेण शक्तिग्रह इति

१ मै. सं. ३-८-२.　　२ जै. सू. ११-१-२६.

वैषम्यम्। अतो जातिव्यक्तिवाच्यत्वविचारस्य लोकवेदगतपदतदर्था-न्यत्वानन्यत्वविचाराधीनत्वादन्यत्वानन्यत्वमेव प्रथमं विचार्यते।

तत्र सत्यपि वर्णैकत्वे लौकिकपदेषु नियतस्वराभावाद्वैदिकेषु तु नियतस्वर,छांदस,वर्णागम,लोप,विकारादिधर्मविशेषसत्त्वात् स्पष्टो भेदः। गृपादिसाहचर्याच्च लोकवेदयोः पदानां तावदन्यत्वम्। इष्टं च सिद्धान्तिनोऽपि धर्मभेदात्पदान्यत्वम्, यथा—सरो रमः इत्यादौ। अत एवोक्तं वाक्याधिकरणे वार्तिककृता—"पदावधारणोपाया-न् बहूनिच्छन्ति सूरयः। क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः" इति। अत्र क्रमोदाहरणं—सरो रम इत्युक्तमेव। न्यूनातिरिक्तत्वे—अ-श्वः श्व इति। स्वरे—स्थूलपृषतीमित्युपपादितं व्याकरणाधिकरणे।

वाक्यं व्यधिकरणपदसन्निधिः, तेन च नामाख्यातकृदन्ताकृद-न्तपदनिर्णयः। 'पचते दक्षिणां देहि' 'भोजनार्थं पचते' 'धान्य-माता डित्थपाते'ति च क्रमेणोदाहरणानि।

श्रुतिः समानाधिकरणपदसन्निधिरिति न्यायरत्नाकरे व्याख्या-तम्। तेन च नामाख्यातपदनिर्णयः। तथा 'यातः पुनरायाती'त्य-त्राख्यातसामानाधिकरण्यात् यात इति कर्तृनिष्ठप्रथमान्तनामपदं 'या-तो देवदत्तयज्ञदत्ता' वित्यत्र द्विवचनसामानाधिकरण्यात् यात इत्या-ख्यातपदम्।

स्मृतिर्व्याकरणम्। यथा—वैयाकरणपत्ररेण "अश्वस्त्वं देव-दत्त' इत्युक्ते अश्व इति पदं लोके अश्ववचनतया नामत्वेन स-म्भाव्यमानमपि (१)'श्वयतेर' इति व्याकरणस्मृत्यन्वाख्यानवशेन आगच्छः इत्यर्थे लङि मध्यमैकवचनत्वेनाख्यातमिति निर्णीयते। अतः सिद्धान्तेऽपि स्वरा[illegible]भेदेन पदभेदस्येष्टत्वाद्युक्तो लौकिकप-दापेक्षया वैदिकानां भेदः। तद्भेदाच्च तदर्थभेदोऽपि सिद्ध एव।

अत एव 'उत्ताना वै देवगवा वहन्ती'ति लिङ्गदर्शनं स्पष्टमे-

---

१ पा सू ७-४-१८.

त्र । अश्ववालाद्यर्थान्तरदर्शनं च न विरुध्यते । तस्माच्छब्दार्थयोरन्यत्वमेवेति प्राप्ते—

ब्रूमः—प्रत्यभिज्ञानादेव वर्णैकत्ववत्पदतदर्थयोरप्यैकत्वम् । यत्तु नियतस्वरादिधर्मभेदेन पदभेद इत्युक्तम् । तत्रोच्यते—यत्रार्थभेदप्रतीत्युपयोगिस्वरादिभेदः तत्र युक्तः पदभेदः, यथा—पूर्वोदाहृतेषु । प्रकृते तु नियतानियतस्वरकत्वस्य अर्थभेदप्रतीत्यनौपयिकत्वान्न पदभेदे प्रमाणमस्ति । एवं देवाः देवासः इत्यादौ न्यूनातिरिक्तत्वेऽपि अर्थभेदप्रतीत्यभावान्न पदभेदः ।

अत्र चार्थप्रतीत्युपयोगिस्वरादिभेद एव पदभेदप्रयोजकः, नत्वर्थभेदमात्रम्, अक्षादिशब्देष्वपि पदभेदापत्तेः । नापि स्वरादिभेदमात्रं लोकवेदयोः, प्रत्यभिज्ञाबलेनैकत्वसिद्धौ स्वरादिभेदस्य पदभेदाप्रयोजकत्वात् । यूपादिसाहचर्यं तु न्यायवैषम्यादेवाप्रयोजकम् । अतश्च पदैक्ये सुतरां अर्थैक्यापत्तेः 'उत्ताना वै देवगवा वहन्ति' इत्यस्य च रोदनार्थवादवदन्यपरत्वेनासाधकत्वात् । अश्ववालादिसाहचर्यस्य च यूपादिवदेवाप्रयोजकत्वाद्युक्तं प्रत्यभिज्ञाबलेन पदतदर्थयोरैक्यं लोकवेदयोः ।

सूत्रं तु आकृत्यधिकरणपूर्वपक्षपरमपि लोकवेदाधिकरणसिद्धान्तेऽप्येवं योज्यम्—प्रयोगचोदनानां विधिवाक्यानां प्रामाण्याभावप्रसङ्गादर्थैक्यम् । उपलक्षणं चैतच्छब्दैक्यस्यापि । यस्तु प्रामाण्याभावमङ्गीकुर्यात् तं प्रति अविभागात् प्रत्यभिज्ञानादिति हेतुरिति ।

इति लोकवेदाधिकरणम् ।

## (१०) आकृत्यधिकरणम् ।

### सू—प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ १-३-३०. ॥ ( पू )

एवमेकत्वे सिद्धे विचार्यते-किं घटादिपदानां व्यक्तिरेव वाच्या? उत जातिः ? इति । ये तु सहस्रत्रयसंख्याकाः पक्षा वार्तिके उक्ताः त इह बहुविस्तरभयादनुपयुक्तत्वाच्च न लिख्यन्ते ।

तत्र 'व्रीहीनवहन्ति,' 'पशुमालभेत', इत्यादिविधिचोदनासु जातेः अवघातालम्भयोरमूर्तत्वनित्यत्वाभ्यामसम्भवेन 'ब्राह्मणं न हन्या'दिति प्रतिषेधचोदनासु च जातेर्नित्यत्वादेव हननकर्मत्वे प्राप्त्यभावात्प्रतिषेधासम्भवेन व्यक्तिगतत्वेन चोभयोः सम्भवात्क्रियान्वयानुपपत्त्या तावद्व्यक्तिरेव वाच्यत्वेन प्रतीयते ।

किञ्च जातेरेकत्वेन एकत्वातिरिक्तसंख्यासम्बन्धासम्भवात् अङ्गत्वेन च लिङ्गान्वयायोगात् अमूर्तत्वेन च क्रियाजन्यफलाश्रयत्वादिकारकत्वायोगात् व्यक्तेश्चैतत्त्रयसम्बन्धस्योपपन्नतरत्वादपि व्यक्तिवाचित्वम् ।

न चैवं व्यक्तिमात्रविषयशक्तिकल्पने घटमानयेत्यतो घटत्वबोधानापत्तिः, जातेर्लक्षणया बोधोपपत्तेः । न च विनिगमनाविरहः । प्रत्युत लाघवेनैकस्यां जातौ शक्तिकल्पनाद्व्यक्तावेव लक्षणेति विपरीतं विनिगमकमिति वाच्यम् । जातेर्व्यभिचारेण व्यक्तिविशेषनिश्चायकत्वासम्भवेन व्यक्तेरव्यभिचारेण जातिविशेषनिश्चायकत्वाद्व्यक्त्यैव जातिलक्षणायां नियामकत्वात् । जातिशक्तिकल्पनाया लाघवन्तु अनुपदमेव निराकरिष्यते ।

वस्तुतस्तु व्यक्त्या जातिलक्षणायां एकस्मिन्पदे वृत्तिद्वयाविरोधापत्तिः । न च निरूढलक्षणायां वृत्तिद्वयविरोधो न [illegible] । त-

दूषकताबीजस्य, 'सकृदुच्चरितं पदं सकृदेवार्थं प्रत्याययती'त्येवंविधानय-मभङ्गस्य साम्प्रतिकलक्षणायामिव निरूढलक्षणायामपि तुल्यत्वात् । अत एव न जात्या व्यक्तेर्लक्षणापि सिद्धान्त्यभिमेता सिद्ध्यति ।

अत एवमुभाभ्यां वक्तव्यम्—शक्तिग्रहस्य कार्यतावच्छेदकमेव जातिविशिष्टव्यक्तिशाब्दबोधत्वम् । तेन च यथायथमुभयोर्जाति-व्यक्तिलाभ इति । कारणतावच्छेदकमपि न घटत्वशक्तिग्रहत्वम् । श-क्तेर्नैयायिकमते ईश्वरेच्छारूपत्वेन मीमांसकमते च पदार्थान्तररूपत्वेन तत्त्वेन ज्ञानाभावेऽपि शाब्दबोधस्यानुभाविकत्वात् । घटत्वमित्ये-तस्मात् पदात् घटत्वशक्तिग्रहसत्त्वेन घटत्वविशिष्टशाब्दबोधापत्तेश्च; किन्तु शक्यत्वसम्बन्धेन घटपदवत्तानिश्चयत्वम् । सम्बन्धविषया श-क्तिभाने च तत्त्वेन रूपेणाभानेऽपि न काचित्क्षतिः ।

अत्र च घटपदवत्तायाः आश्रयरूपो धर्मो न घटत्वम् । तथा सति धर्मितावच्छेदकगवेषणायां घटत्वत्वस्यैवावच्छेदकत्वापत्तेः त-स्य च घटेतरावृत्तित्वे सति निखिलघटवृत्तित्वरूपत्वात् अनन्तघटव्य-क्तीनां तदितरानन्तव्यक्तीनां च प्रवेशेन गौरवापत्तेः । तद्वरं घटव्य-क्तीनामानन्त्येऽपि तासामेव धर्मिता । तदा घटत्वजातेरेव धर्मिताव-च्छेदकत्वोपपत्तेः न तदितरव्यक्तिप्रवेशकल्पना । अतश्च घटत्वं ध-र्मितावच्छेदकीकृत्य घटविशेष्यताशालिघटपदवत्तानिश्चयत्वमेव शक्य-त्वसम्बन्धेन कारणतावच्छेदकम् । अतश्च व्यक्तावेव शक्तिः । कथं तर्हि देवदत्तीयघटव्यक्तौ संकेतग्रहे सति व्यक्त्यन्तरे शब्दप्रयोगः ? । संकेतग्रहवेलायां घटत्वजातेरुपलक्षणत्वात् । अतश्च घटत्वसामान्य-मुपलक्षणीकृत्य सर्वव्यक्तिष्वेव सङ्केतग्रहो नैकव्यक्तावेवेति न दोषः ।

अस्तु वा देवदत्तीयघटव्यक्तावेव सङ्केतग्रहः, तथापि तत्का-र्यतावच्छेदकस्य घटत्वविशिष्टशाब्दत्वस्यैव कल्पनान्नातिप्रसङ्गः । अस्मिंश्च पक्षे न व्यक्त्यानन्त्यप्रवेशोऽपि । यत्तु धर्मितावच्छेदकं घट-त्वं न तदभिधेयमेव सत् धर्मिणमवच्छिनत्ति । किन्तु अनभिधेयमेवो-

पलक्षणतयोति न जातिविशिष्टव्यक्त्यभिधानापत्तिः । भवति हि अनभिधेयस्याप्युपलक्षणत्वम् । यथा योऽयं शुक्लवासाः स देवदत्त इत्युक्ते देवदत्तपदानभिधेयस्यापि शुक्लवस्त्रत्वस्य देवदत्तपदशक्तिग्रहे उपलक्षणत्वम् । अतोऽतिलाघवात् व्यक्तावेव शक्तिरिति मुख्यः पक्षः ।

यस्तु वार्तिके अभिधेयस्यैव धर्मितावच्छेदकत्वमिति नियमाङ्गीकृत्य जातिमात्रवाचित्वपक्षापेक्षया लघुभूतत्वाज्जातिविशिष्टव्यक्तिवाचित्वपक्षोऽप्युपन्यस्तः स व्यक्तिमात्रवाचित्वपक्षापेक्षया गुरुभूतत्वादस्माभिरुपेक्षितः ।

अत एव सूत्रकारेणापि प्रयोगचोदनानां विधिनिषेधरूपाणां जात्यनन्वयासम्भवादर्थैक्यम्, व्यक्तिमात्रवाचित्वम् । सङ्केतग्रहवेलायां वा देवदत्तीयघटव्यक्तिरूपार्थैक्यम् । कथं तर्हि जातिभानम् ? व्यक्त्यन्तरभानं वा ? अविभागात् । कारणेन कार्यस्याविभागात् अवश्यजननादित्यर्थं वदता व्यक्तिमात्रपक्ष एवादृतः । अन्यथा हि विशिष्टवाचित्वपक्षे अर्थैकत्वमित्येकपदमनर्थकमेव स्यात् । अत एव भाष्यकारेणापि सन्देहवेलायां नैवायं पक्ष उपन्यस्तः । तत्सिद्धं व्यक्तिः शब्दार्थ इति ॥

## सू—अद्रव्यशब्दत्वात् ॥ १–३–३१ ॥

किञ्च व्यक्तिवाचित्वपक्षे 'शुक्लो घट' इत्यादौ पदद्वयस्याप्येकार्थवाचित्वात्सामानाधिकरण्योपपत्तिः । न चैवं पर्यायतापत्तिः । जातिवाचित्वे तु भिन्नार्थकत्वादेव न सामानाधिकरण्योपपत्तिः । न च व्यक्तेर्लक्षणादिनापि भानाभ्युपगमात् तामादाय सामानाधिकरण्योपपत्तिः । विभक्तेः प्रकृत्यभिधेयार्थान्वयार्थाभिधायकत्वस्य व्युत्पत्तिसिद्धत्वेन शुक्ल इति प्रथमोपात्तसंख्यादेः गुण एवान्वयप्रसङ्गात् । घट इति प्रथमोपात्तसंख्यादेश्च घटत्वेऽन्वयप्रसङ्गेन शुक्ला-

दिशब्दानां विशेष्यनिष्ठत्वासम्भवात्। गुणिलिङ्गत्वानुपपत्त्या घटो-घट इतिवत्सामानाधिकरण्यानुपपत्तेः। प्रत्युत जात्यादिरूपोऽर्थ एव व्यक्त्यादेर्लक्षक इति मते लक्ष्यस्याप्यशाब्दत्वात्सुतरां विभक्त्यर्था-न्वयानुपपत्तिः।

न च लक्षितव्यक्त्यभिप्रायेण सामानाधिकरण्यानुपपत्तावपि शक्ययोरिव जातिगुणयोः एकार्थसमवायसम्बन्धेन तदुपपत्तिः। रूपं रस इत्यादावपि अनेन सम्बन्धेन सामानाधिकरण्यापत्तेः। शुक्ला-दिशब्दानां त्वन्मते शुक्लत्वादिजातिवाचकत्वेनैकार्थसमवायाभावा-त्। अतश्च जातिवाचित्वपक्षे द्रव्यशब्दत्वाभावापत्तेः सामानाधि-करण्यानुपपत्तिरिति सूत्रार्थः।

## सू—अन्यदर्शनाच्च ॥ १—३—३२. ॥

'यदि पशुरुपाकृतः पलायेतान्यं तद्वर्णं तद्वयसमालभेत' इ-त्यत्र जातिवाचित्वपक्षे जातेरेकत्वेनान्यत्वासम्भवात् वयोवस्था-विशेषासम्भवाच्च व्यक्तिवाचित्वमेव युक्तम् ॥

## सू—आकृतिस्तु क्रियार्थत्वात् ॥ १—३—३३ ॥ (सि)

न व्यक्तिवाचित्वं घटादिशब्दानाम्। तद्धि सकलव्यक्तिवा चि-त्वं वा स्यात्? एकव्यक्तिवाचित्वं वा? नाद्यः; तथा सति व्यक्तीना-मानन्त्येनानन्तशक्तिकल्पनापत्तेः; न च जातेरुपलक्षणत्वाङ्गीकारादुप-लक्षणैक्येन शक्त्येकत्वसंभवः उपलक्षणैक्यस्य शक्त्येकत्वानियामकत्वात्। यथा हि यत्र सैन्धवपदाभिधेयं लवणाश्वादिकमेकापवरकस्थित्योपलक्ष्य सैन्धवपदशक्तिग्रहः तदा नैकापवरकस्थितेरुपलक्षणभूताया एकत्वेनै-कैव शक्तिः, अपि तु शक्यतावच्छेदकस्य लवणत्वादेर्भेदादनेकशक्ति-कल्पनम् तथा घटत्वादिजातेरुपलक्षणभूतायाः शक्यतावच्छेदकत्वाभा-

वेन तत्तद्व्यक्तित्वस्यैव शक्यतावच्छेदकत्वकल्पनादनन्तशक्तिकल्पनापत्तिः। यद्यपि चोपलक्षणभूताया अपि जातेः शक्यतावच्छेदकत्वमपि कल्प्येत, तथापि शक्यनानात्वादेवानेकशक्तिकल्पनमावश्यकम्। न हि नानाव्यक्तिष्वेका शक्तिः संभवति।

यदि तु घटत्वादिजातिवदेकैव शक्तिः पर्याप्तिसंबन्धेन सर्वव्यक्तिषु कल्प्येत तदवच्छेदकश्च घटत्वं जातिरित्युच्यते, ततोऽनभिहितस्य शक्यतावच्छेदकत्वानुपपत्तेर्जातेरप्यभिधानविषयत्वकल्पनापत्तिः। शक्त्येकत्वेऽपि च तत्तत्संबन्धानां प्रतिव्यक्ति कल्पनापत्तेरानन्त्यमेव।

अथैकव्यक्तित्वाचित्वं, ततो घटत्वस्यातिप्रसक्तत्वेन शक्यतावच्छेदकत्वानुपपत्तेः तद्व्यक्तित्वस्यैव शक्यतावच्छेदकत्वं वाच्यम्। तदा च तद्व्यक्तिविषयकशक्तिस्मरणाभावे घटपदादर्थबोधानापत्तिः।

वस्तुतस्तु पूर्वोक्तविधया घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसंबन्धेन घटपदवत्तानिश्चयत्वेन कारणत्वे कल्पिते यद्यपि शक्यानन्त्यं तथापि फलमुखत्वादेव न दोषः, यदि च तद्व्यक्तित्वस्यैव शक्यतावच्छेदकत्वमङ्गीकृत्य एकव्यक्तिक एव शक्तिग्रहः, तथापि शक्तेः संबन्धविधया भानाङ्गीकरणात् तत्वेन रूपेण स्मरणेऽपि न काचिद क्षतिः। अतिप्रसक्तस्यापि च घटत्वादेः तद्वृत्तित्वमात्रेण धर्मितावच्छेदकत्वं नानुपपन्नम्।

तस्मादेवं परिहर्तव्यम्—घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसंबन्धेन घटपदवत्तानिश्चयत्वं कारणतावच्छेदकं, पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसंबन्धेन घटवत्तानिश्चयत्वं वा कारणतावच्छेदकमित्यत्र नियामकाभावेन विनिगमनाविरहे सति उभयोः कारणत्वकल्पने व्यभिचारो गौरवापत्तिश्च। अतो लाघवात् पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसंबन्धेन घटत्ववत्तानिश्चयस्यैव कारणत्वम्। न चास्मन्मते विनिगमनाविरहः। घटत्वस्य धर्मित्वे निरव-

च्छिन्नस्य धर्मित्वासंभवात् घटत्ववत्त्वस्य अवच्छेदकत्वे त्वदुक्तरीत्या गौरवापत्तेः नियामकत्वात् । घटत्वस्य प्रकारत्वे तु जातेः स्वरूपेणैव प्रकारत्वस्य नैयायिकैरप्यङ्गीकारात् । घटत्ववत्त्वस्याप्रवेशेनानन्तव्यक्तिप्रवेशकल्पना अनाशङ्कनीयैव । न च जातेः समवायेनैव स्वरूपेण प्रकारता, न संबन्धान्तरेणेत्यत्र प्रमाणमस्ति । परैरपि तथानभ्युपगमात् । अत एव(१) 'अनुभवत्वान्ये'ति दीधितिफक्किकाव्याख्यानं 'अनुभवत्वस्य स्वरूपेण प्रतियोगिविशेषसम्बन्धेन भेदेऽन्वय' इत्येवं कृतं तट्टिप्पणीकारैः । अतो घटत्व एव शक्तं घटपदं न तु व्यक्ताविति सिद्धम् । एवं च शक्त्यानन्त्यादीनि वार्तिकोक्तानि दूषणानि फलमुखान्यपि न स्वीकृतानि भविष्यन्ति ।

किञ्च व्यक्तिवाचित्ववादिनापि जातिस्तावदवश्यं शब्दाद्भासत इत्यङ्गीकार्यम् । अन्यथा (२)'श्येनचितं चिन्वीत' इति चोदनानुपपत्तिः । तथाहि—श्येनस्यात्र किं करणत्वेनान्वयो धात्वर्थं प्रति ? उत कर्मत्वेन ? नाद्यः ; (३)'कर्मण्यग्न्याख्यायाम्' इति स्मृत्या (४)'कर्मणि हन' इत्येतत्सूत्रगतकर्मोपपदानुवृत्तौ क्विप्प्रत्ययविधानेन श्येनचिच्छब्दस्य कर्मवाचके श्येनपदरूपे उपपदे सति अग्न्याख्यस्थण्डिलसंज्ञायां कर्तव्यायां चिनोतेर्धातोश्चितमिति

---

१ यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवन्यासमवेतधर्मसमवायित्वमिति वा वक्तव्यम्, इतीदं अनुमितेरन्यतमं लक्षणं दीधितिकारैरुक्तम्, अत्र जागदीशी—अनुभवत्वमादाय प्रत्यक्षाद्यतिव्याप्तेर्वारणार्थमनुभवत्वान्येति । यद्यपि अनुभवत्वप्रतियोगिकभेदस्य अनुभवत्वेऽपि सत्वात उक्तदोषतादवस्थ्यम् । अनुभवत्ववत्त्वावच्छिन्नप्रतियोगिकभेदस्योक्तौ च तद्घटकीभूतं यत्सकलानुभववृत्तित्वं तदवच्छिन्नभेदस्यैव सम्यक्त्वे ज्ञानत्वादिवारकस्य अनुभवान्यासमवेतत्वस्य वैयर्थ्यम् । तथापि अनुभूतिरित्याकारकयत्किञ्चिद्बुद्धिप्रकारत्वावच्छिन्नभेदस्यैव अनुभवत्वान्यपदेनोक्त्वाददोषः । सकलानुभववृत्तित्वस्य तत्राप्रविष्टत्वादिति ।
२ तै. सं. ५-४-११-१. ३ पा. सू. ३-२-९२. ४. पा. सू ३-२-७६

कर्मणि वाच्ये क्विप्प्रत्यय इत्यर्थावगमेन श्येनस्य कर्मत्वावगमा-द् करणत्वानुपपत्तिः । (१)'तृतीया तत्कृतार्थेन गुणवचनेन' इत्या-दितृतीयासमासलक्षणाभावेन श्येनेन चितमित्येव तृतीयासमासानुपप-त्तेरपि श्येनस्य करणत्वानुपपत्तेश्च ।

न द्वितीयः; श्येनव्यक्तेर्जातेर्वा इष्टकाभिः कर्तुमशक्यत्वात् । अतः सादृश्यलक्षणया श्येनसदृशं चीयमानं चयनेन संपादयेदित्येवं चोदनार्थः सम्पद्यते । सादृश्यं च न व्यक्त्या सहोपपद्यते । तद्धि एक-व्यक्तिसादृश्यं वा स्यात् ? सर्वव्यक्तिसादृश्यं वा ? आद्ये अनिर्धारि-तरूपव्यक्त्यन्तराविलक्षणैकव्यक्तिसादृश्यस्येष्टकाभिरशक्यं संपादनम् । सर्वव्यक्तिसादृश्यं तु तासां परस्परवैलक्षण्यादतीतानागतानां चा-ग्रहणेन तत्सादृश्याग्रहणादनाशङ्क्यमेव । अतस्तज्जातीयसादृश्यं सम्पा-दयेदित्यर्थावगमादवश्यं जातिरपि श्येनपदात् प्रतीयत इत्यभ्युपग-न्तव्यम् । अतश्च तस्या एव लाघवात् प्रथमोपस्थितत्वाच्च शक्तिविष-यत्वोपपत्तौ न गौरवापादकं व्यक्तेः शक्तिविषयत्वकल्पनं प्रमाणवत् ।

कथं तर्हि व्यक्तिलाभः ? तदुच्यते—जातेर्व्यक्त्या सहा-भेदस्याप्यभ्युपगमात् । यथाहि पटे पटत्वं, इह शुक्लत्वं इत्यादि प्र-तीत्या अयुतसिद्धयोः भेदः, तथा अयं गौः अयं शुक्लः इत्यादिप्र-तीत्याऽभेदस्यापि सिद्धेः । न चैवं व्यक्त्यभेदे जातेरनित्यत्वापत्तेः । जात्यात्मना नित्यत्वेऽपि व्यक्त्यात्मनाऽनित्यत्वस्यास्माकमपीष्टत्वात् । अतश्च घटादिपदानां जातिवाचित्वेऽपि व्यक्त्यभेदात् जातेः जात्यैव व्यक्तिप्रतीतिसिद्धिः । नचैवं अभेदाङ्गीकारे व्यक्तेरपि वाच्यत्वापत्तेरधिकरणवैयर्थ्यापत्तिः । व्यक्तेर्वाच्यत्वेऽपि न व्य-क्त्यात्मना वाच्यत्वम् । अपि तु जात्यात्मनेत्येवं तत्सार्थक्योपपत्तेः । तदेतन्मतं न्यायसुधायां तात्पर्यत्वेनैव लिखितम् ।

भवदेवस्तु जातिव्यक्त्योरभेदेऽपि जातिशक्तेरेव साक्षाद्विष-यतासम्बन्धेन जातिसम्बन्धेऽपि उद्देश्यताख्यविषयतया व्यक्त्या-

---

१ पा. सू. २-३-३०.

व्यस्ति सम्बन्धः । सर्वैर्व्यक्तिप्रतीतिमुद्दिश्यैव शब्दप्रयोगात् । अतश्च यथैव 'यजेत स्वर्गकाम' इत्यत्र एकैव यागकृतिः यागविषयिणी स्वर्गोद्देश्यका चेति न भेदं प्रतिपद्यते, उभयोत्पादिका च भवति, तथैव एकैव घटपदशक्तिः घटत्वविषयिणी घटोद्देश्यिका चेति न तस्यां भेदः, एकस्या एव चोभयप्रत्यायकत्वं न विरुध्यते । अतः शक्तिज्ञानस्यैव कार्यतावच्छेदकं जातिशाब्दबोधत्ववत् व्यक्तिशाब्दबोधत्वमपीत्याह ।

अन्ये तु—कार्यतावच्छेदकद्वयकल्पने गौरवात् जातिव्यक्तिबोधस्य च क्रमिकत्वाननुभवात् क्रमिकत्वाङ्गीकारे च वैशिष्ट्यबोधाभावेन निर्विकल्पकस्वरूपत्वापत्तेः पूर्वोक्तघटत्ववत्ताज्ञानरूपस्य कारणस्य घटत्वविशिष्टशाब्दबोधत्वमेव कार्यतावच्छेदकम् । अतश्चैकयैव शक्त्या उभयबोधोपपत्तिरित्याहुः ।

तन्न; तथा सति 'चतुरो मुष्टीन्निर्वपति' 'अरुणया क्रीणाति' 'पशुना यजेत, इत्यादौ विशेष्यभूतायां व्यक्तावेव करणत्वान्वयद्वारा क्रियान्वयसम्भवेन विशेषणभूतयोर्जातिगुणयोः करणत्वान्वयाभावप्रसङ्गेन क्रियान्वयानापत्तिप्रसङ्गात् । विशेष्यभूतमुष्ट्याद्यन्वयद्वारैव क्रियान्वयाभ्युपगमे तु 'सप्तदशशरावश्चरुः' इत्यत्र निर्वापे जघन्यमुष्टिक्षेपेन प्रथमोपस्थितचतुःसंख्यानुग्रहो दशमे वक्ष्यमाणो न सिध्येत् । जघन्यस्यापि प्रधानस्यानुग्राह्यत्वेन मुष्ट्यनुग्रहस्यैव न्याय्यत्वापत्तेः ।

अत एवं परिहर्तव्यम्—घटपदत्वं धर्मितावच्छेदकीकृत्य घटत्ववत्ताज्ञानस्य कार्यतावच्छेदकं घटत्वजातिविषयशाब्दबोधत्वमेव, लाघवात् । व्यक्तिबोधस्तु लक्षणयापि नानुपपन्नः ।

नचैवं एकस्मिन् पदे वृत्तिद्वयविरोधः । स हि एकबोधजनने वा आपाद्यते, ? बोधद्वयजनने वा ? अन्त्येऽपि बोधयोः यौगपद्ये ? क्रमिकत्वे वा ? न तावदाद्यौ, अनङ्गीकारात् । न तृतीयः, शक्यार्थस्य पदान्तरार्थान्वयप्रमितेः प्रागेव लक्षणाङ्गीकारात् । यथैव गङ्गापदाच्छक्यप्रवाहोपस्थितावपि तस्य घोषाद्यन्वयप्रमितेः प्राग-

वानुपपत्त्या तीरलक्षणायामपि न वृत्तिद्वयविरोधः; अत एव न तत्र दूषकताबीजं 'सकृच्छ्रुतं पदं सकृदेवार्थं प्रत्याययती'त्येवंविधनियमभङ्गरूपं समस्ति, अपि तु अन्वयप्रमोत्तरकालं तस्यैव पदस्य यत्र वृत्त्यन्तरेणार्थान्तरप्रत्यायकत्वं तत्रैव तत्, एवमिहापि शक्त्या जात्युपस्थितावपि तस्याः कर्मत्वाद्यन्वयप्रमितेः प्रागेवानुपपत्तिवशात् व्यक्तिलक्षणायामपि न क्रमिकवृत्तिद्वयविरोधेन(१)तावद्दूषकताबीजम्, अत एव यत्र करणत्वान्वये नानुपपत्तिः तत्र जातिगुणयोरपि करणत्वान्वयद्वारा क्रियान्वयोपपत्तेर्न लक्षितव्यक्तेस्तदन्वय इत्यनुपदमेव वक्ष्यते।

न च क्रमिकबोधद्वयाङ्गीकरणे वैशिष्ट्यबोधाभावेन निर्विकल्पकरूपत्वापत्तिः। इष्टापत्तेः। अत एव निर्विकल्पकरूपायाः पदार्थोपस्थितेः कथं अन्वयशाब्दबोधजनकत्वमित्यप्यपास्तम्। बाधकाभावात्। अत एव परैरपि औपादानिकशक्तिवादिमते आकाशादिपदान्निर्विकल्पकरूपाया गगनादिव्यक्त्युपस्थितेरेव अन्वयशाब्दबोधजनकत्वमङ्गीकृतम्। तत्सुतरामस्माकं निष्प्रकारकजातिबोधस्य अन्वयशाब्दबोधजनकत्वोपपत्तिः इत्यलं विस्तरेण।

सूत्रं तु आकृतिपदाभिधेया जातिरेव घटादिपदवाच्या चयनादिक्रियायाः सादृश्यरूपार्थघटकत्वादिति व्याख्येयम्॥

## सू—न क्रिया स्यादिति चेदर्थान्तरे विधानम्, न द्रव्यमिति चेत्॥ १–३–३४॥

ननु जातिरेव वाच्येति चेदुच्येत ततोऽवघातादिक्रियान्वयः तथा अर्थान्तरे विधानं 'अन्यं तद्वर्णं, तद्वयसमालभेत' इत्यनेन अतिदेशप्राप्तस्य हविर्नाशादिनिमित्तकाज्यप्रतिनिधिनियमस्य बाधेन न्यायप्राप्तान्यपश्वालम्भनप्रतिप्रसवविधानं न स्यात्। तथा द्रव्याश्रयगुणवाचिपदसामानाधिकरण्यं च न स्यात् इत्यनुभाषणमिदं सूत्रम्॥

१ विरोधो न वा दूषकताबीजम्।

## सू—तदर्थत्वात्प्रयोगस्याविभागः ॥ १–३–३५ ॥

सर्वं चेदं लक्षितव्यक्तिमादायोपपन्नम् । अवघातादिक्रियान्वयो हि यद्यपि जातेरयोग्यः तथापि लक्षितव्यक्तेरुपपन्न एव ।

तथा कारकेऽपि क्रियाजन्यफलाश्रयत्वादिलक्षणे कर्मादिरूपे अधिकरणादिरूपे वा यत्र जातेरमूर्तत्वादवघातक्रियाजन्यफलरूपवितुषीभावाश्रयत्वाद्ययोगेनानन्वयः तत्र जातिलक्षितव्यक्तेरेव कर्मत्वाद्यन्वयद्वारा क्रियान्वयः, न तु जातेः । जातिस्तु तत्र व्यक्तिपरिचयोपायत्वादेव विवक्षितेति द्रष्टव्यम् ।

यत्र तु 'पशुना यजेत' 'अरुणया क्रीणाति' इत्यादौ करणत्वश्रवणं तत्र व्यापारवदसाधारणकारणत्वरूपस्य करणत्वस्यार्थाक्षिप्तद्रव्यपरिच्छेदरूपव्यापारद्वारेण काष्ठानामिव ज्वालाद्वारेण जातिगुणयोरेव संभवात् तद्द्वारेण च क्रियान्वयस्यापि संभवेन तत्र क्रियान्वयार्थं व्यक्तिलक्षणाशाब्दबोधः, किन्तु ज्वालाया इव आर्थिक एव तस्य क्रियान्वयो विशिष्टविधाविव विशेषणस्य ।

एवं लिङ्गसंख्ययोरपि समानाभिधानश्रुत्या अधिकरणादिकारकस्थले स्वलक्षितव्यक्तेरेव कारकान्वयः । स्वस्य तु व्यक्तिपरिचायकत्वमात्रम् । पार्ष्ठिकश्च तत्र प्रातिपदिकार्थलक्षितव्यक्त्यभेदेन । करणकारकस्थले तु लिङ्गसंख्ययोरेवार्थिकद्रव्यपरिच्छेदरूपव्यापारद्वारेण करणत्वान्वयः । पार्ष्ठिकश्च प्रातिपदिकार्थाभ्यां जातिगुणाभ्यां एकार्थसमवायलक्षणः सम्बन्ध इति द्रष्टव्यम् ।

शुक्लादिपदानां शुक्लत्वादिजातिवाचित्वपक्षे तु एकार्थसमवेतवृत्तित्वरूपः पार्ष्ठिकसंबन्धोऽवगन्तव्यः । नचैवं विभक्त्यर्थस्य प्रकृत्यभिधेयार्थान्वयित्वव्युत्पत्तिभङ्गः । गङ्गायां घोष इत्यादौ लक्ष्येऽप्यर्थे अधिकरणत्वाद्यन्वयदर्शनेन तादृशव्युत्पत्तेरेवासिद्धेः । अतो वृत्त्या प्रकृत्युपस्थापितार्थान्वयित्वमेव विभक्त्यर्थस्य क्वचिदाद्यबोधे क्वचिच्च पार्ष्ठिकबोधे व्युत्पत्तिसिद्धमित्येव फलबलेन कल्पनीयम् ।

यदापि चार्थस्य लक्षकत्वपक्षे लक्ष्यस्याशाब्दस्य विभक्त्यर्थान-

न्वय इत्युक्तम् तदप्यस्मिन्पक्षे तात्पर्याख्यवृत्तिविषयत्वेन शाब्दत्व-स्य लक्ष्येऽपि स्थापयिष्यमाणत्वादकिञ्चित्करम् ।

एवं 'अन्यं तद्वर्णं तद्वयसम्' इत्यादौ अन्योन्याभावरूपस्य भेद-स्य पशुपदलक्षितव्यक्तिप्रतियोगिकत्वमुपपादनीयम् ।

तथा सामानाधिकरण्यमपि गौः शुक्ल इत्यादौ शुक्लपदस्य गुण-वाचित्वे लक्षणया शुक्लत्वजातिवाचित्वे लक्षितलक्षणयोपपादनीय-म् । न चैवं जातिवाचिनामपि पदानां लक्षणया व्यक्तिपरत्वमङ्गी-कृत्य सामानाधिकरण्योपपत्तौ पटत्वादिपदानामपि तदापत्तिः । रूपं घट इतिवदप्रयुक्तलक्षणाङ्गीकारेण तदनापत्तेः ।

अतः सर्वस्याप्यस्य लक्षितव्यक्तिद्वारकत्वादवघाताद्यनुष्ठानरू-पस्य प्रयोगस्य तथा विभक्तिप्रयोगस्य अन्यपदप्रयोगस्य सा-मानाधिकरण्यप्रयोगस्य वाऽविभागः नासम्बद्धत्वम् इति सूत्रा-र्थः । अतः सिद्धमाकृतेरेव शब्दार्थत्वात् व्यक्तिशब्दार्थस्मृतेरप्रामाण्यम् ॥

इत्याकृत्यधिकरणम् ॥

मीमांसाम्बुनिधिं प्रमथ्य विविधैर्न्यायोच्चयैर्निर्झरैः ।
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेवं कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥

श्रीरुद्रदेवसूनोः
कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या
प्रथमाध्याये तृतीयोऽङ्घ्रिः ॥

इति श्रीपूर्वोत्तरमीमांसापारवारपारीणधुरीणश्रीरुद्र-
देवसूनुश्रीखण्डदेवस्य कृतौ मीमांसाकौस्तुभे
प्रथमाध्यायस्य तृतीयः पादः ॥

शुभमस्तु

श्रीः ॥

# ॥ मीमांसाकौस्तुभः ॥

## प्रथमाध्यायस्य चतुर्थः पादः ॥ (नामधेयपादः)

### सू—उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १–४–१. ॥ (सि)

अत्र भाष्यकारेण 'उद्भिदा यजेत पशुकामः', 'बलभिदा यजेत, 'विश्वजिता यजेत', इत्याद्युदाहृत्य किमुद्भिदादिशब्दा' गुणविधयः ? कर्मनामधेयानि वा ? इति संदिह्य 'उक्तं समाम्नायैदमर्थ्य' मिति सूत्रेण गुणविधिपूर्वपक्षं कृत्वा 'अपि वा नामधेयं स्यात्' इत्यग्रिमसूत्रेण नामधेयत्वं सिद्धान्तितम् । तद्यदि उद्भिदादिपदानां धर्मप्रमित्युपयोगसिद्ध्यर्थं ततोऽर्थवादाधिकरणे नामधेयानां सामान्योपयोगानभिधानेऽपि अर्थवादवदेव अध्ययनविधिवशादेव गुणविधित्वेन नामधेयत्वेन च उभयथाप्युपयोगसिद्धेरनर्थकम् । न हि गुणविधित्वेन सम्मतानां सोमादिपदानामानर्थक्यं सम्भवति ।

अथ उभयथा प्रामाण्योपपत्तावपि व्याख्यानरूपेणैवायं विचारः, ततः वाक्यशेषसामर्थ्ययोः प्रामाण्यस्याद्याप्यनुक्तत्वात् अपरिसमाप्त्यैव प्रामाण्यलक्षणं एतत्करणे असङ्गतिः । यद्यपि चार्थवादाधिकरणोक्तरीत्या सामान्योपयोगे सिद्धे कोष्ठशोधनिकार्थत्वेन विशेषविचारो नासङ्गतः । तथाप्येतत्सूत्रस्य नामत्वविरोधिगुणविधित्वहेतुपरत्वाभावात् ऐकाधिकरण्यानुपपत्तिः । अतो वार्तिककारेण सूत्रद्वयेनाप्यधिकरणद्वयं उत्सूत्रपूर्वपक्षं रचितम् ।

तत्राद्येऽधिकरणे—यद्यप्यध्ययनविधिबलेन अर्थवादवदेव प्रयोजनवत्त्वसिद्धेरानर्थक्येन पूर्वपक्षो नोत्तिष्ठतीति टुप्टीकायामुक्तम्। तथाप्यध्ययनविधिसिद्धप्रयोजनवत्त्वानामप्युद्भिदादिपदानां द्वारविशेषासम्भवेन प्रयोजनवत्त्वमाक्षिप्य गुणविधित्वनामधेयत्वान्यतरद्वारविशेषसम्भवेन प्रामाण्यं तावत्सम्भवतीत्युक्तं तत्पर्यवसानाय उत्तराधिकरणेषु नामधेयत्वं वा गुणविधित्वं वेति विषयविवेकः क्रियते। अत एव आद्येऽधिकरणे सोमाग्नेयादिपदानि तथा देशकालपदान्यप्युदाहरणम्। तेष्वपि द्वारापेक्षितत्वस्य समानत्वात्।

न्यायसुधाकृता तु याज्ञिकप्रसिद्ध्यैव उद्भिदादिशब्दानां नामधेयत्वं सिद्धं, 'स एष यज्ञः पञ्चविधः—अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इत्यादिलिङ्गदर्शनैश्च। अतः तदविचारितसिद्धमेवाङ्गीकृत्य नामधेयत्वस्य धर्मप्रामाण्यप्रकारता अस्ति नवेति प्रथमाधिकरणे विचार्य उत्तरेषु चतुर्ष्वधिकरणेषु लौकिकप्रसिद्ध्या गुणविधित्वेनैव धर्मप्रमोपयोगित्वसिद्धेः नामधेयत्वानुपपत्तिमाशङ्क्य याज्ञिकप्रसिद्धिसिद्धं नामधेयत्वं दृढीक्रियते इत्युक्तम् तत् पुनः नामधेयत्वस्य याज्ञिकप्रसिद्धिगम्यत्वे लौकिकप्रसिद्ध्यपेक्षया यववराहाधिकरणन्यायेन शास्त्रस्थयाज्ञिकप्रसिद्धेः बलवत्त्वावगमेन उद्भिदधिकरणे गुणविधित्वशङ्कानुपपत्तेरयुक्तम्।

किञ्चैवं आकृत्यधिकरणवदेव याज्ञिकप्रयोगरूपाचारप्रामाण्याक्षेपसमाधानार्थत्वेन गुणविधिनामधेयविचारोपपत्तेः यथाभाष्यमेवाधिकरणं सङ्गतं स्यात्। आग्नेयादिपदानां च याज्ञिकप्रसिद्ध्यभावेन नामधेयत्वशङ्कानुपपत्तेः तदधिकरणे नामधेयत्वोद्भावनानुपपत्तिः। अथ याज्ञिकप्रसिद्ध्यविषयत्वेऽपि आग्नेयादिपदानां कल्पितयागसामानाधिकरण्यादिनैव नामधेयत्वमाशङ्क्येत तत उद्भिदादिपदानामपि तेनैव नामधेयत्वोपपत्तेः याज्ञिकप्रसिद्धेरपि तन्मूलत्वमेव वक्तुं शक्यम्।

किञ्च नामधेयत्वस्य (१)प्रामाण्यप्रकारो गुणफलोपबन्धादिरूपः नैव वार्त्तिककृता आद्येऽधिकरण उक्तः प्रत्युत द्वितीयाधिकरण एवेति न किञ्चिदेतत् । अतः पूर्वोक्तप्रकारेणैव अधिकरणद्वयविषयो वर्णनीयः ।

तत्र च नामधेयादिरूपधर्मप्रमाणनिरूपणात् अध्यायसङ्गतिस्तावत् सुलभैव । पादसङ्गतिस्तु पदप्रामाण्यनिरूपणस्य पादार्थत्वादत्र-गन्तव्या । पूर्वत्र चरणत्रये विध्यादिवाक्यप्रामाण्यमेव निरूपितम्, न तु पदप्रामाण्यम् । अत्र तु उद्भिदादिपदानामेव प्रामाण्यनिरूपणात् (२)वाक्यशेषाधिकरणेऽपि च घृतपदस्यैव निर्णायकत्वेन प्रामाण्या-भिधानाच्च (३)सामर्थ्याधिकरणे च सामर्थ्यकल्पितद्रवादिपदस्यैव स्वार्थोपस्थापनद्वारा निर्णायकत्वोपपत्तेः युक्ता पदप्रामाण्यनिरूपण-स्य पादार्थता । अनन्तरसङ्गतिस्तु पूर्वाधिकरणे अवघातादिक्रियान्व-यस्य जातिव्यक्त्योरर्थतासम्भवासम्भवे उपपादिते । उद्भिदादिशब्दा-र्थस्य क्रियान्वयः नोभयथापि सम्भवतीत्याक्षेपात् द्रष्टव्या ।

तत्र अध्ययनविधिवशेनोद्भिदादिपदानां प्रयोजनवत्त्वावगमेऽपि प्रयोजनविशेषानवधारणात् न तावत् पर्यवसानम् । तथा हि—

न तावदेतेषां विध्यन्तर्भावः । स हि न तावत् फलप्रतिपादकत्वेन ; कामशब्दयोगाभावेन तृतीयान्तत्वेन च फलप्रतिपादकत्वानुपपत्तेः । नापि करणप्रतिपादकत्वेन । भावनायां समानपदवर्त्तिनः धातोरेव करणप्रतिपादकत्वेन उद्भिच्छब्दार्थस्य यागस्य खनित्रस्य वा करण-त्वानुपपत्त्या उद्भिच्छब्दस्य तत्प्रतिपादकत्वानुपपत्तेः । न च इतिकर्त-व्यताप्रतिपादकत्वेन । इतिकर्तव्यता हि किमुद्भिच्छब्दार्थः यागो वा स्यात् ? खनित्रं वा ? । नाद्यः ; यागस्य करणत्वेन स्वस्यैव स्वोप-कारकत्वायोगात् । नान्त्यः ; खनित्रादेरुद्भिच्छब्दवाच्यत्वेनाप्रसि-द्धेः । यथाकथञ्चित् प्रसिद्ध्यङ्गीकारेऽपि भावनायां इतिकर्तव्यता

१ गुणफलोपसम्बन्धादि. २ पू. मी. १-४-१९. ३. पू. मी. १-४-२०.

त्वेनान्वयानुपपत्तेः । तथा हि—

यस्य मते तावद्व्यापारत्वमेवान्योत्पादकत्वमिति भावनात्वं तदा तस्य व्यापारसामान्यस्य विशेषापेक्षैव इतिकर्तव्यताकाङ्क्षा । तस्यां चाकाङ्क्षायां व्यापारविशेष एव प्रयाजादिरूपः अन्वेतुं योग्यः । नत्वव्यापाररूपं द्रव्यगुणादि ।

वस्तुतस्तु फलोद्देश्यको धात्वर्थानुकूलो यत्न एव भावनेति यद्यपि भावार्थाधिकरणे वक्ष्यते, तथापि धात्वर्थस्य भावनाफलकरणत्वेन भावनाकरणत्वात् करणस्य च सहकारिकारणेनाननुगृहीतस्य करणत्वायोगात् सहकारिकारणरूपेतिकर्तव्यतापेक्षायां निर्व्यापारस्य द्रव्यगुणादेः करणत्वायोगात् व्यापाररूपं प्रयाजाद्येवेतिकर्तव्यतात्वेनान्वेति, न तु व्यापारान्तरानाविष्टं स्वयमव्यापाररूपं द्रव्यगुणादि ।

यदि तु तस्य व्यापारसम्बन्धसिद्ध्यर्थं प्रथमतो भावनासम्बन्धं परित्यज्य धात्वर्थसम्बन्ध एव स्वीक्रियते ततो यदि तावत्करणादिकारकत्वेन धात्वर्थसम्बन्धः ततः धात्वर्थस्यापि (१)वाजपेयाद्यधिकरणन्यायेन कारकत्वात् कारकस्य च करोतेर्धातोर्ण्वुल्प्रत्यये कृते व्युत्पन्नत्वात् भावनारूपक्रियासम्बन्धित्वं विना कारकत्वायोगात् न कारकाणामन्योन्यसम्बन्धसिद्धिः ।

अथ तु कारकत्वमुज्झिच्छब्दार्थस्य परित्यज्य मत्वर्थलक्षणायां सम्बन्धसामान्येन धात्वर्थसम्बन्ध उच्यते ततः अकारकत्वेन भावनासम्बन्धाभावेन अविवक्षापत्तिः । परम्परासम्बन्धेन भावनासम्बन्धाङ्गीकारे तु पशुना यजेतेत्यत्रापि एकत्वस्य पदश्रुत्या पशुसम्बन्धाङ्गीकारेऽपि एकत्वविशिष्टपशोरेव करणत्वेन भावनासम्बन्धात् परम्परया एकत्वस्यापि भावनासम्बन्धोपपत्तेः विवक्षापत्तिः । तत्र यच्चतुर्थे पूर्वपक्षे पशुसम्बन्धाङ्गीकारेण एकत्वाविवक्षाभिधानं सिद्धान्ते च समानाभिधा-

१ पू. मी. १-४-६.

नश्रुत्या कारकान्वयमङ्गीकृत्य विवक्षाभिधानं तदनुपपन्नमेव स्यात् । युक्तं चैतत्—यथा एकत्वविशिष्टस्य ग्रहस्य उद्देश्यत्वेन विधेयत्वेन वा भावनाकारकत्वाभावात् अविवक्षा, तथैव एकत्वविशिष्टस्य पशोः द्रव्यादिविशिष्टस्य वा यागस्य विधेयत्वेऽपि विशेषणीभूतैकत्वद्रव्यादेः भावनाकारकत्वाभावात् अविवक्षेति । तस्मात् इतिकर्तव्यतात्वेनापि भावनासम्बन्धायोगात् चतुर्थप्रकारस्य च भावनानपेक्षितत्वात् अपेक्षितत्वे वा भावनायाः त्र्यंशित्वसिद्धान्तभङ्गापत्तेः प्रकारान्तरस्य निरूपयितुमशक्यत्वाच्च न भावनासम्बन्धिप्रतिपादकत्वेनोद्भिदादिशब्दानां प्रामाण्यम् ।

नाप्यर्थभावनाप्रतिपादकत्वेन; तस्यास्तिङ्व्यतिरिक्तशब्दानाभिधेयत्वस्य द्वितीये वक्ष्यमाणत्वात् । एवं विधेरपि लिङादिव्यतिरिक्तशब्दाप्रतिपाद्यत्वात् तत्प्रतिपादकत्वेनापि प्रामाण्यं निराकर्तव्यम् ।

नाप्यर्थवादान्तर्भावः । उत्पूर्वेण भिदा फलोद्भेदनलक्षणस्य गुणस्य क्विपा च गुणिनः यागादेरुपादानेन गुणगुणिसम्बन्धात्मिकायाः स्तुतेः सहस्राक्षपद इव उद्भित्पदादुत्पत्तावपि सहस्राक्षादिपदे इन्द्र इव गुणिविशेषस्याप्रतीतेः । खनित्रादेश्च अविहितत्वेन स्तुत्यनर्हत्वात् । यजिसामानाधिकरण्येन नामत्वं परिकल्प्य तत्स्तुत्यङ्गीकारेऽपि च फलोद्भेदनकर्ताऽयं इत्येवं प्रातिपदिकार्थप्राधान्यं विना स्तुत्यप्रतीतेः । प्रातिपदिकार्थप्राधान्ये तृतीयानुपपत्तेः स्तावकत्वासम्भवात् ।

नापि मन्त्रान्तर्भावेन मन्त्रत्वम् । तद्धि मुख्यं वा स्यात् ? गौणं वा ? । न तावदाद्यम् । मन्त्र इत्येवंविधाध्येतृप्रसिद्धिविषयस्य मुख्यस्य मन्त्रलक्षणस्य अत्यन्तत्वान्तत्वरूपस्य वा अव्यापकलक्षणस्याभावेन मुख्यमन्त्रत्वानुपपत्तेः ।

नाप्यूहप्रवरनामधेयानामिव मुख्यमन्त्रत्वाभावेऽपि अनुष्ठेयार्थस्मारकत्वेन मन्त्रकार्यकारित्वात् गौणमन्त्रत्वोपपत्तिः । अनुष्ठेयार्थ-

स्मारकत्वं हि ब्राह्मणवाक्यैकवाक्यतया वा स्यात् ? ततः पृथग्भूततया वा ? । नाद्यः ; 'यजेत पशुकाम' इत्यादेः ब्राह्मणवाक्यस्य विधायकत्वेन कर्मकाले अप्रयोजकत्वात् एकवाक्यतापन्नस्यास्य स्मारकत्वानुपपत्तेः । नान्त्यः ; पृथग्भूतत्वे एतदभिधेयस्य खनित्रादेः कर्मण्यविधानादेव प्रकाशनानर्हत्वात्, धातुसामानाधिकरण्याभावेन च तद्गम्यस्य नामधेयत्वस्यैवासिद्धेः कर्मप्रकाशनस्य कर्तुमशक्यत्वाच्च ।

न च उपांशुयाजवदेव सन्निधानावगतयागाङ्गत्वानिर्वाहाय मान्त्रवर्णिकद्रव्यविधिकल्पनया स्मारकत्वोपपत्तिः । द्रव्यस्य पूर्वोक्तविधया भावनायां यागे वा अन्वयासम्भवेन द्रव्यविधिकल्पनाया एवानुपपत्तेः ।

न च यागानुवादेन कल्प्यविधौ द्रव्यस्य विधानात् तत्र च यागकर्मकभावनायां द्रव्यस्य करणाकाङ्क्षयैवान्वयोपपत्तिरिति वाच्यम् । यागकरणकभावनापेक्षया यागकर्मकभावनाया भेदाभावेन तस्याः करणत्वाकाङ्क्षायां समानपदोपात्तेन यागेनैव अवरोधात् द्रव्यान्वयानुपपत्तेः । या तु यागजनकापेक्षा सा अर्थाक्षिप्तेन द्रव्येन निवर्तते इति तद्बलेन भावनाया आकाङ्क्षान्तरकल्पनमन्याय्यमेव । अतो न मन्त्रान्तर्भावः ।

चतुर्थप्रकारस्तु निर्वचनासम्भवादेवानाशङ्कनीयः । अतो द्वारविशेषाभावादप्रमाणमुद्भिदादिशब्दाः । नचैवं प्रसाधिताध्ययनविधिदृष्टार्थत्वभङ्गः । तस्य पारायणाद्युपयोगिप्रयोगप्राशुभावरूपदृष्टजनकत्वेनापि दृष्टार्थत्वोपपत्तेः अर्थवादेष्वपि च सम्भवत्यपि पारायणाद्युपयोगित्वेन दृष्टार्थत्वे सम्भवतो निष्प्रयोजनत्वेन प्रमाणाभावेन फलमुखगौणत्वाद्यङ्गीकरणमपि नायुक्तम् । प्रकृते तु कथमप्यर्थपरत्वासम्भवादध्ययनविधेश्च पारायणाद्युपयोगित्वेन दृष्टार्थत्वोपपत्तेः आम्नायस्य क्रियार्थत्वादिति पूर्वोक्तरीत्या अप्रामाण्यमेवेति—**पूर्वपक्षः** ।

सिद्धान्तस्तु—समाम्नायस्य वेदस्य ऐदमर्थ्यकारणमुक्तमध्ययनविधिसामर्थ्यलक्षणम् । तस्मात्सर्वं उद्भिदाद्यपि यत्पूर्वमनुक्तोपयोगं तत्तदर्थप्रकारविशेषोन्नयनेन प्रयोजनवदर्थपरमेव स्यात् । उन्नयनप्रकारश्चायम्—सत्यमर्थवादमन्त्रान्तर्गतिः न सम्भवति, न वा प्रकारान्तरमपि सम्भवन्निर्वचनम् । तथापि विध्यन्तर्गतिस्तावत् प्रत्यक्षसिद्धैव । तत्रापि फलादिप्रतिपादकत्वं यद्यपि न सम्भवति तथापि गुणविधित्वनामधेयत्वान्यतरप्रकारो दुरपह्नवः । तथा हि—

यद्यपि कारकाणां प्रथमत एव भावनान्वयं विना यागान्वये उच्यमाने अविवक्षा प्रसज्येत तथापि भावनायामेव प्रथमतः सर्वाणि कारकाणि फलयागादिकारकवदेव सम्बध्यन्ते । भवति हि 'यागेन स्वर्गं कुर्या'दित्युक्ते भावनायाः कः कस्मिन्नित्यपेक्षा, अत एव कारकाणां तत्र तत्र अधिकरणादौ श्रौतो विनियोगोऽप्युच्यमानः सङ्गच्छते । अन्यथा प्रथमत एव मत्वर्थलक्षणया यागसम्बन्धे कथ्यमाने वाक्यविनियोगापत्तेः श्रौतत्वानुपपत्तिः । अत एव सप्तमे आघाराग्निहोत्राधिकरणादौ च सोमादीनामपि साक्षाद्भावनान्वयः, पश्चादरुणैकहायनीवत् धात्वर्थसम्बन्ध इत्युक्तम् । वाजपेयाधिकरणादौ च सकलकारकान्वयसहत्वं भावनाया उपपादितम् ।

न च भावनायां कारकान्तरस्य अधिकरणादेः अन्वयेऽपि समानपदोपात्तधात्वर्थस्य करणत्वेनान्वयात् तदवरुद्धायां कथं करणत्वेनान्वयोपपत्तिः । व्यापरभेदेन एकस्यामपि द्वयोः करणयोरन्वये बाधकाभावात् । अत एव पशुनेत्यत्र समानाभिधानश्रुत्या एकत्वे करणत्वं प्रत्यान्वितेऽपि दुर्बलपदश्रुत्युपात्तं पशुत्वमपि व्यापारभेदादन्वीयत एव । अतश्च यागस्य फलनिष्पादनद्वारा भावनाकरणत्वेऽपि सोमादेः करणान्तरस्य समादेर्वा अधिकरणादिकारकान्तरस्य यागनिष्पादनद्वारा भावनासम्बन्धे नानुपपत्तिः । एवं च यथैव यागस्य फलसम्बन्धः पाष्ठिकान्वयलभ्योऽपि प्रथमावगतभावना-

सम्बन्धानिर्वाहाय कल्प्यमानः अरुणैकहायनीवत् न विरुध्यते तथैव सोमादेः प्राप्तिकान्वयलभ्ययागसम्बन्धः प्रथमावगतभावनासम्बन्धानिर्वाहार्थमेव कल्प्यत इति सिध्यति । औत्तरकालिकं यागसंम्बन्धमादाय भावनासम्बन्धः प्राथमिक इति नाविवक्षाप्रसङ्गः ।

यत्तु भावनायां सिद्धरूपस्य सोमादेः सम्बन्धे अंशत्रयबहिर्भूतत्वात् भावनात्र्यंशित्वसिद्धान्तभङ्गापत्तिरित्युक्तम्, तत् प्रथमतो भावनान्वयवेलायामितिकर्तव्यतात्वानवगमेऽपि प्राप्तिकान्वयलभ्यव्यापारावेशप्रतीत्युत्तरकालं इतिकर्तव्यतात्वबोधोपपत्तेः त्र्यंशित्वाविघातादकिञ्चित्करम् । अतश्च उद्भिदादिपदानां गुणविधित्वे तावत् भावनासम्बन्धः सिद्ध एव । नामधेयत्वे भावनासम्बन्धस्तु उद्भिदधिकरणे उपपादयिष्यते । अतश्च गुणविधिनामधेयत्वान्यतरद्वारविशेषसम्भवात् प्रामाण्यं तावदुद्भिदादिशब्दानां निर्विवादमिति सिद्धम् ॥

इति नामधेयप्रामाण्याधिकरणम् ॥

## (२) उद्भिदधिकरणम् ॥

### सू०—अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात् ॥ १–४–२. ॥ (सि०)

अतः क्व गुणविधित्वं क्व नामधेयत्वमिति कोष्ठशोधनिकार्थं विचार आरभ्यते । तत्रास्मिन्नधिकरणे गुणे कर्मणि च येऽन्वययोगेनैव सम्भवद्वृत्तयः अथ च तत्प्रख्यशास्त्रान्तररहिताः, यथा—"उद्भिदा यजेत" इत्यादौ उद्भिदादयः शब्दाः, तानुदाहृत्य गुणविधयः कर्मनामधेयमिति विचारः । अत्र च गुणशब्दः अङ्गापरपर्यायः । पादाध्यायसङ्गती स्पष्टे । अनिर्धारिते द्वारविशेषे उक्ते तन्निर्धारणार्थं द्वारविशेषविचारे कर्तव्ये निरूढेषु चित्रादिशब्देषु लोकप्रसिद्धिबाधेन

नामधेयत्वस्य दुरुपपादत्वात् सुखोपपाद्यनामधेयत्वस्य यौगिकपदस्य सूचीकटाहन्यायेन बुद्धिस्थत्वात् प्रसङ्गसङ्गतिरूपा ।

तत्र यद्यपि व्रीह्यादिवत् समुदायरूपेण ते कचिदपि न निरूढाः तथापि "भिदिर् विदारणे" इति स्मृत्या उत्पूर्वकिबन्तस्य भिदेस्तावत् ऊर्ध्वविदारणसमर्थद्रव्यवाचित्वावगमात् अवयवप्रसिद्धिबलेन ऊर्ध्वविदारणसमर्थखनित्रादि उद्भिच्छब्देनावगम्यते, न तु कर्म । तस्य ऊर्ध्वविदारकत्वासम्भवात् । न च तस्य ऊर्ध्वविदारकत्वासम्भवेऽपि फलोद्भेदनसमर्थत्वेनावयवप्रसिद्ध्युपपत्तिः, उद्भेदने भिदेर्लोकव्याकरणयोः अप्रयोगेनावयवप्रसिद्धेरसम्भवात् ।

किञ्चैवं सर्वकर्मणामपि एवंविधफलोद्भेदकत्वदर्शनात् उद्भिच्छब्दवाच्यत्वापत्तिः । अथ तत्रातिप्रसङ्गनिवृत्त्यर्थं पङ्कजशब्दवत् कर्मविशेषे रूढिरपि कल्प्यते, ततः क्लृप्तयावयवशक्त्यैवार्थप्रतीत्युपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावः ।

किञ्च तृतीयया उद्भिच्छब्दार्थस्य करणत्वावगमात् तद्द्रव्यस्य च व्यापारसापेक्षस्यापि स्वयं सिद्धरूपत्वेन झटित्येव करणत्वबोधोपपत्तेः कर्मणस्तु विधिसामर्थ्येन करणत्वावगमेऽपि स्वयमसिद्धत्वेन अर्थाक्षिप्तकर्मत्वावगमं विना झटिति करणत्वपर्यवसानाभावात् तृतीयानुरोधेनाप्युद्भिच्छब्दस्य द्रव्यवाचित्वनियमः । अतश्च सत्यपि यजिसामानाधिकरण्ये घटः पटः इतिवत् न नामधेयत्वसम्भवः ।

किञ्च नामधेयत्वे वैयर्थ्यमपि । तथा हि—न तावद्यागविशेषावधारणं तस्य फलम्, तस्य विधिबलादेव सिद्धेः । न च नाम्नापि विशेषावधारणम् । नामधेयं हि धातुवाच्यायाः यागत्वजातेः स्यात् ? तदवच्छिन्नव्यक्तिसामान्यस्य वा ? तल्लक्षितव्यक्तिविशेषस्य वा ? आद्ये पक्षद्वये विशेषावधारणासिद्धिः । अन्त्ये नामधेयवैयर्थ्यम् । गुणविधिपक्षे तु यागभावनापेक्षितद्रव्यसमर्पकत्वादर्थवत्त्वमिति

विशेषः ।

किञ्चैवं द्रव्यविशिष्टक्रियाविशेषप्रवृत्त्यनुकूलव्यापाराभिधायकस्य लिङादेः द्रव्यविशिष्टक्रियानुष्ठानेन च पुरुषस्य प्रवृत्तौ विशेषकरत्वं सम्भवति । तस्मात् प्रसिद्ध्यादिभिः विधेयगुणसमर्पक एव उद्भिच्छब्दः ।

नचैवं गुणविशिष्टयागविधाने कारकाणां स्वरूपेण वैशिष्ट्यायोगात् उद्भिद्वता यागेनेति मत्वर्थलक्षणापत्तिः । पूर्वोक्तरीत्या पार्ष्ठिकान्वयलभ्ययागसम्बन्धमुररीकृत्य सकलकारकविशिष्टभावनाविधानाङ्गीकारेण मत्वर्थलक्षणानापत्तेः । न च पार्ष्ठिकान्वयवेलायामेव अश्रुतमत्वर्थाध्याहारकल्पनापत्तिः । तस्यामवस्थायां श्रुतेन करणत्वेनैव गुणस्य यागं प्रत्यन्वयोपपत्तेः । न हि तदानीं यागस्य करणत्वमस्ति, अर्थाक्षेपेण कर्मत्वावगमात् । अतश्च यथैवारुण्यस्य पार्ष्ठिकैकहायनीसम्बन्धे न मत्वर्थलक्षणा तथैव खनित्रस्यापि पार्ष्ठिके यागसम्बन्धेऽपीति न किञ्चिदनुपपन्नम् ।

अस्तु वा विशिष्टविधौ मत्वर्थलक्षणा । तथाप्यत्र यागानुवादेन गुणविधानादेव तदभावः । तथा हि—प्रापकविधौ यद्यपि करणत्वस्याप्यवगमात् तदनुवादेनात्र गुणविधाने पुनर्मत्वर्थलक्षणादोषतादवस्थ्यम्, तथापि अप्राप्तितस्य करणत्वानुपपत्तेः अर्थाक्षिप्तसाध्यस्याप्यवगमेन तदनुवादेनात्र गुणविधानात् दध्ना जुहोतीत्यादिवत् न मत्वर्थलक्षणाप्रसङ्गः । न च प्रापकविधावपि उपपदस्यावश्यकत्वात्तस्यापि गुणविधित्वेन मत्वर्थलक्षणादोषतादवस्थ्यम् । यत्रोपपदस्य गुणे निरूढत्वं कर्मणि च योगेनाप्यसम्भवद्वृत्तिता तादृशस्थल एव प्रापकविधित्वाङ्गीकारात् । अत्र हि शक्त्यन्तरकल्पनापादकनामधेयत्वापेक्षया मत्वर्थलक्षणामात्राङ्गीकरणं गुण एव । यत्र हि गुणे कर्मणि वा प्रसिद्धितौल्यं तत्र हि सामानाधिकरण्येन

नामधेयत्वोपपत्तौ गुणविशिष्टयागविध्यङ्गीकारे मत्वर्थलक्षणादोषः। अतश्च सोमेन यजेतेत्यत्र सोमपदस्य रूढत्वेन नामत्वानुपपत्तेः सोमविशिष्टयागविधानस्यावश्यकत्वात् तदनुवादेन खनित्रादिरूप-गुणविधिः । न च उत्पत्तिशिष्टसोमावरोधे उत्पन्नशिष्टखनित्रनिवे-शानुपपत्तिः, विशिष्टकर्मोत्पत्तावपि आर्थिकविशेषणविधिवत् आर्थिकविशेष्यविधेरप्यङ्गीकारात् । तदनङ्गीकारेऽपि च 'उद्भिदा यजेते'त्यत्र कर्मस्वरूपमात्रं यजिना निष्कृष्य तस्य च वस्तुगत्या नैराकाङ्क्ष्येऽपि आभिधानिकीमाकाङ्क्षामुत्थाप्य विहितस्य गुणस्य उत्पत्तिशिष्टादविशेषेण विकल्पापादकत्वोपपत्तेः ।

अथ वा पशुकामपदवैयर्थ्यापत्तेः पशुकामपदेन पशुफलसाधनीभूतप्रकृतसोमयागलक्षणया (१)"व्रीहिभिः वृष्टिकामाय निर्वपं कुर्यात्" इत्यादौ वृष्टिकामपदेन वृष्टिसाधनसोमरलक्षणया तदुद्देशेन व्रीह्यादिनियमविधिवत् खनित्रविधानात् तस्य च विशेषविषयत्वेन सामान्यविहितसोमबाधकत्वोपपत्तिः । अस्ति हि ज्योतिष्टोमस्यापि पशुफलसाधनत्वं 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोम' इति वचनात् । अतश्च 'उद्भिदा यजेते'त्ययं यजिरपि साधुत्वार्थमनूद्यते । इन्द्रियकामवाक्य इव जुहोतिः ।

अथ वा 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्ययं कर्मप्रापको विधिः। अत्र हि स्वर्गसम्बन्धस्य सार्वकाम्यवाक्यादेव प्राप्तत्वात् ज्योतिष्टोमशब्दस्य अगत्या नामधेयत्वाङ्गीकारात् कर्ममात्रं विधीयते । अतश्च तदनुवादेन अत्र खनित्रविधानात् 'सोमेन यजेते'त्यनेन च सोमस्यापि विधानात् उभयोरुत्पत्तिशिष्टत्वात् विकल्पोपपत्तिः।

न चोद्भिज्ज्योतिष्टोमपदयोः यौगिकत्वाविशेषे अर्थवत्त्वादिवशेन उभयोर्गुणविधित्वप्रसक्तौ एकस्य अगतिकनामधेयत्वाङ्गीकरणे विनिगमनाविरहः । कर्मविधि(२)परिचायकस्य द्रव्यदेवताद्यङ्गवि-

१ ता. ब्रा. ८-८-१९.  २ बोधकस्य ।

धिबाहुल्यसन्निधानस्य ज्योतिष्टोमवाक्ये विनिगमकस्य सत्त्वात्। अतः सिद्धं यागानुवादेन गुणविधिरिति।

अथ वा अस्तु पश्वाख्यफलसाधनतयैव खनित्ररूपगुणविधिः। न चाश्रयाभावः। प्रकृतसोमयागस्यैवाश्रयत्वोपपत्तेः।

यत्त्वत्र भवदेवेन प्रकरणमेव नास्तीत्युक्तं, तद (१)ताण्ड्यके ज्योतिष्टोमानन्तरमेव आम्नानस्य न्यायसुधाकृतैवोक्तत्वात् उपेक्षणीयम्। अस्मिंश्च पक्षे काम्यत्वात् नित्यसोमबाधकत्वं सुलभमेव। तस्मात् गुणविधिरिति प्राप्ते—

अभिधीयते—नायं गुणविधिः। तथा हि सर्वत्रैव तावत् यद्यपि विधिः भावनामेव विधत्ते, तथापि तस्याः निरंशाया अनुष्ठातुम-

---

१ अत्रेदं वक्तव्यम्—ताण्ड्यके प्रथमाध्याये उद्गातृपाठ्यानां मन्त्राणामाम्नानम्। द्वितीयतृतीययोरध्याययोः बहुधा स्तोमभागानां कथनम्। चतुर्थपञ्चमयोः गवामयनिकविधिः। षष्ठे सर्वप्रकृतिभूतस्याग्निष्टोमस्य विधिः। सप्तमे बहिष्पवमानादीनां स्तोत्राणां प्रकारभेदकथनम्। अष्टमे आभिचारिकब्रह्मसामकथनम्। नवमे अतिरात्रादीनां विधानम्। दशमादिषु पञ्चदशान्तेषु अध्यायेषु व्यूढद्वादशाहस्य विधानम्। तदन्तर्गतानां दशानामह्नां स्तोमक्लृप्तिप्रतिपादनञ्च। षोडशे त्रिकद्रुकादीनां एकाहानां विधानम्। तत्प्रसङ्गात् सर्वप्रकृतिभूतस्य ज्योतिष्टोमस्य स्तुतिः। तत्सम्बन्धिदक्षिणादिविधानञ्च। ततः ज्योतिरादीनामेकाहानां विधानम्। ततः साद्यस्क्राणाम। सप्तदशे व्रात्ययज्ञादीनां विधानम्। अष्टादशे उपहव्यर्तपेयवाजपेयराजसूयादीनां विधिः। एकोनविंशे छन्द्वाः क्रतवः उद्भिद्बलभिदादयः विहिताः। एवञ्च अग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य षष्ठेऽध्याये पठितत्वेन तदनन्तरपठितैः द्वादशाहादिभिः प्रकरणस्य विच्छेदात्, षोडशे स्तुत्यर्थं दाक्षिणाविधानार्थं च पुनरुपादानेऽपि तदुत्तरपठितैः एकाहादिभिः राजसूयादिभिश्च पुनः प्रकरणस्य विच्छिन्नत्वात् उद्भिदादिविषये प्रकरणानुवृत्तिशङ्कैव नास्तीति यदुक्तं भवदेवेन—अत्र प्रकरणमेव नास्तीति—तदेव युक्ततरं प्रतीमः। न्यायसुधाकृतां तु ज्योतिष्टोमसमनन्तरपठितत्वमुद्भिदादीनामभिप्रयतां तदेव मतमनुसरतां कौस्तुभकाराणां मयूखमालिकाकृतां, चाशयं न विद्मः॥

शकयत्वेन विधानायोगात् धात्वर्थादिकमपि तद्विशेषणतया विधिना विधीयते । तत्रायं क्रमः—

शुद्धधात्वर्थकरणकभावनाविधिराद्यः । यथा—अग्निहोत्रं जुहोतीति । अत्र हि यद्यपि इष्टसामान्यं भावनाभाव्यत्वेनान्वेत्येव तथापि तस्मिन् विधिव्यापाराभावात् शुद्धत्वोपपत्तिः ।

अन्योद्देशेन धात्वर्थकरणकभावनाविधिः द्वितीयः । यथा—अग्निहोत्रं जुहुयात् स्वर्गकामः, 'व्रीहीन् प्रोक्षति' इति च । एतस्य च पूर्वापेक्षया पदान्तरोपस्थितिसापेक्षत्वेन विप्रकर्षाद्दौर्बल्यम् । पदान्तरसापेक्षत्वेऽपि तत्रातात्पर्यान्न गौरवम् । इष्टसामान्यस्य तु विधिपदोदत्तोपस्थितेः पदान्तरानपेक्षत्वम् ।

धात्वर्थान्यकरणकभावनाविधिस्तृतीयः । यथा—दध्ना जुहोतीत्यत्र अग्निहोत्रहोमानुवादेन दधिविधानात् । अत्र च पदान्तरसापेक्षत्वाविशेषेऽपि विधिव्यापारस्य कर्त्तव्यताविषयकाज्ञातज्ञापनरूपस्य धात्वर्थनिष्ठत्वाभावात् पूर्वापेक्षयापि दौर्बल्यम् । पूर्वत्र हि धात्वर्थस्वरूपस्य उत्पत्तिवाक्येन प्राप्तत्वेऽपि कर्त्तव्यतया अधिकारवाक्य एव विधिः । प्रकृते तु धात्वर्थस्य स्वविधानार्थं अनुच्चारणात् पारार्थ्यापत्तेः विप्रकृष्टपदान्तरार्थविधानाच्च दौर्बल्यमिति विशेषः ।

धात्वर्थं साधुत्वार्थमनूद्यापि अन्योद्देशेनान्यकरणकभावनाविधिश्चतुर्थः । यथा—'दध्नेन्द्रियकामस्य जुहुया' दिति । अत्र धात्वर्थस्य उद्देश्यत्वेनाप्यसम्बन्धात् पूर्वापेक्षया दौर्बल्यम् ।

गुणविशिष्टधात्वर्थकरणकभावनाविधानं पञ्चमः । यथा—सोमेन यजेतेति । अत्रापि च विधेः श्रुत्यर्थाभ्यामुभयत्र व्यापारकल्पनात् सन्निकृष्टार्थविध्यसम्भवकृतत्वाच्च विप्रकृष्टार्थविधेः एकत्रैव युगपत् सम्भवासम्भवविरोधापत्तेः पूर्वापेक्षया दौर्बल्यम् ।

अन्यत्र गुणविशिष्टधात्वर्थकरणकभावनाविधिः षष्ठः । यथा—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति । अत्रापि पदान्तरोपस्थि-

तिसापेक्षत्वेन पूर्वापेक्षया दौर्बल्यं द्रष्टव्यम् ।

तदेवं षट्सु विधिप्रकारेषु (१)'उद्भिदा यजेते'त्यत्र यदि तावत् गुणविशिष्टस्य धात्वर्थस्य फलोद्देशेन विधानं ततः षष्ठविधिप्रकाराङ्गीकरणात् अत्यन्तजघन्यपक्षाश्रयणं तावदेको दोषः । कर्मान्तरत्वापादकप्रमाणाभाव एव च कर्मान्तरत्वकल्पनमपरः । तथा हि—न तावदभ्यासः प्रमाणम् । विधेः फलसम्बन्धादिपरत्वेन अनन्यपरविधिपुनःश्रवणाभावात् । नापि गुणः पूर्वकर्मण्यसम्भवन्निवेशः समस्ति । 'दध्नेन्द्रियकामस्य जुहुया'दित्यादिवत् पूर्वकर्माश्रितस्यैव खनित्रादिरूपगुणस्य फलोद्देशेन विध्यङ्गीकारात् पूर्वकर्मण्येव निवेशोपपत्तेः । नापि संज्ञा; तस्यास्त्वयाऽनङ्गीकारात् । अतः प्रमाणाभावादपि न गुणविशिष्टकर्मान्तरविधिसम्भवः ।

किञ्च विशिष्टविधिपक्षे मत्वर्थलक्षणापि प्रसज्येत । यद्यपि तावत् सर्वेषां कारकाणां प्रथमतो भावनयैव सम्बन्धः प्रतीयते तथापि निर्विषयकृतिसम्बन्धायोगात् यथैव सोमादीनां व्यापारापेक्षोपजायते, तथैव फलकर्मत्वस्य यागकरणत्वस्य च निरूपकापेक्षा(२)प्युपजायत एव । तस्यां च अपेक्षायां फलनिरूपितकरणत्वं यागस्यैव प्रतीयते न तु यागवदेव प्रथमावगतभावनासम्बन्धानामपि सोमादीनाम् । समानपदश्रुत्युपनीतस्य यागस्यैव भावनया(३) शीघ्रं फले प्रत्युपनयात् । ततश्च पार्ष्ठिके यागफलयोः सम्बन्धे प्रतीयमाने तस्यामवस्थायां यागस्य करणत्वेन प्रतीयमानस्य कर्मत्वेनाप्रतीयमानत्वात् न तस्मिन् श्रुतस्य खनित्रादेः कारकान्तरस्य वा करणत्वादिनैव निवेशः सम्भवतीति अवश्यं भिन्नार्थयोः सामानाधिकरण्यानुपपत्त्या सम्बन्धसामान्येनान्वयार्थमश्रुतमत्वर्थकल्पनया भवितव्यम् । पश्चात्साधितस्य यागस्य फलकरणत्वानुपपत्त्या कर्मत्वबोधे सति खनित्रादिकारकान्तरस्य भावनासम्बन्धवेलायां श्रुतेन करणत्वादिनैव

१ ता. ब्रा. १९-७-२. २ आकाङ्क्षा ३ भावनायां

विशेषणविधिकाले ऽन्वयो भवति ।

न चैवं विशिष्टविधिवेलायां खनित्रादेरन्वयानङ्गीकारात् न मत्वर्थलक्षणापत्तिः । तथात्वे खनित्रादेः सामान्यतो यागसम्बन्धानवगमेन आनर्थक्यप्रतिहतन्यायेन श्रुतभावनासम्बन्धनिर्वाहार्थं यागवदेव फलसम्बन्धकल्पनापत्तेः अवश्यं विशिष्टविधिकालेऽपि आनर्थक्यनिराकरणार्थं मत्वर्थलक्षणया यागसम्बन्धोऽप्यङ्गीकर्तव्यः ।

तत्र त्वयं प्रकारः—सोमेनेत्यादौ सोमवता यागेनेति विशिष्टविधिवाक्यकल्पनम्, न तु सोमकरणकयागेनेति । तथात्वे सामानाधिकरण्यार्थं करणत्वान्तरस्यापि कल्पनापत्तेः । नचैवं प्रातिपदिकार्थलक्षणायां सोमस्य वाक्यविनियोगापत्तिः, पूर्वं भावनासम्बन्धस्य श्रौतत्वात् । यैर्हि भावनासम्बन्धवेलायामेव तन्निर्वाहार्थं मत्वर्थलक्षणया यागसम्बन्धोऽभ्युपगम्यते तेषामयं दोष आपद्येत । येषां तु सर्वकारकाणां पूर्वमन्योन्यसम्बन्धानादरेण श्रुत्यैव भावनान्वयः, पश्चाच्च फलयागयोः पार्ष्ठिकान्वयवेलायां सर्वकारकाणां मत्वर्थलक्षणया यागसम्बन्धाश्रयणं तदा वाक्यीयत्वोपालम्भः प्रमादकृत एव ।

नचैवं सोमादिगतस्य करणत्वाधिकरणत्वादेः भावनान्वयवेलायां अधिगतस्य यागान्वयवेलायामन्वयानापत्तिः, तस्य मतुबुक्तत्वेन अनन्वयाभावात् । यत्र त्वधिकरणत्वादिकारकादौ प्रातिपदिकेन मत्वर्थलक्षणायां मत्वर्थयागस्य करणत्वात् सप्तम्यादिविभक्त्यर्थानन्वयः तत्र अंगतया विभक्त्यैव मत्वर्थं लक्षयित्वा पुनः सामानाधिकरण्यार्थं मत्वर्थलक्षणोपगम्यते । यथा—'पदे जुहोति'त्यादौ पदाधिकरणकहोमेनेति ।

वस्तुतस्तु सोमकरणकयागेनेति समस्तवाक्यकल्पने तृतीयान्तरकल्पनानापत्तेः नावश्यं सोमवतेत्येव विशिष्टविधिकल्पनमित्यवधेयम् ।

यत्तूक्तं यथैव आरुण्यस्यैकहायन्या सह पार्ष्ठिकसम्बन्धे कल्प्य-

माने न मत्वर्थलक्षणा तथा अत्रापीति, तत् आरुण्यस्यापि या अरुणा सा एकहायनीत्येवं लुप्तमतुबन्तवाक्यकल्पनया पार्ष्ठिकान्वयकरणात् अप्रयोजकम्। अतः सिद्धः विशिष्टकर्मान्तरविधिपक्षे मत्वर्थलक्षणादोषः।

यागानुवादेन गुणमात्रविधिपक्षेऽपि धातुपारार्थ्यापादकतृतीयविधिप्रकाराङ्गीकरणात् जघन्यपक्षाश्रयणं तावत् तदवस्थमेव। फलपदानर्थक्यं, पशुफलसाधनीभूतप्रकृतज्योतिष्टोमलक्षणा च अपरौ दोषौ। अभ्युपेत्यापि फलपदानर्थक्यं यागानुवादेन गुणे विधीयमाने उत्पत्तिशिष्टसोमावरुद्धे उत्पन्नशिष्टखनित्रादिनिवेशायोगात् गुणात् कर्मान्तरत्वापत्तिः। निष्कृष्य विधानेऽपि च वस्तुतो निराकाङ्क्षत्वात् आकाङ्क्षाकल्पनेऽपि च क्लृप्तोभयाकाङ्क्षाहेतुकसम्बन्धेन सामादिना विरोधे कल्प्याकाङ्क्षाहेतुकसम्बन्धस्य खनित्रादेरन्वयायोगात्। पशुपदे पशुसाधनीभूतयागलक्षणायां तु स एव दोषः। ज्योतिष्टोमपदस्य एकस्यैव नामधेयत्वाङ्गीकारेण तद्वाक्यविहितकर्मानुवादेनात्र गुणविधित्वशङ्का तु विनिगमनाविरहादेव परिहर्तव्या, न हि प्रकरणविशेषे सति इतिकर्त्तव्यताविधिसान्निधिमात्रस्य नियामकत्वं सम्भवति। (१)'आनन्तर्यमचोदने'ति न्यायेन प्रकरणस्य प्राबल्यात्, अन्यथा यस्यैव पाठतोऽत्यन्तसन्निधिः तस्यैव राजसूयपदेन विधानं फलसम्बन्धश्च स्यात्। अतोऽस्मिन् पक्षे विनिगमनाविरहः फलपदानर्थक्यं च तदवस्थमेव।

या तु न्यायसुधाकृता अस्मिन्नपि पक्षे मत्वर्थलक्षणा आपादिता, तथा हि—उद्भिद्गुणस्य यागानुवादेन विधानेऽपि यागस्वरूपे आनर्थक्यात् अपूर्वसाधनयागलक्षणायां यत् यागेनापूर्वं साधयेत् तत् खनित्रवता इति यागस्यापूर्वं प्रति करणत्वप्रतीतेरावश्यकत्वात् गुणस्य तदन्वयार्थं मत्वर्थलक्षणाप्यावश्यकी। अत एव वार्तिककारेणापि (२)'विधाने वानुवादे वा यागः करणमिष्यते' इत्युक्तम्।

---

१ जै. सू. ३-१-२४. २ तं. वा. पृ. २८४.

अतोऽस्मिन्नपि पक्षे भवत्येवायं दोष इति ।

तन्न ; यजिपदेनोपसर्जनीभूतापूर्वसाधनत्वोपहितस्वार्थलक्षणया यागानुवादात् तस्य चोत्पत्तिवाक्ये करणत्वेनाभिगतस्यापि असाधितस्य करणत्वानुपपत्तेः अर्थात् कर्मत्वेनावगतत्वात् तदनुवादेन गुणविधानेऽपि मत्वर्थलक्षणानापत्तेः ।

अत एव 'व्रीहिभिर्यजेत' इत्यत्र करणत्वेनावगतानामपि व्रीहीणां कर्तृव्यापारव्याप्यत्वरूपकर्मत्वं विना करणत्वानुपपत्तेः कर्मत्वस्यापि सद्भावात् 'व्रीहीन् प्रोक्षति' इत्यादौ कर्मत्वेनानुवादोऽवकल्पते । अतश्च तत्र यथैवोपसर्जनीभूतापूर्वसाधनत्वोपहितस्वार्थलक्षणया तदनुवादेन प्रोक्षणादिविधिः—अपूर्वसाधनीभूतान् प्रोक्षणेन संस्कुर्यादिति, तथात्रापि यजिपदेनापूर्वसाधनीभूतयागं साध्यत्वेन लक्षयित्वा तदनुवादेन खनित्रविधानोपपत्तौ मत्वर्थलक्षणापादने प्रमाणाभावात् ।

न च धातुना करणत्वमेव लक्ष्यते, न तु कर्मत्वमित्यत्र नियामकमस्ति, पचति पाकं करोतीत्यादिवत् धात्वर्थस्येप्सितत्वावगमे समानपदश्रुत्या तस्यैव साध्यत्वौचित्यात् ईप्सितत्वानवगम एव हि परं विधिसार्थक्यात् करणत्वावगमः । अत एव वार्तिककारेणापि विशिष्टविधिपक्ष एव मत्वर्थलक्षणादोष उक्तः ।

यत्तु 'विधाने वानुवादे वे'ति वार्तिकम्, तत् 'तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चती'त्युत्तरार्धानुसारात् 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादौ यत्र तृतीयान्तनामधेयसामानाधिकरण्यं तत्रोत्पत्तिवाक्यावगतकरणत्वस्यैवानुवादः न त्वर्थाक्षिप्तसाध्यत्वस्येत्येवं परम् । अतो यागानुवादेन गुणविधिपक्षे मत्वर्थलक्षणाया अभावात् पूर्वोक्तदोषैरेवायं पक्षो निराकर्तव्यः ।

एवं गुणफलसम्बन्धविधिपक्षेऽपि धात्वर्थस्याविवक्षा, विप्रकृष्टार्थसम्बन्धविधानापादकचतुर्थविधिप्रकाराङ्गीकरणं सम्भवति नामधेयत्वमङ्गीकृत्य द्वितीयविधिप्रकारे अन्याय्यमेव ।

नचैवं 'सोमेन यजेत' 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य जुहुया'दित्यादावपि जघन्यविधिप्रकाराङ्गीकरणं न स्यादिति वाच्यम् । सोमादिपदानां अर्थान्तरे अत्यन्तरूढत्वेन नामधेयत्वासम्भवात् मुख्यविधिप्रकारासम्भवेन अगत्या तदङ्गीकरणात् । सर्वत्र हि अज्ञातार्थकं सन्दिग्धार्थकं वा पदं प्रसिद्धपदसामानाधिकरण्येन निर्णीयते । न त्वर्थान्तरे निर्णीतशक्तिकम्, घटः पटः इत्यादौ सत्यपि शाब्दसामानाधिकरण्ये घटपदस्य पटवाचकत्वानङ्गीकारात् । अतश्च सोमादिपदानामर्थान्तरे अत्यन्तनिरूढत्वात् वरं मत्वर्थलक्षणाद्याश्रित्य जघन्यविधिप्रकाराङ्गीकरणम्, न तु शक्त्यन्तरकल्पनापादकनामधेयत्वमाश्रयितुं युक्तम्। उद्भिदादीनां तु खनित्रादौ समुदायशक्तेरभावात् अवयवयोगेनापि तत्र पाचकादिशब्दवत् लोके प्रयोगाभावात् अज्ञातार्थकत्वं पिकादिशब्दवत् । प्रयोगाभावेऽपि अवयवार्थयोगेन खनित्रवत् यागेऽपि प्रवृत्त्युपपत्तेः अक्षादिपदवत् सन्दिग्धत्वम् ।

यद्यपि भिदिर् विदारणे इति स्मृत्यनुसारेण ऊर्ध्वविदारणसमर्थत्वमुद्भित्पदप्रवृत्तिनिमित्तमवगम्यते, तथापि धातूनामनेकार्थत्वस्मरणात् अपूर्वे च वस्तुनि केनचिदुत्पादिते इदमनेनोद्भिन्नमिति लोके (१)'वैडूर्यभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव' इत्यादिकाव्येषु च प्रयोगदर्शनात् फलोद्भेदनसमर्थत्वमप्युद्भिच्छब्दप्रवृत्तिनिमित्तमित्यवगम्यते । अतश्च भू सत्तायामित्यनुशासने सत्यपि भुवः यथैवोत्पत्तावपि प्रयोगादुभयार्थत्वं तथा भिदेर्विदारणार्थत्वेऽपि उत्पादकत्वे च प्रयोगादुभयत्र योगोपपत्तिः । अतोऽनिर्णीतार्थकमुद्भिदादिपदं प्रसिद्धार्थकयजिसमभिव्याहारादेव तदर्थकत्वेन निर्णीयते ।

न च (२)'असुराणां वै बलस्तमसा प्रावृतोऽश्मापिधान आसीत्, तस्मिन् गव्यं वस्वन्तरासीत्, तद्देवा नाशक्नुवन् भेत्तुम्, ते बृह-

---

१. कुमा. १-२४. २. ता. ब्रा. १९.७.१.

स्यातिपन्नुवन्–इमान्न उत्सृजेति, स उद्भिदैव बलं व्यच्यावयत्'
इत्यर्थवादिकाऽन्वाख्यानबलेन गोयुक्तविवरापरपर्यायबलच्यावनद्वा-
रकस्य विदारणस्यैव कर्मण्यप्युद्भिच्छब्दप्रवृत्तिनिमित्तत्वावगतेः
किमर्थमतिप्रसक्तस्य फलोद्भेदनसमर्थत्वस्य प्रवृत्तिनिमित्तत्वमाश्रीयते
इति वाच्यम् । अर्थवादस्यान्यपरत्वेन तादृशविदारणभानं प्रमा-
णाभावात् । अतः पशुकामपदावगतं फलोत्पादनसमर्थत्वमेवोद्भिच्छ-
ब्दस्य कर्मणि प्रवृत्तिनिमित्तम् । न चातिप्रसङ्गः, अन्यत्र ज्योति-
ष्टोमादौ उद्भिच्छब्दस्य याज्ञिकानां प्रयोगाभावेन प्रयोगाविषयीभू-
तमात्रवृत्तिज्योतिष्टोमत्वादिसमानाधिकरणफलोत्पादकत्वस्य उद्भि-
च्छब्दप्रवृत्तिनिमित्तत्वाकल्पनात् । अतः उक्तविधज्योतिष्टोमत्वादि-
सामानाधिकरण्यभानप्रतिबन्धकत्वमात्रकल्पनेन प्रतिबन्धकाभावे स-
ति फलोत्पादकत्वस्यैव लोके इदमनेनोद्भिन्नमित्यादौ उद्भिच्छब्द-
प्रवृत्तौ निमित्तत्वकल्पनात् प्रकृतेऽपि कर्मान्तरत्वानवगमेऽपि एत-
द्विध्यनुष्ठापित्वाकारेण याज्ञिकानामुद्भिच्छब्दप्रयोगदर्शनेन प्रति-
बन्धकाभावसत्त्वात् भानोपपत्तिः ।

अथवा लोकेऽतिप्रसङ्गनिराकरणार्थं अभियुक्तप्रयोगस्य सह-
कारिकारणत्वं कल्प्यते, अतिप्रसक्तावयवार्थजन्यशाब्दबोधे पङ्कजा-
दिविशेष्यकबुध्युद्देश्यकप्राचीनप्रयोगविषयत्वसंसर्गेण तदानुपूर्वीज्ञानं
कारणमित्यर्थः । अतश्च सहकारिसत्त्वे योगमात्रादेवोद्भिच्छब्दार्थ-
भानोपपत्तिः ।

यत्त्वत्र न्यायसुधायां अन्यैरपि पङ्कजादिशब्दवदुद्भिच्छब्दस्य
योगरूढत्वं परिकल्प्य रूढ्यवच्छेदकप्रमत्वबत् विधिसामर्थ्येनावग-
तविजातीययागत्वमित्युक्तम् । तन्न, पद्मत्वस्य हि प्रमाणान्तरेण
सिद्धौ अस्तु नाम तदवच्छेदेन पङ्कजपदस्य रूढिकल्पना, विजाती-
ययागत्वस्य उद्भित्संज्ञैकप्रमाणकत्वेन संज्ञाभावे प्रकृतसोमयागस्यैव
विधिना पशुसम्बन्धकरणेन विधिसामर्थ्यासिद्धेर्वक्ष्यमाणत्वात्

रूढ्यवच्छेदकत्वाभावे योगरूढिकल्पनानुपपत्तेः । यत्र हि—'समिधो यजती' त्यादौ संज्ञामात्रे विधेयान्तराभावाद् अभ्यासात् वैजात्यासिद्धिः, तत्र भवतु नाम योगरूढिः, न तु प्रकृते ।

किञ्च यदि मत्वर्थलक्षणाभयादतिरिक्ता रूढिः क्लृप्तावयवशक्तिकेऽप्युद्भित्पदे कल्प्येत ततः अर्थान्तरे क्लृप्तशक्तिकस्यापि सोमादिपदस्य मत्वर्थलक्षणाभयादेव यागेऽपि स्वतन्त्रशक्तिकल्पनमापद्येत, अस्मन्मते तु सहकारिकारणस्य लोकादावतिप्रसङ्गनिराकरणार्थं कल्पितत्वात् नास्मिन् वाक्ये कस्यचिदतिरिक्तस्य कल्पनेत्यस्मदुक्तप्रकार एव युक्तः । एवञ्च यज्युद्भित्पदयोः प्रवृत्तिनिमित्तभेदात् नीलोत्पलपदयोरिव भिन्नप्रवृत्तिनिमित्तत्वे सति एकार्थवृत्तित्वलक्षणस्यार्थसामानाधिकरण्यस्याप्युपपत्तिः ।

न चोद्भित्पदशक्यतावच्छेदकस्य फलोत्पादकत्वस्य पशुकामपदादेव सिद्धेः पशून् भावयेदिति नामधेयानर्थक्यमिति वाच्यम् । पशुकामपदावगतस्य फलोद्भेदनहेतुत्वस्य नामधेयेनानुवादात् । तत्फलञ्च इतरव्यावृत्तिसङ्कल्पादिकमनुपदमेव वक्ष्यामः । अतश्च यथैव वाक्यान्तरसिद्धाग्निदेवताकत्वानुवादोऽग्निहोत्रपदेन सङ्कल्पादिफलको न विरुध्यते, तथैव स्ववाक्यगतपशुकामपदावगतफलहेतुत्वानुवादोऽपि नानुपपन्नः ।

नचैवं सिद्धान्तेऽपि नामधेयार्थविशिष्टधात्वर्थस्य फलोद्देशेन विधानात् उद्भिदा यागेनेति सामानाधिकरण्योपपत्तेः मत्वर्थलक्षणाभावेऽपि जघन्यविधिप्रकाराश्रयणं तदवस्थमेवेति वाच्यम् , प्रथमतो विशिष्टविधिरूपत्वेऽपि नामधेयार्थस्य प्रमाणान्तरावगतत्वेन विधेस्तदंशे विशेषणविधिकल्पकत्वाभावेन विशेष्यमात्रे व्यापारात् लघुतरविधिप्रकारतुल्यत्वोपपत्तेः ।

गुणविधिपक्षे तु गुणांशेऽप्यप्राप्तत्वेन विशेषणविधिकल्पकत्वात् प्रत्युत गुणगतलिङ्गसंख्याकारकाणामपि अप्राप्तत्वेन विधेयत्वात्

गुरुत्वमिति विशेषः । नामधेयत्वे तु प्रातिपदिकार्थस्य सत्यपि धात्वर्थतावच्छेदकत्वेन विधेयत्वे स्वरूपेण यागसम्बन्धित्वेन च प्राप्तत्वात् लिङ्गसंख्याकारकाणाश्चाश्रयगतानामेवानुवादात् न विशेषणविधिकल्पकत्वमिति लाघवम् ।

यत्तु वार्त्तिके पक्षान्तरमुक्तम्—उद्भित्पदस्योद्भित्संज्ञाविशिष्टे विजातीययागे शक्तिः, तस्य च यजिपदेन सहाभेदेन वा विशेषणविशेष्यभावेन वा अन्वयः; नचैवं विशेषणभूतोद्भित्पदस्यापि वाच्यत्वापत्तिः। श्रौतोपस्थितस्यैव तस्य वाचकत्वसम्बन्धेन विशेषणत्वोपपत्तेः । यत्र हि विशेषणस्य प्रमाणान्तरेण पूर्वमुपस्थितिर्न नियता, तत्रैव तदभिधानं आकृत्यधिकरणे निरूपितम्; न तु प्रमाणान्तरेणोपस्थिते उद्भित्पदेऽपि । अतश्चोद्भित्पदमेव वाचकत्वसम्बन्धेन विशेषणम् । योगेन तु फलोद्भेदनकारित्वरूपस्तदर्थः, उद्भित्पदस्य च श्रौतादेवोपस्थितत्वात् तदंशे विशेषणविधिकल्पनाभावेन नामधेयत्वपक्षे लाघवमिति । तत् पदजन्यपदार्थोपस्थितिर्वाक्यार्थे कारणमित्यस्य नियमस्य भङ्गापत्तौ अर्थाध्याहारादिप्रसङ्गापत्तेः यागगतवैजात्यबोधस्य च उद्भित्संज्ञाधीनत्वेन शक्यतावच्छेदकविधाभावे शक्तिग्रहस्यैवानुपपत्तेः क्लृप्तावयवयोगेनाप्युपपत्तौ अतिरिक्तशक्तिकल्पनायां च सोमादिपदानामपि तदापत्तेरुपेक्षितम् ।

न्यायसुधाकारस्य तु अत्र स्वमतत्वप्रमितौ बीजं न विद्मः । अतो नामधेयार्थ एव प्रमाणान्तरावगतोऽप्यवच्छेदकम्, न तु नामधेयम् ।

न चैवं विशिष्टविधिवेलायां नामधेयार्थस्य धात्वर्थावच्छेदकत्वाङ्गीकारात् नामधेयस्य विध्यन्तर्भावोपपत्तावपि तदर्थस्य प्रमाणान्तरसिद्धत्वेनानूद्यमानत्वात् नामधेयस्यानधिगतार्थगन्तृत्वाभावेन कथं प्रामाण्योपपत्तिः, स्वार्थानुवादत्वेऽपि अनधिगतभेदाविज्ञापकत्वेन प्रामाण्योपपत्तेः ।

तथा हि—प्रतिबन्धकाभावे सति अवयवयोगेन एतद्धिष्यनुष्ठा-

ष्यस्य यागस्योद्भित्संज्ञकत्वे सामानाधिकरण्येनावधारिते प्रकृतस्य ज्योतिष्टोमस्यैव पश्वर्थमनेन विधिना अनुष्ठापकत्वे च तत्र प्रतिबन्धकमत्वेन उद्भित्संज्ञकत्वायोगात् कथञ्चित् योगेऽपि वा एकस्यानेकसंज्ञकत्वायोगेन उद्भित्संज्ञायाश्च क्लृप्तप्रवृत्तिनिमित्तज्योतिष्टोमसंज्ञावरुद्धे पूर्वकर्मणि निवेशासम्भवात् उद्भित्संज्ञककर्मान्तरस्यैवानेन विधिना अनुष्ठापनावगमात् नामधेयस्यानधिगतभेदज्ञापकत्वेन प्रामाण्यम् । अन्यथा हि नामधेयस्याभावे प्रकृतस्यैव यागस्य फलसम्बन्धः प्रकृतयागाश्रितगुणस्यैव वा फलसम्बन्धः सिध्येत्, न तु कर्मान्तरत्वमिति भेदस्यानधिगतत्वम् ।

यत्र तु नामधेयाभावेऽपि अनन्यपरविधिपुनश्श्रवणरूपाभ्यामेव भेदसिद्धिः । तत्रापि 'तनूनपातं यजती'त्यादौ निर्धारितरूपविशेषप्रतिपत्तिः नामधेयाधीनैव । तत्फलं च अनुष्ठानकाले व्यवहारसौकर्यमेव प्रयोगाविध्यवगतलघ्वाख्यानोपायरूपम् । अन्यच्च नामधेयप्रयोजनं क्वचित् गुणसम्बन्धः फलसम्बन्धश्च यथासम्भवं द्रष्टव्यः । 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, इत्यादौ नामधेयाभावे अमावास्याप्रयाजादीनामपि वैमृधरूपगुणसम्बन्धः फलसम्बन्धश्च स्यात् । नामधेयत्वे तु पौर्णमास्यङ्गत्वं वैमृधस्य, फलसम्बन्धश्च पण्णामिति चतुर्थे वक्ष्यते । अतश्च नामधेयस्यार्थवत्त्वात् तत्कृतप्रवृत्तिविशेषेण च विधिपुरुषयोरपि प्रवृत्तिकरत्वोपपत्तेर्युक्तं प्रमाण्यमिति नामधेयत्वमेव युक्तम् ।

सूत्रं तु यत् उत्पत्तौ प्रथमत एव पदार्थान्तरवाचकत्वेन निरूढं न भवति, तत् नामधेयं स्यात् गुणविधायकत्वस्य पूर्वोक्तदोषैरसम्भवादिति व्याख्येयम् ।

इति द्वितीयमुद्भिदधिकरणम् ॥

## (३) अथ तृतीयं चित्राधिकरणम् ।

## सू—यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ १–४–४ ॥ ( सि )

इह ये जात्यादिवचनतया निरूढाः सम्भाव्यमानवाक्यभेदाश्च, ते उदाहरणम् । यथा(१) 'चित्रया यजेत पशुकामः' (२)त्रिवृद्बहिष्पवमानम्, (३)'पञ्चदशान्याज्यानि' '(४)सप्तदशानि पृष्ठानि'इत्यत्र चित्राज्यपृष्ठबहिष्पवमानशब्दाः । चित्राशब्दो हि रूढ्या रूपत्वावान्तरव्याप्यजातिवाची, पवमानशब्दश्च यद्यपि पवनक्रियाकर्तरि यौगिक इत्युद्भिदधिकरणविषयत्वान्नेहोदाहरणमित्यापतति, तथापि (५) 'सर्वत्र यौगिकैश्शब्दैर्द्रव्यमेवाभिधीयते' इति न्यायेन पवनक्रियाकर्तरि योगेन निरूढत्वात् स्तोत्रे च पवनक्रियाकर्तृत्वासम्भवेन उद्भिच्छब्दवत् उभयत्रापि तुल्यवद्योगाभावेन नामत्वानुपपत्तेः पूर्वाधिकरणविषयत्वाभावात् उदाहरणत्वोपपत्तिः ।

पवमानशब्दश्च पवनक्रियाकर्तृवाची विशेष्यापेक्षस्सन् पूर्वपक्षे त्रिवृच्छब्दवाच्यत्रिभिण्ड्यपरपर्यायलताविशेषद्रव्यपरः । एवमाज्यशब्दोऽपि घृतत्वजातिवाची । पृष्ठशब्दश्च शरीरावयवविशेषवाची । एते चित्रादयः शब्दाः गुणविधयः कर्मनामधेयानि वेति विचारः ।

अत्र पादाध्यायसङ्गती तावत् पूर्ववदेव, अनन्तरसङ्गतिरपि अनिरूढत्वविशिष्टसामानाधिकरण्यरूपस्य पूर्वाधिकरणव्युत्पादितनामधेयत्वहेतोरत्राभावात् गुणविधित्वमेव प्रसिध्यादिभिरस्तु इति पूर्वपक्षोत्थानात् द्रष्टव्या ।

तत्र पूर्ववदेव प्रसिध्यादिभिः हेतुभिर्गुणविधित्वम् । न च

---

१. तै. सं. २–४–६–१. २, ३, ४, ता. ब्रा. २०–१–१. ५. तं.वा. पृ. ६८८.

पूर्वोक्तमत्वर्थलक्षणादिदोषप्रसङ्गः नामधेयत्वसाधकः, सोमादिवत् तेषां निरूढेषु नामत्वासाधकत्वात्, अतो गुणविधय एवैते ।

तत्र चित्राशब्दस्तावत् प्रातिपदिकेन रूपस्वावान्तरव्याप्यजातिरूपचित्रत्ववाची टाबंशेन स्त्रीत्ववाची च चित्रत्वस्त्रीत्वे यागानुवादेन विधत्ते । चित्रत्वस्त्रीत्वयोश्च पार्ष्ठिकान्वयावगतपरस्परयोगवशेन प्राणिद्रव्यनिष्ठत्वप्रतीतेः योग्यतयैव यजिपदं प्राणिद्रव्यकयागपरम् । तत्रापि (१)'प्रकृतौ वाऽद्विरुक्तत्वा' दिति न्यायेन सर्वप्राणिद्रव्यकयागप्रकृतिभूताग्नीषोमीयपरम् । अतश्च अग्नीषोमीययागानुवादेन चित्रत्वस्त्रीत्वयोर्विधिः; पशुकामपदं तु अर्थप्राप्तसाधनीभूतपशुकामनानुवादः, अग्नीषोमीययागस्यैव सर्वफलार्थज्योतिष्टोमाङ्गत्वात् पशुरूपप्रधानफलानुवादो नानुपपन्नः ।

नचैवं प्राप्तकर्मानुवादेन अनेकचित्रत्वस्त्रीत्वरूपगुणविधानात् वाक्यभेदः 'पशुना यजेते' तिवत् 'धेनुर्दक्षिणा' इतिवद्वा प्राप्तकर्मानुवादेनाप्यनेकगुणविशिष्टैकतृतीयोपात्तकरणकारकविधानेन अवाक्यभेदात् । न च कारकस्याप्युत्पत्तिवाक्यादेव प्राप्तत्वात् तदनुवादेन गुणद्वयविधाने वाक्यभेदतादवस्थ्यम्, उत्पत्तिवाक्ये द्रव्याश्रितायाः करणतायाः प्राप्तत्वेऽपि चित्रत्वस्त्रीत्वनिष्ठकरणत्वयोरप्राप्तत्वेन विध्युपपत्तेः । न हि द्रव्यगुणादीनां एकैव करणता, व्यापारभेदेन स्वरूपसम्बन्धविशेषरूपाणां शक्तिरूपपदार्थान्तररूपाणां वा करणतानां भेदस्यावश्यकत्वात् ।

नचैवं चित्रत्वस्त्रीत्वयोर्भेदेन तत्करणतयोर्भेदात् अनेकविधाने वाक्यभेदापत्तिः । 'पशुना यजेते' तिवत् अनेकासामपि करणतानां एकतृतीयोपादानेन युगपदुपस्थितेः वाक्यभेदाभावात् । अतश्च यथैव 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ सर्वफलानां युगपदुपस्थितेर्नोद्देश्यानेकत्वं दोषाय; तथैवात्रापि विधेयानेकत्वमिति द्रष्टव्यम् ।

---

१ जै. सू. ३-६-२.

न च प्राकरणिकपुंस्त्वावरोधात् न चित्रत्वस्त्रीत्वयोरनारभ्याधीतयोरग्नीषोमीये निवेशसम्भवतीति वाच्यम् । पशुपदे तावत् स्त्रियामपि पशुशब्दप्रयोगदर्शनेन पुंस्त्वस्याविवक्षितत्वात् । (१)'छागस्य वपाया मेदस' इति मन्त्रे श्रुतमपि पुंस्त्वं अनारभ्याधीतेनापि प्रत्यक्षविधिविहितेन स्त्रीत्वेनावरोधात् न मान्त्रवार्णिकपुंस्त्वविधिकल्पनायै प्रभवतीति 'सुप्तिङुपग्रहलिङ्गनराणा' मिति स्मरणानुसारात् लक्षणया स्त्रीत्वपरमेव । कृष्णसारङ्गादिविधिस्तु चित्रत्वाश्रयतया पक्षप्राप्तकृष्णसारङ्गादिरूपानियमार्थो न विरुध्यते । तेन युक्तोऽग्नीषोमीयपशुयागे गुणविधिः ।

अथ वा सर्वयागानुवादेन गुणविधानात् । (२)'एष वै सप्तदशः प्रजापतिः' इतिवत् नात्र 'प्रकृतौ वा'' इति न्यायप्राप्तिः, अतिदेशात् पूर्वमुपदेशप्रवृत्तौ अतिदेशस्यैवाकल्पनेन द्विरुक्तत्वाभावात् । पर्णतादौ तु जुहूप्राप्त्यर्थमतिदेशापेक्षणात् ततः पूर्वं प्रवृत्त्यभावेन प्राप्तिकालवैषम्यात् द्विरुक्तत्वोपपत्तिः । अत एव नात्र पशुरूपद्वारसम्बन्धार्थमप्यतिदेशापेक्षा, सर्वपशुयागेषु पशोरुपादिष्टत्वेन तद्विषये अतिदेशाकल्पनात् ।

अस्तु वा ''वायव्यं श्वेतमालभेते' त्यादौ पशोरप्यतिदेशः, तथापि यत्र 'आग्नेयं पशुमुपाकरोति' इत्यादौ द्रव्यदेवतासम्बन्धव्यतिरेकेण यागस्यैवासिद्धेः द्रव्योपदेशावश्यंभावः, तत्रापि प्राप्तिकालवैषम्याभावात् तत्साधारण्येन प्राकृतवैकृतपशुयागानुवादेन चित्रत्वस्त्रीत्वविधिः पूर्वरीत्या सर्वानुपपत्तिपरिहारेणाङ्गीक्रियते ? पशुकामपदं चास्मिन् पक्षे तत्तत्पशुयागजन्यफलोपलक्षणार्थत्वेनापि न विरुध्यते ।

अथ वा यत्र मेषीयागे स्त्रीत्वं प्राप्तं तत्र चित्रत्वमात्रमनेन विधीयते । न च तत्रापि क्लृप्तोपकारकप्राकृतकृष्णसारङ्गत्वादिगुणा-

१. तै. ब्रा. ३-५-६.　　　　२. तै. सं. १-६-११-१.

वरोधेन अनारभ्याधीतचित्रत्वनिवेशासम्भवः । अत एव अनारभ्याधीतस्य प्राकृतक्लृप्तोपकारकपाञ्चदश्यावरोधात् न सर्वासु विकृतिषु निवेशः । किन्तु श्रुतसाप्तदश्यास्वेवेत्युक्तमाकर इति वाच्यम् । पूर्वोक्तरीत्या विरोधाभावेन निवेशोपपत्तेः । प्रकरणाधीतस्य क्लृप्तोपकारका(१)तिदेशिकबाधकत्ववत् अनारभ्याधीतस्यापि आनर्थक्यप्रतिहतन्यायेन(२)आतिदेशिकबाधकत्वाच्च । अन्यथा 'य इष्ट्या पशुना सोमेन वा' इत्येतद्वाक्यगम्यसद्यस्कालत्वस्यापि प्राकृतव्यहकालविरोधे विकृतिषु निवेशो न स्यात् । साप्तदश्यस्य तु सम्भवत्यपि विकृतिषु सर्वासु निवेशे उपसंहाराङ्गीकरणं सम्भवति प्राकरणिके क्रतुसम्बन्धलाभे अव्यभिचरितक्रतुसम्बन्धबलेन तेनैव वाक्येन क्रतुसम्बन्धविधिकल्पनानिमित्तगौरवपरिहारार्थम् । अतः युक्तो मेषीयागे चित्रत्वविधिः ।

अथ वा प्रकृत एव 'दधि मधु पयो घृतमुदकं धानास्तण्डुलास्तत्संसृष्टं प्राजापत्य' मिति यागे धानासु स्त्रीत्वप्राप्तेः चित्रत्वमात्रविधिः । इष्टेर्हि मुख्यस्त्रीत्वाभावेऽपि शब्दगतत्वेन स्त्रीत्वव्यवहारः सिद्धान्तिनोऽप्यभिमतः । न च प्रकृतयागानुवादेन चित्रत्वविधाने तदीयसर्वद्रव्येषु चित्रत्वप्राप्तेः तेषु शब्दगतत्वेनापि स्त्रीत्वस्याभावात् पदश्रुत्यवगतपरस्परानियमानुवादानुपपत्तिः । द्रव्यभेदेन यागानां भिन्नत्वात् । स्त्रीत्वानुवादबलेन धानाद्रव्यकयागस्यानुवादेन चित्रत्वविधानोपपत्तेः । तथा हि—

तच्छब्देन पूर्वप्रकृतानां प्रथमानिर्देशेन प्रधानभूतानां दध्यादीनां प्रत्येकं परामर्शात् प्रत्येकमेव च तेषां देवतासम्बन्धविधानात् देवतासम्बन्धभेदेन यागभेदः ।

नन्वेवं अनेकदध्यादिपरामर्शे बहुवचनं वीप्सा वा प्रसज्येत । नपुंसकनिर्देशाच्च दधिप्रभृतिषु पञ्चस्वेव देवतासम्बन्धः प्रसज्ये-

---

१. २ अतिदेश०

त, न धानातण्डुलयोः । अत एव क्रतुपशूनां सामानविध्यं कृत्वा चिन्तायां(१) "प्रास्मा अग्निं भरत" इत्यस्य अग्निगुणपक्षस्य मेषीत्वे पुंपशुष्वेव प्रवृत्तिरिति वक्ष्यते । अतो वरं दध्यादिद्रव्यजातं भावव्युत्पन्नसंसृष्टपदवाच्यसमुदायविशेषणम् । स एव च तच्छब्देन परामृश्यते । तस्य च एकस्यैव प्रजापतिदेवतान्वयात् द्रव्यदेवतासम्बन्धैक्येन एकयागपक्ष एवाष्टमोक्तः श्रेयानिति चेत्—

न; दध्यादीनां संसृष्टविशेषणत्वे (२)'शेषे षष्ठी'अनेन षष्ठ्यन्तत्वापत्तेः । तत्संसृष्टमित्यस्य एकपदत्वाङ्गीकारेण षष्ठीतत्पुरुषाङ्गीकारशङ्का तु पूर्वपदे लक्षणापत्तेः पृथक् पाठाच्चायुक्ता । अतः संसृष्टशब्दः कर्मव्युत्पन्नः सन् दध्यादिपर एव । तच्छब्दोऽपि तेषामेव परामर्शकः ।

नचैवमुभयत्र बहुवचनाद्यापत्तिः । एकवचनेनैव लक्षणया बहुत्वप्रतीत्युपपत्तेः । लक्षणापि चेयं(३) 'नपुंसकमनपुंसकेन एकवच्चान्यतरस्या' मित्यनेन—नपुंसकानपुंसकयोगे नपुंसकमेवावशिष्यते, तच्च विकल्पेन एकवचनान्तं भवती—त्यर्थकेनानुशासनेन अनुशिष्टत्वात् नातीव दोषमावहति । अत एव नपुंसकानामेव ग्रहणमित्यपि प्रत्युक्तम् । एवं प्राजापत्यशब्देऽपि लिङ्गसंख्योपपत्तिर्द्रष्टव्या । अतश्च प्रत्येकं देवतासम्बन्धात् यागभेदोपपत्तिः ।

नन्वेवमपि यथा (४)'सप्तदश प्राजापत्यानि'त्यत्र पूर्वपक्षे तद्धितान्तर्गतसर्वनाम्नः कृतैकशेषस्य पश्चात्तद्धितकरणात् एकदेवतासम्बन्धेन एक एव यागोऽनुमीयत इत्युक्तम् तथात्रापि द्रव्यभेदेऽपि कृतैकशेषस्य सर्वनाम्नः पश्चात् प्रजापतिपदान्वयादेकदेवतासम्बन्धेन एक एव यागोऽनुमास्यते । न च तत्रत्यदूषणबीजं चोदकप्राप्तैकपशुनिष्पन्नैकादशावदानगणानुपपत्तिरूपमत्रास्ति, येन कृत-

---

१ तै. ब्रा. ३-६-६-१०. २ .पा सू. २-३-५०. ३. पा .सू. १-२-६९. ४ तै ब्रा. १-३-४-३.

तद्धितस्य सर्वनाम्नः पश्चादेकशेषकरणमाशङ्क्येत। अतो न्यायसुधाकृदभिमतैकयागपक्ष एव श्रेयानिति चेव—

न; प्राजापत्यमित्येकवचनान्तर्गतस्य सर्वनाम्नः दध्यादिपदान्वयव्यतिरेकेणैकदेशत्वाप्रतीतेः। तदन्वयस्य च 'परिपूर्णं पदं पदान्तरेणान्वेती'ति न्यायेन तद्धितस्यैव पश्चादेकशेषकरणात् यागभेदोपपत्तिः। प्राजापत्यानित्यस्य तु बहुवचनान्तत्वात् तद्धितकरणं विनापि एकशेषोपपत्तेः एकादशावदानगणानुपपत्त्यादिना तद्दूषणमिति विशेषः। एवञ्च यागभेदे चोदकभेदेन प्रतिद्रव्यं धर्मप्राप्तिरपि आञ्जस्येनोपपद्यते। अतश्च यागभेदात् धानायागे च स्त्रीत्वस्य प्राप्तत्वात्तत्रैव चित्रत्वविधानम्। पशुकामपदवैयर्थ्यप्रसङ्गाद्वा धानायागस्यैव चित्रत्वविशिष्टस्य फले विधानम्।

न च प्राप्तकर्मानुवादेन गुणसम्बन्धस्य फलसम्बन्धस्य च विधाने वाक्यभेदः। अधिकारविधौ स्वरूपेण प्राप्तानामपि कर्मणां गुणविशिष्टानां फले विधानोपपत्तेः। अत एव 'राजा राजसूयेने'त्यत्र राजकर्तृविशिष्टानां प्राप्तानामपि कर्मणां फले विधानेऽपि न वाक्यभेदः।

यद्वा चित्रत्वस्त्रीत्वावच्छिन्नद्रव्यविशिष्टस्यैव कर्मणः फले विधानम्। तत्र न किञ्चिद्बाधकम्।

अथ वा प्रकृतसर्वयागाश्रयतया उभयविशिष्टद्रव्यान्तरमेव फले विधीयते। न तु सर्वथा रूढश्चित्राशब्दो नामधेयम्।

तथा "पञ्चदशान्याज्यानी"त्यादिष्वपि अध्याहारात् "अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ती"ति कात्यायनस्मरणाच्च अस्तिधात्वर्थस्य भवन्तीपरिभाषितवर्तमानार्थकलडन्तस्य युष्मदस्मदतिरिक्तोपपदसमानाधिकरणप्रथमपुरुषान्तस्याप्रयुज्यमानस्यापि ज्ञेयत्वेनोक्तत्वात् तस्य चाप्राप्तत्वेन विधेयत्वावगतेः विधिकल्पनया पञ्चदशसंख्याविशिष्टाज्यसत्त्वेव अवान्तरप्रकरणात् स्तोत्रविशेषाङ्गतया विधी-

यते। यद्यपि च 'स्वव्यापारे हि विधिना पुरुषो विनियुज्यत' इति न्यायाद् विधिः पुरुषव्यापाररूपां भावनामाक्षिपति, तस्य च निरवच्छिन्नायां व्यापारतायोगात् अवच्छेदकधात्वर्थापेक्षोपजायते, तथापि सत्तायाः प्रयोज्यनिष्ठत्वेन पुरुषव्यापारत्वायोगादवच्छेदकत्वानुपपत्तेः आज्यादीनां चावान्तरप्रकरणावगतस्तोत्राङ्गत्वबलेन प्रधानदेशस्थत्वस्यावगतेस्तस्य च समीपस्थापनसम्पाद्यत्वेन स्थापनाख्यधात्वर्थ एव अवच्छेदकत्वेन कल्प्यते । अतश्च 'अग्निमुपसमाधाय स्तुवीते'तिवत् स्थापनसंपाद्यसत्ताद्वारेण आज्यादीनां स्तोत्रोपकारकत्वमदृष्टाविधया न विरुध्यते । संसर्गिद्रव्यत्वाच्चाज्यादीनां न स्वरूपेण संख्यान्वय इति तावत्संख्याकपात्रभेदोऽप्याक्षिप्यते । अतश्च पञ्चदशसु पात्रेष्वाज्यानि कृत्वा तानि स्तोत्रदेशे निधाय स्तोतव्यमिति पूर्वपक्षः फलितो भवति । 'सप्तदशानि पृष्ठानी'त्यत्र सप्तदशपराङ्मुखपाणिस्थापनेन पृष्ठसत्तां संपाद्य स्तोतव्यमिति ।

न च पञ्चदशादिशब्दस्य डप्रत्ययान्तत्वात् तस्य (१)स्तोमे डविधिः (पञ्चादशाद्यर्थ) इत्यनुशासनेन स्तोमवाचित्वावगतेः स्तोमशब्दस्य च स्तोत्रीयसंख्याकृतस्तुतिसंख्यावाचित्वस्य स्थापितत्वादाज्यादिसंबन्धानुपपत्तेः संख्याविशिष्टाज्यविधानं कथमिति वाच्यम् । स्तोमशब्दस्य स्तुतिसाधनमात्रनिष्ठसंख्यावाचित्वेन ऋचोऽपि तत्र प्रवेशे गौरवापत्तेः। अतः संख्याविशिष्टाज्यादिविधाने न किञ्चिद्बाधकमिति प्रसिध्यावेर्गुणविधित्वमेव युक्तम् ।

अथ वा यदि पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन संख्याविशिष्टद्रव्यविधाने संख्याया अविवक्षापत्तिराशङ्क्येत, ततः अत्र स्थापनभावनैव द्रव्यसंख्योभयविशिष्टा स्तोत्रोद्देशेन प्रयाजादिभावनावद्विधीयत इति न विशेषः । एवं च 'आज्यैः स्तुवत' इत्युत्पत्तिवाक्येऽपि स्तोत्रमात्रविधानाल्लाघवं विधेः । आज्यपदं तु गुणवाक्यमात्राज्या-

१ का. वा

नुवादमात्रम् ।

न चोत्पत्तिवाक्य एव आज्यविशिष्टस्तोत्रविधिः । गुणवाक्ये तु आज्यानुवादेन संख्यामात्र (१)विधानमस्त्विति वाच्यम् । आज्यानां शब्दैकसाध्यगुणाभिधानरूपस्तुतिं प्रति तृतीयावगतकरणत्वासम्भवेन तत्र विशिष्टविध्यसम्भवात् ।

न चाज्यानामपि सन्निधिस्थापनमात्रेण स्मारकत्वात् रथघोषादिवत् करणत्वोपपत्तिः । 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती' त्यत्र हि आज्ञादानाख्ये उपाकरणे नेत्रकरादिव्यापारस्यापि लोके करणत्वदर्शनात् युक्ता रथघोषस्य (२) करणता । प्रकृते तु अभिधानाख्यस्तुतिं प्रति शब्दातिरिक्तस्य करणत्वादर्शनात् आज्यस्य तत्कल्पने अक्लृप्तकल्पनापत्तिः ।

न च साक्षादाज्यानां स्तुतिं प्रति करणत्वायोगेऽपि तल्लक्षितघृतसंबन्धिमन्त्राणां करणत्वोपपत्तेः तद्विशिष्टस्तोत्रविधिरेवास्तु इति वाच्यम् । मन्त्राणां घृतसंबन्धः स्थापनक्रियाद्वारा वा विवक्षितः ? घृतप्रकाशकत्वाद्वा? । नाद्यः ; स्थापनाख्यस्य तत्सम्बन्धस्य प्रमाणान्तरप्राप्तत्वात् क्रमप्राप्तमन्त्रानुवादेन घृतविधिः स्तोत्रविधिश्चेति वाक्यभेदापत्तेः ।

अथ विशिष्टविधिसन्दष्टस्य प्राप्तस्यापि विशेषणस्य पुनर्विधिरिति न्यायेन मन्त्रस्यापि पुनर्विधिरित्युच्यते ततो गुणवाक्ये एकविशिष्टविध्यङ्गीकारापेक्षया उत्पत्तिवाक्ये विशिष्टद्वयविध्यङ्गीकरणं विधौ च लक्षणाश्रयणं नोपपत्तिमत् । नान्त्यः ; प्राकरणिकमन्त्रबाधेन घृतप्रकाशकलक्षितमन्त्रविधानस्यान्याय्यत्वात् । अतः नोत्पत्तिवाक्यस्थमाज्यपदं गुणविधिः । अत एव तन्नोदाहृतम् । अतो गुणवाक्य एव आज्यविधिः । उत्पत्तिवाक्ये तु स्तोत्रमात्रविधिः । आ-

---

१ निधिः

२ स्यापि तत्र

ज्यपदं तु एकस्तोत्रसम्बन्धित्वेन आज्यमन्त्रयोः परस्परसम्बन्धावगमात् स्वसम्बन्धितया लक्षितमन्त्रगणकरणत्वानुवादमात्रम् ।

एवं "सप्तदशानि पृष्ठानी"त्यत्रापि द्रष्टव्यम् । 'त्रिवृद्बहिष्पवमा-न'मित्यत्र त्रिवृच्छब्दवाच्यस्य त्रिभिण्ड्याख्यस्य द्रव्यस्य सदसो ब-हिः पवनक्रियाविशिष्टस्य विधानात् द्रव्यक्रियोभयविशिष्टस्था-पनभावनाविधानाद्वा पवमानशब्दो गुणपर एव, न तु स्तोत्रनामधे-यम् । "बहिष्पवमानेन स्तुवीत" इत्युत्पत्तिवाक्ये तु पूर्ववदेव स्तोत्र-मात्रविधानमिति द्रष्टव्यम् ।

यत्तु कैश्चित् पवमानशब्दो यौगिको विशेष्यापेक्षः सन् प्रकरणा-त्सोमेनैव विशेष्येण सम्बध्यते । त्रिवृच्छब्दस्तु तृचत्रयानुक्रमणा-त् स्तोत्रीयानवकवाचित्वेन (१.)त्रिवृच्चर्वाश्ववालाधिकरणे स्थापि-तोऽपि पवमानशब्दसामानाधिकरण्यासम्भवात् अत्र स्तोत्रीया-नवकपरत्वत्यागेऽपि त्रिवृद्रज्जुरित्यादौ त्रैगुण्येऽपि प्रयोगादवयव-योगेन त्रैगुण्यार्थकस्याप्यवगतः त्रैगुण्यपरः । त्रैगुण्यं च प्रकरणा-द्दशमुष्टिरूपसोमपरिमाणापेक्षया द्रष्टव्यम् । अतश्चात्रापि संख्या-विशिष्टद्रव्यविधिरेवेत्युक्तम् ।

तन्न; त्रिवृच्छब्दस्य न्यायसुधाकृदुक्तरीत्या क्लृप्तसमुदायप्र-सिद्ध्या त्रिभिण्ड्यपरपर्यायलतावचनत्वसम्भवे यौगिकत्रैगुण्यपर-त्वायोगात् । उभयत्र साम्येऽपि वा उत्तराशब्दवत्सापेक्षत्वेन त्रैगुण्य-परत्वायोगाच्च । पवमानशब्दस्य विशेष्यापेक्षायां वाक्योपात्तविशे-ष्यलाभे सम्भवति प्राकरणिकविशेष्यकल्पनस्यान्याय्यत्वाच्च । अतः बहिष्पवमानक्रियाविशिष्टत्रिभिण्ड्याख्यद्रव्यविधिरेव युक्तः इति प्राप्ते—

अभिधीयते—नैते गुणविधयः, वाक्यभेदप्रसङ्गात् । तथाहि—

१. पू. मी. १–३–४. भाष्यकाररीत्या यववराहाधिकरणमिति व्यप-दिष्टस्यैवास्याधिकरणस्य वार्तिककारमते इदं व्यपदेशान्तरम् ।

अग्नीषोमीययागानुवादेन सर्वपशुयागानुवादेन वा चित्रत्व-स्त्रीत्वरूपानेकगुणविधानाद्वाक्यभेदः । यद्यपि च एकतृतीयोपात्तं करणत्वद्वयं विधीयत इति शक्यते वक्तुम्, तथापि स्त्रीत्वस्य यद्व्यापारेण करणता तद्व्यापारेणैव पुंस्त्वस्यैवेति प्रकृतौ 'अजोऽग्नीषोमीय' इत्यादिवचनात् पुंस्त्वविधिबलादेव तत्तत्करणत्वस्य प्राप्तत्वात् चित्रयेत्यत्र एकयैव तृतीयया करणत्वमनूद्य टाबंशेन स्त्रीत्वविधिः, प्रातिपदिकांशविशिष्टया च तया चित्रत्वविशिष्टकरणत्वविधिरिति विधेयानामेकाभिधानप्रतिपाद्यत्वाभावात् वाक्यभेदापत्तिरनिवार्यैव ।

अस्तु वा कथञ्चित् करणत्वभेदः, तथापि प्राकरणिकपुंस्त्वाविरोधात् न अनारभ्याधीतेनानेन स्त्रीत्वविधानमित्यवधेयम् । यद्यपि च नान्यत् पुंस्त्वविधायकं सम्भवति, तथापि 'अजोऽग्नीषोमीय' इति शाखान्तरवचनमेव पुंस्त्वविधायकं समस्त्येव । अतो न तत्र गुणविधिसम्भवः ।

किञ्च साधने कामना औपचारिकी, मुख्या प्रीतिरूपे फल एवेति षष्ठाद्याधिकरणन्यायेन पशुकामशब्दस्य फलपरत्वात् पुनस्तत्सम्बन्धकरणेऽपरो वाक्यभेदः । यद्यपि पशूनामपि प्रीतिसाधनत्वमेव न प्रीतिरूपत्वम् । तथापि पुत्रो मे भूयात्, पशवो मे भूयासुः, इत्येवं आगोपालाङ्गनं साधनत्वमनालोच्यैव इच्छाविषयत्वप्रतीतंर्मुख्यत्वमेव पश्वादिकामनायाः ।

यत्तु ज्योतिष्टोमफलानुवाद इत्युक्तं, तत् पाष्ठिकानुवादे वैयर्थ्यापत्तेः विशेषणत्वे च विशिष्टोद्देशे वाक्यभेदापत्तेरयुक्तम् । प्रकरणबाधश्चानयोः स्पष्ट एव । अत एव मेषीयागे चित्रत्वमात्रं विधीयत इत्ययमपि पक्षः प्रत्युक्तः(१) तत्रापि हि पशुकामपदप्रकरणयोरनुपपत्तिस्तदवस्थैव ।

१ तद्वदेव

किञ्च यजिपदं वा मेषीयागसमर्पकं ? टावंशो वा ? नाद्यः ; यजेः यागमात्रपरत्वेन मेषीयागानुपस्थापकत्वात् । टावंशस्य करणतासम्बन्धेन विशेषणत्वेन विशिष्टोद्देशे वाक्यभेदाच्च । स्त्रीकरणकयागोद्देश्यस्य मत्वर्थलक्षणां विनानुपपत्तेः । (१) एकस्या एव तृतीयायाः स्त्रीत्वांशे मत्वर्थलक्षणा चित्रत्वांशे न इति विरुद्धत्वापत्तेश्च ।

अत एव नान्त्यः ; स्त्रीकरणत्वस्य यज्यर्थान्वयं विना मेषीयागानुपस्थितेः वाक्यभेदतादवस्थ्यात् एकस्मिन् पदे यागत्वसमानाधिकरणं स्त्रीकरणत्वमुद्दिश्य चित्रत्वविधाने एकप्रसरताभङ्गश्च । एतस्मिंश्च पक्षे (२)तृतीयाया न केवलं मत्वर्थलक्षणैव, अपि तु उद्देश्यताबोधार्थं द्वितीयार्थलक्षणापि ! आद्येऽपि च सामानाधिकरण्यार्थं सा आवश्यक्येवेति ध्येयम् ।

अथैकं पदं तात्पर्यग्राहकमितरद्विशिष्टार्थलक्षकमित्येवं सर्वदोषनिवारणं ततो विनिगमनाविरहः । अन्यथा "ग्रहं संमार्ष्टी"त्यादावपि ग्रहप्रातिपदिकमेकत्वानवच्छिन्नग्रहलक्षकम् , एकवचनं तात्पर्यग्राहकमित्यस्यापत्तेः । न च टावंशस्योद्देश्यपरत्वे एकप्रसरताभङ्गापत्तेः न विनिगमनाविरहः । तात्पर्यग्राहकत्वेऽपि उद्देश्यबोधसामग्र्यन्तर्गतत्वाविघातेन एकप्रसरताभङ्गस्यानिवार्यत्वात् । अतो न मेषीयागे चित्रत्वमात्रविधिः ।

अत एव न प्रकृते धानायागेऽपि तद्विधिः । तस्यैव विशेषतः उपस्थापकाभावात् ।

किञ्चैकस्मिन्नेव धानायागे गुणसंबन्धः फलसंबन्धश्चेति वाक्यभेदः । न च राजसूयन्यायः । एकादशे हि सर्वेषां द्रव्यदेवताप्रयाजादीनामुत्पत्तावन्वयः देशकालकर्त्रादीनाञ्च प्रयोगान्वयो वक्ष्यते । अत एव देशादीनां साङ्गोपकारकत्वम् । द्रव्यादीनां तु प्रधानमात्रो-

---

१ एकयैव तृतीयया
२ तृतीयया

पकारकत्वमिति विशेषो लभ्यते । अतश्च राजसूयस्य स्वरूपेणोत्पन्नत्वेऽपि तत्प्रयोगस्य अत्र विधेयत्वात् युक्तस्तद्विशेषणीभूतकर्तृपरिच्छेदकत्वेन राजत्वविधिः । प्रकृते तु चित्रत्वस्य प्रयोगविशेषणत्वानुपपत्तेः उत्पत्तेश्च प्राप्तत्वेन चित्रत्वविशिष्टोत्पत्तिविध्ययोगात् प्राप्तोत्पत्त्यनुवादेन चित्रत्वविधिः, फलोद्देशेन धानायागस्य विनियोगविधिरित्येवं वाक्यभेदो दुरुद्धर एव ।

किञ्चास्मिन् पक्षे दध्यादियागानां धानायागाङ्गत्वापत्तेः उत्पत्तिवाक्ये तुल्यवत्प्रतीतिबाधापत्तिः । कर्मान्तरविधिपक्षश्च भेदकप्रमाणाभावादेव निराकर्त्तव्यः । गुणफलसम्बन्धविधानेन वा नामधेयत्वेन वा पूर्वकर्मण्येव निवेशोपपत्तेः वाक्यभेदानापादकस्य गुणस्याभेदकत्वात् । वरं ह्यदृष्टभेदानुबन्धिकर्मभेदकल्पनातः प्रकरणभेदानापादकं नामधेयत्वमेवेति(१) वैश्वदेवाधिकरणे वक्ष्यते ।

गुणफलसम्बन्धविधिस्तु आश्रयाभावादेवासिद्धः । प्रकृतदध्यादियागा हि यद्याश्रयाः तदा तेषां फलाभावात् प्रकरणात् फलवद्गुणभावनाङ्गत्वमेवापद्येत । सम्भवत्येव हि एकस्यैव अधिकाराख्यप्रकरणात् जन्यत्वरूपाश्रयत्वावगमेऽपि इतिकर्तव्यताकाङ्क्षालक्षणात् प्रकरणादङ्गत्वावगमोऽपि । न चेष्टापत्तिः; दध्यादिद्रव्यवैयर्थ्यापत्तेः । अतश्च तद्वैयर्थ्यपरिहारार्थं अदृष्टकल्पनायां तदनुबन्धिस्वर्गकल्पनायां च गौरवापत्तेः वरं नामधेयत्वमेव द्वितीयविधिप्रकाराङ्गीकरणेन विधिलाघवापादकं युक्तमाश्रयितुम् । न चास्माभिः चित्राशब्दो यागेषु रूढ इत्युच्यते, येन शक्त्यन्तरकल्पनागौरवमिति तावच्छङ्क्येत । अपि तु चित्रद्रव्यकत्वसम्बन्धेन लाक्षणिकः । सा तु परं वैदिकप्रचुरप्रयोगात् दर्शादिपदवत् निरूढेति विशेषः । टाबंशोऽपि इष्ट्यभिप्रायकः । एकवचनं च राजसूयपदवत् समुदायानुवादो नानुपपन्नः । तस्मात् चित्रापदं तावन्नामधेयम् ।

---

१ पू. मी. १-४-६.

एवं "पञ्चदशान्याज्यानी"त्यादावपि स्तोत्रभावनानुवादेन संख्याविशिष्टद्रव्यविधाने विशिष्टविधेः प्राथमिकभावनासम्बन्धोत्तरकालीनत्वेन द्वितीयत्वस्य उद्भिदधिकरणे स्थापितत्वात् प्राथमिकभावनासम्बन्धवेलायाञ्च उभयोर्द्रव्यसंख्ययोः द्रव्यक्रिययोर्वा प्राप्तभावनानुवादेन विधाने वाक्यभेदो दुष्परिहर एव ।

अथ स्तोत्रभावनानुवादेऽपि प्रयाजादिभावनावत् उभयविशिष्टभावनान्तरस्यैव स्तोत्रभावनाङ्गत्वेन विध्युपपत्तेः पश्चात् द्रव्यसंख्ययोः द्रव्यक्रिययोर्वा परिच्छेद्यपरिच्छेदकभावेन परस्परान्वयो नानुपपन्नः, यत्र च परस्पराकाङ्क्षाविरहेऽपि अन्यतराकाङ्क्षा, यत्र च नोभयं तत्राप्येकक्रियावशीकारान्यथानुपपत्त्या एकस्य द्वयोर्वा आकाङ्क्षां परिकल्प्य भवत्येवान्वयः यथा—(१) "सोमाय पितृमते पुरोडाशंषट्कपालं निर्वपति" इत्यादौ पितृमच्छब्दस्य विशेष्यसाकाङ्क्षत्वेऽपि सोमस्य देवतात्वात् स्वरूपेणैव क्रियान्वयित्वोपपत्तेः एकहायनीवत् विशेषणानपेक्षणात् आकाङ्क्षां परिकल्प्य सम्बन्धः, यथा वा (२)'अग्नये शुचये' इत्यादौ द्वयोरापि पर्यायत्वेन परस्परानपेक्षा तत्रापि गुणानुरोधेन प्रधानावृत्तिपदावृत्तेरन्याय्यत्वात् अदृष्टद्वयकल्पनापादककर्मभेदस्यान्याय्यत्वाच्च एकक्रियावशीकारावगतौ तदन्यथानुपपत्त्या परस्परान्वयः, तत्र किमु वक्तव्यम् ? यत्र अरुणैकहायन्योरिव परस्परापेक्षा, तत्र परस्परान्वयोपपत्तिरिति चेत्—न; भावनायाः अवच्छेदकधात्वर्थं विना विधातुमेव अशक्तेः, अवच्छेदकधात्वर्थस्य च निरूपयितुमशक्यत्वात् । तथा हि—

न तावत् सत्ताया अवच्छेदकत्वम्, तस्याः प्रयोज्यव्यापाररूपत्वेन प्रयोजकव्यापाररूपभावनावच्छेदकत्वानुपपत्तेः । न वा स्तवनपृथकरणं तदवच्छेदकम् । तस्य संख्यासम्पादकत्वेन अन्यथापा-

---

१ तै. सं. १-८-५-१.  २ तै. सं. २-२-४-२

रत्वाभावात् ।

अत एव पवमानोदाहरणे पवनक्रियायाः द्रव्यसंस्कारकत्वेन तद्व्यापारतायावादेव नावच्छेदकत्वम् । न च क्रियान्तरस्यावच्छेदकत्वेऽपि प्रकरणावगतस्तोत्राङ्गभावानामाज्यादिभावनानां अङ्गप्रधानयोः एकदेशन्यायलभ्यस्थापनस्यैव अवच्छेदकत्वसम्भवः । अवच्छेदकावगमं विना भावनाविशेषत्वानवगतौ व्यापारविशेषग्राहिकथम्भावाकाङ्क्षालक्षणप्रकरणेन अङ्गत्वस्यैवानवगतेः ।

न च प्रकरणेन अङ्गत्वानवगमेऽपि 'त्रिवृद्भवति, 'दर्भमयी भवती'त्यादिवत् क्रमेणैवाङ्गत्वसिद्धिः । त्रिवृदादीनां दृष्टविधया रशनोपकारकत्वात् प्रमाणान्तरावगतत्रिवृदादिसम्पादकलौकिकक्रियावच्छेदकत्वोपपत्तेः युक्तं तत्र क्रमेण त्रिवृदादिभावनानां रशनाङ्गत्वम् । प्रकृते तु आज्यादीनां दृष्टविधया स्तोत्रोपकारकत्वाभावात् अदृष्टस्य च व्यापारविशेषं विना अनुपपत्तेः अवच्छेदकाभावेन नाङ्गत्वावगतिसिद्धिः ।

न च प्रथमतोऽवच्छेदकानवगमेऽपि अनवच्छिन्नाज्यादिकरणकभावनायामेव अङ्गत्वोपपत्तेः अवच्छेदकापेक्षायां पश्चादवगतस्यापि स्थापनस्य अवच्छेदकत्वोपपत्तिः, अत एव अभ्युदितेष्टौ भावनान्तरविधिपक्षे स्ववाक्यावच्छेदकाश्रवणादनवच्छिन्नभावनाविधानेऽपि पश्चादवच्छेदकत्वेन वाक्यान्तरविहिताग्नेयादियागः सम्बध्यत एवेति वाच्यम् । अनवच्छिन्नभावनायाः अनुष्ठानायोग्यत्वेन प्रयोगविधिविषयत्वानवगमात् तदविषयीभूतस्य च देशाद्यनन्वयेन समीपस्थापनस्यैवासिद्धेः । तस्मादवच्छेदकाभावेन नोभयविशिष्टभावनाविधिसम्भवः । अतोऽवश्यमाज्याद्यनुवादेनैव अत्र संख्या विधेया । तच्च तदावकल्पते यदि उत्पत्तिवाक्यस्थमाज्यादिपदं स्तोत्रनामेत्यभ्युपगम्यते । तदा च तत्र स्तोत्रमात्रविधानात् गुणवाक्ये च संख्यामात्रविधानात् लाघवम् ।

बहिष्पवमानशब्दस्तु सदसो बहिर्भावस्य आस्तावरूपदेशविधानादेव प्राप्तत्वात् तत्प्रख्यन्यायेनापि नामधेयं तत् ।

गुणवाक्ये त्रिवृच्छब्दस्तु स्तोत्रसामानाधिकरण्यात् त्रिवृद्वाश्ववालाधिकरणन्यायेन स्तोत्रीयानवकपरः। स्तोत्रपरत्वं च पवमानशब्दस्य पवनक्रियाकर्तृसोमप्रकाशकमन्त्रकत्वसम्बन्धेन निरूढलक्षणया नानुपपन्नम् । आज्यादिपदे तु शक्यसम्बन्धाभावात् स्तोत्रसामानाधिकरण्यान्यथानुपपत्त्या अतिरिक्तशक्तिकल्पनमपि वाक्यभेदभिया नातीव दोषमावहति ।

यत्तु आज्यपदस्य'(१)प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत्, ते देवा अन्योन्यस्मा अस्पर्धन्त, तानब्रवीद्, आजिमस्मिन्निति, ते आजिमायन्, यदाजिमीयुः, [आयन्] तदाज्यानामाज्यत्वमित्यर्थवादे यज्ञमुद्दिश्य भोगार्थं स्पर्धमानेषु सत्सु यस्माद्स्मिन् यज्ञे आजिं मर्यादां इत गच्छत इति प्रजापतिना उक्ते ते देवाः एतानि स्तोत्राणि काष्ठां कृत्वा आगताः । तस्मादेतानि आज्यत्वात् आज्यानीत्यन्वाख्यानम् । तदुद्भिदादिपदान्वाख्यानवत् अर्थवादस्य स्वार्थपरत्वे प्रमाणाभावेन तादृशयोगसत्त्वे प्रमाणाभावात् गर्भेर्डोत्स' इतिवत् शक्तिसद्भावदृढीकरणार्थमेव ।

अत्र च आज्यैरित्युत्पत्तिवाक्ये बहुवचनात् संख्यया कर्मभेदः । कर्माणि चात्र चत्वारि । न तु(२) कपिञ्जलाधिकरणन्यायेन त्रीणि । तस्य गमकान्तरसत्त्वे(३) उत्तराद्दोहनवत् अप्रवृत्तेः । अत्र हि चत्वारः तृचा गायत्रसाम्ना गीयमाना आम्नाताः । तेषां च 'पञ्चदशान्याज्यानी' त्यनेन डमत्ययान्तपञ्चदशशब्देन स्तोत्रीयासंख्याकृतस्तुतिसंख्यावाचिना स्तोमविधानात् एकैकस्य तृचस्य पञ्चदशत्वसम्पादनप्रकाराम्नानाच्च चत्वारि स्तोत्राण्यवगम्यन्ते । अत एव पञ्चदशसंख्यापि नात्र बहिष्पवमानवत् पृथक्त्वनिवेशिनी,

---

१ ता. ब्रा. ७-२-१ २ पू. मी. ११-१-४. ३. पू मी. ११-१-५.

अपि तु अभ्याससम्पाद्यैव। आज्यपदञ्च चतुर्णामपि स्तोत्राणां नामधेयम्। उत्पत्तिवाक्ये सामानाधिकरण्यात्। 'पञ्चदशान्याज्यानि' 'पञ्चदशं होतुराज्यम्' 'सप्तदशं मैत्रावरुणस्य, 'एकविंशं ब्राह्मणाच्छंसिनः' 'पञ्चदशमच्छावाकस्य' इत्यादि प्रकृतौ विकृतौ प्रयोगाच्च।

एवं "पृष्ठैः स्तुवत"इत्यत्रापि पृष्ठपदं रूढ्या पृष्ठस्तोत्रनामधेयम्। न हि तत्र स्तोत्रे पृष्ठशब्दप्रवृत्तिनिमित्तकथनार्थोऽर्थवादोऽप्यस्ति।

योऽपि च (१)'आपो वा ऋत्वियमार्च्छन्, तासां वायुः पृष्ठे व्यवर्त्तत, ततो वामं वसु समभवत्, तं मित्रावरुणौ पर्यपश्यताम्, इत्यादिना पृष्ठशब्दान्वाख्यानार्थोऽर्थवादः सोऽपि अग्रे आर्तवयुक्तानामपां पृष्ठे वायोः विवर्तनात्मकमैथुनाभिधानपूर्वकं वामदेव्योत्पत्तिं तत्पदनिर्वचनं चोक्त्वा (२)'तत्पृष्ठेषु न्यदधुः' इत्यनेन वामदेव्यस्य पृष्ठस्तोत्रेषु निवेशमभिधाय[३] 'एतस्या योनेः पृष्ठानि सृजा, इत्यादिना षाडहिकपृष्ठस्तोत्रसाधनानां [४]रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानां षण्णां साम्नां उत्पत्तिं वामदेव्यादुक्त्वा [५]'पिता वै वामदेव्यं, पुत्राः पृष्ठानि, इत्युपसंहारात् रथन्तरादिषु षट्सु पृष्ठशब्दान्वाख्यानार्थः, न तु स्तोत्रनामत्वान्वाख्यानार्थः। अन्वाख्याने च स्पृशेर्धातोः औणादिके थक्प्रत्यये कृते पृष्ठशब्दव्युत्पत्तेः अप्सु वायुमैथुनाख्यस्पर्शोत्पन्नजन्यत्वं प्रवृत्तिनिमित्तम्।

यद्यपि च पृष्ठशब्दस्य अनेकशक्तिकल्पनाभिया रथन्तरादिष्वपि पृष्ठस्तोत्रसाधनत्वसम्बन्धेन लक्षणैव। तथाप्यन्वाख्यानवशात् निरूढलक्षणाङ्गीकारान्न वैयर्थ्यमन्वाख्यानस्य। तत्प्रयोजनं च 'पृष्ठैरुपतिष्ठते' इत्यत्र 'उपान्मन्त्रकरणे'इति स्मृत्यनुसारात् आत्मनेपदानुगत-

---

१ ता. ब्रा. ७-८-१. २ ता. ब्रा. ७-८-२.
३ ता. ब्रा. ७-८-८. ४ ता. ब्रा. ७-९-१.

गुणाभिधानानुरोधेन पृष्ठशब्दस्य स्तोत्रपरत्वानुपपत्तेः लक्षणया पृष्ठ-स्तोत्रसाधनीभूतरथन्तरादिप्राप्तिः । अन्यथा हि साधनत्वाविशेषात् अप्रगीता अपि प्राप्नुयुः । न चैवं गीतिमात्रलक्षणायां तदाधारभूताना-मृचां कथं प्राप्तिः ? साम्नः ऋगक्षराभिव्यक्तिद्वारैव स्तोत्ररूपगुणा-भिधानेऽपि कारणत्वात् योग्यतयैव तदाधारभूतर्ग्द्वारकत्वस्य प्राप्तेः ।

नचैवं उत्तरासामपि प्राप्त्यापत्तिः । 'एकं साम तृचे क्रियते स्तोत्रीय'मिति वचनेन स्तोत्रीयस्यैव साम्नः तृचाधारकत्वविधानात् तत्रैव 'यद्योन्यां गायति तदुत्तरयोर्गायति' इति देशविधानात् अन्य-त्र आम्नानसिद्धयोन्याधारकत्वस्यैवाप्राप्तेः । अतो रथन्तरादी-नामग्नौ प्राप्त्यर्थं इदं तेषु लाक्षणिकान्वाख्यानम्, न स्तोत्रविषयम् ।

न च स्तोत्रविषयत्वासम्भवेऽपि अनन्तरनिर्दिष्टवामदेव्यस्यैव मैथुनोत्पन्नत्वमात्रेणान्वाख्यानोपपत्तिः । तत्र पृष्ठशब्दाप्रयोगात् तदन्वाख्यानवैयर्थ्यात्, "पृष्ठानि सृजा" इति बहुवचनानुपपत्ते-श्च । न च नौधसश्यैतकालेयाभिप्रायो बहुवचननिर्देशः । तेषामिह अप्रयोगात् । तेषु पृष्ठशब्दाप्रयोगाच्च । तस्मात्पृष्ठस्तोत्रेषु अन्वा-ख्यानस्याप्रभावात् शक्तिरेव तत्र पृष्ठशब्दस्य ।

अत्रापि 'आज्यैः स्तुवते' इतिवत् 'पृष्ठैः स्तुवते' इत्युत्पत्तिवाक्ये बहुवचनश्रवणात् संख्यया कर्मभेदः 'आज्यभागौ यजती' तिवदव-गन्तव्यः । तत्र त्वयं विशेषः—'पृष्ठैः स्तुवत' इत्युपक्रम्य षट् ऋच आम्नाताः । (१)'अभि त्वा शूर नो नुम'इत्याद्या, तत्र रथन्तरं साम । (२)'त्वामिद्धि हवामहे'इति द्वितीया, तत्र बृहत् । (३)कया नश्चित्र आ-

१ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ईशानमस्य जगतः स्वर्दृ-शमीशानमिन्द्र तस्थुषः । ( ऋ० सं० ५–३–२१. )

२ त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्प-तिं नरस्त्वां काष्ठास्वर्वतः । ( ऋ० सं० ४–७–२७. )

३ कयानश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता । ( ऋ० सं० ३–६–२४. )

भुव'दिति तृतीया, तत्र वामदेव्यम् । (१)'तं वो दस्ममृतीषह'मिति चतुर्थी, तत्र नौधसम् । (२)'अभि प्र वः सुराधस'मिति पञ्चमी, तत्र श्यैतम् । (३)'तरोभिर्वो विदद्वसु'मिति षष्ठी, तत्र कालेयम् । तत्र 'सप्तदशानि पृष्ठानी'त्यनेन स्तोमविधानात् सप्तदशस्तोमकानि षट् पृष्ठानीत्यवगम्यते, तत्रापि 'बृहद्वा रथन्तरं वा पृष्ठं भवती'त्यनेन वचनेन बृहद्रथन्तरयोर्विकल्पः ।

एवं नौधसश्यैतयोर्विकल्पः । स च रथन्तरपक्षे नौधसम्, बृहत्पक्षे श्यैतमिति व्यवस्थितः ।

तदेवं ज्योतिष्टोमे नियतानि चत्वारि पृष्ठस्तोत्राणि । तेषु च सर्वेषु पृष्ठशब्दो मुख्य एव । आज्यशब्दवदुत्पत्तिवाक्ये सामानाधिकरण्यात् । 'सप्तदशानि पृष्ठानि' 'एकविंशं होतुः पृष्ठम्' 'त्रिणवं मैत्रावरुणस्य,' 'सप्तदशं ब्राह्मणाच्छंसिनः ; 'पञ्चदशमच्छावाकस्य,' इत्यादि प्रकृतौ विकृतौ प्रयोगाच्च । न तु बृहद्रथन्तरसाध्यस्तोत्रद्वय एव माहेन्द्रसंज्ञके पृष्ठशब्दो मुख्यः, अन्यत्र गौण इत्याश्रयणीयम्, प्रमाणाभावात् ।

न चैवं 'कण्वरथन्तरं पृष्ठं भवती'त्यादि वैकृतविधौ प्राकृतसर्वपृष्ठस्तोत्रानुवादेन कण्वरथन्तरादिविध्यापत्तेः माहेन्द्रस्तोत्र एव तन्निवेशसिद्धान्तानुपपत्तिः । "बृहत्पृष्ठं भवति" "रथन्तरं पृष्ठं भवती" त्यादि प्रकृतौ बृहद्रथन्तरयोः पृष्ठसामानाधिकरण्यदर्शनात् विकृतावपि यत्र पृष्ठसामानाधिकरण्यं तस्यापि तुल्यवन्निर्देशरूपप्रकृ-

---

१ तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः। अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे । ( ऋ० सं० ५-६-२२. )

२ अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे । यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति । ( ६-४-१४. )

३ तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये । बृहद्गायन्तः सुत भोगे अध्वरे हुवे भरन्न कारिणम् ( ऋ० सं० ६-४-४८ )

तिलिङ्गेन बृहद्रथन्तरकार्य एव विधानोपपत्तेः । अतश्च यथैव 'उक्थ्यो वैरूपसामे'त्यादौ रथन्तरसामा बृहत्सामेत्यादि तुल्यबहुव्रीह्यन्तनिर्देशरूपप्रकृतलिङ्गेन माहेन्द्रमात्रविषयत्वं (१.)दशमे साधयिष्यते तथैवात्रापि यत्र पृष्ठपदसामानाधिकरण्यं तत्र सर्वत्र माहेन्द्रस्तोत्रविषयत्वमेव ।

अत एव यत्र 'कौत्सं भवती' त्यादौ न पृष्ठपदसामानाधिकरण्यरूपप्रकृतलिङ्गसंयोगः, तत्र कौत्सादिसाम्नां न माहेन्द्रे निवेशः ।

किञ्च "बृहत्पृष्ठं भवति" "रथन्तरं पृष्ठं भवती"ति वाक्ययोः न तावत् पृष्ठस्तोत्रविधिः, उत्पत्तिवाक्यादेव प्राप्तेः । नापि सामविधिः । सामाधारभूतानामृचां अवान्तराधिकाराख्यप्रकरणात् अङ्गत्वावगतौ तदाधेयानां साम्नां सुतरां स्वरूपेण पृष्ठस्तोत्राङ्गत्वेन प्राप्तेः । अतोऽनुवादकेऽस्मिन् वाक्यद्वये पृष्ठसामानाधिकरण्यनिर्देशः स्ववैयर्थ्यपरिहारार्थमपि पृष्ठसामानाधिकरण्यनिर्दिष्टानां कण्वरथन्तरादीनां स्वकार्यापत्तिं गमयति । अनुवादकत्वादेव च अनयोः सामानाधिकरण्यसिद्ध्यर्थं जघन्येऽपि पृष्ठशब्दे साधनलक्षणा नैव विरुध्यते ।

नन्वेवं ज्योतिष्टोमे पृष्ठबहुत्वे सति 'विश्वजित्सर्वपृष्ठो भवती'त्यत्र षाडहिकपृष्ठातिदेशः सप्तमे वक्ष्यमाणो न सिध्येत् । तथा हि—

तत्रेदमुदाहृत्य किमयं पृष्ठशब्दः ज्योतिष्टोमिकपृष्ठानुवादकः ? उत षाडहिकपृष्ठस्तोत्रसाधनीभूतरथन्तरादिषट्सामातिदेशो वेति संदिह्य विश्वजितः अव्यक्तैकाहत्वेन ज्योतिष्टोमप्रकृतिकत्वात् तत्र च "पृष्ठैः स्तुवते" "सप्तदशानि पृष्ठानी"त्यादिना नियतपृष्ठचतुष्टयसत्त्वात् तदनुवाद इति पूर्वपक्षिते प्रकृतौ माहेन्द्रस्तोत्रस्य एकस्यैव पृष्ठत्वात् तदनुवादेन बहुत्वापेक्षसर्वशब्दानुपपत्तेः षडहे च रथन्तरादीनां षण्णां पृष्ठस्तोत्रसाधनीभूतानामर्थवादे पृष्ठशब्दप्रवृत्तिनिमित्तकथनेन मुख्यपृष्ठतुल्यत्वावगतेः तेषामेवातिदेशः । यस्तु 'पृष्ठैः स्तुवते' 'सप्तदशानि पृष्ठानी'ति प्रकृतौ प्रयोगः स पृष्ठापृष्ठसमुदायवत्सु

१ पू. मी. १०-६-७.

चतुर्षु लिङ्गसमवायाद्गौण इत्युक्तम् । अतः कथं ज्योतिष्टोमे पृष्ठ-बहुत्वमिति चेत्—

प्रकृतिस्थबहुवचनस्यापि गौणत्वे प्रमाणाभावात् । विश्व-जिति षाडहिकरथन्तरादिपृष्ठप्राप्तिस्तु प्राकृतानुवादे वैयर्थ्यभियैव (१)सुवचा ।

अत एव तत्र भाष्यकृता (२)'षडहाद्वा तत्र चोदनाः' इति सूत्रे तत्र तस्मिन् पक्षे चोदना सर्वपृष्ठशब्दो विधायको भवति, इतरथा अनुवा-दोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात् इत्येवं व्याकुर्वता अयमेव हेतुर्मूली-कृतः । (३)'लिङ्गदर्शनाच्चे'ति सूत्रव्याख्यानार्थेन च 'पवमाने रथन्तरम्' आर्भवे बृहत्, मध्यत इतराणि, वैरूपं होतुः पृष्ठं, वैराजं मैत्रावरु-णस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य, इति सन्निवेशवि-धिपरे वाक्ये सिद्धवत् षाडहिकसामानुवादरूपलिङ्गोपन्यासेन उपो-द्बलितोऽपि (४)'उत्पन्नाधिकारो ज्योतिष्टोमे' इति सूत्रे भाष्यकारेण वार्तिककारेण च बहुवचनान्तः ज्योतिष्टोमिकः पृष्ठशब्दः लिङ्गसमवा-यात् चतुर्ष्वपि स्तोत्रेषु गौण इत्युक्तम् तदतिशयार्थम् सर्वथा षाड-हिकपृष्ठातिदेश इति ज्ञापयितुम् ।

सूत्रं तु उत्पन्नानां विश्वजिति अतिदेशेनैव अवगताङ्गभावानां अत एव विधानयोग्यानामेव पृष्ठानां ज्योतिष्टोमे अधिकारः, न तु विधानायोग्यानामिति प्रतिपादनार्थं नैव विरुध्यते । अतः साप्तमिका-धिकरणविरोधाभावात् 'पृष्ठैः स्तुवत' इत्युत्पत्तिवाक्यं पृष्ठभेदश्चेति सिद्धम् ।

पार्थसारथिस्तु न ज्योतिष्टोमे पृष्ठबहुत्वम् , साप्तमिकाधिकर-णविरोधप्रसङ्गात् । किन्तु पृष्ठद्वयमेव । तदपि 'बृहत्पृष्ठं

---

१ सुवचैव
२ जै. सू. ७-३-७.
३ जै. सू. ७-३-८.
४ जै. सू. ७-३-९.

भवति, 'रथन्तरं पृष्ठं भवती'त्यनेन विधीयते । अत एव तत्र मुख्यमपि बृहद्रथन्तरपदं स्वार्थसाधनलक्षणार्थमङ्गीकृत्य तद्विशिष्टस्तोत्रद्वयविधिरेवेदं वचनद्वयम् । "पृष्ठैः स्तुवते" इति तु माहेन्द्रादीनां चतुर्णां समुदायानुवादः । तत्प्रयोजनं च पृष्ठशब्दस्य स्तोत्रनामत्वसिद्धिः । अन्यथा ह्युत्पत्तिवाक्ये स्तोत्रसामानाधिकरण्याभावात् सामसमभिव्याहृतमपि पृष्ठपदं किं गुणाभिधानवाचकं, ? उत गुण्यभिधानवाचकमिति सन्देहापत्तिः । यद्यपि तत्रत्यपृष्ठपदं पृष्ठापृष्ठसमुदाये गौणम्, तथापि पृष्ठपदशक्यार्थगवेषणायां समुदायस्य स्तोत्रसामानाधिकरण्यात् तदवयवभूतानां पृष्ठानामपि स्तोत्ररूपतावगतिः न विरुध्यते । एवं "सप्तदशानि पृष्ठानि" इत्यत्र पृष्ठपदेन गौणमुख्यसाधारण्येन स्तोत्राण्यनूद्य तत्र सप्तदशस्तोमकता विधीयते इत्याह—

तन्न; गौणत्वे प्रमाणाभावात् । एकमेव माहेन्द्रस्तोत्रम्, "पृष्ठैः स्तुवत" इत्येवोत्पत्तिवाक्यम्, इत्यादिभाष्यवार्तिकग्रन्थानां त्वयापि पृष्ठीकृतत्वाच्च । "बृहत्पृष्ठं भवति" इत्यत्र मुख्यविधौ च मत्वर्थलक्षणायाः विशिष्टविधिगौरवाश्रयणस्य च अन्याय्यत्वाच्च । अतः अनन्याक्षिप्तशक्तिकं "पृष्ठैःस्तुवत" इत्येवोत्पत्तिवाक्यं सर्वानुपपत्तिपरिहारेणाङ्गीकर्तुं युक्तमित्युत्पश्यामः ।

यत्तु न्यायसुधाकृता—"पृष्ठैः स्तुवत"इत्येवोत्पत्तिवाक्यम्, तेन च एकमेव स्तोत्रं माहेन्द्रसंज्ञकं विधीयते । "बृहत्पृष्ठं भवती"त्यादिना च पृष्ठपदे जघन्ये पृष्ठसाधनलक्षणया एकस्मिन्नेव स्तोत्रे वैकल्पिकसामद्वयविधिः । अतश्च सामविधिवाक्य एव पृष्ठशब्दस्य माहेन्द्रस्तोत्रमात्रपरत्वात् उत्पत्तिवाक्यस्थोऽपि बहुवचनान्तपृष्ठशब्दः लिङ्गसमवायात् पृष्ठापृष्ठसमुदाये गौणः । बहुवचनस्य च प्रचयशिष्टसंख्यानुवादकत्वात् अविधेयत्वेन संख्यायाः"समिधो यजती"त्यादिवत् भेदकत्वशङ्कानुपपत्तेः । अतः प्रमाणान्तरसिद्धस्तोत्रत्रयसहकृतैतद्वाक्यविहितमाहेन्द्रस्तोत्राभिप्रायं पृष्ठैरिति बहुवचनम् ।

एवं "सप्तदशानि पृष्ठानी" त्यत्रापि गौणमुख्यसाधारणपृष्ठानुवादेनैव स्तोमविधिः—इत्युक्तम् ।

तदप्यनेनैव गौणत्वग्राहकप्रमाणाभावेनाऽपास्तम् ।

किञ्च पृष्ठपदस्य माहेन्द्रस्तोत्र एव शक्तिरिति सामविधिबलात् कथमवधारितम् ? तत्र हि क्रियाविशेषसामानाधिकरण्याभावेन स्तोत्रवाचित्वस्यैवानवगतौ तद्विशेषमाहेन्द्रवाचित्वस्य सुतरामनवगतेः । केन तु प्रमाणान्तरेण अभिधानरूपस्तोत्रव्यापारत्वप्राप्तिः ? । न ताद्वाक्यान्तरेण । तस्य त्वयाप्यलिखनात् । नापि तृचाम्नानम् । तस्य (१)गुण्यभिधानव्यापारकत्वेनाप्युपपत्तौ अदृष्टकल्पनापादकगुणाभिधानरूपस्तोत्रव्यापारकल्पकत्वस्य अन्याय्यत्वात् । तथात्वे वा माहेन्द्रस्तोत्रस्यापि तृचाम्नानादेव सिद्धेः 'पृष्ठैः स्तुवत' इत्यस्यापि उत्पत्तिविधित्वाङ्गीकरणं न सङ्गच्छते । अतश्च प्रचयशिष्टसंख्यानुवादासंभवात् विधेयया संख्यया भेदो युक्त एव ।

किञ्चैवमपि पृष्ठप्रातिपदिकस्य गौणत्वकल्पनापेक्षया(२) पाशाधिकरणन्यायेन बहुवचनस्य एकत्वलक्षणया स्तोत्रसम्बन्धोपपत्तौ तदसम्बन्धापादकं गौणत्वकल्पनं नोपपत्तिमत् ।

एवं गुणवाक्येऽपि एकत्वलक्षणया माहेन्द्रस्तोत्र एव स्तोमविधिरापादनीयः । स्तोत्रान्तराणां साधापेक्षायां तु तत्र तृचाम्नानादेव एकत्रिकत्वव त्रिकस्तोमकतायामपि न विरोधः ।

किञ्च पृष्ठस्तोत्रस्य एकत्वे "रथन्तरे प्रस्तूयमाने सम्मीलयेत्" "बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्" इत्यादि बृहद्रथन्तरधर्माणां एकपृष्ठपूर्वासाधनीभूतसाममात्रार्थत्वे प्रकृतावपि साङ्कर्यापत्तिः ।

अथ प्रतिनियतनिर्देशान्यथानुपपत्त्या पृष्ठापूर्वसाधनीभूतरथन्तरादित्वलक्षणया धर्माणां तादर्थ्यम् । तदा कण्वरथन्तरे बृहद्रथन्तरधर्मप्राप्तौ प्रमाणं न पश्यामः । अस्मत्पक्षे तु स्तोत्रभेदात् तज्जन्यापू-

१ गुणानुसन्धान । २ पू. मी. ९-३-५.

र्वभेदोपपत्तेः अपूर्वैक्योऽपि वा स्तोत्रद्वयारम्भकाणां अवान्तरापूर्वा-णां वैजात्यस्यावश्यं कल्पनीयत्वात् तत्साधनसाममात्रार्थत्वविवक्षया प्रकृतौ न तावत् साङ्कर्यम् । कण्वरथन्तरे च प्रकृतावान्तरापूर्वेण्वेव कण्वरथन्तरयोनिजन्यगुणाभिधानानां विधानोपपत्तेः हिरण्यगर्भम-न्त्रवदपूर्वान्तराकल्पनात् तत्साधनीभूते बृहद्रथन्तरधर्मप्राप्त्यविरोधः इत्युक्तं परिसंख्यासूत्रे । विस्तरेणचायमर्थः नवमे उपपादयिष्यते । तस्मात् 'पृष्ठैः स्तुवत' इत्यत्र संख्यया कर्मभेदः । तदनुवादेन च सप्तदशानीत्यत्र स्तोमविधिः । स्तोमोऽपि तेषां आज्यवदभ्यासस्म्पा-द्य एव । न तु पृथक्त्वनिवेशी । पृष्ठपदं च आज्यपदवदेव सर्वेषां नामधेयम् ।

सूत्रन्तु—यस्मिन् चित्रादिशब्दयुक्ते वाक्ये वाक्यभेदापा-दकस्य गुणस्योपदेशः, तत्र प्रधाने कर्मणि अभिसम्बन्धः नामधेयत्वमिति व्याख्येयम् ॥

इति चित्राधिकरणम् ॥ (वाक्यभेदन्यायः)

## (४) अग्निहोत्राधिकरणम् ॥

## सू०—तत्प्रख्यं चान्यशास्त्रम् ॥ १—४—४. (सि)

इह ये रूढाः यौगिकाश्च सम्भावितविधित्सितगुणप्राप्तिकाः श-ब्दाः ते उदाहरणम् । यथा—'अग्निहोत्रं जुहोति' 'आघारमाघारयति' 'य एवं विद्वान् पौर्णमासीं यजते' 'समिधो यजति' 'तनूनपातं यज-ति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिकाः; अत्र अग्नि-होत्रादिशब्दाः विधेयगुणसमर्पकाः ? उत अन्यतः प्राप्तगुणयोगेन धा-त्वर्थविशेषपरिचायकाः सन्तो नामधेयमिति विचारः ।

अत्र पादाध्यायसङ्गतिः पूर्ववत् । अनन्तरसङ्गतिस्तु पूर्वाधिक-रणोक्तवाक्यभेदात्मकगुणविधित्वनिराकरणहेतोरत्राभावेन पूर्वपक्षो-

त्थानात् द्रष्टव्या। नचैवं प्रत्युदाहरणत्वाविशेषात् तद्व्यपदेशाधिकरणस्यापि चित्राधिकरणानन्तरमारम्भप्रसङ्गः। तस्य तत्प्रख्याधिकरणप्रत्युदाहरणत्वेन अनन्तरमपि सङ्गतेस्सत्त्वात्। न हि यस्य यस्य यत्र सङ्गतिः तस्य तस्य तत्राभिधानमिति नियमस्समस्ति। अपि तु यत् यत्राभिधीयते तस्य तत्र सङ्गतिर्वक्तव्या। अतश्च तत्प्रख्याधिकरणस्याभिधीयमानस्य तावत् सङ्गतिसद्भावात् न दोषः। व्याख्यातॄणान्तु एतस्य सङ्गतिसत्त्वेऽपि तद्व्यपदेशस्यापि सङ्गतिसत्त्वात् तदनभिधानकारणप्रतिपादनप्रयासे प्रयतमानानां अभिप्रायं न विद्मः।

तत्र प्रसिध्यादिबलेनैव गुणविधयः। न च यौगिकेषु उद्भिन्न्यायेन नामत्वशङ्का। वक्ष्यमाणरीत्या कर्मणि अग्निदेवताकत्वरूपावयवयोगस्य अप्रसिद्धत्वेन गुणे कर्मणि च तुल्यवद्योगाभावेन उद्भिद्पदवैषम्यात्। अग्निहोत्रपदे बहुव्रीहिसमासान्तर्गताग्निपदस्य रूढ्यैव विधेयसमर्पकत्वेन गुणोपस्थितौ योगस्य अकारणत्वाच्च। अतश्च सोमादिवदेवात्र प्रसिध्यादिभिः गुणविधित्वम्। तथा हि—

यद्यप्यत्र जुहोतेरौणादिके कर्मणि त्रन्प्रत्यये कृते होत्रशब्दव्युत्पत्तेः तस्य च द्रव्यवचनत्वावगमात् अग्निः होत्रं अस्मिन्निति समानाधिकरणबहुव्रीह्ययोगात् व्यधिकरणबहुव्रीह्याश्रयणे च "(१)सप्तमीविशेषणे बहुव्रीहा"विति ज्ञापकबलेन कण्ठे काल इतिवत् कथञ्चित् सप्तमीबहुव्रीहेः लक्षणानुगतावपि अग्न्याख्यस्याधिकरणस्य 'यदाहवनीये जुहोती'त्यनेनैव प्राप्तेः अविधीयमानत्वेन अनाश्रयणीयत्वात्, 'आश्रयणीयस्य च अग्नये होत्रमस्मिन्निति चतुर्थीबहुव्रीहेः न लक्षणानुगतत्वम्, तथापि 'दृष्टानुविधिश्छन्दसी'त्यवलम्बनमाश्रित्य स एवाश्रीयते। नह्यत्र तत्पुरुषस्सम्भवति। जुहोतिसामानाधिकरण्यानुपपत्तेः। षष्ठीतत्पुरुषे सम्बन्धविशेषापरिज्ञानाच्च।

१ पा. सू. २-२-३५.

चतुर्थीतत्पुरुषस्यापि(१) "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इत्यनुशिष्टस्य "प्रकृतिविकारभाव एवेष्टिः" इति स्मृत्या यूपाय दार्वित्यादिवत् प्रकृतिविकाररूपतादर्थ्ये एव नियतत्वात् प्रकृते च द्रव्यदेवतयोः प्रकृतिविकारभावाभावात् शुद्धस्यापि नञर्थे निषेत्स्यमानत्वादसम्भवः ।

सप्तमी तत्पुरुषस्यापि(२) "सप्तमी शौण्डै"रिति शौण्डादिगणे एव नियतत्वात् प्राप्तत्वेन विध्यानर्थक्याच्च असम्भवः। अतस्समासान्तरासम्भवेन पारिशेष्यादपि लक्षणाननुगतस्यापि चतुर्थी बहुव्रीहेराश्रयणम् ।

अत एव तैत्तिरीयशाखायां पठ्यमानः तत्पुरुषस्वरोऽपि अन्तोदात्तरूपः तत्पुरुषासम्भवादेव "सुप्तिङुपग्रहलिङ्गनराणां कालहल्चस्वरकर्तृयङां च, इति स्मरणानुसारेण व्यत्ययरूपतया द्रष्टव्यः। अन्यथा वाजसनेयिनां उभयोरपि समासयोः विसंवादिसर्वोदात्तस्वराम्नानं अनुपपन्नमेव स्यात् । तस्मात् चतुर्थीबहुव्रीह्यङ्गीकरणात् योग्यतया अग्निः देवतात्वेन होमे विधीयते । नचासौ शास्त्रान्तरेण प्राप्तः । तत्प्रतिपादकशास्त्रस्य अभावात्। तथा हि—"यदग्नये च प्रजापतये च सायं जुहोति" इत्येतत् न प्रापकम् । एतस्य देवतामात्रविधायित्वे अग्निहोत्रवाक्ये विधेयान्तराभावाद्धोम एव विधेयः । तद्धोमानुवादेन समुच्चितयोरपि अग्निप्रजापत्योः द्वयोः विधौ वाक्यभेदात् ।

नचात्र चित्राधिकरणपूर्वपक्ष इव विशिष्टैककारकविधिः शाङ्कितुं शक्यम्, विभक्तिभेदात् । न वा कारकद्वयसमुच्चयविधिः। चशब्दोपात्तसमुच्चयस्य विशेष्यत्वानुपपत्तेः ।

अथ (३)"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति"इति मन्त्रविनियोगान्यथानुपपत्तिकल्पितविधित एवाग्नेः प्राप्तत्वात् समुच्चयविशिष्टप्रजापतेरेव यदग्नये चेति वाक्येन विधानमिति मतम् । तत् न, तत्र संख्याविशिष्टाज्यानामिव समुच्चयविशिष्टस्य प्रजापतेरपि प्राप्तेः

---

१. पा. सू. २–१–३६.　२. पा. सू. २–१–४०.　३. तै. ब्रा. २–१–९–२.

होमानुवादेन विधानायोगात् ।

अस्तु तर्हि यदग्नये चेति वाक्येन प्रजापतिमात्रविधानमिति चेत्—न, तथात्वे ब्राह्मणवाक्यगतचतुर्थ्युपात्तप्रजापतिदेवतावरुद्धे मान्त्रवर्णिकदेवतानिवेशायोगात् ऐन्द्रीन्यायेन मन्त्रस्य प्रजापति-प्रकाशकत्वापत्तेः 'अग्नय' इत्युनुवादानुपपत्तेः यदग्नये चेत्यनेन प्रजापतिमात्रविधौ "यत्सूर्याय च प्रजापतये च प्रातः" इति वा-क्येऽपि "सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति प्रातः" इति मान्त्रव-र्णिकविधिप्राप्तसूर्यानुवादेन होमोद्देशेन प्रजापतिमात्रविधानापत्तेः वाक्यद्वयानर्थक्याच्च । तत्तत्कालविशिष्टहोमोद्देशेन देवताविधौ तु विशिष्टोद्देशे वाक्यभेदः स्पष्ट एव ।

अतोऽवश्यं 'यदग्नये चे'ति वाक्यद्वयेऽपि देवताद्वयविशिष्टं काल-विशिष्टं च कर्मान्तरमेव विधेयम् । तत्रैव च 'दध्ना जुहोती' त्यादिना द्रव्यविधिः । 'सायं च प्रातश्च जुहोती' त्यनेन समुच्चयः । 'अग्निर्ज्यो-ति' रिति मन्त्रावपि तत्रैव लिङ्गात् प्राप्नुतः । "अग्निर्ज्योतिः ज्यो-तिः सूर्यः स्वाहेति सायं जुहोति" इत्यादिमिश्रलिङ्गकमन्त्रावपि गौ-णसामर्थ्येन । अन्यत्र सामान्यसम्बन्धबोधकप्रमाणाभावे उत्कर्षायोगात् मुख्यसामर्थ्येन गौणस्य बाधशङ्कानुपपत्तेः । गौणसामर्थ्यादेव च प्राप्नुवतां मन्त्राणां पुनर्विनियोगवचनं तेनैव ज्ञातः अभ्युदयकारीति ज्ञापनार्थम् । तयोश्च होमयोः समुच्चयविधानात् एकमेव फलं कल्प्यते । अतश्च 'अग्निहोत्रं जुहोती' त्यत्र देवताया अविधाने होमस्यैव विधे-यत्वापत्तेः तत्र चाग्नेरप्राप्तत्वेन अनुवादायोगात् नामधेयत्वानुपपत्तेः ।

न च केवललिङ्गकमन्त्रविधेः मुख्यसामर्थ्येन क्लृप्ताग्निहोत्रप्रका-शकत्वानुपपत्तावपि मिश्रलिङ्गकयोः गौणत्वे प्रमाणाभावात् अग्निहो-त्रवाक्यविहितहोमोद्देशेन मान्त्रवर्णिकमिश्रदेवताविधायकत्वोपपत्तिः । तथा सति इन्द्रपीतपदवत् केवलेन अग्निशब्देनानुवादायोगात् , अत एव तत्सम्बन्धेन नामत्वस्याप्ययोगाच्च ; अतः अवश्यं उपपद्दानय-

वार्थोऽपि लोहितोष्णीषादिवत् अग्निरेव देवता होमोद्देशेन विधीयते ।

होमस्तु यद्यपि प्राकरणिकोत्पत्तिशिष्टदेवतान्तरावरोधादेव नोद्देष्टुं शक्यः । तथापि अविहितदेवताकदर्वीहोमानुवादेन अग्निः देवता विधीयते । तेषु हि यत्र तद्धितेन चतुर्थ्या वा अग्निः अन्या वा देवता विहिता तेषु अनेन देवताविधेरशक्यत्वात् यद्यपि तस्य नोद्देश्यत्वम्, तथापि यत्र आग्नेय एव मन्त्रः पठितः तत्र मान्त्रवर्णिकदेवताविधिकल्पनातः पूर्वमेवानेन देवताविधिसम्भवात् तदुद्देशेनैवाग्निर्विधीयते । "अग्निहोत्रं जुहुयात् स्वर्गकामः" "यावज्जीवमग्निहोत्रं जुहोती–" त्यनयोस्तु दर्वीहोमाश्रिताग्निर्देवता फले निमित्ते च विधीयते । सम्भवति हि गुणविध्यर्थमप्यनूद्यमानस्य होमस्य विपरिवर्तमानत्वादाश्रयत्वम् । फलार्थगुणाश्रयत्वं तु 'यदग्नये' 'यत्सूर्याय' इत्येतद्वाक्यविहितहोमद्वयस्यापि नित्यदेवताबाधेन नानुपपन्नम् । तेन दर्वीहोमानुवादेन देवताविधिः ।

अथ वा दर्वीहोमेषु मन्त्रवर्णादेव प्राप्तिसम्भवे पूर्वमपि विधानस्य निष्फलत्वापत्तेः "सायं जुहोति" "प्रातर्जुहोति" इत्यादिवाक्यवैयर्थ्यप्रसङ्गाच्चाग्निहोत्रवाक्ये अग्निदेवताविशिष्टं कर्मान्तरमेव विधीयते । तस्यैव च फलनिमित्तयोर्विधानम् । अग्निहोत्रपदश्च तत्रत्यं बहुव्रीह्यन्तर्निर्दिष्टाग्निदेवताककर्मपरिचयार्थं सत् गुणानुवादकमेव "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते" तिवत्, न तु नामधेयम् । अस्मिंश्च पक्षे 'सायं जुहोती'त्यादिना तत्रैव कालद्वयविधिः, तत्समुच्चयविधिश्च । "दध्ना जुहोती" त्यादिना द्रव्यविधिस्तु "यदग्नये चे"ति वाक्यविहितहोमद्वयेऽपि, आकाङ्क्षाद्यविशेषात् "वेद्यां हवींषी"तिवत् दध्यादिवाक्ये होमशब्दसङ्कोचे प्रमाणाभावाच्च ।

एवं मन्त्रवाक्यानामपि यथासम्भवमुभयत्रान्वयो द्रष्टव्यः । होमद्वयश्चास्मिन् पक्षे सायंप्रातःकालभेदेन व्यवस्थितमग्निहोत्रवाक्यविहितस्य फलवतः कर्मणोऽङ्गमिति नातिरिक्तफलकल्पनापि ॥

एवं आघारवाक्येऽपि आघार्यतेऽसौ आघार इति कर्मव्युत्पत्त्या आघारशब्देन क्षरणसमर्थद्रव्यमाज्यपयःप्रभृति अभिधीयते । नत्वा-घारणमाघारः इति भावव्युत्पत्त्या धात्वर्थनामत्वम् । प्रवृत्तिनिमित्त-भेदाभावेन उद्भिदादिवैषम्यात् नामत्वानुपपत्तेः । अत एव न तदधिकरणेन गतार्थत्वम् । तच्च द्रव्यं द्वितीयासंयोगात् क्षारण-संस्कार्यत्वेनावगम्यमानं निष्प्रयोजनस्य संस्कार्यत्वायोगात् प्रयो-जनमपेक्षमाणं प्राकरणिकेन प्रधानभूतेन द्रव्यापेक्षेण उपांशुयाजेन सम्बध्यते ।

नचैवं संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनायां सक्तुष्व-पि तदापत्तिः । तद्वदेव वा प्रकृतेऽपि विनियोगभङ्ग एव किं न स्यादिति वाच्यम् । क्षारणस्य लोके पानीयादौ पानाद्यर्थं उप-युज्यमाने ईषत्क्षारणदर्शनेन संस्कारकत्वेन क्लृप्तस्य प्रत्यभिज्ञाय-मानत्वात् युक्तं अभिषवयुक्तपूतीकवत् तत्संस्कार्यस्य स्वविनियोग-कल्पकत्वम् । होमस्य तु संस्कारकत्वेनाप्रत्यभिज्ञायमानत्वात् न तत्संस्कार्यस्य स्वविनियोगकल्पकत्वमिति वैषम्यं मन्यते ।

नचैवमपि संस्कारविशिष्टस्यापि द्रव्यस्य "त्रिवृत् बहिष्पवमा-न"मितिवत् प्रकरणेन ग्रहणायोगात् कथमुपांशुयाजाङ्गत्वसम्भवः। इति कर्तव्यताकाङ्क्षालक्षणेन प्रकरणेनान्वयायोगेऽपि उभयाकाङ्क्षासह-कृताधिकाराख्यस्थानेनैव 'त्रिवृत् भवती'त्यादिवत् दृष्टविधयोपकारक-त्वोपपत्तेः । 'त्रिवृत् बहिष्पवमान' मित्यत्र तु न दृष्टविधया स्तोत्रो-पकारकत्वमित्युक्तमेव ।

यद्यपि चोपांशुयाजेऽपि "सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यम्" इत्यनेन सामान्यवाक्येनापि प्रत्यक्षविधिना ध्रौव-स्य विहितत्वात् नोपांशुयाजे निवेशसम्भवः तथापि अनेन आ-ज्यपयःप्रभृतिद्रव्यमात्रे विहिते "सर्वस्मा" इत्यनेनाज्यानुवादेन ध्रौवतामात्रविधानात् विरोधपरिहारोपपत्तिः ।

अथ वा ध्रौवाज्य एव आघारपदेन क्षरणसमर्थत्वमात्रविधानात् पाठक्रमात् सामिधेन्युत्तरक्रियमाणक्षारणाख्यसंस्कारबलेन विलीनत्वप्राप्तावपि प्रधानवेलायां पुनर्घनीभूतत्वसम्भवात् तद्व्यावृत्त्या विलीनत्वप्राप्तिफलकत्वोपपत्तिः ।

एवं "चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य त्रीनितः प्राचीनान् प्रयाजान् यजति" इत्यत्राज्यस्य प्रयाजत्रयसाधनीभूतजौहवस्य एकदेशमाघारशब्दोक्तमुद्दिश्य क्षारणान्तरं विधीयते । अथ वा "आघारमाघारयती" त्यनेन क्षरणसमर्थद्रव्यैकदेशसंस्कारकत्वेन क्षारणे विहिते किं तदिति विशेषजिज्ञासायां "चतुर्गृहीतं वा एतदभूत्" इत्यनेन जौहवचतुर्गृहीतरूपविशेषसमर्पणं "आग्नेयं चतुर्धा करोति" इतिवत् न विरुध्यते । एवञ्च संस्कार्यस्य विनियोगापेक्षायां नाक्लृप्तोपांशुयाजार्थता कल्प्या; किन्तु "चतुर्जुह्वां गृह्णाति" प्रयाजेभ्यस्तदि"ति वाक्यलभ्यादिमप्रयाजत्रयार्थतैवेति लाघवम् ।

"चतुर्गृहीतं वे"त्यत्र चान्यस्य सर्वस्यानूद्यमानत्वात् विशेषसमर्पणमात्रमिति लाघवमस्त्येव । "इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयती" त्यनेन तु "देवस्य त्वेति निर्वपती" तिवत् मन्त्रमात्रं क्षारणसंस्काराङ्गतया विधीयते । न तु मान्त्रवर्णिकदेवताकल्पनम् तद्बलेन यागकल्पनं वा, गौरवप्रसङ्गात् ।

अस्तु वा इतिकरणात्स्पष्टविधिविहितत्वात् सूक्तवाकवत् देवताकल्पकत्वम् तद्बलेन वा यागत्वञ्च, तथापि स्विष्टकृद्वदुभयरूपत्वोपपत्तेः संस्कारकत्वाव्याघातः । न चैतावता आघारपदस्य नामधेयत्वप्रसङ्गः, तथात्वे धात्वर्थस्य करणत्वात् नामधेयस्य तृतीयान्तत्वापत्तेः । अग्निहोत्रपदे चेयं तृतीयान्तत्वापत्तिः नामत्वपक्षे द्रष्टव्या ।

नचोत्पत्तिवाक्यत्वादनयोः तत्र च फलाश्रवणात् भावनायां पदश्रुत्या धात्वर्थस्यैव भाव्यत्वोपपत्तेः नामधेये द्वितीयान्तत्वोपपत्तिः; उत्पत्तिवाक्येऽपि समानाभिधानोपात्तविधिश्रुतिबलेनापुरुषार्थ-

स्य धात्वर्थस्य भाव्यत्वायोगेन सामान्यतो यत्किञ्चिदिष्टस्यैव विधि-बलेनाक्षिप्तस्य भाव्यत्वावगतेः धात्वर्थस्य फलवाक्य इव पदश्रुत्या करणत्वेनैवान्वयाभ्युपगमेन नामधेयस्य द्वितीयान्तत्वानुपपत्तेः ।

गुणविधिपक्षे तु—अग्निहोत्रवाक्ये होमानुवादेन गुणविधिपक्षे तस्य साध्यत्वात्, विशिष्टविधिपक्षेऽपि च विशेषणविधिवेलायां साध्य-भूतेनैव तेन गुणान्वयात् द्वितीयोपपत्तिः । आघारवाक्ये तु संस्कार्य-त्वादेव द्वितीयोपपत्तिः स्पष्टैव ।

एवं रूढेष्वपि "य एवं विद्वानि" त्यादिषु पौर्णमास्यमावास्या-दिशब्दैः कालो विधीयते । स च यद्यपि आग्नेयाद्युत्पत्तिवाक्ये प्राप्तत्वादेव न विधातुं योग्यः । तथापि प्रयाजाद्यनुवादेन विधीय-मानो न दोषमावहति । द्वितीया चात्र सप्तम्यर्थे वाक्यानुवादत्व-परिहारार्थं द्रष्टव्या ।

एवं फलवाक्येऽपि दर्शपूर्णमासपदवाच्यः काल एव फले सर्वप्रकृतयागाश्रितो विधीयत इति द्रष्टव्यम् ।

समिदादिपदानां तु "विष्णुं यजती" तिवत् देवताविधायकत्वम् । न च मन्त्रवर्णेन देवतायाः प्राप्तत्वात् विधानानुपपत्तिः । मान्त्रवर्णि-कदेवताकल्पनातः पूर्वमेव विधानोपपत्तेराकाङ्क्षाविरहेण तस्यैवा-कल्पनात् । तस्मात् रूढेष्वपि गुणविधित्वम् ।

यत्तु मूले यौगिकानामेवोदाहरणत्वमित्युक्तम्, तत्र रूढेष्वपि तत्प्रख्यन्यायस्य बहुशो व्युत्पादितत्वात् अनादरेणेति द्रष्टव्यम् । तस्मात् प्रसिद्ध्यादिभिरेवैते विधयो गुणसमर्पका इति प्राप्ते—

अभिधीयते—यत्र प्रमाणान्तरेण विधित्सितस्य प्राप्तिस्सं-भाव्यते तत्र तद्विधिवैयर्थ्यादेव नामधेयत्वाध्यवसानम् । तथा हि—द-र्वीहोमानुवादेन तावत् गुणविधौ तेषु आग्नेयमन्त्रबलेनैव देवता-प्राप्तिसम्भवे पुनरनेन तद्विधिवैयर्थ्यम् । यत्र तु मन्त्रोऽपि नाम्नातः यथा—"यदाहवनीये जुहोती" त्यादौ तत्र गुण एव विधिशक्तेरसङ्क्का-

न्तत्वान्नैव होमविधानम् । यत्र तु अनुपादेयरूपगुणयोगः यथा—"भिन्ने जुहोती" त्यादौ तत्र कर्मविध्यवस्थ्यंभावेऽपि प्रमाणान्तरेण देवताप्राप्तिसम्भवात् तदनुवादेनाग्निहोत्रवाक्ये न देवताविधिः ।

विशिष्टविधिपक्षस्तु विशेषणस्य सम्भवत्प्राप्तिकत्वे पुनर्विधानवैयर्थ्यादेव निराकर्तव्यः । तथा हि—

"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"ति केवललिङ्गकमन्त्रपाठबलादेव उपांशुयाजवत् देवताप्राप्तिस्संभवत्येवेति तद्विधिकल्पनातः पूर्वमेव एतद्विधिप्रवृत्तेः न किञ्चित् प्रयोजनं पश्यामः । अभ्युदयाशिरस्कत्वस्यापि अनन्यगतिकत्वेन सत्यां विधिलाघवापादकधात्वर्थमात्रविधानेन गतौ गुणविधेरनाश्रयणीयत्वात् । अत एव केवललिङ्गकमन्त्रपाठबलादेव उपांशुयाजवत् देवताप्राप्तिसम्भवेन मन्त्रविनियोजकविधेः तत्कालीनप्रयोगविषयत्वस्य व्यवस्थार्थत्वेनैवोपपत्तिः । अन्यथा हि यदग्नये चेतिवाक्यविहितकर्मसम्बन्धे लिङ्गादेव व्यवस्थासिद्धेः मन्त्रविनियोजकविधिर्वैयर्थ्यम् । मिश्रलिङ्गकमन्त्रयोः गौणत्वमप्यस्मिन् पक्षे निष्प्रमाणकमापद्यते । अतो यदग्नये चेति वाक्ययोः न देवताद्वयविशिष्टकर्मविधानम् ।

नापि समुच्चितदेवताद्वयविधिः ; वाक्यभेदप्रसङ्गात् । अपि तु मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन होममुद्दिश्य लाघवात् प्रजापतिमात्रविधानम् ।

नचैवं ब्राह्मणगतचतुर्थ्या प्रजापतेर्विधाने मन्त्राणामैन्द्रीन्यायेन गौणत्वापत्तेः देवताकल्पकत्वानापत्तिः, कथञ्चिद्वा कल्पकत्वाङ्गीकारेऽपि अग्निसूर्याभ्यां प्रजापतेर्विकल्पापत्तिश्चेति वाच्यम् । (१)"अग्नेः पूर्वाहुतिः, प्रजापतेरुत्तरा" इतिक्रमविध्यन्यथानुपपत्त्यैव सिद्धौ तद्बलेनैन्द्रीन्यायानुपपत्तेः । अत एव ब्राह्मणगतोऽपि प्रजापतिशब्दः प्रजानां पतिरिति व्युत्पत्त्या "पात्नीवतं ग्रहं गृह्णाती"तिवत् यौ-

---

१ तै० ब्रा० २-१-२-१०.

गिकः तस्य च विशेष्यापेक्षायां मन्त्रवर्णेनाग्न्यादेर्विशेष्यस्य समर्पणं स्यात् (१)"अग्ना इ पत्नीवा" इत्यादिवत् इत्यापादयितुमप्यशक्यम्। क्रमविध्यन्यथानुपपत्त्या देवताद्वित्वस्यैवावगमात् ।

नचैवं होमोद्देशेन प्रजापतिमात्रविधाने तस्य सायं प्रातःकालयोरावृत्त्या प्रजापतेरपि दध्यादिवदावृत्तिसिद्धेः वाक्यद्वयवैयर्थ्यापत्तिः। सायंप्रातःकालरूपीनिमित्तसम्बन्धार्थत्वेन वाक्यद्वयसार्थक्योपपत्तेः । तत्प्रयोजनञ्च उपसदनन्तरकर्तव्यमासाग्निहोत्रे सायंप्रातःकालयोरभावात् प्रजापतिनिवृत्तिः ।

वस्तुतस्तु यदग्नयेचेति वाक्ये अग्निसमुच्चयविशिष्टप्रजापतिविधानेऽपि नाग्न्यंशे विशेषणविधिकल्पनया विधानम्; मन्त्रवर्णादेव प्राप्तेः ।

एवं 'यत्सूर्याय चे'त्यत्रापि अग्निसूर्यसमुच्चयवैशिष्ट्यस्य च तत्तत्काल एव प्राप्तेः सायंप्रातःपदमनुवादः । लक्षणया तत्तत्कालीनहोमोद्देश्यतापरं वा। धातुस्तु साधुत्वार्थमनूद्यते । ततश्च तत्समुच्चयवैशिष्ट्यार्थमेव वाक्यद्वयमिति नानर्थक्यम्। न च क्रमविध्यन्यथानुपपत्त्या समुच्चयसिद्धेः विधिवैयर्थ्यम् । वैकल्पिकत्वेऽपि प्रयोगभेदेन पूर्वोत्तरभावविधायकत्वोपपत्तेः ।

अतः एकस्मिन् प्रयोगे समुच्चयविधानोपपत्तेः तयोश्च 'यदग्नये चे' ति पाठक्रमादेव क्रमोपपत्तेः वस्तुतः क्रमवाक्यमनुवाद एव । संख्याविशिष्टाज्यानामिव समुच्चयविशिष्टप्रजापतेरपि प्राप्तभावनानुवादेन विधानायोगः । पञ्चदशसंख्याया हि कारकत्वात् तस्य च प्राथमिकभावनासम्बन्धं विना अनुपपत्तेः प्राप्तभावनानुवादेन उभयसम्बन्धे युक्तो वाक्यभेदः । चशब्दोपात्तसमुच्चयस्य तु अकारकत्वात् नित्यं च समभिव्याहृतपदार्थविशेषणत्वप्रतीतेः तद्द्वारेणैव च भावनान्वयोपपत्तेः न वाक्यभेदः ।

१. तै. सं. १-४-२७.

तस्मात् मन्त्रवर्णप्राप्ताग्निसूर्यानूद्य तत्समुच्चयविशिष्टप्रजापतिविधानमेव युक्तमुत्पश्यामः ।

यत्त्वत्र मान्त्रवर्णिकदेवताविधानपक्षे ज्योतिर्गुणविशिष्टयोरेवाग्निसूर्ययोः देवतात्वमिति कैश्चिदुक्तम्, तत् (१)धूम एवाग्नेर्दिवा ददृशे, नार्चिः । तस्मात् दिवाग्निरादित्यं गतः रात्रावादित्यस्तम्" इत्याद्यर्थवादानुसारात् उपांशुयाजे "विष्णुरुपांशु यष्टव्यः" इति वाक्यशेषानुसारेण मन्त्रवर्णगतदेवतात्वादिगुणवैशिष्ट्यमकल्पयित्वैव निर्गुणानामेव विष्ण्वादीनां देवतात्वकल्पनवत् लाघवात् निर्गुणयोरेवाग्निसूर्ययोः देवतात्वकल्पनोपपत्तेरपास्तम् ।

ननु—"यदग्नये चे"ति वाक्ययोरग्निसूर्यसमुच्चयविशिष्टप्रजापतिविधानस्योपजीव्यत्वात् केवललिङ्गकमन्त्रयोः देवताकल्पकत्वोपपत्तावपि मिश्रलिङ्गकयोरनुपजीव्यत्वात् तत्कल्पकत्वे मानाभावः । यथाकथञ्चित् कल्पकत्वाङ्गीकारेऽपि वा प्रजापतिसमुच्चयसिद्धौ प्रमाणाभावः इति चेत्—

न ; यदग्नये चेति वाक्यस्थयोः अग्निसूर्यपदयोः सायंप्रातःकालीनदेवतामात्रोपलक्षणत्वाङ्गीकरणात् । अन्यथा मिश्रलिङ्गकमन्त्रयोः गौणत्वापत्तेः गौण्या वृत्त्या सायंप्रातःकालीनाग्निप्रकाशकत्वेनैव व्यवस्थासिद्धेः विनियोगवैयर्थ्यञ्च । सायंप्रातःकालीनाग्निसूर्यसमुच्चयवशेनैव प्रजापतेरुभयकालिकत्वोपपत्तेः तद्वाक्यगतसायंप्रातःपदवैयर्थ्यप्रसङ्गाच्च । अतो वरमनुवादत्वादग्निसूर्यपदयोरेव तत्तत्कालीनदेवतामात्रोपलक्षणत्वाङ्गीकरणेन तत्समुच्चयविशिष्टप्रजापतिमात्रविधानमिति ।

यत्तु न्यायसुधाकृता—यथाश्रुतभाष्यानु(२)सारेण यदग्नये चेति वाक्ययोरेवाग्निसूर्ययोरेव विधानम् ; न तु मन्त्रवर्णकल्प्यविधिबलात् अग्निसूर्ययोः प्राप्तिः, गौरवापत्तेः । न चैवं प्राप्तकर्मानुवादेन

---

१ तै० ब्रा० २-१-७. २. सारिणा.

देवताद्वयविधौ वाक्यभेदः, प्रत्येककारकविभक्त्यन्तपदद्वयोपात्तस्यापि देवताद्वयस्य चशब्दसमभिव्याहारात् परस्परसापेक्षत्वप्रतीतेः आख्याताऽन्वययौगपद्येनाख्यातवृत्तेरभावात् वाक्यभेदानापत्तेः । चादीनां हि निपातोपसर्गाणां पृथक् पदत्वेन वाचकत्वेऽपि केवलाप्रयोगित्वेन स्वातन्त्र्येण तदर्थस्य भावनाविशेषणत्वाभावात् नित्यं समभिव्याहृतपदार्थविशेषणत्वप्रतीतेः पदार्थान्तरार्थस्यापि च चाद्यर्थान्वयं विना पदान्तरोपात्तभावनान्वयायोगात् चशब्दसमभिव्याहारात् इतरेतरसहितयोरेव अग्निप्रजापत्योः भावनान्वयप्रतीतिरिति नावृत्तिप्रसङ्गः ।

नचैवमपि अग्नीषोमीयादिवत् व्यासज्यवृत्तिदेवतात्वापत्तिः ; पृथक् चतुर्थीनिर्देशेन इतरेतरनिरपेक्षयोरेव देवतात्वप्रतीतेः । पदान्तरसम्बन्धे हि चशब्दात् साहित्यं प्रतीयते, न विभक्तिसम्बन्धे ; तत्सम्बन्धात्प्राक् अपरिपूर्णस्य पदस्य पदान्तरेण चशब्देन अन्वयानुपपत्तेः ।

तदेवं निपातोपसर्गाणां वाचकत्वाङ्गीकारेऽपि वाक्यभेदः परिहृतः । यदा तु तेषां द्योतकत्वं तदा तत्समभिव्याहृतस्य एकस्यैव पदस्य विशिष्टार्थवाचकत्वम्, समभिव्याहृतेतरपदानां तु तात्पर्यग्राहकत्वमित्यङ्गीकारात् प्रजापतिपदेनैव अग्निदेवतानिरूपितसमुच्चयविशिष्टप्रजापत्यभिधानात् विशिष्टार्थविधानोपपत्तेः चतुर्थ्यन्ताग्निपदस्य चशब्दस्य च तात्पर्यग्राहकत्वेन विधिव्यापारत्वाभावेऽपि वैयर्थ्याभावात् एकपदार्थविधानात् सुतरां न वाक्यभेदः ।

अत एव दशमे"—ऋत्विग्भ्यो दक्षिणां ददाति" इत्यनेन आनतिमात्ररूपायाः दक्षिणायाः ऋत्विगानमनार्थत्वेन प्राप्तत्वात् तदनुवादेन "(१)गौश्चाश्वश्च"इत्यादि "तस्य द्वादश शतं दक्षिणा।"इत्यन्तेन परस्परसहितानां गवादिपदार्थानां विधानमङ्गीकृत्य भूसंज्ञिकायां विकृतौ धेनुर्दक्षिणाकार्ये विधीयमाना सर्वेषामेव तत्कार्यसाधनानां ग-

१. ता. ब्रा. १६-१-१०.

वाश्वादीनां निवर्तिका, न तु धेनुशब्देन गोमात्रवृत्तिगुणवाचिना प्रकृतिलिङ्गसंयोगाद् गवामेव। प्रकृतौ गवादीनां प्रत्येकमानतिसाधनत्वे सादृश्याद् गोरेव निवर्तिका धेनुः स्याद्, नत्वेतदस्ति, गवाश्वादीनां चशब्दबलेन परस्परसहितानामेव प्राप्तदक्षिणासम्बन्धानुवादेन समुच्चितानामेव साधनत्वावगमाद् । न चैवमपि वाक्यभेदः, चशब्दान्वयात् पूर्वं हि गवादीनामुपादेयत्वेनापि दक्षिणासम्बन्धे प्राप्तानुवादेन अनेकविधाने वाक्यभेदो भवेत् । गवादीनामुद्देश्यत्वे वा चशब्दोपात्तस्यापि साहित्यस्याविवक्षापत्तेः स्यादनेकोद्देश्यतानिमित्तो वाक्यभेदः । परस्परसहितानामेवोपादेयत्वे तु नास्य प्रसक्तिरित्युक्तम् । तस्माद् तद्वदेव यदग्नये चेत्यनेनापि प्राप्ते कर्मणि देवताद्वयविधिर्नानुपपन्नः ।

नचैवं ब्राह्मणवाक्येनैव देवताद्वयस्य सायंप्रातःकालकृतव्यवस्थासिद्धेः केवललिङ्गकमन्त्रद्वयस्य च तत्तल्लिङ्गादेव प्राप्तिसिद्धेः तद्विनियोगविधिवैयर्थ्यम् । मिश्रलिङ्गकमन्त्रयोः प्रत्यक्षविधिविनियुक्तत्वेन लिङ्गविनियुक्तमन्त्रापेक्षया प्राबल्यात् ताभ्यां पर्युदस्तयोः केवललिङ्गकयोः प्रतिप्रसवार्थं विधिसार्थक्योपपत्ते—रित्युक्तम् ।

तन्न; अग्निप्रजापतिप्रातिपदिकयोः विभक्त्यन्वयात् प्रागेव चशब्दान्वयोऽभ्युपगम्यते ? तदुत्तरं वा ? नाद्यः, समुच्चितयोः देवतात्वापत्तेः विभक्तिद्वयवैयर्थ्याच्च । नान्त्यः; बलवत्तरकारकश्रुतिबलेन क्रियासम्बन्धस्यैव झटिति प्रतीयमानत्वेन तस्यैवापत्तेः वाक्यभेदस्य परिहर्तुमशक्यत्वाद् । अन्यथा विद्वद्वाक्यविहितकर्मानुवादेन तद्भिन्नत्वा परस्परसापेक्षत्वेनावगतयोः द्रव्यदेवतयोः सहितयोरेव विधानोपपत्तेः सुतरां वाक्यभेदानापत्तेः । अश्व "गौश्चाश्वश्च" इत्यादौ प्रथमान्तत्वेन कारकविभक्त्यन्तराभावाद् दक्षिणाशब्दान्वयाद् पूर्वमेव चशब्दान्वये नैव किञ्चित् बाधकमस्ति ।

वस्तुतस्तु अत्र प्राप्तकर्मानुवादेन समुच्चितगवादिविधानरूपद्र-

न्यविधानसम्भवेऽपि द्वादशशतसंख्याया अपि विधेयत्वात् वाक्यभेदस्य परिहर्तुमशक्यत्वेन द्रव्यसंख्योभयविशिष्टदक्षिणाविधिरेवाश्रीयते।

नचैवं 'तस्य द्वादशशत'मित्यत्र तच्छब्दवैयर्थ्यापत्तिः। द्रव्यसंख्ययोरारुण्यैकहायनीन्यायेन तद्विरहेऽपि पार्ष्टिकमन्वयोपपत्तेरिति वाच्यम्। एकवचनान्ततच्छब्दश्रवणाभावे संख्यायाः सर्वद्रव्यनिवेशापत्तेः मुख्यगोमात्रनिवेशनप्रयोजनत्वेन तच्छब्दसार्थक्यस्य दशमे वक्ष्यमाणत्वात् तस्य चानतिसाधनत्वरूपस्य दक्षिणात्वस्य सामर्थ्यादेव कर्मकरर्त्विगर्थत्वसिद्धावपि तद्भिन्नचमसाध्वर्यूणामपि कर्मकर्तृत्वाविशेषात् तेभ्योऽपि दानप्रसक्तौ "ऋत्विग्भ्यो दक्षिणां ददाति" इत्यनेन गवादिद्रव्यं तेभ्यः परिसंख्यायते। अतो 'गौश्चाश्वश्चे'त्यत्र वाक्यभेदप्रसक्त्यभावात् चशब्दवशेन समुच्चितानां साधनत्वेन प्रतीतावपि न तत्तुल्यत्वं "यदग्नये च" इत्यादेः।

यदपि निपातोपसर्गाणां द्योतकत्वात् समभिव्याहृतपदस्यैव विशिष्टवाचकत्वं अन्येषां तु तात्पर्यग्राहकत्वमित्युक्तम्। तदपि न, तत्तन्निपातोपसर्गादिसमभिव्याहारे तत्तत्पदेषु तत्तद्विशिष्टार्थविषयकशक्तिकल्पने तत्तत्समभिव्याहाराभावे च शुद्धार्थविषयकशक्तिकल्पने निपातादीनां द्योतकताशक्तिकल्पने च गौरवप्रसङ्गेन द्योतकत्वपक्षस्यानभिमतत्वात्। अत एव तत्र तत्र ज्ञानादिपदेष्वपि लक्षणावाचोयुक्तिः सङ्गच्छते।

यदपि च केवललिङ्गकमन्त्रविनियोगविधेः मिश्रलिङ्गकविधिपर्युदासप्रतिप्रसवार्थत्वमित्युक्तम्। तन्न; मिश्रलिङ्गकमन्त्रयोः स्वतन्त्रदेवताकल्पकत्वं वा अभिप्रेतम्? गौण्या वृत्त्या अग्निसूर्यप्रकाशकत्वमेव वा? नाद्यः; तथात्वे वैकल्पिककेवलदेवताग्निसूर्यप्रकाशकत्वेनैव केवलदेवत्यमन्त्रयोः विनियोगोपपत्तेः भिन्नविषयमिश्रलिङ्गविधिना पर्युदासासम्भवात् केवललिङ्गकविधेः प्रतिप्रसवार्थत्वानुपपत्तेः तद्वैय-

र्थापत्तेश्च । मिश्रलिङ्गकमन्त्रस्थयोः जघन्यसूर्याग्निपदयोः गौण्या वृत्त्या सायंप्रातःकालीनाग्निसूर्यप्रकाशकत्वस्य विधिं विनापि सिद्धेः विनियोगवैयर्थ्यात् ।

अत एव पूषानुमन्त्रणमन्त्रवत् उत्कर्षे प्राप्ते तद्व्यावृत्त्यर्थं वचनमित्यपास्तम् । यागानुमन्त्रणसमाख्यावत् इह मिश्रलिङ्गकयोः सामान्यसम्बन्धबोधकप्रमाणाभावेन उभयदेवत्यकर्मद्वयस्य च अप्रसिद्धत्वेन उत्कर्षासिद्धेः । अतो ब्राह्मणेन सूर्याग्निविधानाभिधानं आघाराग्निहोत्राधिकरणवार्त्तिकविरुद्धं न्यायसुधाकृतोऽनादरणीयमेवेति केवललिङ्गकमन्त्रवर्णपाठबलादेव तत्प्राप्तिः ।

अतश्च मन्त्रवर्णप्राप्तस्याग्नेः अग्निहोत्रपदेन विधानायोगात् विधेयान्तराभावेन च जुहोत्यभिधेयस्य होमत्वस्य विधेयत्वात् तस्यैव अग्निदेवताकत्वसम्बन्धेन अग्निहोत्रपदं नामधेयम् । अग्निहोत्रपदञ्च अस्मिन् पक्षे "(१)हुयामाश्रुभसिभ्यस्त्रन्" इत्यनेन यात्राशब्दवत् "(२)उणादयो बहुलम्" इत्येतदनुसारात् होत्रशब्दं भावे त्रन्नन्तं व्याख्याय अग्नेः होत्रपदवाच्यो होमः अग्निहोत्रमित्येवं व्युत्पत्त्या तैत्तिरीयशाखाधीतस्वरसंवादात् प्रमाणान्तरसिद्धदेवतात्वाख्यसम्बन्धविशेषलक्षणया षष्ठीतत्पुरुष एव । इष्यते च प्रकृतिविकारभावाभावेऽपि प्रमाणान्तरसिद्धत्वादर्थ्याख्यसम्बन्धविशेषलक्षणया षष्ठीतत्पुरुषोऽश्वघासादौ ।

न चैवं पूर्वपक्षेऽपि लक्षणाद्यनुगतः षष्ठीतत्पुरुषसमास एव किं नाश्रीयत इति वाच्यम् । सम्बन्धविशेषस्य प्रमाणान्तरेण सिद्धेः, यस्तु भाष्यकारेण सिद्धान्ते लक्षणस्वराद्यननुगतोऽपि चतुर्थीबहुव्रीहिः, न्यायसुधाकृता च षष्ठीबहुव्रीहिः, सः तत्र होत्रशब्दस्य कर्मव्युत्पत्त्या द्रव्यवाचित्वं इत्यभिप्रायेण द्रष्टव्यः ।

यदपि च कैश्चित् अग्नौ होत्रमस्मिन् इति लक्षणानुगतः सप्तमीबहुव्रीहिरेवाश्रयणीयः इत्युक्तम्; तत् तत्पुरुषे लाघवात्, स्वरा-

१. उ. सू. ६१७. २. पा. सू. ३. ३. १.

नुगमाच्च, मासाग्निहोत्रे चाग्निदेवताकत्वप्रसिद्धेः गौण्या वृत्त्या धर्ममात्रोपदेशकत्वोपपत्तेः, अग्न्यधिकरणकत्वस्य तु मासाग्निहोत्रेऽपि "यदाहवनीये जुहोती"त्यनेनैव प्राप्तेः प्रायणीयपदवत् अतिदेशकत्वानुपपत्तिप्रसङ्गात् उपेक्षितम् ।

यद्यपि च आहवनीय एवाहुतिद्वयं, नापरयोरित्यस्मिन् पक्षे प्रातर्होमप्रयोगे अग्निदेवताकत्वाभावात् नेदं प्रवृत्तिनिमित्तमेतद्वाक्यविहितहोमत्वावच्छिन्ने सम्भवति, तथापि षडाहुतिपक्षदशाहुतिपक्षयोः आपराग्निकहोमाभ्यासे प्रातःप्रयोगे अग्निदेवताकत्वस्य सत्वात् प्रवृत्तिनिमित्तत्वाविघातः। एकस्यैव होमस्य सायंप्रातःकालाधिकरणकदेवतासमुच्चयानुरोधेन ज्योतिष्टोमवदभ्यासेऽपि कर्मभेदाभावेन विजातीयहोमत्वावच्छिन्ने सामानाधिकरण्यसम्बन्धेनाग्निदेवताकत्वाच्च । वक्ष्यते चैकदेशप्रवृत्तिनिमित्तेनापि तत्प्रख्यन्यायेन नामधेयत्वोपपत्तिः वैश्वदेवाधिकरणे। अतिप्रसङ्गनिराकरणं उद्भित्पदवत् सर्वत्र द्रष्टव्यम् । अतश्च सिद्धमग्निहोत्रपदस्य नामत्वम् । एवञ्च फलनिमित्तकालद्रव्यदेवतावाक्येषु फलादिसम्बन्धः अग्निहोत्रसंज्ञकस्य नानुपपन्नः ॥

आघारवाक्येऽपि आघारशब्दस्य भावव्युत्पत्त्या कर्मनामत्वाङ्गीकारेण प्रथमविधिप्रकारसम्भवे द्वितीयविधिप्रकाराङ्गीकरणं, तद्बलेन चोपांशुयाजे विनियोगकल्पनं चात्यन्तानुपपन्नमेव । उपांशुयाजे प्रत्यक्षशिष्टध्रौवाज्यस्य तद्गतविलीनत्वस्य च(१) "सर्पिराज्यं प्रतीयाद" इत्यनेन प्राप्तत्वाद् विधातुमशक्तेश्च ।

अत एव सान्नाय्योपांशुयाजाङ्गभूतद्रव्योद्देशेन संस्कारविधिरित्यपास्तम्', द्वितीयविधिप्रकाराङ्गीकरणापत्तेः । अत एव चतुर्गृहीतं वेत्यनेन संस्कार्यविशेषसमर्पणमित्यप्यपास्तम् । 'तस्याघारमाघार्य' इत्येतावतैवाभीष्टसिद्धेः एतद्वाक्यस्थाघारपदस्य वैयर्थ्यापत्तेश्च । एतद्वाक्ये क्षरणान्तरविधानन्तु भेदकप्रमा-

---

१ आप० श्रौ० २४-१-२५.

णाभावादेवायुक्तम् । आघारवाक्ये विनियोगभङ्गकल्पनया द्रव्यविशिष्टक्षारणविधानं तु पञ्चप्रविधिप्रकारापत्तेः द्रव्यस्य चतुर्गृहीतवाक्यादेव प्राप्तत्वात् अयुक्तम् ।

अत एव "इन्द्र ऊर्ध्व" इत्यनेनैव मान्त्रवर्णिकदेवताप्राप्तेः यागत्वकल्पनया होमत्वसिद्धेः तन्नामधेयाघारपदस्य प्रवृत्तिनिमित्तभेदात् न तदैक्यमादाय नामधेयवैयर्थ्यमाशङ्कनीयम् । अस्ति च होमेऽपि प्रक्षेपांशेन क्षारणात्मकत्वमिति पूर्ववदेव प्रवृत्तिनिमित्तोपपत्तिः ।

अयञ्च यागः स्विष्टकृद्वदेव त्यागांशेनारादुपकारकोऽपि प्रक्षेपांशेनाग्रप्रयाजत्रयसाधनीभूताज्यसंस्कारकत्वात् सन्निपत्योपकारकोऽपि स्वीक्रियते । सन्निपत्योपकारकत्वसम्भवे अंशेऽप्यारादुपकारकत्वकल्पनस्य तद्वदेवान्याय्यत्वात् ।

अत एव "तस्याघारमाघार्य" इति सम्बन्धसामान्यवाचिन्यपि षष्ठी "आज्यस्य यजति" तिवद् न गुणत्वरूपसम्बन्धविशेषपरा । अपि तु भाव्युपयोगित्वात् प्राधान्यपरैव । अतश्च आघारोत्तरमपि जौहवनाशे प्रयाजार्थं तदुत्पादने पुनराघारकरणम्; विकृतिषु च वाचनिकप्रयाजपर्युदासे उत्तराघारनिवृत्तिरिति । नचैवं संस्कारकर्मत्वे तस्य संस्कार्यनिरूपणाधीननिरूपणत्वात् तेनैवावच्छेदकसिद्धौ अवच्छेदकान्तरानपेक्षणात् नामधेयानर्थक्यम् । उद्भिदादिवत् सत्यप्यवच्छेदकान्तरे नामाम्नानवशेनैव एतदवच्छेदकस्याभ्युदयशिरस्कत्वकल्पनया "अंशुं गृह्णाति" "अदाभ्यं गृह्णाति" इत्यादिवत् संस्कारकर्मण्यपि नामार्थवत्त्वोपपत्तेरिति न्यायसुधाकारः ।

वस्तुतस्तु संस्कारकर्मत्वे द्रव्यसम्बन्धांशेऽस्य अपूर्वविधित्वापत्तेः लघुभूतनियमविधित्वापादकं 'तस्ये' ति षष्ठ्या गुणत्वपरत्वमङ्गीकृत्य आरादुपकारकत्वमेव प्रयाजादिवत् युक्तमाश्रयितुम् । अत एव उद्देशप्रक्षेपत्यागसमुदायरूपस्य होमस्यैव एकस्य पदार्थस्य विधेयत्वात् अवयवभेदमङ्गीकृत्य भाव्युपयोगाङ्गीकरणमपि अन्याय्यमेव । स्विष्टकृदादौ तु न सामवायिकत्वलाभार्थं तदङ्गीकरणम् । अपि तु

दृष्टार्थत्वलाभायैव । प्रकृते तु संस्कारकर्मत्वेऽप्यदृष्टकल्पनायाः आवश्यकत्वात् साध्यभेदो निष्प्रमाणकः । अतश्च तुषोपवापवत् प्रप्रयुक्तद्रव्योपजीवित्वेऽपि संस्कारकर्मत्वाभावात् नोक्तफलसिद्धिः । विकृतिषु वाचनिकप्रयाजपर्युदासे परं यत्किञ्चिदाज्येनाभिघारणेऽपि न जौहवोत्पादनम्, कपालवत् परप्रयुक्तत्वात् । परप्रयुक्तत्वञ्च चतुर्गृहीतवाक्ये प्रयाजत्रयसाधनानुवादैर्वयर्थ्यभिया अवगम्यत इति न किञ्चिदनुपपन्नम् ।

नन्वेवं प्रक्षेपांशेनारादुपकारकत्वेऽपि उद्देशांशेन सान्नाय्याङ्गभूतेन्द्रदेवतास्मरणार्थत्वेन दृष्टार्थत्वोपपत्तेः स्वाहाकारोत्तमप्रयाजानूयाजवदेव सन्निपत्योपकारकत्वोपपत्तिः । न च सान्नाय्ये महेन्द्रदेवताया अपि वैकल्पिकत्वासत्त्वात् कथमिन्द्रमात्रस्मारकत्वोपपत्तिः । प्रोक्षणादिवत् सान्नाय्यापूर्वसाधनीभूतदेवतामात्रस्मरणार्थत्वकल्पनया आघारहोमसम्बन्धिदेवतोद्देशेन सान्नाय्यसम्बन्धिदेवताद्वयस्यापि स्मरणोपपत्तेः । अतश्च यद्यपि (१)व्रीहिणां मेध सुमनस्यमानः" इति मन्त्रस्य यवप्रयोग इव महेन्द्रप्रयोगेऽपि "इन्द्र ऊर्जो अध्वर" इत्यस्य लोपेऽपि 'महेन्द्रायेदं न मम' इत्यनेन देवतोद्देशेनैव सान्नाय्यदेवतास्मरणोपपत्तेरिति चेत्—

न ; मन्त्रवर्णस्यैवावोद्देशकल्पकत्वेन कल्पकलोपे तल्लोपस्यैव न्याय्यत्वात् । "ता एता एकादशाहुतयो भवन्ति—द्वावाघारौ, पञ्च प्रयाजाः,द्वावाज्यभागौ,आग्नेयः,(२)तद्दशा उपांशुयाजः,अग्नीषोमीयः पुरोडाशः, स्विष्टकृत् , इडा, त्रयोऽनूयाजाः, सूक्तवाकः, शंयुवाकश्च, यत्पत्नीसंयाजेषु स्रुगादीयते, समिष्टयजुश्चे"ति शतपथश्रुतिगतेन प्रकरणसनाथेन लिङ्गेन पौर्णमास्या(३)मपि विधानाच्च, अतश्च आरादुपकारक एवाघारो नामधेयञ्च तस्याघारपदमिति सिद्धम् । एवञ्च आघाराग्निहोत्रपदयोः तत्प्रख्यापकशास्त्रान्तरसद्भावेन गुणविधित्वासम्भवे सिद्धे धातुसन्निभिव्याहारात् तन्नामत्वे चावधारिते सामाना-

१ तै. ब्रा. ३-७-५-३. २ ते दश । ३ ममावास्या ।

धिकरणार्थं द्वितीयाऽपि तृतीयार्थलक्षिकेसङ्गीक्रियते । न च शक्य-सम्बन्धाभावः । धात्वर्थे असाधितस्य करणत्वानुपपत्तेः कर्मत्वस्याऽपि सत्वात् एकार्थसमवायसम्बन्धेन विधिसामर्थ्यावगतकरणत्वलक्ष(१)-कत्वोपपत्तेः ।

एवं दर्शपूर्णमासवाक्येऽपि आग्नेयादिवाक्येषु कालयागयोरुभयोर-पि प्राप्तौ भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसम्बन्धकरणेन गुणफलसम्बन्धानुपपत्तिः । यत्र धात्वर्थः प्राप्तः गुणश्चाप्राप्तः तत्रैव गुणफलसम्बन्धः भावार्थाधिकरणापवादेन, न तु यत्र गुणोऽपि प्राप्तः ।

अत एव(२)"ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथा-पूर्वं प्रजाः कल्पेरन्" इति वाक्येन ऐन्द्रवायवाग्रतारूपगुणः न फलार्थं विधीयते, अपि तु ग्रहणान्येवेत्युक्तं दशमे । ततो यागानामेव फलस-म्बन्धात् तेषां च उत्पत्तिवाक्यप्राप्तकालसम्बन्धिलक्षणया दर्शपूर्ण-मासपदं नामधेयम् ।

एवं समिदादिपदमपि मन्त्रवर्णादेव समिदादिदेवतायाः प्राप्तत्वात् लक्षणया नामधेयमेव ।

(३)"य एवं विद्वानि"ति वाक्यद्वयेऽपि प्रयाजानुवादेन वैकल्पिक-कालद्वयाविधानशङ्कापि एतद्विध्यभावे फलवाक्ये सर्वेषामेकफलसाध-नत्वेनावगतानां यागानां सहप्रयोगाऽवगमात् आग्नेयादिसांहित्या-नुरोधेन पौर्णमास्यां अमावास्यायां वा प्रयाजादीनां अनुष्ठानोपपत्तेः विधिवैयर्थ्यप्रसङ्गादेव निराकर्तव्या । तस्मात् तदपि त्रिकस्य त्रिकस्य नामधेयम् ।

सूत्रं तु गुणप्रख्यापकशास्त्रान्तरयुक्तं यत् पूर्वाधिकरणद्वयावि-षयीभूतं तदपि नामधेयमिति व्याख्येयम् ।

इत्यग्निहोत्राधिकरणम् ॥ ४ ॥ ( तत्प्रख्यन्यायः )

---

१ लक्षणोपपत्तेः   २ तै. सं. ७-२-७-१   ३. तै. सं. १-६-९-१.

## ( ५ ) तद्व्यपदेशाधिकरणम् ।

### सू–तद्व्यपदेशं च ॥ १–४–५. ॥ ( सि )

"अथैष श्येनेनाभिचरन् यजेत" "अथैष सन्दंशेनाभिचरन् यजेत" "अथैष गवाभिचरन् यजेत"इत्यादिषु श्रुताः श्येनादिशब्दाः गुणविधयः कर्मनामधेयानि वेति विचार्यते। तत्र प्रसिद्ध्यादिभिर्गुणविधित्वम्। न चात्र उद्भिन्न्यायावतारः,तस्य सोमदध्यादिवत् रूढ्यप्रवृत्तेः। नापि वाक्यभेदः ; येन चित्राधिकरणन्यायप्रवृत्तिः शंक्येत । अत एव तत्प्रख्यशास्त्रान्तरसद्भावाद न पूर्वाधिकरणविषयत्वम्, तेन प्रत्युदाहरणरूपेण पूर्वपक्षोत्थानाद अनन्तरा सङ्गतिरपि सिद्धा भवति । तत्रापि फलोद्देशेन गुणविशिष्टकर्मविधानम् ।

नचैवमपि "यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन" इत्यर्थवादोपात्तश्येनसादृश्यस्य श्येन एवासम्भवाद श्येनशब्दस्य गौण्या वृत्त्या यागपरत्वं परिकल्प्य प्रसिद्धश्येनसादृश्योपपादनार्थं यागनामत्वं स्वीक्रियतामिति वाच्यम् । विशेषणांशे प्रसिद्धस्य श्येनसादृश्यस्याभेदादनुपपद्यमानत्वेऽपि विशेष्यांशे तस्योपपन्नतरत्वेन नामत्वासाधकत्वात् ।

अथ वा एतस्य वाक्यजातस्य ज्योतिष्टोमप्रकरणे पाठाद कर्मभेदकप्रमाणाभावेन विशिष्टविधित्वानुपपत्तेः ज्योतिष्टोमाश्रित एव गुणः फलाय विधीयते "दध्नेन्द्रियकामस्य जुहुयाद्"इतिवत् । न चैतस्मिन्नपि पक्षे तर्हि गुणस्यैव विधेयत्वेन स्तोतव्यत्वात् स्वस्यैव स्वोपमानत्वानुपपत्तिः । "(१)रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादिवदौपचारिककालव्यक्तिकृतभेदकल्पनया उपमानान्तराभावलक्षणया वा स्तुत्युपपत्तेः ।

न च तर्हि स एव दोषः । उपक्रमस्थविध्युद्देशवर्तिश्येनपदस्य

---

१ श्रीमद्वाल्मी० यु. ११०-२४.

गुणत्वकल्पनापेक्षया उपसंहारस्थार्थवादे तदङ्गीकरणस्यान्याय्य-त्वात् । न ह्यत्र विध्युद्देशः सन्दिग्धः, येन वाक्यशेषेण निर्णीयेत । एतदभावे "सोमेन यजेत" इत्यादिवत् गुणविधित्वस्य त्वयाप्यङ्गीकार्य-त्वात् । अतो विरोधात् उपक्रमस्य प्राबल्येनार्थवादे अन्यथानयनं न दोषः ।

वस्तुतस्तु उपमानान्तराभावद्योतकस्य उपमेये उपमानत्वकथ-नरूपानन्वयालङ्कारस्याभेदेऽनुगुणत्वमेव । अत एव "ते तद्विलासा इव तद्विलासा" इत्यादौ अभेद एव अनन्वयालङ्कारोदाहरणं सङ्गच्छते । अतो निर्मूलैव नामत्वोक्तिरिति प्राप्ते—

अभिधीयते—विशिष्टकर्मान्तरविधिस्तावद् भेदकप्रमाणाभा-वादेवायुक्तः, गुणफलसम्बन्धविधिस्तु उपमानासम्भवादेव निराक-र्तव्यः । यद्यपि चेयं स्तुतिः नात्यन्तस्वार्थसत्यत्वमपेक्षते, तथापि आलम्बनापेक्षत्वात् नोपमानस्य भेदं विनोपपत्तिः, नचौपचारिक-भेदकल्पना रामरावणयोरित्यत्रेवाशङ्कनीया । एकस्या एव व्यक्तेः कालभेदेन उपमानत्वकल्पने तावत् यथा अनेन पूर्वं निपत्य मांसादानं कृतं तथा वैरिणोऽप्यादानं क्रियते इत्यर्थस्यापत्तेः आदत्त इति लटः भूतकाललक्षणा, यथैवंशब्दाभ्यां समभिव्याहृतयोः श्येनपदसर्वनाम्नोः भिन्नार्थकत्वेन प्रतीयमानयोः एकार्थत्वकल्पनेत्यनेकत्र दोषकल्पनाप-त्तेः वरमेकत्रैवोपक्रमस्थेऽपि श्येनपदे लघुभूतद्वितीयविधिप्रकारापा-दिका निरूढा गौणी युक्ता आश्रयितुम् । अत एव जघन्यानामपि भूयसामनुग्रहो न्याय्यः । मुख्यानुग्रहश्च समसङ्ख्याविषय इति द्वादशे वक्ष्यते ।

एवमेकस्मिन्नपि कार्ये व्यक्तिभेदेन उपमानकल्पनायां श्येन-पदसर्वनाम्नोः श्येनत्वावच्छिन्नोपस्थापकयोः ग्राह्यतदितरव्यक्तिल-क्षकत्वम्, पुनश्च विधेयतावच्छेदकश्येनत्वावच्छिन्नस्य स्तुत्यभावः इत्यनेकत्र दोषः ।

वस्तुतस्तु "रामरावणयोरिव" इत्यत्र नैव औपचारिकभेदकल्पनया उपमानोपपादनम्, रसविघातापत्तेः। किन्तु उपमानाभावलक्षणया अनन्याचरितत्वख्यापनमेव। अतश्च तद्वदेवात्र उपमानालक्षणया अनन्याचरितत्वख्यापनमेव। अतश्च तद्वदेवात्र उपमानान्तराभावलक्षणायां पूर्ववदेवात्र अनेकेषु पदेषु लक्षणेति। नचोपमान्तराभावस्य व्यञ्जनयैवोपस्थितेः न लक्षणेति वाच्यम्। तस्याः वृत्यन्तरत्वे प्रमाणाभावात्। अत एवास्मन्मते अनन्वयालङ्कारस्थलेऽपि तात्पर्यानुरोधेन लक्षणैवेति ध्येयम्। अतः प्रकृते अनेकेषु पदेषु लक्षणापत्तेः एकस्मिन्नेव वरं मुख्येऽपि श्येनपदे एका निरूढा गौणी। सापि च भिन्नयोः आहार्यभेदकथनात्मकरूपकविधयैवेति केचित्।

वस्तुतस्तु वेदे आरोपकपुरुषाभावात् न क्वापि रूपकम्। अतस्साधारणधर्मवाचिपदाभावात् लुप्तोपमारूपेयं गौणी। तत्र च प्रसिद्धश्येनातिरिक्तं तत्सदृशञ्च यागरूपमपि अभिचाररूपफलजनकं श्येनपदप्रतिपाद्यमित्येतावदत्रगम्यते। ज्योतिष्टोमस्य संज्ञान्तरावरोधात् तत्त्वानुपपत्तेः गौणसंज्ञयैव कर्मान्तरत्वसिद्धिः।

नचैवं सर्वत्र जघन्यवृत्तिस्थले अतिप्रसङ्गनिराकरणस्य पदान्तरसमभिव्याहाराद्यवगततात्पर्यबलादेव सिद्धेः सिद्धान्ते रूढ्यङ्गीकरणप्रयोजनाभावः। "समानमितरत् श्येनेन" इत्यादौ प्रसिद्धश्येनयागोपस्थितिप्रयोजकत्वात्। अत एव दर्शपूर्णमासादिपदे लाक्षणिकेऽपि निरूढ्यङ्गीकरणप्रयोजनं "मासं दर्शपूर्णमासाभ्या"मित्यादिषु गौणत्वसिद्धिः। तस्मिन् हि सति मुख्यत्वाविशेषात् अपरत्र गौणी वृत्तिर्युज्यते, नान्यथा। अर्थवादस्तु श्येनपदस्थगौण्यपेक्षितसादृश्योप(१)स्थापनार्थस्सन् विनैव लक्षणां उपमानोपमेयसाधारणधर्मसादृश्यवाचकपदैः पूर्णत्वात् पूर्णोपमाविधया विधेययागस्तुत्यर्थो न विरुध्यते। अतस्सिद्धमुपमानव्यपदेशानुरोधेन श्येनपदं ना-

१ पपादनार्थं।

मधेयम् ।

एवमुत्तरयोरपि "यथा वै सन्दंशेन दुरादानमादत्ते" इति "यथा वै गावो गोपायन्ति" इतिचार्थवादिकोपमानवशेनैव नामधेयत्वमनुमन्तव्यम् । अतश्च सिद्धं श्येनादिपदानां नामधेयत्वमिति ।

सूत्रं तु विधित्सितगुणोपमानव्यपदेशयुक्तं चशब्दात् मत्वर्थलक्षणापादककर्मान्तरत्वग्राहिप्रमाणशून्यं च यत् श्येनादिपदं तदपि नामधेयमिति व्याख्येयम् ॥

तदेवं मत्वर्थलक्षणा, वाक्यभेद, तत्प्रख्य, तद्व्यपदेशाख्यैः चतुर्भिरेव प्रकारैस्सर्वत्र नामधेयत्वमुन्नेयम् । न त्वेतेभ्योऽन्यः प्रकारोऽस्ति । विशिष्य चायमर्थो(१) वैश्वदेवाधिकरणे निरूपयिष्यते । अत एव(२) "अथैष ज्योतिः "(३)अथैष सर्वज्योति" रित्यादावपि यद्यपि प्रथमानिर्दिष्टे ज्योतिरादिपदे द्रव्यस्य क्रतुवाचकपदसमभिव्याहाराभावे तदङ्गत्वेन विनियोक्तुमशक्तेः प्रकरणेन च सिद्धरूपस्याविनियोगात् "एतेन सहस्रदक्षिणेन यजेत" त्यनेनैव विनियोगसम्भवे क्रमेणापि विनियोगाकरणात् क्रमेणैव च विनियोगे एतद्विधिवैयर्थ्यापत्तेः ज्योतिष्टोमयागानुवादेन ज्योतिरादिपदोपनीताः गुणाः एतच्छब्देन विधीयन्ते इत्याशङ्का जायते तथापि एतच्छब्दपरामृष्टानां गुणानां सहस्रदक्षिणायाश्च प्राप्तकर्मानुवादेन विधाने वाक्यभेदापत्तेः चित्रान्यायेन नामधेयत्वम् ।

न च वाक्यभेदापादकगुणादेव कर्मान्तरत्वोपपत्तेः तस्यैव गुणद्वयविशिष्टस्य विधौ वाक्यभेदाभावात् न चित्रान्याय इति वाच्यम् । विधिगौरवापादककर्मान्तरत्वकल्पनापेक्षया नामधेयत्वस्यैव न्याय्यत्वात । अतश्च नामत्वकल्पकत्वात् तद्बलेनैव विधिलाघवापादकं कर्मान्तरत्वकल्पनमुचितमिति नामत्वमेव न्याय्यम् । एतदभिप्रायेणैव न्यायसुधाकृता ज्योतिरादिशब्दानां उद्भिदाद्य-

१ पू. मी. १. ४-६ २ ता० ब्रा० १६-८-१. ३ ता. ब्रा.१६-९-१.

धिकरणेषु यथासम्भवं निवेशो भविष्यतीत्युक्तमिति तस्मिन् बहु-भाषितत्वमात्रारोपेण दोषाभिधानं भ्रम एव ॥

एवं वैश्वदेववद्दर्वीहोमादिपदानामपि तत्प्रख्यन्यायादेव नामधेय-त्वम् । वैश्वदेवाधिकरणे तदेव वैश्वदेवपदस्याक्षिप्य समाधीयते । अ-ष्टमादौ इह सिद्धमेव नामधेयत्वमपूर्वत्वविचारार्थं प्रसङ्गात् स्मार्यत इति न पौनरुक्त्यमपीति सर्वमनवद्यम् ॥

इति पञ्चमं तद्व्यपदेशाधिकरणम् ॥

## अथ षष्ठं वाजपेयाधिकरणम् (६) ॥

### सू—नामधेये गुणश्रुतेः स्यात् विधानमिति चेत् ॥ १–४–६ ॥ ( पू )

इह पूर्वाधिकरणे सूत्रगतचशब्दसूचितमत्वर्थलक्षणादोष एवाक्षिप्य समाधीयते "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयशब्दः गुणविधिः कर्मनामधेयं वेति विचारः । तत्र वाजपेयशब्दो यवागू-रूपपेयान्नवचनस्सन् प्रसिद्ध्यादिभिर्गुणविधिः । न च मत्वर्थलक्षणा, यागस्य करणत्वानभ्युपगमात् । यदि करणत्वमभ्युपगम्येत ततो गु-णस्यापि करणत्वात् करणयोरन्वयार्थं भवेत् मत्वर्थलक्षणा । न तु तदभ्युपगमे प्रमाणमस्ति । यजेतेत्यत्र श्रुत्या लक्षणया वा करणत्व-स्यानुक्तत्वात् । कथं तर्हि अनीप्सितस्य यागस्य प्रत्ययार्थरूपायां भा-वनायां अन्वयः । नह्यत्र भावनानङ्गीकारेण वैयाकरणवत् पूर्वपक्ष-स्सम्भवति । तस्याः प्रधानभूतायाः भावार्थाधिकरणे साधयिष्यमा-णत्वात् । कथञ्चैवं सति इतरकारकाणामन्वयः? उच्यते—

धात्वर्थ एव सर्वेषां कर्मकरणसम्प्रदानानामन्वयः । न तु भावनायाम् । तस्या यत्नरूपत्वेन द्रव्यादिजन्यत्वासम्भवात् । धात्वर्थद्वारकत्वाश्रयणापेक्षया साक्षात् धात्वर्थान्वयस्यैव न्याय्यत्वाच्च । अतस्सर्वाण्यपि कारकाणि भावनासम्बन्धसमनादृत्य धात्वर्थेनैवान्वीयन्ते । सोऽपि च कारकान्वयित्वात् न स्वयं कारकलोपः । अपि तु यथैव सिद्धान्ते सकलकारकान्विता भावना क्रियारूपैव सती प्रत्ययेनाभिधीयते, तथास्मिन् मते धात्वर्थोऽपि क्रियारूपत्वेनैव धातुनाभिधीयते । अत एव न भावनावद्व कर्मत्वकरणत्वादिकृतवैरूप्यमपि । अतश्च सकलकारकविशिष्टो धात्वर्थोऽपि प्रधानभूतायां भावनायां करणत्वसम्बन्धेन नान्वीयते। अपि तु सम्बन्धसामान्येनैव । अत एव "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इत्यनुशासनमपि सम्बन्धसामान्याभिप्रायकं सङ्गच्छते ।

नचैवमपि सम्बन्धसामान्यस्य वाक्यार्थविधयैव भानोपपत्तेः तत्राप्यनुशासनवैयर्थ्यम् । एतद्बलादेव प्रकृत्यर्थान्वयस्य शक्त्या निरूढलक्षणया वा पदार्थविधयैव भानाङ्गीकारात् । न च भावनायाः कारकरूपत्वे जनकत्वेन गुणत्वापत्तेः प्राधान्याभावप्रसङ्गात् क्रियारूपायां तस्यां कारकातिरिक्तस्यान्वयानुपपत्तिः इत्यत्र किञ्चित् प्रमाणमस्ति । "(१)एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा" इत्यादौ क्रियाद्वयस्य कारकत्वातिरिक्तेनापि पूर्वकालत्वादिना सम्बन्धेन शतशोऽन्वयाङ्गीकारात् । अतश्चोल्लेखोऽपि यजेतत्येवमाकारक एव सम्बन्धसामान्येनेति न विरोधः । तदापि कारकाणां धात्वर्थसम्बन्धमेवाभ्युपगम्य तस्य भावनान्वय उपपादितः ।

अथ वा अस्तु प्रधानान्वयस्याभ्यर्हितत्वात् कारकाणां भावनायामेवान्वयः । न चैतावता यागस्यापि कारकत्वात् तस्य पूर्वोक्तविधया सम्बन्धोपपत्तेः न कर्मत्वकरणत्वादिकृतवैरूप्यापत्तिः ।

---

१. ता. ब्रा. १७-७-१.

शाब्दबोधे युगपत् प्रतीत्यङ्गीकारे हि वैरूप्यं दोषः। न तु वस्तुत एकस्मिन् अर्थे धर्मद्वयाङ्गीकारे; भिन्नप्रतियोगित्वेन तस्यादोषत्वात्। अतश्च एकस्मिन्नेव यागे वस्तुतो गुणादिनिरूपिते कर्मत्वे फलादिनिरूपिते च करणत्वे विद्यमानेऽपि तयोश्शाब्दबोधे प्रतीत्यभावात् न वैरूप्यापत्तिः। अतश्च धात्वर्थस्य गुणत्वेनानवगमात् तत्र कारकीभूतगुणान्वयार्थं न मत्वर्थलक्षणापत्तिः। अत एव उद्भिदाद्युदाहरणेऽपि विशिष्टविधिपक्षे मत्वर्थलक्षणाया दोषत्वेनोक्तत्वात् तत्रापि मत्वर्थलक्षणोद्धारोपपत्तेः तदप्यत्रोदाहरणम्। यागानुवादेन गुणविधिरिति पूर्वपक्षेऽपि विशिष्टविधावेव यानि जन्यविधिप्रकाराद्याश्रयणापत्तिरूपाणि दूषणानि तेषां तत्र सम्बन्धाङ्गीकारेऽपि उद्धर्तुमशक्यत्वात् न तदाक्षेपार्थमिदमधिकरणम्।

चित्राधिकरणेऽपि चित्रत्वस्त्रीत्वावच्छिन्ने द्रव्यविशिष्टकर्मान्तरविधिपक्षेऽपि मत्वर्थलक्षणादोषस्याप्युद्धावयितुमशक्यत्वात् तदुद्धारार्थमपीदमधिकरणमिति तदप्यत्रोदाहरणम्।

वाक्यभेदाद्युद्धारस्तु गुणद्वयस्य यागान्वये तन्त्रत्वोपपत्तावपि विध्यन्वयस्य तन्त्रत्वे प्रमाणाभावात् विध्यावृत्तिप्रसङ्गेन (१)अशक्य एव।

एवं "आज्यैः स्तुवत" इत्युत्पत्तिवाक्येऽपि आज्यविशिष्टस्तोत्रविधाने मत्वर्थलक्षणादोषस्याप्युद्धावितत्वात् तदुद्धारार्थमप्येतदधिकरणम्। आज्यप्रकाशकमन्त्रलक्षणादिदोषस्योद्धारस्तु तत्राप्यशक्य एव। "पञ्चदशान्याज्यानी" त्यत्र तु सामानाधिकरण्येनान्वयस्य विशिष्टविधावपि मत्वर्थलक्षणां विनैवोपपत्तेः आज्यानां च द्रव्यत्वेन क्रियान्वयस्य शङ्कितुमप्यशक्यत्वेन तदुद्धारस्याप्यशक्तेः न तस्योदाहरणत्वम्।

एवमग्निहोत्रशब्दोऽपि नोदाहरणम्। तत्र बहुव्रीहिणैव मत्व-

१. अनाशंक्य एव।

र्थस्योपादानेन विशिष्टविधिपक्षे मत्वर्थलक्षणाया अप्रसक्तत्वात् । न चैवं वाजपेयपदेऽपि वाजं पेयमस्मिन्निति बहुव्रीह्यन्तत्वाविशेषात् तल्लक्षणापत्तेः अप्रसक्तोद्धारायोगेन अस्योदाहरणत्वानुपपत्तिः। बहुव्रीह्यपेक्षया वाजं च तत् पेयं चेति कर्मधारयस्य लघुत्वेनाश्रयणीयत्वात् । तदा च कर्मसामानाधिकरण्यार्थं मत्वर्थलक्षणायाः प्रसक्तत्वेन तदुद्धारोपपत्तेः ।

यस्तु अग्निहोत्रशब्दे तत्प्रख्यन्यायः, स नैवोद्धर्तुं शक्यः । न हि तन्त्रसम्बन्धेऽपि मान्त्रवर्णिकदेवताप्राप्तिः निराकर्तुं शक्यते ।

यत्तु—अत्र न्यायसुधाकृता स्वमतवासनया यदग्नये चेति शास्त्रस्य देवताप्रापकत्वं तन्त्रसम्बन्धपक्षे कर्मान्तरत्वापत्तेः न सम्भवतीत्युक्तम् । तत् तन्त्रसम्बन्धाङ्गीकारेऽपि प्रकृतकर्मप्रत्यभिज्ञानात् कर्मान्तरत्वे प्रमाणाभावादयुक्तं इत्युपेक्षितम् ।

नचैवं तत्प्रख्यन्यायस्यानुद्धारे वाजपेयशब्देऽपि (१)"सुराग्रहान् गृह्णाती" त्यनेनैव सुरारूपपानार्हान्नद्रव्यस्य प्राप्तत्वात् कथं तद्विधानोपपत्तिः ? सुरोद्देशेन ग्रहणाख्यसंस्कारविधानेऽपि सुराविनियोगविधेरत्राभावेन वाजपेयशब्देन सुरारूपयवागूविध्युपपत्तेः ।

श्येनशब्दे तु चशब्देनैव विशिष्टविधिपक्षे मत्वर्थलक्षणायास्सूचितत्वात् तदुद्धारोपपत्तेः उदाहरणत्वं युक्तमेव । तद्व्यपदेशन्यायस्तु नैवोद्धर्तुं शक्यत इति सर्वत्रैव मत्वर्थलक्षणामात्रस्यैवोद्धारात् सर्वाण्यप्युद्भिदादीनि यथासम्भवमुदाहर्तव्यानि । नचैवं अत्रापि वाजपेयोदाहरणवैयर्थ्यम् । वक्ष्यमाणतन्मात्रवृत्तिदीक्षोपसद्रूपलिङ्गदर्शनानुरोधेन तस्योदाहृतत्वात् । अतो नामधेयत्वेनाभिमते सर्वस्मिन्नप्युद्भिदादिशब्दे गुणविधिपक्षे श्रुत्यर्थविधानासम्भवेन मत्वर्थलक्षणादोषस्याभावात् गुणविधानमेव युक्तमिति सूत्रार्थः ।

---

१. तै. ब्रा. १-३-३-३.

## सू—तुल्यत्वात् क्रिययोर्न ॥१—४—७॥ (सि)

नैते गुणविधयः, अग्निमसूत्रोक्तरीत्या तन्त्रसम्बन्धासम्भवात् । वाजपेयोदाहरणे तु अयमपरो विशेषः । यदि यवागूरूपगुणविधानं औषधद्रव्यकविध्यन्तापत्तेः सोमयागक्रियायाः वाजपेययागक्रिया-याश्च परस्परं प्रकृतिविकाराभावेन तुल्यत्वापत्तेः सौमिकदीक्षोप-सत्प्राप्त्यभावेन तत्र "सप्तदशदीक्षो वाजपेयः" "सप्तदशोपसत्को वाज-पेयः" इति संख्याविधानात् दीक्षोपसदामनुवादो नावक्लप्तेन, नाम-धेयत्वे तु अव्यक्तत्वेन सौमिकविध्यन्तप्रवृत्तेः युक्तस्तदनुवादः ।

नचैवं गुणविधिपक्षेऽपि अव्यक्तत्वानपायात् सौमिकविध्यन्त-प्रवृत्तिस्तुल्येति वाच्यम् । देवताघटितसादृश्यस्यैव बलवत्तायाः अष्टमे स्थापयिष्यमाणत्वेन गुणविधिपक्ष ऐष्टिकविध्यन्तस्यैव प्रस-क्तेः । अतो लिङ्गबलादपि वाजपेयशब्दो नामधेयम् ॥

## सू—ऐकशब्द्ये परार्थवत् ॥ १—४—८ ॥

न धात्वर्थे कारकाणामन्वयः, प्रधानभूतभावनान्वये सम्भवति गुणभूतान्वयस्यान्याय्यत्वात् । अत एव यत्र प्रधानभूता भावना नास्त्येव, यथा—घटो भवतीत्यादौ, तत्र धात्वर्थ एव कारकान्वय इति प्राचां मते वक्ष्यते । तत्राख्यातलक्ष्ये आश्रयत्वादावेवान्वय इति तु नव्याः ।

यत्र तु भावनासर्वापेक्षया प्रधानाभूता, यथा—आख्याते, यत्र वा द्रव्याद्यपेक्षया गुणत्वे विद्यमानेऽपि धात्वर्थापेक्षया प्राधा-न्यस्वीकारः, यथा—पक्तेत्यादौ कृदन्ते, तत्र प्रधानत्वात् भावना-यामेव कारकान्वयः, न धात्वर्थे । सोऽपि भावनायां न सम्बन्धसामा-न्येन, अपि तु पचति पाकं करोति, पाकेन ओदनं निष्पादयति

इत्यादिविवरणात् कारकत्वेनैव ।

यदपि च पाकस्य कृतिः पाकस्य भावना इत्यादिषष्ठ्या विव-रणम् , तदपि कृद्योगे कर्मणि षष्ठीत्येवं कर्मकारकत्वार्थकमेव । अ-तश्च विधिसमभिव्याहारसत्वे धात्वर्थस्यापि अपुरुषार्थस्य करणत्वे-नैव भावनान्वयः, तदभावे पुरुषार्थत्वावगतौ वा कर्मत्वेनैवेति न सम्बन्धसामान्येनान्वयः, अत एव "सह ब्रूत" इत्यनुशासनमपि कारकत्वरूपान्वयस्य पदार्थविधया भाननियमपरम् । न तु सम्ब-न्धसामान्यस्य । अतश्च कारकत्वेन भावनान्वये पार्ष्ठिकान्वयवेलायां योग्यत्वात् फलेनैवान्वयार्थम्, न तु गुणेन, विधिसमभिव्याहारे सति कथञ्चित् कर्मत्वाभ्युपगमे गुणेनैवान्वयः स्यात, न फलेन । उभयरूपत्वावगत्यङ्गीकरणं तु युगपद्बोधे विरुद्धम् । श्रूयमाणस्यैव क्रमिकबोधद्वयवाचकत्वाङ्गीकरणे आवृत्तिलक्षणो वाक्यभेदः,एकस्यैव यागस्य विधेयत्वं, गुणत्वं, उपादेयत्वञ्च फलं प्रति । गुणं प्रति अनुवाद्यत्वं, प्राधानत्वं, उद्देश्यत्वञ्चेति विरुद्धत्रिकद्वयापातश्च ।

तथा हि—क्रमिकेऽपि बोधे विध्यपेक्षितत्वेन गुणत्वावगतेः प्राथ-मिकत्वस्यावश्यकत्वात अज्ञातपूर्वस्यैव यागस्य फलसम्बन्धकरणेन तत् प्रति यागस्याज्ञातज्ञापनविषयत्वाख्यं विधेयत्वं करणत्वाव-स्थायां ज्ञातस्य यागस्य गुणसम्बन्धवेलायां उत्तरकालमनुवादात् ज्ञातज्ञापनविषयत्वाख्यमनुवाद्यत्वं गुणं प्रति । तदिदं यागगुणयोरु-त्पत्तिविधिक्रमाङ्गीकारे पूर्वं यागस्योत्पत्तिः, अनन्तरं गुणस्येति वैरूप्यम् ।

तथा फलं प्रति यागस्य शेषत्वापरपर्यायं गुणत्वम् । गुणं प्र-ति शेषत्वापरपर्यायं प्राधान्यमिति श्रूयमाणस्यैव क्रमिकविनियोग-विधिविषयत्वाङ्गीकारे वैरूप्यम् ।

तथा फलं प्रति यागस्योपादेयत्वं, गुणं प्रति चोद्देश्यत्वमिति प्रयोगविधिक्रमाङ्गीकारे वैरूप्यम् ।

ननु किमिदं उपादेयत्वम्? उद्देश्यत्वं वा? न तावत् कृतिव्याप्यत्वतदव्याप्यत्वे। समादिरूपस्य देशस्य, दर्शपूर्णमासोत्तरत्वादेश्च कालस्य, रथन्तरसामत्वादेश्च निमित्तस्य, व्रीह्यादेश्च संस्कार्यस्य, कृतिव्याप्यत्वसत्वेन उपादेयत्वापत्तेः। कर्तुः तदेकत्वादेश्च कृतिव्याप्यत्वाभावेन उद्देश्यत्वापत्तेश्च। नापि कृतिव्याप्यत्वेन प्रकृतविध्यन्वयित्वमुपादेयत्वम्। एवमपि कर्त्रादावव्याप्तिस्तदवस्थैव। यथा च कर्त्रेकत्वादि नानुपादेयं तथा (१)प्रकरणान्तराधिकरणे वक्ष्यते। किञ्चैवं आहवनीयपुरोडाशकपालादिष्वपि विध्यन्तरप्रयुक्तेषु तत्र विधौ कृतिव्याप्यत्वेनान्वयात् अव्याप्तिः स्यादेवेति चेत्—

उच्यते—कृतिसमवायाघटितसम्बन्धेन प्रकृतभावनान्वयित्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वं उद्देश्यत्वम्। तदभावश्चोपादेयत्वम्। अस्ति चेदमुद्देश्यत्वं स्वर्गादिरूपे फले, प्रातरादिरूपे काले, सरस्वतीदक्षिणतीरादिरूपे देशे, राहूपरागादिरूपे निमित्ते। तेषां यथोक्तकर्मतादिसम्बन्धेन भावनासम्बन्धिनां कृतिविषयत्वाभावेन प्रकृतविध्यप्रयुक्तत्वात। अस्ति चेदं समादावपि, तस्य वस्तुतः कृतिव्याप्यत्वेऽपि लोकसिद्धसमोपजीवनेन प्रकृतविध्युपपत्तेः व्रीह्यादिवच्च निष्पत्त्युत्तरकालं विहारदेशप्रापणादिरूपक्रियान्तरव्याप्यत्वाभावेन प्रकृतविधिप्रयुक्तिविषयत्वाभावात्।

अत एव पश्वादिद्रव्यस्य तन्निष्ठगुणादेश्च वस्तुतो लोकसिद्धत्वेऽपि विहारदेशप्रापणादिक्रियाविषयत्वेन प्रकृतविधिप्रयुक्तिविषयत्वात् नातिव्याप्तिः।

एवमाहवनीयादेः आधानविधिप्रयुक्ताधाननिष्पन्नत्वेन "यदाहवनीये जुहोती"त्यादि प्रकृतविधेः उत्पत्त्यप्रयोजकत्वेऽपि प्रणयनप्रादुष्करणादिरूपक्रियान्तरव्याप्यत्वेन रूपेणप्रयुक्तिविषयत्वसत्वात् नातिव्याप्तिः।

---

१-पू मी २-३-१४.

एवं पुरोडाशकपालस्यापि विहारदेशान्यत्रस्थितस्य हस्तग्रहणादिरूपक्रियाविषयत्वं द्रष्टव्यम् ।

संस्कार्यस्य च "व्रीहिभिर्यजेते" ति वाक्ये प्रयुक्तिविषयत्वेऽपि "व्रीहीन् प्रोक्षति" इत्यादिसंस्कारबोधकप्रकृतविधौ प्रयुक्तिविषयत्वाभावात् उद्देश्यत्वाविघातः । आख्यातोपात्तस्य कर्तुः तद्कत्वादेर्वा सत्यपि प्रकृतविध्यप्रयुक्तत्वे कृतिनिरूपितसमवायघटितसम्बन्धेनैव प्रकृतभावनासम्बन्धात् नातिव्याप्तिः । यत्र तु केशश्मश्रुवपनादौ भोक्तृसंस्कारे मुष्टीकरणादौ कर्तृसंस्कारे पुरुषस्य संस्कार्यत्वम्, तत्र तस्य कर्मतासम्बन्धेनैव संस्कारभावनान्वयात् समवायघटितसम्बन्धेनान्वयाभावेन नोद्देश्यत्वविघातः ।

एवमाधानवाक्ये अग्नीनां कर्मतासम्बन्धेनान्वयेऽपि तद्विधेराधानमात्रप्रयोजकत्वेन अग्नीनामनुनिष्पन्नत्वेन अप्रयुक्तत्वेन नोद्देश्यत्वविघातः ।

नचवमपि प्रतिपत्तिरूपसंस्कारस्य संस्कार्यस्थापनक्रियाप्रयोजकत्वाङ्गीकारात् स्थापनक्रियाव्याप्यत्वेन संस्कार्यस्यापि प्रयुक्तिविषयत्वोपपत्तेः उद्देश्यत्वानापत्तिः । तादृशक्रियाया अननुष्ठेयत्वेन लक्षणे तद्व्याप्यत्वेन प्रयुक्तिविषयत्वस्य विवक्षानङ्गीकारात् । अतश्च यागगुणयोः प्रयोगविधिक्रमिकत्वाङ्गीकारेण फलोद्देशेन गुणप्रयोगविधिवेलायां तस्योपादेयत्वम्, यागोद्देशेन गुणप्रयोगविधिवेलायां च तस्योद्देश्यत्वमिति वैरूप्यम् ।

यद्यपि कालादिविशिष्टस्य कर्मणः फलोद्देशेन विधौ यागविधिवेलायामुपादेयतया अन्वितस्यापि कालादिविधिवेलायां कालस्य प्रयोगविध्यविषयत्वेन यागस्यैव कालाद्युद्देशेन उपादेयत्वाङ्गीकरणात् न वैरूप्यम् , तथापि द्रव्यादिविशिष्टविधावेव सम्भवादुपन्यस्तम् । कालादिविशिष्टविधौ वैरूप्यद्वयमेवोपन्यसनीयमिति न कश्चित् विरोधः । अतश्च श्रूयमाणस्यैव क्रमेण युगपद्वा

उभयरूपपरत्वायोगात् श्रूयमाणो विधिः अन्यतरपरः, अन्यच्चार्थिक-मित्यवश्यमभ्युपगन्तव्यम् ।

तत्र विध्यपेक्षितत्वात् योग्यत्वाच्च भावार्थाधिकरणन्यायेन करणत्वमेव शाब्दं प्राथमिकभावनान्वयि इति पार्ष्ठिकसम्बन्ध-वेलायामपि तेनैव रूपेण फलेनान्वयः, न तु कर्मतया गुणेन, तस्य फलसम्बन्धोत्तरकालीनत्वेनार्थिकत्वात् । अतश्च गुणस्यापि प्राथमिकभावनान्वये सञ्जातेऽपि द्वितीयवेधवेलायां यागसम्ब-न्धस्यावश्यकत्वात्, तदा च यागं प्रति करणत्वात् करणीभूत-स्य गुणस्यान्वयात् मत्वर्थलक्षणा आवश्यकी न कथञ्चिदुद्धा-रमर्हति । साचेयं रूढेषु सोमादिषु कथञ्चिदङ्गीकृतापि न यौ-गिकेषूद्भिदादिषु अङ्गीकर्तुमुचितेति तेषां नामधेयत्वमेवाश्रितम् ।

न चैवमपि वाजपेयशब्दस्य गुणे यौगिकत्वेऽपि कर्मणि तदभावात् एकहायन्यादिपदवत् मत्वर्थलक्षणाङ्गीकारेणापि गुण-विधित्वमेव स्यादिति वाच्यम् । मत्वर्थलक्षणाभावेन गुणविधित्वे निराकृते वाजपेयपदस्यार्थवत्त्वाय यजिसामानाधिकरण्योपपत्त्यर्थं च बहुव्रीह्यङ्गीकरणेन नामत्वस्यैवाश्रयितुं युक्तत्वात् । न च ब-हुव्रीह्यर्थाप्रसिद्धिः । वाजपेयरूपसुरासम्बन्धित्वस्य प्रमाणान्तरेण सिद्धेः । यद्यपि साक्षात् यागे न सुरासम्बन्धित्वं प्रसिध्यति, त-थापि "(१)सप्तदश सुराग्रहान् गृह्णाती"त्यनेन ग्रहणसंस्कृतानां वि-नियोगापेक्षायां "(२)अनेन मधुग्रहं निष्क्रीणाति "तं ब्रह्मणे ददाति सपात्र"मिति शतपथश्रुत्या सुराप्रतिग्रहकर्त्रे पूर्वदत्तहिरण्य-पात्रस्थमधुग्रहस्य सुराग्रहाणां निष्क्रयार्थत्वेन विनियोगात् मधुग्रहस्यापि च सपात्रस्य ब्रह्मसम्बन्धिसम्प्रदानके दाने विनि-योगात् परम्परया यागे सुरासम्बन्धित्वप्रसिद्धेः । अतो युक्तं नामधेयत्वम् ॥

---

१ श. ब्रा. १-१-१-१०. २ श. ब्रा. ५-१-५२-२८.

सूत्रं तु ऐकशब्द्ये एकेनैव शब्देन युगपत् क्रमेण वा कर्मत्वकरणयोर्बोधे उच्यमाने स्वार्थवत् स्वार्थविधानवत् परार्थवत् परार्थविधानवच्च रूपद्वयाङ्गीकाराद् वैरूप्यापत्तेः गुणविधित्वं न युक्तमिति व्याख्येयम् ॥

इति षष्ठं वाजपेयाधिकरणम् ॥

अथ सप्तमं आग्नेयाधिकरणम् (७) ॥

**सू—तद्गुणास्तु विधीयेरन् अविभागात् विधानार्थे न चेदन्येन शिष्टाः ॥ १-४-९. ॥**

एवमाक्षेपसमाधानाभ्यां नामधेयत्वे सार्वत्रिके उपपादिते अधुना तदपवादः प्रस्तूयते । (१)"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" । (२) "अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" (३)"ऐन्द्रं दध्यमावास्यायाम्", इत्यादौ आग्नेयादिशब्दाः गुणविधयः, कर्मनामधेयं वेति संशयः । पादाध्यासङ्गती स्पष्टे । आपवादिकीत्वनन्तरा ।

आक्षेपसमाधानार्थस्यापि च पूर्वाधिकरणस्य नामधेयत्वसाधकत्वात् अस्य तदपवादत्वोपपत्तिः ।

तत्र यद्यपि भवतिना सत्तामात्रोपादानात् विधेः भावनाया वा तदवच्छेदयोग्यधात्वर्थस्य वा नोपादानम्, तथापि अप्राप्तार्थत्वात् विधिं प्रकल्प्य तस्य भूधातोश्च भावनां विना अनुपपत्तेः भावनापि तावत् भवतिनैवाक्षिप्यत इति सैवोच्यते । तस्यां च प्रथमान्तस्याष्टाकपालपदस्यानन्वयात् अनीप्सिततमत्वे तस्य कर्मत्वायोगात् अष्टाकपालः सक्तुवदेव करणत्वेनान्वीयते ।

---

१ तै. सं. २-६-३-३.  २ तै. सं. २-५-२-२.  ३ तै. सं. २-५-४-१.

तत्र च यदि अष्टाकपालकरणिकायां भावनायामग्नेरपि देवतात्वेन विशेषणत्वम्, ततोऽनेकविधिनिमित्तगौरवापत्तेः अग्नेः प्रमाणान्तरप्राप्तत्वाच्च आग्नेयपदं नामधेयपरम् , न तु गुणविधिरित्यवगम्यते । तत्प्राप्तिश्चेत्थम्—

अग्नेस्तावत् (१)"अग्निर्मूर्धा" इति याज्यानुवाक्यायुगलस्या-धिकाराख्यप्रकरणेन स्थानेन वा अष्टाकपालभावनाङ्गत्वावगतेः उपांशुयाजवत् श्रुत्यविनियोगेऽपि देवताकल्पकत्वोपपत्तिः ।

न चाधिकारस्य उपांशुयाजादिष्वप्यविशेषात् यथाक्रमपाठादिरूपस्य च स्थानस्यापि अग्नीषोमीयब्राह्मणानन्तरपठिताग्नेयब्राह्मणपाठापेक्षया मन्त्रपाठवैपरीत्यस्य (२)पञ्चमे वक्ष्यमाणत्वेनाभावात् कथमङ्गत्वावगतिरिति न्यायसुधाकारोक्तं शङ्कनीयमिति वाच्यम् । अग्नीषोमीयानन्तरपठितस्याग्नेयस्य "(३)शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इत्यनेन "स एष औपवसथ्येऽहनि द्विदैवत्यः पशुरालभ्यते "इतिवत् अप्राप्तत्वेन विधिकल्पनात् स्वस्थानादपकृष्य पूर्वमनुष्ठानावगतेः अनुष्ठानसादेश्यलक्षणस्थानक्रमात् पशुधर्माणामिव याज्यानुवाक्यायुगलस्यापि आग्नेयाङ्गत्वोपपत्तेः, अमावास्यायामाग्नेयसान्नाय्यमन्त्रयोः पाठक्रमस्यापि सत्त्वाच्च ।

अन्ये तु आग्नेयवाक्य एवार्थवादे (४)"अग्नये ध्रियस्व" इति चतुर्थीनिर्देशात् देवताप्राप्तिमाहुः; ते यदि तदर्थवादस्य वाक्यान्तरत्वमङ्गीकृत्य तदाहुः तदा वाक्यभेदः। यदि तु एकवाक्यतामङ्गीकृत्य तदा अनेकविधिनिमित्तदोषाभावात वर'मग्नय' इति तद्धितेनैव देवताप्राप्तिः। तस्मात् न्यायसुधाकृदुक्तदोषोद्धारस्य नायं पन्थाः इत्यस्मदुक्त एव श्रेयान् । अतश्चाघाराग्निहोत्रयोः मान्त्रवर्णिकदेवता-

---

१ तै. ब्रा. ३-५-१०-१.
२ पू. मी. ५-१-९.
३ का. श. १-७-६.
४ तै. सं. २-६-३-३.

प्राप्तेः सम्भावितत्वात् आग्नेयादिपदं पुरोडाशकरणकभावनानामधेयम् । अतश्च भावनाया अपि अवच्छेदकधात्वर्थापेक्षायां स्ववाक्ये तदवच्छेदे योग्यधात्वर्थाश्रवणेऽपि देवतासम्बन्धकल्पितयागस्यैव पश्चादवगतस्यापि अवच्छेदकत्वोपपत्तिः । इष्यते चाभ्युदितेष्टौ भावनान्तरविधिपक्षे गुणसम्बन्धबोधकवाक्येषु पश्चादवगतस्यैव धात्वर्थस्यावच्छेदकत्वम् । अतश्च पूर्वावगतस्यानिर्धारितविशेषरूपस्य भावनावच्छेदकीभूतधात्वर्थस्यैवेयं संज्ञेत्यस्यापि वक्तुं शक्यत्वात् नास्माकं भावनानामत्वाङ्गीकरणमप्यावश्यकम् ।

अत एव "ज्योतिर्गौः" इत्येवमादेः अप्राप्तिबलकल्पितविध्यन्यथानुपपत्तिसिद्धभावनाक्षिप्तानिर्धारितधात्वर्थस्यैव ज्योतिरादि नामेत्यवधारिते पश्चाद्व्यक्तत्वादिसादृश्येनातिदेष्टव्यद्रव्यदेवतासम्बन्धबलेन यागरूपधात्वर्थविशेषनिर्धारणमिदम् । तेन न धात्वर्थविशेषनिरूपणं विना द्रव्यादिविशिष्टभावनाविधिस्सम्भवतीति कैश्चिदुक्तमपास्तम् ।

नचैवमपि नामधेयप्रयोजनस्य भेदाद्यवगमस्य गुणोपसम्बन्धादेव आग्नेयादिपदे अभावात् तद्व्यर्थ्यमिति न्यायसुधोक्तं युक्तम् । "(१)आग्नेयमाज्यम् (२)ऐन्द्रः पुरोडाशः" इत्यादौ द्रव्यसादृश्यबलेन उपांशुयाजाग्नेयविध्यन्ते प्रसक्ते नामातिदेशबलेन आग्नेयसान्नाय्यविध्यन्तप्राप्तेरेव प्रयोजनत्वात् । न च आज्यादौ अवघाताद्यसम्भवात् अतिदेशानुपपत्तिः । लुप्तार्थकानां बाधेऽपि अन्येषां प्रोक्षणादीनामतिदेशोपपत्तेः । आग्नेयादिपदस्य गुणविधित्वपक्षे तु देवतासादृश्यस्य दौर्बल्यात् उपांशुयाजादिविध्यन्तोपपत्तिरिति प्रयोजनत्वाविघातः ।

यत्तु भवदेवेन तदनुयायिभिरन्यैश्च "आग्नेयं चतुर्धा करोती"-त्यत्र नामत्वपक्षे कर्मणः चतुरावृत्तिर्विधीयत इति प्रयोजनमुक्तम्, तत् उत्पत्तिवाक्यगतस्याग्नेयपदस्य नामधेयत्वेऽपि चतुर्धा करणवा-

१ का. सं. ११-७. २ तै. ब्रा. ३-७-१-७.

न्वयगतस्य तस्य "पुरोडाशं चतुर्धा करोती"ति वाक्यान्तरानुसारेणा-ग्निदेवतोपलक्षितपुरोडाशपरत्वावगमेन तस्यैव विभागरूपचतुर्धाकर-णविधिप्रतीतेः उपेक्षणीयम् ।

अतश्च पूर्वोक्तरीत्या प्रयोजनवत्त्वात् नामधेयत्वमेव युक्तम् । तेन नामधेयत्वपूर्वपक्षस्य प्राप्तिप्रयोजनयोरभावेन अतितुच्छत्वात् विशिष्टविध्यसम्भव एव पूर्वपक्षे, तदुपपादनं च सिद्धान्ते इत्येवाधिकरणशरीरम् । नामधेयत्वं तु आकरे आग्नेयपदानर्थ-क्यपरिहाराय सम्भवमात्रेणोक्तमिति यत् न्यायसुधाकृतोक्तं तत् विशि-ष्टविधिव्युत्पादनस्य प्रस्तुतनामधेयत्वविचारानुपयुक्तत्वेनासङ्गतत्वात् नामत्वपूर्वपक्षस्य चात्र दृढत्वेन स्थापितत्वादयुक्तमेवेति प्राप्ते—

अभिधीयते—नेदं नामधेयम्; तत्प्रख्यापकशास्त्राभावात् । यदि ह्यष्टाकपालकरणिकात्रभावना विधीयेत ततः तस्यां त्वदुक्तविधया मान्त्रवर्णिकदेवताप्राप्तेः सत्त्वात् स्यादस्याग्नेयपदं नामधेयम्, न तु तदस्ति, अष्टाकपालकर्तृकभवनाक्षिप्तायां भावनायामष्टाकपालस्य "भवत्यर्थस्य यः कर्ता करोतेः कर्म जायते" इति न्यायेन कर्म-त्वेनैवान्वयनैयत्यात् ।

अतश्च पुरोडाशस्य स्वरूपेणानीप्सितस्यापि अनीप्सितकर्मत्वेनै-वान्वयोपपत्तेः सक्तूनां विषयतासम्बन्धेन करणत्वव्यवहारवत् अष्टा-कपालस्यापि कथञ्चिद्बुद्धिस्थत्वेन स्वोत्पत्तिं प्रत्यपि करणत्वव्यवहारो-पपत्तेः अष्टाकपालोत्पत्तिजनकव्यापाररूपैव अष्टाकपालभावना विधे-या । न तु सिद्धाष्टाकपालकरणिका अनिर्धारितधात्वर्थविशेषावच्छिन्ना यागादिभावना । अतश्च पुरोडशोत्पत्तिभावनायां अग्निदेवताप्रका-शकस्य याज्यानुवाक्यायुगलस्य कथञ्चिदप्यन्वयानुपपत्तेः याज्यानु-वाक्यासमाख्यासहकृतलिङ्गनान्यत्रैव विनियोगावगमेनानुष्ठानसादे-श्यलक्षणस्थानबाधापातात् न मन्त्रस्याष्टाकपालभावनाङ्गत्वे प्रमाणम-स्तीति मान्त्रवर्णिकदेवताप्राप्तेरसम्भवान्नेदं तत्प्रख्यन्यायेन नामधेयम् ।

एवं अग्नीषोमीयवाक्येऽपि 'प्रायच्छ'दिति दानानुवादात् परकृत्यर्थवादेन दानभावनाविधेरेव कल्पनापत्तेः तत्र चाग्नीषोमयोः अप्रतिगृहीतृत्वेनानन्वयात् तत्प्रकाशकस्य मन्त्रस्य वा स्थानादङ्गत्वानुपपत्तेः पूर्ववदेव नामधेयत्वानुपपत्तिः ॥

आघारे तु यद्यपि श्रूयमाणे क्षरणात्मके धात्वर्थे इन्द्रप्रकाशकस्य मन्त्रस्याकाङ्क्षायोग्यतयोरभावात् नान्येन प्रमाणेनान्वयस्संभवति, तथापि साक्षादितिकरणश्रुत्यैव विनियोगात् तद्बलेनैव च देवतायागयोर्द्वयोरपि कल्पनात् क्षरणस्य च होमात्मकत्वकल्पनेनाविरोधा(१) पादनान्नामधेयत्वोपपत्तिरिति वैषम्यम् ।

उपांशुयाजे तु यागस्य प्रत्यक्षश्रुतत्वात् तेन च स्थानेन मन्त्रान्वयोपपत्तेः देवताकल्पनं नैवानुपपन्नम् । अतश्चाग्नेयादौ तत्प्रख्यशास्त्रान्तराभावात् कर्मणि चाग्निदेवताकत्वस्य चाप्रसिद्धत्वेनोभयत्र तुल्यवद्वृत्तिकत्वरूपोद्भिन्न्यायविषयत्वासम्भवात् विशिष्टविध्यङ्गीकारेण च वाक्यभेदाभावात् तद्व्यपदेशाभावेन च तन्न्यायस्य शङ्कितुमप्यशक्यत्वात् आग्नेयादिवत् विधेयदेवतारूपगुणसमर्पणमेव ।

तत्र चायं प्रकारः—भवतीत्ययमप्राप्तार्थत्वात् अर्थवादसमभिव्याहाराच्च लेडर्थकः, लत्वावच्छेदेन भावनाभिधायी, तस्यां च न भवन्मत इव अष्टाकपालस्य भाव्यमानत्वेन कर्मत्वम् । अपित्वाग्निसम्बन्धस्यैव; आग्नेय इति गुणप्रतिपादकपदान्तरोपादानसामर्थ्यात् । असति हि पदान्तरे पटो भवतीत्यादौ पटस्यैव भवने कर्तृत्वात् तदाक्षिप्तायां भावनायां तस्यैव कर्मत्वम् । सति तु पदान्तरोपादाने घटसंयुक्तः पटो भवतीत्यादौ गुणसङ्क्रान्तशक्तित्वात् घटसंयोगस्यैव भवनकर्तृत्वावगमेन भावनाकर्मत्वम् । अतश्चाग्निदेवतासम्बन्धकर्मिकैवेयं भावना, न तु पुरोडाशोत्पादिका । सम्बन्धस्य च भावनायां कर्मत्वं वास्तविकम् ; न शाब्दबोधे सम्बन्धो भावनायां कर्मत्वेनान्वेति ।

---

१ अविरोधोपपादनात् ।

तस्य पाचकादिशब्द इवापदार्थत्वस्य (१)समाख्याधिकरणे वक्ष्यमाणत्वेन पदार्थरूपायां भावनायां अन्वयायोगात् ।

शाब्दबोधे तु द्रव्यस्य करणत्वेन देवतात्वेन चाग्नेरन्वयात् सकलकारकविशिष्टाध्याक्षिप्तयत्किंचिद्धात्वर्थकरणिका इष्टसामान्यभाव्यिका च भावनैव विधीयते । पश्चाच्च हविस्समभिव्याहृतदेवतात्वस्य यागं विना अनिर्वाहात् भावनापेक्षितो धात्वर्थः याग एवेत्यवधार्यते । न हि त्यज्यमानद्रव्योद्देश्यत्वरूपं देवतात्वं यागमन्तरेण सम्भवति । अतश्च देवतात्वानुमितस्यापि शाब्दत्वासिद्ध्यर्थं स्वतन्त्रपदाध्याहारे गौरवापत्तेरन्येषां च पदानां शक्यार्थान्वयबोधेनैव निराकाङ्क्षत्वाल्लक्षकत्वानुपपत्तेः भूधातुरेव भवनाश्रयत्वेन सम्बन्धेन यागलक्षको निर्वपत्यादिवदङ्गीक्रियते ।

न च देवतात्वस्य त्यागघटितोपाधिरूपत्वात् त्यागरूपस्य च यागस्य तद्धितेनैव प्रतीतिसिद्धेः न धातुना तल्लक्षणा युक्तेति वाच्यम् ; यागत्वादिवत् देवतात्वादीनामपि जातिरूपत्वस्याखण्डोपाधिरूपत्वस्य वाङ्गीकारात् । अन्यथा "ऐन्द्रवायवं गृह्णाती"त्यादौ तद्धितेनैव यागाविधानसिद्धेः 'सोमेन यजेत'त्यादौ यागविध्यनापत्तेः । तस्माद्धातुरेव यागलक्षकः । एवञ्च यद्वार्तिके आग्नेयादिपदेनैव अग्निर्देवता, अष्टाकपालः द्रव्यं, यागो, भावना च सर्वं प्रतीयत इति नानेकविधिनिमित्तो वाक्यभेद इत्युक्तम्, तत् प्रौढिवादमात्रेण । तेनाग्निप्रातिपदिकेनाग्निः, तद्धितेन देवतात्वयुक्तः समभिव्याहृतः द्रव्यविशेषः । अष्टाकपालपदं तु गुणाधिकरणे वक्ष्यमाणन्यायेनाष्टत्वसंख्यावच्छिन्नकपालाधिकरणकसंस्कारसंस्कृतद्रव्यविशेषतात्पर्यग्राहकम् । विशेषप्रतिपत्तिश्च (२)पुरोडाशं कूर्मं भूतं सर्पन्तमपश्यन्"इत्यर्थवादात् द्रष्टव्या ।

उभयत्र च प्रथमया करणत्वं लक्ष्यते, भूधातुना च यागः, तिपा च विधिभावने उच्येते, पौर्णमास्यमावास्यापदाभ्यां च काल

१ पू. मी. ३-३-६. २ तै. सं. २-६-३-३.

इति तत्तत्पदेनैव तत्तदर्थप्रतीतावपि विशिष्टभावनाविध्यङ्गीकारादेव न वाक्यभेदः, गौरवं तु अन्यतोऽप्राप्तत्वादेवापाद्यमानं न दोषमापादयति ।

अत एव यत्र "कपालेषु पुरोडाशं श्रपयति" इत्यादिना प्रमाणान्तरेण कपालानां तदधिकरणत्वस्य श्रपणाख्यसंस्कारविशेषस्य च प्राप्तिः तत्र उत्पत्तिवाक्येऽपि तदंशे विशेषविधेरकल्पनान्न गौरवम् ।

नचैवमष्टत्वस्य प्रमाणान्तरेणाप्राप्तत्वात् प्राप्तकपालानुवादेन विधिः यागभावनाविधिश्चेति वाक्यभेदः; अष्टत्वस्य समासभङ्गापत्त्या कपालसम्बन्धं विहाय यागे वैशिष्ट्यानुपपत्तेः इति वाच्यम् । विशिष्टविधिवेलायां प्राप्तानामपि कपालानां वैशिष्ट्यसम्पादकत्वाङ्गीकारेण वाक्यभेदानापत्तेः ।

अत एव विधिविषयविशिष्टान्तर्गतस्य विधेयसन्दष्टस्य प्राप्तस्यापि विशेषणस्य विधेयत्वमुक्तं मीमांसकमूर्धन्येन रमायनकृता । अतश्च विशिष्टविध्यन्तर्गतत्वेऽपि तदंशे प्राप्तत्वेन विशेषणविधिकल्पनाभावात् न गौरवम् । अतश्च द्रव्यदेवताविशिष्टयागभावनाविधानात् आग्नेयपदं गुणविधिरेव ।

एवञ्च मन्त्राणां लिङ्गाधिकाराख्यप्रकरणाभ्यामेवाङ्गत्वोपपत्तेः तत्क्रमेणैव च पाञ्चमिकन्यायेन आग्नेयापकर्षसिद्धेः "शिरो वा एतद्यज्ञस्य" इति वाक्यमपि नापकर्षविधिकल्पकम् , किन्तु विध्यन्तरशेषभूतं अर्थवादरूपमेवेति द्रष्टव्यम् ।

सूत्रं तु तत्तत्कर्मगुणाश्च द्रव्यदेवतादयोऽपि विधीयेरन्नेव, न तु गुणवाचकस्य नामधेयत्वम्; प्राप्त्यभावात् । न च वाक्यभेदः, विधानार्थे प्रत्यये सर्वेषां विशेषणविशेष्यभावेनान्वयेनाविभक्तत्वात्, तेऽपि च तदा विशेषणविधिवेलायां विधीयन्‍ यदि नान्यतः प्राप्ताः । अतो गौरवमपि नागतिकत्वादेवादृ

(१)इति व्याख्येयम् ॥

इति सप्तममाग्नेयाधिकरणम् ॥ ( तद्गुणाधिकरणम् )

अथाष्टमं बर्हिराज्याधिकरणम् ( ८ ) ॥

सू—बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छ-
ब्दः ॥ १—४—१०. ॥ (सि)

आद्येऽधिकरणे गुणविधित्वनामधेयत्वरूपान्यतरप्रकारेण सर्वेषामुपपदानां प्रामाण्ये सिद्धे अनन्तरव्युत्पादितप्रकारचतुष्टयेनैव सर्वत्र नामधेयत्वम्, तदभावे तु गुणविधानमेवेति च पूर्वाधिकरणेनोक्ते प्रसङ्गात् बर्हिराज्यपुरोडाशादिशब्दानां किं संस्कारविशिष्टजातिमद्द्रव्यविधायित्वम्? उत तद्रहितकेवलजातिमद्द्रव्यविधायित्वम्? इतीहेदानीं विधेयो गुणविशेषो विचार्यते । अत एव पादाध्यायानन्तरसङ्गतयः स्पष्टाः ।

तत्र सर्वयाज्ञिकप्रसिद्धेः शास्त्रस्थत्वात् तेषां संस्कृत एव कुशादौ बर्हिरादिशब्दप्रयोगात् (२)आश्ववालाधिकरणन्यायेन सत्यामपि कतिपयानां अशास्त्रस्थानां असंस्कृतजातिविशिष्टमात्रविषयत्वप्रसिद्धौ तद्बाधेन संस्कृतकुशादिवाचित्वावधारणम् ।

नचैवं(३)'बर्हिर्लुनाति'(४)"आज्यमुत्पुनाति"(५)"पुरोडाशं प्रथयति"इत्यादिसंस्कारविधिषु बर्हिराद्युद्देशेन संस्कारविधानात् उद्देश्यानां लवनादिसंस्कृतानां कुशादीनां पूर्वावगमे संस्कारविधिवैयर्थ्यम्, अनवगमे तु उद्देश्यत्वायोगात् सुतरां विधानानुपपत्तिरिति वाच्यम् ।

---

१ इत्येवं
२ पू. मी. १-३-४.
३ तै. ब्रा. ३-२-२-४.
४ आपं. श्रौ. १-६-७.
५ बौ. श्रौ. २—१७.

यल्लुनाति तद्बर्हिरिति विपरीतवचनव्यक्त्यङ्गीकारेण बाधकाभावात्। अतश्च यथैव सिद्धान्ते संस्कारवाचित्वेन प्रसिद्धानां यूपाहवनीयादिशब्दानां संस्कारविधिषु "यूपं छिनत्ति"(१)"आहवनीयमादधाति" इत्यादिषु विपरीतवचनव्यक्त्यङ्गीकरणेनैव विरोधं परिहृत्य संस्कारनिमित्तत्वाङ्गीकरणं तथैव बर्हिरादिशब्दानामपीति प्राप्ते—

अभिधीयते—न बर्हिरादिशब्दानां संस्कारविशिष्टजातिमद्द्रव्ये शक्तिः, गौरवापत्तेः। अत एव न नागृहीतविशेषणान्यायेन संस्कारमात्र एव शक्तिः, संस्काराणां अनेकत्वात्। अतज्जातिमति संस्कारसंस्कृतेऽपि प्रयोगाभावाच्च। एवं सत्यपि यदि संस्काररहिते जातिमात्रे बर्हिरादिशब्दप्रयोगो न स्यात्, ततो लाघवस्य प्रमाणानुग्राहकत्वेन प्रमाणाभावे स्वतोऽसाधकत्वात् स्यात् संस्कारनिमित्तता यूपादिशब्दवत्। अस्ति तु 'बर्हिरादाय गावो गताः,' 'आज्यं क्रयम्' 'पुरोडाशेन मे माता प्रहेलकं ददाति' इत्यसंस्कृते जातिमात्रे अयाज्ञिकानामपि केषांचित् प्रयोगः। न च शास्त्रस्थत्वादसौ बाध्यः, जातिमपहायाप्रयुज्यमानत्वेन शास्त्रस्थैस्सह विरोधाभावात्। अतोऽन्वयव्यतिरेकादपि जातेरेव वाच्यत्वम्, न तु व्यभिचरितानां संस्काराणाम्।

यूपादिशब्दानां तु संस्कारमपहाय क्वचिदपि प्रयोगाभावात् अगत्या संस्कारनिमित्तत्वाङ्गीकरणम्। तत्रापि नागृहीतविशेषणान्यायेन दृष्टादृष्टसंस्काररूपविशेषणेष्वेव शक्तिः, न तु तद्विशिष्टकाष्ठ इति केचित्।

संस्कारविशेषाणां अनेकत्वात् न नागृहीतविशेषणान्यायः। तेन उभयविशिष्टे उभयोपलक्षिते वा काष्ठविशेषे एव शक्तिरित्यन्ये।

अत्र च पक्षद्वयेऽपि संस्कारशब्देन च्छेदनादिजन्यानियमादृष्टानि प्रोक्षणादिजन्यादृष्टानि च विवक्षितानि, न तु च्छेदनादिक्रियाः,

---

१सत्या श्रौ. १-६-४४.

तासां क्षणिकत्वेन वैशिष्ट्यासम्भवात् । यथा चानयोः पक्षयोर्विशेषः तथा(१) दशमे वक्ष्यते । तस्मात् स्फुटमेषां यूपादिवैलक्षण्यम् ।

अत एव तद्वत् संस्कारवाक्येषु वचनव्यक्तिवैपरीत्याङ्गीकरणक्लेशोऽपि निष्प्रमाणको नाश्रयितुं युक्तः । किं च "पालाशो भवती" त्यादिवाक्यान्तरवशात् 'यूपं च्छिनत्ती' त्यादीनां पालाशादिविषयत्वावगमात् युक्ता यूपशब्दस्य संस्कारविशिष्टपालाशत्वादिजातिमत्काष्ठवाचिता । बर्हिरादिशब्दानां तु 'बर्हिर्लुनाती' त्यादिविधीनां कुशपिष्टघृतविषयत्वे प्रमाणाभावात्तज्जातीये च लवनादिसंस्कृते याज्ञिकानां बर्हिरादिशब्दप्रयोगाभावात् कुशादिविषयत्वे प्रमाणाभावः ।

न च "दर्भैस्स्तृणीत हरितै" रिति मान्त्रवर्णिकद्रव्यविधिवशात् "पिष्टानि संयौती" त्यादिसंस्कारविधिबलाच्च बर्हिरादिशब्देऽपि कुशादिविषयत्वसिद्धिः । एवमप्युत्पवनादीनां घृतविषयत्वस्य केनापि प्रमाणेनासिद्धेः । अतश्च याज्ञिकप्रसिद्धिबलेनैव घृतविषयत्वकल्पने तत एव संस्काराणामपि प्राप्त्युपपत्तेः तद्विधिवैयर्थ्यम् । तेनावश्यं घृतविषयत्वसिद्ध्यर्थं असंस्कृते जातिमात्रे यः प्रयोगः सोऽप्युपजीवनीयः । अतः श्रुत्युपजीवितप्रयोगस्य शास्त्रस्थेनापि याज्ञिकप्रयोगेण बाधायोगाज्जातिमात्रवाचित्वं बर्हिरादिशब्दानां सिद्धमेव ।

एतत् प्रयोजनं च यूपावटास्तरणार्थे बर्हिषि युपाञ्जनार्थे चाज्ये ऽप्राकृतकार्यापत्ते विनाप्यतिदेशेन पूर्वपक्षे बर्हिरादिशब्दबलेन लवनादिसंस्कारप्राप्तिः । सिद्धान्ते तु नेत्येवंविधं द्रष्टव्यम् ।

तृतीये (२)'निर्देशात्तु विकृतावपूर्वस्यानधिकारः' इत्यत्र तु सत्यपि बर्हिरादिशब्दानां जातिवाचित्वे प्रकृतावङ्गप्रधानसाधारणत्वात् बर्हिर्धर्माणां विकृतावकृतामापत्ते यूपावटास्तरणार्थे

१ पू. मी. १०-२-३१. २ ३-८-३१.

बर्हिरन्याय्यातिदेशेन धर्मापत्तिमाशङ्क्य अप्राकृतकार्यापन्नत्वात् न तत्र धर्मा इति वक्ष्यत इति विशेषः ।

सूत्रं तु बर्हिराज्यशब्दयोः तुल्यन्यायत्वात् पुरोडाशशब्दस्यापि असंस्कृतेऽपि क्वचिच्छब्दप्रयोगात् न संस्कारवाचित्वं इति व्याख्येयम् ॥

इति अष्टमं बर्हिराज्याधिकरणम् ॥

## अथ नवमं प्रोक्षण्यधिकरणम् (९) ॥

### सू—प्रोक्षणीष्वर्थसंयोगात् ॥ १–४–११ ॥ (सि)

(१.) "प्रोक्षणीरासादय" इत्यत्र प्रोक्षणीशब्दस्य किं उत्पवनाभिमन्त्रणादिसंस्कारनिमित्तत्वम् ? उताप्त्वजातिनिमित्तत्वम् ! अथ वा प्रकृष्टोक्षणसाधनवाचित्वम् ? इति विचारे पूर्ववदेव सङ्गतिद्वयम् । अपवादत्वेन चानन्तरसङ्गतिः आद्यपूर्वपक्षश्च द्रष्टव्यः ।

द्वितीयस्तु 'प्रोक्षणीभिः उद्वेजिताः स्मः' इति लोके असंस्कृतास्वप्यप्सु प्रयोगात् पूर्ववदेवाप्त्वजातौ रूढिः । न च क्लृप्तावयवयोगेन प्रकृष्टोक्षणसाधनत्वरूपेणैव प्रवृत्त्युपपत्तौ अतिरिक्तरूढिकल्पनानुपपत्तिः । उदासीनास्वप्यप्सु प्रोक्षणीशब्दप्रयोगेणावयवार्थस्याक्लृप्तत्वात्; तैलादौ अवयवार्थसद्भावेऽपि प्रोक्षणीशब्दप्रयोगाभावाच्च ।

न च तैलादीनां सत्यपि वाच्यत्वे तत्राप्रयोगस्यालस्यादिनाप्युपपत्तेः अन्वयव्यभिचारस्यादोषत्वम् । आधुनिकेन केनचित् प्रोक्षणीशब्दस्य तैलादौ प्रयोगेऽपि श्रोतुः प्रतीत्यभावेन वाच्यत्वकल्पनानुपपत्तेः । अन्यथा पङ्कजादिशब्दस्य मण्डूकादौ शक्तत्वेऽपि आलस्यादिनैव प्रयोगाभावोपपत्तेः नातिरिक्तरूढिकल्पनापत्तिः ।

---

१ तै. ब्रा. ३–२–९–१४.

अतश्च संस्कारवदेव योगस्यापि अन्वयतो व्यतिरेकतश्च व्यभिचारात् प्रोक्षणीशब्दप्रवृत्तिनिमित्तत्वानुपपत्तेरश्वकर्णादिशब्दवत् जले अतिरिक्तशक्तिकल्पनस्यावश्यकत्वात् क्लृप्तसमुदायप्रसिध्या च अवयवार्थवैशिष्ट्यप्रतिसन्धानसापेक्षावयवप्रसिद्धेः बाधस्य (१)रथकाराधिकरणे वक्ष्यमाणत्वात् तद्वदेवात्रापि अवयवप्रसिद्धिबाधेन समुदायप्रसिध्या अप्त्वजातिनिमित्तता इत्येवं प्राप्ते—

अभिधीयते—सत्यं क्लृप्तसमुदायप्रसिध्या अवयवप्रसिद्धेर्बाधः, नत्वत्र समुदायप्रसिद्धेः क्लृप्तत्वम् । वाक्यार्थे वाक्यस्येव क्लृप्तपदशक्त्या क्लृप्तावयवशक्त्यैव विशिष्टार्थबोधोपपत्तौ अतिरिक्तसमुदायशक्तिकल्पने प्रमाणाभावात् । अन्यथा पाचकादिशब्दस्थलेऽपि अतिरिक्तसमुदायशक्तिकल्पनापत्तौ यौगिकपदमात्रोच्छेदापत्तेः । नचान्वयव्यतिरेकयोर्व्यभिचरितत्वात् नावयवप्रसिद्धेः क्लृप्तत्वमिति वाच्यम्।अपां औदासीन्यावस्थायां फलोपहितोक्षणसाधनत्वाभावेऽपि उक्षणजननयोग्यतायाः सत्वात् ल्युटश्च योग्यतासाधारण्येन साधनमात्राभिधायित्वात् तत्र तावत् व्यतिरेकतो न व्यभिचारः ।

नचैवं योग्यतया रथकरणवृत्तित्वस्य ऋभुसात्वतापरपर्यायजातिविशेषेऽपि सम्भवात् प्रत्युत "नेमिं नयन्ति ऋभवो यथे" ति मन्त्रलिङ्गात् तेषां रथकरणवृत्तित्वावगमात् रथकारशब्दस्यापि यौगिकत्वापत्तौ यौगिकत्वाविशेषेण त्रिध्याक्षेपशक्तिकल्पनागौरवपरिहारार्थं त्रैवर्णिकस्यैव रथकारशब्देन ग्रहणापत्तेः तस्य च वाक्यान्तरेणाधानप्राप्तावपि रथ (२)कर्तृत्वे निमित्ते वर्षाविधानोपपत्तेः रथकाराधिकरणविरोधप्रसङ्ग इति वाच्यम्।(३ 'व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च । कारूषश्च विजन्मा च मैत्रः सात्वत एव च" इति परिभाषितस्य सात्वतापरपर्यायस्य सुधन्वनः, "सौधन्वना ऋभवः सूरचक्षसः" इति मन्त्रे ऋभुसामानाधिकरण्येन ऋभुपर्यायत्वावग-

---

१ पू. मी. ६-१-११ २ करणत्वे ३ मनु. १०—२३.

मात्, ऋभूणां च (१)"ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्यादध्यात्" इति विनियुक्तमन्त्रबलेन रथकारपर्यायत्वावगमात् सत्यपि रथकरणयोगित्वे विशेषतो जातिविशेषशक्तिग्राहकबलात् तद्व्यतिरिक्तशक्त्यन्तरकल्पनात् सामान्यतः प्रवृत्तयोगबाधोपपत्तेः । सामान्यतो योग्यतामात्रेण योगाङ्गीकारे त्रैवर्णिकस्य सर्वदा रथकर्तृत्वसम्भवेन निमित्तत्वानुपपत्त्या वर्षाविध्यनुपपत्तेश्च, ब्राह्मणादौ रथकर्तरि रथकारशब्दप्रयोगाभावेन पङ्कजादिपदवत् योगरूढेरावश्यकत्वाच्च ।

अतश्च वर्षाविधिवाक्ये फलोपहितरथकर्तृत्वेनैव योगो वाच्यः । शब्दस्य चोदासीनावस्थे सौधन्वनापरपर्याये जातिविशेषे प्रयोगेण व्यभिचारात् अतिरिक्तशक्तिकल्पनमिति वैषम्यं प्रोक्षणीशब्देन । नाप्यन्वयव्यभिचारः । सत्यपि तैलादौ प्रकृष्टोक्षणसाधनत्वेन प्रोक्षणपदवाच्यत्वे स्त्रीप्रत्ययबहुवचनार्थानन्वयादेव प्रोक्षणीशब्दाप्रयोगोपपत्तेः ।

अत एव तद्रहितप्रोक्षणप्रातिपदिकमात्रप्रयोगो 'घृतं प्रोक्षण'मित्यादौ दृश्यत एव । तस्मादव्यभिचारात् क्लृप्तयोगेनैवोपपत्तौ अतिरिक्तरूढिकल्पनानुपपत्तेः यौगिक एव प्रोक्षणशब्दः इति सिद्धम् ।

प्रयोजनं विकृतिविशेषे 'घृतं प्रोक्षण'मित्यत्र संस्कारवाचित्वपक्षे प्राकृतः "प्रोक्षणीरासादये"त्ययं प्रैषोऽविकृत एव प्रयोक्तव्यः । न च संस्कारनिमित्तत्वेऽपि ईकारबहुवचनयोरपि सामानाधिकरण्यनिमित्तत्वात् घृतात् निवृत्तिसिद्धेः प्रोक्षणमासादयेत्येव ऊहः प्रसज्येत इति वाच्यम् , प्रकृतौ विकृतौ वा प्रागीकारात् प्रोक्षणप्रातिपदिकमात्रस्य संस्कारेषु क्वचिदपि अप्रयोगेण प्रोक्षणीशब्दस्यैव संस्कारवाचित्वावगमात् ।

यस्तु विकृतौ(२)"घृतं प्रोक्षण"मिति प्रोक्षणशब्दः स नोत्पत्र-

---

१ तै. ब्रा. १-१-५.        २ मै. स. २-१-५.

नादिसंस्कारपरः, तथात्वे उत्पवनादिकार्यप्रोक्षणक्रियालक्षणापत्तेः। यदि हि अत्र घृतोद्देशेनोत्पवनादयो विधीयेरन् ततो न स्यादपि सा; न तु तदस्ति, घृतस्य अप्राप्तत्वेनोद्देश्यत्वायोगात्। अतोऽत्र घृतस्यैव विधेयत्वात् उत्पवनोद्देशेन तद्विध्ययोगात् उत्पवनादिसंस्कारवाचकं प्रोक्षणपदं कार्यलक्षणार्थं प्रसज्येत। तेन वरं "घृतं प्रोक्षण" मित्यत्र प्रोक्षणशब्दो भावव्युत्पन्नल्युडन्तः सन् प्रोक्षणक्रियाभिधायक एव।

नचैवं तदुद्देशेन घृतविधाने घृतमित्यनेन तृतीयार्थलक्षणापत्तिः, तस्याः त्वत्पक्षेऽपि समानत्वात्। अतः क्वचिदपि संस्कारेषु ईकाररहितस्य प्रोक्षणशब्दस्याप्रयोगात् ईकारान्तस्यैव संस्कारवाचित्वावगतेः प्रैषगतस्यापि प्रकृतौ संस्कारवाचकत्वेन क्लृप्तस्य प्रोक्षणशब्दस्य इह प्रत्यभिज्ञायमानस्याविकृत एव प्रयोगः।

जातिवाचित्वपक्षे तु "घृतमासादये" त्येवमूहितव्यम्, घृतस्य स्रुर्वादिवत् प्राकृतकार्यापन्नत्वात्। यौगिकत्वे तु ईकाररहितस्यैव प्रोक्षणशब्दस्य यौगिकत्वावगमात् ईकारस्य च प्रकृतौ असामानाधिकरण्यनिमित्तस्य घृते अर्थलोपेन निवृत्तिसिद्धेः तद्रहितं प्रोक्षणप्रातिपदिकमेव 'प्रोक्षणमासादये'त्येवं प्रयोक्तव्यम्।

न चास्मिन्नपि पक्षे विधिगतस्य घृतपदस्यैव देवतापदवत् मन्त्रेषु प्रयोऽपत्त्यावगमात् नेष्टसिद्धिरिति वाच्यम्, द्रव्यस्य स्वरूपेणैवोपयोगित्वात् देवतावत् शब्दद्वारा उपयोगित्वाभावेन तत्र विधिगतशब्दनियमाभावस्य(१)दशमे वक्ष्यमाणत्वात्। अतः सिद्धान्ते प्रोक्षणमासादयेत्येव प्रयोक्तव्यमिति सिद्धम्।

प्रोक्षणीशब्दस्यावयवार्थसंयोगेनैवार्थपरत्वोपपत्तेः न संस्कारपरत्वं न वा जातिवाचित्वं इति सूत्रार्थः।

इति नवमं प्रोक्षण्यधिकरणम् ॥

---

१ पू. मी. १०-४-१७.

## अथ दशमं निर्मन्थ्याधिकरणम् (१०) ॥

### सू–तथा निर्मन्थ्ये ॥ १–४–१२. ॥ ( सि )

एवं "निर्मन्थ्येनेष्टकाः पचन्ति" इत्यत्रापि निर्मन्थ्यशब्दे पूर्ववदेव सङ्गतिद्वयमातिदेशिकत्वेन चानन्तरसङ्गतिं प्रदर्श्य त्रिविधः संशयः प्रवर्तनीयः। तत्र पश्वादौ अग्निमन्थनशकलनिधानाद्यङ्गकस्य मन्थनस्य विहितत्वात् तत्संस्कृते चाग्नौ शास्त्रस्थानां निर्मन्थ्यशब्दप्रयोगात् संस्कारनिमित्तत्वमित्याद्यः पक्षः। एवञ्च यत् कैश्चिदुक्तं संस्कारनिमित्तत्वपक्षे विहितस्यैव संस्कारस्य ग्राह्यत्वात् स्वातन्त्र्येण च मन्थनस्य क्वचिदपि अविधानात् मन्थनाद्यङ्गकाधानजन्यसंस्कारनिमित्तको गार्हपत्य एव निर्मन्थ्यशब्देनाभिधीयते इति, तत् पश्वादौ मन्थनस्यापि स्वातन्त्र्येण विहितत्वात् तत्रैव च कल्पसूत्रकृता निर्मन्थ्यशब्दप्रयोगात् उपेक्षणीयम्।

द्वितीयस्तु 'निर्मन्थ्यमानय पक्ष्याम' इति लोके प्रयोगात् संस्काराणां व्यभिचारित्वेन निमित्तत्वानुपपत्तेः अग्नित्वजातिवाचित्वम्। न च पूर्वाधिकरणन्यायेन मन्थनकर्मत्वयोगेनैव शब्दप्रवृत्त्युपपत्तौ अतिरिक्तशक्तिकल्पनानुपपत्तिः। निर्मन्थ्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् ण्यतश्च कृत्यप्रत्ययत्वेन कर्मत्ववाचित्वावगतेः मन्थनकर्मत्वापरपर्यायमन्थनव्याप्यत्वरूपयोगस्यापि मथननिष्पन्ने अग्नौ अभावेन संस्कारवदेव व्यभिचारात्। 'निर्मन्थ्यमानय पक्ष्यामः' "निर्मन्थ्येनेष्टकाः पचन्ती" त्यादौ हि निष्पन्नावस्थायां प्रयुज्यमानो निर्मन्थ्यशब्दः कथमिव मन्थनव्याप्यत्वरूपयोगनिमित्तत्वं प्रतिपद्यते। न ह्यत्र पूर्ववत् कर्मत्वयोग्यताप्यस्ति; विनष्टेऽपि नाशयोग्यतावन्मथिते मथनव्याप्यत्वयोग्यताया अनुक्तिप्रहतत्वात्। प्रोक्षणीशब्दस्य प्रोक्षणीभिरुद्धेजिताः स्मः इत्यादौ सेचनावस्थायामपि प्रयोगात् उत्तरकालं

प्रयोगेऽपि वा साधनत्वयोग्यताया अनपायात् न योगस्य व्यभि(१) चरितत्वमिति विशेषः । अत एवैतदाशङ्कानिराकरणार्थमधिकरणारम्भः ।

न च मथिते वर्तमानतया मथनव्याप्यत्वासंभवेऽपि भूतपूर्वगत्या, क्तप्रत्ययान्तमथितशब्दवत् ण्यत्प्रत्ययान्तनिर्मन्थ्यशब्देऽपि निष्पन्नस्याग्नेः मन्थनव्याप्यत्वस्य संभवान्निमित्तत्वोपपत्तिः । क्तप्रत्ययवत् ण्यत्प्रत्ययस्य भूतकालवाचितायाः विशिष्यानुशिष्टत्वात् । अग्न्यादेः संसर्गिद्रव्यस्य प्रतिक्षणमुपचयापचयाभ्यां परिमाणप्रकाशादिभेदेन भेदाभ्युपगमात् स एवायं वह्निरित्यादिप्रत्यभिज्ञायाश्च सजातीयसन्तानजत्वेनाप्युपपत्तेरैक्यासाधकत्वात्, पाकसाधनीभूताग्निव्यक्तेर्भूतपूर्वगत्यापि मथनव्याप्यत्वासम्भवाच्च । यथाकथञ्चित् परम्परया मथनप्रयोज्यत्वाङ्गीकारे तादृशाग्निजन्यपाकादेरपि निर्मन्थ्यशब्दवाच्यत्वापत्तिः । अतो योगस्य व्यभिचरितत्वम् । अत एव साक्षान्मथनव्याप्यत्वेऽपि नवनीतादौ निर्मन्थ्यशब्दाप्रयोगः । तस्मादन्वयतो व्यतिरेकतश्च योगस्यापि व्यभिचारात् तन्निमित्तत्वानुपपत्तेरणिप्रयोज्याग्निवृत्त्यग्नित्वावान्तरव्याप्यजातिवाची निर्मन्थ्यशब्दः । न तु संग्राहकलाघवेनाग्नित्वजातिवाची वैद्युताश्माघातोत्थाग्नौ निर्मन्थ्यशब्दप्रयोगाभावात् । तस्मात् जातिनिमित्त एव निर्मन्थ्यशब्दः इति प्राप्ते—

अभिधीयते—प्रोक्षणीशब्दवदेव क्लृप्तावयवशक्त्यैव प्रयोगोपपत्तौ नातिरिक्तशक्त्यन्तरकल्पनावसरः । न च तस्याः व्यभिचारित्वम् । ण्यत्प्रत्ययस्य कालत्रयसाधारण्येन निष्पद्यमानावस्थायां वर्तमानमथनकर्मत्वाभिप्रायेण प्रयोगेऽपि निष्पन्नावस्थायां मथितशब्दवदेव भूतमन्थनकर्मत्वाभिप्रायेण प्रयोगोपपत्तेः । न च पाकसाधनीभूतव्यक्तेस्ततो भिन्नत्वात् नोक्तावयवयोगोपपत्तिरिति वाच्यम् । सत्यप्यु-

१ व्यभिचारित्व०

पचयापचयाख्यां परिमाणप्रकाशादिभेदे स एवायं वह्निरिति दृढप्रत्य-
भिज्ञानेन वह्निभेदे प्रमाणाभावात् ।

यदि तु वह्निव्यक्तिभेद आवश्यक एव, ततः प्यत्प्रत्ययं(१)"अर्हे कृत्यतृचश्च" इति सूत्रादर्हार्थमङ्गीकृत्य मन्थनार्हतायास्संबन्धा-
पेक्षायां मन्थनप्रयोज्यत्वसम्बन्ध एव मन्थनजन्यवह्निसन्ताने निर्मन्थ्य-
शब्दप्रयोगनिमित्तत्वेनाश्रीयते । न च तस्य मथितवह्निजन्यपाकेऽपि
सत्त्वादतिप्रसङ्गः । उद्भिदत्पङ्कजादिशब्दवत् पाके प्रयोगाभावेन तन्निष्ठ-
प्रयोज्यत्वस्य निमित्तत्वानङ्गीकारात् । नवनीतादौ तु सत्यपि शब्दा-
प्रयोगे उक्तावयवयोगस्य सत्त्वाद्वाच्यत्वमेव । न हि यो यद्वाचकः
स तत्र सर्वैः प्रयोक्तव्य इति नियमः समस्ति । असत्यपि प्राक्तनप्र-
योगे इदानीन्तनेनैव केनचिद्वक्त्रा नवनीते निर्मन्थ्यशब्दप्रयोगे कृते
श्रोतुरवयवार्थयोगेन झटित्येवार्थप्रत्ययात् । पङ्कजादिपदे तु इदानीन्त-
नेन पङ्कजध्वनिरित्येवं प्रयुक्तेऽपि श्रोतुरन्वयानुपपत्तिं विना मण्डू-
कादिबोधाभावस्यानुभाविकत्वादतिप्रसङ्गनिराकरणोपायाङ्गीकरण-
मिति वैषम्यम् ।

नचैवं 'निर्मन्थ्येनेष्टकाः पचन्ती' त्यादौ विशेषतो वह्निप्रत्याय-
काभावः । पाकसाधनत्वाद्वह्नेरर्थादेव प्राप्तेस्तदनुवादेनैव निर्मन्थ्य-
शब्देन मथनक्रियामात्रस्य लोहितोष्णीषादिवद्विधानेन प्यत्प्रत्यय-
स्यापि वह्निरूपद्रव्यविशेषपरत्वोपपत्तेः ।

यदि तु पाकोऽप्यन्यतो नैव प्राप्तः इत्याशङ्क्येत ततोऽत्रैव
मथनसंस्कृतद्रव्यविशिष्टे पाके विहिते द्रव्यविशेषाकाङ्क्षायां मन्थनस्य
दृष्टार्थत्वलाभाय अग्निविशेषप्रतिपत्तिसिद्धिः । अत एवास्मिन् पक्षे
अङ्गप्रधानयोर्मन्थनपाकयोरेकदेशकालकर्तृकत्वलाभात् प्रयोगमध्य-
वृत्तित्वलाभाच्चाधिमन्थनशकलनिधानादिधर्मरहितं केवलमेव मन्थनं
कृत्वा तेनाग्निना पाकः कार्यः इत्यनुष्ठानलाभादाचिरनिर्मथितत्वसि-

१ पा. सू. ३-३-१६९.

द्धिः। जातिवःचित्वपक्षे तु प्रयोगबहिर्भूतेनाग्निना पाकः।

संस्कारत्वाचित्वे च पशुप्रकरणविहिताधिमन्थनशकलनिधानादिरूपधर्मविशिष्टस्य मन्थनस्य प्रयोगान्तःपात इति विशेषः।

सूत्रं निगदव्याख्यातम्।

इति दशमं निर्मन्थ्याधिकरणम्।

## अथैकादशं वैश्वदेवाधिकरणम्।

### सू०—वैश्वदेवे विकल्प इति चेत्॥१-४-१३॥ (पू)

चातुर्मास्येषु वैश्वदेवे पर्वणि आग्नेयादीनष्टौ यागान् विधाय "वैश्वदेवेन यजेते"ति समाम्नातम्। तत्र वैश्वदेवपदं किं देवतारूपगुणविधिः उत कर्मनामधेयमिति विचारः। पादाध्यायसङ्गती स्पष्टे।

अनन्तरा तु आग्नेयाधिकरणे तत्प्रख्यन्यायासम्भवेन गुणविधित्वे साधिते तत्प्रसङ्गेनान्यत्रापि गुणविधौ विधेयगुणविशेषे विचारिते 'यत्प्रसङ्गेन यदागतं तत्समाप्तौ तद्बुद्धिस्थं जायते' इति न्यायेन आग्नेयाधिकरणोक्तगुणविधित्वे बुद्धिस्थे सति अत्रापि तत्प्रख्यन्यायाक्षेपेण गुणविधित्वपूर्वपक्षकरणादापत्त्यादिकी।

तत्र यद्यपि(१) 'वैश्वदेव्यामिक्षे' त्यामिक्षायागे विश्वेषां देवानां प्राप्तत्वान्न तत्र देवताविधानं संभवति, तथापि कर्मान्तरे आग्नेयादिषु सप्तसु वा तेषामप्राप्तत्वेन विधानोपपत्तेः आमिक्षायागमात्रनामत्वस्य च प्राचीनप्रवणादिदेशसम्बन्धस्य तदभावेऽपि सिद्धेः वैयर्थ्यप्रसङ्गेन सिद्धान्तिनोऽप्यनभिमतत्वात्। अन्येषु च तत्प्रख्यन्यायाभावेन

१ मै. सं. १-१०-१.

नामत्वानुपपत्तेः गुणविधिरेवायम् । न हि वैश्वदेवपदस्य देवतातद्धि-
तान्तत्वात् तस्य च "सूक्तहविषोश्च" अनेन सूक्ते हविषि च निय-
मात् यागपरत्वानुपपत्तेः विश्वेदेवदेवताकहविष्कयागपरत्वे च लक्ष-
णापत्तेः यागनामधेयत्वमुपपन्नमित्, अत एवैकदेशप्रवृत्तिनिमित्ता-
ङ्गीकरणेनापि अग्निहोत्रपदस्य सायंप्रातरभ्यासद्वयनामत्वे लक्षणाप्र-
नापत्तेः नास्य तत्तुल्यत्वम् ।

न च तद्धितस्य सम्बन्धसामान्याभिप्रायत्वेन यागेऽप्युपपत्तेर्न लक्षणेति वाच्यम् । तदनुशासनस्यैव लाक्षणिकविषयत्वात् । अन्यथा योग्यताबलेनैव देवतात्वरूपसंबन्धविशेषलाभे पुनर्देवतातद्धितानुशासनवैयर्थ्यापत्तेः । अतो देवतातद्धितान्तत्वेन यागनामधेयत्वासम्भवात् गुणविधिरेवायम् ।

तत्र यद्यप्याग्नेयादिषु उत्पत्तिशिष्टाग्न्यादिदेवतावरोधान्न देवतान्तरस्य निवेशस्सम्भवति, तथापि गुणात् भेदोपपत्तेः भिन्ने च कर्मणि देवताप्राप्त्यभावात् देवताविशिष्टकर्मान्तरविधिरेवायम् । तद्धितेन चानिर्धारिते द्रव्यविशेषेऽवगते निर्धारणापेक्षायां अनेकदेवताकत्वसादृश्येनातिदेशात् पुरोडाशादिद्रव्यविशेषावधारणम् "अष्टौ हवींषी" ति लिङ्गं च पुरोडाशामिक्षयोरेकदेवताकत्वात् सान्नाय्यवत् सहयागावगतेश्च "त्रयोदशामावास्याया" मितिवदुपपद्यते ।

अस्तु वा "वैश्वदेव्यामिक्षे" अनेन वैश्वदेववाक्यविहितयागोद्देशेनामिक्षामात्रविधानात् द्रव्यविशेषावधारणम् । सर्वथाऽयमाग्नेयाद्यपेक्षया कर्मान्तरविधिः । न च मत्वर्थलक्षणा; तस्यास्तत्रापि समानत्वेनापर्यनुयोज्यत्वात् ।

अथ वा आग्नेयादिवाक्येषु तावदनेकगुणोपादानेन कर्मणोऽवश्यं विधेयत्वात् तेन तत्रैव वैश्वदेववाक्येन देवतान्तरविधिसंभवे न विशिष्टविधिगौरवाश्रयणं मत्वर्थलक्षणा वा युक्ता समाश्रयितुम् ।

किञ्च वैश्वदेववाक्ये तद्धितान्तर्गतस्य सर्वनाम्नः प्रकृतद्रव्यप-

रामर्शित्वाच्च स्ववाक्यगतद्रव्याभावेऽपि च प्राकरणिकाग्नेयादिवा-क्यस्थाष्टाकपालादिद्रव्यपरामर्शित्वावगतेः तत्रैव देवताविधानम् । स्ववाक्यस्य प्रकरणाद्यालोचनोत्तरं हि तत्रेतिकर्तव्यतायाः अलाभे सादृश्येनातिदेशं प्रकल्प्य तत्प्रापितपुरोडाशपरत्वं सर्वनाम्नः कल्प्यते । सति तु सर्वनामापेक्षितप्रकृतद्रव्यलाभे तत्रैव देवतान्तरविधाने च संभवति नातिदेशकल्पनापादकः विशिष्टविध्यङ्गीकारो युक्तः; न वा आमिक्षावाक्येन विशेषावधारणम्; वैश्वदेवेनेत्यत्र पुंल्लिंगेन नपुंसकेन वोपात्तस्य द्रव्यसामान्यस्य स्त्रीलिंगेन वैश्वदेवीपदेनानुवादायोगात्, आग्नेयवाक्यस्थेन 'निर्वपेदि'त्यनेन आख्यातेन सर्वत्रानुषक्तेन अन्येषु विशिष्टविधिः आमिक्षावाक्ये च गुणमात्रविधिरिति वैरूप्यप्रसङ्गाच्च ।

अत एव (१)"सप्तदशमारुतीसितवत्सा उपाकरोति, तावतश्चोक्ष्ण" इत्यत्र उक्ष्णां पर्यग्निकृतानां उत्सर्गे कर्मभेदापादकस्य एकपशुनिष्पत्त्यैकादशावदानगणातिदेशस्याभावेऽपि मारुतीवाक्यस्थेन सप्तदशकर्मविधायिना आख्यातेनात्राप्यनुषक्तेन भिन्नान्येव कर्माणि विधीयन्ते वैरूप्यपरिहारार्थमित्याकरे वक्ष्यते ।

न चामिक्षावाक्ये निर्वापस्यातिदेशेन प्राप्त्यभावात् कथं निर्वपेदित्यस्य अनुषङ्गोपपत्तिः । आग्नेयादिवाक्याष्टकेऽपि अर्थप्राप्तस्य पृथक्करणरूपस्यैव निर्वापस्यानुवादेनामिक्षावाक्येऽप्यनुषङ्गोपपत्तेः । सौर्यादिवाक्येष्वेव हि सत्यामपि पृथक्करणरूपस्य निर्वापस्यार्थतः प्राप्तौ अतिदेशेनापि सधर्मकनिर्वापप्राप्तिरष्टमादावुपपादिता । प्रकृते त्वामिक्षावाक्ये स्वतन्त्राख्याताध्याहारगौरवपरिहारार्थमाग्नेयवाक्यस्थस्य निर्वपेदित्यस्यार्थप्राप्तपृथक्करणमात्रानुवादकत्वमेवाङ्गीक्रियत इति न दोषः कश्चित् ।

अतश्चामिक्षावाक्येऽपि यागविधेरावश्यकत्वात् वैश्वदेववाक्येऽ

---

१ ता. ब्रा. २१-१४-८.

पि देवताविशिष्टयागविधाने गौरवापत्तेः आग्नेयादिष्वेव देवतामात्र-विधानम् ।

अत एव सर्वनामश्रुत्या उत्पत्तिशिष्टाग्न्याद्यवरुद्धस्यापि अष्टाक-पालादेः परामर्शादुत्पन्नशिष्टाया अपि देवतायाः विधिर्नायुक्तः। यदि हि वैश्वदेव्यामिक्षा, तेभ्यो वाजिनश्चेत्यश्रोष्यत, तदा कथञ्चिदु-त्पत्तिशिष्टप्राबल्यमङ्गीक्रियेत ।

अत एव गुणाधिकरणपूर्वपक्षे वाजमामिक्षारूपमन्नं येषां विश्वे-षां देवानां ते वाजिनः विश्वे देवाः तेभ्यो वाजिनमित्यर्थाङ्गीकारेणै-वोत्पत्तिशिष्टप्राबल्याशङ्का निरस्ता। सिद्धान्ते च वाजिशब्दस्य रूढ-त्वोपपादनेन प्रत्यभिज्ञापकाभाव एवोपन्यस्तः। प्रकृते तु यौगिकत्व-स्यासंदिग्धत्वात् सर्वनाम्नाष्टाकपालादिपरामर्शोपपत्तेर्युक्तः उत्पन्न-शिष्टस्यापि देवतान्तरस्य विधिः ।

तत्रापि शिक्ये घटोऽस्ति तमानयेत्यादौ सर्वनाम्नः सिद्धद्रव्य-परामर्शित्वस्यैव दर्शनात् पूर्वदेवतासंबन्धापरित्यागेन देवतान्तरसं-बन्धस्य प्रधानावृत्त्यापादकत्वेनायोगाच्च समुच्चयानुपपत्तेः उत्पत्त्युत्प-न्नशिष्टयोरपि विकल्प एव ।

किञ्च नामधेयत्वे वैश्वदेववाक्यस्य वैयर्थ्यापत्तेः आनर्थक्यप्र-तिहतन्यायेनापि विकल्पाङ्गीकरणमदोषः । तथा हि—

न तावद्यागो विधीयते। नापि नामधेयम्। तस्याविधेयत्वात्। न चा-ष्टानां यागानामयं समुदायसिध्यर्थमनुवादः, तत्सिद्धेः प्रयोजनाभा-वात्। न चैतदभावे "प्राचीनप्रवणे वैश्वदेवेन यजेत" 'वसन्ते वैश्वदेवेन यजेत" इत्यादौ क्लृप्तप्रवृत्तिनिमित्तवैश्वदेवपदसमभिव्याहारेणामिक्षाया-गस्यैव देशकालसंबन्धापत्तेस्सर्वेषामाग्नेयादीनां तत्सिध्यर्थं समुदा-यानुवादोऽर्थवानिति वाच्यम्। वैश्वदेववाक्येऽपि तर्हि तस्यैवानुवा-दप्रसंगेन समुदायानुवादानुपपत्तेः। आग्नेयादौ देशकालादिसंबन्धस्य प्रकारान्तरेण सिद्धेश्च। एतदभावे हि वसन्तादिवाक्ये आमिक्षाया-

गस्यैव साक्षात्कालाद्यन्वयेऽपि 'चातुर्मास्यैः स्वर्गकामो यजेत' इत्यामिक्षायागस्यैव वरुणप्रघासादिपर्वान्तरसहचरितस्य फलसंबन्धापत्तेः आग्नेयादीनां वैश्वदेवपर्वावान्तरप्रकरणादामिक्षायागाङ्गत्वापत्तिः। चातुर्मास्यशब्दो हि "चतुर्थे चतुर्थे मास्येकैकेन पर्वणा यजेत" इति वाक्यान्तरानुरोधेनोत्तरपर्वत्रये मासचतुष्टयोत्तरत्वस्य श्रौतस्य पूर्वावध्यपेक्षायां अर्थादाद्यस्य पर्वणो मासचतुष्टयपूर्वभावावगतेर्मासचतुष्टयपूर्वोत्तरभावरूपप्रवृत्तिनिमित्तकेन चतुर्णामपि पर्वणां नामधेयम्। पूर्वोत्तरभावस्य च विशेषापेक्षायां वसन्तादिवाक्येन कालविधानात् तेषामेव पूर्वोत्तरभावघटकवसन्तादिसंबन्धः, तेषामेव चातुर्मास्यनामावच्छिन्नेन यजिना फलसंबन्धानवगतेरामिक्षायागस्यैव फलसंबन्धादाग्नेयादीनां वाजिनयागवत्तदङ्गत्वोपपत्तिः। अतश्चाङ्गप्रधानयोरेकदेशकालकर्तृत्वात् प्राचीनप्रवणदेशादिसंबन्धः आग्नेयादीनां सिद्ध्यत्येवेति नामधेयत्वे वैश्वेदेववाक्यस्य वैयर्थ्यापत्तेः गुणविधित्वाङ्गीकारेणागत्या विकल्पाङ्गीकरणमपि(१) अदोष एव ।

सूत्रं तु इति चेत् कर्मान्तरविधिं मन्यसे तदपि कर्मनामधेयत्ववदनभिमतम्; वैश्वदेवशब्दस्य देवतातद्धितान्तत्वेन प्रकृतसंबद्धद्रव्यपरामर्शित्वावगमात्। अतः तेषु गुणविधिरेव युक्तः। ततश्चागत्या विकल्प इति व्याख्येयम् ।

## सू—न प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १–४–१४.॥( सि )

नैतदेवम् वैश्वदेवशब्दस्य गुणविधित्वम्; प्रकृतेषु आग्नेयादिषु (२)गुणाधिकरणे वक्ष्यमाणरीत्योत्पत्तिशिष्टाग्न्याद्यवरुद्धत्वेन देवतान्तरसमर्पकत्वानुपपत्तेरामिक्षायागे तस्याः प्रत्यक्षविधिना प्राप्तत्वेनैव वि-

१ उपपन्नमेव। २ पू. मी. २–२–९.

ष्वनुपपत्तेश्च ।

न चाग्नेयादीनामुत्पत्तिशिष्टाग्न्याद्यवरुद्धत्वेऽपि वैश्वदेवपदस्य देवतातद्धितान्तत्वात् तस्य च सर्वनामार्थकत्वात् सर्वनाम्नश्च स्ववाक्योपात्तद्रव्याभावे प्राकरणिकद्रव्यपरामर्शित्वस्यावश्यकत्वात् गुणाधिकरणपूर्वपक्षन्यायेनोत्पन्नशिष्टस्यापि देवतान्तरस्य विधानोपपत्तिरिति वाच्यम् । सर्वनाम्नः स्ववाक्योपात्तद्रव्यपरत्वासम्भवेऽपि स्ववाक्योपात्तयागपरत्वस्यैवोपपत्तेः असम्भवन्निवेशप्राकरणिकद्रव्यपरत्वकल्पनायोगात् ।

न च देवतातद्धितस्य "सूक्तहविषोश्चे"ति महाभाष्यानिथमाविषयत्वप्रतीतेर्न यागपरत्वोपपत्तिः(१)"अग्नेयो वै ब्राह्मणो देवतये" त्यादौ अन्यपरत्वस्यापि दर्शनेनास्याः स्मृतेरनियामकत्वात् ।

अथ तत्र(२)"तस्येद" मिति सूत्रेण संबन्धसामान्ये विहितं तद्धितमङ्गीकृत्य विशेषापेक्षायां योग्यतया देवतापदश्रवणाच्च देवतात्वरूपविशेषप्रतीतिः, तदन्यत्रापि समानमिति यागपरत्वे बाधकाभावः ।

न च तस्य लाक्षणिकत्वानुशासनत्वात् आग्नेय इत्यादौ पदान्तरसामानाधिकरण्यात्तदङ्गीकारेऽपि प्रकृते तथाङ्गीकारे प्रमाणाभावः, तस्य लाक्षणिकत्वे प्रमाणाभावात् ।

अस्तु वा लाक्षणिकत्वम्, तथापि तदङ्गीकारः आवश्यक एव । तथाहि—तद्धितो हि देवतात्वयुक्तोपस्थितद्रव्यवाची । प्रातिपदिकञ्च देवतात्वाधिष्ठानवाचि । देवतात्ववैशिष्ट्यञ्च निरूपकतासम्बन्धेन । देवतातात्वरूपं विशेषणमपि शक्त्यैव भासते लक्षणया वेत्यन्यदेतत् । (३)न च सर्वथा सर्वनामार्थविशेषणमेव । अतश्च प्रधानभूतसर्वनामार्थप्राबल्यात् स्ववाक्योपात्तयागपरत्वावगतेः विशेषणीभूतासम्भवन्निवेशदेवतात्वत्यागेनापि सम्बन्धसामान्यलक्षणायां न काचित् क्षतिः ।

---

१ तै. सं. २-१-२-८.  २ पा. सू. ४-३-१२०.
३ तत्र सर्वथा सर्वनामार्थो द्रव्यं विशेष्यमेव ।

न चात्र देवतात्वत्यागोऽपि । संबन्धसामान्यस्य विशेषापेक्षायां देवतात्वरूपसंबन्धविशेषस्याङ्गीकरणात् । यथा च सर्वेषु यागेषु देवतात्वरूपसंबन्धविशेषसिद्धिस्तथानुपदमेव वक्ष्यामः ।

किञ्च विषमशिष्टयोरष्टदोषदुष्टविकल्पस्वीकारापेक्षया आनुशासनिकलक्षणाङ्गीकरणमपि नातीवायुक्तम् । अतश्च प्रकृतेष्वाग्नेयादिषु गुणविधित्वासम्भवात् सामान्यसंबन्धकरणेन यजत्यनूदितसर्वयागनामधेयं वैश्वदेवशब्दः । नामधेयत्वं चोत्पत्तिशिष्टगुणावरोधसहकृतेन तत्प्रख्यन्यायेन गुणविध्यसंभवसंपादनद्वारा स्वापादितप्रवृत्तिनिमित्तसंपादनद्वारा वा अवगन्तव्यम् । न तु शुद्धेन तत्प्रख्यन्यायेनैव । तेनामिक्षायागे गुणविध्यसम्भवसम्पादनेऽपि इतरेषु तदसम्भवस्य सम्पादयितुमशक्यत्वात् ।

यत्तु कैश्चित् गुणविध्यसम्भवं प्रति तत्प्रख्यन्यायस्य न समानविषयकत्वेन हेतुता, प्रमाणाभावात् ; किन्तु यत्र कचिद्गुणविधित्वे निरस्ते सर्वेषु वक्ष्यमाणरीत्या प्रवृत्तिनिमित्तमात्रसम्पादनद्वारा नामत्वसाधकता तत्प्रख्यन्यायस्येत्युक्तम्, तन्न (१) "दध्नेन्द्रियकामस्य जुहुया" दित्यत्रापि "दध्ना जुहोती" त्यनेन दध्नः होमे प्राप्तत्वाद्विध्यसम्भवनिरासोपपत्तेः दध्यादेश्च लक्षणया प्रवृत्त्युपपत्तेर्नामत्वापातात् । अतश्च समानविषयत्वमप्यवश्यं प्रवेशनीयम् । ततश्च दध्नः होमे प्राप्तावपि फलार्थं प्राप्त्यभावात् विधेयत्वोपपत्तेर्न नामत्वापत्तिः । अतश्चाग्नेयादिषु गुणविध्यसम्भवसम्पादनार्थं उत्पत्तिशिष्टबलवत्त्वस्य सहकारित्वाङ्गीकरणं युक्तमेव

प्रवृत्तिनिमित्तं च यद्यपि तत्प्रख्यन्यायेनामिक्षायाग एव सम्पाद्यते तथापि यजेतेत्यनेन प्रकृतत्वाविशेषात् वक्ष्यमाणार्थवत्त्वाय च सर्वेषां यागानां समुदायीकरणार्थं अनुवादात्, समुदाये च विश्वेदेवदेवताकत्वस्य स्वजन्यघटितत्वसंबन्धेन सत्त्वात् तद्वारा समुदायिषु

---

१ तै. ब्रा. २-१-५-६

अष्टसु प्रवृत्तिनिमित्तसम्पादनोपपत्तिः ।

एवञ्चात्र तद्धितेन समुदायिन एवोच्यन्ते, प्रातिपदिकेन विश्वेदेवाः। तेषां तत्संबन्धसामान्ये पदश्रुत्यावगते तद्विशेषापेक्षायां योग्यतया विश्वेदेवदेवताजन्यामिक्षायागघटितसमुदायाश्रयत्वरूपविशेषसम्बन्धावगतिर्न विरुध्यते ।

अथ वा न प्रवृत्तिनिमित्तमपि तत्प्रख्यन्यायेनैव सम्पादनीयमिति नियमः । किन्तु तस्य सहकारिसहकृतस्य शुद्धस्य वा गुणविध्यसम्भवसम्पादकत्वमात्रम् । अतश्च प्रकृते सहकारियुक्तेन तेन गुणविध्यसम्भवे सम्पादिते यजिसामानाधिकरण्यादेव नामधेयत्वे अवगते प्रवृत्तिनिमित्तापेक्षायां अगत्या विश्वेदेवशब्दस्य क्लृप्तामपि देवताविशेषरूढिं परित्यज्य विश्वशब्दस्य सर्वशब्दपर्यायत्वाङ्गीकारेण(१) "सर्वत्वमाधिकारिक" मिति न्यायात् प्रकृतसर्वविषयत्वमापाद्य देवशब्दस्य च देवतापरत्वमङ्गीकृत्य प्रकृताग्न्यादिसर्वदेवताकत्वस्यैवाष्टस्वपि यागेषु प्रवृत्तिनिमित्तत्वमङ्गीक्रियते ।

एवं चास्मिन् पक्षे नावश्यं तत्प्रख्यन्यायस्य नामत्वपर्यन्तव्यापारोऽभ्युपगन्तव्यः; तेन विधेयसमर्पकत्वमात्रे निराकृते शब्दस्य प्राप्तगुणानुवादकत्वेनाप्युपपत्तेः । किन्तु सामानाधिकरण्यमेव नामत्वसाधकमित्यवगन्तव्यम् । पक्षद्वयेऽपि च वैश्वदेवेनेत्येकवचनं राजसूयवत् समुदायाभिप्रायं सत् उक्तलक्षणार्थं द्रष्टव्यम् ।

यत्तु (२)"यद्विश्वे देवाः समयजन्त । तद्वैश्वदेवस्य वैश्वदेवत्व"मिति वाक्यशेषे अष्टस्वपि यागेषु विश्वेदेवकर्तृकत्वरूपप्रवृत्तिनिमित्तकथनम्, तत् वाक्यशेषस्य स्तुतिमात्रपरत्वेन तादृशप्रवृत्तिनिमित्तसद्भावे प्रमाणाभावात् उद्भिदादपदप्रवृत्तिनिमित्तवलरूपवचनस्येव "गमेर्डोस्" इतिवत् साधुत्वज्ञापनमात्रमित्यवधेयम् । तदिदं वैश्वदेवशब्दः अष्टानामपि यागानां नामधेयमिति ।

---

१. पू. मी १-२-१६.　　२. तै. ब्रा. १-४-१०-५.

सूत्रं तु न वैश्वदेवशब्दः गुणविधिः; स्ववाक्योपात्तदेवतान्तरावरुद्धेषु प्रकरणाद्देवतान्तरविधानानुपपत्तेः, प्रत्यक्षविहितविश्वेदेव-देवताके आमिक्षायागे देवतायाः प्राप्तत्वेन विध्यनुपपत्तेश्च । न च सर्वनाम्ना स्ववाक्योपात्तद्रव्याभावे प्रकृतानां द्रव्याणां ग्रहणस्यावश्यकत्वादुत्पत्तिशिष्टदेवतावरोधेऽपि न क्षतिरिति वाच्यम् । सर्वनाम्नः स्ववाक्योपात्तयागग्रहणसम्भवे प्रकृतद्रव्यग्रहणे प्रकरणस्यानियामकत्वादिति व्याख्येयम् ॥

## सू–मिथश्चानर्थसम्बन्धः ॥ १–४–१५ ॥

इदं सूत्रं भाष्यादौ वैश्वदेवशब्देनैव वैश्वदेवाग्नेयादिसमुदाये वैश्वदेवशब्दाङ्गीकारेण अष्टौ यागानुद्दिश्य पुनस्तेनैव विश्वेदेव-देवताविधिरस्त्विस्याशङ्क्य वैश्वदेवपदस्यावृत्तिप्रसङ्गात् मिथः परस्परमुद्देश्यत्वविधेयत्वयोरेकेन शब्देन असम्बन्ध इत्येवं व्याख्यातम् । तस्याः शङ्कायाः स्पष्टदूषणत्वेन तदर्थं सूत्रप्रणयनवैयर्थ्यापत्तेरन्यथा व्याख्यायते ।

यदुक्तं वैश्वदेवपदस्य नामधेयत्वे तस्याविधेयत्वात् यागान्तरस्य च रूपाभावेन विद्वद्वाक्यवद्विधातुमशक्यत्वात् प्रवृत्तिनिमित्ताभावेन च कर्मान्तरे वैश्वदेवपदस्य नामत्वानुपपत्तेः देवताविशिष्टकर्मान्तरविधेश्च पूर्वमेव निराकृतत्वेन तवाप्यसम्मतत्वात् समुदायानुवादत्वमङ्गीकार्यम् ।

न च तस्य प्रयोजनमस्ति, वसन्तादिकालसम्बन्धस्य समुदायानुवादाभावेऽपि आग्नेयादियागानां आमिक्षायागाङ्गत्वसम्भवेनोपपत्तेः । अतः प्रयोजनाभावादस्य वाक्यस्यानर्थक्यप्रसङ्ग इति तन्निराकरणार्थमिदं सूत्रम् । मिथः परस्परं आग्नेयामिक्षायागानां अङ्गाङ्गित्वसम्बन्धासिद्धिरेवास्य प्रयोजनम् । अस्मिन् हि सति समुदा-

यानुवादे सर्वेषामाग्नेयादीनां वैश्वदेवसंज्ञकत्वसिद्धेः वसन्तादिवाक्येऽपि वैश्वदेववाक्येन सर्वेषामनुवादपूर्वकं कालादिसम्बन्धोपपत्तेः मासचतुष्टयपूर्वोत्तरभावघटकवसन्तकालसम्बन्धेन चातुर्मास्यपदाभिधेयत्वसम्भवादाग्नेयादीनां फलसम्बन्धसिद्धिः। असति त्वेतस्मिन् वसन्तादिवाक्ये क्लृप्तप्रवृत्तिनिमित्तत्वेनामिक्षायागस्यैव तत्रत्यवैश्वदेनपदेन कालसम्बन्धापत्त्या तस्यैव फलसम्बन्धापत्तेरितरेषां अङ्गत्वापत्तिः। ततश्च समुदायानुवादेन प्राधान्यसिद्धौ नामिक्षाविकारेष्वाग्नेयाद्यतिदेश इत्याद्यपि प्रयोजनम् ।

नचैवं "वैश्वदेवेन यजेत" इत्यत्रापि क्लृप्तप्रवृत्तिनिमित्तत्वेनामिक्षायागस्यैवा(१)नुवादापत्तेः प्रकरणाविशेषाद्वा सर्वानुवादे वाजिनयागस्याप्य(२)नुवादापत्तेः आमिक्षायागमात्रानुवादे सर्वस्याप्यस्य वाक्यस्य वैयर्थ्यापत्तेः। वाजिनयागस्य तु आमिक्षाऽनुनिष्पन्नवाजिनप्रतिपत्त्यर्थत्वस्य चतुर्थे वक्ष्यमाणत्वात् आमिक्षायागाङ्गत्वावगतेरतिदेशप्राप्तप्रयाजादिवदेव नानुवादः। तस्मादष्टानामेव यागानां फलसम्बन्धार्थमनुवादात् नानर्थक्यम् ।

यत्तु न्यायसुधायां वसन्तादिवाक्ये अष्टानां यागानां कालसम्बन्धावगमेऽपि "य इष्टया पशुना सोमेन" इत्यादिवदेकप्रयोगत्वे प्रमाणाभावादेकप्रयोगतासिद्धिः समुदायानुवादप्रयोजनं इत्युक्तम् ; तत् समुदायानुवादाभावे सर्वेषां वसन्तादिसम्बन्धे प्रमाणाभावात् सत्वे वा सर्वेषां सहितानां फलसम्बन्धसम्भवेन एकफलसाधनानामेककालयोगे पूर्णमासादिवदेकप्रयोगत्वस्यापि सिद्धेः विकृतीष्ट्यादीनां चैकफलसाधनत्वतत्साहित्ययोरभावेन एककालयोगेऽपि साहित्यानुपपत्तेरुपेक्षणीयम् । तस्मादुक्तसमुदायानुवादप्रयोजनकथनार्थमिदं सूत्रम् ।

---

१-२ अनुवादापत्तिः ।

अथ वा उत्तरसूत्रेणैकवाक्यतापन्नम्—

## सू—परार्थत्वात् गुणानाम् ॥ १–४–१६. ॥

यदि ह्ययं आग्नेयादियागेषु देवताविधिः स्यात्, ततः पक्षे सम्प्रतिपन्नदेवताकत्वेनाग्नेयादीनां मिथोऽन्वितत्वया सहानुष्ठानापत्तेः (१)"नव प्रयाजाः। नवानूयाजाः। द्वावाघारौ। द्वावाज्यभागौ। अष्टौ हवींषि" इति त्रिंशत्संख्यासम्पत्तिरूपार्थसम्बन्धानुपपत्तिः (२)कस्यांचिच्छाखायां स्वाघारद्वयस्थाने स्विष्टकृद्वाजिनेज्ये गणिते।

न च सम्प्रतिपन्नदेवताकत्वेऽपि द्रव्यभेदादेव प्रधानाहुतिभेदशङ्काः। गुणानां द्रव्यादीनां प्रधानार्थत्वेन तदावृत्त्यापादकत्वानुपपत्तेः। सर्वेषां द्रव्याणां युगपत् त्यक्तुं शक्यत्वेन प्रयोगविध्यवगतप्राधानसाहित्यबाधानुपपत्तेश्च। देवताभेद एव हि सर्वोद्देशेन युगपत् त्यक्तुमशक्यत्वात् तद्बाधः, न तु सान्नाय्यवत् द्रव्यभेदेऽपि। अतः प्रधानाहुत्यैक्यापत्त्या त्रिंशत्संपत्तिवाक्यानुपपत्तेरपि न देवताविधिस्सम्भवतीति सिद्धम् ॥

इति एकादशं वैश्वदेवाधिकरणम्।

### अथ द्वादशं वैश्वानराधिकरणम् (१२) ॥

## सू—पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १–४–१७. ॥ (पू) ॥

(३)"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते, यदष्टाकपालो

---

१ तै. ब्रा. १–६–३–३.

२ इदं च मैत्रायणीयशाखां मनसि निधायोक्तम्। तत्र हि "नव प्रयाजाः, नवानूयाजाः, द्वा आज्यभागा, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति, तत् त्रिँ्शत्। इति श्रुतम् ॥ ( १–१०–८ )

३ तै. सं. २–२–५–३.

भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालो भवति त्रिवृतैवास्मिन् तेजो दधाति, यद्दशकपालो भवति विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती''ति श्रूयते । तत्र पुत्रे जाते इत्यन्तस्य तावदाग्नेयाधिकरणन्यायेन निर्वपतेरतिदेशप्राप्तनिर्वापानुवादेन यागलक्षकत्वमङ्गीकृत्य वैश्वानरादिपदस्य च द्वितीयान्तस्य सक्तुन्यायेन करणत्वलक्षणार्थत्वमङ्गीकृत्य पुत्रजनने निमित्ते वैश्वानरदेवताकेन द्वादशकपालेन यजेतेत्ययमर्थो निस्सन्दिग्धः। अष्टाकपालादिपदानि तु किं तस्यैव यागस्य नामधेयम् ? अथ वा तत्रैव गुणविधयः? उत तदाश्रितगुणाः फलार्थं विधीयन्ते ? आहोस्वित् तदीयद्वादशकपालस्तुत्यर्थान्यर्थवादाः ? इति सन्दिह्यते ।

पादाध्यायसङ्गती स्पष्टे । अनन्तरा त्वापवादिकी । नामत्वापवादात् पूर्वाधिकरणोक्तोत्पत्तिशिष्टबलीयस्त्वादिरूपन्यायाभावेनात्र द्वितीयतृतीयपूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा(१)च । आद्याधिकरणोक्तोत्पत्तिशिष्टगुणविधिनामधेयत्वरूपप्रकारद्वयापवादाच्च प्रकरणसङ्गतिरपि । औदुम्बराधिकरणोक्तस्यार्थवादत्वस्य गुणविधिनामधेयत्वरूपप्रकारद्वयासम्भवे उपपादिते वैयर्थ्याशङ्कापरिहारार्थं स्मरणादाक्षिप्य समाधानाद्वा न पौनरुक्त्यमपि ।

तत्र यद्यपि अष्टाकपालादिपदैः अष्टत्वादिसंख्या, कपालानि, तदधिकरणकसंस्कारः, द्रव्यमित्येतावदेव शक्त्योच्यते, न तु यागः; तथापि सर्वेषाममीषां द्वादशकपालपदेनैव प्राप्तत्वात् तत्प्रख्यन्यायेन लक्षणया समिदादिपदवदष्टाकपालपदानि वैश्वानरयागनामधेयम् । न चान्येषां प्राप्तत्वेऽपि अष्टत्वादेरप्राप्तत्वाद्विध्युपपत्तिः; तस्या-

---

१ वा.

पि द्वादशत्वेऽन्तर्गतत्वेन प्राप्तत्वात् । अन्यथा सहस्रदर्शनेन शतानुमानानुपपत्तेः । अत एव(१)"शतं ब्राह्मणास्सोमं भक्षयन्ती" त्युक्त्वा "दश दशैकैकं चमसमनुप्रसर्पन्ती" ति विभागकथनं दृश्यते ।

अत एव च(२) सप्तमान्ते चोदनालिङ्गातिदेशापेक्षया नामधेयस्य बलवत्त्वे साधिते गवामयने तर्हि "वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवती"ति प्रथमस्याह्नः नामधेयबलीयस्त्वात् ज्योतिष्टोमत्रिकारत्वप्रतिप्रसवेनोपसत्त्रित्वप्राप्तेः तस्य च मुख्यत्वात् तदनुरोधेनान्येषामपि तथैव प्राप्तेः द्वादशोपसत्त्वदर्शनमयुक्तमित्याशङ्क्य द्वादशसु तिसृणां सत्त्वात् सर्वेषामनुग्रहाय द्वादशत्वस्यैव आपत्तेर्युक्तं तद्दर्शनमित्युक्तम् । अतश्च कपालादिवदेवाष्टत्वादेरपि प्राप्तत्वात् द्वादशत्वप्राप्तेः निर्विवादत्वादेव तत्प्रख्यन्यायेनैव एते शब्दा यागनामधेयम् । न च प्रथमान्तत्वात् निर्वपेदित्यनेन श्रौतसामानाधिकरण्याभावान्नामत्वानुपपत्तिः; "अग्निहोत्रं जुहोती" तिवत् लाक्षणिकसामानाधिकरण्योपपत्तेः । न चैवं संज्ञया कर्मभेदापत्तिः; संज्ञात्वस्य पाचक(३)याजकादिवत् भेदं विनाऽप्युपपत्तौ तदङ्गीकारे प्रमाणाभावात् । तथा हि—

अष्टाकपालादिपदस्य नामधेयत्वाभावे गायत्र्यैवैनमित्याद्यर्थवादत्वस्यैवाङ्गीकारात् तस्य च रात्रिसत्रन्यायेन फलपरत्वाभ्युपगमात् फलानां च नामधेयत्वाभावे लाघवेन एकस्यैव कामशब्दस्य कल्पनेन युगपदुत्पत्त्यभ्युपगमेन योगसिद्ध्यधिकरणविषयत्वानापत्तेः तद्विषयत्वसिद्ध्यर्थं सर्वनामधेयार्थवत्त्वोपपत्तेः । तदा हि सर्वेषां नामधेयानां सङ्कल्पादौ विकल्पेनार्थवत्त्वेऽपि यदा यन्नामधेयेन सङ्कल्पः तदा तस्य पुत्रस्य तन्नामधेयावच्छिन्नादेव फलं पूतत्वादि जायते इत्यस्याऽप्यर्थस्यावगमेन तत्तन्नामधेयपुरस्कारेण उत्पत्ते पूतत्वादौ प्रत्येकमेव कामशब्दकल्पनावसायात् योगसिद्ध्यधिकरणविषयत्वोपपत्तिः ।

१ तै-ब्रा-१-८-२-२. २ पू. मी. ७-४-२. ३ लावक

नचैवं वाक्यभेदापत्तिः; अर्थवादोन्नीतवाक्येन पूतत्वाद्यनेकोद्देश्यसमर्पणवत् उक्तव्यवस्थाया अपि करणोपपत्तेः श्रूयमाणवाक्यस्य स्तुतिमात्रपरत्वेन वाक्यभेदाभावात् । तस्मात् नामधेयमष्टाकपालादिशब्दा इत्येवमाद्यः पक्षः ।

द्वितीयस्तु नेमे नामधेयम्; तत्प्रख्यापकशास्त्राभावात् । तथा हि—यद्यपि तावत् कपालादीनि प्राप्तानि तथापि अष्टत्वादीनां द्वादशत्वे सत्युत्पादकसामग्र्यभावादेवा(१)सत्त्वादप्राप्तिः । द्वादशत्वसंख्याया हि द्वादशव्यक्तिविशेष्यकद्वादशत्वावच्छिन्नप्रत्येकैकत्वप्रकारकबोधरूपापेक्षाबुद्धिजन्यत्वेन उक्तकारणसद्भावे सति द्वादशत्वोत्पत्त्युपपत्तौ अष्टव्यक्तिविशेष्यकोक्तबोधरूपकारणस्यासम्भवेन नाष्टत्वादेरुत्पत्तिस्सम्भवति ।

नचैवं शतेन दशानुमानानुपपत्तिः । तादृशस्थले (२)शतबोधोत्तरं दशव्यक्तिविशेष्यकोक्तबोधरूपकारणस्य नियमेनो(३)त्पद्यमानत्वेन दशत्वोत्पत्तावनुमित्सायां सत्यां अतीतसाध्यकानुमानोपपत्तेः । प्रकृते तु द्वादशत्वोत्पत्त्यनन्तरं ततः पूर्वं वा अष्टत्वोत्पादककारणस्य नियमेनोत्पत्तौ प्रमाणाभावेन अष्टत्वाद्युत्पत्तौ प्रमाणाभावात् । अतः तस्या अप्राप्तत्वेन विधेयत्वोपपत्तेर्न नामत्वम् ।

अस्तु वा महासंख्यायामवान्तरसंख्या, तथापि तस्याः संख्यान्तरानिवर्तकत्वेनापरिछेदकत्वात् द्वादशत्वस्यैव व्याप्यसंख्यासत्त्वेऽपि व्यापकसंख्यामात्रनिवर्तकत्वेन परिच्छेदकत्वात् अष्टत्वादीनां परिच्छेदकत्वेनाप्राप्तत्वात् तेन रूपेण विधेयत्वोपपत्तिः ।

नचाष्टाकपालपदे संबन्धविशेषानुपादानात् परिच्छेदकत्वप्रतीतेः कथं तद्विधिरिति वाच्यम् । अत एव योग्यतया परिच्छेदकत्वप्रतीत्युपपत्तेः ।

---

१ असम्भवात् । २ श्रुत । ३ जायमानत्वेन ।

वस्तुतस्तु अष्टाकपालादिपदाद(१) "तत्रोद्धृतममत्रेभ्य" इति सूत्रात् तत्रेत्यस्यानुवृत्तौ (२)"संस्कृतं भक्षाः" इत्यनेन अष्टसु कपालेषु संस्कृतमित्यस्मिन्नर्थे विहितस्य तद्धितरूपस्याणप्रत्ययस्य (३)"द्विगोर्लुगनपत्ये" इत्यनेन संख्यापूर्वसमासत्वेन द्विगुसमाससंज्ञादष्टाकपालप्रातिपदिकात् परत्वेन लोपकरणाद तद्धितान्तत्वावगमेन तदन्तर्गतस्याष्टत्वस्य संस्कारसाधनीभूतकपालत्वावच्छिन्नविशेषणत्वप्रतीतेः तस्य च व्यापकसंख्यानिवर्तनव्यतिरेकेणासम्भवाद परिच्छेदकत्वप्रतीतिस्स्फुटैव ।

नचैवमपि तद्धितप्राग्भाविद्विगुसमासकरणदशायां कपालेषु संस्कारोपाधेरभावाद शुद्धेष्वेव कपालेषु समवायसम्बन्धेनाष्टमात्रवृत्तिव्यापकसंख्यान्तरपरिच्छेदकत्वरूपसम्बन्धेन वाष्टत्वस्य संबन्धोपपत्तेः समासविधानात् पश्चाद तद्धितकरणवेलायामपि च अष्टत्वोपलक्षितानामेव कपालानां चित्रगुगृहमितिवद तद्धितवृत्त्युपपत्तेः संस्कारकत्वोपहितकपालत्वावच्छिन्नविशेषणत्वस्य शब्दादप्रतीतेः प्रतीतस्य वाष्टमात्रवृत्तिसंख्यान्तरपरिच्छेदस्य द्वादशकपालेऽपि प्राप्तत्वाद्विध्यनुपपत्तिरिति वाच्यम् (४)"तद्धितार्थोत्तरपदसमाहारे चे"ति सूत्रेण तद्धितार्थे विवक्षित एव दिक्संख्ययोः समानाधिकरणसमासस्मरणाद । अष्टत्वस्य भक्षद्रव्यसंस्काराधिकरणकपालत्वावच्छिन्नेष्वेव तद्वृत्तिव्यापकसंख्यान्तरपरिच्छेदकत्वसंबन्धेनान्वयप्रतीतेः । तस्मादष्टत्वादीनां परिच्छेदकत्वेन द्वादशकपाले अप्राप्तत्वाद पुरोडाशानुवादेन विधिर्नानुपपन्नः ।

यदि तु पदश्रुत्या द्वादशकपालपुरोडाशे द्वादशत्वस्यान्वितत्वेन तदवरुद्धे पुरोडाशे नाष्टत्वादिविधिस्संभवतीत्याशंक्येत ततो गुणात् क्रयवदेव पुरोडाशादिवैजात्यकल्पनया भेदप्रतीतेर्वैश्वानरयागं अष्टाकपालादिरूपद्रव्यान्तरविधिरङ्गीकर्तव्यः ।

---

१ पा० सू० ४-२-१४. । २ पा० सू० ४-२-१६. ।
३ पा० सू० ४-१-८८. । ४ पा० सू० २-१-५१. ।

न चोत्पत्तिशिष्टद्वादशकपालावरोधात् न द्रव्यान्तरविधिस्सं-भवतीति वाच्यम् । उपक्रमोपसंहारयोरेकविषयत्वेनैकवाक्यत्वप्रतीते-स्सर्वेषामेवोत्पत्तिशिष्टत्वात् ।

नचैवमेकवाक्योपात्तत्वात् समुच्चयापत्तिः । संख्यानां समुच्चये संख्यान्तरोपजननापत्तेर्विकल्पस्यैव न्याय्यत्वात् । द्रव्यान्तरविधिपक्षे समुच्चयस्त्विष्ट एव ।

अथ वा आख्यातभेदादस्तु नानावाक्यत्वमपि, तथापि न द्वाद-कपालस्य बलवत्त्वम्, 'यद्द्वादशकपालो भवती'त्यनेनैव तद्विध्यङ्गीकर-णे तस्याप्युत्पन्नशिष्टत्वेन तुल्यबलवत्त्वोपपत्तेः । अस्मिंश्च पक्षे द्रव्या-णामपि विकल्पो निरपेक्षसाधनत्वात् व्रीहियववत्सानुपपन्नः । वैश्वा-नरवाक्ये तु प्रमाणान्तरसिद्धद्रव्यानुवादत्वात् द्वादशकपालपदं स-र्वेषामुपलक्षणार्थमङ्गीकृत्य केवलदेवतामात्रविशिष्टयागविधानमिति लाघवम् ।

एवं सर्वेषां विधायकत्वेनोपपत्तौ नामधेयत्वमर्थवादत्वं वा नाङ्गीकर्तुं युक्तम् । किंच नामत्ववदर्थवादेऽपि प्राप्त्यपेक्षत्वस्याविशिष्टत्वात् द्वादशकपाले चाष्टाकपालाप्राप्तेः पूर्वमुपपादितत्वात् द्वादशकपालस्य अष्टाकपालपदवाच्यत्वानुपपत्तेः न तावद्द्वादशकपा-लस्तुतिरियम् । अष्टाकपालस्य तु अविधेयत्वादेव स्तुतिरनाशङ्कनीया । नचापां स्तुत्या विधेयवेतसावकास्तुतिवदत्रापि जन्यजनकभावेन स्तुत्युपपत्तिः । अष्टत्वादीनां पूर्वोक्तविधया द्वादशत्वारम्भकत्वे प्रमा णाभावेनाष्टत्वादिस्तुत्या द्वादशत्वस्तुतेः तद्द्वारा च पुरोडाशस्तुतेः तद्द्वारा च यागस्तुतेरनुपपत्तेः ।

अष्टाकपालरूपद्रव्यान्तरस्य तु द्वादशकपालरूपद्रव्यान्तरजनक-त्वस्य शंकितुमप्यशक्यत्वेन द्वादशकपालस्तुतिद्वारा यागस्तुतेस्सुतरा-मनुपपत्तेश्च ।

किञ्च "यद्द्वादशकपालो भवती"त्यनेन लक्षणां विनैव द्वादशकपालस्तुतेः कृतत्वात् न लाक्षणिकी अष्टाकपालादिपदकृता स्तुतिः उपयुज्यते। अतः प्रकृतयागसाधनीभूतकपालानुवादेनाष्टत्वादिविधिः प्रकृतयागानुवादेन वा अष्टाकपालादिद्रव्यविधिरित्येव युक्तम् ।

अत्र चा 'ष्टाकपालो भवती'त्यादौ अप्राप्तार्थत्वादेव संख्यामात्रविषयः तद्विशिष्टद्रव्यविषयो वा विधिः कल्प्यते। तदपेक्षिता च भावना अष्टाकपालकर्मिका यागकर्मिका वा वैश्वानरवाक्यप्राप्ता भवतिना लक्षणयानूद्यते। गायत्र्यैवैनमित्यादिना तु तत्तद्वाक्यविधेयस्य संख्यादेः स्तुतिः। अत्रापि 'ब्रह्मवर्चसेन पुनाती'त्यादिना अध्वर्युकर्तृको व्यापारो 'यस्मिञ्जात' इत्यनेनोक्तस्य पुत्रनिष्ठपूतत्वादिभवनस्योपपादकत्वेनोच्यते ।

अत एव चोपपाद्यं पूतत्वादिभवनमपि य एतामष्टाकपालगुणकामिष्टिं निर्वपति स पूत एव भवति; य एतां नवकपालगुणकामिष्टिं निर्वपति। स तेजस्व्येव भवतीत्यनुषङ्गाङ्गीकारेण प्रत्येकं सम्बध्यते तत्र चेष्टिशिरस्कत्वेन पूतत्वादिकथनं प्रधानगतफलप्रयोजकतासंबन्धस्य स्तुत्यालम्बनत्वद्योतनार्थम्। अत एवार्थवादिकं फलमपीष्टेरेव कल्प्यते, नत्वष्टत्वादेरिति दिक्।

केचित्तु 'यस्मिन् जात' इत्यन्तस्याष्टत्वादावनन्वयात् इष्टेश्च दूरस्थत्वेन स्तुत्यनर्हत्वादगत्या कामशब्दं विधिञ्च कल्पयित्वा "सर्वेभ्यो दर्शपूर्णमासा" विति वदिष्टिफलविधिरेवायमित्याहुः। तत्तु अष्टत्वाद्यन्वयस्योपपादितत्वादकिञ्चित्करम् ।

सूत्रं तु ये पूर्ववन्तः प्रमाणान्तरेण सम्भवत्प्राप्तिकाः ते विधानानर्हाः इति नामधेयमर्थवादा वा भवेयुः यथा वैश्वदेवादयः, इह समाम्नाये पुनर्विधानस्यैवोक्तविधया सामर्थ्यम्; अतो गुणविधय एवैत इति व्याख्येयम् ॥

## सू—गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थ-का न हि तं प्रत्यर्थवत्तास्ति ॥ १–४–१८. ॥(सि)

न तावदेते कपालानुवादेनाष्टत्वादिविधयः; तदा हि कपाल-विधिः द्वितीयान्तद्वादशकपालपदेन वाभ्युपगम्यते ? अतिदेशेन वा? नाद्यः; पदश्रुत्युपात्तद्वादशत्वसंख्यावरुद्धेषु कपालेषु अष्टत्वादीनां प-दान्तरोपात्तानामन्वयानुपपत्तेः । न च प्रथमान्तद्वादशकपालपदेनैव द्वादशत्वविधानात् द्वितीयान्तेन च द्वादशत्वानुवादेन कपालमात्रवि-धानाद् तत्राष्टत्वादिविधेरुपपत्तिरिति वाच्यम् । उपक्रमस्थद्वितीया-न्तपदान्तर्गतस्य द्वादशपदस्य सर्वसंख्यापरत्वे लक्षणापत्तेः । अनयुक्तानुवादेन द्वादशत्वमात्रपरत्वे सापेक्षत्वाद कपालपदेन समा-सानुपपत्तेश्च, अष्टाकपालादिपदैः एकप्रसरताभङ्गभयेन कपालाद्यु-द्देशेन संख्याविधानानुपपत्तेश्च ।

अत एव नान्त्योऽपि ; यागाद्यनुवादेन संख्याविधिस्तु याग-स्यैव भेदकतया अभ्यासापादकतया वा संख्यान्वयापत्तेरिष्टापत्तौ च कपालपदेन समासानुपपत्तेरयुक्त एव ।

एवमष्टाकपालादिरूपद्रव्यान्तरविधिरुत्पत्तिशिष्टद्वादशकपाला-वरोधादेव नाशङ्क्यः । न च "यद्वादशकपालो भवती" त्यनेनैव द्वादशक-पालविधानाद सर्वेषामुत्पन्नशिष्टत्वम् । तथा सति उत्पत्तिशिष्टद्वाद-शकपालस्योपक्रमस्थस्यानर्थक्यापत्तेः । न चोपसंहारस्थानामपि ब-हूनां लाक्षणिकत्वापेक्षया वरमेकस्याविवक्षितत्वमिति वाच्यम् । तेषां स्तावकानां लाक्षणिकत्वेऽप्यानर्थक्याभावाद निर्वपतिसम्बन्धार्थे प्रथमायाः तृतीयार्थलक्षणायास्तत्राप्यावश्यकत्वात् ।

किञ्चास्मिन् पक्षे वक्ष्यमाणसूत्रोक्तया रीत्यावगम्यमानैकवा-क्यत्वभागोऽपि तदवस्थ एव । एकवाक्यत्वाभ्युपगमेन सर्वेषामुत्पत्ति-

शिष्टत्वाङ्गीकरणं तु सत्यपि सर्वेषां पदानां सक्तुन्यायेन तृतीयार्थलक्षकत्वे अष्टाकपालादीनां करणत्वेन निर्वपतिलक्षितयागान्वयाङ्गीकारे भवतिनानन्वयात् तद्वैयर्थ्यापत्तेः, भूधातुलक्षितयागान्वयाङ्गीकारे च भूधातुना यागविधानस्य तावद्देवतासम्बन्धाभावेना(१) शक्यत्वात्, शक्यत्वेऽपि वा विशिष्टैक्याभावेन वाक्यभेदस्य तदवस्थत्वापत्तेः, अनुवादाङ्गीकरणे च वचनव्यक्तिभेदेन वाक्यभेदापत्तेः स्फुटत्वादेवायुक्तम् । यथा च स्तावकत्वपक्षे एकवाक्यत्वोपपत्तिः तथा (२)"आनर्थक्या" दिति सूत्रे वक्ष्यामः । तस्मात् गुणविधिपक्षे वाक्यभेदस्यावश्यकत्वात्, तत्र च वैश्वानरवाक्ये पूर्वोक्तविधया द्वादशकपालस्यावश्यविधेयत्वात् उत्पत्तिशिष्टद्वादशकपालावरुद्धे यागे द्रव्यान्तराविधानानुपपत्तेः नैतेऽष्टाकपालादिशब्दाः गुणविधयः; अतश्चार्थवादा एवेति सिद्धम् ॥

सूत्रं तु गुणस्य विधानार्थे अष्टाकपालादिशब्देऽभ्युपगम्यमाने अतद्गुणाः पूर्वकर्मणोऽगुणास्सन्तः यागान्तरविधानाशक्तेः प्रयोगप्रतिपादके विधौ अनर्थकाः अविषयीभूताः स्युः, न हि तं द्वादशकपालावरुद्धं यागं प्रत्यर्थवत्तास्तीति व्याख्येयम् ॥

## सू—तच्छेषो नोपपद्यत इति चेत् ॥ १–४–१९. ॥

भाष्यकारेण इतिचेदिति पदद्वयं न पठितम् । यदुक्तं—अष्टाकपालादीनामविधेयत्वेन स्तुत्यनर्हत्वात् द्वादशकपालादीनां च असम्बन्धेन स्तुत्यनुपपत्तेः नार्थवादत्वमुपपद्यत इति, अत्रोच्यते—

## सू—अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ १-४-२०॥

यद्यपि च अष्टत्वस्याष्टाकपालादेर्वाऽविधेयत्वात् स्तुत्यनर्ह-

---

१ अशक्यत्वात् ।

२ जै. सू. ३-१-१८.

त्वम्, तथापि तत्स्तुतिः वेतसावकान्यायेन द्वादशत्वस्य द्वादशकपालस्य वा स्तुत्यर्थं न विरुध्यते। न च सम्बन्धाभावः, द्वादशत्वे अष्टत्वस्याप्यन्तर्गतत्वेन सम्बन्धोपपत्तेः। यथैव हि द्वादशत्वं द्वादशव्यक्तिविशेष्यकप्रत्येकैकत्वप्रकारकापेक्षाबुध्योत्पद्यते तथा कदाचिदिमेऽष्टौ इमे चत्वार इत्येवं अष्टत्वचतुष्ट्वप्रकारकापेक्षाबुध्योत्पद्यत एव। ततश्चास्यापि कारणकोटिप्रविष्टत्वेन सम्बन्धादुपपन्ना स्तुतिः। तत्र गायत्र्याद्यक्षरसाम्यात् ब्रह्मवर्चसादिजनकत्वेन स्तूयमानमष्टत्वादि लक्षणया द्वादशत्वस्तुत्यर्थं सम्पद्यते। अथ वा अष्टाकपालादिशब्दः आग्नेयादिसाधनीभूतेऽष्टाकपाले मुख्यस्सन् साहश्यात् द्वादशकपालावयवभूतं पुरोडाशावयवं उपस्थापयति। यद्यप्यसौ अष्टसु कपालेषु न संस्कृतः, वैधस्यैव श्रपणस्य संस्कारपदवाच्यत्वेन अवयवे तदसम्भवात्, तथापि अष्टसु कपालेषु श्रपितस्तावत्। अतश्च गौण्या वृत्त्याष्टाकपालपदेन द्वादशकपालावयवाभिधानात, तत्स्तुत्या तदवयविनो द्वादशकपालस्य स्तुति र्न विरुध्यते।

एवं गौणीगर्भलक्षणया द्वादशकपालमात्रस्तुत्युपपत्तौ द्वादशकपाले न तद्वत्तासम्बन्धेन लक्षणान्तरमङ्गीकृत्य यागनामधेयत्वं युक्तमाश्रयितुम्।

यत्तु द्वादशकपालस्य 'यद्द्वादशकपालो भवती'त्यनेन लक्षणां गौणीं वा विनैव स्तुतेः कृतत्वान्न परोक्षस्तुत्यङ्गीकरणं युक्तमित्युक्तम्, तत् 'यस्मिञ्जात' इत्येतत्प्रतिपाद्याया इष्टिस्तुतेरुपपादकत्वेन क्रियमाणानां द्वादशकपालस्तुतीनां पूतत्वाद्युपपादनार्थं सर्वासामपेक्षितत्वेन ग्रहणोपपत्तेः अनपेक्षितत्वेऽपि वा यथैव विध्युद्देशमात्रात् प्रवृत्तं पुरुषं प्रति स्तुतेरानर्थक्येऽपि पुरुषान्तरं प्रति सार्थक्यम्, तथैव अल्पस्तुत्या केषुचित् प्रवृत्तेष्वपि पुरुषान्तरं प्रति स्तुत्यन्तरस्य सार्थक्योपपत्तेरकिञ्चित्करम्॥

**सूत्रं तु विधानार्थे विधेये द्वादशकपाले स्तुतिं कर्तुं अष्टाकपा-**

कादिशब्दास्तावका उपपद्येरन्, तयोर्जन्यजनकभावादिना(१)सम्बन्धसत्त्वादित्येवं व्याख्येयम् ॥

## सू—कारणं स्यादिति चेत् ॥ १–४–२१ ॥

इदानीं फले गुणविधिवादी प्रत्यवतिष्ठते—नेयं द्वादशकपालस्तुतिः, जघन्यवृत्त्याश्रयणापत्तेः। किन्तु 'यदष्टाकपालो भवती' त्यादिनाऽप्राप्तार्थत्वादेव विधिं प्रकल्प्य विहितानामष्टाकपालादीनां 'गायत्र्यैवैनं' मित्यादिनोपपाद्योपपादकभावेन स्तुतिं कृत्वा उत्पत्तिशिष्टद्वादशकपालावरुद्धे यागे साक्षादङ्गत्वेन निवेशायोगाद् देवतान्तराभावेन च यागान्तरकल्पनानुपपत्तेः फलापेक्षायां रात्रिसत्रन्यायेन पूतत्वादिकं फलत्वेन कल्प्यते।

तत्र चोपपादकानां प्रत्येकवृत्तित्वादुपपाद्यं पूतत्वादिकमपि प्रत्येकमेव फलत्वेन सम्बध्यते। तत्र चाश्रयापेक्षायां प्रकृतो वैश्वानरयाग एवाश्रयत्वेन सम्बध्यते। तत्र च काम्यत्वेनाष्टाकपालादीनां उत्पत्तिशिष्टद्वादशकपालबाधकत्वं न विरुध्यते।

न चैवमुत्पत्तिशिष्टत्वेन द्वादशकपालस्य बाधकत्वमेव किं न स्यादिति वाच्यम्। उत्पत्तिशिष्टत्वस्य प्रमाणाश्रयत्वेन प्रमेयाश्रितस्य काम्यत्वस्यैव बलवत्तासाधकत्वात्।

न चैवमनेकगुणफलसम्बन्धाङ्गीकारेण वाक्यभेदापत्तेरुपक्रमोपसंहारयोरेकविषयत्वेन गम्यमानैकवाक्यत्वभङ्गापत्तिः, तस्य सिद्धान्तेऽप्यावश्यकत्वात्। अन्यथा एकस्यां जातेष्टौ निमित्तस्य पूतत्वादिफलानाञ्चोद्देश्यत्वानुपपत्तेः। यद्यपि च निमित्तं विजातीयमुद्देश्यम्, तथापि तद्बलकल्प्यस्य पापक्षयस्य तावत् सजातीयस्यैवोद्दे-

---

१ सम्बद्धत्वात्।

श्यत्वात्तमादायानेकोद्देश्यता अपरिहार्यैव ।

नचैषां कल्प्यत्वेन न वाक्यभेदापादकत्वम् । फलवाचकपदानां कल्प्यत्वेऽपि श्रूयमाणविधावेवोद्देश्यत्वेनान्वयाङ्गीकरणेन तद्वृत्त्या वाक्यभेदस्यापरिहार्यत्वात् । अतश्च तत्र उपक्रमोपसंहारयोरसाधकत्वादाख्यातभेदाद्वाक्यभेदो युक्त एव । तेनाश्रयस्यापि प्राकरणिकस्य लाभादष्टाकपालादयः फलार्थं विधीयन्ते ।

यद्यपि चात्र द्वितीयपूर्वपक्ष इवाष्टत्वादिरेव फलार्थं विधीयत इत्यनाशङ्क्यम्, तथात्वे आश्रयालाभापत्तेः; नह्यत्र यागः पुरोडाशो वा ऽऽश्रयीभवितुं योग्यः, तथात्वे संख्यायाः कपालविशेषणत्वानुवादानुपपत्तेः । नापि कपालम् , तस्यावान्तरप्रकरणेन विशिष्य प्रणयनादिवदनुपस्थितेः ; तथाप्यष्टाकपालादिद्रव्याण्येव फलार्थं विधीयन्ते । तत्र च प्रधानत्वाद्विशिष्योपस्थितो याग एवाश्रयत्वेन सम्बध्यत इति न किञ्चिदनुपपन्नम् । अतोऽष्टाकपालादिद्रव्याण्येव फलस्य कारणं स्यात् इति सूत्रार्थः ॥

## सू—आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थे हि विधीयन्ते ॥ १—४—२२ ॥

नैते गुणफलसम्बन्धविधयः, वाक्यभेदप्रसङ्गात् । नचाख्यातभेदात्तस्यादोषत्वम् । आख्यातभेदेऽपि(१)"यस्योभयं हविरार्तिमार्च्छे"दित्यादावेकवाक्यत्वोपगमात् । अतश्च यथैव तत्र यच्छब्दोपबन्धादेकवाक्यत्वप्रतीतिः तथैवात्र 'यस्मिञ्जात' इत्युपसंहारस्य यच्छब्दोपबद्धत्वेनोपक्रमस्थजातेष्टिविषयत्वप्रतीतेरेकवाक्यत्वमवगम्यते । सम्भवति च तत् । स्तावकत्वपक्षे सर्वेषां निर्वपत्यतिरिक्तानामाख्यातानामनुवादकत्वेन एकस्तुतिलक्षकत्वाङ्गीकाराच्च । गुण-

१. तै० ब्रा० ३-७-२-१४.

विधिपक्षे तु तत्तदाख्यातेनैव तत्तद्गुणविधानात् विभज्यमानसाका-
ङ्क्षत्वे सति एकार्थ्याभावात् वाक्यभेदापत्तिरनिवार्यैव । नच निर्व-
पत्याख्यातेनैव सर्वगुणविधानम् । तथात्वे भवत्याख्यातेनैव तत्तद्गु-
णोत्पत्तिविनियोगानामन्वयेन तद्वैयर्थ्यापत्तेः ।

किञ्चैवमेकवाक्यत्वाभ्युपगमोऽपि फलार्थं गुणविधिवादिनो
ऽयुक्तः । नह्येकेन वाक्येनाग्नेयोत्पत्तिविनियोगप्रयोगाणां त-
त्तद्गुणोत्पत्तिविनियोगप्रयोगाणाञ्च विधिस्सम्भावयितुमपि शक्यः ।
तेन वाक्यभेदप्रसङ्गात् न फले गुणविधानम् ।

यत्तु सिद्धान्तेऽपि उपपाद्योपपादकरूपेणोपस्थापकस्यापि इ-
ष्टेः फलाकाङ्क्षायां पूतत्वादेः फलत्वेन कल्पनस्य चतुर्थे वक्ष्यमा-
णत्वात् फलनिमित्तरूपोद्देश्यानेकत्वान्निमित्तो वाक्यभेदो दुष्परिहर
इत्युक्तम्, तन्न; निमित्तस्यावश्यानुष्ठापकत्वरूपोद्देश्यत्वेऽपि ईप्सि-
तजन्यत्वरूपोद्देश्यत्वाभावात् फलस्यैव च तद्रूपत्वाद्द्विजातीयोद्दे-
श्ययोश्चैकेनान्वयेऽपीतरविषयकाकाङ्क्षानिवृत्त्यभावेन तस्याप्यन्वयो-
पपत्तेर्वाक्यभेदाभावात् ।

न च निमित्तसम्बन्धोपपत्तावपि भावनाया भाव्यापेक्षायां नि-
मित्तवत्त्वनावगतस्यापि अकरणे प्रत्यवायस्य करणे सत्यनुत्पत्तेः
तत्परिहारस्याजन्यत्वेन भाव्यत्वानुपपत्तेरन्यनिषिद्धाचरणजन्यप्र-
त्यवायध्वंसस्यैव दर्शपूर्णमासादिवत् भाव्यत्वकल्पनात् पूतत्वादेरपि
स[illegible]नीयस्य भाव्यत्वकल्पने वाक्यभेदः स्यादेवेति वाच्यम् । दर्शा-
दौ ध्वंसस्य भाव्यत्वकल्पनेऽपि प्रकृते आर्थवादिकपूतत्वाद्यपेक्ष-
या तस्यानुपस्थितत्वात् । प्रतियोग्युपस्थितिसापेक्षत्वेन विलम्बोप-
स्थितिकत्वाच्च भाव्यत्वेनाकल्पनाद्वाक्यभेदानापत्तेः ।

अत एव निमित्तबलावगतप्रत्यवायध्वंसस्यैव भाव्यत्वकल्प-
नात् आर्थवादिकफलकल्पना न युक्तेत्यपास्तम् । न चैवमप्यनेकेषां
पूतत्वादीनां फलानामुद्देश्यत्वाद्वाक्यभेदस्तदवस्थ एव, फलवाचक-

पदानां कल्पितत्वेऽपि श्रूयमाणस्यैव विधेः प्रत्युद्देश्यं सम्बन्धादिति वाच्यम् । अर्थवादोपात्तफलकामे निर्वपेदित्येवं लाघवेन पूतत्वादीनां व्यासज्यवृत्तिफलत्वकल्पनेन वा प्रत्येकमुद्देश्यत्वाभावात् । अत एव नात्र योगसिद्ध्यधिकरणन्यायोऽपि ।

नचैवमार्थवादिकफलकल्पने वाक्यभेदाभावेऽपि पूतत्वादिकामनायाः स्वर्गादिकामनावदनुष्ठापकत्वावगमात् कामनाभावे पुत्रे जातेऽपि करणानापत्तिः, दर्शपूर्णमासादिवद्वा कामनायां प्रयोगान्तरत्वापत्तिरिति वाच्यम् । जातेष्टिभावनाया अनुष्ठापकापेक्षायां निमित्तस्यैवानुष्ठापकत्वेन श्रुतत्वादनुष्ठापकान्तरापेक्षाभावेन पूतत्वादिकामनाया अनुष्ठापकत्वाकल्पनात् ।

अत एव भावनाया भाव्यापेक्षायां लाघवात् पूतत्वादीनां इच्छाविषयत्वयोग्यानां जन्यत्वमात्रं कल्प्यते न त्वनुष्ठापकत्वम् । स्वर्गादिकामनायास्तु यागानुष्ठापकत्वस्यापि श्रुतत्वात् नैमित्तिकभावनाभाव्यसमर्पकत्वानुपपत्तेः युक्तं प्रयोगान्तरविषयत्वम् । अतश्च पुत्रजनने निमित्ते अवश्यं पुत्रगतपूतत्वाद्यर्थं जातेष्टिः कर्तव्या, अन्यथा प्रत्यवैतीति वाक्यार्थावगमात् पुत्रे मृते तत्र पूतत्वाद्युत्पत्त्यसम्भवात् दिष्टं गतस्य पुत्रस्य पूतत्वादेरनीप्सितत्वेन फलत्वायोगात् फलाभावे च निमित्तेनापि नैमित्तिकस्याननुष्ठापनात् पुत्रे मृते नैव जातेष्टिः कार्या, न च तदकरणे पुरुषस्य प्रत्यवाय इति फलाभावात् संवलिताधिकारा जातेष्टिरिति सिद्धं भवति । तस्मादर्थवादत्वे वाक्यभेदाभावादर्थवादा एव अष्टाकपालादिशब्दाः इति सिद्धम् ॥

सूत्रं तु गम्यमानैकार्थ्यत्यागप्रसङ्गादकारणं पूतत्वादीनामष्टाकपालादीनि; यदि ह्येतानि कर्तुरुपदिष्टानि स्युः तदा फलकारणानि भवेयुरपि, न त्वेतानि (१)तस्योपदिष्टानि, प्रकरणप्राप्ताश्रयाभावेन सिद्धरूपाणामेषां कर्तुरुपदेशाविषयत्वात् । अतो गौण्या वृत्त्या स्तु-

१ तथा ।

तिरूपार्थ एव विधीयन्त इति व्याख्येयम् ॥

प्रयोजनं तु तत्तत्पक्षोपपादनवेलायामेव स्पष्टीकृतम् ॥

इति द्वादशं वैश्वानराधिकरणम् ॥

## अथ त्रयोदशं तत्सिद्ध्यधिकरणम् ॥ (१३)

### ( तत्सिद्धिपेटिका )

### सू—तत्सिद्धिः ॥१–४–२३॥ (सि)

(१)गुणाश्रया इत्यन्तस्यैकसूत्रत्वेऽपि मन्त्राधिकरणपूर्वपक्षसूत्रवत् प्रत्येकं यथामान्तसूत्रोपन्यासो व्याख्यासौकर्यार्थं न विरुध्यते। पूर्वाधिकरणे स्तुत्युपपादकत्वेनोक्ताया गौण्या वृत्तेः निमित्तासम्भवमाशङ्क्य तत्र निमित्तप्रतिपादनद्वारा गौणीवृत्तिलक्षणमनेन सूत्रेण वेदाप्रामाण्यापादकपरोक्तलक्षणत्रयनिरासमुखेनाभिधीयते। तेनाध्यायसङ्गतिः अनन्तरसङ्गतिश्च सिद्धैव। पादसङ्गतिस्तु प्रामाण्योपयोगिपदनिष्ठगुणवृत्तिलक्षणप्रतिपादनात् द्रष्टव्या।

अप्रामाण्यापादकलक्षणान्तरनिरासेन प्रामाण्योपयोगिलक्षणकथनाच्च (२)गुणमुख्याधिकरणव्युत्पादितमन्त्रलिङ्गविनियोगविषयविवेकार्थं भाष्यकारादिभिः क्रियमाणेनाप्रामाण्यापादकलक्षणान्तरानिरासद्वारा एतल्लक्षणस्थिरीकरणेनापि न पौनरुक्त्यम्। पूर्वाधिकरणव्युत्पादितगुणवृत्त्याक्षेपसमाधानार्थत्वेऽपि चास्य सूत्रस्य सार्वत्रिकगौणवृत्ति(३)साधानार्थत्वं सूत्रयितुं भाष्यकारादिभिः (४)"यजमानः प्रस्तरः" (५)"यजमान एककपालः" इत्युदाहृत्य यजमानपदं प्रस्तरादिनामधेयम्? किं वा तत्कार्यसाधनत्वेन यजमानरूपगुणविधिः?

१ "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः" इति समग्रसूत्रम्. २ पू. मी. ३-३-२. ३ समाधानार्थत्वम्। ४ तै. सं. १-७-४-४. ५ तै. ब्रा. १-६-३-६ मै. सं. १-१०-७.

उताय(१)मौदुम्बराधिकरणन्यायेन गौण्या वृत्त्या अर्थवाद इति विचारः गतार्थोऽपि स्मारितः। उदाहरणान्तरं चोपक्षिप्तम्।

अत एव(२)'रूपात् प्रायात्' इत्यत्र एतान्येव गुणवृत्तेर्निमित्तानि, तत्तदुदाहृतार्थवादमात्रनिष्ठतया कानिचिद्विविच्य कथितानीति न तेनापि पौनरुक्त्यम्। (३)गुणवादसूत्रे तु अत्र सिद्धाया गौण्या वृत्तेः स्तुत्युपयोगमात्रकथनात् न पौनरुक्त्यमपि।

तत्र प्रस्तरैककपालयोरचेतनत्वेन स्वतन्त्रतया यागकर्तृत्वासम्भवेऽपि यागप्रयोगवर्तिस्वव्यापारं प्रति स्थाल्यादिवत् कर्तृत्वोपपत्तेः अवयवयोगेन, यजमानशब्दो नामधेयं प्रस्तरैककपालयोः। तत्प्रयोजनञ्च 'शुक्रं यजमानोऽन्वारभते' इत्यादौ प्रस्तरैककपालयोरपि ग्रहणसिद्धिरिति आद्यः पूर्वपक्षः।

द्वितीयस्तु—स्वव्यापारं प्रति प्रस्तरैककपालयोराश्रयत्वरूपकर्तृत्वसम्भवेऽपि अचेतनयोश्चेतनव्यापाररूपयागकर्तृत्वासम्भवात् (४)'तङानावात्मनेपद'मित्यनेन प्रधानरूपस्य शानच आत्मनेपदसंज्ञात्वाभिधानात् आत्मनेपदस्य च (५)'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्येवं यागक्रियाफलस्य स्वर्गादेर्यागक्रियाकर्तृनिष्ठत्वावगमात् अचेतने च प्रस्तरादौ स्वर्गादिफलानुपपत्तेः शानजन्तयजमानपदस्य प्रस्तरादौ योगासम्भवेन भिन्नार्थयोः प्रस्तरयजमानपदयोः सामानाधिकरण्यमात्रेण नामत्वायोगात् न तावन्नामधेयत्वोपपत्तिः।

अत एव नार्थवादत्वम्, यजमानपदेनावयवयोगेन स्तुत्यनुपपत्तेः। न च गौण्या तदुपपत्तिः। वेदे तदसम्भवात्। तथा हि—

न तावत् लक्ष्यमाणगुणयोगनिमित्त(६)वृत्तित्वं गौणत्वं लोके वेदे वा सम्भवति। सिंहादिनिष्ठगुणानां देवदत्तादौ बाधितत्वेन योगासम्भवात्। किञ्चैवं सिंहादिशब्दस्य स्वशक्यनिष्ठगुणवत्तासंबन्धेन लक्षणयैव बोधकत्वोपपत्तेः सिंहादिशब्देन गुणलक्षणा, तैश्च

१ पू. मी. १-२-२. २ जै. सू. १-२-११. ३ जै. सू. १-२-१०.
४ पा. सू. १-४-१००. ५ पा. सू. १-४-७२. ६ निमित्तत्वं।

देवदत्तलक्षणा इत्येवं लक्षितलक्षणयैव तावदुपपत्तेः नातिरिक्तगौणवृत्तिस्वीकारोपपत्तिः। अतो लक्षणाऽसम्भवात् नेदं सिद्धान्तलक्षणमुपपत्तिमत्। अत एव लोके सिंहो देवदत्त इत्यादौ गौणत्वव्यवहारादीदृशानि तत्तद्दार्शनिकैः गौणत्वलक्षणान्युक्तानि। तथा हि—

कैश्चित् प्रसिद्धार्थत्यागेनाप्रसिद्धगुणवाचित्वं गौणत्वमित्युक्तम्। सिंहशब्दस्य हि प्रसिद्धं सिंहत्वरूपमर्थं त्यक्त्वा देवदत्तपदसामानाधिकरण्यादेव देवदत्तनिष्ठप्रसह्यकारित्वादिगुणेष्वतिरिक्ता शक्तिः कल्प्यते। अतश्च क्रूरो देवदत्त इतिवन्मत्वर्थलक्षणया सामानाधिकरण्योपपत्तिः। गौणपदाभिलप्यत्वञ्चास्य 'तत्र भव'इति व्युत्पत्त्या गुणेष्वाधुनिकशक्तिकल्पनाद्द्रष्टव्यम्। अत एव शुक्लादिपदेष्वनादिशक्तिमत्सु न गौणत्वव्यवहारः। अत एव गुणवाचित्वं शुक्लादिपदेष्वपि। तदर्थमाधुनिकसंकेतितपर्यायप्रसिद्धपदग्रहणं तादृशस्यापि गुणे सांकेतिषु डित्थादिपदेष्वतिप्रसक्तिमाशंक्य प्रसिद्धार्थत्यागेनेति विशेषितम्। अतश्च लोके ईदृशस्य गौणत्वस्य वक्त्रभिप्रायानुरोधेन संभवेऽपि वेदे तदभावात् प्रसिद्धार्थत्यागेऽप्रामाण्यापत्तेः नेदृशेन गौणत्वेन स्तुत्युपपत्तिः।

तथा अन्यैः समुदायवाचिनो लक्षणयैकदेशवृत्तिः गौणीत्येव लक्षणं कृतम्। तन्मते हि सर्वेऽपि सिंहादिशब्दाः न जातिमात्रवचनाः, तथात्वे गुणादिवचनैः शुक्लादिशब्दैस्सामानाधिकरण्यानुपपत्तेः। किन्तु जातिद्रव्यगुणक्रियादिसमुदायविशेषवचनाः। अतश्च तादृशसमुदायस्य देवदत्ते अभावात् देवदत्तपदसामानाधिकरण्यानुपपत्त्या समुदायैकदेशे प्रसह्यकारित्वे लक्षणया सिंहशब्दो वर्तते। तेन पूर्ववदेव मत्वर्थलक्षणया देवदत्तपदसामानाधिकरण्योपपत्तिः। गौणपदाभिलप्यत्वञ्च गुणशब्दस्याङ्गे प्रयोगात् अङ्गशब्दस्य चावयवापरपर्यायैकदेशवाचित्वात् गुणे एकदेशे भवः गौण इति व्युत्पत्त्या सिंहशब्दस्य द्रष्टव्यम्।

एतस्यापि न लक्षणस्य लोके यथाकथञ्चित् सम्भवेऽपि वेदे समुदायस्यानित्यत्वेनानित्यार्थसंयोगप्रसङ्गादप्रामाण्यप्रसक्तेर्नेदृशेनापि गौणत्वेन स्तुत्युपपत्तिः ।

अन्यैस्तु स्वोत्प्रेक्षाप्रभवारोपविषयीभूतार्थवृत्तित्वं गौणत्वमित्युक्तम् । तन्मते हि न शब्दः स्वाभिधेयं विना अन्यत्र गुणादिप्रयोगमात्रेण प्रवर्तते, अतश्च वक्त्रा प्रयुज्यमानः (१)देवदत्ते सिंहशब्दः श्रोत्रा वक्तृप्रयोगान्यथानुपपत्त्या नूनमभिधेयं सिंहत्वमारोप्य अनेन प्रयुक्तः इति कल्प्यते । न च विविक्तयोरारोपानुपपत्तिः । शुक्तिकादौ रजतत्वारोपवत् योषायां वा रेतोरूपहविःप्रक्षेपरूपहोमाधिकरणत्वसादृश्येनाग्नित्वारोपवत् करणत्वसादृश्येन गुणारोपोपपत्तेः ।

नचैवं शुक्तिकादौ रजतत्वाद्यारोपेण रजतत्वादिशब्दप्रवृत्तेर्गौणत्वापत्तिः । तदारोपस्य करणदोषजन्यत्वेन स्वोत्प्रेक्षाप्रभवत्वाभावात् । अतोऽनारोपितार्थवृत्तिश्शब्दो मुख्यः । यस्तु शब्दः आरोपं कृत्वा पश्चात् प्रवर्तते स जघन्यः, गुणहेतुकारोपनिमित्तकत्वाच्च गुणादागत इति व्युत्पत्त्या गौणः ।

एवं अर्थोऽपि देवदत्तादिरारोपितसिंहत्वाद्याश्रयतया गौणो जघन्यश्च । अस्यापि लक्षणस्यारोपकपुरुष(२)सम्भवेन कथञ्चिल्लोके सम्भवेऽपि वेदे तदभावात्, नेदृशेनापि गौणत्वेन स्तुत्युपपत्तिः । अत एव शक्यसम्बन्धाभावाल्लक्षणयापि स्तुतिरनाशङ्क्या । अत अर्थवादत्वासम्भवान्न क्वापि विध्येकवाक्यत्वम् । अप्राप्तार्थत्वादेव विधिं कल्पयित्वा "यो होता सोऽध्वर्यु"रितिवदेकस्य पदस्य कार्यलक्षणार्थत्वमङ्गीकृत्यापरपदार्थो विधीयते । तत्रापि यजमानकार्ये त्यागादौ अचेतनस्य प्रस्तरादेः कर्तृत्वासम्भवात् मुख्यत्वाच्च यजमानपदे कार्यलक्षणानुपपत्तेः प्रस्तरादिपद एव कार्यलक्षणामङ्गीकृत्य यजमानः स्रुग्धारणादिसाधनत्वेन विधीयते ।

---

१ सिंहो देवदत्त इति शब्दः । २ सत्वेन ।

न च स्रुग्धारणादौ विनियुज्यमानस्य यजमानस्य स्वपदार्थकरणविरोधात् अन्येनाविरोधेऽपि वा "दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्ये" ति वाक्यविहितदक्षिणदेशावस्थानरूपस्वप्रयोजनीभूतपदार्थकरणविरोधः स्यादेवेति वाच्यम् । "परिधौ पशुं नियुञ्जीते" त्यत्र परिधित्वाविरोधेन यूपधर्मान्वयवत् वेदिदेशकत्वरूपप्रस्तरधर्मबाधेन दक्षिणदेशावस्थितस्यैव स्रुग्धारणसाधनत्वोपपत्तेर्वेदिदेशरूपप्रस्तरधर्मस्य प्रस्तरपक्षे सार्थकत्वोपपत्तेश्च ।

अथ वा सामान्यविहितदक्षिणदेशावस्थानं प्रस्तरकार्यस्रुग्धारणपूर्वोत्तरकालयोरनुष्ठेयमिति न विरोधः । न चैवमप्येककपालसाध्यस्य त्यागस्य स्वात्मनि क्रियाविरोधात् यजमानसाध्यत्वानुपपत्तेः कथमेककपालकार्ये यजमानविधिराशङ्क्येनेति वाच्यम् । 'गुरौ स्वात्मानमर्पयेत्' "सर्वमात्मनिवेदन' मित्यादिवत् स्वशरीरे स्वात्माभिमाननिवृत्तेरुपपन्नत्वेन बाधकाभावात् ।

न चैवं यजमानस्यापि कार्यापत्त्या प्रस्तरवत् सूक्तवाकेन प्रहरणारूपप्रतिपत्त्यापत्तेः "एककपालं सर्वहुतं जुहोती" ति वचनात् कार्यापत्तिबलात् सर्वहोमरूपप्रतिपत्त्यापत्तेः सर्वतन्त्रपरिलोपप्रसङ्गः, यजमानस्यान्यार्थस्यैव पुरोडाशकपालवत् स्रुग्धारणादौ विनियोगेऽपि तन्मात्रनिष्पत्त्या कृतार्थत्वाभावेन प्रतिपत्त्यनर्हत्वात् । अतः (१) 'विधिर्वा स्यादपूर्वत्वा' दित्यौदुम्बराधिकरणपूर्वपक्षसूत्रोक्तन्यायेन वैकल्पिको यजमानस्साधनत्वेन विधीयते प्रस्तरैककपालकार्य इति प्राप्ते—

अभिधीयते—नायं गुणविधिः, अशक्यत्वात् । न हि दक्षिणदेशे उदङ्मुखासीने यजमाने अध्वर्युणा स्रुचो धारयितुं शक्यन्ते । दक्षिणदेशावस्थानसङ्कोचस्तु कल्प्येन विधिना अनाशङ्क्य एव ।

एवमेककपालकार्ये स्वत्वत्यागे स्वात्मनि स्वस्य पुत्रादिष्विव

१ जै. सू. १-२-१९.

स्वत्वाभावात् तन्निवृत्तेरशक्यत्वस्य स्फुटत्वात् न विधिस्सम्भवति । अतः (१)"विधिश्चानर्थकः क्वचि"दित्यौदुम्बराधिकरणसूत्रोक्तेन न्यायेन नायं गुणविधिः ।

किञ्चैवं कार्यापत्त्या प्रहरणसर्वहोमरूपप्रतिपत्त्यापत्तेः सर्वतन्त्रपरिलोपापत्तिः । न चाकृतार्थत्वात् प्रतिपत्त्यनर्हत्वम् । प्रयोजनानुरोधेन क्रमं बाधित्वा सर्वयाजमानकरणोत्तरकालं प्रतिपत्त्यापत्तेः। नचेष्टापत्तिः, क्रमनिबद्धहोमयागाद्युत्तरक्रतुतन्त्रलोपप्रसङ्गात् । प्रस्तरपक्षविषयत्वकल्पने च कल्प्यविध्यनुरोधेन पाक्षिकत्वकल्पनाप्रसङ्गः "प्रस्तरमुत्तरं बर्हिषस्सादयति" "एककपालं सर्वहुतं जुहोती"ति विध्यन्तरैकवाक्यताभङ्गश्च सत्यामर्थवादत्वेन गतौ न युक्तः स्वीकर्तुम् ।

न च यजमानपदेन प्रस्तरादेः स्तुत्युपपत्तिः । गौण्या वृत्त्या तदुपपत्तेः । न च (२) गौणत्वाङ्गीकरणे वेदस्याप्रामाण्यापत्तिः । परप्रकल्पितानां गौणतालक्षणानामयुक्तत्वेनानङ्गीकारात् अप्रामाण्यानापत्तेः । तथा हि—

न तावदाद्यन्तलक्षणे युक्ते; पूर्वक्लृप्तशक्त्य(३)नुसारेणैव वक्ष्यमाणरीत्या प्रयोगप्रतीत्युपपत्तावनेकशक्तिकल्पनादियववराहाधिकरणोक्तदोषचतुष्टयस्वीकारानुपपत्तेः, यत्रान्यत्र प्रसिद्धार्थकस्यैव पदस्य गुणे साङ्केतिकशक्तिकल्पना तादृशस्थले गौणत्वव्यवहाराभावात्तल्लक्षणस्यातिव्याप्तेश्च ।

न द्वितीयमपि ; प्रतिव्यक्ति जातिद्रव्यगुणक्रियासमुदायानां भिन्नत्वादेकस्यामपि च व्यक्तौ प्रतिक्षणं गुणक्रियाणामुपचयापचयसत्वेन समुदायभेदात् सङ्केतग्रहासम्भवेन समुदायवाचित्वासम्भवात्संकेतग्रहानुपपत्तेः, समुदायवाचिनो लक्षणयैकदेशप्रवृत्तौ च लक्षितलक्षणयैव देवदत्तप्रतीत्युपपत्तेरतिरिक्तगौणीवृत्तिस्वीकारे प्रमाणाभावात् ।

---

१ जै. सू. १-२-२३. २ गौणीकल्पने । ३ नुरोधेनैव ।

नापि तृतीयम् ; रूपकादिकाव्ये वक्तुरारोपविवक्षया प्रयोगेणारोपितार्थवृत्तित्वलक्षणगौणत्वसम्भवेऽपि सिंहो देवदत्त इत्यादौ वक्त्रा यत्र शक्यार्थगतगुणसादृश्यमात्रविवक्षया प्रयुज्यते, श्रोता च तथैव प्रतिपद्यते तत्र वक्ष्यमाणेन सर्वानुगतेन गौणत्वेनैव प्रयोगोपपत्तेरारोपकल्पने प्रमाणाभावात्तल्लक्षणस्याव्याप्तेः ।

किञ्च 'खपुष्पं भवत्सिद्धान्त' इत्यादौ खपुष्पादीनामननुभूतपूर्वत्वादीदृशमिति निरूपणाशक्तेः सिद्धान्तादावारोपासम्भवेन गौणत्वानापत्तिः ।

अथ तत्र समुदायरूपेण खपुष्पादेरप्रसिद्धावपि खपुष्पशब्दस्य यौगिकत्वाद्विशकलितप्रसिद्धिमादाय स्वाधिकरणतासंसर्गारोपेणारोपितस्वाधिकरणताकं लतादौ प्रसिद्धं पुष्पं खपुष्पसमासार्थमङ्गीकृत्य तदारोपेण सिद्धान्ते गौणता खपुष्पशब्दस्येत्युच्यते, ततः खपुष्पशब्दस्यारोपितसंसर्गरूपार्थवृत्तित्वात्तदाश्रयलतापुष्प एव खपुष्पशब्दस्य गौणत्वापत्तिः । न चेष्टापत्तिः; तस्य गौणत्वेनाप्रतीयमानत्वात् । अत एवार्थलक्षणमपि आरोपितार्थाश्रयत्वरूपं लतापुष्पेऽतिप्रसक्तम्, तस्याप्यारोपितस्वाधिकरणताकत्वरूपार्थाश्रयत्वेन गौणत्वोपपत्तेः । आरोपितार्थवृत्तिशब्दविषयत्वरूपं त्वर्थलक्षणमारोप्यस्य सिंहत्वादेरपि तत्त्वादतिप्रसङ्गभयेनैवानाशङ्क्यम् । तस्मादप्रामाण्यापादकलक्षणत्रयानङ्गीकरणादेव गौणत्वाङ्गीकरणेऽपि अप्रामाण्यानापत्तिः ।

कीदृशं तर्हि गौणत्वमङ्गीक्रियते इति चेत् ? उच्यते—स्वशक्यगुणवत्ता गौणी वृत्तिः । गुणवत्ता च क्वचित्तत्समानजातीयगुणवत्वसम्बन्धेन, क्वचिदारोपेण साक्षादेव ; तत्राद्या यथा,—सिंहशब्दस्य शक्ये सिंहे विद्यमानैः प्रसह्यकारित्वादिगुणैः समानजातीयाः गुणाः देवदत्ते सन्तीति तत्र गौणत्वम् । अतश्च सिंहवृत्तिगुणसमानजातीयगुणप्रकारकदेवदत्तविशेष्यकशाब्दबोधत्वावच्छिन्नं प्रति सिंहपद-

शक्यवृत्तिगुणवत्ताज्ञानं कारणम् । तत्र सिंहपदोच्चारणे सति शक्त्यैव प्रतीयमानेन सिंहेन स्ववृत्तिगुणानां एकसम्बन्धिस्मरणेनापरसम्बन्धिस्मरणमिति न्यायेनोपस्थानात् तैश्च तेनैव न्यायेन तत्समानजातीयगुणवत्ताज्ञापनादेव एवंविधगुणवत्ताज्ञाने सति सिंहपदादुक्तविधशाब्दबोधोपपत्तौ न किञ्चिद्बाधकमुत्पश्यामः । अत एव गुणादीनामुक्तविधकार्यतावच्छेदककोटिप्रविष्टत्वादेव नाशाब्दत्वम् ।

द्वितीया तु यत्र रूपकादौ सत्यपि भेददर्शने सादृश्यमात्रेण सिंहनिष्ठं सिंहत्वक्रूरत्वादि देवदत्ते वक्तारोप्य सिंहशब्दं प्रयुङ्क्ते श्रोता तथैव प्रतिपद्यते तत्रानुभवसिद्धारोपापह्नवे प्रमाणाभावात् साक्षात्संबन्धेनैव स्वशक्यनिष्ठगुणवत्ता गौणी वृत्तिः । अत एव गुणपदं समवेतमात्रपरम्, सिंहत्वादेरप्यारोपाङ्गीकारात् । अत एवालङ्कारिकैः(१)"सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः । विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया" इत्यादावारोपेणैव गौणी समर्थिता । यद्यपि चेयं काव्यातिरिक्तेषु लोके वेदे वा बहुशो न दृश्यते तथापि काव्येष्वेव सम्भवन्त्याः निराकर्तुमशक्यत्वात् वेदेऽपि च(२)"योषा वाव गौतमाग्निः" इत्यादौ यत्र विधिसम्भवः तत्रारोपस्वीकारादुपन्यस्ता। वार्तिके तु प्राचुर्याभावादेवानुपन्यासः । न चैतावतैव सर्वत्रैवारोपप्रसङ्गः । सादृश्यमात्रविवक्षायामारोपकल्पने प्रमाणाभावात् । अतश्चोभयसाधारण्येन स्वशक्यसमवेतवत्ता गौणीवृत्तिः । तद्ज्ञानकार्यतावच्छेदकं स्वशक्यसमवेतप्रकारकदेवदत्तादिविशेष्यकशाब्दत्वम् । नचैवंविधेन गौणत्वेन वेदस्याप्रामाण्यापत्तिः । अर्थान्तरभानेऽपि शक्यार्थभानस्यात्यागात् । अतएवोक्तं–अजहत्स्वार्थास्सर्वाश्शब्दवृत्तय–इति ।

---

१ काव्यप्रका–उ. १०. श्लो ४२४. २ छा. उ. ५–७–१०.

नचैवं यत्र शक्यार्थस्यैवाप्रसिद्धिः यथा खपुष्पादौ, तत्र तन्निष्ठ-गुणयोगाभावात्सिद्धान्तादौ गौणत्वानुपपत्तेः तल्लक्षणस्याऽव्याप्तिरिति वाच्यम्। लतादौ प्रसिद्धपुष्पे खाधिकरणतामारोप्यारोपितखाधिकरणताकं पुष्पमेव मुख्यं समासार्थमङ्गीकृत्य तन्निष्ठगुणानामलीकत्वादीनां सिद्धान्तादौ सत्त्वेन गौणत्वोपपत्तेः। अतएव 'खपुष्पं नास्ति भूतले' इत्यादावारोपितखाधिकरणताकस्यैव समासार्थस्य प्रतिषेधः, अन्यथाऽप्रसक्तस्य प्रतिषेधानुपपत्तेः।

अथ वा अस्तु भूतलादिवृत्तिपुष्पे(१)अप्रसक्तस्यैव खाधिकरणताकत्वस्य प्रतिषेधः नित्यानुवादरूपः, परन्तु भूतले पुष्पाभावदशायां भूतले खपुष्पं नास्तीति प्रयोगे आरोपाङ्गीकरणमेव शरणम्, खवृत्तित्वस्य भूतलवृत्तित्वस्य चैकेन नञा प्रतिषेधायोगात्। अस्तु वा तत्रापि तथा। सर्वथा खपुष्पं भवत्सिद्धान्त इत्यत्रारोपाङ्गीकरणेनैव मुख्यार्थसम्पादनमित्यदोषः।

नचैवमुपमानस्योपपत्तावपि उपमेयस्य खपुष्पं भवत्सिद्धान्त इत्येव प्रयोक्त्रा वादिनानभ्युपगमात् वस्तुन एवासत्यत्वे सति गुणयोगानुपपत्तेरुपमेयत्वानुपपत्तेर्गौणप्रयोगानुपपत्तिरिति वाच्यम्। सिद्धान्तपदाभिधेयस्य निश्चयस्य वस्तुतस्तद्रूपाविषयाभावेन भ्रमत्वेऽपि स्वरूपेण विद्यमानतया सत्त्वादुपमेयत्वोपपत्तेः।

एवं बौद्धादिप्रयुक्तस्य खपुष्पमात्मेति वाक्यस्यापि तन्मते अहंप्रत्ययग्राह्यस्य स्वशरीरादेर्वस्तुनश्शरीराद्यभेदेऽपि शरीरादिभिन्नत्वेन परैरारोपितस्यात्मशब्दार्थत्वाद्धर्मारोपेऽपि धर्मिणः सद्रूपत्वेनोपमेयत्वोपपत्तिः। अनेनैव चात्मशब्दार्थेनात्मा नास्तीति बौद्धप्रयोगेऽपि प्रतियोगिप्रसिद्धिः सम्पादनीया। तस्मादुपमानोपमेययोर्द्वयोरपि खपुष्पमात्मेति प्रयोगे उपपन्नत्वाद्गौणत्वोपपत्तेः स्वशक्यनिष्ठपदार्थवत्त्वमेव गौणवृत्तिलक्षणं युक्तम्। गौ-

१ अप्रसिद्ध।

णशब्दाभिधेयत्वञ्च गुणनिमित्तकवृत्तिमन्त्वनिश्चयत्वात् शब्दार्थयोरुपपन्नम् । गौणत्वाख्ये हि गुणयोगे गुणा एव निमित्तम् । अत एव वार्तिका (१)'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इत्यत्र गुणैरिति निमित्तपरतृतीयाप्रयोगः । सिंहपदेन सिंहत्वजातिवाचिना लक्ष्यमाणायाः सिंहव्यक्तेः ये गुणाः तैर्योगाच्छब्दप्रवृत्तेर्गुणयोगः एव गौणीति वार्तिकार्थः ।

यत्तु वार्त्तिके निरारोपगौणीस्थले आरोपवाद्युक्तारोपनिराकरणार्थं न क्वाप्यारोपः स्तोत्प्रेक्षाप्रभवः 'खपुष्पं नास्ति, 'खपुष्पं भवत्सिद्धान्त' इत्यादावपि च नारोपः; किन्तु खपुष्पमिति समासः खे पुष्पं नास्तीति विग्रहानुसारादन्तर्गतनञर्थकस्सन्नभाववचनः, विग्रहे 'नास्ती'ति कथनं समासार्थविवरणार्थम् । समासोत्तरं च नास्तीति पदजातमनुवादमात्रम् । अतः खपुष्पशब्दस्यारोपं विनैवाभाववाचित्वावगमात् मुख्याभाववृत्त्यसत्यत्वादिगुणयोगेन सिद्धान्तादौ प्रवृत्तिरित्युक्तम् । तत्र निरारोपगौणीस्थले अप्रतीयमानारोपकल्पने प्रमाणाभावस्येव रूपकादौ सारोपगौणीस्थले प्रतीयमानारोपत्यागे प्रमाणाभावस्य तुल्यत्वात् आरोपनिराकरणायोगेन खपुष्पं नास्तीत्यत्र च नास्तीत्यस्य वैयर्थ्यापत्तेः प्रतियोगिभानं विना केवलाभावभानस्याक्लृप्तस्यैव कल्पनीयत्वापत्तेः खपुष्पादिशब्दानामभाववाचित्वायोगेन कुसृष्टिकरत्वात् प्रौढिपात्रमारोपवादिप्रसरनिराकरणार्थमित्यवधेयम् । अत एव नास्तीत्यस्य सार्थक्ये बहुधायस्तम् । अत एव च पार्थसारथिमिश्रैः आरोपितखाधिकरणताकमेव पुष्पं खपुष्पशब्दार्थ इत्युक्तम् । तत्सिद्धं गौण्या वृत्त्या स्तुत्युपपत्तिरिति ।

यत्तु लक्षणया लक्षितलक्षणयैव वा सिंहपदात् देवदत्तबोधोपपत्तेर्नातिरिक्तगौणीवृत्तिस्वीकरणं युक्तमित्युक्तम्, तत् कस्यचिल्लक्षणादिना बोधोपपत्तावपि अन्यस्य कदाचित् गौण्यापि बोधोपप-

१ तं. वा. १-४-१३. पृ. ३१८.

तेरपास्तम् । कः पुनरनयोर्भेदः? येनैवमाश्रीयते इति चेत्? उच्यते-

स्ववाच्यसम्बन्धवत्त्वं लक्षणा, यथा गङ्गायां घोष इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धोऽस्ति तीरे । अतो गङ्गापदात्तीरबोधे लक्षणा वृत्तिः । तज्ज्ञानञ्च गङ्गापदात् शक्त्यैव प्रवाहबोधे जाते एकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणमिति न्यायेन तत्सम्बन्धवत्ताबोध इत्येवंप्रकारेणैव । तत्कार्यतावच्छेदकञ्च तीरविशेष्यकगङ्गासम्बद्धतीरत्वप्रकारकशाब्दत्वम् । सर्वत्र हि गङ्गायां घोषः, सिंहो देवदत्त इत्यादौ उभयत्राप्युभयविधशाब्दबोधोऽनुभवसिद्धः । कदाचित् शक्यसम्बन्धः सम्बन्धत्वेन रूपेण भासमान एव प्रकारताघटकः यथा गङ्गासम्बन्धितीरे घोषः, सिंहसम्बन्धी देवदत्तः इति; कदाचिच्च स एव सम्बन्धः शक्यसम्बन्धत्वेन रूपेण नैव भासते, अपि तु तन्निष्ठसंयोगत्वादिना—गङ्गानिष्ठसंयोगवति तीरे घोषः, सिंहनिष्ठगुणसमानजातीयगुणवान् देवदत्तः—इति ।

तदेवं तत्तत्प्रकारताभेदेन बोधे वैलक्षण्यात् कार्यवैलक्षण्यानुरोधेनापि कारणवैलक्षण्यमावश्यकम् । तद्यत्र सम्बन्धिता साक्षात्परम्परासाधारण्येन प्रकारे प्रविष्टा गङ्गासम्बन्धिनि घोषः, गङ्गासम्बन्धितीरे वा घोषः, सिंहसम्बन्धी देवदत्त इति, तादृशशाब्दत्वावच्छिन्नं प्रति लक्षणापदाभिधेयः स्वशक्यसम्बन्धत्वेन ज्ञातः कारणम् । अतएवोक्तं (१)"अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते" इति । इदं हि नाविनाभावसम्बन्धेनैव लक्षणेत्येवंपरम् । सम्बन्धान्तरेणापि तस्याः दृश्यमानत्वात् । अपि तु यस्मिन् बोधे यत्सम्बन्धित्वं प्रकारतया अविनाभूतं तस्मिन् बोधे या शब्दस्य वृत्तिः सा लक्षणेत्येवंपरम् । अतएव सिंहो देवदत्त इत्यादौ सिंहसम्बन्धी देवदत्त इत्येवं यदा बोधः तदा लक्षितलक्षणेत्यपि द्रष्टव्यम् । यत्र तु स एव सम्बन्धो न सम्बन्धत्वेन रूपेण भासते अपि तु तन्निष्ठगुणत्वा-

१ तं. वा. १-४-१३. पृ. ३१८.

दिना भासमान एव तीरदेवदत्तादिविशेष्यकबोधे प्रकारीभवति ता-दृशशाब्दत्वावच्छिन्नं प्रति गौणीपदाभिधेयस्य शक्यनिष्ठगुणवत्ता त-त्वेन ज्ञाता कारणम् ।

नचैवं येन तीरत्वमात्रप्रकारकबोधः तादृशस्थले वृत्तिद्वयस्यापि कार्यतावच्छेदकत्वाभावाच्चतुर्थवृत्तिस्वीकारापत्तिः । तीरत्वमात्रप्रका-रकबोधस्यानुभवपथमनारूढस्यालीकत्वात् । अन्यथा समुद्रतीरे नद्य-न्तरतीरे वेति संशयापत्तेः । तत्सिद्धो लक्षणागौण्योर्भेदः ।

अत एव सहचरणादीन्यक्षपादप्रभृतिभिर्लक्षणानिमित्तान्युक्ता-नि । जैमिनिना तु तत्सिध्यादीनि गौणीनिमित्तानीति विवेकोऽपि सङ्गच्छते । सिंहानिष्ठगुणानां हि देवदत्तसम्बन्धेऽस्ति निमित्तत्वम् । अतः स्वशक्यनिष्ठगुणवत्वलक्षणस्य गौणत्वस्य लोके वेदे च सम्भवा-द्युक्ता यजमानपदेन गौण्या वृत्त्या प्रस्तरस्तुतिः । अस्ति हि यजमान-निष्ठकार्यसमानजातीयकार्यकारित्वं प्रस्तरैककपालयोः, तयोरपि या-गजनकत्वाविशेषेण यागाख्यकार्यनिरूपितत्वरूपैकधर्मयोगेन भि-न्नयजमानप्रस्तरनिष्ठयोः कारणत्वयोः साजात्यात् । अत एव तस्य मुख्यार्थस्य सिद्धिः कार्यं परम्परासम्बन्धेन गुणाश्रयो गौणीवृ-त्तिनिमित्तमिति सूत्रार्थः ।

इति ( तत्सिद्धिपेटिकायां प्रथमं ) त्रयोदशं
तत्सिद्ध्यधिकरणम् ॥

## अथ ( द्वितीयं ) चतुर्दशं जात्यधिकरणम् (१४) ॥

## सू—जातिः ॥ १–४–२४. ॥

"आग्नेयमष्टाकपालं निर्वपेद् ब्राह्मणो ब्रह्मवर्चसकामः" इत्या-दौ मुख्याष्टाकपालकार्यत्वेन श्रुतस्य ब्रह्मवर्चसादेः परम्परासम्बन्धेन

द्वादशकपालावयवभूताष्टाकपालादिकार्यत्वदर्शनात् तत्सिद्धिपदेनैवा-ष्टाकपालादिशब्दानां गुणप्रवृत्तिनिमित्तकथनात् गौणत्वे समाहितेऽपि तत्सिद्धिरूपनिमित्तविरहेऽपि लोके निमित्तान्तरेण गौणीदर्शनात् कथं तत्सिद्धिर्गौणी निमित्तमित्याशङ्क्य न (१)तत्सिद्धिरेव गौणीनिमित्तम्, अपि तु जात्यादीन्यपि। अतः यत्किञ्चिन्निमित्तान्तरं तद्देशेऽपि षट्स्वन्तर्भाव्यमित्यभिधानार्थमयं सूत्रैकदेशः।

तदत्र "अग्निर्वै ब्राह्मण" इत्यादौ पूर्ववदेव नामधेयत्वगुणविधित्वे आशङ्क्य ब्राह्मणकार्यस्य त्यागादेरग्निना कर्तुमशक्यत्वात् गुणविधित्वानुपपत्तेः विध्यन्तरैकवाक्यतानुरोधेनाग्निशब्देन गौण्या वृत्त्या ब्राह्मणस्तुतिरिति तथैव सिद्धान्तयितव्यम्। गुणवृत्तिनिमित्तकथनार्थं तु जातिशब्दः। जातिर्जननं एकप्रभवत्वमित्यर्थः। अग्निब्राह्मणयोर्हि "आग्नेयमष्टाकपालं निर्वपेत् ब्राह्मणो ब्रह्मवर्चसकामः" इत्येतद्वाक्यशेषे "प्रजापतिरकामयत प्रजाः सृजेयेति, स मुखतः त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री च्छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणामजः पशूनां" इत्यादिना एकप्रजापतिमुखप्रभवत्वं सङ्कीर्तितम्।

यद्यपि चार्थवादस्यान्यपरत्वादस्मन्मतेऽग्निब्राह्मणयोः सृष्ट्यादिकालेऽपि एकमुखप्रभवत्वे प्रमाणाभावः। अतश्च शक्यतावच्छेदकवत् गौणतावच्छेदकस्यापि वस्तुत एव (२)विशिष्टवृत्तित्वनियमान्नैतस्य गौणत्वनिमित्तता युज्यते, तथापि अर्थवादोपात्तैकमुखप्रभवत्वालम्बनभूतस्याग्नेयमष्टाकपालमिति प्रकृतैकविशिष्टविधिप्रसूतविशेषणविधिकत्वस्य वस्तुत एव सत्त्वात् गौणीनिमित्तत्वोपपत्तिः।

यत्तु भाष्यकारेणैतद्विधिशेषभूत एवा(३)"ग्नेयो वै ब्राह्मण" इति वाक्ये अर्थवादत्वसिद्धान्तमुपपाद्य तदालम्बनार्थं गौणत्वमाग्नेयशब्दस्योक्तम्, तत् आग्नेयशब्दस्य सूक्तहविस्समभिव्याहाराभावेन

१ तत्सिद्धेरेव गौणीनिमित्तता। २ विशेष्य. ३ तै. सं. २-३-३-२.

देवतातद्धितत्वानुपपत्तावपि(१)"तस्येद" मित्यनेन प्रकृते सम्बन्धमात्रेऽपि 'सर्वत्राग्निकलिभ्यां ढग्वक्तव्य' इति स्मृत्या तद्धितविधानादुक्तविधया चाग्निब्राह्मणयोस्सम्बन्धसत्वादाग्नेयशब्दस्य मुख्यवृत्त्यैव ब्राह्मणपदसमभिव्याहारोपपत्तौ गौणत्वे प्रमाणाभावादुपेक्षितं वार्तिककृता ।

न च सम्बन्धसामान्ये तद्धितोत्पत्तावपि सम्बन्धसामान्यस्य विशेषापेक्षायां विधिबलाद्देवतात्वविशेषणस्यैव प्रतीतेः तस्य च मुख्यहविस्समभिव्याहारं विनानुपपत्ते र्मुख्यत्वायोग इति वाच्यम् । "आग्नेयो वै ब्राह्मणो देवतये" त्यादौ मुख्यहविस्समभिव्याहाराभावेऽपि सम्बन्धमात्रे तद्धितमङ्गीकृत्य विशेषापेक्षायां प्रमाणान्तरावगतदेवतात्वविशेषग्रहस्य बहुशो दृष्टत्वात् ।

मुख्यं तु पूर्ववदेव तस्य मुख्यार्थस्य जातिर्जननमेव परम्परासम्बन्धेन गुणाश्रयो गौणीनिमित्तमिति व्याख्येयम् ।

इति (तस्मिद्धिपेटिकायां द्वितीयं) चतुर्दशं जात्यधिकरणम् ।

## अथ ( तृतीयं ) पञ्चदशं सारूप्याधिकरणम् ( १५ ) ॥

### सू—सारूप्यम् ॥ १–४–२५. ॥

'आदित्यो यूपः' 'यजमानो यूपः' इत्यादौ पूर्ववदेव नामधेयत्वगुणविधित्वे आशङ्क्य यूपकार्ये पशुनियोजनादौ अनपक्रमणसाधनत्वेनादित्यविधेरशक्यत्वात् आदित्यपदस्य दारुमयादित्यप्रतिकृतिपरत्वे विधौ गुणद्वयाङ्गीकारापत्तेः यूपकार्ये यजमानविधावपि च कार्यापत्त्योत्तरवेदिप्राग्देशनिखननस्यापि प्राप्तस्य यजमानपदार्थेन दक्षिणदेशावस्थानेन बाधापत्तेः अबाधसम्भवे च

१. पा. सू. ४-२-१२०.

बाधायोगात् गुणश्रुतित्वायोगः समाधनीयः।

यत्त्वत्र न्यायसुधायां प्राग्देशनिखननस्य पशुधारणस्य च पशुनिरोधार्थत्वेन यूपकार्यान्तःपाताद्यजमानेऽपि प्राप्ते दक्षिणदेशावस्थानरूपस्वपदार्थकरणविरोधप्रसङ्ग इत्युक्तम्, तन्न (१)"यूपं मिनोती"ति वाक्येन निखननस्य पशुधारणस्य च यूपधर्मत्वप्रतीतेः यूपकार्यान्तःपातायोगात्। अन्यथा परिधावपि निखननापत्तेः। यूपकार्यान्तःपाते वा अतिदेशप्राप्तदक्षिणदेशावस्थानस्य वाचनिकेन यूपकार्यसम्बन्धेन(२) "यो होता सोऽध्वर्यु"रितिवद् बाधापत्तेरुपेक्षितम्। अतश्च निखननस्य यूपधर्मस्यापि कार्यापत्त्या प्राप्तस्य याजमानकार्येण दक्षिणदेशावस्थानेनापि बाधापत्तेः अबाधसम्भवे च बाधायोगात् (३)"यूपमुच्छ्रयती" ति विध्येकवाक्यताभङ्गापत्तेश्च गुणवृत्त्या यूपस्तुतिरेवायम्। सारूप्यरूपनिमित्तार्थान्तरकथनार्थन्तु सारूप्यशब्दः।

ननु—सर्वत्रैव तत्सिद्ध्यादौ समानजातीयाख्यस्य सारूप्यस्य सत्त्वान्न तस्य निमित्तान्तरत्वमिति चेत्—न, तत्सिद्ध्यादौ सारूप्यस्य सम्बन्धविधया कार्यकोटौ कारणकोटौ वा प्रवेशेऽपि तत्कार्यस्यैव स्वसमानजातीयकार्यकारितासम्बन्धेन प्रकारताख्यनिमित्ततावगमान्न सारूप्यस्य प्रकारताख्यनिमित्तत्वम्। इह तु आदित्ययजमानाभ्यां यूपे अञ्जनोच्छ्रयणजन्यतेजस्वित्वोर्ध्वत्वरूपसादृश्यस्य चाक्षुषस्य झटिति प्रतीतिसम्भवेन कारणतावच्छेदके कार्यतावच्छेदके वा प्रकारतया प्रविष्टत्वान्निमित्तत्वोपपत्तिः।

तथा च यत्र सारूप्यसम्बन्धेन मुख्यनिष्ठाः तत्सिद्ध्यादय एव गुणाः प्रकारा भवन्ति तत्र तत्सिद्ध्यादीनि पञ्च निमित्तानि, यत्र तु सादृश्यमपि प्रकारीभवति तत्र सारूप्यं निमित्तम्। अतश्चोभयसाधारण्येन यस्मिन् देवदत्तविशेष्यके शाब्दबोधे सिंहनिष्ठगुणाः प्र-

१ श. ब्रा. ३-७-१-१५. २ आप. श्रौ. २३-११-१२. ३ श. ब्रा. ३-७-१-१

कारणायां प्रविष्टाः तादृशशाऽऽदृत्त्वावच्छिन्नं प्रति साक्षात्परम्परासा-
धारण्येन । निहपदशक्यवृत्तिगुणत्वत्वाज्ञानं कारणमिति निय-
मकल्पनात् सारूप्यस्य गौणीवृत्तिनिमित्तत्वोपपत्तिः । एतदभिप्रा-
येणोक्तं चक्षुर्ग्राह्यसादृश्यविवक्षया पृथगुपादानमिति न चक्षुर्ग्राह्यत्व-
मेव पृथगुपादानप्रयोजकम् । छत्रिणो गच्छन्तीत्यादौ बाहुल्यादीनाम-
पि चक्षुर्ग्राह्यत्वेन तदपेक्षया पृथगुपादानानुपपत्तेः । तस्मात् सारूप्य-
स्य प्रकारतया भानादेव पृथगुपादानमिति द्रष्टव्यम् । अत एव भा-
ष्यादौ सारूप्यादिति तन्निमित्तपञ्चम्यैवाहृता ।

इति (तत्सिद्धिपोटकायां तृतीयं) पञ्चदशं सारूप्याधिकरणम् ॥

अथ (चतुर्थं) षोडशं प्रशंसाधिकरणम् (१६) ॥

## सू—प्रशंसा ॥ १–४–२६. ॥

(१)"अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः" (२)"अयज्ञो-
वा एष योऽसामा" (३)अमन्त्रं वा एतद्यदच्छन्दोमम्" इत्यादौ गवा-
श्वव्यतिरिक्तानामपशुशब्दो नामधेयमिति सम्भवमात्रेणाशङ्क्य गवा-
श्वव्यतिरिक्तानामजादीनां पशुपदवाच्यत्वादेवापशुसंज्ञकत्वानुपप-
त्तेर्घटादीनामपशुपदवाच्यत्वस्य प्रमाणान्तरेणैव सिद्धेस्संज्ञान्तरवै-
यर्थ्यापत्तेर्नञ्समासान्तर्गतं पशुपदं पशुकार्यलक्षकमङ्गीकृत्य नञा
गवाश्वभिन्नानां अजादीनां पशुकार्ये पर्युदासः क्रियते । गवाश्वव्य-
तिरिक्ताजादिभिन्नेन पशुकार्यमग्नीषोमीययागादि कुर्यादिति ।

अथ वा अजादीनां विहितत्वेन विकल्पस्यापरिहार्यत्वात् दूरस्थै-
कवाक्यताकल्पनक्लेशापत्तेश्च प्रतिषेध एवायम् । अतो विधायकमे-

---

१. तै. सं. ५-२-९-४. २ तै सं. १-५-७ १. ३ तै. सं. ७-४-९-३.

येति प्राप्ते—

अजादीनां तत्र तत्र विहितत्वेन निषेधकल्पनानुपपत्तेः कल्प्यनिषेधे-न च क्लृप्तविधेः पाक्षिकत्वापादनस्य कथमप्यशक्यत्वात् (१) "अमेध्या वै माषा" इतिवत् प्रतिनिधिनिषेधकत्वस्य च (२)पुरस्तात्प्रतीचीनम-श्वस्योपदधाति पश्चात् प्राचीनमृषभस्य" इति प्रकृतविध्येकवाक्यताभ-ङ्गापादकत्वेन कल्पयितुमशक्यत्वात् साक्षात्पशुत्वादीनाञ्च प्रतिषे-द्धुमशक्यत्वात् गौण्या वृत्त्या पूर्ववत् गवाश्वप्रशंसैवेयम्। प्रशंसा-रूपनिमित्तान्तरकथनार्थस्तु प्रशंसाशब्दः। तथा हि—

नञ्समासान्तमपशुपदं गवाश्वविध्येकवाक्यतानुरोधादर्थवादे-ऽपि च 'पशवो गोअश्वाः' इति सामानाधिकरण्यादेकसम्बन्धिज्ञाने-नापरसम्बन्धिस्मरणमिति न्यायेन गवाश्वगतप्राशस्त्याभावोपस्थाप-कम्। अतोऽर्थाद्गवाश्वगतप्राशस्त्यावगमादजादीनां निन्दावगम्यते। सा च नहिनिन्दान्यायेन विधेयगवाश्वस्तुत्युर्था। अत्र चापशुशब्द-स्य पशुभिन्नघटादिवचनस्य स्वशक्यघटनिष्ठगवाश्वगतप्राशस्त्याभा-वरूपगुणयोगादजादौ गौणत्वम्। अतश्च प्रशंसाभावस्य गुणत्वे प्र-तियोगिविधया प्रशंसाया अपि प्रकारतायां प्रविष्टत्वान्निमित्तत्वो-पपत्तिः।

यत्तु न्यायसुधादौ पशुपदं गवाश्वगतप्राशस्त्यपरमङ्गीकृत्य नञा तदभाव अजादौ प्रतिपाद्यत इत्युक्तम्, तद्यदि एकसम्बन्धि-दर्शनन्यायेन गवाश्वगतप्राशस्त्योपस्थितिरभिप्रेता ततोऽशाब्द-त्वात् तस्य शाब्देन नञर्थेनान्वयानुपपत्तिः। अथ लक्षणया, तत-स्तवैव निर्वाहाद्गौणीवृत्त्युपपादनमनुपपत्तिरित्युपेक्षणीयम्। अतः पू-र्वोक्तविधया अपशुपदं स्वार्थोपस्थापनद्वारा गवाश्वगतप्राशस्त्याभा-वरूपं स्वशक्यनिष्ठगुणमुपस्थापयतीति तद्योगादजादौ गौणी।

एव "यज्ञो वा एषः" इत्यादौ यद्यपि पशवो गोऽश्वा इति

१ तै. सं. ६-१-७-१. २ तै. सं. ५-२-९-४.

वन्नार्थवादे सामानाधिकरण्यम्, तथापि क्रतोः सामच्छन्दोमवतो विध्येकवाक्यतानुरोधेनोपस्थितस्य सामच्छन्दोमवत्क्रतुगतप्राशस्त्याभावरूपस्य गुणस्यायज्ञादिपदवाक्यघटादिनिष्ठस्य योगादयज्ञादिपदं क्रतौ यज्ञरूपेष्वपि दर्शपूर्णमासादिषु गौणम् । नचैवं गवाश्वगतप्राशस्त्यस्य प्रतियोगिविधया पूर्वमेवोपस्थितौ पुनरजादिपदोक्तिगवाश्वस्तुतिवैयर्थ्यम् । गवाश्वगतप्राशस्त्यस्यानन्यनिष्ठत्वरूपापनेनातिशयद्योतनार्थत्वात् । अतश्च फलीभूते प्राशस्त्येऽतिशयं द्योतयितुं क्रियमाणायां अजादिनिन्दायां गवाश्वगतं प्राशस्त्यमपशुशब्दस्याजादौ गौणवृत्तेर्निमित्तमिति सिद्धम् ॥

इति ( तत्सिद्धिपेटिकायां चतुर्थं ) षोडशं मनांसाधिकरणम् ।

## अथ ( पञ्चमं ) सप्तदशं भूमाधिकरणम् (१७) ॥

## सू—भूमा ॥ १—४—२७. ॥

(१)"स्रष्टीरुपदधाती"त्यत्र स्रष्टिपदं स्रष्टिलिङ्गकमन्त्रमात्रपरम्? उत गौण्या वृत्त्या सृष्ट्यसृष्टिसमुदायपरम्? इति विचारः। गुणवृत्तिनिमित्तकथनार्थत्वाच्च पूर्ववदेव सङ्गतित्रयम्। तत्र न तावदयमर्थवादः, येनानुवादत्वात् गुणवृत्त्यङ्गीकरणमपि युज्येत । आख्यातप्रत्ययश्रवणात् विध्यन्तरैकवाक्यताभावाच्च अयं विधिः। तत्रापि तु नोपधानं विधीयते । तस्यानुपधीयमानाभिरिष्टकाभिश्चयनस्य कर्तुमशक्यत्वेन 'इष्टकाभिरग्निं चिनुते' इति विध्यन्यथानुपपत्त्यैव स्वरूपेणेष्टकासम्बन्धित्वेन च प्राप्तत्वात्, गुणसंक्रान्तविधिशक्तित्वाच्च । अतः उपधानानुवादेन स्रष्टिपदार्थो विधीयते । सोऽपि च नेष्टकारूपः । (२)त-

१ तै. सं. ५-३-४-७. २ पा. सू. ४-४-१२५.

द्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति स्मृत्या सृष्टिलिङ्गकमन्त्रोपधेयेष्टकासु गम्यमानासु मतुपः लोपविधानात् सृष्टिशब्दोऽयं सृष्टिपदघटितमन्त्रोपधेयेष्टकाविशेषपरः ।

वस्तुतस्तु अनेन सूत्रेण मतुप्लोपकरणे सन्नियोगशिष्टचशब्दविहितयत्प्रत्ययस्यापि करणापत्तेः (१)"ऋतव्या उपदधाती"तिवत् सृष्ट्या इति रूपापत्तिः । अतः दृष्टानुविधिरित्येवं मतुब्विधेरत्रानित्यतां प्रकल्प्य मतुबन्तप्रातिपदिकत्वाभावादेव च यत्प्रत्ययमतुब्लोपयोः प्रसक्त्यभावात् स्त्रीलिङ्गाद्यनुरोधेन सृष्टिपदेनैव सृष्टिमन्मन्त्रोपधेयेष्टकाविशेषाणां लक्षणयाऽभिधानम्, अतश्चेष्टकाविशेषाणां सृष्टिपदाभिधेयत्वेऽपि कासामिष्टकानां सृष्टिमन्त्रैरुपधानमिति विशेषानवगमादिष्टकासामान्यस्य चेष्टकाविधिनैवोपधानसम्बन्धप्राप्तौ तद्विशेषस्य सुतरां उपधानसम्बन्धप्राप्तेर्विधानायोगात्,इष्टकाविशेषाणामुपधानाङ्गत्वे सृष्टीरिति द्वितीयानुपपत्तेश्च । द्वितीयाबलादेवेष्टकाविशेषोद्देशेनोपधानविधिस्तु विशेषानवगमादेव निराकर्तव्यः । अतः पारिशेष्यात् "(२)तिसृभिरस्तुवत ब्रह्मासृज्यते"त्यादिसृजिधातुयुक्तसृष्टिलिङ्गकमन्त्रविधिरेवासत्यपि द्वितीयासंयोगे "ऐन्द्रवायवं गृह्णाती"तिवन्नानुपपन्नः । न च मन्त्राणामपि लिङ्गप्रकरणाभ्यामेव प्राप्तेर्विध्यानर्थक्यम् । लिङ्गप्रकरणकल्प्यविनियोगात्पूर्वमेव प्रत्यक्षवचनेन सृष्टिमन्त्रविधानोपपत्तेः । तत्प्रयोजनञ्चासृष्टिलिङ्गकमन्त्रान्तरपरिसंख्या । न चैवं त्रैदोष्यम्, अप्राप्तपरिसंख्याङ्गीकारात् ।

न चासृष्टिलिङ्गकमन्त्रान्तरवैयर्थ्यम् । मन्त्रान्तराणामुपधानैकान्तिकलिङ्गाभावेन साधारणलिङ्गत्वादिष्टकाग्रहणादिष्वपि चयनाविध्याक्षिप्तेषु विनियोगेनार्थवत्त्वात् ।

अथ वा मन्त्रान्तराणां सत्यप्युपधानैकान्तिकलिङ्गे (३)"यां काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यात्"

१ तै. सं. ५-४-२-१. २ तै. सं. ४-३-१०-१. ३ श. ब्रा. ८-७-२-१८.

इत्यादिवचनेनाधिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वात् प्रत्यक्षब्राह्मणविहितानां इष्टकानां मध्यमचितावेवोपधानस्य नियतत्वेन लिङ्गविनियुक्तानां अमति मध्यमचित्यवान्तरप्रकरणे महाप्रकरणेन लोकंपृणावत् सर्वचितिषु निवेशोपपत्तेः नानर्थक्यम्। अत एव स्पृष्टिमन्त्रविधानस्यैतदपि प्रयोजनं यदुक्तवचनेन मध्यमचितिमात्रसम्बन्धः। अन्यथा लिङ्गविनियुक्तानां मध्यमचित्यन्तरेऽपि निवेशस्स्यात्। न तु मध्यमायामेव। अतः मध्यमचितिमात्रसम्बन्धार्थं मन्त्रविधिर्नियुक्तः।

न च मन्त्राणां प्रत्यक्षब्राह्मणविनियोगेऽपि तदुपधेयेष्टकाविशेषाणामविधानस्य तुल्यत्वेन कथं मध्यमचितिसम्बन्धोपपत्तिः, इष्टकावाचिश्रुतशब्दविनियुक्तमन्त्रोपधेयेष्टकात्वेनैवेष्टकानां ब्राह्मणवत्त्वाभ्युपगमात्। अत एव "यदेवास्योनं यच्छिद्रं तदेतया पूरयति""परिचिदसि तया देवतया" "लोकं पृण च्छिद्रं पृण" इत्यत्रेतिकरणविनियुक्तमन्त्रोपधेयेष्टकायाः न ब्राह्मणवत्त्वमिति पञ्चमे वक्ष्यते। स्पृष्टिमन्त्राणान्तु तादृक्शब्दविनियुक्तत्वेन तदुपधेयेष्टकानां ब्राह्मणवत्त्वोपपत्तेः युक्तं स्पृष्टिमन्त्रविधिप्रयोजनत्वं मध्यमचितिसम्बन्धश्च।

किञ्च यथैव स्पृष्टिमन्त्रविधेर्गृहमेधीयाज्यभागन्यायेन मन्त्रान्तररूपशेषपरिसंख्याफलकत्वं तथैव स्पृष्टिमन्त्राणां साधारणलिङ्गत्वादिष्टकाग्रहणादौ तदुपधाने चाविशेषात् प्राप्तानां गर्दभाभिधानीन्यायेन ग्रहणादिकार्यान्तरपरिसंख्याफलकत्वमपि न विरुध्यते।

किञ्च यत्र भूतेष्टकावज्रिण्यादौ तन्मन्त्राणामुपानुवाक्याकाण्डाधीतत्वेन सति सामान्यसम्बन्धबोधकप्रमाणे लिङ्गमात्रेण विनियोगायोगादसम्भवत्प्राप्तिकता तत्रैषामप्राप्तप्रापणमेव विधेः फलमिति सर्वथा गुणसङ्क्रान्तशक्तिना तेन विधिना मन्त्रविधानमेव युक्तम्। एवञ्च स्पृष्टपदस्य विधायकत्वे सिद्धे तेन गौण्या वृत्त्याऽस्पृष्टिमन्त्रप्रतिपादनं विधौ गौणत्वस्वीकरणञ्चात्यन्तमेवान्याय्यम्।

नचैवमौपानुवाक्यकाण्डाधीतानामेकानुवाकगतानां मन्त्राणां

मध्ये केषांचित्तल्लिङ्गानां विनियोगेऽप्यन्येषामतल्लिङ्गानामानर्थक्यापत्तिः; तेषाञ्चयनाङ्गत्वबोधकप्रमाणाभावेऽपि वाचस्तोमादौ सर्वयजुर्मन्त्रविनियोगेन सार्थकत्वोपपत्तेः । अतः सृष्टिपदं नासृष्टिपरमिति प्राप्ते--

भाष्यकारेण तावदेवं सिद्धान्तितम्--उपयोरस्यकर्मणस्त्वाक्षिप्तत्वेन भावार्थाधिकरणन्यायेन धात्वर्थस्यैवाक्षेपतः पूर्वमत्रुत्या विधेयत्वमङ्गीकर्तव्यम् । तत्प्रयोजनञ्चेष्टकासंस्कारकत्वसिद्धिः । अन्यथा हि "इष्टकाभिरग्निं चिनुत" इति विध्यवगतचयनसाधनतानिर्वाहार्थं अवान्तरव्यापारतयाऽऽक्षिप्तस्योपधानस्येष्टकासाध्यत्वावगमेनेष्टकासंस्कारकत्वाप्रतीतेः। तत्फलमपि प्रतिप्रधानं गुणावृत्तिन्यायात्प्रतीष्टकमुपधानावृत्तिसिद्धिः। अन्यथा कदाचित्समुदितेष्टकोपधानेनापि चयननिष्पत्तेर्जायमानत्वेन प्रतीष्टकमुपधानप्राप्तेः। यदि तु प्रधानभेदेऽपि प्रयोगविध्यवगतसाहित्यनिर्वाहार्थं यथाशक्ति पात्राभिमर्शनादिवत्समुदितोपधानमेव युक्तमित्याशङ्क्यते तदा इष्टकासंस्कारविधिफलं तत्स्वरूपे आनर्थक्याच्चयनाङ्गतासिद्धिः। अन्यथा(१)ग्निनाक्षेपलभ्यस्योपधानस्य कृष्यादिवद्विध्यकल्पकत्वेनाविहितत्वात् विधानघटितस्याङ्गत्वस्यानवगतेः। तत्फलं चाङ्गप्रधानयोरेककर्तृत्वसिद्धिः । अन्यथा हि अन्यकृतेनाप्युपधानेनाध्वर्युकर्तृकचयनोपपत्तेः न नियमेनैककर्तृकतासिद्धिः। नह्यवान्तरव्यापारस्य कार्येण सह समानकर्तृत्वं नियतम्, सन्धुक्षणाद्यवान्तरव्यापारस्यान्यकर्तृकत्वेऽपि काष्ठजन्ये पाके देवदत्तेन पाकः कृत इत्यादिव्यवहारविषयत्वदर्शनात् । अतश्चयनसमानकर्तृकत्वसिद्धिरेवोपधानविधेः प्रयोजनम् ।

यत्तु मथनादिविधिवदाध्वर्यवसमाख्याविषयतालाभेनाध्वर्युकर्तृकत्वैवोपधानविधिप्रयोजनमित्युक्तं मूले, तदसत्यपि साक्षादुपधानस्याध्वर्यवसमाख्याविषयतालम्बने चयनसमानकर्तृकत्वबलादेवाध्वर्यु-

१ नियता.

कर्तृकत्वप्राप्तेः फलत्वायोगात् मथने च यजमानकर्तृकत्यागसमानकर्तृकत्वबाधेन समाख्यायाः अध्वर्युकर्तृकत्वविध्युपपत्तेः फलत्वसम्भवेन वैषम्यादुपेक्षितम् । अतः प्रयोजनवत्त्वादुपधानमेवाम्नातत्वस्थं विधीयते इष्टकोद्देशेन । मन्त्राः पुनः मथनमन्त्रवत्सन्निधानसहकृतलिङ्गादुपधानसम्बन्धितया प्राप्ताः अनूद्यन्ते सृष्टिपदेन । तत्रापि च यथैव सृष्टिमन्त्राः अनूद्यन्ते तथैव सन्निधानावगताङ्गत्वबाधायोगादसृष्टिमन्त्रा अपि । अत एव 'सृष्टीरुपदधाती'त्युपक्रम्याद्यमन्त्रप्रभृति सप्तदशमन्त्रोपधानसंस्कार्याणां इष्टकानां प्रत्येकं स्तुतिं कृत्वा "यत्सप्तदशेष्टका उपदधाती"त्युपसंहारात् सृष्टिपदस्य सृष्टिमन्त्रपरत्ववत् आद्यचतुर्दशसप्तदशरूपासृष्टिमन्त्रपरत्वमप्यवगम्यते गौण्या वृत्त्या ।

नचैवमुपक्रमस्थेऽसन्दिग्धे विध्युद्देशे उपसंहारस्थार्थवादानुरोधेन जघन्यवृत्त्याश्रयणानुपपत्तिः । उपसंहारार्थवादेऽपि वहुत्वानर्थक्यात् जघन्यवृत्त्याश्रयणापेक्षया उपक्रमस्थेऽपि विधावेकस्मिन् तदङ्गीकारस्य श्येनपद इवोचितत्वात् । अत एव मन्त्रकाण्डपठितानां मन्त्राणां मध्ये "सृष्टीरुपदधाती"त्यनेन सार्थवादेन सप्तदशानां विनियोगं उक्त्वा अष्टादशप्रभृति व्युष्टिसंज्ञकानामग्रे विनियोगः उक्तः। अतश्च सृष्टिपदं अजहत्स्वार्थवृत्त्या सृष्ट्यसृष्टिसमुदायिपरं सृष्टिनिष्ठबाहुल्ये समानाधिकरणसमुदायाश्रयत्वगुणयोगेन। अस्ति हि सृष्टिषु बाहुल्यं सृष्ट्यादिघटितश्च समुदायः साहित्यापरपर्यायो धर्मः सप्तदशानां मन्त्राणां यत्सप्तदशेत्यादिना एकाभिधानावगतः । अतश्च तादृशसमुदायाश्रयत्वसम्बन्धेन सृष्टिपदं सप्तदशमन्त्रेषु गौणम् ।

न च सृष्टिमन्त्राणां शक्त्यैव भानोपपत्तेः गौणत्वकल्पनानुपपत्तिः । तथाङ्गीकारे युगपद्वृत्तिद्वयविरोधापत्तेः । अतश्चार्थवादानुरोधेन स्वार्थमात्रपर्यवसाने बाधिते उक्तगुणयोगेनासृष्टिमन्त्रपरत्ववदर्थवादानुरोधादेव तयैव गुणवृत्त्या सृष्टिपरत्वमपि न विरुध्यते ।

केचित्तु न्यायसुधास्वारस्येन सृष्टिपदं असृष्टिमत्त्यायनार्थमेव

गौण्या प्रवृत्तं गौण्यवच्छेदकस्य शक्येऽपि सत्त्वात् तानपि प्रतिपादयति, यथा 'व्रीहीन् प्रोक्षति' अत्र व्रीहिपदं स्वशक्यनिष्ठापूर्वसाधनत्वमेवानर्थक्यपरिहारार्थं लक्षयितुं प्रवृत्तमपि लक्ष्यतावच्छेदकसंग्रहादेव व्रीहिवत् यवानपि प्रतिपादयतीत्याहुः; तन्न, अर्थवादानुपपत्तेस्समानत्वेनासृष्टिबोधार्थवत् सृष्टिबोधार्थमपि प्रवृत्तेरावश्यकत्वात्।

अन्ये तु पार्थसारथिमिश्रस्वारस्येन सृष्टयसृष्टिसमुदाय एव बाहुल्याख्यगुणयोगेन सृष्टिपदं गौणम्। न च समुदायस्योपधानसंस्कारकत्वानुपपत्तिः। स्वाश्रयसमुदायिद्वारा तदुपपत्तेरित्याहुः; तदपि न, समुदायविधौ सर्वमन्त्रपाठोत्तरं सकृदुपधानापत्तेः। समुदायविधाने हि तेषां प्रत्येकसाधनतानिर्वाहार्थं प्रत्येकमेवोपधानं स्यात्। एवं सत्यपि यद्यत्रेष्टकाबाहुल्यं न स्यात् ततः "तां चतुर्भिरभ्रिमादत्त" इतिवत् स्यात् सकृदुपधानम्। अस्ति तु तत्। अतस्समुदायिविधानपक्षे प्रत्येकोपधानासिद्धिः। समुदायविधौ तु सत्यपि तस्य स्वाश्रयद्वारा उपधानप्रकाशकत्वे एककरणतानिर्वाहार्थं सूक्तादिवत्सकृदुपधानापत्तिः।

न च वार्त्तिककारमते समुदायस्य विधेयत्वात्तदापत्तावपि भाष्यमते सन्निधानप्राप्तानुवादत्वान्नैतद्दोषापत्तिरिति वाच्यम्। सन्निधानेन प्रत्येकमेव साधनत्वावगतेः तन्मते समुदायसाधनत्वानुवादस्यैवायोगात्। अतस्तल्लिङ्गातल्लिङ्गेषु भूयस्त्वनिमित्तः शब्दप्रयोग इति वार्तिकस्वारस्यात् सप्तदशसमुदायिष्वेव गौणीति युक्तमुत्पश्यामः।

तत्सिद्धं सन्निधानप्राप्तसप्तदशमन्त्रानुवादमात्रं सृष्टिशब्दः। तत्प्रयोजनं तु प्रथनार्थवादवत् "यथासृष्टमेवावरुन्धे" इत्यस्यार्थवादस्यालम्बनं, उपधानस्तुतिरेव वेत्यादि द्रष्टव्यम्।

वार्त्तिककारस्तु नोपधानमात्रविधिः। तथा सति "प्राणभृत उपदधाति" इत्यनेकोपधानविधिवैयर्थ्यापत्तेः। नचाभ्यासाद्भेदावगतेर्नवैयर्थ्यम्। सकृत् विहितस्यापि चयनसमानकर्तृकत्वलाभेन भेदबोधवै-

त्यर्थ्यात् । अतः पूर्वपक्षोक्तरीत्या सृष्टिपदं मन्त्रविशेषकमेव । तत्प्रयोजनञ्च मन्त्रान्तरपरिसंख्या । भाष्योक्तरीत्यैव सृष्टिपदस्य सृष्ट्युपसृष्टपसमुदायरूपमप्तदशमन्त्रपरत्वात् । नचैवं विधौ गौणत्वापत्तिः । 'श्येनचितं चिन्वीते'त्यादिवद्गत्या विधावपि तदङ्गीकारात् । किन्तु प्रथमचितिसम्बन्धः ग्रहणादिकार्यान्तरपरिसंख्या वेति पूर्वपक्ष्युक्तमेवानुसन्धेयम् । उपधानन्तु अर्थप्राप्तमेवानूद्यत इति न्यायसुधाकृता व्याख्यातम् ।

वस्तुतस्तु तस्य कर्मत्वेन तावन्नैवानुवादस्सम्भवति; इष्टकानां द्वितीयया कर्मत्वावगमात् । अतो द्वितीयावगतेष्टकाकर्मत्वनिर्वाहार्थं उपधानस्य करणत्वं वाच्यम् । अतश्चार्थाक्षेपोत्तरमेतद्वाक्यप्रवृत्तौ प्रमाणाभावेनानुवादासम्भवादुपधानस्यापि विधानमङ्गीकर्तव्यम् । तत्प्रयोजनञ्च भाष्योक्तरीत्या चयनसमानकर्तृकत्वादिसिद्धिः। अन्यथा ह्यवान्तरव्यापाररूपोपधानानुवादेन मन्त्रविधौ समन्त्रकस्याप्युपधानस्यान्यकर्तृकत्वप्रसङ्गे सति चयनसमानकर्तृकत्वासिद्धेः । अतो मन्त्रविशिष्टोपधानमेवेष्टकासंस्कारार्थत्वेन विधीयते । आवश्यकश्चैवंविधिप्रकाराङ्गीकरणं अनारभ्याधीते भूतेष्टकाचित्रिणीवज्रिण्यादौ । तत्र न हि तावदुपधानमात्रविधिः । तन्मन्त्राणां सन्निधिपाठेन प्राप्तिसम्भवेऽपि अनेकोपधानविधिवैयर्थ्यस्य तदवस्थत्वात् । नापि दूरस्थचयनविध्याक्षिप्तोपधानानुवादेन मन्त्रविधिः । इष्टकाख्यसंस्कार्यरूपानुपादेयगुणयोगेन कर्मान्तरत्वप्रतीतेः प्राकरणिकमन्त्राविरोधाच्च। अतश्चेष्टकासंस्कारार्थत्वेन मन्त्रविशिष्टोपधानविधिस्तत्रावश्यक एव ।

नचैवमव्यभिचरितसम्बन्धाभावेनाग्न्यङ्गत्वे प्रमाणाभावः । (१)"तस्मादग्निचित्सर्वमायुरेति" इति तदुपधानाविधसन्निधिपठितार्थवादवशादेव चयनाङ्गत्वप्रतीतेः। नचैवमप्येकेन विधिनोपधानविधानसिद्धेः इतरविधीनामुपधानविधानाशक्तिः । गुणात्कर्मभेदावगमेन तत्तन्मन्त्रवि-

१. तै. सं. ५.

शिष्टोपधानान्तरविधानेनैव सकलविध्यर्थवत्त्वोपपत्तेः। नह्येकेन वाक्येन कतिपयमन्त्रोपधेयेष्टकानां उपधाने विहिते इतरेष्टकोपधानविधिवैयर्थ्यमापादयितुं शक्यते। अत एवोद्देश्यस्वरूपपर्यालोचनया सर्वेष्टकानामेकैकस्मिन् वाक्ये संस्कार्यत्वावगतावपि कतिपयमन्त्रविशिष्टोपधानरूपविधेयपर्यालोचनया तावदिष्टकानामेव संस्कार्यत्वावगमान्न वाक्यान्तरानर्थक्यम्। भाष्यकृन्मते तु विधेयोपधानस्येष्टकाविशेषप्रत्यायकत्वाभावात् मन्त्राणां च संस्कार्येष्टकाविशेषकत्वानुपपत्तेः "यत्सप्तदशेष्टका उपदधाति" अर्थवादस्य च विधौ सर्वेष्टकाविषयत्वेन निश्चिते सन्देहाभावेनानिर्णायकत्वाद्वाक्यान्तरानर्थक्यमिति विशेषः।

तत्सिद्धं मन्त्रविशिष्टोपधानेऽपि स्तृष्टिपदस्य स्तृष्टिसमुदायेषु गौणत्वम्। बाहुल्यापरपर्यायश्च भूमा उक्तगुणवृत्तिप्रकारतायां प्रविष्टत्वात् गौणीवृत्तिनिमित्तम्॥

इति ( तत्सिद्धिपेटिकायां पञ्चमं ) सप्तदशं भूमाधिकरणम्॥

## अथ ( षष्ठं ) अष्टादशं लिङ्गसमवायाधिकरणम् (१८)॥

## सू—लिंगसमवाया इति गुणाश्रयाः॥१—४—२८॥

"( १ ) प्राणभृत उपदधाति," "अज्यानीरुपदधाती" त्यादौ पूर्ववदेव मन्त्रविशिष्टोपधानविधित्वेऽपि प्राणभृदादीनां बाहुल्याभावात् गुणवृत्तिनिमित्ताभावमाशङ्क्य निमित्तान्तरकथनार्थं लिङ्गसमवायेत्ययं सूत्रैकदेशः।

तत्र भूम्नः पूर्वं निमित्तत्वस्योक्तत्वात् गोबलीवर्दन्यायेन तदतिरिक्तस्याल्पत्वस्य साम्यस्य च निमित्तत्वे तात्पर्यं लिङ्गसमवायपदस्यावगम्यते। अस्ति हि प्राणभृन्मन्त्राणां अप्राणभृन्मन्त्रापेक्षया अल्प-

१. श० ब्रा० ८-१-१.

त्वम् । अतः प्राणभृच्छब्दः प्राणभृद्रूपत्वसमानाधिकरणसमुदायाश्र-
यत्वगुणयोगेन प्राणभृद्प्राणभृन्मन्त्रेषु पूर्ववदत्र गौणः । एवं यत्र
शक्यतद्भिन्नयोस्साम्यं तत्र तस्यापि गुणवृत्तिनिमित्तत्वम् । अतः श्री-
भागवते "ह्यालस्त्वरोरथाग्रही" इत्यत्र स्वसृपदं स्वसृतत्पत्योः
लिङ्गसमवायेन गौणमित्येव व्याख्यातं श्रीधराचार्यैः । अत एव वार्ति-
कस्थोऽल्पशब्दो भूयस्त्वानपेक्षत्वपर इत्येवं व्याख्यातः । तदेवं
तत्सिध्यादीनां गुणवृत्तिनिमित्तप्रकारता(१)सत्त्वात् स्वशक्यनिष्ठगु-
णवत्ता गौणीवृत्तिलक्षणं युक्तमिति सिद्धम् ॥ सूत्रं व्याख्यातम् ॥

इति ( तत्सिद्धिपेटिकायां षष्ठं ) अष्टादशं लिङ्गसमवाया-
धिकरणम् ॥ ( इति तत्सिद्धिपेटिका )

## अथैकोनविंशं वाक्यशेषाधिकरणम् (१९)

## सू—सन्दिग्धेषु वाक्यशेषात् ॥ १–४–२९. ॥

इदानीं स्तावकत्वेन प्रमाण्यस्यापि "तेजो वै घृत"मित्यर्थवादस्थ-
स्य घृतादिपदस्य "अक्ताः शर्कराः उपदधाती" त्यादिविध्यपेक्षि-
ताञ्जनसाधनीभूतद्रवद्रव्यादिनिर्णये प्रामाण्यमस्ति न वेति विचार्यते ।

तत्र पदप्रामाण्यनिर्णयात् पादाध्यायसङ्गती स्पष्टे । विध्यादीनां
नामधेयान्तानां प्रमाणानामप्रामाण्यनिरासेन प्रामाण्ये साधिते अधु-
ना प्रकारान्तरेण प्रामाण्यनिरूपणात् नामधेयविचारेणावसरसङ्गतिः ।
घृतपदे च लिङ्गसमवाये घृताघृतरूपस्नेहद्रव्यमात्रवृत्तित्वापवादा-
द्यानन्तरसङ्गतिरपि ।

तत्र विधेरुपक्रमस्थत्वात् तेन चाञ्जनसाधनीभूतस्नेहद्रव्यमात्रा-

---

१ प्रकाराणां स्वशक्यनिष्ठगुणवत्तालक्षणगौणीवृत्तेर्निमित्तत्वं युक्त-
मिति सिद्धम् ।

क्षेपाद्येन केनचिदज्ञानप्रतीतेः "उच्चैःऋचा क्रियत"इतिवदुपसंहारस्थघृतमात्रप्रत्ययबाधः। नचात्राप्यपच्छेदाधिकरणन्यायेनोपसंहारप्राबल्यं शङ्क्यम्। तस्य भिन्नवाक्यविषयत्वस्य वक्ष्यमाणत्वात्। न चात्र भिन्नवाक्यता; विध्यर्थवादयोः(१) "विधिना त्वेकवाक्यत्वादि" त्यनेनैकवाक्यत्वस्योक्तत्वात्। न चाङ्गवाक्यानां प्रधानवाक्यानाञ्चैकवाक्यत्ववत् वाक्यैकवाक्यताभिप्रायेण तत्। तद्वदिह स्वार्थबोधे समाप्त्यभावात्। यत्र हि द्वयोर्वाक्ययोः स्वस्ववाक्यार्थबोधे प्रत्येकं पर्यवसन्नयोः पश्चादाकाङ्क्षावशेनान्वयः तत्र वाक्यैकवाक्यता, यथा—"दध्ना जुहोति" "अग्निहोत्रं जुहोती"ति। अत्र हि वाक्यद्वयमपि मुख्यविशेष्यं नैय्यायिकमते प्रथमान्तपदोपस्थाप्यवदस्मन्मते भावार्थाधिकरणे वक्ष्यमाणरीत्या कारकान्वययोग्ययच्छब्दाद्यसमभिव्याहृततिङन्तपदाभिधेया क्रियैव। सापि च न सर्वत्र भावनारूपेण। घटो भवति इत्यादौ कारकान्वयसत्वेन भवनस्य तदाश्रयत्वस्य वा मुख्यविशेष्यत्वात्।

अत एव घटो भवति शुक्लो भवती त्यनयोर्वाक्यैकवाक्यतैव। ओदनं भुक्त्वा व्रजतीत्यादौ क्त्वान्तपदाभिधेये भोजनादौ तद्भावनायां वा कारकान्वयसत्वेऽपि तिङन्तपदाभिधेयत्वाभावान्न मुख्यविशेष्यत्वम्। घटः शुक्लः, स्वाध्यायोऽध्येतव्यः, इत्यादौ तु 'अस्तिर्भवन्ती' त्यनेन तिङ्पदाध्याहारात् मुख्यविशेष्यस्य भवनादेः प्रतीत्युपपत्तिः। "यस्योभय" मित्यादौ तिङ्पदाभिधेयाया अप्यार्तेः यच्छब्दान्वयादेव न मुख्यविशेष्यत्वम्। कारकान्वययोग्येति तु स्वरूपकीर्तनमात्रम्। अतश्च तस्मिन् मुख्यविशेष्ये इतरसंसर्गतात्पर्यकत्वमेव वाक्यस्य स्वार्थे पर्यवसन्नत्वम्। अतश्च घटस्य शौक्ल्यमित्यादौ षष्ठ्यन्तस्य शौक्ल्ये अन्वयेन पदद्वयस्य संसर्गतात्पर्यकत्वेऽपि शौक्ल्यस्य मुख्यविशेष्यत्वात्तावन्न पर्यवसन्नत्वम्। एवं क्त्वान्तेऽपि द्रष्टव्यम्। अस्ति तु "दध्ना जुहोती"त्यादौ तत्। मुख्यविशेष्ये भावनायां द-

१. जै० सू० १–२–६.

धिहोमादिसंसर्गतात्पर्यकत्वात्। अत एव दध्यादिसंसर्गभेदेऽपि मुख्यविशेष्यकत्वादेवैकवाक्यत्वं वक्ष्यते ।

नचैवं जुहोतीत्येतावतोऽपि मुख्यविशेष्ये भावनायां होमसंसर्गतात्पर्यकत्वेन पर्यवसन्नत्वं स्यादिति वाच्यम् । तस्य पर्यवसन्नत्वेऽपि दध्नेत्यस्यापर्यवसन्नत्वेन पदैकवाक्यत्वोपपत्तेः। वस्तुतस्तु दधिहोमसंसर्गस्यात्र "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति विशेषानुशासनबलेन पदार्थविधया भानेऽपि संसर्गमर्यादया तस्य तत्तात्पर्यकत्वाभावान्न पर्यवसन्नत्वम् । अतश्च यत्र मुख्यविशेष्ये वाक्यार्थविधया इतरसंसर्गतात्पर्यकत्वं तत्र तस्य पर्यवसन्नत्वम् । ततश्च युक्ता पर्यवसन्नत्वादङ्गप्रधानवाक्यानां सिद्धार्थप्रतिपादकानामुपनिषद्वाक्यानां (*)"यन्न दुःखेन सम्भिन्न" मित्यादि वाक्यानाञ्च स्वर्गादिस्वरूपपराणां मन्त्रवाक्यानां स्वार्थमात्रपराणां पदैकवाक्यताऽसंभवेन भिन्नवाक्यत्वेऽवगते पश्चादङ्गाङ्गिभावाकाङ्क्षावशेन वाक्यैकवाक्यता ।

अर्थवादानां तु सत्यपि मुख्यविशेष्ये इतरक्षेपिष्ठत्वादिसंसर्गबोधकत्वे अध्ययनविध्यनुरोधेन तत्र तात्पर्याबगमान्न पर्यवसानम् ।

न च तेषां क्षेपिष्ठत्वादिसंसर्गे तात्पर्यम्, तस्य लाक्षणिकप्राशस्त्यबोधोपायमात्रत्वेन तात्पर्याविषयत्वात् । यत्तु तात्पर्यविषयीभूतं रुचिविषयत्वयोग्यतारूपं प्राशस्त्यं तस्य प्रशस्तत्वादिसेवंरूपेण लक्षणयैव पदार्थविधया भानादुक्तविधपर्यवसानकारणाभावेन कर्तव्य इत्येवंरूपविध्येकवाक्यत्वं विना न पर्यवसानमिति स्वार्थबोधसमाप्त्यभावात् सिद्धमर्थवादानां पदैकवाक्यत्वम् । अतश्चापच्छेदाधिकरणन्यायाविषयत्वेनोपक्रमस्थविधिप्राबल्याप्रसक्तेः उपसंहारस्थघृतादिपदस्यैव ऋगादिपदवत्तदनुरोधेन वृत्तित्वं युक्तमाश्रयितुम् ।

---

* यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ।

न चोपक्रमे अञ्जनधात्मश्रवणात् तस्य साधनभूतद्रव्यापेक्षायां उप- संहारे विशेषश्रवणे सत्याक्षेपायोगात् उपसंहारोपजीवित्वेनोपक्रमस्य कथं बलवत्त्वमिति वाच्यम्। उपसंहारस्थस्य घृतपदस्यार्थवादान्तर्गत- त्वेनाष्टाकपालादिपदवत् साक्षादेवाञ्जनभावनाविशेषणसमर्पकत्वानु- पपत्तेः। न च रात्रिसत्रप्रतिष्ठापदवत् स्तुतिपरस्यैव द्रव्यविशेषस- मर्पकत्वं वाच्यम्। न च तद्दृष्टान्तमपि सम्भवति। विधिवाक्यस्य यत्किञ्चिद्द्रव्याक्षेपेणार्थवादान्वयं विनाऽपि शब्दतोऽर्थतश्च पर्यवसन्न- त्वावगमेन स्वानर्थक्यपरिहारार्थं पश्चादन्वितस्याप्यर्थवादस्य दौर्ब- ल्यात्। तथा हि—

शब्दतस्तावन्मुख्यविशेष्येतरसंसर्गतात्पर्यकत्वादेव विधिवाक्यं पर्यवसन्नम्। अर्थतोऽपि च द्रव्यवाचकपदस्येह श्रुतस्येहानन्वये- नावश्यकल्प्यत्वाच्छास्त्रस्य महाविषयत्वापादकान्तरङ्गक्रियाक्षेपेण स्नेहपदस्यैव कल्पनीयत्वावगतेः पर्यवसन्नम्। नचैवमपि प्ररोचनां विना प्रवर्तकत्वानुपपत्तेः कथमर्थवादं विना विधिपर्यवसानमिति वा- च्यम्। विध्याक्षिप्तेष्टसाधनत्वावगमबलात् विधिबलादेव वा प्ररोचना- सिद्ध्या पर्यवसन्नत्वोपपत्तेः। अतश्चार्थवादसत्त्वे तदपर्यवसानमात्रेणै- व विध्यर्थवादयोः पदैकवाक्यत्वेऽपि स्वानर्थक्यपरिहारार्थं पर्यवसन्ने विधावन्वितस्यार्थवादस्य विध्यनुरोधवृत्तित्वावगतेरर्थवादस्थं घृतप- दमेव लिङ्गसमवायेन स्नेहद्रव्यमात्रपरं सत् तात्पर्यविषयीभूतं विधेय- स्नेहवृत्तिप्राशस्त्यं प्रतिपादयति।

अत एवान्यपरत्वाद्विधेयस्तुत्युपायतया जघन्यवृत्त्याश्रयणमपि नातीव दोषावहम्। अत एव चात्र विशेषाविषयच्छागमन्त्रेण विधिस्थपशुपदसङ्कोचवदञ्जनविध्यर्थाक्षेपसङ्कोचोऽपि नाशङ्क्यः। छागपदस्यानन्यपरत्वेन सङ्कोचकत्वेऽपि घृतपदस्य स्तुतिपरत्वेन सङ्कोचकत्वानुपपत्तेः। अतोऽत्र घृतपदमेव द्रवद्रव्यमात्रपरम्। युक्तञ्चैतत्, प्रधानभूतविध्यनुरोधेन तदनुग्राहकार्थवादश्रुतिवृत्तिचिन्त- कपूर्वपक्षस्यागस्याङ्गगुणविरोधन्यायाविषयत्वात्।

अथ वा आक्षेपकाल्पितपदेन स्नेहद्रव्यमात्रे विहिते तस्य स्तुत्यपेक्षायां विधेरेव सर्वविषयप्ररोचनाशक्तिकल्पनाप्रसक्तौ घृते प्रत्यक्षां स्तुतिं दृष्ट्वा तदंशे कल्पनाप्रतिबन्धेऽपि तदितरविषये तत्प्रतिबन्धे प्रमाणाभावाद्विधेरेव प्ररोचकत्वोपपत्तेः अर्थवादस्थघृतपदमुपलक्षणमपि न गौणम् । अतो नात्र घृतपदं सन्दिग्धार्थनिर्णये प्रमाणमित्येवं प्राप्ते—

ब्रूमः—विधावञ्जनमात्रश्रवणात् द्रव्यापेक्षायां अथर्वादे स्तुत्यर्थमप्युपात्तस्य घृतस्योपस्थितत्वात् स्तुतेश्चाविधेयनिष्ठत्वायोगेन तदन्यथानुपपत्त्या घृतस्य विधेयत्वावगतेः तस्य चाञ्जनभावनासाधनत्वं तद्वाचकपदकल्पनयावसीयते । एवं यत्रापि "वासः परिधत्त" इत्यादौ द्रव्यसामान्यश्रवणं तत्रापि विशेषापेक्षायां "एतद्वै सर्वदेवत्यं वासः यत् क्षौमम्" इत्याद्यर्थवादोपात्तस्य क्षौमादेरेव ग्रहणमवगम्यते ।

न च क्रियासाधनीभूतस्य द्रव्यस्य क्रियानिष्ठापेक्षयान्वयात् तन्निष्ठानुपपत्त्यैव तद्वाचकपदकल्पनस्य तदर्थसम्बन्धमात्रस्यैव वोपपत्तौ न बहिरङ्गस्तुत्यनुपपत्तेः घृतपदकल्पकत्वं युक्तमिति वाच्यम् । अन्यथानुपपत्तेः सर्वप्रमाणप्रशस्तमयाऽनुसन्धानसापेक्षत्वेन विधिवेलायामेवानुदयात् । प्रमाणान्तरालोचने चार्थवादानुपपत्तेरप्यालोचनात् द्वयोः स्वरूपेण पौर्वापर्येऽपि कार्योत्पादने तदभावादुभयोः संभूय कार्यजनकत्वावगतेरर्थवादे गौणीपरिहारार्थं घृतपदकल्पकत्वोपपत्तेः ।

वस्तुतस्तु—स्तुत्यनुपपत्त्यनुरोधेन क्रियानुपपत्तेः घृतलक्षकत्वं क्रियानुपपत्त्यनुरोधेन वा स्तुत्यनुपपत्तेः स्नेहसामान्यकल्पकत्वमिति सन्देहे सत्येव लक्षणापरिहारार्थं स्तुत्यनुपपत्तेः घृतपदकल्पकत्वावश्यकत्वे तेनैव क्रियायाः द्रव्याकाङ्क्षाशान्तेः क्रियानुपपत्तेर्द्रव्यपदकल्पकत्वमपि गौरवभिया नाङ्गीकर्तव्यम् । अत एव क्रियानुपपत्तेरर्थसम्बन्धमात्रकल्पकतयाप्युपपत्तौ पदकल्पकत्वे प्रमाणाभावात् स्तुत्यनुपपत्त्या तु पदस्यापि कल्पनात् गौरवमपि फलमुख-

त्वादनाशङ्क्यम् ।

यत्तु द्रव्याक्षेपेण स्नेहमात्रेऽवगते घृतपदे लक्षणादिकं विनैव घृतमात्रस्तुतौ सिद्धायां द्रव्यान्तरे विधिरेव स्तुत्याक्षेपक इत्युक्तम्, तदपि सिद्धस्तुत्युपजीवनेनैव विधेराकाङ्क्षाशान्तौ स्वयं स्तुत्यन्तराक्षेपे गौरवापत्तेराग्नेयाधिकरणन्यायेन प्रकृतस्तुतद्रव्यमात्रग्रहणोपपत्तेरपास्तम् । अत एव शब्दतः पर्यवसन्नस्यापि विधेः अर्थतः पर्यवसन्नत्वाभावात् शब्दतोऽप्यपर्यवसन्नेनार्थवादेन पदैकवाक्यत्वमप्यविरुद्धम् । तस्मात् सिद्धं विधेयविशेषस्य विषये विधिनाऽनिर्धारणे वाक्यशेषान्निर्धारणम् ।

एवं यत्रोद्देश्यस्यापि न समुच्चित्य प्राप्तिरिति प्रमाणान्तरेणावधारितं यथा—"द्वयोः प्रणयन्ती" त्यादौ तत्रापि विशेषानवधारणे वाक्यशेषान्निर्णयः । यत्र तु ग्रहादिवत्प्रत्युद्देश्यं वाक्यसमाप्तिः तत्र विधिर्निर्धारितत्वाद्वाक्यशेषस्यानिर्णायकत्वमिष्टमेव ।

नचैवं रात्रिसत्रविधेरपि विश्वजिन्न्यायेनैव निर्णीतत्वाद्वाक्यशेषेण निर्णयानापत्तिः, तदधिकरणे विश्वजिन्न्यायतः पूर्वपक्षस्युपपादनेन वाक्यशेषस्य निर्णायकत्वोपपत्तेः । अत एव न तदधिकरणस्य पौनरुक्त्यम् ।

सूत्रं तु उत्तरसूत्रस्थकल्पनापदानुषङ्गेण योज्यम् ॥

इति एकोनविंशं वाक्यशेषाधिकरणम् ॥

## अथ विंशं सामर्थ्याधिकरणम् ॥ (२०)

### सू—अर्थाद्वा कल्पनैकदेशत्वात् ॥१–४–३०॥ (सि)

"स्रुवेणावद्यति" "स्वधितिनावद्यति" "हस्तेनावद्यति" इत्यादाववदानानुवादेन विहितस्य स्रुवादेः द्रवमांसपिण्डमांसावदा-

नरूपोद्देश्ये ऽविशेषेणैव शब्दस्वाभाव्यात् प्रवृत्तस्य स्वगतस्वाभाविकसामर्थ्यानुरोधेन व्यवस्था ? उत स्वाभाविकसामर्थ्याभावेऽपि सहायान्तरोपादानेन यथाकथञ्चित् सामर्थ्यं सम्पाद्य व्यवस्थेति सन्देहः । अत्र सामर्थ्यकल्पितस्य द्रवादिपदस्य सन्दिग्धार्थनिर्णये प्रामाण्याभिधानात् पादाध्यायसङ्गती स्पष्टे । अनन्तरा तु पूर्वाधिकरणोक्तवाक्यशेषाख्यनिर्णयकारणाभावादव्यवस्थैवेति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा । तत्र प्रमाणान्तरगम्यवस्तुसामर्थ्यापेक्षत्वे वेदस्याप्रामाण्यापत्तेरस्य निर्णायकत्वायोगात् वाक्यशेषस्य च प्रकृते अश्रवणादव्यवस्थैव ।

किञ्च द्रवाद्यवदानानामुद्देश्यत्वात् सर्वेष्वपि स्रुवादिप्राप्तेर्निश्चितत्वेन नात्र वस्तुसामर्थ्यस्य निश्चायकत्वम्, अपि तु विरोधित्वमेव । तेन शब्दवस्तुसामर्थ्ययोर्विरोधे(१)अरुणाधिकरणन्यायेन शब्दसामर्थ्यादेव कथञ्चिदापादितार्थसामर्थ्यानुगृहीतान्निर्णयो युक्तः । शक्यते हि स्रुवे तीक्ष्णपुष्करतां सम्पाद्य तेन पुरोडाशादिसंहतावदानं, आयसावष्टम्भेन च मांसावदानं, हस्तेनापि अङ्गुलीसङ्कोचेन द्रवावदानं, स्वधितिना च सकोटरेण तत् कर्तुम् ।

एवं यत्रापि अञ्जलिशब्दस्य देवतानमस्कारादौ सम्पुटीकरणवाचित्वं, "अञ्जलिनापः पिबेदि" त्यादौ च व्याकोशवाचित्वं प्रसिद्धं तत्र (२)"अञ्जलिना सक्तून् प्रदाव्ये जुहोती"तिविधौ श्रुतस्याञ्जलिशब्दस्योद्देश्यसक्तुहोमगतस्वाभाविकसामर्थ्यानुरोधेन न व्याकोशरूपैकार्थविधायित्वनिर्णयः । अपि तु शब्दसामर्थ्यानुरोधेन यथाकथञ्चित् सामर्थ्यं सम्पाद्य व्यवस्थितार्थपरत्वमेवेति प्राप्ते—

अभिधीयते--विधेयसमर्पकस्य तावदञ्जलिपदस्य गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादुद्देश्यस्य च सक्तुहोमस्यैकेनैव सिद्धेः नियमेनैकार्थपरत्वावसायाद्विपामकाकाङ्क्षायामत्यन्तबलवतोद्देश्यसामर्थ्येन

---

१. पू. मी. ३-१-६. २. तै. सं. ३-३-७.

निर्णयो दुरपह्नवः । तत्रापि स्रुवादौ उद्देश्यस्य द्रवाद्यवदानस्य ग्रहादिवत् सर्वस्यैव प्रतिवाक्यमुद्देश्यतावभासते, तत्रापि अष्टदोषदुष्टविषमशिष्टविकल्पापत्तिपरिहारार्थं कतिपयानामेवोद्देश्यत्वप्रतिपादनात् केषां कस्मिन् वाक्ये उद्देश्यत्वमिति नियामकाकाङ्क्षायां विधेयगतस्रुवादिसामर्थ्येनापि युक्तो निर्णयः ।

किञ्च द्रवावदाने स्वाभाविकसामर्थ्येन स्रुवस्य झटिति प्राप्तत्वात् तेनैव निराकाङ्क्षे विधौ इतरांशे सामर्थ्यकल्पने गौरवापत्ते-(१)राग्नेय्याधिकरणन्यायेनापि स्रुवस्यैव ग्रहणमवसीयते । अत एव शब्दसामर्थ्यानुरोधेनार्थस्य स्वाभाविकसामर्थ्यकल्पने गौरवमनङ्गीकृत्य सामार्थ्यान्तरकल्पनमप्यपास्तम् । शब्दसामर्थ्यस्यैव गौरवपरिहारार्थमर्थसामर्थ्यानुरोधवृत्तित्वावगमात् । अत एवार्थसामर्थ्यस्य प्रमाणान्तरगम्यत्वेऽपि शक्तिग्रहादिवत्तदपेक्षत्वेऽपि नाप्रामाण्यं शङ्क्यम् । तस्य तात्पर्यग्राहकत्वेन शाब्दबोधसामग्र्यन्तर्भावात् । अरुणादावपि हि सत्यपि शब्दसामर्थ्येन क्रयसम्बन्धे एकहायनीपरिच्छेदकत्वस्य अर्थसामर्थ्यावगतस्य नैव त्यागः, अपि तु पार्ष्ठिकान्वयवेलायामङ्गीक्रियत एव तत् । अतश्चोद्देशमात्रपर्यालोचनया अविशेषावगमेऽपि विधेयस्रुवादिशक्तिपर्यालोचनया पुनराधेयव्यवस्थावगमाद्द्रवदानं स्रुवेणैव, संहतावदानं हस्तेनैव, मांसावदानं स्वधितिनैवेति निर्णयोपपत्तेः सिद्धं वाक्यशेषवत् सामर्थ्यस्यापि सन्दिग्धार्थनिर्णायकत्वम् ।

नचैवं सामर्थ्यावगतस्य विशेषस्याशाब्दत्वाच्छाब्दपदार्थान्तरेणान्वयानुपपत्तेरवैदिकत्वापत्तिः । शाब्दत्वसिध्यर्थं द्रवादिवाचकपदस्यैवाध्याहारेण वैदिकशब्दसामर्थ्यकल्पितस्य च वेदैकदेशत्वेन च तदर्थस्य वैदिकत्वोपपत्तेः । अञ्जलिपदस्य तु सामर्थ्यानुगृहीतस्य विनाप्यध्याहारादिकं व्याकोशबोधकत्वोपपत्तेः तदर्थस्य शाब्दत्ववैदिकत्वयोरविरोधः । स्रुवाद्युदाहरणेऽपि चावदानस्यै-

१. पू. मी. ३-२-८.

व प्राप्तत्वेनोद्देश्यत्वादवद्यातिपदस्यैव सामर्थ्यानुगृहीतस्य द्रव्यकर्मकावदानबोधकत्वोपपत्तेर्नाध्याहारादिकमित्यपि वक्तुं शक्यम् । यदिह्यत्र स्रुवादिविशिष्टमवदानं विधीयेत ततो भावनाया आख्याकाङ्क्षायां विश्वजिति स्वर्गकामपदाध्याहारवद् द्वितीयान्तद्रव्यादिपदाध्याहारोऽप्यावश्यकः स्यात् । नत्वेदस्ति । अवदानस्य चतुरवत्तचोदनादिनैव प्राप्तत्वात् । अतस्सामर्थ्यस्यापि धर्मप्रमाणत्वात् सिद्धान्यष्टौ धर्मप्रमाणानीति ।

सूत्रं तु अर्थात् सामर्थ्याद्वा कल्पना निर्णयः इत्यर्थः । न च तत्र निर्णीतस्यार्थस्यावैदिकत्वम् । तत्कल्पितपदस्य वेदैकदेशत्वेन तस्य वैदिकत्वोपपत्तेः इति व्याख्येयम् ॥

विध्यर्थवादमन्त्राः स्मृतिचरिते नाम संस्तुतिश्शक्तिः ।
धर्मे प्रमाणमेतान्युक्तान्यथ तस्य भेदोक्तिः ॥
मीमांसाम्बुनिधिं प्रमथ्य विविधैर्न्यायोच्चयैर्निर्जरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥
श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या प्रथमाध्याये चतुर्थोऽङ्घ्रिः ॥

इति पूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीरुद्रदेवसूनोः खण्डदेवस्य कृतौ मीमांसाकौस्तुभे प्रथमाध्यायस्य चतुर्थः पादः ॥

समाप्तः प्रथमोऽध्यायः ॥

शुभं भूयात् ।

॥ श्रीः ॥

# मीमांसाकौस्तुभः ॥

( द्वितीयाध्यायस्य प्रथमः पादः । )

## अथ प्रथमं प्रतिपदाधिकरणम् ॥ १ ॥

### भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ २-१-१ ॥

( विषयसंशयौ )

एवमुक्तेषु धर्मप्रमाणेष्वधुना प्रमेयभूतं धर्मस्वरूपं निरूप्यते । तत्राऽपि धर्मप्रमाणेषूक्तेषु अर्थादेतत्प्रमाणप्रतिपाद्यो धर्म इत्येव सामान्यतो धर्मस्वरूपावगतावपि कात्स्न्येन तदनवगमादिदानीं धर्मस्वरूपस्य विशेषतोऽवगत्यै तद्गतानेकत्वरूपो भेदो निरूप्यते। अतश्चोत्सर्गापवादाभ्यां भेद एवाऽध्यायार्थः। तत्राऽपि प्राधान्येन भावनाभेदो निरूप्यते । धात्वर्थभेदस्तु तत्सिद्ध्यर्थम् । अवच्छेदकीभूतधात्वर्थभेदेन तदवच्छिन्नभावनाया भेदस्य(१)शब्दान्तराधिकरणे वक्ष्यमाणत्वात् । इदं च प्रायिकम् । अत एव धात्वर्थभेदाभावेऽपि गुणादिप्रमाणेनाऽऽपतन्भावनाभेदोऽपि गुणफलाधिकारेऽङ्गीक्रियत एवेति वक्ष्यते । अपूर्वभेदस्तु भावनाभेदानुनिष्पादितया । सति हि व्यापाररूपभावनाभेदे(२) फलभेदाधीनत्वाद्व्यापारभेदस्य फलभूतापूर्वभेदसिद्धिः

१. पू. मी २. २ १ २ फलभेदव्याप्यत्वादिति. क. प

सुलभैव । अतश्च धात्वर्थभेदापूर्वभेदयोर्भावनाभेदसिध्यर्थत्वात्फलत्वरूपत्वेऽपि प्राधान्येन भावनाभेदस्यैव शब्दान्तरादिभिः षड्भिः प्रमाणैः प्रतिपाद्यत्वात् स एवैकोऽध्यायार्थः ।

तत्र च 'मानाधीना मेयसिद्धि' रिति न्यायेन प्रमाणनिरूपणस्य धर्मस्वरूपनिरूपणं प्रति हेतुत्वात्(१) तदनन्तरमेतदारम्भोनाऽयुक्तः । अङ्गत्वादिनिरूपणस्याऽपि प्रमाणाधीनत्वे सत्यपि भेदापेक्षत्वस्याऽप्यधिकत्वादयमेव भेदनिरूपणावसरः । तत्र च(२) प्रतिपाद्यस्य भावनाभेदस्याऽपूर्वभेदाधीनत्वात् अपूर्वस्य च साक्षाद्भावनाजन्यत्वाभावेन द्वारीभूतधात्वर्थादिजन्यत्वप्रतीतेः तद्भेदादेव भेदोऽवसीयते, नाऽन्यथा; व्यापकाभावे व्याप्याभावस्य नियतत्वात् । धात्वर्थादीनां चाऽपूर्वजनकता फलकरणत्वाधीनेति प्रथमं फलसम्बन्ध एव किं धात्वर्थस्य ? उत सोमादिद्रव्यस्य ? इति विचार्यते ।

यद्यपि च "व्रीहीनवहन्ति, व्रीहीन्प्रोक्षति" त्यादेः द्वितीयैव व्रीह्यादेः कर्मत्वावधारणात् परिशेषेणैव धात्वर्थस्य करणत्वावगतेः, "दध्ना जुहोति" "दध्नेन्द्रियकामस्य जुहुयादि" त्यादेश्च होमस्य प्राप्तत्वेनाऽविधेयत्वात् विधेयस्य गुणस्यैव करणत्वावगतेस्सन्देहाभावेन नोदाहरणत्वम्, अत एव एतदधिकरणापवादभूते(३) "तानि द्वैध" मित्यादौ(४) इन्द्रियकामाधिकरणे च तयोरुदाहरणत्वमिष्टम्; तथाऽपि "सोमेन यजेत"(५) "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इत्यादौ किं होमादीनां फलभावनाकरणत्वं ? उत धात्वर्थस्यैव तदिति विचार्यते ।

---

१. तदनन्तरमेव तदारम्भ इति. क. पु.
२. प्रतिपाद्यभावनेति. क. पु.
३. जै. सू. २. १. ६.
४. पू. मी. २. २. १०.
५. तै. सं. २. ३. २.

( सङ्गतिः )

अत्र चाऽपूर्वभेदोपयोगिचिन्तनस्य पादार्थत्वादपूर्वभेदस्य चाऽध्यायार्थभूतभावनाभेदफलत्वात् पादाध्यायसङ्गती स्पष्टे । अनन्तरा तु स्रुवाद्यवदानानां कार्यविशेषे निरूपिते सम्प्रति स्व- र्गादिरूपकार्यस्य कारणविशेषनिरूपणाद्द्रष्टव्या । एतद्विचारोपो- द्धातत्वेनाऽपि किं सर्वेषामेव फलभावनाकरणत्वं, उत इतरपदा- र्थविशेषितस्यैकस्यैवेति चिन्तनीयम् ।

( पूर्वपक्षः )

तत्र प्राथमिकभावनासम्बन्धस्य हि तावत्सर्वेषामेव पदानां सिद्धान्तिनोऽपि सम्मतत्वात् पाष्ठिकः फलान्वयोऽपि सर्वेषा- मेवाऽगृह्यमाणविशेषत्वाद्वक्तुमुचितः, न त्वेकस्यैव फलान्वयः, इ- तरेषां तु तदर्थत्वमिति । न हि गृह्यते विशेषो यदेकस्यैव, कर- णत्वं नेतरेषामिति । समानपदश्रुत्या धात्वर्थस्य, कारकश्रुत्या सोमादीनामपि चाऽविशेषेण फलभावनाकरणत्वप्रतीतेः, सति सम्भवे प्रधानान्वयस्य न्याय्यत्वाच्च । एकस्य फलान्वयिनः फलगुणान्वये वैरूप्यस्य मत्वर्थलक्षणाया वा प्रसङ्गापत्तेश्च।(१)अ- तश्च सर्वेषां फलसाधनत्वादेकेनाऽपि वाक्येन तत्तत्करणभेदभि- न्नभावनाविधानोपपत्तेः सत्रे एकैकस्य फलभोक्तृत्ववदेकैकस्य प्र- त्येकमेव फलसाधनता । तावत्फलार्थिनस्तु सहप्रयोगेऽपि न क्षति- रिति केचित् । भिन्नप्रयोगविधिविहितानां सहप्रयोगे प्रमाणा- भावेन(२)एकार्थत्वेन काम्यकर्मणामिव विकल्प एवेत्यन्ये ।

वस्तुतस्तु द्रव्यक्रियादिरूपेण करणानां भेदेऽपि तेषां पर- स्परसापेक्षत्वात् भावनाभेदकत्वानुपपत्तेरेकस्यां च भावनायां तृतीयादिबलेन करणानां नैरपेक्ष्यावगमेऽप्यरुणैकहायन्योरिव

---

१. अतश्चेति नास्ति. क. पु. २. एकार्थानेककाम्येति. क. पु.

द्रव्यक्रिययोः परस्परापेक्षत्वस्याभाव्येन तृतीयाद्यवगतनैरपेक्ष्य-स्य(१)चोपादेयतावत्करणातिरिक्तविषयत्वाभ्युपगमात् दर्शादि-वच्चैकपदोपादानाभावेऽप्येकवाक्योपादानात् साहित्यप्रतीतेस्त-स्य चोपादेयगतत्वेन विवक्षितत्वात्समुच्चितसाधनत्वाभावेऽपि साधनानां समुच्चयोपपत्तिरिति प्राप्ते—

( सिद्धान्तः )

अनेकादृष्टकल्पनापत्तेर्न सर्वेषां फलसम्बन्धः । तथा हि—फलतद्भावनाभेदाङ्गीकारे तावत् पक्षद्वयेऽप्यदृष्टभेदस्स्पष्ट एव । भावनैक्याङ्गीकारेऽपि च सत्यपि परमापूर्वैक्ये तत्तत्करणजन्यो-त्पत्त्यपूर्वभेदावश्यम्भावादनेकादृष्टकल्पना । न च करणानां पर-स्परसापेक्षत्वेन क्रमिकत्वाभावादेकमेवोत्पत्त्यपूर्वं कल्प्यतामिति वाच्यम् , तृतीयादिनाऽवगतस्याऽन्योन्यानिरपेक्षकरणत्वस्य का-र्यनिरूपितत्वावश्यम्भावात् फले फलापूर्वे वा तदसम्भवेनोत्प-त्त्यपूर्वनिरूपितत्वावगतेस्तद्भेदस्याऽपरिहार्यत्वात् । अत एव द-धिपयोयागयोः क्रमिकत्वाभावेऽपि व्युत्पत्तिवाक्यावगतनैरपेक्ष्यब-लादेवोत्पत्त्यपूर्वभेदोऽङ्गीकृतः श्रीगुरुचरणैः । अतोऽनेकादृष्टक-ल्पनापत्तेरगत्या प्रधानसम्बन्धत्यागो मत्वर्थलक्षणाङ्गीकरणं च न विरुध्यते । तेन धात्वर्थविशिष्टसोमादिविधानं सोमादिवि-शिष्टधात्वर्थविधानं वा नाऽनुपपन्नम् । तथा हि—

धात्वर्थात्फलपक्षे तस्मादेवाऽपूर्वम्, सोमादीनां तु दृष्टविधयैव धात्वर्थाङ्गत्वम् । एवं सोमादिभ्यः फलपक्षे तेभ्य एवाऽपूर्वम्, धात्वर्थस्तु निर्व्यापाराणां सोमादीनां फलजनकत्वानुपपत्तेराश्र-यत्वेन दृष्टविधयैव सोमाद्युपकारकः । विशिष्टविधिना सोमाद्य-ङ्गत्वस्वीकाराच्चाऽऽश्रयस्य प्राकरणिकत्वाभावेऽपि न क्षतिः ।

१. चोपादेयेति नास्ति क. पु.

तेनाऽनेकादृष्टकल्पनाभावादितरविशिष्टस्यैकस्यैव फलसम्बन्धः ।

न च विनिगमनाविरहात्सर्वेषामेव फलसम्बन्धसिद्धेरनेकादृष्टकल्पनमपि फलमुखत्वान्न दोषमावहतीति वाच्यम्, भावार्थाधिकरणे वक्ष्यमाणरीत्या विनिगमकस्य सत्त्वात् । तस्मादेकस्यैव फलसम्बन्ध इति सिद्धम् ॥

इति प्रथमं प्रतिपदाधिकरणम् ॥ १ ॥

अथ द्वितीयं भावार्थाधिकरणम् ॥ २ ॥

( संशयः )

यदा चैकस्य तदा किं धात्वर्थस्य ? उत उपपदार्थस्य ? इति विचार्यते ।

( पूर्वपक्षः )

तत्र फलस्य साध्यत्वात्सिद्धरूपसाधनापेक्षायां योग्यत्वात्सोमादेरेव करणत्वेनाऽन्वयो न त्वसिद्धस्य धात्वर्थस्य । साध्यस्य साध्येन(१)तत्त्वेनाऽसम्बन्धात् । अतश्च योग्यतारूपलिङ्गात्तावत्सोमादेरेव करणत्वम् ।

न च शब्दगतप्रत्यासत्त्या धात्वर्थस्यैव कथञ्चित्स्वकारकसम्पादनेन योग्यतामापन्नस्य करणत्वावगतेः पदश्रुत्या लिङ्गं बाध्येतेति वाच्यम्। फलपदापेक्षया द्वयोरपि पदान्तरोपात्तत्वेन फलसम्बन्धे पदश्रुत्यभावात् । प्राथमिकभावनासम्बन्धे विद्यमानाया अपि तस्या विरोधाभावेन सोमाद्यन्वये बाधकत्वाभावाच्च । न हि प्राथमिको भावनान्वयस्सोमादीनां सिद्धा-

१. समत्वेनेति. क. पु.

न्तिनोऽनभिमतः, सप्तमाद्याधिकरणे सर्वेषां भावनान्वयस्य व्युत्पाद्यमानत्वात् ।

न च यस्य यस्य भावनासम्बन्धे यद्यत्प्रमाणं तद्गतबलवत्त्वेनैव पार्ष्ठिकफलसम्बन्धे निर्णयाङ्गीकरणात् धात्वर्थस्य च पदश्रुत्या भावनान्वयात् तस्यैव फलसम्बन्धोपपत्तेर्लिङ्गबाधोपपत्तिरिति वाच्यम् । तर्हि सोमाद्यन्वयबोधिकायाः कारकश्रुतेः पदश्रुत्यपेक्षयाऽपि प्रबलत्वेन तया लिङ्गोज्जीवनात् । तथा हि—

पदश्रुतिर्हि सन्निधानत्वात् स्थानरूपा भवेत् एकवाक्यगतसन्निधानत्वाद्वाक्यरूपा वा, उभयथाऽपि श्रुत्यपेक्षया दौर्बल्यम् । अस्तु वा एकपदत्वात् श्रुतिरूपत्वम् । न ह्यत्र संसर्गोऽन्यसंसर्गत्वसंसर्गविधया भासते । तथा सति 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति साहित्यरूपसंसर्गांशेऽनुशासनवैयर्थ्यापत्तेः । अपि तु पदार्थविधयैव शक्त्या निरूढलक्षणया वा । अतश्च यद्यपि एकपदस्थले सामान्यतोऽन्वयस्याऽप्युपात्तत्वाच्छ्रुतिरूपत्वं, तथाऽपि सोमादौ करणतारूपविशेषस्य तृतीयया शक्त्यैवोपात्तत्वात्कारकश्रुतेर्बलवत्त्वमिष्टमेव । अतश्च तदुपजीवितेन लिङ्गेन सोमादीनामेव पार्ष्ठिकफलसम्बन्धावगमाद्धात्वर्थो यथैव(१)स्वर्गकामाधिकरणन्यायेन भाव्यत्वात्प्रच्यावितस्तथैव करणत्वादपीति पदश्रुत्या इतिकर्तव्यतांशे निपततीति सिद्धं धात्वर्थविशिष्टस्य सोमादेरेव फलकरणत्वमिति प्राप्ते—

( सिद्धान्तः )

**अभिधीयते**—न सोमादेः फलसम्बन्धः । स हि भावनान्वयनैरपेक्ष्येण वाऽभ्युपगम्यते ? उत तदन्वयोत्तरकालं वा ? नाऽऽद्यः, कारकाणां परस्परान्वयानङ्गीकारात् । भावनावाचिनः

१. पू. मी. ६. १. १

क्रुञो हि सम्बन्धार्थके ण्वुलादिप्रत्यये कृते कारकादिशब्दव्युत्पत्तेः क्रियासम्बन्धित्वमेव कारकत्वम्। तदसति क्रियासम्बन्धे बाध्येत। अतो न कारकाणां परस्परसम्बन्धः। सोमादिपदानां फलपदान्वये फलपदस्य च भावनापदान्वये फलपदातिरिक्तसुबन्तार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति फलपदजन्योपस्थितिः कारणं, फलप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति च प्रत्ययजन्योपस्थितिरित्यनेककार्यकारणभावकल्पनागौरवापत्तेश्च। अतो लाघवात्सर्वेषां कारकाणां भावनायामेवाऽन्वयान्न तावत्सोमादेस्तदन्वयनैरपेक्ष्येण फलान्वयोऽभ्युपगन्तुं युज्यते। तेन भावनान्वयोत्तरं पाष्ठिकः फलान्वयो वाच्यः। स चाऽसौ भावनावच्छेदकीभूतस्य धात्वर्थस्यैव वक्तुमुचितो न तदनवच्छेदकीभूतानां द्रव्यगुणादीनाम्। अतो धात्वर्थस्यैव फलसम्बन्धो युक्तः।

सूत्रं तु—ये भावनावच्छेदार्थाः कर्मशब्दाः धात्वर्था इति यावत्। तेभ्य एव, अपूर्वोत्पत्तिरूपा वा फलोत्पत्तिरूपा वा क्रिया, प्रतीयेत। कुतः? एष ह्यर्थो विधेयफलभावनावच्छेदकत्वेन सम्बध्यते, न तु द्रव्यगुणादिरूपः इति व्याख्येयम् ॥ १ ॥

## सर्वेषां भावोऽर्थ इति चेत ॥ २-१-२ ॥

ननु धात्वर्थस्याऽपि न कारकत्वातिरिक्तसम्बन्धेन भावनावच्छेदकता, पचति पाकं करोति पाकेन करोत्योदनमित्येवंप्रकारेणैव विवरणात्। तच्च कारकत्वं द्रव्यगुणादिष्वप्यविशिष्टमिति भावनावच्छेदकत्वाविशेषात्सर्वेषामेव फलसम्बन्धप्रसक्तौ योग्यतारूपलिङ्गाद्द्रव्यादेरेव फलसम्बन्धोपपत्तिरिति चेत ॥ २ ॥

येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराऽऽकाङ्क्षा, भूतत्वात्स्वे प्रयोगे ॥ २-१-३ ॥

येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेत ॥ २-१-४ ॥

न सोमादेः फलसम्बन्धः, तथात्वे प्रतिपदाधिकरणोक्तस्याऽनेकादृष्टकल्पनप्रसङ्गस्याऽनिवारणात्। तथा हि—सोमाद्यावदेकमपूर्वमावश्यकम्। यागस्याऽपि न दृष्टाविधया सोमोपकारकत्वमिति ततोऽप्यपरं कल्प्यम्। यागस्याऽऽश्रयत्वेन दृष्टविधयैव सोमोपकारकत्वमिति चेत्, किमिदमाश्रयत्वं नाम? अवान्तरव्यापाररूपत्वं वा, जन्यत्वमात्रं वा, संस्कारकत्वं वा? नाऽऽद्यः; तथा सति यागस्याऽपि फलजनकत्वावश्यम्भावात् तस्य चाऽपूर्वमन्तरेणाऽनुपपत्तेः। न हि यागसोमयोरेकापूर्वजनकत्वं सम्भवति। अपूर्वस्य शक्तिरूपत्वेन शक्तिमद्भेदे भेदस्याऽऽवश्यकत्वात्।

न द्वितीयः; यागानुष्ठानस्य निष्प्रयोजनत्वापत्तेः। न ह्यस्येन्द्रियकामादिहोमवत्प्रयोजनान्तरं क्लृप्तमस्ति। अतश्च तस्य फलान्तरकल्पने पुनरदृष्टान्तरकल्पना तदवस्थैव।

नाऽपि तृतीयः; यागस्याऽवघातादिवत्संस्कारकत्वायोगेन प्रोक्षणादिवददृष्टद्वारकत्वावश्यम्भावात्। अतश्च यागस्य फलसम्बन्धे तस्मादेवाऽपूर्वम्। सोमादेस्तु सत्यपि प्राथमिके भावनाकरणत्वे पाष्ठिकफलसम्बन्धाङ्गीकारे अपूर्वान्तरकल्पनापत्ते

दृष्टविधया यागसम्बन्ध एव पार्ष्टिकोऽङ्गीक्रियते । तेनाऽदृष्टकल्प-
नालाघवार्थं धात्वर्थस्यैव फलसम्बन्धः ।

अयमेव चाऽर्थो धातूपपदार्थस्वरूपनिरूपणद्वारेण(१)सूत्र-
कृतोक्तः । येषामुच्चारण एव द्रव्ये वाच्ये निष्पन्नरूपस्योपल-
ब्धिः, तानि नामानि । तस्मात्तेभ्यस्साधनाकाङ्क्षा, परा
दूरे । नाऽस्तीति यावत् । तदुच्चारणकाल एव तदर्थानां सिद्ध-
त्वप्रतीतेः । अतस्तत्साधनत्वेन यागादिविधानं न दृष्टविधयोप-
युज्यत इत्यदृष्टं कल्प्यम् ।

येषांतूत्पत्तौ उच्चारणकाले, द्रव्येऽर्थे प्रयोगो न वि-
द्यते, स्वार्थो न विद्यत इति यावत् । तान्याख्यातानि ।
तस्मात्तदर्थेभ्यो निष्पन्नरूपत्वेन प्रतीयमानेभ्यस्साधनाकाङ्क्षा
झटिति प्रतीयेत । अतस्तत्साधनत्वेन विधीयमानं सोमादि दृष्ट-
विधयैवोपयुज्यत इत्यनेकादृष्टकल्पनाभावाद्धात्वर्थादेव फलमिति
भावः ॥ १, ४ ॥

ननु सम्भवत्यपूर्वाख्यावान्तरव्यापारद्वारा सोमादेः फलक-
रणत्वे क्रियारूपाश्रयव्याप्यत्वं विना फलकामनायां सत्यां स्व-
त एवाऽपूर्वोत्पत्तिद्वारा फलोत्पत्तिप्रसङ्गेन विधिवैयर्थ्यप्रसङ्गादा-
श्रयाकाङ्क्षोपपत्तेराश्रयस्याऽपि च गुणनिष्ठकृतिफलजनकतानि-
र्वाहार्थत्वेन दृष्टविधयैवेन्द्रियकामहोमवत्फलान्तराभावेऽपि सो-
माद्यङ्गत्वोपपत्तेर्नाऽनेकादृष्टकल्पना । सत्यामपि चाऽनेकादृष्टक-
ल्पनायां, सत्यपि गुणनिष्ठकरणता(२)निरूपकयागनिष्ठकरण-
त्वकल्पनाकृते गौरवे सोमादीनामपि भावनावच्छेदकत्वाविशेषा-
त्प्रथमसूत्रोक्तं धात्वर्थस्यैव भावनावच्छेदकत्वं नैवोपपादितमि-

१. मुखेनेति. क. पु. २. निर्वाहकेति. ख. पु.

तथा हि—न तावद्गुणविधित्वनिराकरणार्थानां मत्वर्थलक्षणादिहेतूनामेतदधिकरणात्पूर्वमसम्भवः। एतदधिकरणपूर्वपक्षिणोऽपि यागवता सोमेनेत्येवं मत्वर्थलक्षणाया, विशिष्टविधिगौरवादेश्च सोमादिवाक्ये अवश्याङ्गीकार्यत्वेन तद्भिया उद्भिदादिवाक्ये उद्भित्पदार्थस्याऽपि यागरूपत्वाङ्गीकारौचित्यात्। अतश्चोद्भित्पदार्थस्यैव फलभावनाकरणत्वम्, यजिपदं (१)त्वर्थविशेषग्राहकमित्येवंविधः परं पूर्वपक्षोऽस्तु। न त्वेतावता नामत्वसिद्धिः, मत्वर्थलक्षणादिदोषस्य सिद्धान्तवत्पूर्वपक्षेऽप्यविशेषात्। ये तु धातुपरार्थ्यवाक्यभेदतत्प्रख्यतद्व्यपदेशादिहेतवः ते न धात्वर्थकरणत्वापेक्षा इति तन्निरूपणोत्तरमिव ततः पूर्वमप्युद्भावयितुं शक्या एव।

यदपि धात्वर्थस्य करणत्वासिद्धौ तृतीयान्तनामपदानां धातुसामानाधिकरण्याभावान्न तन्निमित्तनामधेयत्वोपपत्तिरित्युक्तं, तदुक्तहेतुभिः गुणविधित्वासम्भवे सिद्धे 'अग्निहोत्रं जुहोती' तिवत्समभिव्याहारमात्रेणैव नामत्वेऽवगते सामानाधिकरण्यार्थं तात्पर्यग्राहकस्य यजेः करणत्वलक्षकत्वाङ्गीकारादुपेक्षणीयम्।

तस्मात्पूर्वोक्तमेव प्रयोजनं ज्यायो न तु सूत्रकृतऽसूत्र्यहृदयतापादिका नामत्वसिद्धिरपीति सिद्धम्॥

सूत्रं तु—प्रयोगस्य प्रयुज्यमानाया भावनायाः, समानपदोपात्तेन धात्वर्थेनैव पूर्वं, आश्रितत्वात् फलान्वयोऽप्यौत्तरकालिकः तस्यैव स्यादित्येवं व्याख्येयम्॥

ननु सर्वमिदं धात्वर्थातिरिक्तभावनासद्भावे समञ्जसम्। न तु तस्यामेव प्रमाणं पश्यामः। तथा हि—पच्यादिधातवस्तावद्वि-

१. त्वर्थविशेषतात्पर्यग्राहकमिति क. पु.

क्लृत्यादिरूपे फले तज्जनकव्यापारे च शक्ताः, न तु फलमात्रे तज्जनकव्यापारमात्रे वेत्याविवादम् । अन्यथा ग्रामो गमनवानित्यादिप्रतीत्यापत्तेः । फलानुकूलव्यापारारम्भेऽपि फलानुत्पाददशायां पाको भवतीति प्रयोगानापत्तेश्च ।(१) व्यापारापगमेऽपि फलसत्तादशायां पाको विद्यत इत्यस्याऽप्यापत्तेश्च । न च घञन्तधातोः फलानुकूले व्यपारे शक्तिः, अन्यस्य फलमात्र इति कल्पनान्नोक्तदोषापत्तिरिति वाच्यम्, अनेकशक्तिकल्पनापत्तेः । न च तर्हि घञ एव व्यापारे शक्तिः, धातोस्तु फल एवेति वाच्यम् । घञो भावप्रत्ययत्वेन धात्वर्थातिरिक्तार्थवाचित्वानुपपत्तेः । पचयर्थो विद्यते इत्यादिप्रयोगस्यैवंकल्पनायामपि निवारयितुमशक्यत्वाच्च । अतो न तावत्फलमात्रं धात्वर्थ इति मण्डनमतं युक्तम् ।

नाऽपि व्यापारमात्रे, त्यजिगम्योः पर्यायत्वापत्तेः । अतो विक्लृत्त्यादिफले तज्जनकव्यापारे च तत्तद्धातूनां शक्तिः । साऽपि च न फलविशिष्टव्यापारे एका । तथात्वे फलस्य पदार्थैकदेशत्वात्पदार्थान्तरेणाऽन्वयानुपपत्तेः । अपि तु प्रत्येकमेव । तयोस्तु साध्यसाधनभावस्संसर्गमर्यादालभ्य इति न तत्राऽप्यतिरिक्ता शक्तिः। शक्ततावच्छेदकञ्च तत्तद्धातुत्वम् । शक्यतावच्छेदकमपि तत्तत्फलत्वं, तत्तद्व्यापारत्वं च । यथा पचतीत्यत्र विक्लृत्तिः फलं तदनुकूलव्यापारश्चोभयं पच्यर्थः । व्यापारश्चाऽऽत्मनिष्ठः । प्रयत्नोऽधिश्रयणफूत्कारादिकञ्च शरीरगतम् । सर्वस्य विक्लृत्त्यनुकूलत्वेन व्यापारत्वाविशेषात् । शक्तिश्च फूत्कारत्वाधस्सन्तापनत्वयत्नत्वादिना प्रत्येकमेव । न तु सर्वानुगता । अवच्छेदकमन्तरेण तस्य निर्वक्तुमशक्तेः ।

न चैवं सर्वकारकव्यापाराणां तत्त्वेन पच्यर्थत्वे नानार्थ-

१. व्यापारविगमेऽपीति क. ख. पु.

कर्त्तृत्वापत्तेः, तदाश्रयत्वेन च सर्वकारकाणां कर्तृत्वापत्तेस्तृतीयाद्यनापत्तिश्चेति वाच्यम्। सत्यपि नानार्थत्वे तदादाविव बुद्धिस्थत्वस्य वक्तृविवक्षाया एव नियामकत्वात्। अतश्च यत्कारकव्यापारो यदा पच्यर्थत्वेन विवक्षितस्तदा तदाश्रयस्य कर्तृत्वं विवक्षितम्। अत एव काष्ठं पचति, स्थाली पचतीत्यादिप्रयोगोऽपि सङ्गच्छते। यदा तु तद्व्यापारो न विवक्षितः, तदा तदाश्रयस्य काष्ठादेर्धातूपात्तव्यापारजनकत्वेन करणत्वस्य विवक्षितत्वात् काष्ठैः पचतीत्यादिप्रयोगोऽपि नाऽसङ्गतः। अतस्सिद्धं पच्यादिधातूनां फलतद्व्यापारवाचित्वम्।

किञ्च यत्राऽप्यस्ति, भवति, विक्लिद्यतीत्यादौ फलमेव स्पष्टं प्रतीयते न तु तज्जनको व्यापारः, तत्राऽपि व्यापारवाचित्वं धातोरव्याहतमित्युक्तं, 'अस्त्यादावपि कर्त्रंशे भाव्योऽस्त्येव हि भावने' त्येवंवदद्भिर्वैयाकरणैः, वार्तिककृता च, तदा कश्चक्रस्सर्वजनानुभवसाक्षिकतया पच्यादौ प्रतीयमानस्य व्यापारसमूहस्य वाच्यत्वकल्पनामपह्नोतुम्? अतश्च सर्वस्याऽपि फलानुकूलस्य यत्नादेर्धातुनैवाक्तत्वादाख्यातार्थत्वासम्भवेन प्रत्ययवाच्याया धात्वर्थातिरिक्तभावनाया असम्भवः।

न चैवं तिङर्थाभावः। फलव्यापाराश्रयस्यैव कर्मकर्त्रादिरूपस्य तिङर्थत्वात्। तत्राऽपि फलव्यापारयोर्धातुलभ्यत्वादाश्रयत्वमेव लाघवाच्छक्यतावच्छेदकम्। एवमेकत्वादिसङ्ख्याऽपि (१) तिङाद्यर्थः। वर्तमानादिकालश्च लडाद्यर्थः। प्रवर्तना च लिङाद्यर्थः। तत्र फलं व्यापारं प्रति विशेषणम्। कर्म च फलं प्रति। कर्ता व्यापारं प्रति। सङ्ख्या कर्तृकर्मविशेषणम्। कालादिकं तु व्यापार एव, तथैवाऽनुभवात्। अतश्च सर्वत्र व्यापारविशे-

---

१. तिबाद्यर्थ इति. ख. पु.

व्यक एव बोधः ।

न चैवं "प्रकृतिप्रत्ययौ प्रत्ययार्थे सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येने" ति स्मृत्या प्रत्ययार्थस्य(१)प्राधान्यावगतेः कथं प्रकृत्यर्थस्य व्यापारस्य विशेष्यतेति वाच्यम् ? (२) "भावप्रधानमाख्यातमि"ति निरुक्तस्मृत्या भावशब्दवाच्यव्यापारस्य प्राधान्यावगतेः, तस्य च "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयत" इति वैयाकरणस्मृत्या धातुवाच्यत्वावगतेः, विशेषस्मृत्यनुरोधेन सामान्यरूपायाः प्रत्ययार्थप्राधान्यस्मृतेस्सुबादिविषयत्वेन व्याख्यानात् ।

वस्तुतस्तु नेयं प्रत्ययार्थप्राधान्यस्मृतिः प्रत्ययार्थत्वावच्छेदेन प्राधान्यनियामिका, लिङ्गसङ्ख्यादेः प्रत्ययार्थत्वेऽपि प्राधान्यानङ्गीकारात् । नाऽपि प्रधानस्य सतः प्रत्ययार्थत्वनियमपरा, (३)"सत्त्वप्रधानानि नामानी" ति स्मृत्या लिङ्गसङ्ख्यादीन्प्रति प्रधानस्याऽपि प्रातिपदिकार्थस्य प्रत्ययार्थत्वाभावात् । किन्तु यत्रैव प्रमाणान्तरेण सुबर्थस्य करणत्वादेः प्रातिपदिकार्थं प्रति प्राधान्यं प्रसिद्धं, तदनुवादमात्रमियं स्मृतिरिति नाऽनया व्यापारस्य धात्वर्थत्वेऽपि विशेष्यताप्रतिबन्धः । एवं च पचतीति कर्त्राख्यातस्थले एकाश्रयको विक्लृत्यनुकूलो वर्तमानो व्यापार इति बोधः । पच्यत इति कर्माख्यातस्थले च एकाश्रयिका या विक्लृत्तिस्तदनुकूला भावनेति । पचति देवदत्तः, पच्यते तण्डुल

१. विशेष्यत्वावगतेरिति. ख. पु.

२. भावो भावना । प्रधानं प्राधान्येन मुख्यविशेष्यतया प्रतिपाद्यं यस्य तादृशमाख्यातमिति यास्कवचनस्याऽर्थः॥(निरु.अ.१.खं.१.सू.९.)

३. सत्त्वं द्रव्यं प्रधानं विशेष्यतया प्रतिपाद्यं येषां तानि सत्त्वप्रधानानि ॥ ( निरु. अ. १. खं. १. सू. ९. )

३. मी० को०

इत्यादौ देवदत्ततण्डुलयोः प्रथमान्तयोर्यथाक्रममाख्यातोपात्ताभ्यां कर्तृकर्मभ्यामभेदान्वयः । इतरकारकाणां तु यथायोगं साक्षात्परम्परासम्बन्धेन व्यापाररूपे धात्वर्थ एवाऽन्वय इति ध्येयम् ।

चैत्रेण स्थीयत इत्यत्र भावाख्याते तु कर्तृकर्मणोरप्रतीतेः सङ्ख्याऽनान्वितैव, धात्वर्थान्विता वा । न चैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः, अनुशासनबलेनैकवचनस्यैव साधुत्वात् । यत्तु उष्ट्रासिका आस्यन्त इति भावेऽपि बहुवचनं, तद्भाष्यकारवचनादेव साधुत्वमवगन्तव्यम् । अतश्च क्वचिदप्याख्यातस्य भावनावाचित्वाभावात्कथं तस्यां समानपदश्रुत्या करणत्वावगतिरिति चेत्—न; धातोः फले तदनुकूलव्यापारे च शक्तिकल्पनायामपि धात्वर्थातिरिक्ताया आख्यातवाच्याया भावनाया अनपह्नवात् ।

तथा हि—अनुकूलव्यापारो धात्वर्थ इति वदतोऽनुकूलत्वं किं जनकत्वमात्रमभिप्रेतम्? प्रयोजकत्वसाधारणं वा? नाऽऽद्यः, विक्लित्तिरूपफलजनकीभूतशरीरगतक्रियाविशेषजनकस्याऽऽत्मगतस्य प्रयत्नादेः(१)उपक्षीणस्य फलाजनकत्वेनाऽसङ्ग्रहापत्तेः । न च तस्य पचतीत्यतोऽननुभवादेव तदसङ्ग्रहोऽप्यदोषः, पचति पाके यतत इत्येवंविधविवरणादेवाऽनुभवस्याऽपह्नोतुमशक्यत्वात् ।

न द्वितीयः, कृष्यादीनामप्यत्यन्तव्यवहितानां विक्लित्तिप्रयोजकत्वेन सङ्ग्रहापत्तेः । न च फलकारणतत्कारणीभूतव्यापारयोरेव ग्रहणमित्यत्राऽपि किञ्चिन्नियामकमस्ति, उभयप्रवेशस्य गौरवग्रस्तत्वात् ।

न च फलानुकूलत्वस्य शक्यतावच्छेदकत्वानङ्गीकरणात्

---

१. उपक्षीणत्वेन फलाजनकस्येति क. ख. पु.

यत्नत्वाग्निसन्तापनत्वादीनां तत्त्वेन शक्यतावच्छेदकत्वाङ्गीकाराद्यावत्सु व्यापारेषु पचेः प्रयोगप्रतीतिस्तावतामेव वाच्यत्वकल्पनान्नाऽतिप्रसङ्ग इति वाच्यम्। एवं तर्हि पचति पाके यतते, पाकं करोति, पाकं भावयतीत्यादिविवरणाद्यत्नादीनां पाकात्पृथक्करणेन यत्नादीनां पचौ सङ्ग्रहानुपपत्तेः।

न च घञादिसमभिव्याहृतपच्यादेः फलमात्रबोधकत्वकल्पनादेव व्यापारस्य पृथग्विवरणोपपत्तिरिति वाच्यम्। तथात्वे व्यापारबोधकसामग्रीतो व्यापारबोधप्रसक्तौ तद्बोधं प्रति घञादिसमभिव्याहारस्य प्रतिबन्धकत्वकल्पने गौरवापत्तेः। तिबादिसमभिव्याहृतधातुत्वस्यैव व्यापारशक्तावच्छेदकत्वकल्पने च कार्यकारणभावद्वयकल्पनस्य, शक्तावच्छेदकगौरवस्य चाऽऽपत्तेश्च। घञादिसमभिव्याहृतधातुतो व्यापारानुभवापलापापत्तेश्च।

न च विवक्षितस्यैव कारकव्यापारस्य पचिनोपादानाद्यत्नादीनां विवक्षाविरहादेव पृथक्करणोपपत्तिरिति वाच्यम्। देवदत्तः पचति, देवदत्तःपाके यतत इत्यत्र देवदत्तनिष्ठयत्नादेर्विवक्षावश्यम्भावात्। अन्यथा भवन्मते धातूपात्तव्यापाराश्रयत्वाभावाद्देवदत्तस्य प्रथमान्तत्वानुपपत्तेः। न च देवदत्तनिष्ठव्यापारान्तरविवक्षया तदुपपत्तिः, तथा सति पचतीत्यत्र भवन्मते यत्नबोधकशब्दाभावेन विवरणवेलायां यत्नानुवादानुपपत्तेः।

अतोऽवश्यं पचतीत्यत्र भासमानोऽपि यत्नादिर्न पच्यर्थ इत्यभ्युपगन्तव्यम्। कस्तर्हि पच्यर्थ इति चेत्? फलावच्छिन्नो व्यापार विशेष एव, यो वस्तुतः फलजनकः। फले तज्जनकव्यापारविशेषे च त्वदुक्तरीत्यैव वा अतिरिक्ता शक्तिः। तयोस्तु जन्यजनकभावसंसर्गबललभ्यः। अस्मिंश्च पक्षद्वये द्वितीयार्थः फलाश्रयत्वं, न तु फलमपि। तस्य धातुनैव लाभात्।

अथवा व्यापारविशेष एव धातोश्शक्तिः, न तु फलेऽपि, गौरवात्। द्वितीयायास्तु फलमर्थः, न त्वाश्रयत्वमपि, तस्य प्रकृतिप्रत्ययसमभिव्याहारादेव बोधोपपत्तेः। नन्वेवं त्यजिगम्योः पर्यायत्वापत्तिः, संयोगानुकूलं हि कर्म गमेरर्थः, विभागानुकूलं त्यजेः। तद्यदि कर्ममात्रं धात्वर्थः, फलसामान्यं च द्वितीयार्थस्तदा त्यजिगम्योः(१) पर्यायत्वापत्तिः। तथा च ग्रामं गच्छतीति वक्तव्ये ग्रामं त्यजतीति प्रयोगापत्तिरिति चेत्—गमिधातुसमभिव्याहृतद्वितीयायास्संयोगरूपफलविशेषबोधकत्वं, त्यजिसमभिव्याहृतायाश्च विभागबोधकत्वमिति व्युत्पत्तिकल्पनेनोक्तातिप्रसङ्गनिरासात्।

वस्तुतस्तु विजातीयफलानुकूलतावद्व्यापारविशेषनिष्ठा फलानुकूलान्तिमव्यापारनिष्ठा वा (२)यागत्वादिजातिरखण्डोपाधिरेव वा तत्तत्फलजनकतावच्छेदकतया सिद्धा तत्तद्धातुशक्यतावच्छेदिका सती तत्तद्धात्वर्थः। एवं कर्मत्वकर्तृत्वादिकमपि क्रियाजन्यफलशालित्वादिसमानियतं जातिरूपमखण्डोपाधिरूपं वा सामान्यमङ्गीकृत्य तस्यैव(३) द्वितीयार्थताऽवगन्तव्या। अत एव व्यासज्यवृत्तिकर्तृत्वं देवतात्वं चेति सिद्धान्तोऽपि सङ्गच्छते। अन्यथा आश्रयभेदेन प्रतिव्यक्तिभेदस्याऽऽवश्यकत्वात्कर्तृत्वैक्योपपादनानुपपत्तेः। तस्य च ससम्बन्धिकत्वाङ्गीकाराान्निरूपकापेक्षायां करणादिना निरूपकेणाऽन्वयोऽपि नाऽनुपपन्नः। अस्मिंश्च पक्षे फलानुकूलव्यापारार्थकेषु(४) पच्यादिषु प्रयोज्यव्यापाररूपस्य फलस्य नाऽवश्यं शब्देनैव भानापेक्षा। पा-

---

१. पर्यायतापत्तिरिति क. ख. पु. २ पाकत्वयागत्वादिरिति ख. पु.
३. द्वितीयाद्यर्थताऽधिगन्तव्येति. क. पु.
४. पच्यादिधातुष्विति. क. पु.

कत्वादिरूपनियतस्य विक्लृत्यनुकूलत्वादिधर्मस्याऽऽक्षेपेणैव भानोपपत्तेः।

एवं प्रयोज्यव्यापाररूपफलवाचिष्वपि धातुषु भवति विक्लिद्यतीत्यादिषु वाच्येन(१)विक्लृत्तित्वादिसामान्येन स्वसमनियतस्य प्रयोजकव्यापारजन्यत्वस्याऽऽक्षेपेणैव बोधोपपत्तेर्न तदंशे(२)शब्दव्यापारकल्पना युक्ता। अत एवोभयत्र विवरणेन(३) नियमेन तेषामुल्लेखः। न हि पचतीत्यस्य विक्लिद्यतीत्यस्य वा कृत्या विवरणं क्वचिन्नियतं दृश्यते। तस्मात्प्रयोज्यप्रयोजकव्यापारयोरन्यतरवाचिषु धातुष्वितरप्रतीतिराक्षेपेणैवेति न तस्मिन्नपि शब्दव्यापारकल्पनावसरः। अत एवोक्तं वार्तिककृता(४) 'कदाचिदभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्यव्यापारो वा स्वयमेवाऽऽक्षिप्तप्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते-घटं करोत्योदनं पचतीति। कदाचिदाक्षिप्तप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं-घटो भवति विक्लिद्यन्ति तण्डुला' इति। तत्सिद्धं फलानुकूलयावद्व्यापारविशेषवर्ति अन्तिमव्यापारवर्ति वा पाकत्वयागत्वादिजातिरखण्डोपाधिर्वा तत्तद्धातुशक्यतावच्छेदकम्। शक्ततावच्छेदकं च तत्तद्धातुत्वमिति।

अतश्च फलानुकूलव्यापारसमूहस्य पच्यर्थत्वेऽपि तदनुकूलस्य यत्नादेर्धात्वर्थात्पृथक्(५)विक्रियमाणस्य धात्वर्थत्वायोगात्, विवरणवेलायाश्च भासमानस्य भानकारणजिज्ञासायां धातोरन्यत्र व्यापृतत्वात्, पारिशेष्यात्तिबादेरेव तद्बोधकत्वमिति निश्चीयते। तत्र च पचति पाकं भावयतीत्यनुकूलव्यापारवा-

---

१. भवनविक्लृत्तित्वेति ख. पु. २. शब्दस्य व्यापारेति ख. पु.
३. विक्लृत्यनुकूलत्वादिना नियमेनेति. ख. पु.
४. तं. वा. पृ. ३४२ पं. २४. ५. क्रियमाणस्येति ग. पु.

चिणिजन्तभूधातुना विवरणात्सङ्ग्राहकलाघवाच्चाऽनुकूलव्यापार एव तिङर्थो न तु यत्नमात्रम्, रथो गच्छतीत्यादौ रथे यत्नासम्भवेनाऽव्यापकत्वात् । अतस्सर्वसाधारण्येनाऽनुकूलव्यापार एव तिङर्थः । न च पाकं करोतीति यत्नार्थकेन कृञा विवरणात्तिङोऽपि यत्नार्थकत्वम्, करोतेर्भावयतिपर्यायत्वेन यत्नार्थकत्वासिद्धेः । यथैव हि घटो भवतीत्यादौ भवनकर्तृत्वं प्रतिपन्नस्य घटस्य तमपरो भावयतीत्यादौ भावयतिकर्मत्वं, एवं तमपरः करोतीत्यत्र करोतिकर्मत्वमपि । अतश्च भवत्यर्थ(१)कर्तृकर्मकत्वाविशेषात्करोतिर्भावयतिपर्यायो न यत्नार्थकः । अत एव रथो गच्छतीत्यत्राऽपि करोतिना विवरणमविशिष्टम् ।

किञ्च यत्नार्थकत्वे करोतेर्यततेरिवाऽकर्मकतापत्तिः । अतश्च सकर्मकत्वाकर्मकत्वरूपधर्मभेदान्न करोतियतत्योः पर्यायत्वं, अपि तु भावयतिपर्यायत्वमेवेति तद्विवरणमप्यनुकूलव्यापारवाचित्व एव तिङस्साधकम् ।

यत्तु पचति पाके यतत इत्येवं यत्नेन विवरणं, तल्लाक्षणिकम् । सङ्ग्राहकलाघवानुरोधेनाऽनुकूलव्यापारे शक्तौ गृहीतायां यत्नत्वेन तद्बोधस्य लक्षणयाऽङ्गीकारात् । वरं च सामान्यवाचकस्य पदस्य लक्षणयाऽपि क्वचिद्विशेषपरत्वम्, न तु यत्नादिविशेषवाचकस्य रथादिनिष्ठविशेषलक्षकत्वम्, जहत्स्वार्थलक्षणापत्तेः । अतो विक्लित्तिरूपफलोद्देश्यकः पाकानुकूलो व्यापारसमूह एव तिङर्थः । तत्र च सर्वानुगतस्याऽन्योत्पादकव्यापारत्वस्यैव शक्यतावच्छेदकत्वात्(२) तेन रूपेणाऽऽख्यातात्द्बोधेऽपि तत्तद्विशेषरूपेण तत्तदितिकर्तव्यताविधिभ्यो बोधान्न

१. कर्तुः कर्मत्वाविशेषादिति. ख. पु. २. तत्वेन रूपेणेति क. ख. पु.

तेषामपि वैयर्थ्यमिति पार्थसारथिमतानुयायिनः ।

वस्तुतस्तु(१) तत्तज्जन्यभेदेन तत्तदुत्पादकभेदेन च(२) व्यापारत्वभेदादेकशक्यतावच्छेदकाभावेन सर्वानुगतैकशक्तिकल्पनानुपपत्तेस्तत्तद्विशेषविषयकतत्तच्छक्तिकल्पने च तत्तदितिकर्तव्यताविधीनां वैयर्थ्यापत्तेस्तेषां तात्पर्यग्राहकताङ्गीकारे चाऽनेकशक्तिकल्पनस्य तावदवश्यम्भावाल्लाघवादेकत्रैव शक्तिरन्येषां लक्षणादिना, विध्यन्तरेण वा बोध इत्यङ्गीक्रियते । न च क शक्तिः क लक्षणेत्यत्र नियामकाभावः । पचति पाके यतते, पाकं करोतीत्यादिविवरणस्यैव यत्नशक्तिग्राहकत्वात् । न च सङ्ग्राहकलाघवानुरोधेनाऽनेकशक्तिकल्पना युक्ता, गङ्गापदस्याऽपि तीरे तद्वापत्तेः । यत्राऽपि गुरुभूतैकशक्यतावच्छेदकानुरोधेनैकशक्तिकल्पनं, तत्राऽपि लघुभूतैकशक्यतावच्छेदकसम्भवे सङ्ग्राहकलाघवार्थं गुरुभूतावच्छेदकाङ्गीकरणमन्याय्यमेव । सङ्ग्राह्याणामवच्छेदकप्रतीत्युत्तरप्रतीतिकत्वेन तन्निष्ठगौरवस्य फलमुखत्वेनाऽप्रामाणिकत्वात् । अतश्च यत्नत्वस्य जातिरूपत्वेन लघुत्वाच्छक्यतावच्छेदकत्वम् । न च यत्नत्वेन रूपेण भानाभावः, पचति पाके यतते, पाकं करोतीति विवरणस्याऽनुभविकत्वात् ।

यत्तु कृञो न यत्नार्थकत्वं, भावयतिपर्यायत्वादित्युक्तं तन्न, आख्यातवत्करोतेरपि यत्नार्थकत्वस्यैव लाघवेनाऽङ्गीकारात् । न च शक्यतावच्छेदकस्य पदादप्रतीयमानस्य कल्पयितुमशक्यत्वात्कथं करोतेर्यत्नार्थकत्वम् ? प्रयत्नाभावे वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीयवायुसंयोगरूपव्यापारवत्त्वपि नाऽयं स्पन्दं करोतीति प्रयोगदर्शनाद्यत्नार्थकत्वप्रतीतेः । व्यापारजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यामेव घटाङ्कुरयोः कृता-

१ तत्तदन्यभेदेनेति. क. ख. पु. २. व्यापारत्वानामिति. ख. पु.

कृतव्यवहारदर्शनाच । न च बीजेनाऽङ्कुरः कृतः, रथो गमनं करोति, स्थाली पाकं करोतीत्यादावचेतनेऽपि प्रयोगादनुकूलव्यापारवाचित्वम् । उभयविधव्यवहारसत्वे शक्यतावच्छेदकलाघवस्यैव नियामकत्वात् । अचेतने कृत्याश्रयत्वव्यवहारस्तु अनुकूलव्यापारे लाक्षणिकः । अत एव चैत्रत्वाद्यप्रतीतावपि शोभनः पाकं करोतीत्यादौ शोभनाश्रितः पाकानुकूलो यत्न इत्येव प्रतीयत इति कैश्चिदुक्तम् । अतो यत्न एव कृञर्थः ।

यत्तु कृञो यत्नार्थकत्वे यततेरिवाऽकर्मकतापत्तिः । फलव्यधिकरणव्यापारवाचकत्वं हि धातोस्सकर्मकत्वम् । यथा पच्यादौ फलस्यौदननिष्ठत्वात्, व्यापारस्य च देवदत्तादिनिष्ठत्वात् । अकर्मकं तु शयनासनादौ क्रियाफलयोरेकवृत्तित्वान्न सकर्मकत्वम् । अतश्च यत्नजन्यफलस्य कर्मण्यभावाद्यथैव यततिरकर्मकः, तथैव कृञोऽपि (१)स्यात् । अथ ज्ञानजन्यस्य ज्ञातताख्यफलस्येव कृतिजन्यस्याऽप्युत्पत्तिरूपस्य(२)तस्य कर्मणि स्वीकाराज्ज्ञाधातुवदेव कृञोऽपि सकर्मकत्वम्, ततो यततेरपि तदापत्तिः । ततश्च देवदत्तेन क्रियते घट इतिवद्यततिधातोरपि कर्मणि लकारापत्तिः । यततिवद्वा कृञोऽपि तदनापत्तिः । घटं करोतीत्यादौ घटे द्वितीयानापत्तिश्च । कृञोऽप्यकर्मकत्वाङ्गीकारे(३) "कर्मवत्कर्मणा तुल्यक्रियः" इत्येतत्सूत्रविहितयगाद्यनापत्तेः क्रियते घटः स्वयमेवेत्यनापत्तिश्च । तद्वदेव वा यततेरपि तदापत्तिश्चेत्युक्तम्, तन्न । वस्तुतो यः फलव्यधिकरणो व्यापारस्तद्वाचित्वं धातोस्सकर्मकत्वमभिप्रेतम् ? किं वा फलव्यधिकरणत्वेन व्यापारवाचकताऽभिप्रेता ? नाऽऽद्यः, पच्यादेरपि

१. तत्स्यादिति क. ख. पु. २. तस्येति नाऽस्ति ख. पु.
३ पा. सू. ३. १. ८७.

फलाविवक्षायामकर्मकत्वाङ्गीकारात्तत्र च फलव्यधिकरणत्वस्य वस्तुतस्सत्त्वादतिव्याप्तेः । न च वैवक्षिकाकर्मकत्वसत्त्वेऽपि स्वाभाविकाकर्मकत्वानङ्गीकारात्स्वाभाविकसकर्मकत्वलक्षणाव्याहतिः । एवमपि (१)यततत्यादौ स्वाभाविकाकर्मके उत्पत्तिरूपस्य फलस्य यत्नव्यधिकरणत्वेनाऽतिव्याप्तेरनिवारणात् ।

न च धात्वर्थभूतफलसामानाधिकरण्यवैयधिकरण्ये एव तत्प्रयोजके । उत्पत्तिश्च न यततेरर्थः, अपि तु फलसमानाधिकरणक्रियैवेति वाच्यम् । तथात्वे करोतेरप्युत्पत्तिवाचित्वेन फलभेदोपपत्त्या उक्तदोषाप्रसङ्गेन यत्नवाचित्वे बाधकाभावात् । आसनशयनादीनामपि कालादिकर्मयोगेन स्वाभाविकसकर्मकत्वस्य चैत्रेणाऽऽस्यते मास इत्यादिप्रयोगसिध्यर्थमङ्गीकृतत्वात्तत्र च फलव्यापारयोरेकनिष्ठत्वादुक्तलक्षणाव्याप्तेश्च ।

अत एव न द्वितीयोऽपि । फलव्यधिकरणत्वस्य वस्तुस्वभावबललभ्यत्वेन वाच्यताङ्गीकारे गौरवाच्च । अतो नेयं सकर्मकाकर्मकत्वयोर्निरुक्तिः । किन्तु अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वं सकर्मकत्वम् । अस्ति चेदं घटं करोतीत्यादौ कृञो नियमेन विवक्षायां सत्यां कर्मपदसाकाङ्क्षत्वात् । न तु पर्यायत्वेऽपि यततेः । आकाङ्क्षायाश्शब्दविशेषधर्मत्वेन पर्यायत्वाबाधकत्वात् । अतश्च यथैव कर्मत्वमित्येतत्पदं नाऽऽनयातिपदापेक्षं, किन्तु समानार्थकत्वेऽपि द्वितीयैव तत्साकाङ्क्षा, तथा पर्यायत्वेऽपि कृञ एव कर्माकाङ्क्षा न यततेः । अत्र च कर्माविवक्षायां पच्यादेरकर्मकत्वमविवक्षाविरहवैशिष्ट्याभावादव्याहतम् । आसनादीनां च कालादियोगविशिष्टानां कर्माकाङ्क्षत्वादाविरुद्धं सकर्मकत्वम् ।

एवं यत्रैक एव धातुरर्थान्तरे सकर्मकोऽर्थान्तरे चाऽकर्म-

---

१. यत्नादाविति. क. ख. पु.

कः तत्राऽप्येकस्यैव तत्तदर्थप्रतिपादकत्वरूपधर्मपुरस्कारेण कर्मसाकाङ्क्षत्वतदनाकाङ्क्षत्वे द्रष्टव्ये । यथा(१)ग्रन्थधातोः ग्रथनार्थकस्य ग्रथ्यमानव्यापारवाचित्वेऽकर्मकत्वं, ग्रथितृव्यापारवाचित्वे च सकर्मकता। अत एव यत्र कर्मद्वयसाकाङ्क्षत्वं तत्र द्विकर्मकत्वमपीति प्राञ्चः ।

वस्तुतस्तु द्वितीयकर्मणो मुख्यकर्मत्वाभावेऽपि कर्मकारकसम्बन्धित्वविवक्षायामपादानादिकारकान्तरत्वाद्यविवक्षायां च पारिभाषिककर्मत्वस्य व्याकरणे प्रतिपादनान्न तस्याऽऽद्यकर्मतुल्यत्वमिति द्रष्टव्यम् ।

अतश्च कृञो यत्नपर्यायत्वेऽपि सकर्मकत्वाक्षतेर्युक्तस्तन्निमित्तद्वितीयाकर्मलकारादियोगः, 'कर्मवत्कर्मणे'ति सूत्रविहितयगादियोगश्च । तत्र त्वयं विशेषः—यत्प्राप्यकर्मातिरिक्तकर्मान्तराकाङ्क्षत्व एव सः, न तु प्राप्यकर्मण्यपि । अत एव जायते घटः स्वयमेवेत्येवं न भवति, भवति च स्वयमेव क्रियते घट इति । न त्वेतावता यततेरपि कर्मकर्तरि प्रयोगः, तस्य शब्दस्वाभाव्येनैव कर्मानाकाङ्क्षत्वात् । शब्दस्वभावेन कर्माकाङ्क्षादेव धातोः कर्मत्वाविवक्षापूर्वकं तस्यैव कर्तृत्वविवक्षायां यगादिविधानात् ।

नन्वेवमपि "कर्मवत्कर्मणा तुल्यक्रिय" इति सूत्रेण कर्मनिष्ठव्यापार एव कर्तृत्वविवक्षायां यगादिविधानात् यत्नस्य च देवदत्तनिष्ठत्वेन ओदननिष्ठत्वाभावात् पच्यते ओदनस्स्वयमेवेति प्रयोगानुपपत्तिरिति चेत्—न ; तादृशस्थले कृञादेरप्युत्पत्त्यादिरूपफललक्षकत्वाङ्गीकारात् । लक्षणां विनाऽप्युपपत्तिमग्रे निरूपयिष्यामः ।

---

१. श्लोकधातोरिति. क. ख. पु.

तत्सिद्धं कृञो यत्नवाचित्वात्तेन यततिना च विवरणादा-ख्यातस्य यत्नवाचित्वम्। अत एव न्यायसुधाकारोऽप्यमुमेव पक्षं सङ्क्षेपेणाऽनुसृतवान्।

यत्तु पचति पाकं भावयतीत्यनुकूलव्यापारवाचिणिजन्तभू-धातुना विवरणं, तच्छक्यतावच्छेदके गौरवापत्तेर्लाक्षणिकार्थ-विषयं व्याख्येयम्।

एवं रथो गच्छति, चैत्रो जानाति, इच्छति, करोती-त्यादावनुकूलव्यापारे गमनाद्याश्रयत्व एव वा लक्षणेत्यपि द्रष्टव्यम्। नश्यतीत्यादौ तु प्रतियोगित्व इत्यपि। शक्यतावच्छे-दकं च करोतिसमानाधिकरण(१)तिप्त्वादिकम्। अतश्च घटो भवतीत्यादौ तदभावाद्यत्नाभानेऽपि सङ्ख्यादिभानार्थमेव तिङा-दिप्रयोग इति मूलानुयायिनः।

वस्तुतस्तु लाघवात्तिप्त्वादिकमेव शक्ततावच्छेदकम्। अ-तश्च घटो भवतीत्यादावपि भावनाश्रयत्व एव लक्षणा। न चाऽऽश्रयत्वस्य सम्बन्धविधयैव भानोपपत्तेर्लक्षणावैयर्थ्यम्, नामार्थधात्वर्थयोर्भेदान्वयस्याऽव्युत्पन्नत्वात्। अन्यथा चैत्रः पचति तण्डुलः, चैत्रः पच्यते तण्डुल इत्यादावन्वयबोधापत्तेः। क्वचिद्धात्वर्थे कारकान्वयः, क्वचिच्चाऽऽख्यातार्थ इति व्युत्प-त्तिवैचित्र्यकल्पनापत्तेश्च। आख्यातेनाऽऽश्रयत्वलक्षणायां तु तत्रैव भावनावत्कारकान्वयोपपत्तेर्न व्युत्पत्तिवैचित्र्यम्। अत्र तिप्त्वादिकमेव शक्ततावच्छेदकं, न तु स्थानिभूतलट्त्वादि। तस्य साधुत्वबोधनार्थं कल्पितत्वेन स्वतोऽविद्यमानत्वात्, प्रति-व्याकरणं तेषामननुगतत्वाच्च। यत्र तु गच्छेत्यादौ तिङो लोप-स्तत्र शबादिविकरणस्यैव तद्वाचकत्वम्। न च तिङादिलोप-

१. तिङ्त्वादिकमिति. क. ख. पु.

गी: कौ: २८.

ज्ञानं तद्बोधकम्, तज्ज्ञानाभावेऽपि तद्बोधस्याऽऽनुभाविकत्वात्। ततिसद्धमाख्यातस्य यत्नो वाच्य इति।

स च यत्नः कृञ्धात्वभिहित इवाऽऽख्याताभिहितोऽपि नित्यं कर्मसाकाङ्क्ष एव प्रतीयते। विशेषेण तु विध्यादिसमभिव्याहारे सतीप्सितकर्मकः। अत एव 'स्वास्थ्यकामश्शयीत' इत्यादौ शयनादेरकर्मकत्वेऽपि स्वास्थ्यस्य भावनाकर्मत्वोपपत्तिः। अतश्चाऽऽख्याताभिहितस्य यत्नस्य वस्तुतः फलभावनानुकूलव्यापारत्वाद्भावनापदवाच्यत्वोपपत्तिः। सा च सकलकारकान्वयित्वादसति बाधके मुख्यविशेष्यतयैव प्रतीयते।

तथा हि—न तावत्प्रथमान्तं प्रति भावनायास्सङ्ख्यावद्विशेषणत्वाभ्युपगमेन प्रथमान्तस्य मुख्यविशेष्यत्वम्। (१)तथा च सति भावनाप्रकारक(२)शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमिति नियमः फलितः। न चाऽसौ सम्भवति; काष्ठैः पचति, 'दध्नेन्द्रियकामस्य जुहुया' दित्यादौ प्रथमान्तपदाभावेन व्यभिचारात्। न चाऽध्याहारेण तत्सम्पादनम्, अध्याहारापेक्षयाऽऽनुशासनिकानिरूढलक्षणाया लघुत्वेनाऽऽख्यातेनैव कर्तृकर्मलक्षणौचित्यात्। न ह्यत्र 'दध्ना जुहोती'तिवत्स्वर्गकामपदानुषङ्गश्शङ्कितुं शक्यते, येन लक्षणातोऽपि लाघवमाशङ्क्येत, इन्द्रियकामपदस्याऽनन्वयापत्तेः। यस्त्वत्राऽऽख्यातेनाऽध्वर्युः कर्ता लक्ष्यते, नाऽसौ पूर्वं प्रथमान्तपदोपात्तः, योऽनुषज्येत। अतो लक्षणैवाऽऽख्यातेन कर्तृकर्मणोः। तत्रैवाऽभेदान्वयश्चैत्रादिपदानाम्। युक्तं चैतत्, सङ्ख्यायास्समानपदश्रुत्यैव कर्त्राद्यन्वयोपपत्तेः। इतरथा भिन्नपदोपात्तचैत्राद्यन्वये गौरवात्।

---

१. तदा हीति. क. ख. पु. २. शाब्दत्वावच्छिन्नमिति. ख. पु.

किञ्च विभावय मृगो धावतीत्यादौ (१)महाभाष्यकारा-भ्युपेतैकवाक्यतायां साधुताऽपि प्रथमान्तविशेष्यकत्वे नाऽवक-ल्पते । तथा हि—न तावदत्र मृगस्य विभावनं प्रति कर्मत्वम्, द्विती-यान्तत्वापत्तेः । न च द्वितीयान्तपदाध्याहारेण कर्माकाङ्क्षापूर्तिः, वाक्यभेदापत्तेः । अतो धावनभावनाया एव कर्मत्वं वाच्यम् । तच्च तदोपपद्यते, यदि तस्य नाऽन्यत्र प्रकारतयाऽन्वयः । अ-न्यथा सकृदुच्चारिताया उभयत्राऽन्वयानुपपत्तेः । भावनायाः प्र-थमान्तं(२)प्रति विशेष्यत्वे तु कर्मतासंसर्गेण तस्या विभावनभा-वनां प्रत्यन्वयोपपत्तिः । न च तदाऽपि तत्र द्वितीयापत्तिश-ङ्का, स्वादिविभक्तीनां प्रातिपदिकपरत्वस्य नियतत्वेनाऽऽ-ख्यातपरत्वशङ्कानुपपत्तेः ।

न च मृगात्मगतयत्नस्य नित्यानुमेयत्वेन भवन्मतेऽपि साक्षा-त्काररूपविभावनकर्मत्वानुपपत्तेः कथमेकवाक्यत्वोपपत्तिरिति वा-च्यम्? विभावनस्य साक्षात्कारघटितत्वाभावेन नित्यानुमेयकर्म-कत्वस्याऽप्युपपत्तेः । घटितत्वेऽपि वा धावनाश्रयत्वरूपाख्यातल-क्ष्यार्थस्यैव विभावनकर्मत्वोपपत्तेः । अतोऽस्मन्मते एकवाक्यत्वो-पपत्तिरिति मुख्यविशेष्यैव भावना । एतेन भावनाया मुख्यवि-शेष्यत्वे पाकभावना जायत इत्यस्मिन्नर्थे पचति भवतीति प्रयो-गापत्तिरिति दूषणमिष्टापत्त्यैव निरस्तम् । (३)अत एवोक्तं वाक्य-

---

१. महाभाष्यकाराभ्युपेतायामिति. क. पु. २. प्रत्ययीति. क. ख. पु. ।

३. येऽपि अपाक्षीत्, भवति, पक्ष्यति, भवतीत्यादयः प्रयोगास्तेषु भूधातुनाऽयुक्तत्वाभावस्योक्तत्वात्तस्य च लटा वर्तमानत्वोपपत्तेर्भूत-भाविपाकानुकूलकृतिवृत्तिवर्तमानायुक्तत्वाभावाश्रयत्वमिति शाब्द-बोधाङ्गीकारान्नाऽयुक्ताः । अस्ति च भूधातोरयुक्तत्वाभावेऽपि प्रयो-गः, पण्डितो भवतीत्यादौ । अत एव पचन्ति भवन्तीत्यादयो न प्रयो-गाः पचति भवतीत्यादयश्च प्रयोगा इत्यधिकमुपलभ्यते 'क' पुस्तके ।

पदीये "बहुष्वपि तिङन्तेषु सकाङ्क्षेष्वेकवाक्यता" (१) इति ।

किञ्च भवन्मते सर्वकारकाणां धात्वर्थे, तस्य कालादेश्च भावनायां, सङ्ख्याभावनयोश्च प्रथमान्तपदोपस्थाप्येऽन्वयस्वीकाराद्व्युत्पत्तिवैचित्र्यकल्पनापत्तिः । तद्वरं वक्ष्यमाणरीत्या सर्वेषां भावनान्वयाङ्गीकारादेकैव व्युत्पत्तिर्युक्ता कल्पयितुम् । एतेन प्रथमान्तपदोपस्थाप्यभावनान्वयानङ्गीकारेऽप्याख्यातलक्ष्ये कर्तरि कर्मणि वा तदन्वय इति न भावनाया मुख्यविशेष्यत्वविप्लपास्तम्, व्युत्पत्तिवैचित्र्यतादवस्थ्यात् ।

किञ्चाऽस्मिन्पक्षे "भावप्रधानमाख्यात" मिति स्मृतिविरोधः । तथा हि—न तावदियं स्मृतिः भावशब्दवाच्यभावनाप्राधान्यं प्रकृत्यर्थापेक्षया विधत्ते, तस्य 'प्रकृतिप्रत्ययौ' इति स्मृत्यैव सिद्धेः । किन्तु यदाख्यातं शक्तिलक्षणासाधारण्येन भावनासङ्ख्याकालकर्त्रादिपरं तत्र भावनायाः प्राधान्यं, न तु कर्त्रादेरित्येवं परम् । अत एव "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति व्याकरणस्मृत्या धात्वर्थस्य भावपरिभाषणेऽपि नाऽस्यां निरुक्तस्मृतौ भावशब्देन तद्ग्रहणम् । तथा सति धातोरेव भावप्रधानत्वापत्त्या आख्यातशब्दस्य(२)भावप्रधानत्वानुपपत्तेः । किन्तु णिजन्तस्य भुवोऽजन्तत्वव्युत्पत्त्या आख्यातार्थभावनायाः । वैयाकरणपरिभाषणं तु तच्छास्त्रविहितकृत्यविषयं, न निरुक्तविषयमपि, तस्य पारिभाषिकत्वेनाऽन्यत्राऽप्रवृत्तेः । तदपि च (३)'नपुंसके भावे क्त' इत्यादौ शुद्धधात्वर्थग्रहणमेव, न तु त्वतलाद्यर्थभावग्रहणमित्येतदर्थम् । नाऽपि भावपदशक्यनियमार्थं, प्रवृत्तिनिमित्तादेस्तदनुपपत्तेः ।

---

१. वाक्य. कां. २. श्लो. ४५० २. भावाभिधानेति क. ख पु.
३. पा. सू. ३. ३. ११४.

न च(१) "सर्वमाख्यातजं नामे"ति निरुक्तकारेणाऽभिधानादाख्यातशब्देन धातुरेवोच्यत इति वाच्यम्। कृदन्ते धातावाख्यातपदप्रयोगाभावेनाऽऽख्यात(२)पदस्य धातुवाचित्वानुपपत्तेः। निरुक्ते नामनिर्वचने त्वाऽऽख्यातशब्देन लक्षणयाऽऽख्यातान्तस्य धातोर्ग्रहणं नाऽनुपपन्नम्। अत एव(३) 'तान्याख्यातानी' ति जैमिनिसूत्रेऽपि चाऽऽख्यातशब्देन(४)लक्षणयाऽऽख्यातान्तधातोर्ग्रहणम्। एतावांस्तु विशेषः–यज्जैमिनिसूत्रे आख्यातान्तकत्वं विशेषणं, तेन तिङन्तस्यैव धातोर्ग्रहणम्। निरुक्ते तूपलक्षणम्, तेन तत्राऽतिङन्तस्य धातुस्वरूपस्यैव ! न त्वेतावता आख्यातशब्दस्य धातुवाचित्वं, कृदन्ते धातौ पाक इत्यादौ तत्पदप्रयोगाभावेन तद्वाचित्वानुपपत्तेः। अपि तु तिङ्वाचित्वमेव। अतोऽऽख्यातप्रतिपाद्यानेकपदार्थविषये कस्य प्राधान्यमिति जिज्ञासायां भावनाप्राधान्यमनया स्मृत्या नियम्यते।

एवं "सत्वप्रधानानि नामानी"त्यत्राऽप्यनेकार्थप्रतिपादकेषु प्रातिपदिकापरनामधेयेषु नामसु पाचको लावक इत्यादिषु विभक्त्युपात्तसङ्ख्यान्वययोगिनस्सत्वपदाभिधेयस्य कर्तुरेव प्राधान्यं, न तु पाककृतेरित्ययमर्थोऽवगम्यते। नामत्वाविशेषेऽपि च यत्र घटादिपदे घटघटत्वरूपयोरुभयोरप्यर्थयोर्विभक्त्युपात्तसङ्ख्यान्वययोगित्वरूपा सत्वता तत्रोभयोरपि शब्दतः प्राधान्यम्। अत एव आकृत्यधिकरणेऽभिहितं यत्तृतीयादौ जातेरेव सङ्ख्याकारकान्वयः, अन्यत्र तु लक्षितव्यक्तेः जातिव्यक्त्योश्च न वैशिष्ट्यावगाह्येको बोधः, किन्तु बोधद्वयं शक्तिलक्षणाजन्यमिति। अतस्तत्रोभयोस्सत्वभूतत्वादुभयोरपि प्राधान्यम्।

---

१. निरु. अ. १. खं. १३. सू. ५. २. पदलक्ष्यधातुवाचित्वेति ख. पु.
३. जै. सू. २. १. ३. ४ ४. लक्षणयैव धातोर्ग्रहणमिति क. ख. पु.

तदेवमाख्याते नामसु चाऽनेकार्थप्रतिपादकत्वेनया स्मृत्या प्राधान्यं नियम्यते। सुबादिषु त्वनेकार्थप्रतिपादकेषु प्रधानभूतक्रियान्वयित्वात्कारकादेरेव प्राधान्यं, न तु लिङ्गसङ्ख्यादेः। कारकस्यैव प्रधानभूतक्रियान्वयित्वम्। क्रियान्वयित्वविरहे कारकत्वव्याघातात्। क्रियायाः प्रधानत्वं च क्रियापदं विना कारकाणां नैराकाङ्क्ष्यादर्शनात्। अतः प्रधानभूतक्रियान्वयित्वात्सुबर्थे कारकादेरेव प्राधान्यम्। लिङ्गसङ्ख्यादेस्तु समानाभिधानश्रुत्या तदन्वयित्वम्। तच्च साक्षादयोग्यमिति पदश्रुतेर्योग्यतारूपलिङ्गाच्च पार्ष्ठिकः प्रातिपदिकार्थान्वय इति प्रातिपदिकार्थस्याऽपि लिङ्गसङ्ख्ये प्रति प्राधान्यम्। अत एव विभक्त्युपात्तसङ्ख्यान्वययोग्यत्वरूपा सत्वताऽप्यस्य पार्ष्ठिकान्वयमादायैव निर्वाह्या। सर्वं चैतत्(१) पशुत्वैकत्वाधिकरणे वक्ष्यते।

प्रातिपदिकार्थस्तु प्रधानभूते कारकरूपे प्रत्ययार्थेऽन्वेति। 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येने'ति स्मृत्या प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यावगमात्। सामान्यस्मृतिरपीयं प्रमाणान्तरानुसारात्कारकादिविषयैव, न तु सङ्ख्यादिविषयाऽपि। अन्यथा प्रातिपदिकार्थस्य सत्वसमाख्यानुपपत्तेः। कारकादिरूपस्सुबर्थस्तु प्रधानभूते प्रत्ययार्थे भावनायामन्वेति, न तु धात्वर्थे प्रत्ययार्थान्तरे वा। तेषामुपसर्जनत्वात्, प्रधानान्वयस्य चाऽभ्यर्हितत्वात्, कारकाणां धात्वर्थे, तस्य च भावनायामन्वय इति व्युत्पत्तिद्वयकल्पनापत्तेश्च। अतो लाघवात्सर्वेषां भावनायामेवान्वयो युक्तः। स च यद्यपि साक्षादयोग्यः, तथाऽपि पार्ष्ठिकान्वयलभ्यधात्वर्थद्वारक इति निश्चीयते।

एवं प्रथमान्तस्याऽपि चैत्रादिपदस्याऽभिहितकर्तृकर्मकार-

१. पू. मी. ४. १. ५.

कवाचिनी प्रथमेति मते कर्तृकर्मवाचकत्वात्कर्तृत्वादेर्युक्त एव भावनान्वयः । प्रातिपदिकार्थे प्रथमेति मते तु प्रातिपदिकार्थस्यैव कर्तृत्वकर्मत्वाधिकारित्वान्यतमसंसर्गेण भावनायामन्वयो नाऽनुपपन्नः । एवं सम्बोधनान्तस्य ऽपि द्रष्टव्यम् । एवं निमित्तादेः कारकत्वाभावेऽप्यनुष्ठापकत्वावगमाद्विधिवदेवाऽनुष्ठेयायां भावनायामेवाऽन्वयः । एवं क्त्वाप्रत्ययादीनां क्रियासम्बन्धसापेक्षाणां क्रियाऽभ्यावृत्तिविहितानां च कृत्वसुजादीनां(१)भावनायामेवाऽन्वयः, पार्ष्ठिकान्वयः परं धात्वर्थादौ। इदं च तत्र तत्रोपपादयिष्यते ।

षष्ठ्यास्तु सम्बन्धसामान्याभिधायिन्याः कारकविभक्तित्वाभावाद्भावनां विनाऽप्यन्येन सम्बन्धो न विरुध्यते । अतश्च तस्या धात्वर्थकारकादिभिरप्यन्वयो नाऽनुपपन्न इति मूलानुयायिनः ।

वस्तुतस्तु तत्राऽपि साक्षात्परम्परासाधारण्येन भावनायामेवाऽन्वयः, प्रधानान्वयस्याऽभ्यर्हितत्वात् । धात्वर्थस्य तु भावनायामेवाऽन्वयः, प्रकृत्यर्थत्वात्, कारकत्वेन(२)विवरणाच्च ।

किञ्च धात्वर्थस्याऽप्यत्र कारकत्वेनाऽन्वयाभावे तृतीयान्तानां ज्योतिष्टोमादीनामनन्वयापत्तिः । न च साधुत्वार्था अभेदलक्षणार्था वा तृतीयेति वाच्यम् । करणत्वरूपश्रौतार्थाविवक्षायां कारणाभावात् । अभेदलक्षणार्थायास्तृतीयाः(३) छन्दसि क्वाऽप्यदर्शनाच्च । (४)धान्येन धनवानित्यादावपि च न

१. नञश्च भावनायामिति. ख. पु.
२. विवरणाच्चाऽविवाद एवेति. क. ख. पु.
३. छन्दसीति नाऽस्ति. क. ख. पु.
४. धान्येन धनी भवतीति क. ख. पु.
५ मी० को०

धान्याभिलषनवानित्यर्थः। धान्यस्य धनसम्बन्धोत्पत्तिं प्रति करणत्वोपपत्तेर्दण्डेन घटो भवतीतिवल्लक्षणायां प्रमाणाभावात्। अत एव भासमानोऽपि धनधान्याभेदः पार्ष्ठिकान्वयलभ्य एवेति न तदर्थमपि लक्षणा। अतो लक्षणायाः क्वाऽप्यदर्शनातृतीयान्तनामधेयानुरोधेनाऽपि धात्वर्थस्य करणत्वमवश्यमङ्गीकर्तव्यम्। अत एव (१)चाऽन्यकरणत्वस्य पदार्थविधया भासमानत्वाद्धात्वर्थस्याऽपि करणत्वं न संसर्गबललभ्यम्, अपि तु धातुलभ्यमेव। अतश्च धात्वर्थो यागादिः करणत्वेनाऽन्वेति। तच्च कारकत्वाद्भावनायामित्यपि द्रष्टव्यम्।

एवं लडादिवाच्यः कालोऽपि (२)पार्ष्ठिकान्वयलभ्यधात्वर्थद्वारा वा साक्षात्सम्बन्धेनैव वा भावनान्वयी। एवं विधिरपि प्रवर्तनारूपः प्रधानभूतायां तस्यामेव भावनायामन्वेति(३)जनकत्वसम्बन्धेन। सङ्ख्यायास्तु प्रतीत्यनुरोधादनुशासनानुरोधाच्च भावनाक्षिप्तकर्तृत्वकर्मत्वान्यतरयोगित्वम्। भावना हि कर्तृत्वकर्मत्वे अखण्डोपाधिरूपे आक्षिपति। ते च स्वाश्रयमाक्षिपतः। कर्तृत्वकर्मत्वयोश्चाऽऽक्षेपलभ्ययोरपि शाब्दत्वसिध्यर्थं लक्षणा, न तु तदाश्रयस्याऽपि। सर्वं चैतद्विस्तरेण (४)कर्त्रधिकरणे निरूपयिष्यते।

तत्र शबादिविकरणस्थले तिङ्वाच्या सङ्ख्या कर्तृत्वान्विता। यगादिविकरणस्थले क्वचित्कर्मत्वान्विताऽपि। न तु तत्तदाश्रयान्विता, तस्याऽशाब्दत्वात्। अत एव दर्शपूर्णमासादावाश्रयभेदेऽपि कर्तृत्वैक्यादेकवचनम्। 'क्षौमे वसाना'वित्यत्र तु

---

१. नास्ति करणत्वस्येति क. पु. २. पार्ष्ठिकान्वयेन धात्वर्थेति. क.पु.
३. प्रयोज्यत्वसम्बन्धेनेति. क. पु. ४. पू. मी. ३. ४. ८.

प्रमाणान्तरानुसारादधिष्ठानलक्षणामङ्गीकृत्य सङ्ख्यान्वय आश्रय एवेति विशेषः । अतस्सङ्ख्यायाः कर्तृकर्माख्यातस्थले तावत्त-त्रैवाऽन्वय इति मूलानुयायिनः ।

वस्तुतस्तु प्रधानान्वयस्याऽभ्यर्हितत्वात्सुबभिहितसङ्ख्याया इवाऽस्या अपि पार्ष्ठिकान्वयलभ्यकर्तृत्वद्वारकः कर्मत्वद्वारको वा परम्परासम्बन्धेन भावनायामेवाऽन्वयः । भावाख्यातस्थले तु भावनायामेवाऽन्वयस्सङ्ख्यायाः । यथा चैत्रेण सुप्यते, स्थीयत इत्यादौ । अत्र हि स्वापादिकृतिस्तिङर्थः, अखण्डोपाधिरूपं क-र्तृत्वं तु तृतीयार्थः । अत एव चैत्रेण किं क्रियत इति प्रश्ने सु-प्यत इत्युत्तरं सङ्गच्छते । अतः प्रतीत्यभावान्नाऽत्र कृतिस्तिङर्थ इति परमतमपास्तम् । अतस्तत्र भावनायां साक्षात्सम्बन्धेनैव सङ्ख्यान्वयः ।

न चैवं तस्या द्वित्वादिविवक्षायां द्विवचनापत्तिः, एकव-चनस्यैव तत्र साधुत्वस्मृतेः तेनैव विवक्षितसङ्ख्यालक्षणोप-पत्तेः । न चैवं साक्षात्सम्बन्धेन विभक्त्युपात्तसङ्ख्यायोगि-त्वरूपसत्त्वतापत्तेर्भावप्राधान्यानापत्तिः, सत्त्वतास्वीकारेऽपि भा-वत्वानपायात् । अस्यां हि स्मृतौ भावस्य प्राधान्यमिति नि-यमः क्रियते, न तु सत्त्वातिरिक्तस्येति, सङ्ख्यादेरपि प्राधान्य-प्रसङ्गात् । अतो भावत्वानपायात्सङ्ख्यान्वयेऽपि न प्राधान्य-क्षतिः । अस्तु वा कर्तृकर्मान्वयवद्धात्वर्थान्वयः पार्ष्ठिकस्सङ्ख्या-याः । अतो भावाख्यातस्थले साक्षात्सम्बन्धाभावेऽपि धा-त्वर्थद्वारैव भावनान्वयोपपत्तिः ।

यत्र तु गगनेन स्थीयत इत्यादौ यत्नस्य बाधः, तत्र घटो भवतीत्यादौ प्रथमान्तपदान्वयस्यैवाऽऽश्रयत्वलक्षणायां कारणा-भावाद्धात्वर्थ एव सङ्ख्यान्वयोऽनन्विता वा सेति केचित् ।

वस्तुतस्तु 'भावप्रधानमि'ति स्मृत्या आख्यातत्वावच्छेदेन भावनाप्राधान्यस्य विहितत्वात्तदन्यथानुपपत्तिरेवाऽत्राऽऽश्रयत्व-लक्षणाबीजम् । एवं कारकान्वयेऽप्यवैरूप्यं भविष्यति । इतरथा क्वचिद्धात्वर्थे क्वचिदाख्यातार्थ इति व्युत्पत्तिद्वयकल्पनापत्तेः । अस्मन्मते तु वृत्त्याऽऽख्यातपदगम्ये सर्वत्र कारकान्वय इत्यवै-रूप्यम् । कर्तृत्वकर्मत्वयोस्तु भावनायामेवाऽन्वयः। तत्र कर्तृत्वस्य भावनायामन्वयोऽविवाद एव । कर्मत्वस्य तु कर्माख्यातस्थले यत्नवाचिना तिङा यत्नप्रयोज्यफललक्षणात्तत्राऽन्वय इति मूला-नुयायिनः । एवं कर्मकर्तृस्थलेऽपि पच्यते ओदनस्स्वयमेवेत्यादौ कर्मण एव स्वव्यापारे कर्तृत्वविवक्षणात्फललक्षणा द्रष्टव्या ।

केचित्तु कर्माख्यातस्थले फलमात्मनेपदशक्यं, न तु कृतिः, यगादिसमभिव्याहृततिङ एव तत्र शक्तिग्रहात् । अतस्तत्र भा-समाना कृतिः परं तृतीयार्थः, ओदनस्तु फल एवाऽन्वेती-त्याहुः । तन्न; लाघवेन तिप्त्वस्यैव शक्ततावच्छेदकत्वौचि-त्यात् । ओदनान्वयार्थं फलस्य लक्षणयाऽपि बोधोपपत्तेश्च । तृतीयाया अपि कर्तृत्वरूपाखण्डोपाधावेव शक्तिर्न तु कृतौ । तथात्वे तत्राऽपि कारकान्वयापत्तेः ।

वस्तुतस्तु कर्माख्यातेऽपि न फललक्षणा, कृतावेवाऽखण्डो-पाधिरूपस्य कर्मत्वस्य स्वसमानाधिकरणफलप्रयोजकत्वसम्बन्धे-नाऽन्वयाङ्गीकारात् । अत एव कर्मकर्त्राख्यातस्थलेऽपि कर्मत्वरूपा-ऽखण्डोपाधेरविवक्षणात्कर्तृत्वरूपाखण्डोपाधेरेवौदननिष्ठस्योक्तपर-म्परासम्बन्धेन(१) कृतावन्वयोपपत्तेर्न फललक्षणा । न चैवमेता-दृशस्थले देवदत्तस्य साक्षात्सम्बन्धेन(२) कर्तृत्वाभावेन प्रथमाना-

१. कृतावेवाऽन्वयेति. क. पु. २. कर्तृत्वाभावेनेति नास्ति 'ग' पुस्तके

पत्तावपि तृतीयापत्तिरस्त्वादेवेति वाच्यम् । देवदत्तानिष्ठकर्तृत्वस्य तिङाऽनभिधानेऽपि कृतिनिरूपितकर्तृत्वस्य तिङभिहितत्वादनभिहिताधिकारविहित(१)तृतीयाया आपादयितुमशक्यत्वात् । न च प्रथमैव तर्ह्याऽऽपद्येत, प्रथमायास्तिङ्गशात्तसङ्ख्यान्वयित्वाचित्वव्याप्यत्वेन व्यापकाभावे आपादयितुमशक्यत्वात् । अतस्सम्बन्धसामान्यवाचिनी षष्ठ्येव तत्र युक्ता ।

तदेवं सर्वकारकाणि प्रति भावनायाः प्राधान्ये तिङ्गपात्तकर्त्रादि प्रति सुतरां प्राधान्यापत्तेः, तदनङ्गीकारे 'भावप्रधानमाख्यातमि'ति स्मृतिविरोधस्य दुष्परिहरत्वाद्भावनाया एव मुख्यविशेष्यत्वमिति सिद्धम् । अत एव भावप्राधान्यस्मृत्या भावनायाः प्राधान्यावगमादप्रधानभूतयोः कर्तृकर्मणोस्तल्लक्ष्यत्वम् । अन्यथा ते कृदन्तवदेव तद्वाच्ये स्याताम्, न तु तल्लक्ष्ये । तथा हि—

यत्रैकस्मात्पदादनेकार्थप्रतीतिस्तत्राऽनेकशक्तिकल्पनागौरवभिया एकत्रैव शक्तिरपरत्र लक्षणेत्यवश्यमभ्युपगन्तव्यम् । तत्र च नियामकापेक्षायां प्रथमं तावत्प्रधानस्य लोके वेदे च गुणभूताक्षेपकत्वदर्शनात्प्राधान्यमेव शक्तिनियामकमवसीयते । तदिह भावनायाः प्राधान्यपक्षे तदपेक्षितयोर्गुणभूतयोः कर्तृकर्मणोराक्षेपेणैव बोधोपपत्तेर्नाऽतिरिक्तशक्तिकल्पनावसरः । अत एव यत्र व्यभिचारान्नाऽऽक्षेपकत्वशक्तिः, यथैकत्वादौ, तत्राऽनेकशक्तिकल्पनमपि । यदि तु तयोरेव प्राधान्यं ततस्तयोरेव शक्यत्वापत्तेर्भावनायाश्च गुणभूतायास्ताभ्यामेवाऽऽक्षेपसम्भवान्न तस्या वाच्यत्वं युज्येत । अत एव कृदन्तस्थले पाकः, पक्वमित्यादौ पचिधातोः पाकमात्रवाचित्वेऽपि प्रत्ययस्य कृतिकर्त्रादि-

१. कर्तृतृतीयाया इति. क. पु.

रूपानेकार्थबोधकस्य क्व शक्तिरिति नियामकापेक्षायां, 'सत्त्वप्रधानानि नामानी'ति सत्त्वरूपस्य कर्त्रादेरेव प्राधान्यावगमात्, तत्र शक्तावधारितायां गुणभूतायाः कृतेराक्षेपेणैव बोधोपपत्तेर्नाऽतिरिक्तशक्तिकल्पनम् ।

न चैवं तस्या अशाब्दत्वेन पाकादिरूपकारकान्वयानापत्तिः, आख्याते एकत्वान्वयार्थं कर्तृकर्मणोरिव कृदन्तस्थले कारकान्वयार्थं कृतेर्लक्षणाङ्गीकारात् । न चैवमपि लाघवात्कृतावेव शक्तिरस्तु, लाघवस्याऽप्यङ्गनिष्ठस्य(१) दीक्षणीयामुख्यत्वस्येवाऽङ्गगुणविरोधन्यायेनाऽकिञ्चित्करत्वात् । प्रधानस्य पुरस्फूर्तिकत्वेन तत्र शक्ताववधारितायामनवच्छिन्नायाश्शक्तेरयोगादवच्छेदकापेक्षायां तद्गतगौरवादेरुत्तरकालप्रतीतिकत्वेन फलमुखत्वाच्च ।

अत एवाऽनेकार्थप्रतिपादकेऽपि घटादिपदे यत्राऽन्यतरार्थप्राधान्यनियामकाभावस्तत्रैव लाघवस्य आकृत्यधिकरणव्युत्पादितस्य (२)नियामकत्वम् । न हि घटघटत्वयोः प्राधान्यनियामकं किञ्चिदस्ति, पूर्वोक्तविधयोभयोरपि सत्त्वभूतत्वेन स्मृ-

---

१. 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वे'त्यनेनेष्टिपशुसोमाः पर्वदिने कर्तव्यत्वेन विहिताः । तत्र पञ्चदिनसाध्यकसोमयागे प्रथमदिने अङ्गभुता दीक्षणीयेष्टिरनुष्ठीयते, पञ्चमदिने च सोमयागः । तदत्र निरूक्तवाक्येनोभयोरपि पर्वकालकर्तव्यत्वस्य विरोधे सति किं पर्वण्यङ्गमनुष्ठीयताम् ? उत प्रधानमिति सन्देहे–अङ्गभुताया अपि दीक्षणीयेष्टेः पाठतोऽनुष्ठानतश्च प्रथमोपस्थितत्वेन मुख्यत्वात्तस्या एव पर्वण्यनुष्ठानमिति पूर्वपक्षयित्वा, पाठतोऽनुष्ठानतश्च जघन्यस्याऽपि सोमयागस्य प्रधानतया, अङ्गानां च तत्साद्गुण्यार्थत्वेन दीक्षणीयामुख्यत्वस्याऽकिञ्चित्करत्वात्सोमयागस्यैव पर्वकालकत्वमिति द्वादशद्वितीयनवमे सिद्धान्तितम् ।

२. 'नाऽगृहीतविशेषणा बुद्धिर्विशेष्यमुपसङ्क्रामती'ति न्यायस्य नियामकत्वमिति ( १.३.१० ) अधिकरणे स्पष्टम् ।

तेरनियामकत्वात्, उभयोरपि क्रमिकत्वेन बोधद्वयाङ्गीकारेण वैशिष्ट्यानवगाहनात्प्रतीतेरप्यनियामकत्वाच्च । कृत्सु तु पूर्वोक्तविधया प्राधान्यस्यैव नियामकत्वादुक्ता कर्त्रादौ शक्तिः, न तु कृतौ । भावकृत्सु तु पाक इत्यादौ पाकपदमात्रेण कृतिप्रतीतौ पाकः क्रियत इति पृथक्कृतिवाचकपदसमभिव्याहारानुपपत्तेर्धात्वर्थमात्रप्रतीतावपि कारकान्वयार्थं काष्ठैरोदनस्य पाक इत्यादावपि जायते, क्रियत इति वा क्रियापदाध्याहारेण वाक्यपूरणं द्रष्टव्यम् । (१)युक्तश्चैतत् । धात्वर्थस्याऽपि स्वजनकीभूतव्यापाराक्षेपकत्वं सम्बन्धात् । अतः कृदन्तस्थले कृतिप्राधान्याभावादवाच्यत्ववत्तिङन्तस्थलेऽपि भावनाप्राधान्याभावे अवाच्यत्वापत्तिः । न चेष्टापत्तिः, भावप्राधान्यबोधकस्मृतिविरोधापत्तेरुक्तत्वात् ।

किञ्चाऽस्मन्मते निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यस्सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तोऽर्थः, तत्प्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वयिभावनाविशेष्यतासम्बन्धेन पदजन्योपस्थितिः कारणमित्येकयैव व्युत्पत्त्या बहूनां सङ्ग्रहाल्लाघवम् । अन्यथा हि तत्तत्कारकादीनां धात्वर्थे, तस्य च कालादीनां च भावनायां, तस्यास्साङ्ख्यायाश्च प्रथमान्त इत्यनेकव्युत्पत्तिकल्पनाद्गौरवम् ।

अत्र च कार्यतावच्छेदके निपातोपसर्गाणां समभिव्याहृतार्थान्वयं विना स्वार्थबोधकत्वादाद्यं विशेषणम् । अत एव तेषु क्रियासमभिव्याहारे सति तथैवाऽन्वयः, यथा निषेधेषु नञः । अन्यसमभिव्याहारे त्वन्येनाऽपि । प्रातिपदिकार्थस्याऽपि घटघटत्वादेस्सुबर्थं प्रत्येवाऽन्वयाद्द्वितीयम् ।

---

१. युक्तश्च धात्वर्थस्याऽपीति. क. ख. पु.

यत्र तु दधि इत्यादौ सुलोपस्तत्र(१) प्रातिपदिकलक्ष्यस्यैव दधिकर्मत्वादेर्व्युत्पत्त्यन्तरेणैव भावनान्वयेऽपि न क्षतिः। अत्र च 'आग्नेयोऽष्टाकपाल' इत्यादौ तद्धितोपात्तस्य देवतात्वरूपस्य कारकस्य तद्धितोपात्तद्रव्यान्वयं(२)विनाऽपि क्रियान्वयिनः प्रातिपदिकार्थत्वेऽपि व्युत्पत्त्यन्तरेण तदङ्गीकारान्नोक्तव्युत्पत्तिभङ्गः। अत एव कारकत्वातिरिक्तसम्बन्धेन यत्र तद्धितसमासादिवृत्तिः, यथा उपगवः, राजपुरुष इत्यादौ, तत्र क्रियान्वयाभावेऽपि पुरुषादावन्वयो नाऽनिष्टः।

यत्र तु कारकत्वसम्बन्धेन वृत्तिः, यथा 'आग्नेय' इत्यादौ तत्र प्राथमिकक्रियान्वयं विना कारकत्वायोगात्, वृत्तेश्च पार्ष्ठिकसम्बन्धेनाऽपि निर्वाहोपपत्तेर्नाऽऽदावेवाऽष्टाकपालसम्बन्धः, अपि तु भावनासम्बन्धद्वारक एवाऽसौ। विचारिष्यते चेतत्(३) पौर्णमास्यधिकरणे वाक्यभेदोपपादनार्थम्। सुबुपात्तलिङ्गसङ्ख्ययोस्सुबर्थकरणत्वाद्यन्वयिनोरुक्तविधशब्दगम्यत्वात्तन्निवृत्त्यर्थं तृतीयम्। प्रथमान्तस्थले च प्रातिपदिकार्थस्याऽपि प्रथमोपस्थितस्यैवाऽन्वयाङ्गीकारान्नाऽतिप्रसङ्गः। एवं (४)षष्ठ्यादीनामपि कारकत्वातिरिक्तेनाऽपि सम्बन्धेन निमित्तवत्(५)भावनान्वयाङ्गीकारादतिप्रसङ्गो निराकर्तव्यः। अर्थपदं च पदजन्योपस्थितिविशेष्यपरम्। तेन यागादेः करणत्वान्वयिनो भावनानन्वयेऽपि न क्षतिः। कारणतावच्छेदकेऽपि कारकाणां भावनापदोपस्थापितभावनान्वयापत्तेस्तद्धा-

---

१. प्रातिपदिकान्वयस्यैवेति. ग. पु. २. विहायाऽपीति. क. ख. पु.
३. पू. मी. २. २. ३. ४. षष्ठीक्त्वान्तादीनामिति. क. ख. पु.
५. भावनान्वयेऽपि न क्षतिरिति. क. पु.

वृत्त्यर्थं लिङ्गानन्वयीति विशेषणम् । अत एवौदनं भुक्त्वा व्रजतीत्यादौ क्त्वाप्रत्ययोपात्तभावनायामोदनादिसम्बन्धेऽपि तस्या लिङ्गानन्वयित्वात् नोक्तव्युत्पत्तिविघातः।

न चैवमेकस्मिन्वाक्ये भावनाद्वयसत्त्वात्कस्यां केषां कारकाणामन्वय(१)इत्यत्राऽपि नियामकाभावः, योग्यताया आसत्तेस्तात्पर्यस्य च नियामकत्वात् । एवं गच्छेत्यादौ(२)प्रत्ययार्थस्याऽपि शबादिविकरणार्थभूतायामेव तस्यामन्वयः। तस्मादेकयैव व्युत्पत्त्या बहूनां सङ्ग्रहाल्लाघवम् । अस्तु वा प्रकारीभूततत्तदर्थभेदेन व्युत्पत्तिभेदः। तथाऽपि 'परिपूर्णं पदं पदान्तरेणाऽन्वेती'ति न्यायेन प्रथमावगतयागादिव्युत्पत्तिवेलायां भावनाविशेष्यत्वस्योपस्थितत्वात्तत्रैव विशेषणज्ञानरूपसामग्रीसत्त्वेन स्वर्गादिपदार्थान्तराणामपि प्रकारतया अन्वयव्युत्पत्तिकल्पना, न त्वन्यत्र । अन्यगतमुख्यविशेष्यत्वस्याऽनुपस्थितत्वेन विशेषणज्ञानाभावात् । अत एवंविधलाघवादपि भावनायामेव साक्षात्परम्परया वा योग्यतानुसारेण सर्वेषामन्वयः । परम्परासम्बन्धस्थले तु पार्ष्ठिको धात्वर्थादिसम्बन्ध इति न कोऽपि(३) दोषः ।

न च पार्ष्ठिकबोधस्याऽपि श्रुतशब्दजन्यत्वाद्व्युत्पत्त्यन्तरकल्पनातादवस्थ्यम्, पार्ष्ठिकबोधस्य योग्यतत्तत्समस्तपदकल्पनयाऽनुमितपदजन्यत्वेन व्युत्पत्त्यन्तरकल्पनानापत्तेः । निरुक्त पदाध्याहारं प्रति श्रुतशब्दस्य कारणत्वं तु तत्राऽपि सम्मतमेव । इतरथा अयं घटोऽस्ति, जलमानेयमित्यतो घटकरणकजलानयनमित्येवंविधार्थप्रतिपादकपदाध्याहारानापत्तेः । पदान्तरकल्पनाकृतं तु गौरवं कार्यकारणभावकल्पनाभावात्फलमुखत्वाच्च न

---

१. इत्यत्र विनिगमकाभाव इति क ख पु.

२. प्रत्ययलोपेऽपीति. क. ख. पु. ३. विरोध इति क. पु

दोषमावहति । तत्राऽप्याकाङ्क्षायोग्यतातात्पर्यादिवशात्तत्तत्पदार्थ एव पार्ष्ठिकान्वयस्तत्तत्पदार्थस्येति नाऽव्यवस्थाऽपि । स्पष्टश्चाऽयमर्थो भावार्थाधिकरणादौ तत्र तत्र ।

न चैवं राजपुरुषोऽस्तीत्यत्र क्रियान्वयोत्तरं पार्ष्ठिकस्तात्पर्यादिसत्त्वे राजपुरुषयोस्स्वस्वामिभावादिरूपो भेदसम्बन्धोऽपि बुध्येतेति वाच्यम् । अनुभवानुरोधेन नामप्रयोज्यतदर्थप्रकारकतदर्थविशेष्यकान्वयबोधस्याऽभेदविषयत्वमिति नियमाङ्गीकारात् । राजपुरुषयोः पार्ष्ठिकान्वयबोधस्याऽप्यस्मन्मते नामजन्यत्वाभावेऽपि स्वजन्यशाब्दबोधानुमेयशब्दजन्यत्वेन नामप्रयोज्यत्वमस्तीति युक्तं तस्या भेदविषयत्वम् । वरं च नामार्थयोः (१)तदभेदान्वयव्युत्पत्तिकल्पनापेक्षया निरुक्तव्युत्पत्तिकल्पनम् प्रयोज्यत्वस्य जन्यत्वापेक्षया लघुत्वात् ।

राज्ञः पुरुषोऽस्तीत्यादौ तु षष्ठ्यर्थनामार्थयोरन्वयस्य पार्ष्ठिकत्वान्नाऽभेदविषयत्वप्रसङ्गः अत एव तत्राऽभेदस्य बाधितत्वादेव षष्ठ्यर्थो नाऽभेदसम्बन्धेन पुरुषेऽन्वेति, अपि तु भेदसंसर्गेणैव । अभेदभ्रमदशायां परं तादृशवाक्यात्पार्ष्ठिकाभेदबोधवारणार्थं सुप्प्रयोज्यतदर्थप्रकारकनामार्थविशेष्यकबोधस्य भेदसंसर्गविषयत्वम् , स्तोकं पचतीत्यादावभेदबोधार्थं च सुप्प्रयोज्यतदर्थप्रकारकधात्वर्थविशेष्यकबोधस्याऽभेदविषयत्वम् , दधि पश्यतीत्यादौ भेदसंसर्गबोधार्थं च शुद्धप्रातिपदिकप्रयोज्यतदर्थप्रकारकधात्वर्थविशेष्यकबोधस्य भेदविषयत्वमित्याद्यनुभवानुसारेण कल्प्यम् ।

न चैवंविधव्युत्पत्तिकल्पनावश्यंभावे किमिति शाब्दबोधविषयत्वमेव परेषामिव नाऽङ्गीक्रियत इति वाच्यम् । संसर्ग-

---

१. अभेदान्वयेति क. पु.

विशेषनियामकव्युत्पत्तीनां तुल्यत्वेऽपि तत्तद्विशेष्यतानिरूपितप्रकारतानियामकव्युत्पत्तीनां भेदाभावेनाऽस्मन्मतस्य लघुत्वात् ।

न च मन्मतेऽपि पार्ष्ठिकान्वये प्रकारतानियमार्थं तत्कल्पनावश्यंभावः, इतरथा सोमं प्रति यागस्य, आरुण्यं प्रत्येकहायन्या वा प्रकारतापत्तेरिति वाच्यम् । यस्य यद्बोधाव्यवहितपूर्वबोधे साक्षात्सम्बन्धेन विशेष्ये प्रकारता, तस्य निराकाङ्क्षत्वादेव तदुत्तरबोधेऽन्यं प्रत्यप्रकारत्वम् ।

अत एव यस्य यद्बोधाव्यवहितपूर्वबोधे परम्परासम्बन्धेन विशेष्ये प्रकारता, तस्यैव (१)परम्पराघटकतावगत्यै तदुत्तरबोधेऽन्यं प्रति प्रकारत्वम् । यागैकहायन्यादेर्हि स्वर्गक्रयौ प्रति द्वितीयबोधे साक्षादेव प्रकारत्वान्न तृतीयबोधे सोमारुण्ये प्रति प्रकारता । अपि तु सोमारुण्ययोरेव परम्परया (२)भावनां क्रयं प्रति च प्रकारयोः परम्पराघटकावगत्यै यागमेकहायनीं वा प्रति प्रकारत्वम् । तयोश्च तद्बलादेव विशेष्यत्वम् । इतरथा सोमारुण्यादिगतपरम्परासम्बन्धानिर्वाहात् । अत एव यस्य प्रकारस्य विशेष्यान्वये यो वस्तुतः परम्परा(३)सम्बन्धरूपः संसर्गस्तस्यैव तत्त्वेनाऽवगत्यै तद्घटकपदार्थेन पार्ष्ठिकोऽन्वयः(४)शब्देनाऽवगम्यते, न तु योग्यत्वेऽप्यन्येन ।

अत एव राज्ञः पुरुषोऽस्तीत्यत्र प्रातिपदिकार्थभूतस्य राज्ञष्षष्ठ्यर्थे निरूपकतासंसर्गेण प्रकारतयाऽन्वितस्य नाऽयोग्यतानिश्चयाभावदशायां पुरुषेणाऽभेदान्वयः पार्ष्ठिकः, निरूपकतासंसर्गस्याऽभेदाघटितत्वात् । अत एवाऽऽरुण्यकरणत्वस्य द्रव्य-

१. परम्परावगत्यै इति. क पु. २. भावनायां क्रये चेति. क. पु.
३. सम्बन्धरूपस्तस्यैवेति. ग. पु. ४. अनुमितशब्देनेति. क. पु.

परिच्छेदद्वारैव क्रयं प्रति प्रकारत्वात्तस्यैवैकहायनीं प्रति पाष्ठिकोऽन्वयः, न त्वारुण्यस्य समवायसम्बन्धेनैकहायनीं प्रति, तस्य स्ववृत्तिकरणत्वं प्रत्याधेयतासम्बन्धेनाऽन्विततया करणत्वनिरूपिताधेयताया एकहायनीसमवायाघटितत्वात् । अत एव तादृशस्थलेऽऽरुण्यस्यैकहायनीसमवेतत्वबोधः परमनुमानादिना, न तु तदर्थे तद्वाचकशब्दानुमानम् ।

यदि तु न प्रकारतानियामकव्युत्पत्तिसंसर्गनियामकव्युत्पत्तीनां भेदेन कल्पनं, अपि तु सुबर्थप्रकारकभेदसंसर्गकशाब्दत्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन धातुपदजन्योपस्थितिः कारणमित्येवमादिक्रमेणैकैवेत्याऽऽशङ्क्येत, तथाऽपि धात्वर्थस्य, भावनायाः, कालस्य, विधेश्च पृथक्कार्यकारणभावाकल्पनादस्मन्मत एव लाघवमिति । (१.)इष्यते च परैरपि क्लृप्तव्युत्पत्तितः श्रुतशाब्दबोधे वृत्ते पश्चात्तन्निर्वाहार्थमर्थान्तरविषयमनुमानम् । यथा—तिङर्थेषु सामान्यसाधनत्वविशेषणीभूते इष्टे प्रथमान्तपदोपस्थाप्यस्वर्गकामविशेषणीभूतस्वर्गाभेदस्य । न हि नैयायिकमते स्वर्गसाधनत्वं लिङर्थः, अपि त्विष्टसामान्यसाधनत्वमेव । न वा कामशब्दविशेषणं स्वर्गपदमिष्टाभेदं प्रतिपादयितुमलम् । अतश्चेष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इति शाब्दबोधे वृत्ते पश्चादेव स्वर्गाभिन्नेष्टसाधनं याग इत्यनुमानमिति, ममाऽपि श्रुतशाब्दबोधे लघुव्युत्पत्तितो वृत्ते पश्चादेव यथाऽनुभव पार्ष्ठिको बोधोऽनुमितशब्दादनुमानाद्वेति न कश्चिद्विरोधः । तत्सिद्धं सर्वकारकाणां भावनायामन्वयात्तस्या मुख्यविशेष्यत्वमिति ।

न चैवं द्वितीयान्तस्याऽपि भावनायामेवाऽन्वयाद्धातोस्सक-

१. [illegible] क्रान्त [illegible] पु

र्मकत्वाकर्मकत्वव्यवस्थानापत्तिः, यद्धात्वर्थस्य पार्ष्ठिकान्वये क-र्मण आकाङ्क्षा तद्धातोस्सकर्मकत्वाङ्गीकारात् । पार्ष्ठिकान्व-यलभ्यधात्वर्थकर्मत्वमादायैव चोदनादौ द्वितीयोत्पत्तिः, न तु भावनाकर्मत्वमादाय । अन्यथा 'स्वाध्यायं घ्यीते'त्यपि प्रयोगा-पत्तेः । पार्ष्ठिकान्वयलभ्यसकर्मकत्वादिव्यवहारवदेव 'स्तोकं प-चती'त्यादौ क्रियाविशेषणानामपि भावनारूपक्रियासम्बन्धोत्त-रकाललभ्यो धात्वर्थेनाऽभेदान्वयो द्रष्टव्यः । तस्मात्सिद्धा धा-त्वर्थातिरेकिणी प्रत्ययवाच्या मुख्यविशेष्या प्रयत्नरूपा भावनेति ।

तत्र च पूर्वोक्तन्यायेन(१) कर्माकाङ्क्षत्वाद्विधिसमभिव्याहा-राच्च तस्यां (२)स्वर्गकामाधिकरणन्यायेनेप्सितं जन्यं स्वर्गादि भाव्यत्वेनाऽन्वेति । भावार्थाधिकरणन्यायेन च यागादिः कर-णत्वेन । न च तस्य यत्नरूपभावनाजन्यत्वात्कथं तस्यामेव कर-णत्वमिति वाच्यम् ? भावनाफलजनकत्वेन पारिभाषिकस्यैव भा-वनाकरणत्वस्याऽङ्गीकारात् । तस्याश्च स्वजन्यकरणेन फले जन्य-मानेऽनुग्राहकापेक्षायां (३)प्रकरणाधिकरणन्यायेन प्रयाजादि इति कर्तव्यतात्वेनाऽन्वीयते । अत एव निर्व्यापारस्य द्रव्यस्याऽनुग्रा-हकत्वायोगात् व्यापारानाविष्टं द्रव्यमपि नेतिकर्तव्यतात्वेन ग्रा-यते । व्यापारसम्बन्धोत्तरं तु तस्येतिकर्तव्यतात्वेन बोध इत्यपि तत्र तत्र वक्तव्यं भविष्यति ।

पार्थसारथिमते तु व्यापारसामान्यस्यैव भावनात्वात्प्रयाजा-दीनां च तद्विशेषाणां व्यापारविशेषाकाङ्क्षारूपेतिकर्तव्यताका-ङ्क्षया तत्त्वेनाऽन्वयो न त्वनुग्राहकत्वेन । अत एव व्यापारानाविष्टस्य द्रव्यस्य तद्विशेषत्वायोगान्न तत्त्वेन ग्रहणमिति विशेषो-

---

१. नियमेन कर्माकाङ्क्षेति. क. ख. पु. २. पू. मी. ६. १. १.
३. पू. मी. ३ ३. ४.

ऽपि प्रकरणाधिकरणे निरूपयिष्यते । न चैवं भावनायां साध्य-साधनेतिकर्तव्यतान्वयेऽपि समानप्रत्ययोपादानश्रुत्या शुद्धाया-मेव तस्यां विध्यन्वयात्तदुत्तरकालीनस्य तदंशत्रयस्य विधिसंस्प-र्शाभावेन ग्रहैकत्ववदविवक्षापत्तिः, अंशत्रयान्वयोत्तरं तद्विशि-ष्टायां भावनायां विध्यन्वयाभ्युपगमे तु 'परिपूर्णं पदं पदान्तरे-णाऽन्वेती'ति न्यायभङ्गापत्तिरिति वाच्यम् । शुद्धस्य यत्नस्य वि-धिविषयत्वानुपपत्तेः, सामान्यतो यत्किञ्चिदाक्षिप्तांशत्रयोपेतभा-वनाया एव विधिसम्बन्धाभ्युपगमेन च पर्यवसानोपपत्तेः, पश्चा-न्निर्धारणापेक्षायां तत्तत्पदैर्विशेषनिर्धारणोपपत्तेः ।

तस्मात्सिद्धा अंशत्रयान्विता प्रत्ययवाच्या भावना । अतश्च तस्यां धात्वर्थस्यैव करणत्वं शीघ्रं प्रमितमिति पार्ष्ठिकफलस-म्बन्धापेक्षायां तस्यैवाऽन्वयो न तु द्रव्यादेरिति सिद्धम् । ततश्च फलसम्बन्धनिर्वाहार्थं कल्प्यमानमपूर्वमपि तत एवेत्यपि सिद्धम् ॥

द्रव्यत्यागाहुतवहमुखक्षेपणाद्याऽऽतिशस्ता
निष्प्रत्यूहं विधिपरिचिता भावनेयं चकास्ति ।
यस्याः सङ्गादतिशयफलमापि यागादिजातं
तामद्याऽहं मुररिपुपदद्वन्द्वपद्मेऽर्पयामि ॥

इति द्वितीयं भावार्थाधिकरणम् ॥ २ ॥

अथ तृतीयमपूर्वाधिकरणम् ॥ ३ ॥

## चोदना पुनरारम्भः ॥ २-१-६ ॥

( विषयसंशयसङ्गतयः )

एवं तावदपूर्वं सिद्धं गृहीत्वा तज्जनकं विचारितम् । तत्सद्भाव एव त्वधुना विचार्यते—किमस्त्यपूर्वम् ? उत नेति ?। अत्र चाऽऽपूर्वसद्भावस्याऽप्यपूर्वभेदोपयोगित्वात्पादाध्यायसङ्गती पूर्ववदेव । आक्षेपिकी त्वनन्तरा ।

( पूर्वपक्षः )

तत्र प्रमाणाभावान्नाऽपूर्वमस्ति । तथा हि—न तावदत्र प्रत्यक्षादिकं प्रवर्तते, यागस्वर्गसाध्यसाधनभाव इवाऽपूर्वेऽपि तस्याऽप्रवृत्तेः । नाऽपि शब्दः, तदनुपलम्भात् । न(१) च श्रुतयागस्वर्गसाध्यसाधनभावान्यथानुपपत्तिरेव तत्कल्पिका । न ह्यन्यथा क्षणिकयागस्य कालान्तरभावि स्वर्गसाधनत्वमुपपद्यते । अतः प्रमाणान्तराभावेऽपि श्रुतार्थापत्तिरेवाऽपूर्वसद्भावे प्रमाणमिति वाच्यम् । साध्यसाधनभावस्याऽन्यथानुपपद्यावदप्यपूर्वस्य तदुपपादकत्वाभावात्कल्पनानुपपत्तेः । न ह्यपूर्वे कल्पिते तेनैव स्वर्गजननादपूर्वोत्पत्तिं प्रत्यन्यथासिद्धस्य यागस्य स्वर्गजनकता सम्भवति । न चाऽपूर्वस्य शक्तिरूपत्वादवान्तरव्यापारत्वाद्वा ज्वालादिभिरिव न तेन यागस्याऽन्यथासिद्धिः, शक्तिव्यापारयोश्शक्तिमद्व्यापारवन्निष्ठत्वनियमेन शक्तिमति व्यापारवति च यागे नष्टे शक्तिव्यापारयोरवस्थानानुपपत्तेः ।

न चाऽपूर्वस्य फलबलकल्प्यस्य याग(२)निष्ठत्वासम्भवेऽपि यागाश्रयभूतात्मनिष्ठत्वकल्पनेनाऽपि शक्तिव्यापारत्वोपपत्तिरि-

---

१. नाऽपि चेति. ख. पु. २. निष्ठत्वासंभवेनेति. क. ख. पु.

ति वाच्यम् । गुरुभूतापूर्वकल्पनां विनाऽपि यागस्वर्गसाध्यसाधनभावस्योपपन्नतरत्वेनैतादृशकल्पनायां प्रमाणाभावात् ।

तथा हि—यद्यपि तावत्क्षणिको यागस्साक्षादेव कालान्तरभाविस्वर्गजननाय नाऽलम्, तथाऽपि स्वजन्यध्वंसद्वारा समर्थ एव। तस्य हि यागजन्यत्वसद्भावयोः क्लृप्तत्वात्केवलं फलजनकत्वमात्रं कल्प्यमित्यवान्तरव्यापारत्वं सुलभम् । अपूर्वस्य तु सद्भावः, स्थायित्वं, यागजन्यत्वं, स्वर्गजनकत्वं चेत्यनेकपदार्थकल्पनान्न तत्सुलभम् । (१)यागस्य विनाशित्वप्रतिसन्धानोत्तरकालमेव च द्वारकल्पनेन विनाशस्योपस्थितत्वाच्च ।

नन्वेवं ध्वंसस्यैव व्यापारत्वे तस्य नित्यत्वेन कीर्तनप्रायश्चित्तादिना नाशानुपपत्तेः,(२) 'धर्मः क्षरति कीर्तनात्' 'प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपी'त्यादिशास्त्रविरोधः । न चानयोर्ज्योतिष्टोमब्रह्महत्यानाशकत्वसम्भवः, तयोराशुतरविनाशित्वेन नाशकारणानपेक्षत्वात् । नाऽपि तज्जन्यसुखदुःखनाशकत्वम्, तयोरनुत्पन्नत्वेन नाशायोग्यत्वात् । अतः कीर्तनप्रायश्चित्तादिनाश्यं यागादिजन्यमपूर्वमावश्यकमिति चेत् , क्लृप्तध्वंसस्यैव व्यापारत्वेऽवधारिते कीर्तनादीनां फलोत्पत्तिप्रतिबन्धकत्वस्यैव स्वजन्यध्वंसद्वारा साक्षादेव वा कल्पनात् ।

अत एव यागध्वंसस्य नित्यत्वेन स्वर्गोत्पत्त्यनन्तरमपि स्वर्गान्तरोत्पत्तिप्रसङ्ग इत्यप्यपास्तम् , स्वर्गध्वंसस्याऽपि तत्प्रतिबन्धकत्वकल्पनात्। न च कीर्तनादिध्वंसस्य प्रतिबन्धकत्वकल्पने प्रयोगान्तरजन्यस्याऽपि फलस्य प्रतिबन्धापत्तिः, तद्यागव्यक्तिकीर्तनजन्यध्वंसस्य तद्यागव्यक्तिजन्यफलप्रतिबन्धकत्वकल्पनात् । न चैवं गौरवापत्तिः, तस्य फलमुखत्वात् । अपूर्वपक्षेऽ-

१. क्षणिकत्वविनाशित्वेति. क. ख. पु. २. कर्मनाशाजलस्पर्शादित्यादिः।

पि समानत्वाच्च ।

अथ वा न कीर्तनध्वंसस्य प्रतिबन्धकत्वं कल्प्यते, गौरवा-त्, अपि तु कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन का-रणत्वकल्पनान्न कीर्तनस्थले यागध्वंसमात्रात्फलसिद्धिः। अत्र च तद्व्यक्तित्वान्तमवश्यं विवक्षणीयम्, अन्यथा एकव्यक्तिकीर्तने व्यक्त्यन्तरेभ्योऽपि फलानिष्पत्तिप्रसङ्गात् ।

न च कीर्तनवाक्ये कीर्तनमात्रश्रवणात् ज्योतिष्टोमवाक्ये च तन्मात्रश्रवणादुक्तविधकारणतावच्छेदकबोधकाभावः, तस्य वाक्यैकवाक्यतोत्तरमनुमानविधया बोधोपपत्तेः। न हि ज्योति-ष्टोमादिवाक्येऽपि ज्योतिष्टोमत्वादिरूपस्य कारणतावच्छेदकस्य वाक्येन बोधः, कार्यतावच्छेदकबोधं विना कारणतावच्छेदकबो-धानुपपत्तेः। न ह्यत्र स्वर्गत्वं कार्यतावच्छेदकम्, अपि तु विजा-तीयस्वर्गत्वम् । न च वैजात्यस्य वाचकं पदमत्राऽस्ति । स्वर्ग-पदेनैव तल्लक्षणायां प्रमाणाभावात् । अतो वाक्येन सामानाधि-करण्येनैव जन्यजनकभावे बोधिते, पश्चादेवाऽनुमानविधया विजातीयस्वर्गत्वस्य कार्यतावच्छेदकत्वे कल्पिते, पश्चादेव ज्योति-ष्टोमत्वादेरिवोक्तविधस्याऽपि कारणतावच्छेदकस्य कल्पयितुं शक्यत्वात् । अतो युक्तं ध्वंसस्यैव व्यापारत्वं, न त्वक्लृप्तस्याऽपू-र्वस्य ।

एतेन(१) "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयती" त्यर्थवा-दोपात्तस्य देवताप्रसादस्यैव (२)रात्रिसत्रन्यायेन द्वारत्वोपपत्ते-र्नाऽनुपस्थितापूर्वकल्पनं युक्तमिति वेदान्तिमतमपि प्रत्युक्तम्, ततोऽप्युपस्थिततरध्वंसद्वारकत्वेनैव नैराकाङ्क्ष्ये रात्रिसत्रन्या-यानवतारात् । देवताप्रसादस्याऽपीच्छाविशेषरूपस्य क्षणिक-

---

१. तै. सं. २. ५. ४. २. पू. मी. ४. ३. ६.

त्वेन व्यापारान्तरापेक्षणाच्च । तस्य ध्वंसद्वारकत्वाङ्गीकारे च तस्याऽन्तर्गडुकत्वापत्तेर्वरं यागध्वंसस्यैव व्यापारत्वकल्पनम् ।

न च ध्वंसस्य फलकारणत्वे यागस्य कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकत्वापत्तिः, यस्मिन्नभावे संसर्गाभावत्वेन कारणता तादृशाभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वाङ्गीकारात् । प्रकृते तु ध्वंसत्वेन कारणता, न तु संसर्गाभावत्वेनेत्यदोषः ।

न च ध्वंसस्याऽभावरूपत्वात्कथं फलजनकत्वम् ? अभावस्य क्वाऽपि कारणत्वादर्शनादिति वाच्यम् । अभावस्याऽपि कारणत्वाङ्गीकारे बाधकाभावात् । अत एवाऽनुपलब्धेरभावरूपाया एव घटाद्यभावग्राहकत्वमङ्गीकृतम् । एवं सन्ध्यावन्दनाद्य(१)भावस्य च प्रत्यवायजनकत्वम् ।

यत्तु वार्तिके नैवाऽभावस्य क्वचिदपि कारणत्वं दृष्टम्, यदि तु सन्ध्यावन्दनादौ क्वचिदुत्प्रेक्ष्येत, तत् निमेषादिरूपस्य तत्कालक्रियमाणस्य भावस्यैव कारणत्वकल्पनादप्रयोजकमित्युक्तम्, यच्च न्यायसुधाकृता अभावस्य कारणत्वेऽपि भावसहकृतस्यैव तस्य कारणता, न शुद्धस्य, क्वचिदपि तथा अदर्शनात् । सन्ध्यावन्दनाकरणस्याऽपि च विध्यवज्ञारूपभावान्तरसहकृतस्यैव प्रत्यवाय(२)जनकत्वादित्युक्तम्, तदतिशयार्थम्, शुद्धस्याऽभावस्याऽपि कारणत्वाङ्गीकारे बाधकाभावात् । अतोऽभावस्याऽपि कारणत्वाङ्गीकाराद्युक्तं ध्वंसस्याऽपि द्वारत्वम् ।

यत्तु वार्तिके यागध्वंसविशिष्टादात्मन एव फलोत्पत्त्युपपत्तेर्नाऽपूर्वकल्पना युक्तेति पक्षान्तरमुपन्यस्तम्, तदात्मनो नित्यत्वेनाऽवान्तरव्यापारत्वायोगाद्विशिष्टस्य व्यापारत्वाङ्गीकारेऽपि वा लाघवेन ध्वंसस्यैव व्यापारतोपपत्तेरात्मनोऽपि व्यापारान्तः-

१. करणस्येति. क. पु. २. जनकत्वाङ्गीकारादिति. क. पु.

प्रवेशे गौरवादुपेक्षितम् । सर्वथा नाऽस्त्यपूर्वमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—फलं तावत्प्रधानकालान्तरभावीति निर्विवादम् । न हि 'यन्न दुःखेने' त्यादिवाक्यशेषावगतनिरतिशयसुखदुःखरूपयोस्स्वर्गनरकयोरस्मिञ्जन्मन्युपभोगस्सम्भवति । ऐहिकस्याऽपि वृष्टि(१)पश्वादेस्माक्प्रधानजन्यस्य न प्रधानमात्रोत्तरमुत्पत्तिसम्भवः । अतः कालान्तरभाविफलोत्पत्तिर्न क्षणिकात्कर्मणो व्यापारमन्तरेण सम्भवतीति व्यापारापेक्षायां न तावत् ध्वंसस्य (२)व्यापारत्वं सम्भवति । स एव हि व्यापारः कल्पनीयो यश्श्रुताविरोधी । तदिह यथैव निरतिशयसुखरूपे स्वर्गाख्ये फले श्रुते, तस्येह जन्मन्यसम्भवेऽपि जन्मान्तरीयत्वमेव कल्प्यते, न तु पुत्राद्यपेक्षयाऽऽपेक्षिकं निरतिशयत्वमादाय सार्वभौमत्वादिकं गृह्यते । स्वर्गशब्दस्यौपचारिकत्वाङ्गीकरणे कारणाभावात्, जन्मान्तरीयत्वकल्पनस्य च फलमुखत्वेनाऽदोषत्वात् । तद्वदिहाऽपि 'धर्मः क्षरति कीर्तनात्' 'प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपी'ति कीर्तनप्रायश्चित्तादीनां नाशकत्वश्रवणान्नाशार्हं किञ्चिदवश्यं कल्पनीयम् । न च यागः, तद्ध्वंसः, तत्फलं वा सम्भवति ।

न च नाशशब्दस्य फलोत्पत्तिप्रतिबन्धे, कारणीभूतावच्छेदकघटकीभूतात्यन्ताभावे वा लक्षणेति वाच्यम् । लक्षणायां प्रमाणाभावात् । अतश्च क्लृप्तध्वंसद्वारकत्वकल्पनापेक्षयाऽपूर्वकल्पनस्य गुरुभूतत्वेऽपि तस्य फलमुखत्वादवश्यं प्रायश्चित्तादिना-

१. पशुपुत्रादेरिति ख. पु. २. व्यापारत्वसम्भव इति क. पु.

श्यमपूर्वमेव कल्प्यम् । तेन यथैव(१) निषादस्थपतिपदे लक्षणापादकसमासानङ्गीकरणेन श्रौतकर्मधारयमेवाऽङ्गीकृत्य पश्चादापद्यमानं विद्या(२)तदुपायाक्षेपकत्वं फलमुखत्वादङ्गीकृतम्, तथैव नाशपदस्य श्रौतार्थलिप्सयाऽपूर्वमङ्गीकर्तव्यमेव ।

किञ्च कीर्तनादेः फलप्रतिबन्धकत्वाङ्गीकारे तावत् प्रतिबध्यतावच्छेदकस्य तद्व्यक्तित्वस्याऽप्रसिद्धत्वादेवाऽनुपपत्तेः । विजातीयस्वर्गत्वादिना प्रतिबध्यताङ्गीकारे च प्रयोगान्तरतोऽपि फलानापत्तिप्रसङ्गः । कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणताङ्गीकारे गौरवं, अनेककार्यकारणभावकल्पनापत्तिश्च । अस्मन्मते तु सत्यपि तत्कीर्तनत्वेन तद्व्यक्तिजन्यापूर्वनाशत्वेन कार्यकारणभावानेकत्वे कारणतावच्छेदके गौरवाभावात् 'धर्मः क्षरति कीर्तनादि'ति शास्त्रोन्नीतत्वेन प्रामाणिकत्वाच्च न दोषः ।

किञ्च ध्वंसस्य प्रधानव्यापारत्वे तुल्यन्यायत्वादङ्गेष्वपि स एव व्यापारोऽङ्गीकर्तव्यः । ततश्च तस्य नित्यत्वाद्विकृतिप्रयोगवेलायामपि सत्त्वाद्विकृतीनां पशुपुरोडाशवत्प्रासाङ्गिकत्वोपपत्तेः प्रयोगभेदेऽपि तज्जन्यस्योपकारस्य लब्धत्वान्न पृथगङ्गानि कर्तव्यानि स्युः । तथा च विकृतौ (३)'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति दर्शनानुपपत्तिः । अस्मन्मते त्वङ्गापूर्वाणां प्रधानापूर्वोत्पत्त्यनन्तरं नाशाद्विकृत्यपूर्वसिध्यर्थं पुनरङ्गकरणोपपत्तिः । अपि चाऽस्मिन्पक्षे काऽङ्गानामुपयोगः ? न तावत्प्रधाने, तस्य प्रयाजाद्यजन्यत्वात् । नाऽपि तद्ध्वंसे, तस्य तानि विनाऽपि जायमानत्वात् । नाऽपि फले, प्रधानत्वापत्तेः । अतोऽवश्यम-

---

१. विचारोऽयं षष्ठप्रथमान्तिमाधिकरणे विशदः ।
२. तद्गुणाक्षेपकत्वमिति. क. पु. ३. तै. सं. २. ३. २.

कुप्रधानव्यवस्थासिध्यर्थमप्यपूर्वं कल्पनीयम् । तदा हि प्रधाने-नाऽपूर्वे जननीये अङ्गानामपि सहकारित्वकल्पनात्प्रधान एव वा योग्यताविशेषजननादस्ति तेषामुपयोगः । तस्मादवश्यं या-गस्य ध्वंसातिरिक्तो व्यापारो वाच्यः ।

न च यागस्यैव तर्हि फलं यावत्स्थायित्वं लाघवादस्तु, किं व्यापारकल्पनयेति वाच्यम् ? तृतीयादिक्षणे प्रत्यक्षताप-त्तेः । तद्यागव्यक्तिप्रत्यक्षे तद्यागव्यक्तिद्वितीयक्षणस्य कारण-त्वकल्पने चाऽनन्तकार्यकारणभावकल्पनापत्तिः । न चैतस्य फ-लमुखत्वम्, द्विपयप्रत्यक्षयोः कार्यकारणभावस्य लोकसिद्ध-त्वेन स्वर्गसाधनत्वज्ञानानपेक्षत्वात् । कीर्तनापूर्वव्यक्त्योर्नाश्य-नाशकभावानेकत्वकल्पना तु 'धर्मः क्षरती'ति शाब्दबोधोत्तर-कालीनत्वात्फलमुखेति विशेषः । अतोऽवश्यं व्यापारो वाच्यः । सोऽपि च न देवताप्रसादरूपः, तस्य देवतानिष्ठत्वेन फलव्य-धिकरणस्य फलजनकत्वानुपपत्तेः, देवतायाश्चैतन्यं, विग्रहः, प्रसादः, तस्य च स्थायित्वमित्यनेकार्थकल्पनापत्तेश्च । विशि-ष्य चाऽयं (१)नवमे निराकरिष्यते । अतः(२)परिशेषादपूर्वमेव कल्प्यम् । तच्च 'यागेनाऽपूर्वं कृत्वा स्वर्गं कुर्यादि'ति(३)श्रुता-र्थापत्तिकल्पितवैदिकशब्दगम्यत्वादेव नाऽप्रामाणिकम् । न चै-वं श्रुतयागस्वर्गसाध्यसाधनभावव्याघातः, अपूर्वस्य शक्तिरूप-त्वेन व्यापाररूपत्वेन वा कल्प्यमानत्वाच्छक्तिव्यापाराभ्यां च ज्वालादिवच्छक्तिमतो व्यापारवतो वा साधनत्वाविघातात् ।

न चैवं शक्तिमति व्यापारवति वा यागे नष्टे तन्निष्ठापूर्व-

---

१. पू. मी. ९. १. ४. २. पारिशेष्यादिति क. ख. पु.

३. श्रुतं शब्दः तत्कल्पकार्थापत्तिरिति व्युत्पत्त्या यत्राऽनुपपद्य-मानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिरित्यर्थः ॥

स्याऽपि नाशापत्तिः, अपूर्वस्य यागीयत्वेऽपि(१)फलबलकल्प्यत्वेन यागनिष्ठत्वाकल्पनात् । यथैव ह्यनुभवव्यापारस्याऽपि संस्कारस्य नाऽनुभवानिष्ठत्वं, किन्तु फलबलेन स्मृतिसमानाधिकरणत्वसिध्यर्थमात्मनिष्ठत्वमेव, तथाऽत्राऽप्यपूर्वस्य फलसामानाधिकरण्यासिध्यर्थं फलबलेन फलभोक्तृनिष्ठत्वमेव कल्प्यत इति न विरोधः । अत एव गयाश्राद्धादौ यत्र पितुः पुत्रस्य च फलभोक्तृत्वं शास्त्रान्तरप्रमितम्, तत्रोभयनिष्ठापूर्वद्वयकल्पनम् । अपूर्वद्वयमपि च तत्र(२)कीर्तननाश्यमेव । एवं दम्पत्योरुभयोरपि भोक्तृत्वादुभयनिष्ठमपूर्वद्वयम् । तत्राऽपि तत्तन्निष्ठकीर्तनस्यैव तत्तन्निष्ठापूर्वनाशकत्वम् ।

(३)यत्रान्यतरस्यैव रोगादिनिवृत्त्यर्थं दर्शपूर्णमासाद्यनुष्ठानं, तत्र सत्यपीतरस्य व्यासज्यवृत्तिकर्तृत्वे फलभोक्तृत्वाभावान्न तन्निष्ठापूर्वान्तरकल्पनम्, अपि तु भोक्तृनिष्ठमेव । अत एव तत्रेतरस्य सत्यपि कर्तृत्वे फलभोक्तृत्वाभावान्न तत्र फलिसंस्कारा वपनादयः । एवं जातेष्ट्यादौ पुत्रस्यैव फलभोक्तृत्वम् , न तु पितुः,(४)न तत्राऽपूर्वं फलिसंस्कारो वा । याज्ञिकास्तु पितर्यपि फलिसंस्काराननुतिष्ठन्त्येव ।

न चैवं पुत्रस्य भोक्तृत्वसत्त्वात्तत्र फलिसंस्कारा अप्यपूर्ववदभ्युपगम्येरन्निति वाच्यम् ; वपनादीनां कर्तृनिष्ठफलाधानयोग्यताजननार्थत्वात्पुत्रस्य कर्तृत्वाभावेन वपनादिप्राप्त्यभावात् । वपत इत्यादिषु हि आत्मनेपदानुरोधेन पुरुषप्राधान्येऽवगते वपनादेरवघातादिवत्संस्कारत्वावगमाद्वपनेन प्रधानफलाधारत्व-

---

१. फलबलेनेति. क. ख. पु. २. कर्तृकीर्तनेति. क. ख. पु.
३. यत्रेतरस्येति. क. पु.
४. तत्राऽपि, न तत्र अपूर्वमिति. क. ख. पु.

योग्यतासम्पादनद्वारा पुरुषं संस्कुर्यादित्यर्थावगतेः, संस्कार्यस्य च भूतभाव्युपयोगापेक्षायां कर्तृत्वद्वारेण यागापूर्वसम्बन्धावगते-रपूर्वजनकयागकर्तारं यागजन्यफलाधारत्वयोग्यतासम्पादनद्वा-रा वपनेन संस्कुर्यादित्यर्थः प्रतीयते। अतश्च पुत्रस्य कर्तृत्वा-भावादप्राकृतकार्यकारिणि तस्मिन्न वपनादिधर्मप्राप्तिः ।

न च संस्कार्यस्याऽपूर्वजन्यफलाश्रयत्वसम्बन्धेनैवाऽपूर्वस-म्बन्धोपपत्तेर्नाऽवश्यं कर्तृत्वेनैव स विवक्षणीय इति वाच्यम् । वपत इत्यात्मनेपदेन वपनकर्तरि वपनजन्यफलोत्पत्त्यभिधाना-द्वपनस्य चाऽङ्गत्वेन प्रधानविधिविधेयस्य प्रधानकर्त्रैव कर्तृनिरूप-णाद्वपनवाक्ये कर्तृतासम्बन्धस्यैव शीघ्रोपस्थितिकत्वात् । वि-स्तरेण चाऽयमर्थः (१)तृतीये निरूपयिष्यते । तस्माज्जातेष्टिस्थ-ले फलिसंस्काराभावेऽपि पुत्रनिष्ठमेवाऽपूर्वं न पितृनिष्ठम् । त-स्मिंस्तु निमित्तबलादकरण एव दुःखजनकीभूतं प्रत्यवायरूपम-पूर्वमिति विशेषः । तत्सिद्धं नष्टेऽपि प्रधाने फलबलेनाऽत्मनिष्ठा-पूर्वकल्पनम् ।

एवमङ्गानामपि प्रधानगतफलजननयोग्यतासम्पादनफल-कानामनेकेषां युगपद्योग्यतासम्पादकत्वानुपपत्तेरवान्तरव्यापार-रूपापूर्वकल्पनान्नष्टेष्वप्यङ्गेष्वात्मगतापूर्वसिद्धिः । तत्र च पर-म्परासम्बन्धेन प्रधानगतयोग्यताया अपि सत्त्वात्फलसामाना-धिकरण्यलाभः । तत्र त्वयं विशेषः—आरादुपकारकाणां तावत्स-मिदादीनां प्रकरणाद्यवगतयागाङ्गभावानामपि प्रधानयागस्वरूप-स्य तदजन्यत्वात्तत्रोपयोगकल्पनानुपपत्तेः, तज्जन्यात्पत्त्यपूर्वाणां च प्रधानाव्यवहितोत्पत्तिकानां प्रधानापूर्वोत्तरकालवर्तिभिरारा-दुपकारकैरुत्पत्त्यसम्भवात्तत्राऽनुपयोगेऽपि तेष्वेव तज्जन्या-

१. पू. मी. ३. ७. २.

पूर्वजननानुकूला योग्यता जन्यते ।

न चोत्तराङ्गानामेव परमापूर्वजननानुकूलयोग्यतासम्पादकत्वमस्तु । पूर्वाङ्गानां तूत्पत्त्यनुकूल(१)योग्यताजनकत्वमेवाऽस्त्विति वाच्यम् । लाघवादाराहुपकारित्वावच्छेदेनैव परमापूर्वोपयोगित्वस्य कल्पनात् । न चोत्पत्त्यपूर्वेष्वनुपयोगेऽपि प्रधानापूर्वैः परमापूर्वे जननीयेऽङ्गानामपि स्वस्वावान्तरापूर्वद्वारा सहकारिकारणत्वमस्त्विति वाच्यम् । तथा सति फल इव परमापूर्वेऽपि जनकत्वाविशेषेण प्रधानतुल्यतापत्तेः । अतो योग्यतासम्पादनमेव तैरुत्पत्त्यपूर्वेषु क्रियते । योग्यैश्च तैः परमापूर्वादिजननमिति द्रष्टव्यम् । अत एव प्रधानापूर्वानेकत्वे क्रमेण सर्वेषु तेषु तैरेवाऽपूर्वैर्योग्यतासम्पादनमिति द्रष्टव्यम् । अतश्चाऽन्तिमप्रधानापूर्वनिष्ठयोग्यताजननानन्तरमेव तेषां नाशः । योग्यता चेयमुत्पत्त्यपूर्वाव्यहितापूर्वजननानुकूला । तच्च क्वचिद्वक्ष्यमाणरीत्या समुदायापूर्वम्, क्वचिच्च परमापूर्वमिति विशेषः ।

अत एव प्रकृतौ समुदायापूर्वस्याऽव्यवहितस्य सौर्यादावभावेऽपि परमापूर्वस्यैवाऽव्यवहितत्वात्तदनुकूलैव योग्यता । सुत्याकालीनाङ्गानां च प्रकृतावव्यवहितपरमापूर्वानुकूलयोग्यताजनकानां द्वादशाहे अव्यवहिततत्तत्सुत्यासमुदायापूर्वानुकूलयोग्यताजनकत्वम् । युक्तं चैतत् । कारणस्याऽनुग्रहापेक्षारूपेतिकर्तव्यताकाङ्क्षाख्यप्रकरणादिनाऽवगताङ्गभावानां प्रयाजादीनां साक्षात्प्रधानतदपूर्वार्थत्वयोरसम्भवे तदव्यवहितापूर्वार्थत्वस्यैव कल्पनात् । अतश्चोत्पत्त्यपूर्वाव्यवहितापूर्वजननानुकूलयोग्यतासम्पादनमुत्पत्त्यपूर्वनिष्ठमाराहुपकारकाणां स्वावान्तरापूर्वद्वारा फलमिति सिद्धम् ।

---

१. प्रधानयोग्यतेति. क. ख. पु.

यत्र तु "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यादौ बृहस्पतिसवादीनां वाजपेयेनेति तृतीयाबलेन बृहस्पतिसवव्यतिरिक्तसर्वाङ्गयुक्तवाजपेयानुष्ठानेन तज्जन्यपरमापूर्वनिष्पत्त्यनन्तरं क्रियमाणानां न परमापूर्वनिष्पत्तावप्युपयोगसम्भवः, तत्र परमापूर्वस्यैव बृहस्पतिसवाकरणे नाशकल्पनात्परमापूर्वस्थापकत्वम्, वैमृधस्य च पौर्णमासीसमुदायापूर्वस्थापकत्वमिति मूलानुयायिनः।

वस्तुतस्तु बृहस्पतिसवापूर्वं वाजपेयपरमापूर्वावस्थानं यावत् स्थायि, न वा ? आद्ये प्रसङ्ग(१)सिध्यापत्तेर्वाजपेयप्रयोगान्तरे पुनर्बृहस्पतिसवकरणानापत्तिः । नाऽन्त्यः; बृहस्पतिसवापूर्वनाशे वाजपेयापूर्वस्याऽवस्थानानुपपत्तेः । न च बृहस्पतिसवापूर्वानुत्पत्तेरेव तन्नाशकत्वकल्पनात्(२) न दोष इति वाच्यम् । प्रयाजाद्यपूर्वानुत्पत्तेरपि दर्शाद्यपूर्वोत्पत्तिप्रतिबन्धकत्वकल्पनापत्त्या तस्याऽपि स्थायित्वानापत्तौ पशुपुरोडाशेऽपि प्रसङ्गासिध्यनापत्तेः ।

अथ अपूर्वानुत्पत्तेरश्रुताया गुरुभूतायाश्च कारणत्वाकल्पनात्प्रयाजाद्यपूर्वाणां प्रधानापूर्वनिष्पत्तिपर्यन्तं स्थायित्वं कल्प्यते, ततो बृहस्पतिसवाकरणस्याऽपि नाशकारणत्वाकल्पनान्न स्थापकत्वसिद्धिः । अतो वाजपेयपरमापूर्व एव वाजपेयफलानुकूलयोग्यतासम्पादनं बृहस्पतिसवापूर्वेण क्रियत इति वेदितव्यम् । एवं (३)परिधानीये कर्मण्यपि सादनादिपात्रप्रतिपत्त्यपूर्वस्याऽप्यव्यभिचरितक्रतुसम्बन्धोपस्थापितामुष्मिकफलसाधनक्रतुजन्यपरमापूर्वनिष्ठयोग्यतां फलानुकूलां प्रत्येव जनकत्वं बोध्यम् ।

---

१. सिध्यापातेनेति. क. ख. पु.   २. नोक्तदोषापत्तिरिति. क. ख. पु.
३. 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे'ति वाक्यविहितान्त्येष्ट्याख्ये कर्मणीत्यर्थः ॥

न चाऽविशेषप्रवृत्तप्रतिपत्त्यनुरोधेन कारीर्यादिजन्यवृष्टेर-प्यामुष्मिकत्वकल्पना,(१) ऐहिकाग्निजनकपवमानेष्ट्यनुरोधेन प्रतिपत्तेरैहिकातिरिक्तक्रतुविषयत्वस्याऽऽवश्यकत्वेनैवंविधकल्प-नस्याऽन्याय्यत्वात् । अत एव पवमानेष्ट्यनन्तरमेव मरणे न (२)दक्षिणहस्तादिनियमः । याज्ञिकास्तु सादनस्य दाहाङ्गत्वमभि-प्रेत्य तमनुतिष्ठन्ति । दाहस्य तु संस्कारेषु पाठादामुष्मिकं फलो-पयोगिसंस्कारं प्रत्यपि जनकत्वात्पवमानेष्ट्यनन्तरं करणेऽपि न विरोधः । आहिताग्निशरीरप्रतिपत्तिस्तु आनुषङ्गिकीति तद-भावेऽपि न क्षतिः ।

न चैवं दर्शाद्युत्पत्त्यपूर्वेष्वेव फलजननानुकूलयोग्यताया उत्तराङ्गैस्सम्पादनोपपत्तेस्समुदायापूर्वपरमापूर्वयोः कल्पनानुप-पत्तिः, तत्र वा तत्कल्पने वाजपेयेऽपि परमापूर्वजन्यापूर्वान्तर-स्वीकारापत्तिरिति वाच्यम् । अपूर्वान्तरस्वीकारे मानाभावात् । यथा च समुदायापूर्वपरमापूर्वयोः कल्पनोपपत्तिस्तथोत्तरत्र निरूपयिष्यामः । तत्सिद्धं आरादुपकारकाणामुपयोगः ।

सन्निपत्योपकारकाणां तु श्रुत्याद्यवगतव्रीह्याद्यङ्गभावानां व्रीह्यादिस्वरूपे आनर्थक्यप्रसङ्गेन तण्डुलादिपरम्परया प्रधा-नपर्यन्तं गमनात्तत्राऽप्यानर्थक्यप्रसक्तेरुत्पत्त्यपूर्वजननानुकूलत-द्गतयोग्यतासम्पादनमेव फलमवसीयते । अत एव तत्तदुत्पत्त्य-पूर्वजननानुकूलतत्तत्प्रधानगततत्तद्योग्यतासम्पादनपर्यन्तं प्रोक्ष-णादिजन्यावान्तरापूर्वस्याऽवस्थानम् ।

---

१. आहिताग्निजनकेति. ग. पु.

२. 'दक्षिणे हस्ते जुहूमासादयति, दक्षिणपूर्वं अहवनीयमि'ति वाक्यविहितदक्षिणहस्तादिनियमः । अयं च ( ११-३-१३ ) अधिक-रणे विचारित इति द्रष्टव्यम् ॥

न च व्रीहिगतयोग्यताजननमेव प्रोक्षणादेः फलमस्तु, किं प्रधानगतयेति वाच्यम् ? व्रीहिगता हि योग्यता किं तण्डुलादिजनिका वा स्यात् ? अपूर्वजनिका वा ? नाऽऽद्यः; तण्डुलाद्युत्पत्तेर्लोकसिद्धत्वेन प्रोक्षणाद्यजन्यत्वात् । अवघातजन्यत्वेऽपि तन्नियमाजन्यत्वस्य तुल्यत्वाच्च । नाऽऽन्त्यः; व्रीहीणामपूर्वाजनकत्वात् । परम्परासम्बन्धाङ्गीकारेऽपि(१) विवक्षितरीत्या प्रधानतदपूर्व(२)जनकस्यैवाऽदृष्टोपायापेक्षितत्वेन तत्रैव प्रोक्षणादीनां योग्यताजनकत्वस्य कल्पनीयत्वात् । अत उत्पत्त्यपूर्वजनकप्रधानगतयोग्यतासम्पादकफलकानां प्रोक्षणादीनां साक्षात्तत्फलकत्वायोगादवान्तरोपकारद्वारेण तदित्याश्रीयते । स चाऽवान्तरोपकारः क्वचिददृष्टरूपो यथा–प्रोक्षणादिषु । क्वचिद्दृष्टरूपो यथा–अवघातादिषु । यत्राऽपि दृष्टरूपस्तत्राऽपि नियमांशेऽदृष्टरूपोऽस्त्येवेति (३)वक्ष्यते । उभयविधोपकारश्चाऽयं व्रीह्यादिगताक्रियाजन्यातिशयशालिस्वरूपकर्मत्वनिर्वाहाय व्रीह्यादिगत एव कल्प्यते, न तु प्रयाजादिवदात्मनिष्ठः ।

अत एव वपनादिजन्यस्याऽदृष्टस्याऽऽत्मगतत्वेऽपि संस्कार्यत्वादात्मनः कर्मत्वाविघातः । दृष्टरूपस्य तु वितुषीभावादेर्व्रीह्यादिनिष्ठत्वं प्रत्यक्षसिद्धमेव । अवघातादिनियमादृष्टस्याऽपि 'यदर्था क्रिया तदर्थो नियम' इति न्यायेन व्रीह्यर्थतावधारणाद्व्रीहिनिष्ठत्वमेव । न चैवं व्रीह्यादिनाशे तन्नाशापत्तिः, व्रीहिनाशेऽपि तददृष्टस्य व्रीह्यवयवनिष्ठत्वकल्पनात् । अतः पुरोडाशप्रकृतिप्रोक्षणादिजन्यमपूर्वं विषयतासम्बन्धेन पुरोडाशद्वारा विभागे उत्पत्त्यपूर्वानुकूलां योग्यतामादधातीति सिद्धम् ।

---

१. विवक्षितगत्येति. क. ख. पु. २. जन्यजनकभावस्येति. क. ख. पु.
३. अनन्तराधिकरणे स्पष्टमिदम्.

नुक्तन्यायेनाऽवघातनियमादृष्टस्योपयोगसम्भवेऽपि दधि-वृषीमादिनियमादृष्टानां न तत्सम्भवः, तद्धि यागे कृते नियमेनो-त्पद्येत । अतश्च प्रथमक्षणे यागोत्पत्तिः, द्वितीयक्षणे अदृष्टं, तृती-यक्षणे च तेन योग्यता, तेन चतुर्थक्षणे यागस्य नष्टत्वात् नाऽपू-र्वोत्पादकत्वसम्भव इति चेत्—न; नियमादृष्टं हि न नियमज-न्यं, किन्त्ववघातजन्यमेव । वितुषीभावे तूद्देश्यताऽप्याधिकेति पर (१)वक्ष्यते । अतश्च तुल्यन्यायत्वाद्दध्यादिभिर्यागे जन्यमाने तस्मिन्नेव क्षणे तैरदृष्टमपि, द्वितीयक्षणे तेन यागे योग्यता, तृतीयक्ष-णे च योग्येन तेनोत्पत्त्यपूर्वं यागनाशश्चेति न किञ्चिदनुपपन्नम् ।

अत एव तददृष्टस्य न दध्यादिनिष्ठता, तस्य यागसमान-काल एव प्रक्षिप्यमाणत्वेन तन्नाशे नाशापत्तेः । अपि तु याग-निष्ठता आत्मनिष्ठता वा । येषां तु प्रधानसमकालानां तदुत्तर-भाविनां वा प्रक्षेपस्विष्टकृदादिभक्षाणां प्रतिपत्तित्वेन नोत्पत्त्य-पूर्वोत्पत्त्युपयोगिप्रधानगतयोग्यताजनकत्वसम्भवः, तेपामपि पर-मापूर्वजननानुकूलोत्पत्त्यपूर्वगतयोग्यताजनकत्वेन वा उत्पत्त्यपूर्व-स्थापकत्वेनैव वोपयोगो द्रष्टव्यः। अत एव तन्नियमापूर्वमप्यात्म-गतमेव कल्प्यते, न तु संस्कार्यत्वेऽपि द्रव्यगतम् , तस्य प्रतिपत्ति-नाश्यत्वेनाऽपूर्वाधारत्वानुपपत्तेः । संस्कार्यत्वं च तत्र दृष्टरूपसं-स्काराश्रयत्वादेवोपपन्नमिति न कश्चिद्विरोधः । तदेवमङ्गानां प्र-कारभेदे सत्यपि सर्वेषां साक्षात्परम्परया वा करणानुग्राहक-त्वात्तादितिकर्तव्यतात्वोपपत्तिः ।

तत्सिद्धं नष्टेऽपि व्यापारिणि फलबलेनाऽऽश्रयान्तरकल्प-नोपपत्तेरपूर्वव्यापारेणैव यागादीनां फलजनकत्वमिति । तद्यत्र एकमेव प्रधानं पूर्वोत्तराङ्गविशिष्टं फलसाधनं तत्र प्रधानानन्तर-

१. अनन्तराधिकरणे स्पष्टमिदम् .

क्षणे एकमपूर्वमपरं च सर्वाङ्गसमाप्त्युत्तरं परमापूर्वम् । एवं यत्र प्रधानान्यनेकानि तत्राऽपि तावन्त्युत्पत्त्यपूर्वाणि, एकं परमापूर्वमित्युत्सर्गः । यत्र तु दर्शपूर्णमासादौ पौर्णमास्यां दर्शे च साङ्गत्रिकद्वयानुष्ठानम्, तत्रैकैकस्मिन्समुदाये उत्पत्त्यपूर्वन्नयेन सर्वाङ्गकरणात्तैरेकैकं समुदायापूर्वं जन्यते । ततश्च समुदायद्वयान्ते ताभ्यामेकं परमापूर्वमिति विशेषः । अत एवाऽऽरादुपकारकाङ्गानामपि तत्तत्समुदायापूर्व एवोपयोगकल्पनात्समुदायद्वयेऽपि पुनः पुनरनुष्ठानमङ्गानां न विरुध्यते ।

न च द्विरङ्गानुष्ठानस्य परपूर्व एवोपयोगसम्भवात्समुदायापूर्वकल्पने मानाभावः, "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति वाक्यद्वयावगतकरणत्रयसाहित्यस्यैव मानत्वात् । यद्यपि चोत्पत्तिवाक्ये प्रत्येकमेव करणत्वादत्राऽपि न(१)त्रिकानिष्ठं व्यासज्यवृत्त्येकं तत्, तथाऽपि करणतात्रयसाहित्यस्योपादेयगतस्यैककार्यनिरूपितत्वमावश्यकम्, अन्यथा चित्रासौर्यादाविव साहित्यव्यवहारानुपपत्तेः । अत एव सम्भूयैककार्य(२)कारित्वमेव साहित्यपदार्थः । इदं च न फलनिरूपितम्, करणत्रयसाहित्यस्यैव तदङ्गत्वात् । अत एव न परमापूर्वनिरूपितम् । नाऽप्युत्पत्त्यपूर्वनिरूपितम्, तस्यैककरणजन्यत्वात् । अतस्तत्तद्वाक्ये करणत्रयसाहित्यस्याऽपि कार्यापेक्षायां समुदायापूर्वद्वयसिद्धिः । अत एव सान्नाय्ये दधिपयसोस्सम्प्रतिपन्नदेवताकत्वेन सहानुष्ठानादेकमेवाऽपूर्वमस्त्वित्यपास्तम् । तच्चदुत्पत्तिवाक्ये निरपेक्षकरणत्वस्य निरूपकापेक्षायामन्यासम्भवेनैवाऽपूर्वद्वयसिद्धेः । एवमग्निहोत्रचातुर्मास्यादिष्वपि सायं प्रातरादिवाक्येषु करणत्वेन प्रयोगविधानात्समुदा-

१. त्रिषु व्यासज्येति, क. ख. पु. २. जनकत्वमेवेति. क. पु.

वापूर्वसिद्धिः ।

अग्निहोत्रे तु सत्यपि कर्मैकत्वे देवतासमुच्चयाद्यनुरोधेना-ऽभ्यासाद्युत्पत्त्यपूर्वभेदावगमात्कालभेदेन समुदायापूर्वभेदात्तदुत्तरं परमापूर्वोत्पत्तिरिति द्रष्टव्यम् । सोमे तु सत्यप्यभ्यासादुत्पत्त्यपूर्वभे-दे समुदायापूर्वाभावात्तदुत्तरमेव परमापूर्वोत्पत्तिः । द्वादशाहादौ तु तत्तदहर्वाक्यगतकरणत्वबलेन तत्तत्सुत्यापूर्वाण्यपि तत्तदहर्यज्य-भ्यासोत्पत्त्यपूर्वजन्यानि कल्प्यन्त इति तैरेव परमापूर्वसिद्धिः ।

ननु कल्प्यन्तां तत्र तत्रोत्पत्त्यपूर्वाणि, करणत्वबलेन वा समुदायापूर्वाणि, परमापूर्वं तु नैव किञ्चित्प्रमाणं पश्यामः । तथाहि—यत्र तावदस्ति समुदायापूर्वं, तत्राऽऽरादुपकारकाणां तत्रैवोपयोगान्नाऽतिरिक्तापूर्वान्तरकल्पनायां प्रमाणमस्ति । यत्रा-ऽपि च न समुदायापूर्वं, तत्राऽप्युत्तराङ्गैरुत्पत्त्यपूर्वैरेव फलजन-नानुकूलयोग्यतासम्पादनोपपत्तेर्नाऽतिरिक्तापूर्वकल्पनम् । यत्र नैवाऽऽरादुपकारकाण्युत्तराङ्गानि सन्ति, तत्र परमापूर्वकल्पनायां किं प्रमाणम् ? यदि चाऽङ्गवैयर्थ्यानुपपत्त्या परमापूर्वं कल्प्येत, ततो विकृतिषु परमापूर्वकल्पनाभावेन द्वारलोपान्नाऽङ्गानि प्रा-प्नुयुः । अतः किं परमापूर्वसद्भावे प्रमाणमिति चेत्—न; दर्शपू-र्णमासादौ तावत्फलवाक्ये साहित्यविशिष्टानां षण्णां यागकर-णतानां फलनिरूपितत्वावगमात्तस्य च व्यापारमन्तरेणाऽनुपप-त्तेः(१) तदपेक्षायां परमापूर्वकल्पनोपपत्तेः । न हि तत्रोत्पत्त्य-पूर्वाणां समुदायापूर्वयोर्व्यापारत्वं सम्भवति, तेषां षट्साहित्या-वच्छिन्नजन्यत्वाभावात् । फलनिरूपकतावच्छेदकावच्छिन्नजन्य-स्यैव व्यापारत्वौचित्यात् । यद्यपि चाऽत्र प्रतियागं करणताभेदः, तदवच्छेदकानि चाऽऽग्नेयादीनि भिन्नान्येव, तथाऽपि सर्वासु करणतास्वेका फलनिरूपकता,(२) फलस्यैकत्वात् । तदवच्छे-

१. तदपेक्षायामेवेति. क. ख. पु. २. फलस्यैकत्वादिति. ख. पु.

दकश्च यदङ्गसाहित्यम् । न च तदवच्छिन्नजन्यत्वमुत्पत्त्यपूर्वादीनां सम्भवति । अतस्तेषां व्यापारत्वायोगात्परमापूर्वसिद्धिः ।

न चैवं समुदायादिवाक्येष्वपि करणत्वश्रवणात्तस्य च कार्यनिरूपितत्वात्स्वकार्यरूपापूर्वकल्पनद्वारा व्यापारापेक्षायां व्यापाररूपाणामप्यपूर्वान्तराणां कल्पनापत्तिः, अनेकापूर्वकल्पना(१)भिया समुदायादिवाक्येषु साधकतमत्वापरपर्यायानन्तरकार्योत्पादकत्वरूपस्यैव करणत्वस्य विवक्षितत्वात् । अनुशिष्टैव हि तादृशकरणतायां तृतीया पाणिनिनाऽपि । फलवाक्ये तु फलस्य कालान्तरभावित्वेन तादृशकरणत्वस्य बाधाद्व्यापारवदसाधारणकारणत्वरूपा करणता वाच्या । न चाऽसौ व्यापारमन्तरेण सिध्यतीत्युक्तविधया परमापूर्वसिद्धिः ।

एवमङ्गानामपि परस्परसाहितानामेव प्रयोगविधिबलेन प्रधानोपकाररूपफलजनकत्वावगमात्तस्य चाऽव्यवधानेनाऽनुपपत्तेर्व्यापारापेक्षायामवान्तरोपकारकाणां साहित्यावच्छिन्नाजन्यत्वेन व्यापारत्वायोगात्परमापूर्वस्थानापन्नमेकमपूर्वं व्यापारत्वेन कल्प्यते । (२)पार्थसारथेस्त्वेतदनिच्छतः परमापूर्वमपि न सिध्येदिति ध्येयम् ।

यत्र त्वेकमेव प्रधानं पूर्वोत्तराङ्गविशिष्टफलजनकत्वेन

---

१. गौरवाभियेति. क. ख. पु.

२. मिश्राणामयमाशयः—आग्नेयादिषु प्रधानेषु फलाकाङ्क्षाया उत्कटत्वात् फलस्य च कालान्तरजन्यत्वात् कथमस्माभिः कालान्तरजन्यं स्वर्गरूपं फलं साधनीयमिति सर्वसाध्यैकपरमापूर्वकल्पकजिज्ञासोदयात्तत्र तत्कल्प्यते । तथा सर्वेष्वप्यङ्गेषु अन्वाधानादिब्राह्मणतर्पणान्ताङ्गानुष्ठानाव्यवहितोत्तरमेव तज्जन्यस्य क्रतूपकारस्योत्पत्तेः, कथमस्माभिः कालान्तरभाविक्रतूपकारस्सम्पाद्य इति जिज्ञासा नोदेति, किन्तु कथं साहित्यमस्माकमित्येव जिज्ञासा । सा च तत्तत्मातिरिक्तापूर्वकल्पनामात्रेणैव शाम्यतीति न परमापूर्वस्थानापन्नमेकमपूर्वं कल्प्यत इति ॥

श्रूयते, तत्र फलस्य कालान्तरभावित्वेन व्यापारापेक्षायां कल्पि-तस्याऽपूर्वस्याऽपि साङ्गप्रधानोत्तरकालोत्पत्तिकत्वावगतेर्युक्ता तत्राऽपि परमापूर्वसिद्धिः ।

न च तत्राऽऽवश्यकत्वेनोत्पत्त्यपूर्वेणैव फलसिध्युपपत्तेरपू-र्वान्तरकल्पने गौरवमिति वाच्यम् । (१)साङ्गस्य फलजनकत्व-श्रवणान्यथानुपपत्त्या कल्पितस्याऽप्यपूर्वस्य साङ्गप्राधानानन्तर-मेवोत्पत्तिसम्भवेन गौरवस्याऽपि प्रामाणिकत्वात् ।

न च औत्तरकालिकेनाऽपि गौरवप्रतिसन्धानेन पूर्वप्रमि-तस्याऽपि साङ्गप्रधानानन्तर्यस्य बाध एव किं न स्यादिति वा-च्यम् ? तथात्वे श्रुतायास्साङ्गफलकरणताया एव बाधापत्तेः ।

अस्तु वा तादृशस्थले उत्पत्त्यपूर्वादेव फलम्, अङ्गानां च फलानुकूलयोग्यताजनकत्वम् । न चैवं विकृतिषु परमापूर्वाभा-वादतिदेशानापत्तिः, प्रकृतावुत्पत्त्यपूर्वगताव्यवहितकार्यजननानु-कूलयोग्यताजनकत्वस्यैवाऽऽराद्युपकारकाङ्गकार्यत्वेन विवक्षित-त्वात् । तच्चोत्पत्त्यपूर्वा(२)व्यवहितं क्वचित्समुदायापूर्वं, क्वचित्प-रमापूर्वं, क्वचित्फलमेवेति युक्तोऽतिदेशः । उक्तश्चाऽयमपि पक्षो वार्तिककृता 'केचिदाहु' रित्यादिना । अत एव दर्शपूर्णमासा-दिष्वपि परमापूर्वं विनैव क्लृप्तापूर्वैरेव फलसिद्धेर्न तत्कल्पनमि-त्यपि सुवचम् । सर्वथा सिद्धमपूर्वम् ।

अस्य चाऽधिकरणस्याऽऽक्षेपसमाधानरूपत्वान्न स्वातन्त्र्येण प्रयोजनकथने यतितव्यम् । सूत्रं तु—आरभ्यत इति आरम्भः अपूर्वं, तत्पुनः उत्पाद्यते यागेन । यतो यागस्वर्गसाध्यसाधन-भावस्य वाक्येन चोदनेति व्याख्येयम् ॥ ५ ॥

इति तृतीयमपूर्वाधिकरणम् ॥ ३ ॥

---

१. यागस्येति. क. पु. २. व्यवहितं कार्यमिति. क. ख. पु.

## अथ चतुर्थं तानिद्वैधाधिकरणम् ॥ ५ ॥

# तानि द्वैधं गुणप्रधानभूतानि ॥ २-१-७ ॥

( विषयसंशयौ )

एवं तावत्सिद्धमपूर्वम्, तच्च धात्वर्थादेवेत्यपि, धात्वर्थस्याऽपूर्वजनकत्वे द्रव्यादेस्तदर्थत्वमित्यपि च। इदानीं तद्व्यवादः स्तूयते। "व्रीहीनवहन्ति" "तण्डुलान् पिनष्टि" इत्यादाववघातपेषणादीनां स्वतन्त्रापूर्वार्थत्वं, व्रीह्यादेस्तु तदर्थत्वम्? उत तेषां वैतुषीभावादिरूपप्रयोजनलाभान्नाऽदृष्टार्थत्वम्, व्रीह्यादेस्तु अवघातादीन्प्रति प्राधान्यादेव न तदर्थत्वम्? इति विचार्यते।

( सङ्गतिः )

सति च दृष्टार्थत्वे धात्वर्थभावनाभेदसत्त्वेऽप्यपूर्वभेदाभावात् अपूर्वभेदोपयोगिचिन्तनात्मकत्वेन पादाध्यायसङ्गत्यविघातः।

( पूर्वपक्षः )

तत्र 'अवहन्ती'(१)त्यवघातभावनाया अन्योत्पादकस्वभावत्वेन जन्यभाव्यापेक्षायां सत्यपि व्रीह्यादीनां द्वितीयया कर्मत्वावगमे तेषामवघाताद्यजन्यत्वेन भाव्यत्वायोगाज्ञ तावदवघातो व्रीह्यर्थः। न च स्वरूपेण व्रीहीणामजन्यत्वेऽपि वैतुष्यविशिष्टत्वेन भाव्यत्वोपपत्तिः, वितुषीभावजनकत्वेनाऽवघातस्य लोकत एव प्राप्तत्वेन तदंशे विधि(२)वैयर्थ्यात्।

न च लोकतो विदलनादेरपि प्राप्तत्वेन तन्निवृत्तिफलकस्य नियमस्यैवाऽयं विधिरस्त्विति वाच्यम्। तर्हि नियमेन वितुषीभावस्याऽव्यजननात्तद्वैशिष्ट्यरूपेणाऽपि व्रीहीणां नियमं प्रति भाव्य

१ त्यत्र भावनाया इति ख. पु. २. वैफल्यादिति ख. पु.

तानुपपत्तेः। (१)न च नियमं प्रति वितुषीभावाविशिष्टत्वेन भाव्यतानुपपत्तावप्यदृष्टविशिष्टत्वेन भाव्यत्वोपपत्तिः, अशाब्दनियमादृष्टकल्पनापेक्षया शाब्दादवघातादेव तत्कल्पनस्योचितत्वात्।

न चाऽस्तु तर्ह्यवघातादेव व्रीहिनिष्ठादृष्टकल्पनमिति न व्रीहीणामवघातार्थत्वसिद्धिः, अदृष्टे आत्मनिष्ठत्वेन प्रयाजादिजन्यादृष्टवदनपेक्षिताश्रये व्रीह्याश्रयत्वकल्पनापेक्षया अवघात एव द्रव्यापेक्षे व्रीहिरूपद्रव्यविधिप्रतीतेः। अत एवाऽपेक्षितविधिलाभाय प्रयाजशेषाभिघारण इव लक्षणया द्वितीयाविभक्तिः करणत्वपरा अनीप्सितकर्मत्वपरा वा नीयमाना न दुष्यति।

न च तवाऽपि व्रीहिविधेस्तन्नियमाविधेर्वा अवघातविधिवदेवाऽनुपपत्तिस्तुल्येति वाच्यम्। अवघातजन्यादृष्टं प्रत्येव व्रीहिनियमविधेरुपयोगोपपत्तेः। त्वया त्ववघातस्य व्रीहिसाध्यापूर्वं प्रत्युपयोगाङ्गीकारे व्रीहिसाध्यस्य यागजन्यापूर्वस्य यागभावनायामेव भाव्यत्वेनाऽन्वयान्नाऽवघातभावनायां भाव्यत्वेन तदन्वय इत्यवघात(२)जन्येप्सितरूपभाव्याभावप्रसङ्गः। तस्माद्व्रीहिविशिष्टोऽवघात एव प्रयाजादिवददृष्टार्थं विधीयत इति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—यत्र दृष्टप्रयोजनं न सम्भवति तत्र युक्ता अदृष्टस्याऽपि कल्पना आत्मनिष्ठस्याऽपि। यत्र तु दृष्टप्रयोजनसम्भवः यथा प्रकृते, न तत्राऽऽत्मनिष्ठादृष्ट(३)कल्पना। अत एवोभयत्र क्रियां प्रति द्रव्यस्य यथायथं गुणत्वं प्राधान्यं च, क्रियायाश्च द्रव्यं प्रति प्राधान्यं गुणत्वं च। अतो धात्वर्थरूपक्रियाप्रतिपादकान्याख्यातान्तानि पदानि यथासम्भवं गुण-

---

१. न हीति. ग. पु. २. विधौ जन्येति. क. ख. पु.
३. कल्पनमिति. ख. पु.

प्रधानभावेन द्विविधानि विज्ञेयानीति सूत्रार्थः ॥ ७ ॥

## यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ २-१-८ ॥

नन्वेवमपि क्व दृष्टप्रयोजनासम्भवेन प्रधानकर्मता, क्व वा तत्सम्भवेन गुणकर्मत्वमित्याशङ्क्य पूर्वपक्षयुक्तप्रयाजदृष्टान्तवैषम्यप्रदर्शनार्थं चाऽनेन सूत्रेण प्रधानकर्म(१)लक्षणमुच्यते । येषां हि यागीयद्रव्यदेवतादिसंस्कारार्थत्वं तदङ्गताबोधकप्रमाणाभावेन नेष्यते, तानि कर्माणि स्वतन्त्रात्मनिष्ठादृष्टजनकानि सन्ति द्रव्यादि प्रति प्रधानभूतानि । द्रव्यादीनि च तत्र 'सिद्धसाध्यसमभिव्याहारे(२) सिद्धं साध्यायोपयुज्यत' इति न्यायेन तृतीयाश्रुत्यैव वा क्रियां प्रति च गुणभूतम् ॥ ८ ॥

## यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ २-१-९ ॥

येषां तु यागीयद्रव्यादिसंस्कारार्थत्वं प्रमाणवशेन निर्ज्ञातं तेषां दृष्टप्रयोजनासम्भवे 'व्रीहीन् प्रोक्षती'त्यादावदृष्टद्वाराऽपि यदा द्रव्यसंस्कारार्थत्वं प्रोक्षणादेरभ्युपगम्य द्रव्यं प्रति गुणकर्मत्वमुत्तराधिकरणे उपपादयिष्यते, तदा को नाम 'व्रीहीनवहन्ती'त्यादौ पुरोडाशनिष्पत्त्यौपयिकवितुषीभावरूपद्रव्यप्रयोजनलाभसम्भवे अदृष्टकल्पनया प्रधानकर्मत्वमापादयितुं समर्थः ? अत एव तत्र भावनाभाव्यमपि वितुषीभावविशिष्टत्वेन व्रीहय एव ।

---

१. कर्मणो लक्षणमिति. ग. पु.
२. सिद्धं साध्यार्थमिति न्यायेति. क. ख. पु.

चतुर्विधं हि सर्वत्र भाव्यमिष्यते--किञ्चित्स्वत एवोत्पाद्यत्वेन, यथा—संयवनेन पिण्डः। किञ्चिदाप्तिविषयत्वेन, यथा—दोहनेन पयः। किञ्चिद्विकाराविशिष्टत्वेन, यथा—अवघातेन व्रीहयः। तत्र वितुषीभावाख्यो विकारो जन्यते। किञ्चिच्च संस्कारविशिष्टत्वेन। यथाऽत एव प्रोक्षणेनाऽदृष्टरूपसंस्कारजननात्। अतश्च व्रीहीणां स्वरूपेण भाव्यत्वायोगेऽपि युक्ता वितुषीभावविशिष्टत्वेन भाव्यता।

न च वितुषीभावसाधनत्वस्य लोकत एव प्राप्तत्वाद्विधिवैयर्थ्यम्। लोकस्याऽव्यभिचरितान्वयव्यतिरेकग्रहसापेक्षत्वेन विलम्बितत्वात्ततः पूर्वमेव विधिवाक्येन तद्विधानात्। तत्प्रयोजनं च विदलनादिव्यावृत्तिफलको नियमः। तस्याऽपि च प्रयोजनं दृष्टाभावाददृष्टम्। तस्य चाऽदृष्टस्य(१) वितुषीभावप्रयुक्तावघातोपजीविनियमजन्यत्वान्न कृष्णलचरौ वैतुष्यासम्भवे नियमावघातप्रयोजकत्वम्। यदि त्वशाब्दस्य नियमस्याऽदृष्टजनकत्वानुपपत्तिराशङ्क्येत, ततो विधेयादवघातादेवाऽदृष्टं कल्प्यते। तच्च वितुषीभावस्य मुख्यफलत्वेऽप्यानुषङ्गिकत्वेन कल्प्यते, न त्वनुष्ठापकत्वरूपमुख्योद्देश्यतया, गौरवापत्तेः। अत एव कृष्णलचरौ वैतुष्याभावेनाऽदृष्टानुरोधेनाऽवघातानुष्ठानम्। उद्देश्यतावैजात्याच्च नोद्देश्यानेकत्वनिमित्तको वाक्यभेदोऽपि। आर्थिकविध्यन्तरफलत्वाद्वा न सः। अदृष्टस्याऽननुष्ठापकताऽपि चैतादृशी—यद्वैतुष्याभावे तस्याऽननुष्ठानं, न तु वैतुष्यसम्भवेऽपि तत्, विदलनादेरप्यनुष्ठानापत्तेः। अत एव तद्व्यावृत्तिफलकनियमफलकत्वान्नियमादृष्टत्वव्यवहारः।

ननु (२)नवमाधिकरणन्यायेन व्रीहिपदेऽपूर्वसाधनत्वलक्ष-

---

१. वितुषीभावफलावघातेति ग. पु. २. पू. मी. ९. १. १.

णाया आवश्यकत्वादवघातविधेर्व्रीहिस्वरूपे वितुषीभावस्वरूपे वाऽऽनर्थक्येऽपि तज्जन्यप्रधानापूर्वस्याऽवघातं विनाऽनुत्पत्तेस्तदुत्पत्त्यर्थत्वेनाऽवघात(१)विधिसार्थक्यात्कृतं नियमादृष्टेन। (२)नियमादृष्टकल्पने वा तेनैवाऽऽनर्थक्यपरिहारोपपत्तेः कृतमपूर्वसाधनत्वलक्षणयेति चेत्--न; अवघातं विना विदलनादिना वितुषीभावसत्त्वेनाऽपूर्वानुत्पत्तौ प्रमाणाभावात्। न चाऽवघाताभावे तज्जन्यवितुषीभावाभावात्सामग्र्यभावः, अवघातविदलनजन्यवितुषीभावव्यक्त्योर्वैजात्ये प्रमाणाभावेनाऽवघाताभावेऽपि तज्जन्यवितुषीभावसत्त्वात्सामग्र्यभावासिद्धेः।

न च कार्यकारणभावे व्यभिचारपरिहारार्थमेव वैजात्यकल्पना, अनेककार्यकारणभावादिकल्पनागौरवभिया द्वयोरेकशक्तिमत्त्वेन कारणताङ्गीकारात्। यत्र तु व्रीहियवादिवाक्ये कारणताद्वयं (३)प्रमाणसिद्धं तत्रैव परमाग्नेयादौ वैजात्यकल्पनमिति (४)तेषामर्थाधिकरणे वक्ष्यते, न त्वत्र। अतश्चाऽपूर्वसाधनत्वलक्षणायामप्यवघातविधिवैयर्थ्यस्य तदवस्थत्वादवश्यमवघातेन वैतुष्यवददृष्टमपि व्रीहिनिष्ठमाधेयम्। अन्यथा अवघातस्याऽपूर्वसाधनत्वानुपपत्तेः।

न चैवमपूर्वसाधनत्वलक्षणावैयर्थ्यम्, नियमादृष्टस्याऽपि व्रीहिस्वरूपे अनुपयोगित्वेन प्रधानापूर्वार्थत्वावश्यंभावात्। अतासिद्धा अवघातस्य नियमादृष्टजनकत्वेऽपि दृष्टवितुषीभावद्वारा व्रीह्यर्थता, योग्यतारूपालिङ्गात्, द्वितीयाश्रुतेर्नियमविधिलाघवाच्च। एवं च द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम्। इतरथा विशिष्टविध्याश्रयणात्पञ्चमप्रकाराङ्गीकरणे गौरवं स्यात्। तस्मान्नाऽव-

---

१. विधेस्सार्थक्येति. क. ख. पु. २. अवश्यं वा नियमेति. क. पु.
३. प्रमाणसिद्धमिति नाऽस्ति. क. पु. ४. पू. मी. ३. १. ४.

घातप्रयोजनीभूतादृष्टकल्पनम् । अतश्चैतादृशस्थले धात्वर्थ-भावनाभेदसत्त्वेऽपि न प्रयोजनीभूतापूर्वभेदः ।

प्रयोजनं पूर्वपक्षे(१) 'प्रैयङ्गवश्चरुर्भवती'त्येतद्वाक्यविहिते यागे यागीयहविःप्रकृतिभूतव्रीह्यभावेऽप्यतिदेशप्राप्तावघाताङ्गत्वेन व्रीहयस्सम्पाद्या एव । यथा—अतिदेशप्राप्तप्रयाजाद्यङ्गत्वेनाऽऽज्यम् । न च प्रकृतौ निर्वापोत्तरकालमवघातानुष्ठानादवघातस्य परप्रयुक्तव्रीह्युपजीवित्वावगतेः प्रैयङ्गवचरौ तदभावे अवघा-तस्याऽननुष्ठानमेव स्यान्न तदनुरोधेन व्रीहिसम्पादनमिति वाच्यम् । अवघातस्य वाजिनादिन्यायाविषयत्वेन परप्रयु-क्तव्रीह्युपजीवित्वासिद्धेः ।

तथा हि--न तावत्(२)वाजिनन्यायविषयत्वम् , दध्यानयनस्य ह्यामिक्षार्थत्वं वाक्यीयं, न वाजिनार्थत्वम् । अत आमिक्षाप्रयु-क्तदध्यानयनानुनिष्पन्नत्वाद्वाजिनस्य न दध्यानयनप्रयोजकतेति हि तन्न्यायः । न चाऽऽसौ प्रकृते समस्ति, व्रीहीणां यागाङ्गत्व-स्येवाऽवघाताङ्गत्वस्याऽपि वाक्यीयत्वाविशेषात् , वाजिनवद-वघातस्याऽनुनिष्पन्नत्वाभावाच्च ।

नाऽपि (३)पदकर्मन्यायः, तत्र हि 'तेनाऽक्षमुपाञ्ज्यादि'ति तच्छब्दस्य 'सप्तमं पदमध्वर्युरञ्जलिना गृह्णाती'त्यत्र च पदश-ब्दस्य सापेक्षत्वाद्युक्तं परप्रयुक्तक्रयाङ्गभूतैकहायनीनयनोपजी-वित्वम्, प्रकृते तु व्रीहिशब्दस्य प्रकृतानपेक्षत्वान्न यागीयव्रीह्युप-जीवितेति विशेषः । 'पुरोडाशकपालेने'तिवच्च प्रयोजकयुक्ता-भिधानाभावान्न (४)पुराडोशकपालन्यायः । व्रीहिशब्दस्य सस-

---

१. तै. सं. २. २. ११. ४. २. पू. मी. ४. १. ९.
३. पू. मी. ४. १ १० ४. पू. मी. ४. १. ११.

म्बन्धिकत्वाभावात् न(१)उत्तरार्थन्यायोऽपि । (२)निनयनन्यायस्तु प्रतिपत्तित्वाभावादेवाऽनाशङ्क्यः। न च गुणस्य गोदोहनादेः परप्रयुक्ताश्रयोपजीवित्वेनाऽऽश्रया(३)प्रयोजकत्वादवघातस्याऽपि यागप्रयुक्तव्रीह्याश्रयत्वात्तदप्रयोजकत्वमिति वाच्यम् । प्रणयनादेर्हि गुणाङ्गत्वे प्रमाणाभावेन गुणस्य तत्प्रयोजकत्वानुपपत्तेर्युक्ता तस्य परप्रयुक्तोपजीवकता । व्रीहीणां तु यागाङ्गत्वस्येवाऽवघाताङ्गत्वस्याऽपि वाक्यीयत्वाविशेषाद्विनिगमनाविरहेणैकस्येतरप्रयुक्तोपजीवकत्वानुपपत्तेः ।

न च निर्वापेण व्रीहीणां यागीयत्वनिश्चयाद्यागप्रयुक्तत्वावगतेर्विनिगमकसत्त्वेन तदुत्तरभाविनोऽवघातस्य तदुपजीवकत्वोपपत्तिः, एतत्पूर्वपक्षे निर्वापस्याऽप्यारादुपकारकत्वेनाऽवघाततुल्यत्वात्तेन व्रीहीणां यागीयत्वनिश्चयानुपपत्तेः। न च निर्वापार्थमुपात्तानां तदुपादानलाघवेन ग्रहणोपपत्तेरवघातस्याऽन्यानाक्षेपकत्वम्, निर्वापसाधनानां तदवशिष्टानां च सन्निहितत्वाविशेषेणोपादानलाघवस्याप्यनियामकत्वात्, निर्वापे कृते तत्साधनानामपि लौकिकत्वाविशेषाच्च । अत एव क्लृप्तसामान्यसम्बन्धत्वादाग्नेयीन्यायेन निर्वापसाधनानामेव ग्रहणमित्यपास्तम् । निर्वापे कृते तत्साधनीभूतव्यक्तिविशेषस्य लौकिकत्वाविशेषेण सामान्यसम्बन्धाक्लृप्तेः । व्रीहिजातीयस्य तु सामान्यसम्बन्धो निर्वापवाक्य इवाऽवघातवाक्येऽपि तुल्य एव । आग्नेयीवाक्ये हि न(४)मन्त्रविशेषोपादानम्, अपि तु स्तोत्रादिसम्बन्धेनैव तत् । प्रकृते तु यथैव निर्वापवाक्ये व्रीह्युपादानं

१. पू. मी. ४. १. १३. २. पू. मी. ४. २. ५.

३. प्रयोजकत्ववदवघातेति क. ख. पु.

४. क्लृप्तसामान्यसंबन्धेन मन्त्रविशेषेति क. ख. पु.

तत्तथैवाऽवघातवाक्येऽपीति नाऽत्राऽऽग्नेयीन्यायप्रवृत्तिः ।

न चैवमपि सिद्धान्तवत्पूर्वपक्षेऽपि प्रकरणेन प्रकृतव्रीहिग्रहणोपपत्तिः, प्रकरणं हीतिकर्तव्यताकाङ्क्षारूपं व्रीहिपदसङ्कोचकत्वेनाऽभ्युपगम्यते ? अधिकारात्मकं वा ? नाऽऽद्यः, तस्य विनियोगातिरिक्ते अप्रवृत्तेः । इतिकर्तव्यताकाङ्क्षया हीतिकर्तव्यतात्वमेवाऽवगम्यते, न तु पदसङ्कोचाद्यपि । न द्वितीयः तस्य (१)'तुल्येषु नाऽधिकारस्स्यादि'त्यत्र नैराकाङ्क्ष्ये सत्यसङ्कोचकत्वस्य वक्ष्यमाणत्वात् । अत एव यत्रोपादेयेष्वपि 'तेनाऽक्षमुपाञ्ज्यादि'त्यत्र सर्वनाम्नस्साकाङ्क्षत्वं तत्रेष्टमेव प्रकृतग्रहणम् । प्रकृते तु व्रीहिपदस्याऽनपेक्षत्वाधिकारेण सङ्कोच इति प्रकृतौ न निर्वापयागावघातानामेकव्रीहि(२)प्रयुक्तत्वं नियतमिति प्रैयङ्गवचरौ यागार्थव्रीहिलोपेऽपि सिद्धं निर्वापावघाताद्यर्थं व्रीहिसम्पादनम् ।

सिद्धान्ते तु व्रीहीणामवघातं प्रति संस्कार्यत्वाद्व्रीहिस्वरूपार्थत्वे चाऽवघातस्याऽऽनर्थक्यापत्तेरपूर्वसाधनत्वापेक्षायां व्रीहिपदस्य तल्लक्षकत्वे अधिकाराख्यप्रकरणस्य तात्पर्यग्राहकत्वाङ्गीकारात्प्रकृतग्रहणोपपत्तिः । प्रकृतौ च यागीयहविःप्रकृतिद्रव्यसंस्कारस्याऽवघातस्य प्रैयङ्गवचरावतिदेशेन प्राप्तस्य स्थानापत्त्या प्रियङ्गुष्वेवाऽनुष्ठानान्न तदर्थं व्रीहिसम्पादनम् । पूर्वपक्षे चाऽदृष्टार्थत्वादवघातस्य(३) सर्वौषधावघातवत्सकृदेव करणम् । सिद्धान्ते त्वातण्डुलीभावात् । अन्यच्च पूर्वपक्षे यागी-

---

१. जै. सू. ९. १. १९. २. व्यक्तिकत्वं इति. क. पु.

३. अग्निचयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वा अवहन्ति अथैनदुपदधाती'ति वाक्येन विहितो योऽवघातः स सर्वौषधावघातः ।

यद्धविःप्रकृतिद्रव्यस्याऽवघातं विनाऽपि तण्डुलीभावः। प्रकृतौ च प्रयाजादिवदवघातस्य सान्नाय्योपांशुयाजाङ्गत्वाविशेषात्तद्विका-रेष्वप्यतिदेशः। यवपक्षेऽपि व्रीहीणामेवाऽवघातः। त्रयाणामेव च तेषां(१)कपिञ्जलाधिकरणन्यायेन स इति प्रयोजनम्। सिद्धान्ते तु यागीयद्रव्येऽवघातनियमः। प्रकृतौ चौषधद्रव्यकयागाङ्गत्वात्तद्विकारेष्वेवाऽतिदेशः, यवपक्षेऽपि च तेष्वेवाऽवघातान्न तदर्थं व्रीहिसम्पादनम्, चतुर्मुष्टिपरिमितानामेव च यागसाधनत्वात्तावतामेवाऽवघात इति तत्। सूत्रं निगदव्याख्यातम् ॥८॥

इति चतुर्थं तानिद्वैधाधिकरणम् ॥ ४ ॥

अथ पञ्चमं सम्मार्गाधिकरणम् ॥ ५ ॥

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥२-१-९॥

( विषयसंशयौ )

एवं तावद्दृष्टोपकारकत्वलाभाद्गुणकर्मत्वे प्रसाधिते, अधुना दृष्टोपकारकत्वासम्भवेऽपि तदस्ति न वेति विचार्यते। दर्शपूर्णमासयोश्श्रूयते—"स्रुचस्सम्मार्ष्टि" "परिधिं सम्मार्ष्टि" "पुरोडाशं पर्यग्निकरोति" "व्रीहीन् प्रोक्षती"ति। तत्र सम्मार्गादिकं किं स्रुगादिसंस्कारार्थत्वेन विधीयते, अतश्च गुणकर्म? उत स्रुगादिसाधनकं स्वतन्त्रादृष्टार्थं सत्प्रधानकर्म? इति विचार्यते।

( सङ्गतिः )

अत्र च सिद्धान्ते स्रुगादिनिष्ठाधेयशक्तिरूपातिशयसद्भा-

---

१. पू. मी. ११. १. ६.

१० मी० कौ०

वेऽपि तस्याऽऽत्मनिष्ठादृष्टपदवाच्यत्वाभावादपूर्वाभावेन पूर्ववदे- वाऽपूर्वभेदोपयोगिचिन्तनात्मकत्वात्पादाध्यायसङ्गतिः। प्रोक्षणा- देस्संस्कारकर्मत्वे प्रतिपुरोडाशमपूर्वकल्पनाद्वा तद्भेदोपयोगित्वेन सा। अनन्तरा तु पूर्वाधिकरणासिद्धान्तहेतुभूतदृष्टोपकारकत्व- प्रत्युदाहरणरूपेण पूर्वपक्षोत्थानाद्द्रष्टव्या।

( पूर्वपक्षः )

तत्र पूर्वाधिकरणपूर्वपक्षन्यायेनैव स्रुगादेस्सम्मार्गाद्यजन्य- त्वेन भाव्यत्वायोगादवघातवच्च दृष्टोपकारविशिष्टत्वेनाऽपि तदसम्भवात्, स्रुगादिविशिष्टसम्मार्गादिविधानमेव प्रयाजादि- वत् स्वतन्त्रक्रतूपकारभाव्यकं युक्तमाश्रयितुम्। न चाऽवघात- वद्योग्यतारूपलिङ्गात्सम्मार्गादेर्गुणकर्मत्वासम्भवेऽपि द्वितीयया स्रुगादीनां प्राधान्यावगमादर्थात्सम्मार्गादीनां तद्गुणत्वावगते- र्दृष्टोपकाराभावे च तद्बलेनैवाऽदृष्टस्य द्रव्यनिष्ठस्य कल्पनोपप- त्तेर्न स्रुगादिविशिष्टसम्मार्गादिविधानमिति वाच्यम्। द्वितीयायाः प्राधान्यवाचित्वाभावेन गुणकर्मत्वासिद्धेः।

तथा हि—प्राधान्यवाचित्वं किं प्रयोगानुसारादभ्युपगम्यते? अनुशासनानुरोधाद्वा? न तावदाद्यः, "बल्बजान् शिखण्डकान् कुरु" "सक्तून् जुहोति" त्यादौ करणत्व एव द्वितीयादर्शनेन तदसिद्धेः। न ह्यत्र बल्बजादीनां कर्मत्वं सम्भवति, करोतेर्द्वि- कर्मकत्वाभावेन शिखण्डककर्मावरुद्धे तस्मिन् बल्बजानां क- र्मत्वेनाऽन्वयस्य वक्तुमशक्यत्वात्। जुहोतेश्च देवतोद्देश्यकप्रक्षे- पद्रव्यत्यागसमुदायवाचित्वेन सक्तूनां समुदायकर्मत्वानुपपत्तेः, सक्तूनामनीप्सिततत्वेनैकदेशकर्मत्वस्याऽप्यनुपपत्तेश्च। अतोऽत्र बल्बजादीनां द्वितीयया करणत्वमेवाऽङ्गीकर्तव्यम्। ततश्चाऽन्व- यव्यभिचाराद्द्वितीयायाः करणत्व एव शक्तिर्न प्राधान्ये। तथा

'प्रयाजशेषेणे'त्यादौ द्वितीयाभावेऽपि प्राधान्यदर्शनेन व्यतिरेकव्यभिचारादपि तथात्वनिश्चयः ।

न चैवं घटं करोतीत्यादौ करणत्वासम्भवेऽपि द्वितीयादर्शनात्तत्राऽपि व्यभिचारतादवस्थ्यमिति वाच्यम् । विषयतासम्बन्धेन घटादेर्ज्ञानं प्रति करणत्ववत्कृतिं प्रत्यपि तदुपपत्तेः । अतोऽव्यभिचारात्करणत्वमेव द्वितीयार्थः, न तु प्राधान्यमिति प्रयोगानुसारेण निर्णीयते । अत एव प्रयोगविरुद्धमनुशासनमपि(१) 'कर्मणि द्वितीये' त्यादिकं न प्राधान्यवाचित्वे प्रमाणम् । अतो न सम्मार्गादीनां द्वितीयया गुणकर्मत्वप्रतीतिः । नाऽपि सप्रयोजनत्वमात्रेण; पुरोडाशकपालादीनां सप्रयोजनत्वेऽपि तुषोपवापसंस्कार्यत्वाभावात् । अतो गुणकर्मत्वावेदकप्रमाणाभावात्पूर्वाधिकरणपूर्वपक्षन्यायेन स्रुगादिविशिष्टसम्मार्गविधिरेवाऽयम् ।

सूत्रं तु—धर्ममात्रे दृष्टोपकाराजनकसम्मार्गादिरूपे, प्रयाजादिवत् प्रधानकर्मत्वं स्यात्, द्रव्यनिष्ठोपकारस्य तेन अनिर्वृत्तेः इति व्याख्येयम् ॥ ९ ॥

( सिद्धान्तः )

## तुल्यश्रुतित्वाद्वेतरैस्सधर्म स्यात् ॥ २-१-१० ॥

सत्यं (२)दृष्टोपकारकत्वेन नाऽस्याऽवघाततुल्यत्वम्, तथाऽपि द्वितीयाश्रुतितुल्यत्वादवघातादिवद्गुणकर्मत्वं सम्भवत्येव । तथा हि—द्वितीया प्राधान्याभिधायिनी व्रीहीणामिव स्रुगादीनामपि प्राधान्यं प्रतिपादयन्ती अर्थादवघातस्येव सम्मा-

१. पा. सू. २. ३. २.

२. दृष्टोपकारकत्वे प्रयाजवत्ताऽस्येति. क. ख. पु

र्गादीनामपि गुणत्वं गमयति । अतश्च दृष्टोपकारकत्वाभावेऽपि द्वितीयावगतगुणकर्मत्वनिर्वाहार्थं द्रव्यनिष्ठादृष्टोपकारकल्पनेऽपि न क्षतिः ॥ १० ॥

## द्रव्योपदेश इति चेत् ॥ २-१-११ ॥

यत्तु द्वितीयायाः प्राधान्यवाचित्वे प्रमाणाभावात्प्रयोगानुसारेण (१)करणत्वावगतेः सक्तुवत्स्रुगादिद्रव्यस्यैव सम्मार्गादि प्रत्युपदेशो विधानमित्युक्तम्, तत्रोच्यते—

## न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥२-१-१२॥

न करणत्ववाचिनी द्वितीया, प्रमाणाभावात् । अपि तु 'कर्मणि द्वितीये' त्यनुशासनात्कर्मत्वपरैव । न च तस्य निर्मूलत्वम्, घटं करोतीत्यादिप्रयोगस्यैव मूलत्वात् । न ह्यत्र सत्यपि घटस्य विषयतासम्बन्धेन कृतिकरणत्वे तदवभासते, अपि तु कर्मत्वमेवेति सर्वस्वसंवेद्यम् । अतश्च प्रयोगानुगृहीतस्मृत्या कर्मत्वमेव द्वितीयार्थः । न चैवं(२) 'कर्तुरीप्सिततमं कर्म'(३) 'तथायुक्तं चाऽनीप्सित' मित्यादिस्मृत्या कर्मत्वस्याऽनेकविधत्वावगतेरेकत्रैव शक्तिरपरत्र लक्षणेत्यस्य च विनिगमनाविरहेणाऽसम्भवात्सर्वेषामेव वाच्यत्वापत्तौ शक्यतावच्छेदकैक्याभावेनाऽनेकशक्तिकल्पनापत्तेर्गौरवमिति वाच्यम् । लाघवेनेप्सितानीप्सितसाधारण्येन व्याप्यत्वापरपर्यायस्य क्रियाजन्यचतुर्विधफलान्यतमफलाश्रयत्वरूपस्य कर्मत्वस्य, तत्समानियताखण्डोपाधेर्वा द्वितीयावाच्यत्वावधारणात् । ईप्सितत्वानीप्सितत्वयोस्तु प्रमाणान्तरलभ्यत्वेन तत्राऽपि शक्त्यङ्गीकारे गौरवात् ।

---

१. करणत्ववाचित्वेति. क. पु. २. पा. सू. १. ४. ४९.
३. पा. सू. १. ४. ५०

न चैवं व्याप्यं कर्मेत्येव स्मरणापत्तौ सूत्रद्वयवैयर्थ्यापत्तिः,(१) 'वारणार्थानामीप्सित' इति सूत्रात् 'अग्नेर्माणवकं वारयती'त्यत्रोभयोरग्निमाणवकयोर्व्याप्यत्वे ईप्सितत्वे चाऽविशिष्टे तन्निमित्तककर्मसंज्ञाबाधेनाऽपादानसंज्ञापत्तेर्माणवके तां वारयितुमीप्सिततमे तस्मिन् कर्मसंज्ञाविधायकस्याऽऽद्यसूत्रस्याऽऽवश्यकत्वे सति, द्वेष्योदासीनसङ्ग्रहार्थं तथायुक्तसूत्रस्याऽप्यावश्यकत्वात्। एतेन सूत्रद्वयवैयर्थ्यापत्तेः प्रथमोपस्थितत्वादीप्सितकर्मत्व एव शक्तिः, तथायुक्तसूत्रं तु अकथितादिसूत्रवल्लाक्षणिकानुशासनमिति न्यायसुधाकारोक्तमपास्तम्, शक्यतावच्छेदकलाघवसङ्ग्राहकलाघवाभ्यामीप्सितानीप्सितसाधारण्येन व्याप्यत्व एव शक्तिकल्पनेनेप्सितत्वेऽपि तदकल्पनात् । अकथितादिसाधारण्येन तु शक्यतावच्छेदकाभावादगत्या अकथितादिसूत्रस्य लाक्षणिकानुशासनत्वमिति विवेकः ।

न चैवं स्रुगादीनामीप्सितत्वानवगमे कथं प्राधान्यासिद्धिः? द्वितीयया तदनवगमेऽपि विध्यपेक्षितत्वात्तदवगमोपपत्तेः । विधिर्हि चेतनप्रवर्तनात्मा अनीप्सितफले व्यापारे तं प्रवर्तयितुमशक्नुवन् भावनाया ईप्सितजन्यत्वमवगमयति । अतश्चेप्सितजन्यापेक्षायां द्वितीयया जन्यत्वेनाऽवगतानां स्रुगादीनां 'जुह्वा जुहोती'ति शास्त्रान्तरप्रमितेप्सितभावानां भावनाभाव्यत्वेन स्वीकारो नाऽनुपपन्नः । अत एव यत्र 'सक्तून् जुहोती'त्यादौ न शास्त्रान्तरेण विनियोगः सक्तूनाम्, तत्र द्वितीयया व्याप्यत्वमात्रावगमेऽपीप्सितत्वस्य बाधान्न भावनाभाव्यत्वसम्भवः ।

ननु तत्राऽपि द्वितीयावगतव्याप्यत्वनिर्वाहार्थं विध्यपेक्षया

---

१. पा. सू. १. ४. २७.

च सक्तूनां भूते भाविनि वा ज्योतिष्टोमे उपयोगः कल्प्यः। न च निर्व्यापारत्वात्सक्तूनां प्रकरणग्रहणायोगेन कथमुपयोगकल्पनम्? व्यापारान्तरासम्भवेऽपि संस्कारकत्वेनोपस्थितस्य होमस्यैवाऽर्थाद्व्यापारत्वोपपत्तेः। न हि 'अग्नीषोमीयं पशुपुरोडाशमि'त्यत्र तद्धितश्रुत्या गुणभूताया अपि देवताया अर्थात्संस्कार्यत्वाङ्गीकारवदिहाऽपि तथाङ्गीकारे कश्चिद्विरोधः। अतस्सक्तुष्वपि श्रुतव्याप्यतादिनिर्वाहार्थमुत्तरकाले विनियोगकल्पनेऽपि बाधकाभावात्कथं प्राधान्यासम्भव इति चेत् —न; इप्सितकर्मत्वशक्तिवादिनो ह्ययं दोषस्स्यात्। तन्मते हीप्सितत्वस्याऽपि द्वितीययाऽभिधानात्तन्निर्वाहार्थं विनियोगोऽपि कल्प्यते। इष्यत एव हि श्रुतस्वर्गादिसाध्यतानिर्वाहार्थं स्वर्गसत्ता। साध्यत्वमात्रार्थकत्ववादिनस्तु यथैव द्वितीयया सक्तूनां तदाभिहितं, तथैव धातुसामर्थ्याद्धोमस्याऽपि साध्यत्वमवगतमेवेति न तद्बलेनेप्सितत्वकल्पनायां(१) प्रमाणमस्ति, प्रत्युत होमस्यैव विधिप्रत्यासन्नत्वात् व्यापारान्तरानपेक्षत्वाच्चाऽऽरादुपकारकत्वविधया ईप्सितत्वकल्पनमुचितम्। एवञ्च सक्तूनां भूतभाव्यसमुच्चारणन्यायेन होमार्थत्वावधारणाद्द्वितीयाऽपि विषयतासम्बन्धिकरणत्वलक्षणार्थैव द्रष्टव्या।

अत एव संस्कारविधेः प्राक् संस्कार्यस्य विनियोगानवगमेऽपि यत्र लौकिकप्रमाणेनैव क्रियाजनकत्वमात्रमवगन्तुं शक्यं, यथा "अध्वर्युं वृणीते" "स्वाध्यायोऽध्येतव्यः" "अष्टवर्षं ब्राह्मणमुपनयीते" त्यादौ, तत्र ह्यसत्यपि वरणादिविधितः प्रागध्वर्य्वादीनां विनियोगे सामर्थ्यमात्रेणैव तेषां तत्तत्क्रियाजनकत्वावगमाद्युक्तं तत्तत्संस्कारविधौ तत्तत्क्रियासाधकत्वेन रूपेणो-

१. विनिगमकमिति. क. ख. पु.

द्देश्यतामध्वरत्वादीनामङ्गीकृत्य तत्तत्क्रियासु विनियोगकल्पनम् , सक्तूनां तूत्पत्तिशिष्टसोमाद्यवरुद्धे ज्योतिष्टोमे साधनत्वस्याऽसम्भवाददृष्टविधयोपकारकत्वस्य च लौकिकप्रमाणागम्यत्वान्न शक्यं संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनम् । अतश्च द्वितीया सक्तुगत(१)करणत्वार्थैव ।

ननु सक्तूनां विनियोगकल्पनायोगेऽपि न द्वितीया करणत्वलक्षणार्था, अननुशिष्टलक्षणायां गौरवात् । किं त्वनीप्सितकर्मत्वार्थिका, अतश्च सक्तूनां कर्मत्वेनैवाऽन्वयः । स च यद्यपि धात्वर्थे प्रथमत एवाऽसंभवी, तथा सत्ति(२)पश्वैकत्वाधिकरणपूर्वपक्षन्यायेन सक्तुनामविवक्षापत्तेः, तथाऽपि भावनायामेव सोमादिवत्परम्परासम्बन्धेन कर्मत्वेऽवगते पाश्चात्य इत्यवगन्तव्यम् । न चैवमुद्देश्यानेकत्वं शङ्क्यम् , सक्तूनां कर्मत्वेऽप्युद्देश्यत्वानङ्गीकारात् । अतस्सक्तुनामनीप्सितकर्मत्वेनैवाऽन्वयोपपत्तेर्न करणत्वलक्षणेति चेत्—न ; भावनावाचिप्रत्ययस्य नित्यं सकर्मकत्वेऽप्येककर्मकत्वेन कर्मान्तरस्याऽन्वयानुपपत्तेः । अन्यथा तत्समानार्थकस्य करोतेरपि द्विकर्मकतापत्तिः ।

अथ करोतेरेककर्मकत्वेऽपि भावनावाचिप्रत्ययस्य द्विकर्मकत्वमुच्येत, ततो 'व्रीहीनवहन्ती'त्यादौ कर्मान्तराभावात्प्रत्ययानुपपत्तिः । अत एव यत्र लोके तृणं स्पृशतीत्यादौ विध्यभावेनेप्सितकर्मानादरस्तत्रैव तृणादीनामनीप्सितत्वेनाऽन्वयः । तद्विषयमेव च तथायुक्तसूत्रं विधिसत्वेऽपि पाष्ठिकधात्वर्थान्वयविषयम् । भावनान्वयस्तु विधिसत्त्वे करणत्वेनैव । आवश्यकी च धात्वर्थान्वयेऽपि करणत्वलक्षणा बल्वजान् शिखण्डकान् कुर्वि-त्यादौ, करोतेरेककर्मकत्वेन कर्मान्तरान्वयानुपपत्तेः । अतश्च सर्वत्र

१. करणत्वलक्षणार्थैवेति. क. पु. २. पू. मी. ४. १. ५.

विधिसत्त्वे भावनान्वयो द्वितीयस्य कर्मणः करणत्वेनैव। अत एव(१)'मैत्रावरुणाय दण्डं प्रयच्छती' त्यादौ मैत्रावरुणस्यैवोद्देश्यत्वेन भावनान्वयाद्दण्डस्य करणत्वेनैव तदन्वयो न त्वनीप्सितकर्मत्वेनेति ध्येयम्।

यत्तु तन्त्ररत्ने तन्त्रसारन्यायसुधयोश्च 'यच्छतेस्सकर्मकत्वात् युक्तो दण्डस्याऽनीप्सितकर्मत्वेनाऽन्वयः, जुहोतेस्त्वकर्मकत्वात् सक्तूनां द्वितीयया करणत्वलक्षणे'त्युक्तम्, तन्न,(२) 'हुतोऽहुतः पर्यावर्तत' इत्यादौ कर्मणि निष्ठादर्शनेन जुहोतेरकर्मकत्वासिद्धेः, होः कर्मणि तृतीया चकाराद्द्वितीया च स्यादित्यर्थकेन(३) 'तृतीया च होश्छन्दसी'ति सूत्रकारव्यवहारेण सकर्मत्वावगतेश्च। तस्मादुक्त एव प्रकारः श्रेयान्।

अत एव गुणफलाधिकारे इन्द्रियकामाद्यवरुद्धायां भावनायां न होमस्याऽनीप्सितकर्मत्वरूपाश्रयत्वेन वाक्यीयोऽन्वयोऽङ्गीकृतः। अन्यथा तत्राऽपि तथात्वसम्भवे विशिष्टभावनाविधानेन वाक्यभेदाभावाज्जितं प्राभाकरेण। तस्मादुक्तप्रकारेणैव सक्तुषु करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमविधानमारादुपकारकतयेति सिद्धम्। स्रुगादीनां तु प्रयोजनवत्त्वस्य प्रमाणान्तरेणाऽवगतत्वात्तेषामेव भाव्यत्वोपपत्तेर्युक्तं तत्संस्कारार्थत्वं सम्मार्गादीनामिति।

न चैवं सर्वत्र सप्रयोजनत्वनिष्प्रयोजनत्वकृतमेव द्रव्यस्य

---

१. तै. सं. ६. १. ४.

२. 'यत्सर्वहुतं जुहोति सा त्वेका परिचक्षा। हुतोऽहुतः पर्यावर्तत सा द्वितीया, तस्मादाज्यस्यैव द्यावापृथिव्यौ यजेते'ति समग्रं वाक्यम्। इदं च आग्रयणे द्यावापृथिव्यमेककपालंविधिसन्निधौ श्रुतम्॥

३. पा. सू. २. ३. ३.

क्रियां प्रति गुणप्रधानत्वमिति कृतं द्वितीयातृतीयाभ्यामिति वाच्य-म् । (१)'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इत्यत्र हि सत्यपि इन्द्रगा-र्हपत्ययोः क्रतुसम्बन्धित्वेन प्रयोजनवत्त्वे, द्वितीयैव गार्हपत्यप्रा-धान्ये प्रमाणम् । न च तत्राऽपि द्वितीयाया नियामकमात्रत्वेऽपि कथं प्रमाणत्वमिति वाच्यम् । द्वितीयाभावे मन्त्रस्य लिङ्गादिन्द्रा-र्थत्वस्यैवाऽवगमात्तस्याऽनियामकत्वाभावात् । गार्हपत्यप्रातिप-दिकमात्रसमभिव्याहारस्य च लिङ्गविरोधे सामीप्यनिरूपकत्वे-नाऽप्युपपत्तेः । अतो लिङ्गबाधेन गार्हपत्यप्राधान्यं द्वितीयाप्रमा-णकमेव । तथा सूक्तवाकप्रस्तरप्रहरणयोरुभयोरपि निष्प्रयोजन-त्वाविशेषे केवलतृतीयाकृतमेव सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्व-म् । अतश्च सत्येव द्वितीयाश्रुतिप्रामाण्ये निष्प्रयोजनत्वं सक्तु-ष्वपवादः । सत्यपि च तृतीयाप्रामाण्ये दृष्टार्थत्वादि प्रयाजशेषा-भिघारणस्थलेऽपवादः । अतस्सिद्धमदृष्टार्थत्वेऽपि सम्मार्गादीनां गुणकर्मत्वम् ।

सूत्रं तु—न द्वितीया गुणत्वपरा, अपि तु प्राधान्यपरा, त-दर्थत्वेन स्मृत्याऽनुशिष्टत्वात् । लोकवत् लोकसिद्धघटादिपदवद-नुशिष्टार्थप्रतिपादकत्वस्योपपत्तेः । न चैवं सक्तुष्वपि तदापत्तिः, तेषां निष्प्रयोजनकत्वात् । प्रकृते तु तेषां स्रुगादीनां क्रतौ शेष-भावावगमात्प्रयोजनवत्त्वसिद्धेर्युक्तं गुणकर्मत्वमिति व्याख्येयम् ।

प्रयोजनं स्रुगुदाहरणे पूर्वपक्षे सम्मार्गसाधनीभूतस्रुचां प्रकृ-तौ विवक्षितसङ्ख्यात्वात्कपिञ्जलाधिकरणन्यायेन त्रित्वस्यैव शा-स्त्रीयत्वात्पश्वादौ स्रुग्विवृद्धावपि तिस्र एव सम्मार्ष्टव्याः । सि-द्धान्ते तु संस्कार्यत्वात्सर्वा एव सम्मार्ष्टव्याः । परिध्युदाहरणेऽ-प्येकस्यैव परिधेः पूर्वपक्षे सम्मार्गः । तैत्तिरीयशाखास्थबहुत्वच-

१. तै. सं. ५. ५. ७.

नान्तरान्वयोदाहरणे तु त्रयाणाम् । सिद्धान्ते तु यावत्परिधि । अग्नेरपि पूर्वपक्षे एकस्यैवाऽऽहवनीयस्य । सिद्धान्ते त्वाहवनीय-वृद्धौ सर्वेषाम् ।

यत्तु वार्तिके पूर्वपक्षे 'अग्निमुपनिधाय स्तुवत' इतिवल्लौकिकस्याऽग्नेस्सम्मार्गः, सिद्धान्ते त्वाहवनीयादीनां सर्वेषामिति प्रयोजनमुक्तम्, तत् 'अग्निं सम्मार्ष्टी'त्यस्य कल्पसूत्रकार-वचनमूलभूतश्रुत्या आहवनीयमात्रविषयिण्या अनुपसंहारा-भिप्रायेण । यदा तु तेनाऽऽहवनीयमात्रविषयेण सामा-न्यवाक्यस्योपसंहारः, तदा सिद्धान्तवत्पूर्वपक्षेऽप्याहवनीयस्यैव सम्मार्गात्सिद्धान्तेऽपि च गार्हपत्यादीनामसम्मार्गात्पूर्वोक्तमेव प्र-योजनं द्रष्टव्यम् । एवं पुरोडाशोदाहरणेऽपि पूर्वपक्षे एकस्यैव । सिद्धान्ते तु सर्वेषां पर्यग्निकरणमिति द्रष्टव्यम् । तथा (१)शाक्त्या-नामयने 'तरसमयास्सवनीयाः पुरोडाशा भवन्ती'त्यत्र पूर्वपक्षे पर्यग्निकरणत्वेन पिष्टमयपुरोडाशस्सम्पादनीयः । न च तत्राऽपि पुरोडाशोद्देशेन मांसविधानात्सवनीयपुरोडाशवत्पर्यग्निकरणपु-रोडाशेऽपि मांसप्राप्त्युपपत्तेर्न पिष्टमयोत्पादनम्, (२)तृतीये पु-रोडाशपदस्य जघन्यस्य (३)धानादिपञ्चके लिङ्गसमवायेन वृत्ति-

१. शक्तिनामकस्य महर्षेर्गोत्रोत्पन्ना ऋषयश्शाक्त्याः, तैरनुष्ठितत्वात् शाक्त्यानामयनमिति कर्मनाम । तच्च षट्त्रिंशत्संवत्सरसाध्यं सत्रम् । तत्र श्रूयते 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ति' इति । अस्याऽर्थः—प्रतिदिनं गृहपतिसंज्ञको यजमानस्तत्तदहस्सम्बन्धिक्रियाकलापसमाप्त्यनन्तरं मृगयार्थं वनं गच्छेत् । तत्र तेन ये मृगा हताः तेषां मांसमानीय तेन सवनीयाः पुरोडाशास्सम्पादनीया इति । केषुचिद्ग्रन्थान्तरेषु शाक्यानामयनमित्यपि पाठ उपलभ्यते ।

२. पू. मी. ३. ८. २३.

३. धानाः करम्भाः परिवापाः पुरोडाशः पयस्या इति पञ्च सव-

मङ्गीकृत्य सवनीयमात्रोद्देशेनैव तरसविधानस्य वक्ष्यमाणत्वेन पर्यग्निकरणपुरोडाशे तदप्राप्तेः ।

न चैवमपि सवनमध्यवर्तित्वेन तस्याऽपि सवनीयपदाभिधेयत्वोपपत्तेर्मांसप्राप्त्युपपत्तिः, सवनमध्यवर्तिनि दक्षिणादानादौ सवनीयपदप्रयोगाभावाद्योगरूढ्या सवनीयपदस्य धानादियागपञ्चकवाचित्वावगतेः । अतश्च पर्यग्निकरणपुरोडाशे मांसप्राप्तेरभावात्पुरोडाशपदस्य च लोके पिष्टपिण्डवाचित्वात्पिष्टपिण्डरूप एव पुरोडाशस्सम्पादनीयः। तत्राऽपि च न व्रीहिमयत्वं यवमयत्वं वा नियतम्, प्रकृतौ व्रीह्यादिवाक्यैर्यागीयपुरोडाशोद्देशेनैव तद्विधानात् । सिद्धान्ते तु क्लृप्तदर्शपूर्णमासप्रकृतिकसवनीययागपञ्चकोद्देशेन मांसविधानात्प्रदेयपुरोडाशादिस्थानापन्नत्वात्तद्धर्मप्राप्तेः पुरोडाशादिचतुष्टयस्थानापन्ने मांसे पर्यग्निकरणं भवत्येव ।

यद्यपि च प्रदेयत्वेन मांसविधानादर्थलोपाच्च नाऽवघातपेषणादिधर्मप्राप्तिर्मांसे सम्भाव्यते, तथाऽपि प्रकृतौ पर्यग्निकरणस्य प्रदेयपुरोडाशधर्मत्वावगतेर्मांसे(१) प्राप्नोत्येव तत् । न चैवं पेषणप्राप्त्यभावे तदर्थाधिवापमन्त्रस्य 'धान्यमसी'त्यस्योहानूहचिन्ता(२) नवमे करिष्यमाणा निर्विषया आपद्येतेति वाच्यम् । तस्याः क्त्वाचिन्तात्वेनोपपत्तेर्वक्ष्यमाणत्वात् ।

यत्तु न्यायसुधाकृता सवनीयपदोपेते वाक्ये अधिवापप्राप्त्यभावेऽपि छान्दोग्यशाखास्थे(३) 'एतेन वै गौरीवितिश्शाक्त्यस्तरसमयपुरोडाशो यव्यावरयां सर्वामृद्धिमार्ध्नोदि'ति वचने सवनीय-

---

नीयहवींषि । तत्र धानाः भ्रष्टयवाः । करम्भाः दधिमिश्रितास्सक्तवः। परिवापा लाजाः । पयस्या आमिक्षा इति ।

१. प्राप्त्यविघात इति क. पु.   २. पू. मी. ९. १. १३.   ३ ता. ब्रा. २१. ७. २.

पदाभावात्पुरोडाशपदेनैव च तत्कार्योद्देशे लक्षणापत्त्या(१)पुरोडाशमात्रोद्देशेन मांसविध्यवगतेर्मांसेन च पिष्टपिण्डरूपपुरोडाशस्य कर्तुमशक्यत्वेऽपि 'तरसपुरोडाशमन्नसंरोधादि'ति छान्दोग्यसूत्रकृद्वचनादन्नमिश्रितेन तेन पुरोडाशोपपत्तेस्तत्र चाऽधिवापप्राप्तौ तन्मन्त्रोहानूहचिन्तोपपत्तिरित्युक्तम्; तन्न, पुरोडाशपदेनाऽत्र पिण्डमात्रं वा प्रतिपाद्यते लक्षणया, पिष्टपिण्डो वा? नाऽऽद्यः, लक्षणापत्तेः। न द्वितीयः, तस्याऽन्नमात्रोपादानकस्य मांसप्रकृतिकत्वानुपपत्तेः। तस्मात्पिष्टपिण्डप्रकृतिकस्यैवाऽस्य मांससंस्कारकत्वेन विधीयते। ततश्च(२) "पयसा मैत्रावरुणं श्रीणाती" तिवत्संस्कारके तस्मिन् प्रदेयप्रकृतिधर्माणां पेषणादीनामप्राप्तेर्नोहाचिन्तोपपत्तिः। अतश्च कृत्वाचिन्तात्वेनैव तदधिकरणोपपत्तिः। ततश्च सवनीयपदोपेतवाक्ये पेषणाद्यप्राप्तावपि पर्यग्निकरणप्राप्तिसत्त्वात्प्रयोजनोपपत्तिः।

यत्तु भाष्यकारेण स्रुगुदाहरणे पूर्वपक्षे वरुणप्रघासेषु 'शमीमय्यस्स्रुचो भवन्ति, हिरण्मय्यो वे' ति वाक्योक्तशमीमयत्वादीनां प्रधानाङ्गभूतस्रुगनुवादेनैव विहितत्वात्सम्मार्गाङ्गभूतस्रुक्षु प्रकृतिप्राप्तनानावृक्षीयत्वम्। सिद्धान्ते तु संस्कार्यत्वाच्छमीमयादीनामेव सम्मार्ग इति प्रयोजनमुक्तम्; तन्न, स्रुङ्मात्रानुवादेन शमीमयत्वविधानात्प्रधानस्रुक्ष्विव सम्मार्गस्रुक्ष्वपि शमीमयत्वप्राप्तेः। न च प्रियङ्गुवत्प्रकरणात्प्रधानमात्रलाभः, प्रकरणस्य वाक्यसङ्कोचकत्वानुपपत्तेः। प्रियङ्गूनां तु चरूद्देशेन विहितानामपि चरोः प्रधानमात्रसम्बन्धित्वेन विधानाद्युक्तं प्रधानमात्रगामित्वम्। अतश्च यथैव 'वेद्यां हवींष्यासादयती'त्यादौ प्रधानप्रकरणेन ह-

१. पुरोडशप्रकृतित्वेनेति. क. ख. पु. २. तै. सं. ६.४.८.

विशब्दसङ्कोचायोगादानर्थक्यपरिहारस्योपस्थित्यविशेषादङ्गप्रधानसाधारणापूर्वसाधनीभूतहविर्मात्रलक्षणयाऽप्युपपत्तेर्न वेद्यादे. प्रधानमात्रगामित्वम् , तथैव प्रधानप्रकरणेन स्रुक्छब्दसङ्कोचायोगादतिदेशसहकृतेन च प्रधानवाक्येनोभयो(१)रुपस्थित्यविशेषादुभयाङ्गत्वमेव शमीमयत्वादीनाम् । न चाऽतिदेशेन सम्मार्गस्य क्लृप्तोपकारनानावृक्षीयस्रुग्विशिष्टस्यैव प्राप्तत्वात्तदबाधाय स्रुक्पदसङ्कोचोपपत्तिः, प्राकृतनानावृक्षीयत्वाबाधाय स्रुक्पदसङ्कोचाङ्गीकारे(२) अङ्गगुणविरोधन्यायेन प्रधानस्रुक्षु नानावृक्षीयत्वानुग्रहेण सम्मार्गादिस्रुक्ष्वेव शमीमयत्वादिनिवेशोपपत्तेः ।

वस्तुतस्तु "अप्स्ववभृथेन चरन्ती" तिवदुपदेशेन प्रधानगतास्विव सम्मार्गगतास्वपि स्रुक्षु शमीमयत्वादिविधानात्प्रयाजादिगतास्विव तद्गतास्वपि प्राकृतनानावृक्षीयत्वबाधो गुण एव । न हीदमुद्गातृवेदस्थश्येनप्राकृताङ्गेषूद्गातृकर्तृकत्ववत्प्रयोगविधिद्वारकं प्रधानाश्रितमङ्गेष्ववतरति, येनाऽतिदेशापेक्षया दौर्बल्यं शङ्क्येत । अङ्गप्रधानसाधारणस्रुङ्मात्रानुवादेन विधानादप्राप्तिवाऽस्याऽप्यौपदेशिकत्वात्प्राबल्यमिष्टमेव । अतश्च यथैव प्रयाजादिस्रुक्षु शमीमयत्वप्राप्तिरुपपादनीया, तथा सम्मार्गस्रुक्ष्वपीति नाऽस्य प्रयोजनत्वोपपत्तिः ।

यत्त्वत्र वार्तिकेऽभ्युपगम्याऽपि यथाकथञ्चिच्छमीमयत्वादेः प्रधानसम्बन्धं, न सम्मार्गस्रुक्षु नानावृक्षीयत्वप्राप्तिस्सम्भवति, प्रधानस्रुग्भिरेवाऽङ्गानामपि प्रसङ्गात्कार्यसिद्धेस्स्वतन्त्रस्रुगाक्षेपकत्वानुपपत्तेः । अतश्च यथैव 'दक्षिणास्सोमस्ये'ति वचनात्प्र-

---

१. रूपस्थितत्वाविशेषेति. क.ख.पु. २. पू. मी. १२. २. ९.

धानमात्राङ्गभूतयाऽपि दक्षिणया प्रसङ्गात्कार्यसिद्धेर्नाऽङ्गभूतेष्टिप-
शुष्वातिदेशिकान्वाहार्यदक्षिणाप्राप्तिरिति(१) द्वादशे वक्ष्यते, त-
थैव प्रधानस्रुग्भिरेव प्रसङ्गसिद्धेर्न सम्मार्गार्थं नानावृक्षीयस्रुगुत्पा-
दनमिति दूषणान्तरमुक्तम् , तन्न; सौमिकपात्रैरैष्टिकपात्रकार्य-
स्येव शामित्राग्निना पौरोडाशिकाग्निकार्यस्य पाकस्येवाऽत्र
सम्मार्गस्य प्रधानस्रुग्भिस्सिध्यनुपपत्तेः । दक्षिणया ह्यानता-
नां कर्तॄणामङ्गप्रधानसाधारण्याद्दानतिरूपकार्यसिद्धेः प्रत्यक्ष-
त्वाद्युक्ता तत्साधनीभूतान्वाहार्यनिवृत्तिः । प्रकृते तु स्रुग्भिः प्र-
धाननिष्पत्त्या सम्मार्गानिष्पत्तेस्सम्मार्गस्य पृथगनुष्ठेयत्वाद्युक्त-
मैष्टिकपात्रवत्स्वाङ्गभूतस्रुगाक्षेपकत्वम् ।

न च यथा सोमाङ्गभूतमहावेद्यैवैष्टिकहविरासादनादिकार्यस्य
पृथगनुष्ठेयस्याऽप्यनुनिष्पादनात्तदङ्गभूतदार्शपूर्णमासिकवेदिनि-
वृत्तिः(२) द्वादशे वक्ष्यते, तथाऽत्राऽपि सम्मार्गस्य पृथगनुष्ठेयत्वे-
ऽपि प्रधानस्रुग्भिरेव निष्पादनोपपत्तेर्न नानावृक्षीयत्वप्राप्तिरिति
वाच्यम् । सौमिकवेदेर्देशत्वेनाङ्गप्रधानार्थत्वस्य(३) तृतीये वक्ष्य-
माणत्वाद्धविरासादनादिकार्याङ्गत्वेन तस्या एव प्राप्तेरातिदेशि-
कैष्टिकवेदेरुपदेशेन बाधोपपत्तेः । न चैवं वेदेस्तन्त्रत्वापत्तेर्द्वाद-
शोक्तप्रसङ्गानुपपत्तिः, तस्य 'इयति शक्ष्यामहेऽस्यां कर्तुमि'त्यार्थ-
वादिककर्तृगमनागमनादिरूपप्रचारार्थत्वं कृत्वाचिन्तया कर्तृप्र-
चारार्थायाः वेदेर्हविरासादनसिध्यङ्गीकारेण वक्ष्यमाणत्वात् ।

न चैवमपि पात्रन्यायेन हविरासादनरूपस्य कार्यस्य पृथ-
गनुष्ठेयत्वान्न प्रसङ्गोपपत्तिः, कर्तृप्रचारार्थमनुष्ठितेनैव सौमिक-

---

१. पू. मी. १२. १. ३. २. पू. मी. १२ १. १६. ३. पू. मी. ३. ७. ३.

वेदिकरणेनाऽदृष्टविशेषावच्छिन्नाहवनीयप्रत्यग्देशरूपाया वेदेस्सिद्धत्वादैष्टिकवेदिकरणनिवृत्त्या प्रसङ्गोपपादनात् । न ह्यैष्टिकसौमिकवेदिकरणभेदे वेदिभेदस्समस्ति, प्रत्यग्देशस्य प्रत्यक्षेणैकत्वात्, वेदिपदस्य नानार्थकत्व(१) कल्पनायोगाददृष्टस्याऽप्येकस्यैव कल्पनाच्च । अत एव तत्तत्क्रत्वपूर्वसाधनीभूतवेदिरूपादृष्टत्वेनैव तत्तद्वेदिकरणं प्रति कार्यत्वाद्व्यभिचारस्सङ्करो वा नाऽऽशङ्क्यः । पात्रेषु तु सौमिकापेक्षया ऐष्टिकानां भेदस्य सम्पादयितुं शक्यत्वान्न प्रसङ्ग इति वैषम्यम् । अतश्च पात्रन्यायेन प्रधानकृतापेक्षया सम्मार्गस्रुचां भेदेन कर्तुं शक्यत्वान्न प्रसङ्गोपपत्तिः । न च प्रसङ्गासंभवेऽप्याग्नेयीन्यायेन प्रकृतानामेवोपादानशङ्का, तस्य प्रकृतिप्राप्तनानावृक्षीयत्वबाधकृतवैगुण्यप्रसङ्गेनाऽनुदयात् । अतश्च वार्तिके प्रसङ्गापादनमनास्थयैवेति द्रष्टव्यम् ।

इदं त्विह वक्तव्यम्—कथञ्चिच्छमीमयत्वादेः प्रधानमात्रसंबन्धाभ्युपगमे प्रकृतौ नानावृक्षीयत्वस्याऽपि प्रधानमात्रसम्बन्धापत्तेस्सम्मार्गस्रुक्षु नानावृक्षीयत्वस्यैवाऽभावाद्भाष्योक्तप्रयोजनानुपपत्तिरिति ।

एतेन यदपि परिध्युदाहरणे 'बाणवन्तः परिधयो भवन्ती' त्यत्र पूर्वपक्षे सम्मार्गार्थे पलाशा उत्पादयितव्याः, सिद्धान्ते बाणवतामेव सम्मार्ग इत्युक्तं प्रयोजनमपास्तम् ; बाणवत्त्वस्याऽङ्गप्रधानसाधारण्येन विधानात् । अन्यथा पालाशत्वस्याऽपि सम्मार्गः परिधिष्वप्राप्तेः । किंच 'परिधीन् सम्मार्ष्टी'त्यत्र परिधिशब्देन परिधीयते अनेनेति व्युत्पत्त्या अग्निपरिधानोपलक्षितद्रव्याभिधानात्पुरोडाशकपालन्यायेन पालाशप्रयोजकत्वान्नोक्तप्रयोजनसिद्धिः ।

---

१. कल्पनाभिवेति· क. पु.

यदपि चाऽग्न्युदाहरणे 'अप्स्ववभृथेन चरन्ती'त्यत्र पूर्वपक्षे सम्मार्गोऽग्नेः कर्तव्यः, सिद्धान्ते त्वपामिति प्रयोजनमुक्तम्, तदपि अवभृथे तस्याऽपूर्वत्वेन तदर्थं पुनः श्रूयमाणप्रयाजानुयाजाद्यर्थं वा आरादुपकारकसम्मार्गप्राप्त्यभावाद्यथाकथंचित्प्राप्त्यङ्गीकारेऽपि तृतीयान्तेनाऽवभृथपदेन साङ्गस्यैव करणत्वावगमाचरन्तीत्यनेन च साङ्गस्यैव प्रयोगविधानादपां च देशत्वात्साङ्गप्रधानविषयत्वस्य(१)एकादशे वक्ष्यमाणत्वेन सम्मार्गेऽप्यपामेव प्राप्तेरुपेक्षणीयम् । अतः पूर्वोक्तान्येव प्रयोजनानि द्रष्टव्यानि ॥

इति पञ्चमं सम्मार्गाधिकरणम् ॥ ५ ॥

अथ षष्ठं स्तुतशस्त्राधिकरणम् ॥

## स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ २-१-१३ ॥

( विषयसंशयसङ्गतयः )

इह स्तोत्रशस्त्राण्युदाहरणम् । तत्र प्रगीतमन्त्रसाध्यं गुणगुणिसम्बन्धकीर्तनं स्तोत्रम्, शस्त्रं च तदेवाऽप्रगीतमन्त्रसाध्यम् । तत्र किं तयोरारादुपकारकत्वं प्रयाजादिवत्, उत देवतादिरूपगुणिस्मरणार्थत्वेन सन्निपत्योपकारकत्वमिति विचारः । अत्राऽपूर्वभेदोपयोगिचिन्तनात्पादाध्यायसङ्गतिः पूर्ववत् । अनन्तरा तु पूर्वाधिकरणे श्रुतिग्रहणस्य द्रव्याङ्गताबोधकप्रमाणमात्रोपलक्षणत्वादिहापि गुण्यङ्गताबोधकलिङ्गसद्भावेन पूर्वपक्षकरणादापत्त्यादिकी ।

१. पू. मी. ११ २ ७.

( पूर्वपक्षः )

तत्र यद्यपि विषयतासम्बन्धेन गुणगुणिनोरुभयोरपि सम्बन्धकीर्तनाख्यस्तोत्रशस्त्रं प्रति करणत्वमस्ति, तथाऽपि प्रयोजनापेक्षायां दृष्टविधया कर्मानुपयुक्तगुणप्रकाशनार्थत्वायोगेऽपि कर्मोपयुक्तगुणिस्मरणार्थत्वसंभवेऽदृष्टार्थत्वकल्पनानुपपत्तेर्गुणिस्मरणरूपसंस्कारार्थत्वमेव याज्यादिमन्त्रवत्स्तोत्रशस्त्रमन्त्राणामङ्गीकर्तव्यम् । न चाऽत्र स्तौतिशंसतिभ्यां विनियोगेन याज्यादिवैलक्षण्यात्स्तौतिशंसत्योश्च गुणविशेष्यकगुणिसम्बन्धकीर्तनवाचित्वस्य लोके प्रसिद्धत्वाद्गुणिप्रकाशनार्थत्वे च तस्यैव विशेष्यत्वेन तयोर्लक्षणापत्तिरिति वाच्यम् । 'प्रयाजशेषेण हवींष्यभिघारयती' तिवद्दृष्टार्थत्वानुरोधेन लक्षणाङ्गीकारस्य न्याय्यत्वात् । अतस्सन्निपत्योपकारकत्वमेव स्तोत्रशस्त्रयोरपि । सूत्रं निगदव्याख्यातम् ॥ १३ ॥

## अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ २-१-१४ ॥

( सिद्धान्तः )

अस्तु तावन्मूलयुक्तिभूतः श्रुतिविरोधो लिङ्गस्य बाधकः । अभ्युच्चययुक्तिरूपो दुर्बलप्रमाणबाधप्रसङ्ग एव तावदादावभिधीयते । यदि हि स्तौतिशंसत्योः प्रकाशनलक्षणार्थतामङ्गीकृत्य तन्मन्त्राणां गुणिस्मरणार्थत्वमिष्यते, ततो महेन्द्रदेवताकयागाभ्यासक्रमे पठितयोरैन्द्रमन्त्रयोर्महेन्द्रप्रकाशनाशक्तेरिन्द्रस्य च यागानङ्गत्वेन प्रकाशनानर्हत्वात्प्रकरण एव यत्रेन्द्रो देवता तत्रोत्कृष्येत पूषानुमन्त्रणमन्त्रवत् । ततश्च यजुर्वेदविहितग्रहयागाभ्या-

सक्रमेण सामवेदान्तर्गतोत्तराग्रन्थपठितानामृचां यथाक्रमं पाठेनाऽवगताङ्गभावानां मध्ये ऐन्द्रमन्त्रयोस्तदनङ्गीकारात्क्रमबाधापत्तिः । 'पादं पुनरारभत' इति वचनावगतस्य चाऽऽद्यामृचं सकृत्पठित्वा तस्यामन्त्यपादेन सह द्वितीयाद्यर्धर्चं पठित्वा, तदन्त्यपादेन सह द्वितीयान्त्यार्धर्चपठनरूपस्य ग्रथनस्य माहेन्द्रग्रहसन्निधावाम्नातस्य तदङ्गत्वानङ्गीकारात्सान्निधिबाधश्च । अतश्च दुर्बलयोरपि क्रमसन्निध्योः प्रबलेनाऽपि लिङ्गेन सहाऽबाधेनैवोपपत्तौ बाधायोगान्न सन्निपत्योपकारकत्वं स्तोत्रशस्त्राणाम् ।

सूत्रं तु—देवतापदं प्रति गुणत्वेन संयुक्ता यदि स्तुतिभावना, ततः अर्थेन प्रयोजनानुरोधेन माहेन्द्रग्रहयजितः अपकृष्येत ऐन्द्री स्तुतिः, तस्याः प्रयोजनभूतां देवतां प्रति गुणभूतत्वादिति व्याख्येयम् ॥ १४ ॥

## वशावद्वा गुणार्थं स्यात् ॥ २-१-१५ ॥

नाऽपकृष्येतैन्द्री स्तुतिः, इन्द्रशब्देनैव प्रकृतग्रहयागीयेन्द्रप्रकाशनोपपत्तेः । यद्यपि च तत्र महत्त्वगुणविशिष्टस्यैवेन्द्रस्य माहेन्द्रमिति तद्धितेन देवतात्वमुक्तम्, तथाऽपि विशेष्यस्यैव मन्त्रेण प्रकाशनोपपत्तेः, विशेषणांशस्य च मन्त्राभावेऽपि ध्यानाद्युपायान्तरेण स्मृतिसिद्धेर्नाऽपकर्षापत्तिः। न हि (१)'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेते'ति वाक्येन वशात्वगुणविधानेऽपि विशेष्यमात्रस्य (२)'छागस्य वपाया मेदस' इति मन्त्रेणाऽभिधानं नेष्टम् । न ह्यत्र महेन्द्रशब्दस्यैव देवतात्वम्, येनेन्द्रशब्दस्य ततो भिन्नत्वेनाऽपकर्षश्शङ्क्येत । तथा सति महे·

१. तै. सं. ३. ४. ३. २. तै. ब्रा. ३. ६. ८.

न्द्रशब्दस्याऽर्थवत्त्वाभावेन प्रातिपदिकसंज्ञाभावात्तद्धितानुत्पत्ति-प्रसङ्गात् । अत एव चेतनाचेतनसाधारण्येनाऽर्थस्यैव देवतात्वं (१)दशमे वक्ष्यते । एवं सत्यपि यदि महेन्द्रशब्दो रूढ्या अर्था-न्तरवचनस्स्यात्ततोऽर्थान्तरवचनेनेन्द्रशब्देन नाऽभिधीयते तदर्थं इत्युक्त्यैवैन्द्रो मन्त्रः, प्रोक्षणीशब्दवत्तु क्लृप्तावयवयोगेनोपपत्तौ नाऽर्थान्तरवाचित्वकल्पनायां प्रमाणमस्ति ।

ननु तद्धितसमासरूपवृत्तिद्वयानुपपत्तिरेव रूढिकल्पनायां प्रमाणं भविष्यति । तथा हि—न तावदेकस्यैवेन्द्रशब्दस्य यु-गपत्तद्धितसमासरूपवृत्तिद्वयसम्भवः, अन्यतरसापेक्षत्वेनैकस्या अपि वृत्तेरनुपपत्तेः समासवृत्त्यर्थमिन्द्रशब्दस्य सुबन्तत्वकल्प-ना, तद्धितवृत्त्यर्थं चाऽसुबन्तत्वमिति युगपद्वृत्तौ युगपत्सुबन्त-त्वासुबन्तत्वविरोधापत्तेश्च । नाऽपि क्रमेण, सकृच्छ्रुतस्येन्द्रश-ब्दस्याऽऽवृत्त्यापत्तेः । तद्धितपूर्ववृत्तौ महेन्द्रमित्युत्तरपदवृद्धिर्मह-त्त्वस्य प्रधानभूतद्रव्याविशेषणत्वं चाऽधिकं प्रसज्येत । अतो वृ-त्तिद्वयानुपपत्त्या अश्वकर्णादिशब्दवद्रूढिकल्पनोपपत्तेरिन्द्रान्महे-न्द्रस्य भेदावगमादिन्द्रशब्देन च प्रकाशनानुपपत्तेरुत्कर्षानिवार-णमिति चेत्, समासवृत्त्युत्तरकाले तद्धितवृत्त्यङ्गीकारात् ।

न चैवमिन्द्रपदावृत्तिः, वृत्तिद्वयविवरणवेलायां पौरुषेयेन्द्र-पदावृत्तावपि वैदिकमाहेन्द्रपदेनाऽनावृत्तेनैव महत्त्वगुणविशिष्टे-न्द्रदेवतात्वविध्युपपत्तेः । अत एव तद्धितवृत्तेः पूर्वं द्वन्द्वादिस-मासाङ्गीकारात् "आग्नावैष्णव" मित्यादौ देवताद्वन्द्वादिनि-मित्तकानङाद्युत्पत्तिराञ्जस्येनोपपादिता भविष्यति । अतश्च क्र-मेण वृत्तिद्वयस्याऽप्युपपत्तेः प्रोक्षणीशब्दवत्क्लृप्तावयवयोगेनो-पपत्तौ रूढिकल्पनानवकाशात्सत्यपि गुणविशिष्टस्येन्द्रस्य देव-

१. पू. मी. १०. ४. १३.

तात्त्वे वशावदिन्द्रशब्देन विशेष्यमात्रप्रकाशनोपपत्तेर्नोत्कर्षापत्तिः।

वस्तुतस्तु महेन्द्रप्रातिपदिकेन महत्त्वविशिष्टे इन्द्रे उक्तेऽपि राजपुरुषश्शोभन इतिवद्विशेष्यमात्रस्यैव तद्धितेन देवतात्वावगमाद्विशेषणस्य च महत्पदस्य विशेष्योपलक्षणार्थत्वेन स्तावकत्वेनोपपत्तेर्देवताभूतस्य शुद्धस्येन्द्रस्यैन्द्रेण(१) प्रकाशनोपपत्तौ नोत्कर्षापत्तिः ।

सूत्रं तु—अगुणार्थं स्यादित्यकारप्रश्लेषेण व्याख्येयम् ॥१५॥

## न श्रुतिसमवायित्वात् ॥ २-१-१६ ॥

नेन्द्रशब्देन प्रकृतग्रहसम्बन्धिदेवताभिधानम्, प्रकृतग्रहे माहेन्द्रमिति तद्धितसहकृतेन विधिना महेन्द्रपदस्यैव देवतात्वविधानात् । तथा हि—ताद्धितेन देवतात्वविशिष्टद्रव्याभिधानात् देवतात्वस्य च त्यज्यमानहविरुद्देश्यत्वेन वृद्धव्यवहारे प्रसिद्धस्याऽनुच्चार्येऽर्थेऽसम्भवात् तद्धिताभिहितोद्देश्यत्वान्वयार्थं महेन्द्रप्रातिपदिकेन लक्षणया महेन्द्रपदमेवाऽभिधाय तस्य त्यज्यमानहविरुद्देश्यताख्यं देवतात्वं विधीयते। महेन्द्रशब्दे पदलक्षणायाश्च शक्यसम्बन्धं विनाऽनुपपत्तेर्महेन्द्रपदशक्यश्चेतनाचेतनसाधारण्येन दशमे वक्ष्यमाणोऽर्थोऽपि नाऽसङ्गतः । अतश्च महत्त्वगुणविशिष्टेन्द्रवाचकमहेन्द्रपदस्यैव देवतात्वावसायाद्विशिष्टवाचकवृहच्चक्रादिपदान्तरप्रयोगे सुतरां शुद्धेन्द्रपदप्रयोगान्नेन्द्रपदेन प्रकृतग्रहसम्बन्धिदेवताप्रकाशनोपपत्तिः ।

यत्तु—न्यायसुधाग्रन्थस्वारस्यात्प्रातिपदिकेनाऽर्थवाचिनाऽप्युद्देश्यात्वान्वयार्थं पदविशिष्टार्थलक्षणामङ्गीकृत्य तत्र तद्धितवाच्य-

---

१. प्रागाथेनाऽभिधानोपपत्ताविति. ख. पु.

देवतात्वान्वयाङ्गीकाराच्छब्दोपहितोऽर्थो देवतेति प्रतीयते. तत्र पदविशिष्टेऽर्थे उच्चार्यत्वाख्योद्देश्यत्वस्य बाधाद्विशेषणीभूतपदान्वयस्य च 'अन्योपसर्जनमन्येन नाऽन्वेती'ति न्यायेनाऽव्युत्पन्नत्वादुपेक्षणीयम्।

एतेनाऽर्थस्यैव देवतात्वेऽपि तस्य व्रीह्यादिवत्स्वरूपेण यागोपयोगाभावाच्छब्दोच्चारणद्वारेणैवोपयोगावगतेश्शब्दविशेषापेक्षायां लाघवादुपस्थितस्य विधिगतशब्दस्यैव नियम इति पक्षोऽपि प्रत्युक्तः, तद्धितार्थस्य त्यज्यमानहविरुद्देश्यत्वाख्यस्याऽर्थे बाधेनाऽन्वयानुपपत्तेः। त्यज्यमानहविरुद्देश्यभूतशब्दाभिधेयत्वलक्षणा तु प्रधानभूते तद्धिते लक्षणापत्तेरयुक्तैव। तद्वरं प्रातिपदिक एव गुणभूते पदलक्षणेति। किञ्चैवं "अग्नये पावकाये" त्यादावेकस्यैव पदस्योच्चारणनियमोपपत्तेर्न पदद्वयोच्चारणापत्तिः। अतो महेन्द्रपदस्योच्चार्यत्वेन देवतात्वाऽन्द्रमन्त्रेणाऽभिधानोपपत्तिः। अतश्चोत्कर्षापत्तिस्तदवस्थैव।

सूत्रं तु—श्रुत्या विधिगतशब्देनैव देवतायाः कर्मणि समवायात् सम्बन्धादिन्द्रशब्देन महेन्द्रप्रकाशनानुपपत्तेर्नाऽनुत्कर्षसम्भव इति व्याख्येयम्॥ १६॥

## व्यपदेशभेदाच्च॥ २-१-१७॥

इतश्च नेन्द्रपदेन महेन्द्राभिधानम्। अन्यथा साम्नाय्ये(१) "बहु दुग्धीन्द्राय देवेभ्यः, बहु दुग्धि महेन्द्राय देवेभ्य" इति द्वयोर्मन्त्रयोस्समाम्नातयोरन्योन्यप्रकाशकत्वे विकल्पापत्तेः। अस्मन्मते त्वैन्द्रेण मन्त्रेण साम्नाय्यगतेन्द्रप्रकाशनान्माहेन्द्रेण च

१. तै. ब्रा. ३. २. ३.

तद्गुतमहेन्द्रप्रकाशनान्मन्त्रद्वयव्यपदेशव्यवस्थेति न विकल्पः। अतश्चेन्द्रमहेन्द्रयोरधिष्ठानैक्येऽपि विशेषणांशभेदादुद्देश्यशब्दभेदाच्च भेदावगमेनैन्द्रमन्त्रेणाऽभिधानानुपपत्तेरुत्कर्षानिवारणम् ॥१७॥

## गुणश्चाऽनर्थकस्स्यात् ॥ २-१-१८ ॥

यदप्युक्तं महेन्द्रप्रातिपदिकेन महत्त्वविशिष्ट इन्द्रेऽभिहितेऽपि राजपुरुषश्शोभन इतिवद्विशेष्यमात्रस्यैव तद्धितार्थान्वय इति, तन्न; तथा सति गुणवाचिमहत्पदानर्थक्यप्रसङ्गात् । न हि तस्य राजपदवदर्थद्वारेणोपलक्षकता सम्भवति, देवतायास्स्वरूपेण कर्मव्यसम्बन्धात् । किन्तु शब्दोच्चारणद्वारा तदुपकारकत्वात् महत्पदस्याऽपि तद्वारैवोपलक्षकता वाच्या । ततश्च तस्याऽप्युच्चार्यत्वात् देवतात्वान्तर्गतत्वावगमेन महत्त्वरहितस्येन्द्रस्य तद्धितार्थान्वयः(१)सम्भवति । किञ्च सम्भवति विधेयेन्द्रविशेषणत्वेनाऽर्थवत्त्वे उपलक्षणत्वस्य स्नातकत्वस्य चाऽन्याय्यत्वान्न शुद्धस्येन्द्रस्य देवतात्वम् । राजपुरुषश्शोभन इत्यादौ तु प्रमाणान्तरानुरोधेन तथाऽङ्गीकरणमिति न किञ्चिदेतत् । अत एव च साम्नाय्ये "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्, माहेन्द्रं दध्यमावास्यायां माहेन्द्रं पयोऽमावास्याया"मिति व्यपदेशभेदः । अन्यथा तत्राऽपि महत्पदानर्थक्यम् ॥ १८ ॥

## तथा याज्यापुरोरुचोः ॥ २-१-१९ ॥

तथा साम्नाय्य एवेन्द्रमहेन्द्रदेवत्ययाज्यापुरोनुवाक्ययोर्भेदेनाऽऽम्नानमपीन्द्रमहेन्द्रयोर्भेद एवाऽवकल्पते।(२) अन्यथा एकेन

१. सम्भवतीति. क ख. पु. २. इतरथेति. ख. पु.

कार्यसिद्धेरितराम्नानमनर्थकं विकल्पो वा प्रसज्येत । न च भव-न्मतेऽप्येकापूर्वसाधनत्वादिन्द्रमहेन्द्रयोर्धर्मसाङ्कर्यापत्तेर्विकल्पानिवारणम्, सम्मीलनादिवत्प्रतिनियतधर्मानिर्देशेन साङ्कर्यानापत्तेः।

वस्तुतस्तु मन्त्राणां लिङ्गेन मुख्य एवाऽर्थे विनियोगात्(१) 'व्रीहीणां मेध सुमनस्यमान' इतिवदेकापूर्वसाधनीभूतेऽप्यर्थान्तरे अप्राप्तत्वेन साङ्कर्यप्रसङ्ग एव नाऽस्ति । अतो याज्यापुरोनुवाक्ययोर्भेदाम्नानमपि देवताभेदसाधकम् । सूत्रे पुरोरुक्छब्दश्शस्त्रगतमन्त्रविशेषवाच्यपि लक्षणया पुरोनुवाक्यापरो द्रष्टव्यः ॥१९॥

## वशयामर्थसंयोगात् ॥ २-१-२० ॥

यत्तु वशात्वगुणविशिष्टद्रव्यविधावपि छागशब्देन विशेष्यमात्रप्रकाशनं दृष्टमित्युक्तम्, तद्वशात्वस्य(२) स्वरूपत एवोपकारकत्वादुपायान्तरेणाऽपि स्मृत्या कर्मण्यनुष्ठानोपपत्तेर्नाऽवश्यं शब्दोच्चारणापेक्षा । प्रकृते तु महत्त्वस्य महत्पदोच्चारणद्वारेणैवोपकारकत्वान्नाऽनुच्चरितस्य साधनत्वं संभवतीति विशेषः ॥२०॥

## यत्रेति वाऽर्थवत्त्वात्स्यात् ॥ २-१-२१ ॥

ननु यत्र माहेन्द्रग्रहसन्निधावयमैन्द्रः प्रगाथः पठितः, तत्रैवाऽस्य मनोतास्थाग्नि(३)पदवल्लक्षणया महत्त्वविशिष्टेन्द्रप्रकाशकत्वेन निवेशकल्पनादर्थवत्त्वोपपत्तिः । वस्तुतस्तु नेदृशस्थले लक्षणा । त्यागवेलायां महेन्द्रपदप्रयोगेऽपि मन्त्रे विशेष्यभूतेन्द्रमात्रप्रकाशनेन मन्त्रस्याऽपूर्वीयदेवतात्वाश्रयवाच्यभूतेन्द्रप्रकाशना-

१. तै. ब्रा. ३. ७. ५.  २. स्वत एवेति क. पु.
३. शब्दवदिति. ख. पु.

र्थत्वेनाऽप्युपपत्तेः । मनोतास्थाग्निशब्दे तु देवतावाचिमनोतापद-सामानाधिकरण्येन लक्षणाङ्गीकरणमित्युक्तं(१) मन्त्राधिकरणे । अतश्च यथापठितस्याऽप्युपपत्तेर्नोत्कर्षापत्तिः । अथ वा पूषानुमन्त्रणमन्त्रवद्दुर्बलप्रमाणबाधेनोत्कर्षाङ्गीकारेऽपि न क्षतिः । न च तत्र यागानुमन्त्रणमन्त्रसमाख्यावदिह सम्बन्धसामान्य-बोधकप्रमाणाभावेनोत्कर्षस्याऽप्यनुपपत्तेरानर्थक्यापत्तिः, ऐन्द्र-यागान्तरे तदभावेऽपि ज्योतिष्टोमप्रकरणस्थैन्द्रग्रहाभ्यासे प्रकरण-स्यैव सामान्यसम्बन्धबोधकस्य सत्त्वेनोत्कर्षोपपत्तेः । अतश्च यत्र प्रकरण एवैन्द्रो यागस्तत्राऽस्य प्रगाथस्योत्कर्षेऽप्यर्थवत्त्वोपपत्तिरिति ॥ २१ ॥

## न त्वाम्नातेषु ॥ २-१-२२ ॥

न चैन्द्रस्य प्रगाथस्य प्रकरणे उत्कर्षसम्भवेऽप्यन्येषु तत्त-द्ग्रहाभ्याससन्निधावाम्नातेषु मन्त्रेषु "याम्याश्शंसति, शिपिविष्टवतीश्शंसति, पितृदेवत्याश्शंसति, कुसुंभकसूक्तमन्वाह, अक्षसूक्तं मण्डूकसूक्तं मूषिकसूक्तमन्वाह"इत्यादिविधिविहितेषु प्रकरणेऽपि यमादीनामभावात्तत्रोत्कर्षानुपपत्तेः, प्रकरणबहिर्भूते यमादिदैवत्यकर्मणि च सामान्यसम्बन्धबोधकप्रमाणाभावेनोत्कर्षानुपपत्तेः, कुसुम्भकादीनां चाऽन्यत्राऽपि देवतात्वाभावेन सुतरां तदनुपपत्तेर्नाऽर्थवत्त्वोपपत्तिरिति वाच्यम् ॥ २२ ॥

## दृश्यते ॥ २-१-२३ ॥

सर्वेषामेवाऽर्थवत्त्वोपपत्तेः । तथा हि--मण्डूकसूक्तस्य ता-

१. पू. मी. १. २. ४.

वत्(१) "मण्डूकेनाऽग्निं विकर्षती"ति विहितमण्डूकप्रकाशकत्वे-नाऽग्न्यानुपयोगः । न च तस्याऽनारभ्याधीतत्वेन सामान्यसम्ब-न्धबोधकप्रमाणाभावः, मण्डूकसूक्तस्य प्रकरणाज्ज्योतिष्टोमस-म्बन्धेऽवगते(२) आनर्थक्यतदङ्गन्यायेन तदङ्गभूते चयने नि-वेशोपपत्तेः । एवं मूषिकसूक्तस्याऽपि प्रकरणाज्ज्योतिष्टोमाङ्ग-भूतयूपैकादशिन्यां निवेशः । तत्र च यद्यप्याखोर्न साक्षाद्विनि-योगः, तथाऽप्युपशये यूपे(३) "सर्वे वा अन्ये यूपाः पशुमन्तो ऽथोपशय एवाऽपशुरि" त्युपक्रम्य द्रव्याभावे "आखुस्ते पशुरिति ब्रूयादि" ति मन्त्रविधानेनाऽऽखुस्मृतिद्वारा लक्षणया तत्सम्ब-न्ध्युपशयस्तुतिरिति द्रष्टव्यम् ।

ये तु याम्यादिमन्त्रास्तेषां प्रकरणे कथमपि निवेशासम्भवे-नोत्कर्षायोगादन्यत्र च सामान्यसम्बन्धबोधकप्रमाणाभावेनैव तदप्रसक्तेरगत्या प्रकृतग्रहदेवतैव लक्षणया तैः प्रकाश्यते । प्र-योगाभावेन निषिद्धलक्षणानङ्गीकारे तु जपादिमन्त्रवद्याम्यादि-मन्त्राणामप्यदृष्टार्थमुच्चारणं प्रकृतग्रहयागाङ्गत्वेन विधीयते । अ-स्मिंश्च पक्षे स्तौतिशंसत्योर्गुणिविशेष्यकप्रकाशनलक्षकत्वाभावे-ऽपि लक्षणयोच्चारणपरत्वमेव द्रष्टव्यम् ।

यदि त्वस्मिन् पक्षेऽदृष्टार्थत्वस्याऽऽवश्यकत्वे लक्षणाङ्गीकारे प्रमाणाभावश्शङ्क्येत, ततो याम्यादिविषये गुणविशेष्यकगुणिस-म्बन्धकीर्तनात्मकस्तोत्रशस्त्रविधानमेवाऽदृष्टार्थमङ्गीक्रियते । न चैतावता सर्वत्रैव तथा प्रसङ्गः, अनुपपत्तेरभावात् । न च या-म्यादिमन्त्रेषु आधारवन्मन्त्रवर्णकल्प्यदेवताङ्गीकारेण तद्दैवत्ययागान्तरस्यैव कल्पयितुं शक्यत्वात्, किमिति सिद्धान्त्यभिप्रेतस्तो-त्रशस्त्रादृष्टार्थताङ्गीकरणमिति वाच्यम् । याम्यादिमन्त्रैस्स्तुति-

---

१. तै. सं. ५. ४. ४. २. पू. मी. ३. १. ९. ३. तै. सं. ६. ६. ४. ५.

भाक्त्वरूपदेवतात्वकल्पनेऽप्याघारवद्द्रव्यसम्बन्धाभावे हविर्भाक्त्वरूपदेवतात्वाकल्पनात् तदेककल्प्ययागानुमानानुपपत्तेः । अत एव जपादिमन्त्रेषु न यागान्तरकल्पनम् । किन्त्वदृष्टार्थत्वमेव ।

न चाऽन्येषु जपादिमन्त्रेष्वदृष्टार्थत्वेऽप्यत्र "यद्यज्ञस्य साधनता व्यापद्येत अतो देवा अवन्तु न इति जपेत् अपि वाऽन्यां वैष्णवीमि" त्यादौ विष्णुप्रकाशकस्य मन्त्रस्योपांशुयाजाङ्गत्वेन विद्वद्वाक्यविहितकर्मणि मान्त्रवर्णिकदेवताकल्पकत्वेनोपपत्तेः किमित्यदृष्टार्थत्वाङ्गीकरणमिति वाच्यम् । विधिवाक्यादेवैतस्य मन्त्रस्य यज्ञसाधनलोपनिमित्तवैगुण्यसमाधानार्थत्वेनाऽवगतत्वादर्थान्तराकाङ्क्षानुपपत्तेः । अतो जपादिमन्त्रवदेव याम्यादिमन्त्राणामदृष्टार्थत्वं सिद्धान्त्यभिप्रेतस्तुतिरूपत्वमेव वाऽङ्गीकर्तव्यम् ।

यत्तु मूले "वाचस्तोमे सर्वा ऋचस्सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं शंसती"ति विहिते शस्त्रे सर्वेषां मन्त्राणां विनियोगाद्याम्यादीनामपि तत्रैवोत्कर्षः । यद्यपि च तत्र दृष्टविधया नोपयोगः, तथाऽप्यदृष्टद्वारैव तदुपपत्तिरित्युक्तम्, तत् वाचस्तोमेऽप्यदृष्टार्थतावश्यकत्वे याम्यादीनामपि सन्निध्यबाधार्थं प्रकृत ग्रह एवाऽदृष्टार्थत्वस्य न्याय्यत्वादुपेक्षितम् । यदि तु वचनेन सन्निधानबाधान्न प्रकृतग्रहसम्बन्ध इत्याशंक्येत, ततो दर्शपूर्णमासादिप्रकरणपठितानां जपादिमन्त्राणामन्येषां च लिङ्गादिविनियुक्तानां वचनेन लिङ्गादिबाधापत्तेर्न तदङ्गत्वसम्भवः । अथ तु वाक्यस्याऽपि सामान्यविषयस्य विशेषनिष्ठलिङ्गादिबाधकत्वायोग उच्येत, ततस्सन्निधानेऽपि तुल्यम् । तस्मात्पूर्वोक्तविधयैवाऽर्थवत्त्वदर्शनं व्याख्येयम् ॥ २३ ॥

अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २-१-२४ ॥

नैन्द्रस्य प्रगाथस्योत्कर्षस्सम्भवति । स हि न तावत्प्राकरणिक एवैन्द्रयागे, तस्याऽवान्तराधिकारविहितमन्त्रान्तरावरोधेन तत्राऽस्य मन्त्रस्याऽनवकाशात् । नाऽपि क्रतुप्रकरणबहिर्भूते इन्द्रयागान्तरे । तत्र सामान्यसम्बन्धबोधकप्रमाणाभावेनोत्कर्षानुपपत्तेः । इन्द्रशब्देन प्रतीतास्थाग्निशब्दवन्महेन्द्रप्रतिपादनं तु लक्षणा(१) भिया त्वयैव निरस्तम् । अवशिष्यते तावद्यागवेलायां विशेषणयुक्तप्रकाशनेऽपि मन्त्रे विशेष्यमात्रप्रकाशनं नाऽनुपपन्नमिति ।

तत्रेदं वाच्यम्—स्तौतिशंसत्योर्गुणिप्रकारकगुणविशेष्यकबोधानुकूलव्यापारवाचित्वस्य, गुणिनिष्ठगुणतात्पर्यकबोधानुकूलव्यापारवाचित्वस्य वा 'वक्रकेशान्तो देवदत्त' इत्याद विवाऽवधारणात् गुणिप्रकाशनार्थत्वे लक्षणापत्तेस्स्तौतिशंसतिवाच्यस्यैवाऽर्थस्य (२)विधेयत्वावगमात्तस्य च दृष्टार्थत्वासम्भवे अदृष्टार्थत्वकल्पनस्य फलमुखत्वेन प्रामाणिकत्वान्नाऽनुपपत्तिरिति । लोके हि वक्रकेशो देवदत्त इत्यत्र देवदत्ते वक्रकेशत्वप्रतिपादन एव स्तुतिबुद्धिरुत्पद्यते, न पुनर्वक्रकेशत्वस्य देवदत्तविशेष्यताप्रतिपादने । तेन स्तौतिशंसतिपदशक्तिपर्यालोचनया प्रकाशनार्थत्वावगमाददृष्टार्थत्वाङ्गीकारेणाऽपि गुणिप्रकारकगुणविशेष्यकशाब्दबोधानुकूलव्यापाररूपस्तुतिविधायित्वमेव युक्तम् । न च 'प्रयाजशेषेणे'तिवद्दृष्टार्थत्वानुरोधेन लक्षणाङ्गीकरणमप्यदोषः, प्रकाशनस्य लिङ्गकल्प्यश्रुतिबलेनैव प्राप्तिसम्भवे लक्षणयैव तत्प्रतिपादनेऽपि विधिवैयर्थ्यात् । किञ्च दृष्टार्थत्वं किं त्वया मन्त्राणामभ्युपगम्यते ? स्तुतेर्वा ? नाऽऽद्यः, ममाऽपि स्तुतिनिष्पादकत्वेन तत्सत्वात् । नाऽन्त्यः स्तुतिस्वरूपस्यैव हानापत्तेः । तस्माद्धातुश्रुतिसंयोगात् प्रकरण एव स्तौतिशंसती स्तुतिरूप-

---

१. दोषात्त्वयैवेति. क. पु.    २. विधेयत्वावसायादिति. क. पु.

क्रियोत्पत्तिं विदध्यातामिति सूत्रार्थः ॥ २४ ॥

## शब्दपृथक्त्वाच्च ॥ २-१-२५ ॥

"द्वादशस्तोत्रोऽग्निष्टोमो द्वादशशस्त्रोऽग्निष्टोम" इति श्रुतं द्वादशत्वं न प्रकाशनलक्षणार्थत्वेऽवकल्पते, प्रकाशनानां प्रत्यृचं प्रतिपदं वा भिन्नत्वेन द्वादशत्वानुपपत्तेः। प्रकाशनत्वेनैक्याङ्गीकारे सुतरां तदनुपपत्तेश्च। अस्मन्मते तु सत्यपि प्रत्यृचं स्तुतिव्यक्तीनां भेदे विधिभेदेन विधेयतत्तदनेकस्तुतिव्यक्तिवृत्तिविधेयतावच्छेदकीभूतवैजात्यावश्यंभावात्तत्तज्जातिगतद्वादशत्वोपपत्तिः। तव तु प्रकाशनस्य सामर्थ्यप्राप्तत्वेनाऽविधेयत्वान्न वैजात्य(१)-कल्पने प्रमाणमस्ति।

किञ्चाऽस्मन्मते वैजात्याकल्पनेऽपि तत्तद्विधिभेदेन विधेयभावनाभाव्यस्याऽनेकस्तुतिजन्यापूर्वस्य भेदावश्यंभावात्तद्गतद्वादशत्वेनाऽपि स्तोत्रादिद्वादशत्वोपपत्तिः। प्रकाशनपक्षे तु तस्य दृष्टार्थत्वेनाऽपूर्वानङ्गीकारात् दृष्टप्रयोजनैक्यस्य च प्रत्यक्षबाधितत्वेन द्वादशत्वानुपपत्तिः। अतो द्वादशशब्देन स्तोत्राणां शस्त्राणां च पृथक्त्वाक्षेपादपि न प्रकाशनलक्षणा ॥ २५ ॥

## अनर्थकं च तद्वचनम् ॥ २-१-२६ ॥

प्रकाशनार्थत्वपक्षे अग्निष्टुति "आग्नेया ग्रहा भवन्ती"ति वचनेन प्राकृतग्रहानुवादेनाऽग्निदेवताविधौ कृते प्राकृतदेवताबाधवत्तत्प्रकाशकमन्त्रबाधेनाऽग्निप्रकाशकमन्त्रान्तराणां न्यायादेव प्राप्तेः 'आग्नेयीषु स्तुवत' इति वचनवैयर्थ्यापत्तिः। न चाऽस्य

---

१. कल्पनायामिति. ख. पु.

प्राकृतमन्त्रेष्वेवाऽग्निपदोहप्रसक्तौ मन्त्रान्तराविधानेनाऽर्थवत्त्वमिति वाच्यम् । "पूयति वा य एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेदि" ति वचनेन ऋगूहनिषेधादर्थप्रकाशनरूपकार्यबलेनाऽऽग्नेयमन्त्रान्तरस्यैव प्राप्तेः । अस्मन्मते तु सत्यपि ग्रहाणामाग्नेयत्वे कर्मासमवेतगुणिनिष्ठस्याऽपि गुणस्य कीर्तनेन स्तोत्रशस्त्रजन्यादृष्टसम्भवस्योपपत्तेः प्राकृतानामेव मन्त्राणामुच्चारणप्रसक्तौ तन्निवृत्त्यर्थं 'आग्नेयीषु स्तुवत' इति(१) सार्थकम् ॥ २६ ॥

## अन्यश्चाऽर्थः प्रतीयते ॥ २-१-२७ ॥

'सम्बद्धं वै स्तोत्रं शस्त्रं चे'ति श्रुत्या स्तोत्रशस्त्रयोःसम्बन्धप्रतीतेस्सम्बन्धस्य च(२) भेदसाधनत्वात्स्तोत्रशस्त्रयोस्स्वरूपतः फलतो वा वैजात्यकल्पनया भेदोऽवधार्यते । न चाऽसौ प्रकाशनार्थत्वपक्षे सम्भवति । न च (३)स्तोत्रादावपि प्रगानाप्रगानकृतस्सम्भवत्येवेति वाच्यम् । स्वरूपतः फलतो वा भेदमानसम्भवे प्रगानाख्याङ्गकृत(४)भेदस्याऽन्याय्यत्वात् ॥ २७ ॥

## अभिधानं च कर्मवत् ॥ २-१-२८ ॥

यदिदं स्तोत्रशस्त्रादिरूपं सामान्याभिधानं, यच्चाज्यपृष्ठप्रउगादिरूपं विशेषाभिधानम्, तदुभयमप्याराद्रुपकारकत्वपक्षे उपपद्यते, न तु संस्कारकर्मत्वपक्षे । संस्कारस्य संस्कार्यनिरूपणाधीननिरूपणीयस्य संस्कार्येणैवाऽवच्छेदसिद्धौ अवच्छेदकीभूतसंज्ञानपे-

१. वचनं नाऽनर्थकमिति. क. ख पु.
२. भेदनिबन्धनत्वादिति. क. ख. पु. ३. तत्राऽपीति. क. पु.
४. भेदाङ्गीकरणस्येति. ख. पु.

क्षत्वात् । एवं सत्यपि यद्यारादुपकारकत्वग्राहकः स्तौतिशंस-तिधातुरूपः श्रुतिसंयोगस्संस्कारकमंत्रत्वबाधको न स्यात्, ततो लिङ्गेन संस्कारकर्मत्वस्यैवाऽवधारणात् "अंशुं गृह्णात्यदा-भ्यं गृह्णाती" तिवदगत्या सत्यप्यवच्छेदकान्तरे संज्ञावच्छिन्न-मेव ज्ञातं कृतं कर्माऽभ्युदयकारि भवतीति कल्पनया संज्ञाऽप्य-ङ्गीक्रियेत, न त्वेतदस्तीत्यत आरादुपकारकत्वमेव युक्तमुत्प-श्यामः ॥ २८ ॥

## फलनिर्वृत्तिश्च ॥ २-१-२९ ॥

(१)"स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वदा मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनामहे भक्षीमहि प्रजामिषम्, सा मे सत्याशीर्य-ज्ञस्य भूयादि" ति मन्त्रे भावनिष्ठान्तेन स्तुतपदेन स्तोत्रक्रियो-पादानात्, स्तोत्रस्य मध्ये स्तोत्रमसि, तदेवं भूतं स्तोत्रस्योर्जस्व-त्पयस्वद्भूत्वा मां आगम्यात्, इन्द्रवन्तः इन्द्रोपलक्षितदेवतावन्तो वयं, त्वां याचामहे, प्रजामिषं भजेमहीति सेयं यज्ञपदलक्षितस्य स्तोत्रस्याऽऽशीस्सत्या भूयादित्यर्थकस्तोत्रादेव फलं प्रार्थितं, न देवतातः । यद्यपि च नेदं स्तोत्रस्य फलं करणविभक्तिसंयोगा-भावेनाऽवगतक्रत्वङ्गभावस्य स्तोत्रस्य मान्त्रवर्णिकफलकल्पनानु-पपत्तेः, तथाऽपि प्रधानफलमेवेदं परम्परासम्बन्धेन स्तोत्रा-त्प्रार्थितं, लक्षणया वा स्तोत्रफलमेव क्रतूपकाराख्यम् । अतश्च स्तोत्रक्रियातः फलप्रार्थनात्तस्या एव प्राधान्यम्, न देवतायाः। इतरथा हि देवतात एव फलं प्रार्थ्येत, प्राधानत्वात्, नाऽङ्गभू-तात्प्रकाशनात् । किञ्च प्रकाशनस्य दृष्टफलस्य प्रत्यक्षगम्यत्वान्न

---

१. तां. ब्रा. १. ६. ३.

प्रार्थनार्हत्वं, स्तोत्रफलस्य त्वदृष्टत्वात्तदर्हत्वमिति विशेषः । अत आरादुपकारकाण्येव स्तोत्रशस्त्राणीति सिद्धम् ।

प्रयोजनं प्राकृतग्रहानुवादेन विकृतौ देवतान्तरविधाने 'आग्नेयीषु स्तुवत'इत्येवंविधवचनाभावे प्राकृतानां मन्त्राणामविकारेण प्रयोगः सिद्धान्ते । पूर्वपक्षे प्राकृतऋग्बाधेन वैकृतदैवत्यऋगन्तरागम इति (१)दशमे वक्ष्यते ॥ २९ ॥

इति षष्ठं स्तुतशस्त्राधिकरणम् ॥ ६ ॥

अथ सप्तमं विधिमन्त्राधिकरणम् ॥ ७ ॥

## विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ २-१-३० ॥

( विषयसंशयसङ्गतयः )

एवं 'एष ह्यर्थो विधीयते' इत्यनेनोपक्षिप्तानां विधायकाख्यातानां "तानि द्वैध" मित्यादिना द्वैविध्यमुक्त्वा इदानीं प्रसङ्गादाख्यातस्याऽपि क्वचिद्विधायकत्वं नाऽस्तीति प्रतिपाद्यते । यथा(२) "न ता नशन्ति न दभाति तस्करो नासाममित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह" इत्यादिमन्त्रे "यस्योभयँ हविरार्तिमार्छे" दित्यादौ ब्राह्मणे च ये यच्छब्दादिसमभिव्याहृता आख्यातशब्दास्ते किं विधायकाः ? उत नेति संशयः । अत्राऽप्यपूर्वभेदोपयोगिन एव विचार्यमाणत्वात्पादाध्यायसङ्गती स्पष्टे । प्रासङ्गिकी त्वनन्तरा ।

१. पू. मी. १०. ४. २४.

२. ऋ. सं. ४. ६. २५.

( पूर्वपक्षः )

तत्र 'आच्छेदि'त्यादौ असन्दिग्धलिङ्श्रवणात् यजते ददाति चेत्यादावपि स्तुत्युन्नीतलेडन्तत्वावधारणात् 'यजेत स्वर्गकाम' इतिवदेव विधायकत्वाविघातः। न च यच्छब्दादिना प्रतिबन्धः, यच्छब्देन गोपदार्थस्य सिद्धत्वद्योतनेऽपि "यदाग्नेयोऽष्टाकपाल" इतिवद्यागसाधनत्वेन विध्युपपत्तेः। अत एव कर्तृसमानाधिकरणस्य यच्छब्दस्यैव प्रतिबन्धकता न कर्मसमानाधिकरणस्येति सिद्धान्तिनोऽपि प्रवादः।

वस्तुतस्तु गुणभूतेन यच्छब्दादिना प्रधानभूतविधिशक्तिप्रतिबन्धस्याऽन्याय्यत्वात्कर्तृसमानाधिकरण(१)यच्छब्दे सत्यपि न विधित्वव्याघातः। किञ्च यच्छब्दादिकं प्राप्तिं द्योतयत्प्रतिबन्धकं वाच्यम्। सा यदि प्राप्तिः प्रमाणान्तरेणाऽस्ति तदा तेनैव प्रतिबन्धसिद्धेः कृतं यच्छब्दादिना। यदि नाऽस्ति ततो यच्छब्दसद्भावेऽपि "य एवं विद्वानग्निं चिनुत" इतिवदप्राप्तार्थकत्वादेव विध्युपपत्तेर्न यच्छब्दादेः प्रतिबन्धकता संभवति।

वस्तुतस्तु एतस्य मन्त्रस्य गोद्रव्यकानुबन्ध्यपशुपुरोडाशानुनिर्वाप्यदैविकहविर्योगे चरुद्रव्यके गोदैवत्यगाज्यात्वेन विनियुक्तत्वात्तत्र च चरुद्रव्यकत्वाद्गोद्रव्यकत्वाभावेन तत्र विनियुक्तस्याऽप्यस्याऽप्राप्तस्वतन्त्रगोद्रव्यकयागविधायकत्वोपपत्तिः। न च साक्षाच्छेपिणि दैविकहविर्योगे गोद्रव्यकत्वाप्राप्तावपि तच्छेपिण्यामनुबन्ध्यायां गोद्रव्यकत्वस्य प्राप्तत्वादविधायकत्वोपपत्तिरिति वाच्यम्। एवं यथाकथञ्चित्प्राप्तिसंभवेऽप्यभ्यासात्कर्मान्त-

१. यच्छब्दसत्त्वेऽपीति. क. ख. पु.

त्वोपपत्तेः । अतश्च 'यजेत स्वर्गकाम'(१) इतिविध्याख्यातव-न्मन्त्रगतस्याऽप्याख्यातस्य विधिरूपैकप्रयोजनकत्वमेव । वि-धायकशब्दत्वस्योभयत्र समानत्वादिति सूत्रार्थः । अत्र च मन्त्रग्रहणं यच्छब्दादिसमभिव्याहृताख्यातमात्रोपलक्षणम्, न तु स्वतन्त्रम्, "वसन्ताय कपिञ्जलानालभेते" त्यादाव-भियुक्तप्रसिध्या मन्त्रत्वेऽपि विधायकत्वाङ्गीकारात् । 'यस्योभ-यमि'त्यादौ च ब्राह्मणे यच्छब्दादिसमभिव्याहारे तदनङ्गीका-राच्च । अतश्च सर्वस्याऽप्यत्रोदाहरणत्वेऽपि प्रायशो यच्छब्दादि-समभिव्याहारस्य(२) तेष्वेव सत्त्वात्सूत्रे मन्त्रग्रहणम् ॥ ३१ ॥

## अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधा-नवाची स्यात् ॥ २-१-३२ ॥

### ( सिद्धान्तः )

नैते विधायकाः, 'यजत' इत्यादीनां लट्लेट्साधारणत्वेन विध्यर्थकत्वानिश्चयात् । न च(३) स्तुत्या तन्निश्चयः, विधेरभावे स्तुतेरेवाऽनिश्चयेन तस्यास्तदनिश्चायकत्वात् । न च "वसन्ताय कपिञ्जलानालभेते"त्यादिवदप्राप्तार्थकत्वमेव तन्निश्चायकम्, गो-द्रव्यकस्य यागदानादेरनूबन्ध्यारूपस्य तदन्यस्य वा बहुशः प्रा-प्तत्वेन तदसिद्धेः । अत एव न विधिपुनश्श्रवणरूपादभ्यासा-त्कर्मान्तरत्वं शङ्क्यम्, विधित्वस्यैवाऽनिश्चयेनाऽभ्यासस्वरूपा-भावात् । विध्यभावेऽपि पुनश्श्रुतिमात्राद्भेदस्तु पुनश्श्रुतेस्स्मर-णार्थत्वेनाऽप्युपपत्तेरनन्यपरत्वाभावादयुक्तः । किञ्च यद्यप्यत्र

१. इत्यख्यातवदिति क. पु. २. मन्त्रेष्वेवेति. क. ख. पु.
३. स्तुतिरेव तन्निश्चायिकेति क. ख. पु.

विधायको लिङादिरश्रोष्यत, तथाऽपि यच्छब्दादिना विधिश-क्तिप्रतिबन्धान्नाऽस्य विधायकत्वोपपत्तिः ।

तथा हि—यच्छब्दस्तावत्स्वसमभिव्याहृतार्थस्य सिद्धतां द्योतयन्प्राप्तिमपेक्षते । अस्ति चाऽत्र सा । अतो गोद्रव्यकयाग-दानादेरनूद्यमानस्याऽज्ञातज्ञापनैकस्वभावविधिविषयत्वायोगस्स्प-ष्ट एव । न च यच्छब्दस्य स्वार्थमात्रे सिद्धताद्योतकत्वाद्गोस्वरू-पानुवादेऽपि तस्य साधनत्वेन विध्युपपत्तिरिति वाच्यम् । यः पाकं करोति स भुङ्क्त इत्यादौ यत्तच्छब्दयोस्स्वसमभिव्याहृतमात्रे सिद्धत्वद्योतकताव्युत्पत्तेः । अतश्च याभिर्यजते, याश्च गा ददा-ति, ता न नश्यन्ति , न च तस्करो दभ्नोति, न वासां अमि-त्रकृता व्यथा अभिभवति, गोस्वामी च ताभिस्सह चिरं नन्दतीति यच्छब्देन समभिव्याहृते गोद्रव्यके यागदाना-दावपि सिद्धताप्रतीतेर्न विधेयतोपपत्तिः । यच्छब्दस्य समभि-व्याहृतप्रवृत्तिसिद्धताद्योतकत्वादेव च यत्र कर्तृसमभिव्याहारस्त-त्र कृत्याश्रयत्वरूपस्य कर्तृत्व[illegible] सिद्धताप्रतीतौ कृतेरपि तत्प्रती-तेर्विधेयत्वानुपपत्त्या विधिः [illegible] ।

यत्र तु कर्ममात्रसम[illegible]हृता यच्छब्दस्तच्छब्दसमभिव्या-हृतश्च विधिः, तत्र सत्यपि कर्मस्वरूपस्याऽनुवादे कर्तव्यत्वेन वि-धानोपपत्तेः न विधिशक्तिप्रतिबन्धकता यच्छब्दस्य । प्रकृते तु विधेर्यच्छब्देनैव समभिव्याहाराद्युक्ता प्रतिबन्धकतेति विशेषः । एवं सत्यपि यदि कथञ्चिदप्यालोच्यमाने प्राप्तिर्न सम्भाव्येत, त-तो 'यदाग्नेयोऽष्टाकपाल' इतिवद्यच्छब्दस्य स्वार्थमात्र(१)सिद्धत्व-द्योतकतामङ्गीकृत्य विधेर्विधायकत्वोपपत्तेर्न शक्तिः प्रतिबध्येत ।

---

१. प्रसिद्धिद्योतकेति ख. पु.

न त्वेतदस्ति, गोऽङ्गयकस्य यागदानादेर्बहुशः प्राप्तत्वात् ।

यत्तु सत्यपि यच्छब्दस्य विधिविरोधित्वे प्रधानभूतत्वाद्वि-ध्यनुग्रह एव न्याय्यः, न गुणभूतयच्छब्दानुग्रह इत्युक्तम्, तत् 'उच्चैर्ऋचा क्रियत' इत्यादौ प्रधानभूतस्याऽप्युपसंहारस्थस्य विधेरुपक्रमस्थेन गुणभूतेनाऽप्यर्थवादेन बाधस्य वक्ष्यमाणत्वादकिञ्चित्करम् ।

वस्तुतस्तु विधिवदेव यच्छब्दस्याऽपि प्रधानभूतार्थभावनान्वयित्वान्न विधिं प्रति तस्य गुणत्वम् । यदि परं पदान्तरत्वात्तदपेक्षया विप्रकर्षश्शङ्क्येत, ततः "ऐन्द्रं पञ्चशराव" मित्यनेन वाक्यभेदापत्तेः (१)'हेतुहेतुमतोरि'त्यनुशासनैवयर्थ्यापत्तेश्च विधिशक्तिप्रतिबन्धोऽनुसन्धेयः ।

एवं यदिशब्दस्याऽपि निमित्तपरत्वेन प्राप्तिद्योतकत्वाद्विधिविरोधित्वं द्रष्टव्यम् । अतश्चोभयत्राऽपि लिङ्श्रवणं 'हेतुहेतुमतोरि'ति स्मृतेर्हेतुरूपनिमित्तत्वादेपरम् । यजते ददातीत्यत्र तु (२)लिङोऽश्रवणाल्लडन्तत्वस्यैव निश्चयः । एवं "अग्नीदग्नीन्विहर" इत्यत्र सम्बोधनविभक्तेर्वक्त्रभिमुखश्रोतृमात्रविषयत्वाद्वेदे च वक्तुरभावाद्विधेश्चाऽभिमुखानभिमुखसर्वपुरुषसाधारणत्वाद्विरुद्धस्वभावेनाऽऽमन्त्रणेन विधिशक्तिप्रतिबन्धः । अतश्च लोडप्यत्र नाऽलौकिकविध्यर्थकः, किन्तु(३) "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे" ति चकारात् प्रैषार्थक एव, लौकिकप्रवर्तनार्थको वा ।

यत्तु न्यायसुधाकृता सम्बोधनविभक्तिसमभिव्याहृतस्य लिङादेः प्रमाणान्तरप्रवृत्तपुरुषप्रवर्तकत्वावगमादप्रवृत्तप्रवर्त्तनात्मकविधिशक्तिव्याघात इत्युक्तम्, तत् लोके प्रमाणान्तरानधिगमेऽपि देवदत्त गामानयेत्यादौ सम्बोधनविभक्तिप्रयोगदर्शनादुपे-

१. पा.सू. ३.३.१५६. २. लिङभावादिति क.पु. ३. पा.सू.३.३.१६३.

क्षितम् । एवं ददामि गृह्णामीत्यादौ तावल्लडन्तत्वादेव न विधिशक्तिः । विशेषतश्चाऽस्मदर्थविषयोत्तमपुरुषान्तत्वेन परप्रवर्तनात्मकविधिविरोधित्वम् । अतश्च यत्राऽपि अहं दद्यामित्यादौ लिङः श्रवणमुत्तमपुरुषे, तत्राऽपि लिङः स्वनिष्ठप्रवर्तनापरत्वमेव लक्षणया, न तु परप्रवर्तनात्मकविधिवाचित्वमिति विवेकः । अतश्च यच्छब्दादिचतुष्टयस्य प्रतिबन्धकत्वात् तत्समभिव्याहृतस्य लिङादेर्न विधायकत्वम् , अपि तु प्रमाणान्तरसिद्धानुवादकत्वमेव । न चैवमानर्थक्यम् , ब्राह्मणगतानां निमित्तादिप्रतिपादकतया विध्यपेक्षितोद्देश्यसमर्पणेनोपयोगस्य वक्ष्यमाणत्वात् । मन्त्रगतानां तु यद्यपि विधेयसमर्पणेन वा उद्देश्यसमर्पणेन वा न विध्युपयोगः । नाऽपि स्तावकत्वेन, दूरस्थानां पदैकवाक्यत्वेन तावत्तस्याऽनुपपत्तेः, पदार्थविधया स्तुतिमात्रलक्षणायामपि स्वार्थबोधे समाप्त्यभावेन वाक्यैकवाक्यत्वेनाऽप्यनुपपत्तेश्च, तथाऽपि पारिप्लवन्मन्त्राधिकरणन्यायेन प्रयोगकाले ऽर्थाभिधायकत्वेनैव । अर्थोऽपि च यत्र प्रयोगसमवेतस्तत्र तदभिधानं दृष्टार्थम्, नो चेददृष्टार्थमिति विवेकोऽपि तत्रैव द्रष्टव्यः ।

सूत्रे च अपिवाशब्देन मन्त्रब्राह्मणसाधारण्येन विधायकत्वे निरस्ते ब्राह्मणगताख्याते निमित्तपरत्वं वक्ष्यमाणत्वादुपेक्ष्य मन्त्रगते तस्मिन्नर्थाभिधानव्यापारकत्वं मन्त्राधिकरणसिद्धमेव स्मारितमिति द्रष्टव्यम् । प्रयोजनं स्पष्टम् ॥ ३२ ॥

इति सप्तमं मन्त्राविधायकत्वाधिकरणम् ॥ ७ ॥

## अथाऽष्टमं मन्त्रलक्षणाधिकरणम् ॥ ८ ॥

### तच्चोदकेषु मन्त्राख्या ॥ २-१-३२ ॥

( विषयसंशयसङ्गतयः )

पूर्वाधिकरणे उपलक्षणतया मन्त्रशब्दप्रयोगादुपस्थितस्य मन्त्रस्येह लक्षणं प्रसङ्गादुच्यते । तत्र च(१) "अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयीविदा विदुः । ऋचस्सामानि यजूंषि । सा हि श्रीरमृता सता" मिति मन्त्रे प्रयुक्तस्य मन्त्रपदस्याऽर्थकथनाद्वेदवाक्यार्थविचारवत् पदार्थविचारस्याऽपि शास्त्रे कर्तव्यत्वेन प्रतिज्ञानाच्छास्त्रसङ्गत्युपपत्तिः । मन्त्रनियमादृष्टरूपापूर्वभेदोपयोगिमन्त्रभेदसिध्यर्थत्वाच्च पादाध्यायसङ्गतिः । यद्यपि तत्तदहष्टत्वावच्छिन्नं प्रति तत्तदानुपूर्वीकत्वेनैव कारणता, तथाऽपि 'यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि स' इत्यभिप्रेत्येदम् । प्रासङ्गिकी त्वनन्तरा ।

तत्र यथाश्रुतसूत्रस्वारस्यात्तावत् प्रयोगकाले अर्थप्रकाशकत्वं मन्त्रत्वमिति लक्षणं प्रतीयते। अत्र प्रयोगकाल इति विशेषणाद्विधावतिप्रसङ्गः । जपेष्वपि चाऽदृष्टार्थमर्थप्रकाशनाभाऽव्यापकत्वम् । वस्तुतस्तु मन्त्रकाण्डसमाम्नाते(२) 'वसन्ताय कपिञ्जलानालभेते'त्यादौ मन्त्रे विधायकत्वाङ्गीकारेणाव्यापकत्वापत्तेः । ब्राह्मणस्याऽपि च मन्त्राभावे स्मारकत्वस्य(३) पञ्चमे वक्ष्यमाणत्वेन तत्राऽतिव्याप्त्यापत्तेः । अनृक्सामादिमन्त्रेषु च कथमप्यर्थप्रकाशकत्वायोगेनाऽव्यापकत्वाच्चैतल्लक्षणायोगेनाऽभियुक्तानां मन्त्रपदवाच्यत्वप्रकारको यो निश्चयस्तद्विषयत्वं मन्त्रत्वमि[illegible]पादेव ।

---

१. [illegible] ब्रा. १. २. १. २. मा. सं २४. २०. ३. पू. मी. ५. १. ४.

सर्वव्यापकं सूत्रकृदभिप्रेतमिति प्रतीयते ।

ननु तत्राऽपि मन्त्रपदवाच्यतावच्छेदकानिश्चये वाच्यत्वप्रकारकनिश्चयायोगेन कथं लक्षणप्रसिद्धिः? न हि मन्त्रत्वं नाम जातिः, यत् मन्त्रपदशक्यतावच्छेदकत्वेन निश्चीयेत, तथात्वे वेदत्वब्राह्मणत्वादिवदेव गत्वादिना साङ्कर्यापत्तेः, अनेकवर्णाभिव्यक्तीनां यौगपद्याभावेन मन्त्रत्वस्याऽभिव्यक्त्यनापत्तेश्च । नाऽप्युपाधिः, स हि यदि मन्त्रपदवाच्यत्वप्रकारकप्रसिद्धिविषयत्वाख्यः, ततोऽन्योन्याश्रयता । यदि त्वन्यः, ततस्तस्यैव लक्षणत्वोपपत्तेर्नैतस्य सूत्रकृदभिप्रेततेति चेत्—न; अखण्डोपाधिरूपस्यैव वेदत्ववन्मन्त्रत्वस्य मन्त्रपदवाच्यतावच्छेदकत्वाङ्गीकारात् । अतश्च तदवच्छेदेन वाच्यत्वेऽवधारिते तत्प्रकारकनिश्चयाविषयत्वस्य लक्षणत्वोपपत्तिः।

ततश्च सूत्रम्—तदर्थाभिधानं चोदकं प्रयोजकं येषां तेषु मन्त्राख्येत्येवं यथाश्रुतमाभासमानमपि, तच्चोदकेषु मन्त्राध्येतृषु या मन्त्राख्या मन्त्रपदवाच्यत्वप्रकारिका प्रसिद्धिः सैव विषयतासम्बन्धेन मन्त्रलक्षणमिति व्याख्येयम् । यानि तु वृत्तिकारेणाऽस्यन्तत्वत्वान्तत्वादीनि मन्त्रलक्षणान्युक्तानि तानि अस्यन्तत्वस्य त्वान्ते, त्वान्तत्वस्य चास्यन्तेऽभावेनाऽव्यापकत्वापत्तेर्भाष्यकारेणैव दूषितानीति ग्रन्थगौरवभयान्नेह प्रपञ्च्यन्ते ॥ ३२ ॥

इत्यष्टमं मन्त्रलक्षणाधिकरणम् ॥ ८ ॥

## अथ नवमं ब्राह्मणलक्षणाधिकरणम् ॥ ९ ॥

### शेषे ब्राह्मणशब्दः ॥ २-१-३४ ॥

मन्त्रलक्षणप्रसङ्गात् (१) "एतद्ब्राह्मणान्येव पञ्च हवींषि" इत्यत्र वेदे प्रयुक्तस्य ब्राह्मणशब्दस्याऽर्थपरिज्ञानार्थं ब्राह्मणलक्षणमुच्यते--मन्त्रातिरिक्तवेदत्वं ब्राह्मणत्वमिति । अतश्च विधिवाक्यानि अर्थवादा उपनिषदश्च सर्वमपि ब्राह्मणम् । अत्र च ब्राह्मणत्वमपि मन्त्रत्ववदेवाऽखण्डोपाधिरूपं ब्राह्मणपदशक्यतावच्छेदकम् । अन्यथा मन्त्रातिरिक्तवेदत्वरूपब्राह्मणत्वस्येव ब्राह्मणातिरिक्तवेदत्वरूपस्य मन्त्रत्वस्याऽपि वक्तुं शक्यत्वेन विनिगमनाविरहात् । अतश्च यत्राऽभियुक्तानां ब्राह्मणमिति प्रसिद्धिः, तत् ब्राह्मणमिति लक्षणस्याऽपि मन्त्रवद्वक्तुं शक्यत्वेऽपि, कचिद्वैचित्र्यान्मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणं सूत्रकृता लक्षितम् । अथवा नैवेदं सूत्रं लक्षणाभिधानार्थम्, अपि तु शेषे मन्त्रातिरिक्तवेदभागे ब्राह्मणशब्दस्य येन केनचिल्लक्षणेन सुज्ञानत्वान्न मया लक्षणं वाच्यमिति लक्षणावक्तव्यत्वाभिधानार्थमेव व्याख्येयम् । अत एवाऽग्रे मन्त्रप्रस्तावोऽपि सङ्गच्छते । अत्राऽपि यानि वृत्तिकारेणेतिकरणबहुलत्वादीनि ब्राह्मणलक्षणान्युक्तानि तान्यव्यापकत्वापत्तेर्भाष्यकारेणैव दूषितानीति नेह प्रपञ्च्यते ॥ ३४ ॥

इति नवमं ब्राह्मणलक्षणाधिकरणम् ॥ ९ ॥

---

१. तै. ब्रा. १. ७. १.

## अथ दशमं ऊहाद्यमन्त्रताधिकरणम् ॥ १० ॥

### अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागस्स्यात् ॥ २-१-३५ ॥

( विषयसंशयौ )

'तच्चोदकेषु मन्त्राख्ये'त्यनेन लक्षणद्वयसूचनात्कस्य मुख्यत्वं कस्य वाऽभ्युच्चयतेति विवेकायेदमधिकरणम् । प्रकृतितोऽतिदेशेन प्राप्ते "अग्नये जुष्टं निर्वपामी"ति मन्त्रे कार्यवशेन विकृतौ प्रक्षिप्यमाणमग्निपदस्थाने सूर्यादिपदमूहः । "आर्षेयं वृणीत" इति विधिवशादुच्चार्यमाणः काश्यपादिः प्रवरः । 'यजमानस्य नाम गृह्णाती'त्यादिविधित उच्चार्यमाणं देवदत्तपदं नाम । तदेतान्यूहप्रवरनामधेयानि किं मन्त्राः उत नेति विचारः । केचित्तु मन्त्रब्राह्मणात्मके वेदस्य द्वैराश्ये निरूपिते प्रसङ्गात्प्रत्यक्षपठित एव वदे द्वैराश्यं, न त्वनुमित इति वक्तुमूहादीनां द्वैराश्यबहिर्भावोऽनेन प्रतिपाद्यत इत्याहुः । तेषां 'अनाम्नातेष्वमन्त्रत्ववत्त्वपि' तिवदब्राह्मणत्वमित्यपि सूत्रापत्तेः उपेक्षैव युक्ता ।

( पूर्वपक्षः )

तत्र प्रयोगकाले अर्थाभिधायकस्यैव मन्त्रपदवाच्यत्वादूहादीनां चाऽर्थाभिधायकत्वस्य स्पष्टत्वात् मन्त्रपदैकवाक्यत्वाच्चैषां मन्त्रत्वम् । अन्यथा ह्यमन्त्रैकवाक्यतापन्नानां मन्त्राक्षराणामपि ब्राह्मणैकवाक्यतापन्नमन्त्राक्षरवदमन्त्रत्वापत्तिः । ऊहे तु मन्त्रान्तर्गताग्निपदत्यागादप्यवशिष्टाक्षरेषु सा । अस्मन्मते तु मन्त्र-

भूताग्निपदयुक्तानामिव मन्त्रभूतसूर्यादिपदयुक्तानामपि मन्त्रत्वोपपत्तेर्नाऽयं दोषः । तस्मादूहादीनामपि मन्त्रत्वमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—पूर्वसूत्रव्युत्पादिताव्याप्त्यतिव्याप्त्यादिदूषणवशेनैतल्लक्षणायोगस्य स्पष्टत्वादभियुक्तप्रसिद्धिविषयत्वस्यैव तल्लक्षणत्वं वाच्यम् । अतश्चोहादीनां तदभावेन मन्त्रत्वायोगस्स्पष्ट एव । न चैतावता तदेकवाक्यतापन्नमन्त्राक्षराणाममन्त्रत्वापत्तिः, मन्त्रत्वप्रत्यभिज्ञानस्य दृढत्वात् । अत एव कर्मकाले याज्यान्तःप्लुतिकरणेऽपि न मन्त्रत्वहानिः । यत्र तु श्लोकाद्येकवाक्यतापन्नद्वित्रिमन्त्राक्षरेषु न मन्त्रत्वप्रसिद्धिरभियुक्तानाम्, तत्र मन्त्रत्वे प्रमाणाभावस्स्पष्ट एव । अतश्चोहादिष्वभियुक्तप्रसिद्ध्यभावेनाऽमन्त्रत्वेऽपि तदेकवाक्यतापन्नानामक्षरान्तराणां तत्सत्वान्मन्त्रत्वोपपत्तिः । एवञ्च 'ऐरं कृत्वोद्गेयमि'त्यादाविरापदस्य मन्त्रत्वप्रसिध्यभावेनाऽमन्त्रत्वेऽपि तदेकवाक्यतापन्नाक्षरान्तराणां मन्त्रत्वोपपत्तिः । गिरापदे मन्त्रत्वप्रसिद्धिस्तु अध्ययनकाले, पारायणादौ चोपयुज्यत इति द्रष्टव्यम् ।

यत्तु वार्तिके इरापदस्य 'ऐरमि'ति विधिवाक्ये तद्धितान्तर्गतत्वेनाऽऽम्नातत्वादस्यैव मन्त्रत्वमित्युक्तम्, तत् ब्राह्मणे समाम्नातस्याऽपि मन्त्रप्रसिध्यविषयत्वेन मन्त्रत्वायोगात् 'वसन्ताय कपिञ्जलानालभेते'त्यादिवन्मन्त्रकाण्डे पाठाभ्युपगमेऽपि वा ऐरपदस्यैव पठितत्वेन मन्त्रत्वापत्तेस्तद्धिधेयस्येरापदस्य वस्तुतः पाठाभावेन मन्त्रत्वानुपपत्तेरतिशयार्थमिति द्रष्टव्यम् । एवं यत्राऽपि सूक्तवाकादौ "आशास्तेऽयं यजमानोऽसा" विति सर्वनामसंयुक्तमन्त्राम्नानम्, तत्राऽप्यसाविसस्य स्वाध्यायकाले, मन्त्रस्याऽपि कर्मकाले तत्पदस्थाने पठनीयस्य देवदत्तादिपदस्य स्वरूपेणाऽपाठादभि-

युक्तप्रसिद्धिविषयत्वानुपपत्तेरमन्त्रत्वम् । न च सर्वनाम्नि मन्त्रताप्रसिद्धेस्तत्रानर्थक्ये तदनुमेयदेवदत्तादिपदविषयत्वकल्पनान्मन्त्रत्वोपपत्तिरिति वाच्यम् । सर्वनाम्न्यपि मन्त्रत्वप्रसिद्धेस्स्वाध्यायोपयुक्तत्वात् । अतोऽत्राऽपि देवदत्तादिपदे मन्त्रत्वोक्तिरतिशयार्थैव वार्त्तिके द्रष्टव्या । तस्मादभियुक्तप्रसिध्यविषयत्वाद्युक्तमूहादीनाममन्त्रत्वम् ।

प्रयोजनं--पूर्वपक्षे ऊहादिभ्रेषे मन्त्रभ्रेषनिमित्तं प्रायश्चित्तम् । सिद्धान्ते त्वङ्गभ्रेषनिमित्तकमेव । मन्त्रत्वनिमित्तकशब्दविकारादिसदसद्भावश्च । सूत्रं स्पष्टम् ॥ ३५ ॥

इति दशमं ऊहाद्यमन्त्रताधिकरणम् ॥ १० ॥

## अथैकादशं ऋग्लक्षणाधिकरणम् ॥ ११ ॥

## तेषामृग्यत्राऽर्थवशेन पादव्यवस्था ॥२-१-३६॥

एवं लक्षणस्थिरीकरणेन (१)मन्त्रपदे व्युत्पादितेऽधुना प्रसङ्गाचदवान्तरभेदरूपस्य ऋगादेः "अहे बुध्निय मन्त्रं मे गोपाये"ति वेदस्थऋगादिपदार्थज्ञानार्थं लक्षणमुच्यते। तेषां मन्त्राणां मध्ये यत्र पादव्यवस्था 'त्रिपदा गायत्री' 'चतुष्पदा बृहती' त्यादिका सा ऋक् । अथवाऽस्मिन्नक्षरे पादसमाप्तिः, नाऽस्मिन्निति पादव्यवस्था यत्र सा ऋक्, वृद्धव्यवहारे तादृशमन्त्र एव ऋक्शब्दप्रयोगात् । सा च पादसमाप्तिः क्वचिदर्थवशेन । यथा(२) 'अग्निमीळे पुरोहितमि'त्यत्र । न चाऽत्र ऋगर्थापर्यवसानात्कथमर्थवशेन

---

१. मन्त्रपदार्थं इति. क, ख. पु.   २. ऋ. सं. १. १. १.

पादस्य समाप्तिः ? ऋगर्थापर्यवसानेऽपि 'ईळे' इत्याख्यातपदाद्-वान्तरार्थपर्यवसानोपपत्तेः। एवमपरयोरपि पादयोरेतदाख्याता-नुषङ्गेणैवाऽर्थपर्यवसानं द्रष्टव्यम्। अतो युक्ताऽर्थवशेन पादव्यव-स्था। क्वचिच्च(१)"अग्निः पूर्वेभिर्ऋषिभि" रित्यादौ लघुगुर्वक्षर-साङ्ख्याख्यवृत्तवशेन "अग्निमीळे" इत्यादौ चाऽक्षरसङ्ख्यानिय-मलक्षणछन्दोवशेन, (२)"तमुत्वामिन्द्रं न रेजमान"मित्यादौ चाऽ-ल्पवैषम्येणैव पादव्यवस्था। अत एव सूत्रे अर्थवशग्रहणं वृत्तव-शादेरुपलक्षणार्थम्। तदपि च न लक्षणान्तर्गतम्, पादव्यवस्थाव-वन्मन्त्रस्वरूपस्यैव लक्षणस्याऽनातिप्रसक्तत्वात्॥ ३६॥

इत्येकादशं ऋग्लक्षणाधिकरणम्॥ ११॥

अथ द्वादशं सामलक्षणाधिकरणम्॥ १२॥

## गीतिषु सामाख्या॥ २-१-३७॥

अत्र 'तेषामि'त्यनुवृत्त्या मन्त्रगतगीतित्वस्य सामशब्दार्थता लभ्यते। अतश्च न लौकिकगीतावतिप्रसङ्गः। अभियुक्तव्यव-हाराच्चाऽस्याऽपि शब्दार्थत्वावधारणम्। न चैवं वैदि-कगीति(३)विशिष्टमन्त्रेऽभियुक्तप्रयोगान्मन्त्रस्याऽपि वाच्यता-पत्तिः, मन्त्राणां व्यक्तिन्यायेन लक्षणयाऽपि भानोपपत्तौ अतिरिक्तशक्तिकल्पने प्रमाणाभावात्। विस्तरेण चैत-त्(४)सप्तमे उपपादयिष्यामः। न चैवं पौनरुक्त्यम्, सामश-

१ ऋ. सं. १. १. १. २. ऋ. सं. ७. ६. १.
३ विशिष्ट मन्त्रस्याऽपि वाच्यतापत्तिरिति. ख. पु.
४ पू. मी. ७. २. १.

न्दस्य गीतिमात्रवाचित्वे तद्विशिष्टमन्त्रवाचित्वे वा, उभयथा ऋग्यजुर्भ्यां(१)विवेकोपपत्तेर्गीतिमात्रवाचित्वस्येहाऽनुपयोगेना-ऽवाच्यत्वात्, सप्तम एव ऋगन्तरे अतिदेशासिध्यर्थमव-श्यवाच्यत्वात्। इह सप्तमसिद्धस्यैव गीतिमात्रवाचित्वस्य अना-गतावेक्षणेन शिष्यहितार्थं कथनेन पौनरुक्त्यनापत्तेः। यथा च तस्य नाऽऽकृत्यधिकरणेन पौनरुक्त्यं, तथा सप्तम एव उपपा-दयिष्यामः। यत्तु(२) नवमे पुनर्गीतिमात्रवाचित्वकथनं, तदुत्त-रविवक्षार्थं(३) स्मरणार्थमिति तत्रैव वक्ष्यते ॥ ३७ ॥

इति द्वादशं सामलक्षणाधिकरणम् ॥ १२ ॥

अथ त्रयोदशं यजुर्लक्षणाधिकरणम् ॥ १३ ॥

## शेषे यजुश्शब्दः ॥ २-१-३८ ॥

ऋक्सामभिन्नं यत्प्रश्लिष्टाक्षरमन्त्रजातं तद्यजुः। स्तोभा-क्षराणामपि यजुष्ट्वान्नातिव्याप्तिः ॥ ३८ ॥

इति त्रयोदशं यजुर्लक्षणाधिकरणम् ॥ १३ ॥

---

१ विवेकासिद्धेरिति. क. ख. पु. २ पू. मी. ९. २. १.
३ स्मरणमात्रमिति. क. ख. पु.

अथ चतुर्दशं निगदाधिकरणम् ॥ १४ ॥

## निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ २-१-३९ ॥

( विषयसंशयौ )

'शेषे यजुश्शब्द' इत्येतदाक्षेपेणेदमारभ्यते । सन्ति निगदा नाम प्रायशः परसम्बोधनार्था मन्त्राः 'अग्नीदग्नीन् विहरे'त्याद-यः । ते किं यजूंष्येव, उत भिन्ना इति विचारः ।

( पूर्वपक्षः )

तत्र निगदानां यजुष्ट्वे "उपांशु यजुषे"ति वचनेनोपांशु-त्वमाप्तेः "उच्चैर्निगदेने" ति वाक्यविहितोच्चैस्त्वानुपपत्तिः । न च विशेषविहितेन सामान्यविहितस्य बाधः, विशेषविधेस्स्ववि-षयवृत्तिभेदबोधनेनाऽप्युपपत्तौ सामान्यस्याऽपि वाक्यस्य स-ङ्कोचे प्रमाणाभावात् । न च परप्रत्यायनरूपकार्यानुरोधेनोपां-शुत्वविधेस्सङ्कोचादु'च्चैर्निगदेने'त्यस्याऽनुवादकत्वोपपत्तेर्न भेद-बोधकतेति वाच्यम् । मन्त्रगतलिङ्गप्रमाणकपरप्रत्यायनरूपकार्या-नुरोधेन वाक्यस्याऽपि ब्राह्मणगतस्य सङ्कोचायोगात् 'नमः प्रवक्त्रे' (१)'देवेद्धो मन्विद्ध' इत्यादीनां परसम्बोधनार्थत्वस्या-ऽप्यभावाच्च । सत्यपि परसम्बोधनार्थत्वे उपांशुत्वव्यतिरिक्त-मन्द्रादिस्वराणामपि पक्षे प्राप्तत्वादुच्चैस्त्वानुवादानुपपत्तेश्च । अ-तश्चोच्चैर्निगदेनेत्यस्य विधित्वावश्यंभावाद्भेदबोधनादपि च तदु-पपत्तेर्न सामान्यस्याऽपि वाक्यस्य सङ्कोचकल्पनावसरः । तस्मा-दर्थान्तरं निगदाः । सूत्रं स्पष्टम् ॥ ३९ ॥

---

१ तै. ब्रा. ३. ५. ३.

## व्यपदेशाच्च ॥ २-१-४० ॥

इमे निगदाः, इमानि यजूंषीति संज्ञाभेदादपि ज्योतिरादिवद्भेदकृतोपपत्तेरर्थान्तरम् । एवञ्च "मन्त्र एव खल्वयं निगदभूतो भवति तस्माद्यजु" रिति सुब्रह्मण्यावाक्यशेषे निगदस्य यजुष्ट्वसङ्कीर्तनं योगेन यागसाधनत्वमात्रपरम्, सुब्रह्मण्यामात्रस्यैव वा यजुष्ट्वज्ञापकमिति द्रष्टव्यम् ॥ ४० ॥

## यजूंषि वा तद्रूपत्वात् ॥ २-१-४१ ॥

( सिद्धान्तः )

नैतदेवम्, 'अहे बुध्निये' ति मन्त्रे मन्त्रावान्तरभेदानामृगादिमन्त्राणां त्रयाणामेवाऽनुकीर्तनेन निगदस्य भेदेनाऽननुकीर्तनात्, 'मन्त्र एव खल्वयं निगदभूतो भवती'त्यत्र ऋक्सामभिन्नमन्त्रत्वस्य सुब्रह्मण्यानिगदे यजुष्ट्वसाधकत्वेनोक्तस्य निगदान्तरेष्वपि सत्त्वाच्च । न चाऽत्र यौगिको यजुश्शब्दः, जपादिसाधनमन्त्रेऽपि प्रश्लिष्टपठिते यजुश्शब्दप्रयोगेण तस्य करणत्वावगमाद्यौगिकार्थबोधकत्वानुपपत्तेः । तस्माद्यजूरूपमन्त्राभिन्नानां यजुष्ट्वमेव ॥ ४१ ॥

यत्तु विरुद्धधर्मकत्वाद्भेद इति तत्रोत्तरम्—

## वचनाद्धर्मविशेषः ॥ २-१-४२ ॥

(१)"वेदो वा प्रायदर्शनादि" त्यत्र तृतीये वेदोपक्रमानुरोधेनोच्चैस्त्वादेः ऋग्वेदादिविहितकर्माङ्गमन्त्रमात्राङ्गत्वस्य स्थापयिष्यमाणत्वेन भवन्मतेऽपि 'उच्चैर्निगदेने'त्यस्य 'उपांशु यजुषे'ति

१ जै. सू. ३. ३. २.

वाक्यसङ्कोचकत्वावश्यंभावाद्भेदानुमापकत्वानुपपत्तेः, सत्यपि चोच्चैस्त्वादेः ऋगादिधर्मत्वे परप्रत्यायनरूपकार्यानुरोधेनैवोपांशुत्वानुपपत्तेः 'उपांशु यजुषे'त्यस्य निगदविषयत्वानुपपत्तेः, सत्यपि निगदानां यजुष्ट्वे 'उच्चैर्निगदेने'त्यस्य निगदेषु पक्षप्राप्तमन्द्रादिव्यावर्तनफलकोच्चैस्त्वनियामकत्वोपपत्तेर्भेदानुमापकत्वायोगाच्च ।

न च लैङ्गिकपरप्रत्यायनार्थत्वस्य ब्राह्मणवाक्यगतेन वाक्यप्रमाणकेनाऽपि बाधश्शंक्यः, लैङ्गिकस्याऽपि प्रधानभूतस्य परप्रत्यायनस्याऽङ्गभूतेनोपांशुत्वेन बाधायोगात् । उक्तं ह्येतत्(१) प्रमाणबलाबलापेक्षया प्रमेयबलाबलं ज्याय इति । अतश्च लिङ्गेनैव 'उपांशु यजुषे'त्यस्य सङ्कोचितत्वान्न 'उच्चैर्निगदेने'त्यस्य सङ्कोचकता । किंच नाऽवश्यं लिङ्गस्यैव विधिसङ्कोचे व्यापारः, अपि तु विधिवाक्यस्याऽपि स्वनिष्ठगौरवपरिहारार्थं सः ।

तथा हि—'उपांशु यजुषे'त्यस्य निगदेष्वत्यन्ताप्राप्तोपांशुताविधायित्वेनाऽपूर्वविधित्वापत्तेः, तस्य चाऽदृष्टोद्देश्यकत्वेन गौरवापत्तिः। पुनश्च निगदभिन्नमन्त्रान्तरे पक्षप्राप्तोपांशुतानियामकत्वेन नियमविधित्वाद्वैरूप्यम् । अतो निगदातिरिक्तेष्वेव दृष्टपदार्थोद्देश्यकतालाघवार्थं स्वरविशेषनियामकत्वाङ्गीकरणात्स्वयमपि विधिस्स्वसंकोचे व्याप्रियते । अतश्चोपांशुत्वाविषयीभूतेषु निगदेषू'च्चैर्निगदेने'त्यनेन स्वरनियमो नाऽनुपपन्नः ।

यत्तु मूले 'उच्चैर्निगदेने'त्यस्य परप्रत्यायनरूपकार्यबलप्राप्तोच्चैस्त्वानुवादकत्वमुपांशुत्वविधिप्रशंसाफलकमङ्गीकृतम् , तदतिशयार्थम् , मन्द्रादिस्वरान्तराणामपि पक्षे प्राप्तत्वेन नित्यवदनुवादायोगात् । परप्रत्यायनरूपकार्यरहितानामपि निगदानां स-

---

१. शिष्टाकोपाधिकरणे ( १-३-३ )

त्वेन तेषूपांशुत्वस्याऽपि पक्षे प्राप्तया सुतरां तदयोगाच्च। न चैवं 'उपांशु यजुषे'त्यत्र वस्तुतो (१)वेदोपक्रमाधिकरणन्यायेन वेदलक्षणावन्निगदपदेऽपि यजुर्वेदलक्षणापत्तेर्यजुर्वेदविहितकर्माङ्गभूतमन्त्रेषूच्चैस्त्वोपांशुत्वविकल्पापत्तेः, वेदोपक्रमस्यैकत्रैव लक्षणातात्पर्यग्राहकत्वेनोपपत्तावुभयत्र तदङ्गीकारे प्रमाणाभावात्। न च नियामकाभावः, 'वायोर्यजुर्वेद' इति यजुःपदसमभिव्याहृतवेदपदोपक्रमस्य यजुःपदलक्षणायामेव तात्पर्यग्राहकत्वेन तदसिद्धेः। अतश्चोपांशुत्वस्य वेदधर्मत्वेऽप्यु 'च्चैर्निगदेने'त्यस्य निरर्थवादकस्यैव निगदमात्रोद्देशेन विशेषविधया पक्षप्राप्तोच्चैस्त्वादिनियामकत्वोपपत्तेर्नाऽनुवादकत्वसम्भवः। अतश्च निगदानां यजूरूपत्वेऽपि परप्रत्यायनरूपकार्यानुरोधेनोपांशुत्वाप्राप्तया तेषूच्चैस्त्वविधानोपपत्तेर्न धर्मविरोधाद्भेदसिद्धिः॥ ४२॥

## अर्थाच्च॥ २-१-४३॥

ननु 'अग्नीदग्नीन् विहरे'त्यादेर्लोटः प्राप्तकालतायामप्युपपत्तेः प्रैषत्वनियामकाभावेन परप्रत्यायनार्थत्वाभावान्न वाचनिकोपांशुत्वबाधो युक्त इति चेत्; एवमपि सामान्यविहितोपांशुत्वस्य विशेषविहितेनोच्चैस्त्वेन बाधेऽपि बाधकाभावात्।

वस्तुतस्तु प्राप्तकालत्वे लोटोऽदृष्टार्थत्वापत्तेर्दृष्टार्थत्वानुरोधेन प्रैषत्वावसायाद्युक्त एवोपांशुत्वबाधः॥ ४३॥

यत्तु संज्ञाभेदाद्भेद इत्युक्तं, तत्रोत्तरम्—

## गुणार्थो व्यपदेशः॥ २-१-४४॥

---

१. पू. मी. ३. ३. १.

योऽयं यजुष्ट्वे सत्यपि निगदव्यपदेशः, स ब्राह्मणत्वे सत्यपि परिव्राजकत्वव्यपदेशवत्परप्रत्यायनरूपकार्यवशेनोपांशुत्वनिवृत्तौ नितरां गदनरूपगुणयोगेनोपपन्न एव । अत एवोपांशुत्वाभावमात्रकृतप्रकर्षबलेनैव 'उच्चैर्निगदेने'त्येतद्वाक्ये निगदानुवादेनोच्चैस्त्वविधानात्तद्विधेः पूर्वमेव प्रयुज्यमानस्य निगदशब्दस्य शक्यतावच्छेदकावगतिसिद्धिः । अतश्च मूले उच्चैस्त्वरूपप्रकर्षस्य शक्यतावच्छेदकत्वोक्तिरतिशयार्थैव ॥ ४४ ॥

## सर्वेषामिति चेत् ॥ २-१-४५ ॥

उपांशुत्वभिन्नस्वरोच्चारणविषयत्वस्यैव निगदपदशक्यतावच्छेदकत्वे ऋच्यपि(१)तत्संभवान्निगदपदप्रयोगापत्तिः । अतो रूढत्वावसायान्निगदयजुस्संज्ञयोर्भेदकत्वं ज्योतिरादिवदुपपन्नमेवेति चेत्—

## न ऋग्व्यपदेशात् ॥ २-१-४६ ॥

गदतेरपादबद्धाक्षरसमूहवाचकत्वात् निशब्दस्य च प्रकर्षवाचित्वादवयवयोगेनोपांशुत्वभिन्नस्वरयुक्तापादबद्धमन्त्राक्षरत्वस्यैव शक्यतावच्छेदकत्वप्रतीतेः ऋच्यतिप्रसङ्गाभावेन रूढत्वकल्पने प्रमाणाभावात् । अनेनैवाऽभिप्रायेण "अयाज्या वै निगदाः ऋचैव यजती"ति निगदानां ऋग्भेदव्यपदेशोऽपि सङ्गच्छते । तस्मान्न रूढत्वेन ज्योतिरादिपदवद्भेदकत्वं संज्ञायाः ।

वस्तुतस्तु 'नमः प्रवक्त्र'इत्यादिनिगदेषु वचनेनैवोपांशुत्वप्रतिप्रसवादवयवयोगबाधेनाऽश्वकर्णादिवद्रूढेरावश्यकत्वेऽपि निगदत्वस्याऽखण्डोपाधिरूपस्य यजुष्ट्वावान्तरव्याप्यस्यैव निगद-

१. तत्सद्भावादिति क. पु.

पदशक्यतावच्छेदकत्वेन(१) कल्प्यत्वान्मनुष्यब्राह्मणसंज्ञयोरिव व्याप्यव्यापकभावेन निगदयजुस्संज्ञयोरेकस्मिन्नप्युपपत्तेर्न भेदकत्वापत्तिः । तस्माद्यजूंष्येव निगदा इति सिद्धम् ।

प्रयोजनं वाचस्तोमे "सर्वा ऋचस्सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं शंसती"ति विहिते शंसने निगदानां यजुष्ट्वे शंसनम्, भेदे तु नेति द्रष्टव्यम् ॥ ४६ ॥

इति चतुर्दशं निगदाधिकरणम् ॥ १४ ॥

अथ पञ्चदशमेकवाक्यताधिकरणम् ॥ १५ ॥

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ २-१-४७ ॥

तदेवं यजुष्ट्वाश्रये निरूपिते अधुना प्रसङ्गात्तद्यजुष्ट्वं कियत्सु पदसमूहेषु व्यासज्य वर्तते, कियत्सु वा पर्याप्नोतीति विवेकार्थमिदमारभ्यते । यावति पदसमूहे लोके वाक्यत्वप्रसिद्धिः, तावत्येव यजुष्ट्वं, न तु वाक्यसमूहे, तस्यैकार्थ(२)प्रतिपादकत्वाभावेन विनियोगानर्हत्वात् । लोके च यत्रैकार्थकत्वं विभज्यमाने साकाङ्क्षत्वं च तावत्येव वाक्यत्वप्रसिद्धिस्तावत्येव यजुष्ट्वमित्यवगम्यते ।

ननु किमिदमर्थैकत्वम्? न तावत्पदार्थैकत्वम्, तेषां गामानयेत्यादिवाक्येऽनेकत्वात् । नापि वाक्यार्थैकत्वम्, तस्यापि संसर्गरूपत्वेन प्रतिपदार्थं भेदात् । नापि प्रयोजनैकत्वम्, तद्यदि शेषिरूपप्रयोजनैकत्वं विवक्षितं, ततः 'सौर्यं चरुमि'त्यादौ द्रव्य-

१. कल्पनीयत्वादिति क. पु. २. प्रकाशकत्वाभावेनेति क. ख. पु.

देवतां प्रति यागः, (१)यागं च प्रति फलमित्यनेकार्थत्वादर्थैकत्वानापत्तिः, "सर्वेभ्यो दर्शपूर्णमासा" वित्यादौ च सा। अथ मुख्यविशेष्यरूपप्रयोजनैकत्वम्, तदापि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" त्याद्यावाग्नेयादिभावनानां मुख्यविशेष्याणां भिन्नत्वात्तदेकत्वानापत्तिः।

अथ मुख्यविशेष्यप्रतिपादकशब्दैकत्वम्, ततो व्रीहियववाक्ययोः, 'भगो वां विभजत्वि'त्यादौ च तत्प्रतिपादकशब्दभेदेनाऽर्थैकत्वानापत्तेर्विभज्यमानसाकाङ्क्षत्वरूपविशेषणोपादानवैयर्थ्यमिति चेत्—न; भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमर्थैकत्वम्। अस्ति च गामानयेत्यादौ तत्, आनयनभावनाया मुख्यविशेष्यभूताया एकत्वात्। अस्ति चेदं दर्शपूर्णमासवाक्येऽपि, अनेकासामप्याग्नेयादिभावनानामेकेन प्रत्ययेनोपादानात् भिन्नप्रतीतिविषयत्वासिद्धेः। व्रीहियवादिवाक्ययोः, 'भगो वां विभजत्वि'त्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्यस्य यागविभागभावनादेरेकत्वादर्थैकत्वोपपत्तिः। न ह्यत्र "आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पता" मित्यत्र "क्लृप्तीर्वाचयती"ति बहुवचनवद्विभागभेदे प्रमाणमस्ति, यतोऽर्थभेदश्शङ्क्येत। अतस्सत्यपि व्रीहियववाक्ययोः, "भगो वां विभजतु, अर्यमा वां विभजतु, पूषा वां विभजत्वि"त्यादौ चोक्तविधार्थैकत्वे विभज्यमानसाकाङ्क्षत्वाभावाद्वाक्यभेदसिद्धिः। विभज्यमानसाकाङ्क्षत्वं चाऽन्वीयमानयोः पदार्थयोरनन्वये अनिवृत्ताकाङ्क्षत्वम्। यथा—गामानयेत्यत्र गोशब्दस्य। न च 'भगो वामि'त्यत्र 'अर्यमा वामि'त्यस्याऽनन्वये साकाङ्क्षत्वमस्ति, स्ववाक्योपात्तविभजत्यन्वयेनैव निराकाङ्क्षत्वात्। अतोऽस्त्येव विभज्यमानसाकाङ्क्षत्वविशेषणसार्थक्यम्।

---

१. तं प्रति चेति क. पु

अर्थैकत्वविशेषणसार्थक्यं तु "स्योनं ते सदनं कृणोमी" त्यस्याऽपि 'तस्मिन् सीदे' त्यनेनाऽनन्वये तच्छब्दस्य साकाङ्क्षत्वेन विभज्यमानसाकाङ्क्षत्वादेकवाक्यतापत्तेर्द्रष्टव्यम् । तत्र विभज्यमानसाकाङ्क्षत्वेऽप्यर्थैकत्वाभावात् । न हि सदनकरणप्रतिष्ठापनभावनयोरेकपदोपादानमस्ति, येनैकप्रतीतिविषयत्वमाशङ्क्येत। सदनकरणभावनायाः प्रतिष्ठापनभावनायां प्रकारत्वाङ्गीकारेण (१)मुख्यविशेष्यभेदराहित्यशङ्का तु, आख्यातत्वाभाव्येन तस्या अपि मुख्यविशेष्यताप्रतीतेः, तच्छब्दस्य च वाक्यान्तरोपात्तसदनकरणप्रकाशकत्वेनाऽप्युपपत्तेर्वाक्येन लिङ्गबाधायोगादयुक्ता। अतोऽर्थैकत्वाभावादेव तत्रैकवाक्यत्वाभावः । 'देवस्य त्वे' त्यादिवाक्ये तूभयसत्त्वाद्युक्तं निर्वपामीत्यन्तस्यैकवाक्यत्वम् । अतश्च तावत्येव यजुष्ट्वमपि, तावत एवाऽर्थप्रकाशकत्वेन यागसाधनत्वात्।

न च न यागसाधनत्वमात्रेण यजुष्ट्वम्, ऋच्यपि तदापत्तेः, जपादिसाधनेषु तदनापत्तेश्च, किन्तु मन्त्रत्वावान्तरधर्मरूपमखण्डं तदिसङ्गीकर्तव्यम् । तस्य च वेदत्ववत् सर्वमन्त्रेषु व्यासक्तिकल्पनेऽपि यजुरवयवस्यैव विनियोगेन प्रकाशकत्वोपपत्तेर्न यजुष्ट्वस्य पर्याप्तिकल्पने प्रमाणमस्तीति वाच्यम् । 'मन्त्र एव स्वयं निगदभूतो भवति तस्माद्यजु" रित्यादौ वाक्येऽपि यजुश्शब्दप्रयोगात्पर्याप्तिवृत्तितोपपत्तेः । अन्यथा हि सर्वेषु मन्त्रवाक्येषु व्यासक्ते यजुष्ट्वे एकस्मिन्निगदे यजुरवयवत्वान्न यजुश्शब्दप्रयोगोपपत्तिः । अतो वाक्य एव पर्याप्तं यजुष्ट्वम् । एवं मन्त्रत्वमपि वाक्ये मन्त्रशब्दप्रयोगात्पर्याप्तमेव । वेदत्वं तु एकस्मिन्वाक्ये अधीते वेदोऽधीत इति व्यवहाराभावाद्व्यासज्यवृत्त्येवेति कल्पते । न चैवं मन्त्रत्वयजुष्ट्वयोर्वाक्यमात्रवृत्तित्वे किंचिन्न्यूनेऽपि

१. मुख्यविशेष्यत्वाभावशङ्केति क. पु.

तस्मिन्मन्त्रत्वबाधनापत्तिः, गोर्गड्डुनि जाते, विषाणे वा भग्ने गोत्वप्रत्यभिज्ञाबलेन गोत्ववदिहापि तथाङ्गीकारे बाधकाभावात् । अत एव यत्र न प्रत्यभिज्ञा, यथा श्लोकाद्येकवाक्यतापन्नद्वित्रिमन्त्राक्षरेषु, तत्र नैव मन्त्रत्वमित्युक्तं प्राक् । तस्मात्सिद्धं वाक्यमात्रवृत्ति यजुष्ट्वमिति ।

सूत्रं तु—यद्विभज्यमानसाकाङ्क्षं पदजातं तदर्थैकत्वे सत्येकं वाक्यमित्येव लोके प्रसिद्धिः, अतस्तादृशवाक्यवृत्त्येव यजुष्ट्वमित्येवमध्याहारेण व्याख्येयम् । न तु यथाश्रुतमेव वाक्यलक्षणपरमेकवाक्यत्वलक्षणपरं वा, पूर्वोक्तमन्त्रप्रस्तावेनाऽसङ्गतत्वापत्तेः । अतो मन्त्रावान्तरविभागे पूर्वं निरूपिते, अधुना तदवान्तरभेदरूपस्य यजुषः परिमाणं निरूप्यत इति द्रष्टव्यम् । अत एव ऋक्सामरूपयोस्तदवान्तरभेदयोरन्यतः सिद्धपरिमाणत्वात्तदनिरूपणेऽपि न क्षतिः ॥ ४७ ॥

इति पञ्चदशमेकवाक्यताधिकरणम् ॥ १५ ॥

---

### अथ षोडशं वाक्यभेदाधिकरणम् ॥ १६ ॥

## समेषु वाक्यभेदस्स्यात् ॥ २-१-४८ ॥

( विषयसंशयौ )

तदेवं विभज्यमानसाकाङ्क्षत्वविशिष्टार्थैकत्वकृतवाक्यैकत्वेन यजुःपरिमाणे चिन्तिते, अधुना विभज्यमानसाकाङ्क्षत्वादिकमेव कियत्सु पदेषु व्यासक्तमिति विचार्यते । दर्शपूर्णमासयोः "इषे त्वोर्जे त्वा वायव स्थ" इत्यादि समाम्नायते । तत्र 'वायव स्थे'-त्यादेस्तावद्वत्सापाकरणे विनियुक्तस्य 'स्थे'तिक्रियापदसत्त्वाद्वायु-

पच्छीघ्रगामिनो भवथ, मातुः समीपं पुनरागामिनो भवथेत्युक्ते चा-ऽर्थादपाकरणप्रतीतेः 'देवस्य त्वे'तिमन्त्रवदेव सुज्ञानं परिमाणम्। 'इषे त्वे' त्यादेस्त्वेकवचनान्तस्य शाखाच्छेदनादौ विनियुक्तस्य 'वायव स्थे'त्यनेनैकवाक्यत्वासम्भवात्ततो भिन्नत्वेनाऽवगतस्याऽपि स्ववाक्ये आख्यातपदाश्रवणान्न सुज्ञानं परिमाणमिति चिन्त्यते-कियदेकं यजुरिति । तथा वाजपेये पठितं "आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पता"मित्यादि । तत्रा-ऽपि कियदेकं यजुरिति चिन्त्यते । तदर्थं चाऽर्थैकत्वाद्विभज्यमान-साकाङ्क्षत्वे कियत्सु पर्याप्ते इत्यपि चिन्तनीयम् ।

( पूर्वपक्षः )

तत्र 'इषे त्वे' त्यादावाख्यातपदाश्रवणेऽपि साकाङ्क्षत्वात्तत्ता-वदवश्यं कल्पनीयम् । न च साकाङ्क्षार्थज्ञानस्याऽपि मन्त्रजन्य-स्याऽदृष्टार्थत्वेन जपादिवदुपपत्तेर्नाऽध्याहारावश्यकत्वमिति वा-च्यम्। "इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्युन्मार्ष्टी"तीतिकरणेन छेदनाद्यङ्गत्वेन मन्त्रविनियोगान्मन्त्रे इतिकरणावगतकरणत्वस्य चाभिधानं विनाऽनुपपत्तेः छेदनादिप्रकाशकत्वावगमेन छिनद्मी-त्यादिपदाध्याहारावश्यकत्वप्रतीतेः । अतश्चाऽश्रूयमाणस्यैक-स्यैवाऽऽख्यातस्य कल्पनयैवोपपत्तावनेककल्पने प्रमाणाभावात् 'इषे त्वोर्जे त्वे'ति पदचतुष्टयान्ते एकमेव तदध्याह्रियते । यद्यपि च विनियोगभेदात्पूर्वपक्षेऽपि छिनद्मि, उन्मार्ज्मीत्याद्याख्यातद्वय-कल्पनमावश्यकम्, तथापि 'इषे त्वे'त्यस्य सामर्थ्यात्प्राकरणिक-सर्वयोग्यक्रियार्थत्वस्याऽवगतस्याऽन्यक्रियाविषये बाधेऽप्युन्मा-र्जनविषयेऽपि बाधे प्रमाणाभावेन समस्तस्यैवैकैकत्र विनियो-गावगतेरेकवाक्यत्वोपपत्तिः ।

न च 'ऊर्जे त्वेत्युन्मार्ष्टी'त्यस्यैव पदद्वयमात्रविनियोजकस्य

ब्राह्मणवाक्यस्य सामर्थ्यग्राहित्वेनेति पदद्वयबाधकत्वम्, तस्य प्रतीकग्रहणेनाऽपि समस्तविनियोजकत्वोपपत्तौ सामर्थ्यबाधे प्रमाणाभावात् । न च 'इषे त्वेति शाखां छिनत्ती'त्यस्यादिप्रतीकेन समस्तविनियोजकत्वोपपत्तावप्यूर्जेत्वेत्यस्य कथं मध्यमप्रतीकेन समस्तविनियोजकत्वमिति वाच्यम्, (१)"अानः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वे"ति मन्त्रस्य(२) "प्राणाय त्वेति हिरण्यमभिव्यनिती"त्यनेनाऽन्तिमप्रतीकेनाऽपि विनियोगस्य सङ्कर्षे वक्ष्यमाणत्वात्, तन्न्यायेनाऽत्र मध्यान्त्यप्रतीकेनाऽपि समस्तविनियोगोपपत्तेः । अतश्च समस्तस्यैकाख्यातकल्पकत्वेनैकार्थत्वात्तस्मिंश्च सर्वेषामनन्वये अनिवृत्ताकाङ्क्षत्वेन विभज्यमानसाकाङ्क्षत्वादेकवाक्यतालाभेन यजुष्ट्वोपपत्तिः । क्लृप्त्यादिमन्त्रे तु यद्यपि कल्पतामित्याख्यातं श्रुतम्, तथाऽपि विभागवत्क्लृप्तिभेदे प्रमाणाभावेनैकार्थत्वोपपत्तिः ।

न चायुरादिकारकभेदादेव क्लृप्तिभेदः, भगादिवत्तेषां स्वतोऽसमवेतत्वेन स्तुतिमात्रोपयोगितया एकस्यामपि क्रियायां निवेशसंभवेनाऽभेदकत्वात् । न च 'क्लृप्तीर्वाचयती'ति सङ्ख्यया क्लृप्तिभेदः, वाचयतेरुच्चारणानुकूलप्रयोजकव्यापारवाचित्वेन तदन्तर्गत(३)वचनकर्मतया अर्थरूपायाः क्लृप्तेरन्वयायोगेन क्लृप्तिपदस्य कल्पतामिति पदलक्षकत्वावगतेस्सङ्ख्यायास्तन्निष्ठत्वेन क्लृप्तिरूपार्थनिष्ठत्वाभावात्तद्भेदकत्वानुपपत्तेः ।

न चैवमेकार्थत्वोपपत्तावपि विभागवदेव विभज्यमानसाकाङ्क्षत्वाभावान्नैकवाक्यत्वोपपत्तिः, एतेषां प्रोत्साहनार्थत्वेन दृष्टार्थानामपि 'क्लृप्तीर्वाचयती'त्यनेन समुच्चयावगमादेकस्मिन्प्रोत्सा-

---

१. तै. सं. ३.२. ३. २. तै. सं. ३.३. ४. ३. वचिकर्मतयेति क. ख. पु.

दृष्टार्थक्लृप्तिप्रकाशनाख्ये कार्ये अनेकेषामपि कल्पतामितिपदानां परस्परसाहित्यावगमेन विभागेऽनिष्टसाकाङ्क्षत्वोपपत्तेः । विभागमन्त्रेषु तु मन्त्राणां दृष्टार्थत्वेन विकल्पात्साहित्यानवगतेर्विभागेऽपि परस्परानाकाङ्क्षत्वाद्भिन्नवाक्यत्वोपपत्तिः । अतश्च क्लृप्तिमन्त्रेऽप्यर्थैकत्वविशिष्टविभज्यमानसाकाङ्क्षत्वकृतवाक्यैकत्वसत्त्वादुक्तं यजुरेकत्वमिति ।

केचित्तु क्लृप्तिमन्त्रे वास्तवमेकवाक्यत्वमुपपादयितुमसमर्थाः उदाहरणद्वयेऽपि मन्त्राणामदृष्टार्थत्वमङ्गीकृत्य अदृष्टस्यैकस्यैव कल्पनयोपपत्तावनेककल्पनायोगाददृष्टरूपैकार्थत्वं परिकल्प्य तस्मिन् विभज्यमानसाकाङ्क्षत्वादेकवाक्यत्वं कथयन्तः, "यद्यपि च न पूर्वसूत्रे वास्तवं प्रयोजनैकत्वेनैकार्थत्वं विवक्षितम्, किन्तु मुख्यविशेष्यभूतस्यादृष्टप्रयोजनैकत्वेनैव तत्, तथाऽप्यम्नाताभिप्रायस्यैवाऽयं पूर्वपक्ष" इत्याहुः; तन्न वास्तवैकवाक्यत्वस्याऽपि क्लृप्तिमन्त्रे उपपादितत्वात्, अदृष्टार्थत्वाङ्गीकारे च प्रमाणाभावात्, तदैक्यस्य च विनियोगभेदेन शब्दोच्चारणक्रमिकत्वेन च कल्पनानुपपत्तेः, कल्पितेऽपि तस्मिन्नितरपदार्थानामन्वयानुपपत्तेः, अप्रसक्तान्वयाङ्गीकारेऽपि च साकाङ्क्षत्वाभावादेकवाक्यत्वकल्पनानुपपत्तेः, ईदृशैकवाक्यत्वस्य पूर्वसूत्रे अनभिप्रेतत्वाच्चोपेक्षितम् । तस्मात्पूर्वोक्तविधयैवैकवाक्यत्वमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते--नात्रैकवाक्यत्वम् । तथा हि—आद्योदाहरणे तावद्विनियोगभेदेनैवाऽर्थभेदान्नाऽर्थैकत्वम् । न च मध्यान्त्यप्रतीकेन समस्तस्यैवोभयत्र विनियोगान्न प्रत्येकमर्थभेदः, तत्र ह्यादिमध्यान्त्यप्रतीकेन विनियोगः, यत्र मन्त्रस्वरूपाज्ञानामपेक्षायामेव पदानां परस्पराकाङ्क्षत्वम्, यथा सङ्कर्षो-

दाहृते मन्त्रे । तत्र हि "प्राणाय त्वेति हिरण्यमभिव्यनिती"त्यु-क्ते कथं हिरण्याभिव्यननस्य प्राणमात्स्यर्थतेत्यपेक्षिते, परावतो दूरदेशादन्तरिक्षाद्दिवश्च परि सर्वतः प्राणः नः अस्मानाग-च्छतु, यच्च पृथिव्या अधि उपरि आयुः तदप्यागच्छतु, यतस्त-वाऽमृतत्वेन प्राणदानसामर्थ्यादित्यन्योन्याकाङ्क्षत्वं मन्त्रस्वरूपा-ऽनानवेलायामेव प्रतीयते । अतस्तत्र युक्तो मध्यान्त्यप्रतीकेन वि-नियोगः । प्रकृते तु मन्त्रस्वरूपालोचनवेलायां 'इषे त्वे'त्यस्योर्जेत्वे-त्यनेन निराकाङ्क्षत्वप्रतीतेः पश्चादवगम्यमानो विनियोग एको-ऽपि न प्रतीकग्रहणायाऽलम्, पूर्वावगतनैरपेक्ष्यभङ्गापत्तेः । किमुत यदा यथापेक्षितो विनियोगभेद एव स्पष्टतरोऽवधार्यते, तदा कः प्रसङ्गो मध्यान्त्यप्रतीकेन समस्तविनियोगस्य । किञ्चाऽऽख्यानक-ल्पकतावच्छेदकं तच गुरुभूतम् । पुनश्च कार्यकारणभावद्वयेऽपि कारणतावच्छेदकैक्याद्व्यभिचारप्रसङ्गः ।

यत्तु सामर्थ्यबलेन 'इषे त्वे'त्यस्योन्मार्जनाङ्गत्वावगमात्तद-वाधार्थं समस्तविनियोग इत्युक्तम्, तत् सामर्थ्यकल्प्यश्रुतेः पूर्व-मेव प्रत्यक्षश्रुत्या छेदनाङ्गत्वेन विनियोगेऽवगते सामर्थ्यस्य श्रु-त्यकल्पकत्वादुन्मार्जनाङ्गताबोधकप्रमाणाभावेनोपेक्षणीयम् । त-स्मादर्थैकत्वविशिष्टविभज्यमानसाकाङ्क्षत्वाभावात् भिन्नवाक्यता-प्रतीतेर्युक्तो यजुर्भेदः ।

द्वितीयोदाहरणे तु सत्यप्यर्थैकत्वे विभज्यमानसाकाङ्क्षत्वा-भावान्न विभागमन्त्रवदेकवाक्यत्वम् । न च 'क्लृप्तीर्वाचयती' त्य-नेन सर्वेषां कल्पतामिति पदानां समुच्चयविधानादेकस्मिन् क्लृ-प्तिप्रकाशने साहित्यावगतेर्विभज्यमानसाकाङ्क्षत्वोपपत्तिः, स-कृदुच्चरितस्यैव पदस्य क्लृप्तिबोधजनकत्वेन क्लृप्तिबोधेऽनेकप-दसाहित्यस्य बाधितत्वात् । 'क्लृप्तीर्वाचयती'त्यत्र च न क्लृ-

प्तिपदं कल्पतामितिपदपरं, तद्घटितमन्त्रपरं वा, लक्षणाप्रसङ्गात्, अपि तु क्लृप्तिरूपार्थपरमेव। न च क्लृप्तिरूपार्थपरत्वे तस्योच्चारणानुकूलव्यापारवाचिवाचयत्यन्तर्गतवाचिकर्मत्वानुपपत्तिः, 'वचपरिभाषण' इत्यनुशासनबलेन वचेरभिधानार्थकत्वावसायात्तं प्रत्यर्थस्य कर्मत्वोपपत्तेः। अत एव क्वाचित्को वचेरुच्चारणे प्रयोगो लाक्षणिक इत्यनुसन्धेयम्।

एवञ्च क्लृप्तिपदस्याऽर्थपरत्वावसायात्तस्याश्च बहुत्वसङ्ख्यया भेदावगतेरर्थभेदोऽप्यत्र सुलभ एव। युक्तश्च(१)उत्तराधिकरणन्यायेन यावत्प्रथमान्तं क्लृप्तिभेद इति, न कपिञ्जलाधिकरणन्यायेन त्रित्वमात्रपर्यवसानाशङ्का। विभागमन्त्रे तु बहुवचनाभावात्कारकभेदस्य च द्वन्द्वरूपेणाऽसमवायितया एकस्यामपि क्रियायां स्तुतिमात्रार्थत्वेनोपपत्तेर्न भेदकतेति विशेषः। अतश्च 'क्लृप्तीर्वाचयती'त्यस्य क्लृप्तिभेदकतयाऽप्युपपत्तेस्तन्मन्त्रसमुच्चयस्य च मन्त्राणां भिन्नार्थत्वादेव सिद्धेरर्थभेदावगमाद्विभज्यमानसाकाङ्क्षत्वस्य च दूरभ्रष्टत्वाद्वाक्यभेदावगमेन यजुर्भेदोपपत्तिः।

प्रयोजनम्—प्रथमोदाहरणे स्पष्टमेव। द्वितीये तु यावन्मन्त्रं ऋष्याद्यनुसन्धानम्, एकमन्त्रश्रेषे वा तन्मात्रोच्चारणं सिद्धान्ते। पूर्वपक्षे तु सकृदेव तदनुसन्धानं समस्तोच्चारणं चेति द्रष्टव्यम्।

सूत्रं तु—समेष्वन्योन्यनिराकाङ्क्षेषु वाक्यभेदस्यादिति स्पष्टम् ॥ ४८ ॥

इति षोडशं वाक्यभेदाधिकरणम् ॥ १६ ॥

---

१. उत्तरान्यायेनेति. क. ख. पु. उत्तरागोदोहन (११. १. ५.) न्यायेनेत्यर्थः ॥

अथ सप्तदशं अनुषङ्गाधिकरणम् ॥ १७ ॥

## अनुषङ्गो वाक्यपरिसमाप्तिस्सर्वेषु तुल्य-योगित्वात् ॥२-१-४९॥

( विषयसंशयौ )

ज्योतिष्टोमे तिसृणामुपसदां द्वितीयतृतीयचतुर्थेष्वहस्सु पूर्वाह्णापराह्णभेदेन द्विरावृत्त्याऽनुष्ठीयमानानां क्रमे संहितायां मन्त्रत्रयमुपसदङ्गभूतोपहोमाङ्गत्वेन समाम्नातम् । तत्राऽऽद्यो(१) "या ते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत् त्वेषं वचो अपावधीत्स्वाहे"ति । द्वितीयतृतीयौ तु "या ते अग्ने रजाशया, या ते अग्ने हराशये"ति । एतेषां च मन्त्राणां क्रमणैकैकस्य तत्तदहःक्रियमाणोपसदङ्गभूतहोमाङ्गतेत्यप्यविवादम् । तत्रोत्तरयोर्मन्त्रयोर्यच्छब्दस्त्रीलिङ्गनिर्देशात्स्त्रीवाचकपदसाकाङ्क्षतावगतेरवश्यं कश्चित्तत्परिपूरणसमर्थो वाक्यैकदेशः कल्पनीयः । न चाऽध्ययनविधिनाऽध्ययनोपायनियमात्कथमनधीतस्य (२)तदेकवाक्यत्वोपपत्तिरिति वाच्यम् । तेन प्रत्यक्षपठिते वेदे तन्नियमेऽपि अनधीते प्रवादिपदवदेव वेदैकदेशत्वोपपत्तेः । ततश्चावश्यकल्पनीये वाक्यैकदेशे किं लौकिकोऽध्याहर्तव्यः? उत वैदिक एव 'तनू'रित्यादिराद्यमन्त्रैकदेशोऽनुषञ्जनीय ? इति सन्देहः ।

( सङ्गतिः )

अत्राऽनुषङ्गपक्षे आम्नानस्य सर्वार्थत्वेनैव साधयिष्यमाण-

---

१. वा. सं. ५. ८. ८.  २. तस्य वेदैकवाक्यत्वेति. क. पु.

त्वेनाऽनुषक्तस्याऽऽम्नातत्वेन मन्त्रत्ववद्यजुष्ट्वस्याऽप्युपपत्तेः पूर्ववद्यजुःपरिमाणचिन्तात्मकत्वेन सङ्गत्युपपत्तिः ।

( पूर्वपक्षः )

तत्र वैदिकश्शेष आद्यानन्तरपठितत्वादपेक्षितदेशपाठाच्चाऽऽद्यस्यैव स्वारस्येन सम्बध्यते, नाऽनन्तरयोरिति तावदविवादम् । अतश्चाऽगृह्यमाणविशेषत्वात्प्रयाजादिवत्सर्वार्थमेवाऽयमाम्नात इति नैवाऽऽशङ्कितुं शक्यम् । न च शेषस्याऽऽद्यसम्बन्धेन निराकाङ्क्षस्याऽप्युत्तरयोस्साकाङ्क्षत्वात्तदन्वयोपपत्तिः, तयोरप्यनिबद्धलौकिकशेषग्रहणेन निराकाङ्क्षयोराद्यमन्त्रमात्रनिबद्धवैदिकशेषग्रहणानुपपत्तेः । अत एव 'अग्निमुपनिधाय स्तुवीत' त्यस्य लौकिकाग्निग्रहणेनाऽपि निराकाङ्क्षत्वात्कार्यविशेषपुरस्कारेण निबद्धानां वचनव्यतिरेकेणाऽऽयतनाद्धर्हिर्नेतुमशक्यानामाहवनीयादीनामग्निपदेनाऽग्रहणमिति(१) सप्तमे,वक्ष्यते । एवञ्च सत्यपि यदि लौकिकस्याऽप्रकृतत्वादाग्नेयीमन्त्रन्यायेन प्रकृतस्यैव वैदिकस्य 'तनू'रित्यादेर्ग्रहणमित्याशङ्क्येत, तत आग्नेयीमन्त्रस्याऽन्यत्र विनियुक्तस्याऽपि 'कुशा दर्व्यादय' इतिवचनात्समस्तस्याऽन्यत्र विनियोगे मन्त्रत्वानपायेऽपि मन्त्रैकदेशस्य तनूरित्यादेरन्यत्र नयने मन्त्रत्वानापत्तिः । अतश्चोपस्थितत्वान्मयाऽपि स एव गृह्यते । न त्वेतावता तस्य मन्त्रत्वं यजुष्ट्वं वा शक्यमापादयितुमिति न तद्भ्रेषे यजुर्भ्रेषनिमित्तप्रायश्चित्ताद्यापत्तिरिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते-वैदिकस्यैव सर्वत्राऽनुषङ्गः, तस्य सर्वार्थमा-

---

१. पू. मी. ७. ३. १०.

म्नातत्वात् । यथैव हि तनूरित्यादेराद्यमन्त्रसम्बन्धे आकाङ्क्षा-योग्यतासान्निधयः कारणं, तथैवोत्तरमन्त्रद्वयसम्बन्धेऽपि । तथा हि—आकाङ्क्षा तावद्विशेष्यविषयिण्याद्यस्येवोत्तरयोरप्यविशिष्टा । योग्यता च निराकाङ्क्षीकरणसामर्थ्यरूपा पूर्वस्मिन्निवोत्तरयोरप्यविशिष्टैव । सन्निधिस्तु यद्यप्यानन्तर्यरूपो नाऽविशिष्टः, तथाप्यसम्बन्धिपदाव्यवधानरूपोऽविशिष्ट एव । न ह्यानन्तर्यरूपस्सन्निधिश्शाब्दबोधे कारणम् , तदभावेऽपि देवदत्त गामानयेत्यादौ देवदत्तादिपदानामानयनान्वयदर्शनात् , अपि त्वसम्बन्धिपदाव्यवधानमेव । गोशब्दस्य च सत्यपि व्यवधायकत्वे आनयनान्वयित्वेन(१) नाऽसम्बन्धित्वम् । अतश्च प्रकृतेऽप्याद्य इव द्वितीये तृतीयेऽपि उक्तरूपस्सन्निधिरविशिष्टः ।

न च द्वितीये सन्निध्युपपत्तावपि तृतीये तेनैव व्यवहितत्वात्कथं सन्निधानोपपत्तिरिति वाच्यम् । द्वितीयस्याऽपि शेषान्वययोग्यत्वेन गोपदवदेवाऽसम्बन्धित्वाभावात् । अतश्चाऽसम्बन्धिपदाव्यवधानरूपस्य सन्निधानस्य सर्वेष्वविशेषात्सर्वार्थमाम्नानावगतेस्सर्वसम्बन्धोपपत्तिः । अत एवैकस्यैवाऽव्यवहितानन्तर्यं यथापेक्षितश्च स्वपाठोत्तरकाले पाठोऽप्यकिञ्चित्करः, सर्वमन्त्राव्यवहितानन्तर्यस्य सकृत्पाठेऽशक्यत्वेनाऽऽवृत्तपाठस्य चाऽऽकाङ्क्षादित्रयेणैव सर्वार्थत्वज्ञानोपपत्तेरनर्थकत्वेन सर्वान्तपाठनियमस्य चाऽऽपादयितुमशक्यत्वेनैकाव्यवधानस्याऽवर्जनीयत्वात् , उत्तरयोरपेक्षितदेशोच्चारणस्य लिङ्गेनैव ज्ञातुं शक्यत्वाच्च । ततश्च युक्तमाकाङ्क्षादित्रयसाधारण्यात्सर्वार्थत्वम् ।

न चैवमव्यवधानस्याऽन्वयाप्रयोजकत्वे समानपदप्रत्यासत्त्या यागस्यैव करणत्वोक्तिर्विरुध्येतेति वाच्यम् । अव्यवहिता-

१. असम्बन्धित्वाभावादिति क. ख. पु.

नन्तर्यस्याऽन्वयतात्पर्यग्राहकत्वाभावेऽप्यन्वयनियामकत्वोपपत्तेः। तत्र हि फलनिरूपकत्वं किं यागस्य, उत सोमादेरित्यनियमे प्राप्ते नियामकमात्रं पदप्रत्यासत्तिः । प्रकृते त्वाकाङ्क्षादित्रयसाधरण्या-त्सर्वत्र नियमेनैव(१) सम्बन्धप्राप्तेर्नानन्तर्यस्य नियामकत्वोपपत्तिः । न ह्येकस्य नैराकाङ्क्ष्येणेतरयोर्नैराकाङ्क्ष्यं शक्यते वक्तुम् । अतश्च यथैव प्रयाजादीनां सत्यप्याग्नेयाव्यवधाने अग्नीषोमीया-दरप्याकाङ्क्षादित्रयसाधारण्यात्सर्वार्थत्वं, एवमिहापि द्रष्टव्यम् । तस्माद्वैदिकस्य सर्वसम्बन्धरूपोऽनुषङ्ग एव युक्तः, न तु क्रमिकान्वयाङ्गीकारेणैकसम्बन्ध एव वैदिकत्वं, इतरसम्बन्धे लौकिकत्वमिति । यतश्शेषान्वयं विना आद्यस्येवोत्तरयोरपि न परिसमाप्तिः, अतस्सर्वेषु तुल्याम्नानादनुषङ्ग इति सूत्रार्थः ।

प्रयोजनं तु तद्भ्रेषे यजुर्भ्रेषनिमित्तप्रायश्चित्तप्राप्तिस्स्पष्टैव ॥

( अनुषङ्गाधिकरणवर्णकान्तरम् )

(विषयसंशयौ)

एवं तावदनेकेषामुत्थिताकाङ्क्षाणां सन्निधावाम्नायमानश्शेषस्सर्वत्राऽनुषज्यत इत्युक्तम् । इदानीं तूत्थाप्याकाङ्क्षाणामनेकेषां सन्निधावाम्नायमानश्शेषस्सर्वत्राऽनुषज्यते न वेति विषयव्याप्त्यर्थं तस्मिन्नेव सूत्रे विचार्यते । ज्योतिष्टोमे यजमानपावनार्था मन्त्राः(२) "चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वि" त्येवंविधाः क्रियापदान्तत्वेन स्वतो निराकाङ्क्षाः पठिताः । तेषामन्ते "अच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभि"रिति क्रियासाकाङ्क्षश्शेषस्समाम्नातः । स किं अनन्तरेणैव मन्त्रेण सम्बध्यते ? उत सर्वैरपीति विचारः ।

---

१. शेषप्राप्तेरिति. क. पु. २. १. २. १.

( पूर्वपक्षः )

तत्र तेषां तावत्स्वरूपेण निराकाङ्क्षत्वाच्छेषाकाङ्क्षयैवाकाङ्क्षामुत्थाप्य सम्बन्धो वाच्यः। तत्र चैकपदसम्बन्धेनैव(१) निराकाङ्क्षस्य शेषस्येतराकाङ्क्षोत्थापकत्वे प्रमाणाभावान्नियामकापेक्षायां यागादाविवाऽऽनन्तर्यस्य नियामकत्वोपपत्तेर्न सर्वत्राऽनुषङ्गः। न चैवमपि 'यजमानं पावयती'ति विधिना विहितस्यैकस्यैव पावनस्य त्रिभिरपि मन्त्रैः प्रकाशनादच्छिद्रादेश्चाऽपूर्वसाधनीभूतप्रकाश्यमानपावनक्रियाकरणप्रकाशनार्थत्वात्पूर्वमन्त्रयोरप्यन्तिममन्त्रवत्प्रयोगोपपत्तिरिति वाच्यम्; पावनक्रियैक्येऽपि मन्त्रभेदेन तत्प्रकाशनानां भेदादन्तिमप्रकाशनविषयीभूतपावनक्रियाकरणप्रकाशनार्थस्यैवाऽऽनन्तर्यादङ्गतत्वेन चित्पत्यादिकर्तृव्यवस्थावदेव करणव्यवस्थाया अप्युपपत्तेः।

न चाऽत्र मन्त्राणां विकल्पः, येनैकस्मिन्नेव प्रकाशने त्रयाणां करणत्वाद्व्रीहियवयोरिव धर्माणामव्यवस्थापत्तिः, सत्यपि दृष्टार्थत्वे 'त्रिभिर्यजमानं पावयती'ति वचनात् पार्थसारथिमिश्रधृतात्समुच्चयोपपत्तेः। अतश्च विकल्पोक्तिर्याज्ञिकाचारविसंवादिनी वार्तिककारीयाऽतिशयार्थैव। अतश्च सत्यप्यच्छिद्रादेस्सर्वार्थत्वे प्रयाजादिवत्सकृत्प्रयुक्तस्यैव सर्वोपकारकत्वोपपत्तेर्न प्रत्येकं प्रयोगाख्यानुषङ्गोपपत्तिः।

वस्तुतस्तु बोधायनादिकल्पपर्यालोचनया पावनस्याऽपि मुखनाभिगुल्फप्रदेशभेदेन त्रिरभ्यासादेकैकमन्त्रस्यैकैकाभ्यासकरणत्वावगमादानन्तर्यविशेषेणाऽच्छिद्रादेः गुल्फप्रदेशसंस्कारार्थपावनक्रियाभ्यासप्रकाशकपदैकवाक्यतया विजातीयापूर्वसा-

---

१. निवृत्ताकाङ्क्षस्येति. क. ख. पु.

घनीभूतपावनक्रियाभ्यासाङ्गत्वावगतेः "पयसा मैत्रावरुणं श्रीणाती" तिवदभ्यासान्तरे प्राप्त्यभावाद्वपवस्थोपपत्तिस्सुलभैव । अतो नेदृशस्थले अनुषङ्ग इति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—आकाङ्क्षादित्रयसाधारण्यादत्रापि सर्वार्थाम्नानावगमेनाऽनुषङ्गेणैव वाक्यपरिसमाप्तिः । तथा हि—सन्निधियोग्यत्वे तावत्पूर्ववदेवाऽविशिष्टे । आकाङ्क्षा चाऽपि यथैवाऽन्तिमस्यैतदाकाङ्क्षावशेन कल्प्या, तथैव पूर्वयोरपि । न ह्यत्रानन्तर्यस्य नियामकता सम्भवति । तत्र हि तन्नियामकं, यत्र तत्प्रवृत्तेः पूर्वं विकल्पेनाऽनेकेषु प्राप्तिः, यथा—प्रतिपदाधिकरणसिद्धान्तरीत्या यागसोमयोः । प्रकृते तूत्थाप्याकाङ्क्षाणामपि तेषां विनिगमनाविरहेण प्रधानत्वात् प्रतिप्रधानावृत्तिन्यायेन च प्रत्येकं समुच्चयेनैव शेषग्राहित्वावगतेर्नियामकानाकाङ्क्षत्वान्नाऽऽनन्तर्यस्य तन्नियामकत्वोपपत्तिः । अतश्च यथैवाऽनेकहविष्कासु विकृतिषु श्रुतानामुपहोमानां विनिगमनाविरहेण प्रधानत्वेन च सर्वहविर्गतामेवाऽऽकाङ्क्षां प्रकल्प्य समुच्चयेन सर्वार्थतावगतेर्नियामकाकाङ्क्षाविरहेण नाऽऽनन्तर्यस्य नियामकत्वं, तथैव प्रकृतेऽपीति पूर्ववदेव सर्वार्थमाम्नानावगतेर्युक्तोऽनुषङ्गः ॥ ४९ ॥

इति सप्तदशमनुषङ्गाधिकरणम् ॥ १७ ॥

## अथाऽष्टादशं व्यवायाधिकरणम् ॥ १८ ॥

## व्यवायान्नाऽनुषज्येत ॥ २-१-५० ॥

असम्बन्धिपदाव्यवधाने सत्यनुषङ्गे साधिते, यत्राऽसम्बन्धि-पदव्यवधानं तत्राऽनुषङ्गो नाऽस्तीति प्रत्युदाहरणार्थमिदं सूत्रम्। यथा—(१)"सन्ते वायुर्वातेन गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषे" इत्यत्र 'गच्छतामि'त्यस्य 'अङ्गानी'त्यनेन तावद्योग्यत्वेनाऽसम्बन्धात् असम्बन्धिपद(२)व्यवधानेन 'संयज्ञपतिराशिषे'त्यनेन सत्यपि साकाङ्क्षत्वे योग्यत्वे च, सन्निधानाभावान्नाऽनुषङ्गः। अतः 'संयजत्रैरङ्गानी'त्यत्र 'गच्छन्तामि'त्यस्येव 'सं यज्ञपतिराशिषे'त्यत्राऽपि 'गच्छतामि'ति पदमध्याहर्तव्यम्।

न चाऽनयोस्साकाङ्क्षत्वेऽपि गमनरूपस्यैवाऽर्थस्य योग्यताबललभ्यस्याऽन्वयोपपत्तेः किमर्थं पदाध्याहारकल्पनेति वाच्यम्। तत्तत्पदार्थशाब्दबोधत्वावच्छिन्नं प्रति वृत्तिप्रत्यासत्त्या सम्बन्धेन तत्पदज्ञानस्यैव कारणत्वात्। अन्यथा देवदत्तः पचतीति केनचिदुक्ते प्रत्यक्षदृष्टेनैव कलायेन कर्माकाङ्क्षानिवृत्तेः किं पचतीति प्रश्नानापत्तिः। अस्मन्मते तु कलायोपस्थितावपि तद्वाचकपदस्योद्बोधकाभावादनुपस्थितौ प्रश्नोपपत्तिरिति वैषम्यम्।

किञ्च घटं स्मरेत्यादौ वृत्त्या घटोपस्थितिवदेकसम्बन्धिदर्शनेनाऽपरसम्बन्धिस्मरणमिति न्यायेन घटपदसमवायिकारणीभूताकाशोपस्थितौ तस्याऽपि स्मरणकर्मत्वेनाऽन्वयापत्तिः। अतोऽवश्यं शाब्दत्वसिध्यर्थं गच्छतामिति पदमेवाऽध्याहृत्योच्चारणीयम्। न चैवं पदाध्याहारोपपत्तावप्यध्याहृतस्य पदस्य ध्यानेनाऽपि स्मरणोपपत्तेर्नाऽवश्यमुच्चारणोपपत्तिः, मन्त्राधिकर-

---

१. तै. सं. १. ३. ८.    २. व्यवायेनेति. क. पु.

णोक्तन्यायेन पठितमन्त्रेष्विवाऽध्याहृतमन्त्रेष्वपि प्रयोगसमवेतार्थप्रकाशकेषूच्चारणोपपत्तेः । अतोऽत्र लौकिकत्वाद्गच्छतामिति पदस्य तद्भ्रेषे यजुर्भ्रेषनिमित्तप्रायश्चित्ताभावेऽपि यत्राऽसम्बन्धिपदाव्यवधानम्, तत्र वैदिकस्याऽनुषङ्गोपपत्तेर्युक्तं तद्भ्रेषे यजुर्भ्रेषप्रायश्चित्तादि । ततश्च तत्राऽनुषक्तस्यैव यजुष्ट्वम् ।

वस्तुतस्तु गमिधातुमात्रस्य द्वितीयमन्त्रेऽप्यनुषङ्गसम्भवेन तृतीये संबन्धोपपत्तेः प्रत्युदाहरणेऽपि प्रत्ययमात्रस्यैव व्यवायादनुषङ्गो निराकर्तव्यः । न चैकपदत्वात्प्रत्ययाननुषङ्गे प्रकृतेरपि(१)अननुषङ्गापत्तिः, प्रत्ययमात्रोहे प्रकृतेरार्थत्ववत्तस्याऽनुषङ्गे बाधकाभावात् । अत एवेदृशविषये विपरिणतानुषङ्गमाचक्षते वृद्धाः । तेन प्रत्ययरहितस्यैव यजुष्ट्वमिति सिद्धम् ॥ ५० ॥

इत्यष्टादशं व्यवायाधिकरणम् ॥ १८ ॥

मीमांसाम्बुनिधिं प्रमथ्य विविधन्यायोच्चयैर्निर्झरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥

इति पूर्वोत्तरमीमांसापारावारपारीण श्रीरुद्रदेवसूनोः खण्डदेवस्य कृतौ मीमांसाकौस्तुभे द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

१. अनुषङ्गानुपपत्तिरिति. क. पु.

श्रीः ।

# मीमांसाकौस्तुभः ॥

## ( द्वितीयाध्यायस्य द्वितीयः पादः )

### प्रथमं शब्दान्तराधिकरणम् ॥ १ ॥

### शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ २-२-१ ॥

( विषयसंशयसङ्गतयः )

एवमुपोद्धातप्रसक्ते मन्त्रलक्षणादौ समाप्ते 'यत्प्रसङ्गेन यदागतं तत्समाप्तौ तत् बुद्धिस्थं जायत' इति न्यायेन भावार्थाधिकरणोक्तधात्वर्थकरणत्वस्योपस्थितेः तस्य चाऽपूर्वभेदसिद्धिद्वारा भावनाभेदसिध्यर्थत्वस्योक्तत्वादिदानीमवसरप्राप्तो लक्षणार्थभूतो भावनाभेद एव शब्दान्तरादिप्रमाणैः प्रतिपाद्यते । तत्राऽपि शब्दान्तरस्य प्रमाणान्तरसिद्धधात्वर्थभेदोपजीवित्वेन भावनाभेदमात्रे व्यापारात् सूचीकटाहन्यायेन प्रथमं तस्यैव भेदकता निरूप्यते । ज्योतिष्टोमेन स्वर्गकामो यजेते'ति प्रकृत्य 'सोमेन यजेत' (१)'दाक्षिणानि जुहोति' (२)'हिरण्यमात्रेयाय ददाती'त्यादि श्रुतम् । तत्र यागदानहोमादिसकलप्रकृतधात्वर्थानुरक्ता एका भावना ? अथ वा प्रतिधात्वर्थं भावनाभेदः ? इति विचारः । अत्र च प्रकरणान्तरातिरिक्तसकलभेदकप्रमाणनिरूपणस्य पादार्थत्वात् पादाध्यायसङ्गतिः स्पष्टा ।

( पूर्वपक्षः )

तत्र लाघवादेकैव भावना । न च तद्वाचकातिप्रत्ययाभ्यासात्

---

१. आप. श्रौ १३. ५. ६. २. आप. श्रौ. १३. ६. १२.

भेदः, तस्य धात्वर्थविधानार्थमनुवादकत्वाभ्युपगमेनाऽनन्यपरत्वाभावात्। न चैवमप्येकेन वाक्येन भावनाविधौ तद्वाक्यस्थस्य धात्वर्थस्य, गुणादेर्वा उत्पत्तिशिष्टत्वेन वाक्यान्तरविहितोत्पन्नशिष्टधात्वर्थान्तरादिनिवेशानुपपत्तेर्गुणाद्भेदापत्तिः, फलवाक्ये स्वर्गोद्देशेन शुद्धभावनाविध्यङ्गीकारेण तदनुवादेन सोमादिवाक्यैर्गुणविशिष्टधात्वर्थविध्यभ्युपगमे सर्वेषामुत्पन्नशिष्टत्वेन (१)गुणन्यायानवतारात्। न च फलवाक्येऽपि धातूपादानान्न शुद्धभावनाविधिः शक्यः, विशिष्टविधिगौरवापत्त्या फलवाक्यस्थस्य यजेरव्युत्पत्त्यानुवादकत्वेन, प्रकृतधात्वर्थमात्रोपलक्षणत्वेन वा साधुत्वार्थमनुवादकतया विधेयार्थकत्वाभावात्।

न च फलानुकूलव्यापारसामान्यस्य लोकत एव प्राप्तत्वात् धात्वर्थविशेषावच्छिन्नस्य च तत्र विधेयत्वेनाऽनिष्टत्वात् कथं शुद्धभावनाविधानोपपत्तिः? स्वर्गस्य जन्यत्वेन तदनुकूले व्यापारसामान्ये लोकतोऽवगतेऽपि तदुद्देश्यकस्य पुरुषनिष्ठयत्नरूपव्यापारस्य नियमेनाऽनाक्षेपात्तद्विधानोपपत्तेः, पुत्रादौ यत्नस्याप्यवगमेऽपि तद्गतवैजात्यस्याऽनवगमाद्विधानोपपत्तेश्च। न च 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इत्यनुशासनेन प्रत्ययानां नियमेन प्रकृत्यर्थान्वितस्वार्थबोधकत्वावगतेः शुद्धभावनाविधानानुपपत्तिः। वस्तुतो धात्वर्थावच्छिन्नभावनाभिधानेऽपि धात्वर्थावच्छेदस्य प्रमाणान्तरप्राप्तत्वात् विशेष्यमात्रांशे विधिफलोपपत्तेः। अत एव गुणफलस्थले धात्वर्थावच्छेदकत्वस्य प्रकरणप्राप्तत्वेऽपि भावनामात्रविधिराश्रितः। अतश्च यजिपदस्य प्रमाणान्तरानुरोधेन प्रकृतसर्वधात्वर्थपरत्वावगतेः तत्समानाधिकरणस्य ज्योतिष्टोमपदस्याऽपि एकदेशप्रवृत्तिनिमित्तेन सर्वनामधेय-

१. पू. मी. २. २. ९.

त्वापत्तिः । एवञ्च फलवाक्ये शुद्धभावनाविधानेऽवगते सोमादि-वाक्यस्थातिप्रत्ययेन प्रत्येकं तामनूद्य तत्करणतया सोमादि-विशिष्टधात्वर्थविधानोपपत्तेः, सर्वेषाञ्चोत्पन्नशिष्टत्वेन गुणन्या-याभावात् भेदकप्रमाणाभावेन भावनैकत्वसिद्धिः । एवञ्च तत्त-द्वाक्ये निरपेक्षतया तत्तद्धात्वर्थानामेकफलभावनाकरणत्वावग-मेन विकल्पोपपत्तेरेकजातीयस्यैवाऽपूर्वस्य तृणारणिमणिन्या-येन सकलजन्यत्वोपपत्तेः तद्भेदकल्पनाभावादपि लाघवम् । अस्तु वा व्यभिचारपरिहारार्थं तद्भेदोऽपि, न चैतावता भावना-भेदः । न च भेदकान्तराभावेऽपि अवच्छेदकीभूतधात्वर्थभेदरू-पाच्छब्दान्तरादेव भेदोपपत्तिः, समूहालम्बनस्थले एकस्मिन्नेव ज्ञाने घटपटादीनामनेकेषां विषयतासम्बन्धेनाऽवच्छेदकत्ववद-कस्यामेव कृतौ सर्वेषां धात्वर्थानां साहित्येनाऽवच्छेदकत्वोपप-त्तेः । अस्तु वा एकस्यां भावनायां वैकल्पिका सर्वेषामवच्छेद-कता, सर्वथा सिद्धं भावनैकत्वम् ।

यत्त्वत्र भाष्यकारेण यागदानहोमानां स्वत्वत्यागांशेन एकत्वादवच्छेदकीभूतधात्वर्थस्याऽप्येकत्वमित्युक्तम् , तत् स्व-त्वत्यागांशस्यैक्येऽपि परस्वत्वापादनप्रक्षेपांशयोगाधिक्येन धा-त्वर्थैक्यानुपपत्तेरातिशयार्थम् । किञ्चैवं ददातिवाक्ये प्राप्तकर्मा-नुवादेन हिरण्यात्रेयरूपानेकगुणविधाने वाक्यभेदप्रसङ्गादवश्य-मुभयविशिष्टकर्मविधानावगतेः धात्वर्थैक्योक्तिरसम्बद्धैव । तथा 'दाक्षिणानि जुहोती'त्यत्राऽपि जुहोतिलक्षितयागानुवादेन वि-धेयस्य गुणस्याऽभावात् धात्वर्थविधानावश्यकत्वेन तदैक्योक्ति-रसम्बद्धा ।

न च दाक्षिणपदेन दक्षिणाकालरूपगुणविधिः, दाक्षिणा-नीति तद्धितस्य कालार्थे प्रमाणाभावेन कालविशेषे प्रमाणाभा-

वात् । दक्षिणायास्तु यागाङ्गत्वेन प्राप्तत्वादेव विधिरनाशङ्क्यः । अतो विधेयान्तराभावेन कर्मविध्यवश्यम्भावे पाठप्राप्तदक्षिणां-चरकालतारूपप्रवृत्तिनिमित्तेन दाक्षिणशब्दो नामधेयम् । अत-श्च धात्वर्थैक्यस्य बाधितत्वात् सत्यपि धात्वर्थभेदे भावनाया ऐक्यमिति प्राप्ते—

( सिद्धान्तः )

उच्यते—यत्राऽपर्यायधातुभेदरूपं शब्दान्तरम्, तत्राऽव-श्यं भावनारूपकर्मभेदः प्रत्येतव्यः । तथा हि—भावना तावत् कृतिस्सविषया, कृतिविषयत्वमपि न ज्ञानविषयत्वादिवत् सिद्ध-पदार्थवृत्ति, अपि तु साध्यमात्रवृत्तित्वात् तज्जन्यत्वापरपर्या-यम् । अतश्च फलवाक्यविहिताया अपि कृतेर्विषयापेक्षायां सो-मादिवाक्यविहितो यागादिरेव साध्यत्वात् जन्यत्वेन सम्ब-ध्यत इत्यभ्युपगन्तव्यम् । तत्र च कार्यतावच्छेदकस्य यागत्वादे-र्भेदात् कारणीभूतायां कृतावपि वैजात्यमावश्यकमेव । न च तत्त-त्कार्यतावच्छेदकावच्छिन्नं प्रति यत्नत्वेनैव कारणताऽस्तु, होमोत्प-त्तिदशायां यागोत्पत्तिप्रसक्तिस्तु विजातीयादृष्टरूपसामग्र्यभावा-देव निराकर्तव्येति वाच्यम् । विजातीयादृष्टस्य कारणत्वकल्पने प्रमाणाभावात्, अन्यथा तन्मात्रादेव कार्यमात्रोत्पत्त्युपपत्तौ कार-णमात्रोच्छेदापत्तेः, अदृष्टगतवैजात्यकल्पनापेक्षयोपस्थितकृतावेव वैजात्यस्य कल्पयितुं युक्तत्वाच्च । एवञ्च कार्यमात्रवृत्तिजातेः किञ्चित्प्रति कार्यतावच्छेदकत्वनियमोऽप्यनुगृहीतो भवति ।

न चैवं ईश्वरकृतौ कार्यद्वयजनकतावच्छेदकजातिद्वयसत्त्वा-त्साङ्कर्यापत्तिः, ईश्वरकृतेरेवाऽनङ्गीकारात् । एवं सत्यपि यदि सकृत्प्राकरणिकधात्वर्थेष्वधिश्रयणफूत्कारादिवृत्तिपाकत्वमिव च्छादिकसामान्यमेव कार्यतावच्छेदकतया केनचित्पदेनोपा-

त्वं स्यात्, ततो भवेत्कार्यतावच्छेदकैक्येन कारणीभूतभावनैक्यम्, न च प्रकृते तदस्ति, सोमादिवाक्यैर्यागत्वादिनैव तत्तद्धात्वर्थोपस्थितेः । अतश्च तत्तत्कार्यतावच्छेदकवाचिधातुपदभेदाद्युक्त एव कारणीभूतभावनाभेदः ।

न चैवमपि सोमादिवाक्ये यागादेः फलभावनाकरणत्वस्यैव (१)शाब्दत्वादार्थिककर्मतादशायां च कल्पनालाघवानुरोधेनैकस्यैव व्यापकधर्मस्य कार्यतावच्छेदकत्वकल्पनोपपत्तेः कथं तद्भेदेन भावनाभेद इति वाच्यम्? शाब्दस्य करणत्वस्य शब्दभेदेन भिन्नत्वात् तदन्यथानुपपत्तिकल्पितस्य कर्मत्वस्याऽपि कल्पकभेदेन भेदोपपत्तेः। अनयैव च दिशा 'तिस्र आहुतीर्जुहोती'त्यादावपि भावनाभेदो बोध्यः, मूलोक्तरीत्या तदसिद्धेरिति ध्येयम्। अतश्च भावनाभेदावश्यकत्वेन तत्तद्वाक्यैरेव तत्तद्वाक्योपात्तसकलकारकविशिष्टभावनाविधानमित्यङ्गीकर्तव्यम्, न तु फलवाक्य एवाऽनेकभावनाविधानम्, इतरैस्तु एकैकभावनानुवादेन तत्तद्धात्वर्थविधिरिति । फलवाक्ये भावनानेकत्वग्राहकप्रमाणानुपस्थितेः तद्वाक्यस्थयजेस्सर्वोपलक्षणार्थत्वे प्रमाणाभावाच्च, ज्योतिष्टोमपदे एकदेशप्रवृत्तिनिमित्तत्वाङ्गीकारस्याऽयुक्तत्वाच्च । अतश्च तत्तद्वाक्येनैव तत्तद्धात्वर्थविशिष्टभावनाविधानमङ्गीकृत्य फलवाक्ये लाघवात्फलसम्बन्धमात्रविधानम् । तदपि च ज्योतिष्टोमपदानुरोधात्(२) चातुर्थिकन्यायेन सोमद्रव्यकयागस्यैव ।

न चाऽस्तु तर्हि फलवाक्य एव 'उद्भिदा यजेते'तिवद्यागकरणिकभावनायाः फलोद्देशेन विधिः, सोमवाक्ये तु मत्वर्थलक्षणाविशिष्टविधिगौरवभिया यागकर्मकभावनानुवादेन सोममात्रविधिरिति वाच्यम् । फलवाक्ये दीक्षणीयादिप्राकरणिकयागानामेव राजसू-

१. शाब्दत्वेनेति क. पु. २. पू. मी. ४. ४. १२.

यवत् फलसम्बन्धापत्त्या तत्र तदपेक्षया। कर्मान्तरविधाने प्रमाणाभावात् ज्योतिष्टोमपदस्य चौत्तरकालिकाङ्गत्वरूपसम्बन्धमादायैव सर्वपरत्वोपपत्तेः। न चेष्टापत्तिः, तथात्वे दीक्षणीयादिवाक्ये उत्पत्तिशिष्टद्रव्यावरोधेन तत्र सोमविधानानुपपत्तौ सोमवाक्ये गुणात् सोमविशिष्टकर्मान्तरविधानस्याऽवश्यकत्वात्। अतश्च युक्तं चातुर्थिकन्यायेन तस्यैव फलसम्बन्धविधानमिति सिद्धो धात्वर्थभेदेन भावनाभेदः।

किञ्च यत्र संज्ञोपपदयुक्ताख्यातश्रवणं तत्र फलवाक्ये प्राप्तभावनानुवादेन धात्वर्थमात्रविधानोपपत्तावपि गुणोपपदयुक्ते सोमादिवाक्ये सोमधात्वर्थरूपानेककारकविधाने वाक्यभेदस्तदवस्थ एव। न च सोमविशिष्टयागविधानान्न वाक्यभेदः, यागस्याऽपि कारकत्वाविशेषेण गुणविशिष्टगुणान्तरविध्ययोगवद् गुणविशिष्टधात्वर्थस्य विध्ययोगस्याऽपि तुल्यत्वात्। अतश्च सर्वेषामपि प्रथमतो भावनायामेवाऽन्वयमङ्गीकृत्य तस्या एव विशिष्टाया विधिरङ्गीकर्तव्यः, तस्य च तथाऽनङ्गीकरणात् फलवाक्यमात्रभावनानुवादेनोभयविधौ च वाक्यभेदो दुरपह्नवः। अतस्सिद्धमपर्यायधातुभेदरूपाच्छब्दान्तरात् कार्यतावच्छेदकभेदेन कार्यभेदावगतौ कारणीभूताया भावनाया वैजात्यमिति।

प्रयोजनम्-पूर्वपक्षे सर्वेषां धात्वर्थानां समप्राधान्यं विकल्पश्च। सिद्धान्ते तु सोमयागस्यैव प्राधान्यम्, अन्येषां तु तदङ्गत्वान्न विकल्पः।

सूत्रं तु-उक्तविधे शब्दान्तरे भावनारूपकर्मभेदः प्रत्येतव्यः, कार्यकारणयोरेकवैजात्येनाऽपरवैजात्यरूपानुबन्धस्य कॢप्तत्वादिति व्याख्येयम्॥

इति प्रथमं शब्दान्तराधिकरणम्॥ १॥

अथ द्वितीयमभ्यासाधिकरणम् ॥ २ ।

## एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ॥ २-२-२ ॥

( विषयसंशयौ )

इदानीमभ्यासाद्भेदोऽभिधीयते। दर्शपूर्णमासयोः(१) 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती'ति पञ्चकृत्वो यजतिपदमभ्यस्तं श्रुतम्। तत्र किमेको यागः ? उत प्रत्यभ्यासं यागभेदः ? इति विचारः। यागैकत्वे भावनापूर्वयोरप्येकत्वम्, तद्भेदेऽर्थान्तरपरधातूच्चारणभेदात् शब्दान्तराधिकरणन्यायेनैव भावनाभेदसिद्धिः, अपूर्वाधिकरणोक्तन्यायेन चाऽपूर्वभेदसिद्धिः। यद्यपि चाऽभ्यासाद्यागभेदवद्भावनाभेदोऽपि शक्यते वक्तुम्, तथाऽपि शब्दान्तरेणाऽपि तत्सम्भवादसाधारण्याभावेन नोपन्यस्तः।

( सङ्गतिः )

अत्र च धात्वर्थभेदमात्रस्यैव विवक्षितविवेकेन निरूपणीयत्वेऽप्यध्यायार्थरूपभावनाभेदसिध्यर्थत्वादध्यायसङ्गत्यविरोधः। एवं सङ्ख्याद्यधिकरणेष्वपि द्रष्टव्यम्। पादसङ्गतिस्तु स्पष्टैव। अनन्तरा तु पूर्वाधिकरणे सत्यप्याख्यातैक्येन भावनाप्रत्यभिज्ञाने धातुभेदेन तदर्थभेदाद्युक्तो भावनाभेदः, प्रकृते तु धातोरप्येकत्वेन तद्भेदे प्रमाणाभाव इति पूर्वपक्षोत्थानाद्द्रष्टव्या।

( पूर्वपक्षः )

तत्र धातुस्तावत् स एवेति दृढतरप्रत्यभिज्ञयाऽवगम्यत इ-

---

१. तै. सं. २. ६. १.

त्वविवादम् । अतस्तदर्थोऽप्येक एव । न च पुनरुच्चारणाद्भेदस्तस्य,
लोके घटः घट इत्यादौ सतश्च उच्चारितोऽपि भेदाप्रतीतेः । प्रत्यु-
त प्रत्यभिज्ञापकत्वेनाऽभेदसाधकतया विरुद्धत्वात् । न च पुनः-
श्रुतिमात्रस्याऽभेदसाधकत्वेऽपि विधिपुनःश्रुतिः स्वसमभिव्याहृ-
तार्थे विहितविधानायोगेन भेदसाधकत्वान्न विरुध्यत इति वाच्य-
म् । उपक्रमस्थयजिपुनःश्रुतिबलेनैकवाक्यतालाभाय च 'एकं वृणी-
ते द्वौ वृणीते' इतिवत् 'तनूनपातं यजती'त्यादौ लडन्तत्वस्याऽपि स-
म्भवेन विधिपुनःश्रुतेरेवाऽसिद्धेः । अतश्च(१) तद्वदेवाऽयमेकस्याऽ-
र्थवाद इति नाऽनर्थक्यप्रतिहतत्वेनाऽपि विधिपुनःश्रुतेर्भेदकता ।

अस्तु वा(२)'समिधो यजति वसन्तमेवर्तूनामवरुन्धे' 'तनून-
पातं यजति ग्रीष्ममेवाऽवरुन्धे' इत्यादिपृथगर्थवादाम्नानाभिसन्दि-
ग्धगुणविधिव्यवहितत्वाच्च 'तनूनपातं यजती'त्यादेरपि विधिः,
तथाऽपि 'दध्ना जुहोती'त्यादिवत् गुणसङ्क्रान्तशक्तिकत्वात्
विधेर्धात्वर्थभावनाविषयत्वाभावेन न तद्भेदकत्वापत्तिः; सर्वत्र हि
समिदादिपदानां द्वितीयान्तानामपि 'विष्णुं यजती'तिवद्देवतापर-
त्वमेवाऽवगम्यते, न तु नामधेयत्वम्, येन तस्याऽविधेयत्वाद्विधि-
र्धात्वर्थभावनाविषय एव 'अग्निहोत्रं जुहोती'तिवत्स्यादिति, ते-
षां तूभयत्र तुल्यवत्प्रसिद्धिकत्वाभावेन नामधेयन्यायाविषयत्वात् ।

न च न्यायान्तराविषयत्वेऽपि समिदादिदेवतानां(३) याज्या-
मन्त्रवर्णैरेव सम्भवत्प्राप्तिकत्वात् 'अग्निहोत्रं जुहोती'तिवत्तत्प्रख्यन्या-
यविषयत्वोपपत्तिः,(४)'वसन्तमृतूनां प्रीणामी'त्याद्यनुमन्त्रणमन्त्रैः

---

१. अयं च विषयः ( ६. १. १०. ) अधिकरणे द्रष्टव्यः ।
२. मै. सं. २. ६. १.
३. समिधस्सामिधोऽग्न आज्यस्य वियन्तु इत्यादयो मन्त्रवर्णाः ।
४. तै. सं. १. ६. २.

वसन्तादिदेवतानामपि प्राप्तिसम्भवेन समिदादीनां नित्यप्राप्त्य-भावात् । अतो वसन्तादिमान्त्रवर्णिकदेवताप्राप्तिफलकस्य स-मिदादिनियमस्याऽप्राप्तत्वेन विधिवाक्यैर्विधानोपपत्तेः नामधेय-त्वासम्भवाद्विधायकस्य गुणसङ्क्रान्तशक्तित्वेन धात्वर्थभावना-विषयत्वाभावाच्च तद्भेदकत्वम्। न चैवं कर्मोत्पत्तिवाक्यस्थदेवता-वरोधात् कथमुत्पन्नवाक्यस्थदेवतान्तरविधानोपपत्तिः, कर्मोत्प-त्तिवाक्यस्थोपपदस्य नामत्वाङ्गीकारात्, अत एव न गुणाद्भे-दशङ्का । न चैवमपि विनिगमनाविरहः, प्राथमिकत्वेन समिद्वाक्ये कर्मविधिरितरत्र गुणविधिस्तदनुवादेनेति विनिगन्तुं शक्यत्वादि-ति पार्थसारथिमिश्राः ।

वस्तुतस्तु समित्पदस्याऽपि नामधेयत्वं नोद्भिन्न्यायसिद्धम्, उभयत्र तुल्यवद्वृत्तिकत्वाभावात् । वाक्यभेदव्यपदेशौ तु ना-शङ्कनीयावेव । तत्प्रख्यन्यायोऽपि नियमस्याऽप्राप्तत्वादनुपपन्नः, देवतामात्रप्राप्त्या तदुपपादनं तु तनूनपातादिपदेष्वप्यविशिष्टम् । अतो न समित्पदमात्रस्य नामधेयत्वाभिधानं युज्यते। तस्मादेवं प-रिहर्तव्यम्—स्वाहाकारवाक्ये कर्मविधिः, तत्रत्यस्वाहाकारपदस्य नामधेयत्वात् । न हि तत्र स्वाहाकारपदं स्वाहाकाररूपदेवता-विधायकम्, तस्य णमुलन्तत्वस्याऽपि सम्भवेन द्वितीयान्तत्व-स्यैव नियामकाभावात् देवताविध्यप्रतीतेः, मन्त्रतः पक्षे स्वाहा-कारदेवताया अप्राप्तत्वेनाऽपूर्वायाः स्वाहाकारदेवताया विधौ गौरवाच्च । नाऽपि स्वाहाकारशब्दमात्रविधिः, णमुलन्तत्वस्याऽपि संशयितत्वेन तद्दोषतादवस्थ्यात्, स्वाहाकारशब्दस्य मन्त्रवर्णा-न्नित्यप्राप्तत्वेन नियमविधेरप्यनाशङ्कनीयत्वाच्च । अतोऽसौ त-त्प्रख्यन्यायेन नामधेयमिति तत्रैव कर्मविधिः । इतरे तु तदनु-वादेन वैकल्पिकदेवताविधयः। अस्मिंश्च पक्षे(१) 'स्वाहाऽग्निम्,

---

१. तै. ब्रा. ३. ५ ५. ।

स्वाहा सोम' मित्यादिमन्त्रो मुख्यलिङ्गकैर्मन्त्रान्तरैर्याज्याकार्ये बाधितेऽपि महाप्रकरणसहकृताल्लिङ्गात्साङ्गप्रधानदेवताप्रकाशनार्थस्सन् 'स्वाहा देवां आज्यपाँ' इत्यादिना प्रयाजदेवताया अपि प्रकाशितत्वात्तदङ्गमपि भवत्येवेति नैतस्य प्रधानमात्राङ्गत्वापत्त्या प्रयाजे स्वाहाशब्दस्याऽप्राप्तत्वात् तत्प्राख्यन्यायविघातशङ्का। अतः समिदादिवाक्यानां तत्रैव देवताविधायकत्वोपपत्तेर्विधिपुनःश्रवणस्य धात्वर्थविषयत्वाभावात् न तद्भेदकत्वोपपत्तिः।

अस्तु वोपांशुयागोत्पत्तिवाक्ये देवताभावात्तदनुवादेन समिदादिवाक्येषु पञ्चस्वपि देवताविधिः, तत्क्रमाम्नातविष्ण्वादिदेवत्ययाज्यानुवाक्यायुगलानां तु क्रमं बाधित्वा समाख्यासहकृतलिङ्गेनोत्कर्ष इति भवद्वोक्तः पक्षः। अस्तु वा वक्ष्यमाणसिद्धान्तरीत्यैव समिदादीनां पञ्चानामपि नामधेयत्वम्, तथाऽपि प्राथमिकत्वेन समिद्वाक्य एव कर्मविधिः, इतरे तु तस्यैव कर्मणोऽभ्यासविधायकाः,(१)'तेन पुनर्यजेतेतिवत्'। न तु कर्मान्तरविधायकाः, प्रकृतप्रत्यभिज्ञाबाधप्रसङ्गात्। अस्मिंश्च पक्षे 'अतिहायेडो बर्हिः प्रतिसमानयते' 'चतुर्दश पौर्णमास्यामाहुतयः'इत्यादिसमुच्चयज्ञापकान्युपपन्नानि भवन्ति। न चैवं संज्ञातो भेदापत्तिः, तस्याऽप्यभ्यासाभिप्रायेणैवोपपत्तेः। अतस्सिद्धं कर्मैकत्वमिति प्राप्ते—

## ( सिद्धान्तः )

अभिधीयते—सत्यपि लेट्लट्सन्देहे विध्यन्तरैकवाक्यत्वाभावात्,स्वतन्त्रानुवादमात्रत्वे त्वानर्थक्यापत्तेः, निस्सन्दिग्धगुणविधिव्यवहितत्वाच्च एतेषामेव मध्ये कस्य चिद्विधित्वमितरे

१. यद्युद्गाता अपच्छिन्द्यादादक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत' इत्यत्र दक्षिणां विना समापितस्यैव प्रथमप्रयोगस्य 'तेन पुनर्यजेते'त्यनेनाऽभ्यासविधिः तद्वदित्यर्थः।

तदर्थत्वाद्वा इति शङ्कानुपपत्तेः, सर्वेऽपि तावद्विधय इत्यविवादः। तत्र समानाभिधानश्रुत्या समानपदश्रुत्या च विधिर्धात्वर्थभावनयोरेव व्याप्रियते, न तूपपदार्थ (१)इत्ययमप्युत्सर्गः, प्रथमविधिप्रकाराङ्गीकारात् । तच्चेदं तदा बाध्येत यदि दध्यादिवदुपपदार्थोऽनन्यगतिः स्यात् । तथा हि—विधिः स्वस्य विशिष्टविधिगौरवपरिहारार्थं धात्वर्थभावनयोः प्राप्तिमन्यतोऽपेक्षते । तस्याश्चाऽपेक्षायां प्रत्यभिज्ञानमनुवादकारणम्, न त्वपेक्षाराहित्येऽपि । अतश्चाऽपेक्षाप्रत्यभिज्ञयोर्द्वयोरपि परस्परापेक्षत्वेनाऽनुवादकारणत्वात् यथैव 'सोमेने'त्यादौ सत्यामप्यपेक्षायां प्रत्यभिज्ञाभावान्न धात्वर्थभावनयोरनुवादः, तथैव प्रकृते विधेयान्तराभावेनाऽनुवादापेक्षाभावात् सत्यपि प्रत्यभिज्ञाने नाऽनुवादोपपत्तिः । अतश्च स्वोपमर्दापत्तेः विधिस्तावन्नैनादृशविषयं सन्निधिकृतप्रत्यभिज्ञोपजीवी । नाऽपि यजिः, तस्याऽपि समानपदोपात्तविधिश्रुत्यनुरोधप्राप्तित्वेन सन्निधिकृतप्रत्यभिज्ञानुपजीवकत्वात् । एवं सत्यपि यदि याजिस्तच्छन्दवत् प्रकृतमात्रवाची भवेत्ततस्तस्योपक्रमस्थत्वेन बलवत्त्वात् तदनुरोधेन जघन्यो विधिरेव 'देवांश्च याभिर्यजते' इतिवदनुवादकत्वेनैव नीयेत।

वस्तुतस्तु तद्वदिह प्रयोजनाभावादानर्थक्यप्रतिहतत्वेन उपक्रमस्थयजेरेवाऽप्रकृतपरत्वं लक्षणयाऽभ्युपगम्येतैव, किमुत यदा यजिः प्रकृताप्रकृतसाधारणः, तदा समानपदोपात्तविधिपुनःश्रुत्यनुरोधेन सन्निधिकृतप्रत्यभिज्ञां बाधित्वा अप्रकृतविषयत्वे यजेर्न किञ्चिद्बाधकं पश्यामः । यत्तु प्रकृतेऽपि समिदादिदेवतानियमस्य (२)सत्त्वात् विधिर्धात्वर्थभावनांशे प्राप्तिसापेक्ष इत्युक्तम्, तन्न; अन्यतराकाङ्क्षाबललभ्यसम्बन्धानुमन्त्रणमन्त्रक-

---

१. इत्युत्सर्ग इति क. पु. २. विधेयस्य सत्त्वादिति क. पु.

लभ्यवसन्तादिदेवतापेक्षया उभयाकाङ्क्षाबललब्धयथाऽथामन्त्रवर्ण-कल्प्यसमिदादिदेवतानां बलवत्त्वेन विषमशिष्टविकल्पानुपपत्तेः नियमविध्ययोगात् । अतः समिद्यागे, स्वाहाकारयागे वाऽवान्तराधिकाराख्यप्रकरणेन सर्वेषां यथाऽथामन्त्राणामङ्गत्वावगतेः तद्बलेन मान्त्रवर्णिकसमिदादिमात्रदेवताकल्पनं नऽनुपपन्नम् ।

न चैवं 'वसन्तमृतूना' मित्याद्यनुमन्त्रणमन्त्राणां पूषानुमन्त्रणमन्त्रवदुत्कर्षापत्तिः, तद्वदेतेषां प्रयाजानुमन्त्रणसमाख्यातत्वेन प्रयाजातिरिक्ते सामान्यसम्बन्धबोधकप्रमाणाभावादुत्कर्षानुपपत्तेः। अतो(१) मनोतामन्त्रवल्लक्षणयाऽत्र समिदादिदेवताप्रकाशनार्थान्येवैतानीति द्रष्टव्यम्, न तु तन्त्रत्वोक्तमदृष्टार्थत्वम् ।

न चैवं(२) 'एको मम' त्यादीनामनुमन्त्रणमन्त्रान्तराणां विकल्पापत्तिः, तेषामपि लक्षणया प्रयाजफलप्रकाशकत्वेन भिन्नकार्यतया समुच्चयोपपत्तेः । विशिष्य चाऽयमर्थः (३)नवमे निरूपयिष्यते । अतस्समिदादिपदानां तत्प्रख्यन्यायेन नामधेयत्वाद्विधेयान्तराभावेन विधेर्धात्वर्थभावनाविषयत्वावगतेः विहितविधानायोगेन विधिपुनःश्रवणरूपादभ्यासाद्भेदसिद्धिः । अत्र च न पुनःश्रुतिमात्रस्य भेदसाधकत्वम्, तस्या अभेदसाधकत्वेन विरुद्धत्वात् । अतो विधिप्रवेशः । तस्य च स्वोपमर्दापत्तेरभेदसाधकत्वाभावान्न विरुद्धता । पुनःश्रवणं चऽनन्यपरं द्रष्टव्यम्। अतश्च 'दध्ना जुहोती'त्यादौ सत्यपि विधिपुनःश्रवणे गुणनिमित्तफलादिसम्बन्धपरत्वान्न भेदकता वि-

---

१. 'त्वं ह्यग्ने प्रथमो मनोतेति' मन्त्रः मनोतापदघटितत्वान्मनोतामन्त्र इत्युच्यते ।

२. 'एको मम एका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इति पञ्च अनुमन्त्रणमन्त्राः प्रयाजप्रकरणे वाजसनेयिशाखायामाम्नाताः॥

३. पू. मी. ९.१.३.

धिपुनःश्रवणस्य। अनन्यपरत्वेऽपि च विधानयोग्यपरत्वं द्रष्टव्यम्। अतश्च 'य एवं विद्वानि'त्यादौ सत्यप्यनन्यपरत्वे रूपाभावेन विधानयोग्यत्वाभावान्न भेदकतेति(१)उत्तराधिकरणे वक्ष्यते। प्रकृते तु जौहवाज्यस्य समिदादिदेवतायाः प्राप्तत्वेन रूपलाभान्न विधानायोग्यत्वम्।

वस्तुतस्तु 'य एवं विद्वानि'त्यत्राऽपि अधिकारवाक्यगतद्वित्वसिद्धिफलकसमुदायपरत्वेनाऽनन्यपरत्वाभावादेव न भेदकता। रूपाभावस्त्वतिशयार्थमुक्तः, अन्यथाऽव्यक्तत्वेन सौमिकधर्मातिदेशस्य विद्वद्वाक्ययोः,'वैश्वदेवेन यजेते'त्यादौ च कथमपि निवारयितुमशक्यत्वात्। न चैवमत्राऽपि विधिपुनःश्रवणस्य 'एकादश प्रयाजान् यजती'तिवदावृत्तिविधानार्थत्वेनाऽन्यपरत्वात् भेदकता न स्यादिति वाच्यम्। तत्र हि प्रयाजानुवादेन विधीयमाना सङ्ख्या निर्ज्ञातसंख्येषु तेषु साक्षात्सम्बन्धेन निवेशमलभमाना प्रयाजप्रयोगपरिच्छेदकत्वेन विधेयत्वात्पुक्तं यदर्थादभ्यासमापादयतीति,प्रकृते तु विधेयान्तराभावेन यागपुनःप्रयोगस्यैव विधेयत्वकल्पनात्'तनूपातं यजती'त्यादियजिना अदृष्टान्तरफलकस्य यागप्रयोगगतद्वितीयत्वादेः पुनःप्रयोगाभ्यासावृत्त्यपरनामधेयस्य लक्षणापत्तेः तत्परत्वायोगात्।'तेन पुनर्यजेते'त्यत्र तु पुनश्शब्देनैव पौनःपुन्यस्य कृतत्वात् न लक्षणेति वैषम्यम्।

न चैवं सिद्धान्तेऽपि यजिधातुना यागत्वसामान्यवाचकेन विधेयतावच्छेदके विजातीययागत्वलक्षणा तुल्यैवेति वाच्यम्। तल्लक्षणायामपि तदवच्छेद्ययागव्यक्तेश्शक्यतावच्छेदकीभूतयागत्वेनाऽप्यवच्छेदेनेदृशलक्षणाया अदोषत्वात्। अतः आवृत्तिरूपान्यपरत्वायोगात् अनन्यपरपुनःश्रवणस्य भेदकत्वमावश्यकमेव।

---

१. पू. मी. २. २. ३.

यत्तु भवदेवेनोपांशुयाजानुवादेन साम्पदादिदेवताविधान-मिति पूर्वपक्षः कृतः, स वैकल्पिकसम्पदादिदेवताकत्वे 'अति-हायेडो बर्हिः प्रतिसमानयत' इत्यादिसमुच्चयज्ञापकानुपपत्तेरेतद्वि-ध्यन्यथानुपपत्तिकल्पितसमुच्चयविधिप्रसूतोपांशुयाजावृत्तिकल्पने च गौरवापत्तेः,'विष्णुरुपांशु यष्टव्योऽजामित्वाये' त्याद्यर्थवादा-नुपपत्तेश्च निराकर्तव्यः। तस्मिद्धमनन्यपरविधिपुनःश्रवणरूपाद-भ्यासादेतेषु पञ्चस्वपि धात्वर्थभावनयोर्द्वयोरपि विधानावगतेः विहितविधानायोगेन भेद इति।

नन्वेवं संज्ञापवन्धाख्यातेषु सर्वत्राऽभ्यासेनैव भेदसिद्धेर्न कचित्संज्ञाया भेदकत्वं भवेत्, तस्या वा भेदकत्वे प्रकृतेऽपि तत एव भेदसिद्धेर्नाऽभ्यासस्याऽसङ्कीर्णोदाहरणलाभ इति चेत्, न; यत्राऽऽख्यातसामानाधिकरण्याभावेन यागविशेषनामत्वानवगमेऽपि 'अथैष ज्योति'रित्यादौ अधिकारादथशब्दान्वयेनाऽनिर्धारित-क्रियाविशेषसंज्ञात्वनिश्चयं कृत्वा तद्बलेनैव विध्याख्यातकल्पनम्, तत्राऽभ्यासस्य संज्ञाधीनसिद्धिकत्वेन दुर्बलत्वात् संज्ञयैव तदव-धारणम्। यत्र वा 'उद्भिदा यजते'त्यादौ संज्ञाभावे प्रकृतस्यैव यागस्य फलसम्बन्धो गुणफलसम्बन्धो वा प्रकृतयागाश्रितो विधिपुनःश्रवणेऽपि विधीयत इत्यनन्यपरत्वाभावान्नाऽभ्यासस्य भेदकत्वम्, तत्राऽपि निष्प्रतिद्वन्द्वपेव संज्ञाया भेदकत्वम्। प्र-कृते त्वभ्यासस्वरूपस्य संज्ञानधीनत्वादनन्यपरत्वाभावेनाऽधि-कबलत्वाच्च युक्तं तस्य भेदकत्वम्।

न च संज्ञाया अपि प्रकृते प्रत्यक्षन्यायसिद्धत्वेनाऽभ्यासस्य यागविध्यधीनत्वाभावात्, प्रत्युत संज्ञात्वाभावे देवताविधिपरत्वे-नाऽभ्यासस्यैव तदधीनत्वात्, संज्ञयैव भेदसिद्धेर्नाभ्यासस्याऽस-ङ्कीर्णोदाहरणत्वमिति वाच्यम्। प्रकृतोदाहरणे प्रमाणद्वयसङ्करे-

ऽपि यत्रोभयत्र तुल्यवृत्तिकधातुपारार्थ्यादिना नामधेयतासिद्धिः, तत्र विधेर्धात्वर्थभावनाविषयत्वद्वारकभेदावगमोत्तरमेव संज्ञात्व-सिद्धेरभ्यासस्यैवाऽसङ्कीर्णस्य भेदबोधकत्वोपपत्तेः, प्रकृतोदाहरणेऽपि तत्प्रख्यन्यायस्य गुणविधिमात्रप्रतिबन्धकत्वात्, यजिसमभिव्याहारस्य च मन्त्रवर्णप्राप्तदेवतानुवादकत्वेनाऽव्युपपत्तेर्नामधेयकृत्यस्य चाऽवच्छेदस्य स्ववाक्योपात्तनामधेयेनैव सिद्धेर्नामत्वानवगमात् ततः पूर्वमेव विधिपुनःश्रवणस्य भेदकत्वोपपत्तेश्च । न चैवं तदुत्तरमपि नामत्वानवगमप्रसङ्गः, अभ्यासभिन्नकर्मान्तरस्यैवाऽवच्छेदकापेक्षायां तदङ्गीकारात् । अतश्च सिद्धोऽभ्यासमात्रप्रमाणकोऽत्र धात्वर्थभेद इति ।

भेदश्चाऽत्र न व्यक्तिमात्रस्य, अपि तु तद्गतजातेरपि, विधेयभेदे विधेयतावच्छेदकभेदस्यौत्सर्गिकत्वात् । अतश्च यागत्वाद्यिव्याप्या जातयः समिद्यागत्वतनूनपाद्यागत्वादिरूपास्तत्तद्वाक्यगतेन यजिना लक्षयित्वा तत्तदवच्छिन्नयागव्यक्तयो विधीयन्ते । न चाऽत्र विधेयतावच्छेदकमुपाधिरूपं किञ्चित्सम्भवति, तनूनपातादिदेवतानां यागविधेयतावगत्युत्तरकालं विधेयत्वेन विधेयत्वानवच्छेदकत्वात् ।

यत्तु वार्तिके गकारादिवदेकैव समिद्यागव्यक्तिर्नित्या तद्देशकालद्रव्यकर्त्रादिभेदेनाऽभिव्यज्यते, द्रुताद्युच्चारणभेदेनेव गकारव्यक्तिः । अतस्तद्भेदोपाधिकैव तस्या भेदप्रतीतिर्न तु स्वतः । सैव च विधिना विधीयते, विधेयतावच्छेदकाभावेऽपि च व्यक्तिमात्रं विधिना विधीयत इति पक्षान्तरमुक्तम्, तत् शब्दादपि निर्विकल्पकप्रमयोत्पत्तिमङ्गीकृत्येति द्रष्टव्यम् । यदा तु शब्दात्सविकल्पकमेवेति नियमः, तदा व्यवहारसौकर्यार्थं समिद्यागत्वादिजातिकल्पनेऽपि न किञ्चिद्बाधकम् । अत एव यत्रोपाधि-

रूपमेव पदप्रवृत्तिनिमित्तं सम्भवति, यथा—दर्शपूर्णमासेष्टिसत्रैक-हायनीशब्देषु तत्तत्कालत्वादि, तत्र न जातिकल्पनम्, गौरवात्। प्रकृते तु तादृशोपाध्यभावाज्जातिकल्पनेऽपि न किञ्चिद्बाधकं पश्यामः। अस्तु वा समिद्यागत्वाद्यखण्डोपाधिः। तस्मात्सिद्धोऽभ्यासाद्भेदः।

प्रयोजनम्—देवतावद्विधिपूर्वपक्षे तासां दृष्टार्थत्वेन विकल्पात्सकृदेव कर्मानुष्ठानम्। आवृत्तिविधिपूर्वपक्षे तु यत्र विकृतिविशेषेऽपूर्वार्थं समिद्यागपुनःश्रवणम्, तत्राऽपि तनूनपातादिसंज्ञिकाया आवृत्तेस्समिद्यागाङ्गत्वेन 'प्रधानं नीयमानं हि तत्राऽङ्गान्यपकर्षती'ति न्यायेन प्राप्तेः पञ्चकृत्वोऽनुष्ठानम्। तथा समिद्यागाश्रितस्य फलार्थस्य गुणस्य सायं प्रातरग्निहोत्रावृत्तौ दध्यावृत्तिवत्पञ्चवारमावृत्तिः। सिद्धान्ते तु प्रकृतौ प्रयाजानामदृष्टार्थत्वात्पञ्चानामप्यनुष्ठानम्। न च तत्राऽप्येकया प्रयाजसमाख्यया एककार्यत्वावगतेर्विकल्प एव युक्त इति वाच्यम्। 'त्रिरतः प्राचीनान्प्रयाजान्यजति' 'अतिहायेडो बर्हिः प्रतिसमानयत' इत्यादिसमुच्चयज्ञापकबलेन तत्सिद्धेर्विकल्पायोगात्। विकृतिविशेषे च पुनःश्रुतस्य समिद्यागमात्रस्यैवाऽनुष्ठानम्, काम्यश्च गुणस्तत्रैवाऽनुष्ठेय इति।

सूत्रं तु—एकस्य या अविशेषेण पुनःश्रुतिः साऽप्येवं कर्मभेदिका, अन्यथा आनर्थक्यापत्तेरिति व्याख्येयम् ॥ २ ॥

इति द्वितीयमभ्यासाधिकरणम् ॥ २ ॥

अथ तृतीयं पौर्णमास्यधिकरणम् ।

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ २-२-३ ॥

( विषयसंशयौ )

इदानीमभ्यासस्याऽपवादः क्रियते । दर्शपूर्णमासयोः(१) 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजत' इति वाक्यद्वयं श्रुतम् । तत्र किं कर्मान्तरं पौर्णमासीसंज्ञकममावास्यासंज्ञकं च विधीयते? उत ये श्रुतपौर्णमासीकालसम्बन्धा आग्नेयोपांशुयाजाग्नीषोमीयाः प्रकृता यागास्ते पौर्णमासीवाक्येन, ये च श्रुतामावास्याकालसम्बन्धा आग्नेयसान्नाय्यैन्द्राग्नास्त अमावास्यावाक्येन समुदायसिध्यर्थमनूद्यन्त ? इति विचारः ।

( पूर्वपक्षः )

तत्र यजत इत्ययं तावद्विधिरित्यसन्दिग्धम् । सत्यपि च वर्तमानविभक्तित्वसन्देहे विध्यन्तरैकवाक्यत्वाभावेन स्तुत्यर्थमनुवादानुपपत्तेः, स्वतन्त्रानुवादस्य च वक्ष्यमाणरीत्या सार्थकत्वासम्भवेनाऽऽनर्थक्यापत्तेः परिशेषादेव पञ्चमलकारत्वनिश्चयात् । अत एव(२) 'यावदुक्थ्येनोपाप्नोति तावदुपाप्नोती'ति पौर्णमासीवाक्यस्य 'यावदतिरात्रेणोपाप्नोती' त्यमावास्यावाक्यस्याऽर्थवादोऽपि सङ्गच्छते । अन्यथा हि विधेयाभावात्कस्य स्तुतिरेताभ्यां क्रियेत ।

(३)न चैवं सति यच्छब्दैवंशब्दाभ्यां विधित्वप्रतिबन्धः, क्रियाविशेषितकर्तृसमानाधिकरणस्य यच्छब्दस्य, क्रियाविशेष-

---

१. २. तै. सं. १. ६. ९.     ३ न चैवमपीति. क. पु.

परामर्शकस्यैवंशब्दस्य च समभिव्याहृतवेदनक्रियाविधिप्रतिब-न्धकत्वेऽपि यागक्रियाविधि(१)प्रतिबन्धकत्वाभावस्य भवदेवैवोक्तत्वात् । अत एव(२) 'यो दीक्षितो यदग्नीषोमीयं पशुमालभत' इत्यत्र दीक्षाविधिः प्रतिबध्यते, न तु यागविधिः । अतश्च पूर्ववदेव विधिपुनःश्रवणात् कर्मान्तरत्वम् । न चाऽत्रान्यपरत्वम्, स्ववाक्ये फलनिमित्तगुणादिप्रतिपादकशब्दाभावेन तत्परत्वासम्भवात्, पौर्णमास्यमावास्याशब्दयोस्तत्र मम च नामधेयत्वात् ।

न च प्रापकप्रमाणात्पूर्वमेवैतद्वाक्यप्रवृत्त्यङ्गीकारेण तस्यैव कर्मणः प्रयोजनान्तरार्थं विधिरङ्गीक्रियत इति वाच्यम् । प्रापकप्रमाणस्याऽऽग्नेयादिवाक्यरूपस्य श्रौतत्वेन ततः पूर्वं(३)एतत्प्रवृत्त्यङ्गीकारानुपपत्तेः, पुनर्विधानस्य च प्रयोजनाभावाच्च । तथा हि—न तावदेकेन पदेनाऽनेकेषामुपादाने साहित्यप्रतीतिसमुदायासिद्धिः प्रयोजनम्, तस्यास्स्वतो निष्प्रयोजनत्वात् । न चैतद्वाक्याभावे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' त्यधिकारवाक्ये दर्शपूर्णमासनामावच्छिन्नेन यजिनोपात्तानामेव यागानां फलसम्बन्धावगमेऽपि तेन द्विवचनान्तदर्शपूर्णमासपदावयवशक्तिपर्यालोचनया कालयोगिनां, द्वित्वयोगिनां चोपादानावगतेरुत्पत्तिवाक्ये कालयोगिनां चाऽऽग्नेयादीनां द्वित्वयोगाभावात्, द्वित्वयोगिनां चाज्यभागादीनां कालयोगाभावादप्रसिद्धार्थकदर्शपूर्णमासनामकत्वागतेः, तत्समभिव्याहृतेनाऽपि यजिना राजसूयवत्प्रकृतयागमात्रग्रहणेन सर्वेषां फलसम्बन्धापत्तेः, एतद्वाक्यद्वयसत्त्वे च कालयोगिनामाग्नेयादीनां समुदायद्वयकरणेन

१. प्रतिबन्धकत्वाभावस्येति. क. पु. २. तै. सं. ६. १ .११
३. एतद्वाक्यप्रवृत्तीति. क. पु.

तद्द्वारकाद्वित्वसम्बन्धावगतेर्ज्योतिष्टोमवत्प्रसिद्धार्थकदर्शपूर्णमासनामावच्छिन्नेन यजिना तन्मात्रोपादानेन तेषामेव फलसम्बन्धावगतेरध्यागफलसम्बन्धापादकनामगतद्विवचनप्रसिद्ध्युपयोगिसमुदायद्वयफलकत्वेन वचनद्वयसार्थक्योपपत्तिरिति वाच्यम् । एतद्वाक्यद्वयेन पौर्णमास्यमावास्यासंज्ञकयागसमुदायद्वयकरणेऽप्यधिकारवाक्यस्थदर्शपूर्णमासशब्दस्य ततो भिन्नत्वेन तदुपस्थापकत्वानुपपत्तेरप्रसिद्धार्थकत्वस्य तदवस्थत्वात् । न हि पौर्णमासीपदं पूर्णमासपदं च तुल्यम्, दर्शामावास्यापदयोस्त्वैक्यमनाशङ्कनीयमेव । (१) यदा तु पूर्णमासशब्दस्याऽत्यन्तसाम्याभावेऽपि नामैकदेशत्वेन वाऽऽख्याविकारत्वेन वा पौर्णमासीपदोपस्थापनद्वारा तदर्थोपस्थापकत्वोपपत्तेः, दर्शशब्दस्य च विरुद्धलक्षणया चन्द्रादर्शनाधिकरणकामावास्यातिथिसम्बन्धिकर्मोपस्थापकत्वोपपत्तेः, अन्वारम्भणीयावाक्यशेषे च(२) "दर्शो वा एतयोः पूर्वः, पूर्णमास उत्तरोऽथ यत्पूर्णमासं पूर्वमारभते तदयथापूर्वं क्रियते, तस्मात्पूर्णमासं पूर्वमारभमाणस्सरस्वत्यै चरुं निर्वपेत्सरस्वते द्वादशकपालममावस्या वै सरस्वती पूर्णमासस्सरस्वानि" ति दर्शामावास्याशब्दयोः पर्यायत्वावगमात् प्रसिद्धार्थकत्वमाशङ्क्येत, तत(३) एतद्वाक्यद्वयफलभूतसमुदायानुवादद्वयाभावेऽपि अधिकारवाक्ये दर्शशब्देन पूर्णमासशब्देन च श्रुतकालयोगिनां त्रयाणामेव कर्मणामुपादानेन, तत्समानाधिकरणेन यजिना षण्णामेव फलसम्बन्धोपपत्तेर्वाक्यवैयर्थ्यात् ।

न च दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धार्थकत्वेऽपि द्विवचनस्याऽप्रसिद्धेः कथं तस्य यज्यवच्छेदकत्वमिति

---

१. अथ तु इति. क. पु.   २. मै. सं. १. ४. १५.

३. एतद्वाक्यफलीभूतसमुदायद्वयाभावेऽपीति. क. पु.

वाच्यम् ? प्रातिपदिकप्रसिद्धिसत्त्वे (१)पाशाधिकरणन्यायेन द्विवचनानुरोधेन तत्त्यागानुपपत्तेः । (२)अवश्यं च समुदायद्वयसिद्धावपि फलवाक्ये भावार्थाधिकरणन्यायेन यजतेरेव करणसमर्पकत्वात्, तेन च षण्णामेकपदोपादानात् तन्त्राभिधानावगतैकसमुदायप्रतीतावपि यजिपदेन समुदायस्य शक्त्याऽनभिधानात्, तच्छक्यानां यागानामेव लक्षितसमुदायविशिष्टानां फलकरणत्वावगतेः,तेषां बहुत्वात् तत्सामानाधिकरण्यार्थं दर्शपूर्णमासपदेऽपि द्विवचनेन बहुत्वलक्षणा । अतश्च समुदायद्वयाभावेऽपि पाशाधिकरणन्यायेन बहुत्व(३)लक्षणायामपि न दोषः । न चेयं निषिद्धा, 'सुपां सुपो भवन्ती' त्यभ्यनुज्ञानात् ।

न च लक्षणाविशेषेऽपि मन्मते द्वित्वस्य समुदायद्वयवृत्तित्वात् स्वाश्रयसमुदायघटकसमुदायिवृत्तित्वरूपस्य शक्यसम्बन्धस्य सत्त्वात्तदुपपत्तिः, तव तु तदभावे कथं लक्षणेति वाच्यम् ? ममाऽपि द्वित्वस्य पौर्णमास्यमावास्याकालवृत्तित्वात् स्वाश्रयकालीनयागवृत्तित्वरूपस्वशक्यसम्बन्धेन बहुत्वलक्षणोपपत्तेः । अतश्च विद्वद्वाक्याभावेऽपि षड्यागफलसम्बन्धापादकनामगतद्विवचनप्रसिद्ध्युपपत्तेः समुदायकरणस्य वैयर्थ्याच्च तत्प्रयोजनतया समुदायिविधानोपपत्तिः । एतेन समुदायिनामनुवादः समुदायद्वयप्रयोजनक इति सिद्धान्त्यभिप्रेतं प्रत्युक्तम् । अतश्चाऽनन्यपरविधिपुनःश्रवणरूपादभ्यासात् कर्मान्तरं विधीयते । पौर्णमास्यमावास्याशब्दश्च 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमा-

---

१. पू. मी. ९. ३. ५.

२. अतश्च तदनुरोधेन द्विवचन एव बहुत्वलक्षणाऽवगन्तव्येत्यधिकः पाठः 'क' पुस्तक उपलभ्यते ।

३. लक्षणा न दोषायेति क. पु.

वास्यायाममावास्यया यजेते'ति वाक्यद्वयमाम्रपौर्णमास्यमावा-स्याकालयोगेन तत्प्रख्यन्यायेन नामधेयम् । इदं हि वाक्यद्वयं तृतीयान्तनामधेयवशात् विद्वद्वाक्यविहितकर्मानुवादेन कालवि-धायकम् , अनन्यप्रयोजनत्वाच्च । न ह्याग्नेयादीनामुत्पत्तिवाक्य-विहितकालकत्वेन प्रयाजाद्यङ्गानां च प्रधानकालकत्वेन तत्र प्राप्ते एतस्य कालविधायकता सम्भवति ।

न चैवमपि कालविधौ सति नामधेयत्वम् , नामधेयत्वे च सति तदनुवादेन कालविधिरितीतरेतराश्रयापत्तिः, अग्निहोत्र-न्यायेन पूर्वं सामानाधिकरण्येन(१) नामधेयत्वेऽवधारिते, पश्चा-त्तदनुवादविहितकालयोगेन प्रवृत्तिनिमित्तावधारणोपपत्तेः । अतस्तत्संज्ञककर्मान्तरविधानमेवेदम् । अत एव 'पौर्णमासी'ति-त्येकवचनं कर्मण एकत्वात्सङ्गच्छते । इतरथा समुदायिनां या-गानां वहुत्वात् वहुत्वलक्षणार्थं स्यात् । द्वितीया तु 'अग्निहोत्रं जुहोती'तिवत् सामानाधिकरण्यार्थं करणत्वं लक्षयतीति न कि-ञ्चिदनुपपन्नम् ।

न चैवमपि द्रव्यदेवतालक्षणरूपाभावाद्विधानायोग्यत्वम् , रूपाभावस्याऽसिद्धेः। तथा हि—द्रव्यं तावत् 'चतुर्ध्रुवायां गृह्णा-ती'ति प्रयोजनसाकाङ्क्षं ध्रौवं द्रव्याकाङ्क्षाभ्यामेव ताभ्यामुपांशुया-जवत् उभयाकाङ्क्षारूपाधिकाराख्यप्रकरणेन सम्बध्यते ।(२) 'स-र्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्य'मिति वचनेनाऽग्ना-ग्निवलब्धविधिशक्तित्वेन सर्वयज्ञार्थत्वेन तादर्थ्यचतुर्थ्या ध्रौ-वविधानाच्च । न चात्राऽऽज्यानुवादेन ध्रौवतामात्रस्य लाघ-वेन विधिप्रतीतेः न दृष्टान्ते दार्ष्टान्तिके वा सामान्यतोऽप्राप्ता-ज्यके तद्विधिसम्भव इति वाच्यम् । यज्ञाङ्गभूताज्यानुवादेन त-

---

१. नामत्व इति. क. पु. २. तै. ब्रा. ३. ३. ५.

द्विधौ विशिष्टोद्देशे वाक्यभेदापत्तेः, आज्यमात्रानुवादेन तद्विधौ चाऽलङ्करणादावपि तदापत्तेः यज्ञपदवैयर्थ्यप्रसङ्गात्, तदुद्देशेनाऽत्र ध्रौवाज्यस्यैव विधिप्रतीतेः बाधकाभावात्।

न चैवमुभयाकाङ्क्षाबलेनैव तत्प्राप्त्युपपत्तेः विधिवैयर्थ्यम्, तद्बलेनाऽलङ्करणादिष्वयज्ञेष्वपि तत्प्राप्तिसम्भवेन तस्य तद्व्यावृत्तिफलकत्वात्। अत एवाऽलङ्करणादौ जौहवादिग्रहणेन निराकाङ्क्षस्याऽप्याज्यस्थाल्याज्यस्यैव विनियोगः, न तु ध्रौवस्य। तस्माद्द्रव्यं तावन्निर्बाधम्।

देवताऽप्याज्यभागक्रमाम्नातानामपि वार्त्रघ्नीवृधन्वतीमन्त्राणां(१)'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वत्यमावास्याया'मिति वचनेन क्रमं बाधित्वा विद्वद्वाक्यविहितकर्माङ्गत्वेन विनियुक्तत्वात्, तदन्यथानुपपत्तिकल्प्या अग्नीषोमरूपाऽत्र मान्त्रवर्णिकी। न चाऽबाधेनोपपत्तौ बाधायोगादाज्यभागयोरेवाऽव्यवस्थया प्राप्तानां मन्त्राणां व्यवस्थामात्रकरणेन वचनोपपत्तेः मान्त्रवर्णिकदेवताकल्पने प्रमाणाभाव इति वाच्यम्। आज्यभागयोः पौर्णमास्यमावास्याकालकर्तव्यत्वस्य विध्यभावेनाऽप्राप्तत्वात् तिथ्यन्तरक्रियमाणविकृतिषु वार्त्रघ्न्यादिप्राप्त्यभावापत्तेश्च। पौर्णमास्यां यावाज्यभागौ तत्र वार्त्रघ्नी इति कालकृतव्यवस्थानुपपत्तेरेतद्वाक्यस्थपौर्णमास्यमावास्यापदाभ्यां प्रसिद्धनामधेयत्वेन विद्वद्वाक्यस्थकर्मणोरेव लक्षणयोपस्थापनावगमादाज्यभागयोश्चैतत्पूर्वपक्षे समप्राधान्यस्य वक्ष्यमाणत्वेन विद्वद्वाक्यविहितकर्माङ्गत्वात् पौर्णमास्यमावास्यापदाभ्यां तत्तद्वाक्यविहितकर्माङ्गभूताज्यभागलक्षणायां गौरवापत्तेश्च। एतद्वाक्यविहितपौर्णमास्याख्यकर्माङ्गभूताज्यभागयोर्वार्त्रघ्नी इति कर्मकृतव्यवस्थाया

१. तै. सं. २. ५. २.

अन्यानुपपत्तेर्लाघवेन एतद्वाक्यविहितकर्माङ्गत्वेनैव मन्त्रविध्यव-
गमात् मान्त्रवर्णिकदेवताविधानोपपत्तेः । एवं सत्यप्येतयोर्य-
ग्नीषोमीयादिवदन्यदेवताकत्वमवगतं स्यात्, ततो वाक्येन वि-
द्धाधायोगादगत्या विशिष्टलक्षणामङ्गीकृत्य गौरवमपि(१)'विधया-
ऽनर्थसम्बन्ध'इति तृतीयस्थाधिकरणन्यायेनाऽऽश्रियेत, न तु तद-
स्ति । अत एवोपक्रमस्थपौर्णमास्यमावास्याप्रातिपदिकगतविशिष्ट-
लक्षणागौरवभिया उपसंहारस्था सप्तम्येव 'तत्र जयाञ्जुहुया'
दितिवल्लक्षणया प्राधान्यं प्रतिपादयन्ती न दुष्यति । अतो-
ऽग्नीषोमप्रकाशकयोर्वार्त्रघ्नयोर्ऋचोः पौर्णमासीकर्माङ्गत्वाद्वार्त्र-
घ्योरेव च वृधन्वत्योरमावास्याकर्माङ्गत्वादेकैकस्मिन् कर्मणि
मन्त्रद्वयस्य दृष्टार्थत्वेन विकल्पावगतेः देवताद्वयस्याऽपि विकल्पः।
एतयोश्चाऽनुवाक्यासमाख्यातत्वेऽपि न देवतालक्षणा, 'याज्या-
नुवाक्या' इति स्मरणात् तत्तद्दैवत्ययाज्यान्तरकल्पनं द्रष्टव्यम् ।

वस्तुतस्तु वार्त्रघ्नीसाद्येकपदोपादानसामर्थ्यात् द्वयोरपि म-
न्त्रयोः साहित्यप्रतीतेः न विकल्पः। अतश्च मान्त्रवर्णिकदेवताद्वय-
स्याऽपि समुच्चयादेकैकस्य कर्मणोऽग्निहोत्रादिवदाप्तिः, समुचित-
याज्याद्वयकल्पनञ्च । अस्तु वा मन्त्रद्वयेनाऽपि लाघवाभ्यासलब्ध-
वृत्त्येकदेवतात्वकल्पनम्, उभयप्रकाशकैकयाज्याकल्पनं च । स-
र्वथाऽस्ति विद्वद्वाक्यविहिते कर्मणि देवता ।

यत्तु वार्तिके अनयोरेवैका अनुवाक्या, एका याज्या, उभ-
यत्राऽपि मनोतान्यायेनोभयत्र लक्षकत्वमङ्गीकृत्य कल्पनीयेत्यु-
क्तम्, तत् अनुवाक्यासमाख्याबाधापत्तेर्लक्षणायां प्रमाणाभावा-
च्चोपेक्षितम् । आज्यभागयोस्तु 'तौ होचतुरग्नीषोमौ किमावयोर्व-
स्तु तत्स्या' दिति प्रकृतयोरग्नीषोमयोः 'यस्यैकस्यै देवतायै ह-

---

१. जै. सू. ३. १. २२.

त्रिर्निर्वपन्नाज्यस्यैव नौ यज' मित्यत्र पुराकल्पसरूपार्थवाद-कल्प्ये विधौ 'नौ' इत्यनेन द्वितीयान्तेन देवतात्वस्य 'विष्णुं यजती' तिवदुक्तत्वात्, 'अग्नीषोमाभ्यामाज्यभागौ यजती'ति-वचनेनैव वा तद्विधानात् तदनुरूपानुवाक्याकल्पनम्। याज्या तु क्रमप्राप्ता अभ्याहृतैव। अतश्च विद्वद्वाक्यविहिते कर्मणि क-र्मरूपसत्त्वान्न विधानायोग्यत्वम्।

अथ वाऽस्तु(१) एतद्वाक्यविहितकर्मानुवादेन समिदादि-वाक्ये देवताविधिः, समुच्चयज्ञापकसत्त्वाच्च(२) समुच्चयः। न चोपांशुयाजे समिदादिदेवताविधौ 'विष्णुरुपांशु यष्टव्य' इत्या-द्यर्थवादानुपपत्तिवदिह काचिदनुपपत्तिरस्ति। अस्तु वा (३)अ-व्यक्तत्वसादृश्यात् सौमिकधर्मातिदेशः। न च वाचनिकपौर्ण-मास्यमावास्या(४)कालसम्बन्धबाधप्रसङ्गात् पार्थसारथ्युक्तानति-देशः, वाचनिककालानुरोधेन सुत्यान्यकालीनाङ्गबाधेऽपि त-त्कालीनाङ्गानामतिदेशोपपत्तेः। प्रयाजानां तु मान्त्रवर्णिकदेवता-कत्वेन व्यक्तत्वात् कृत्स्नविधानाच्च(५) न सौमिकधर्मातिदेश प्रसक्तिरिति न तत्प्रतिबन्धापादनं(६) शक्यम्। तस्माद्रूपोपपत्तेः (७)कर्मान्तरविधी एताविति सिद्धम्।

एवञ्च फलवाक्येन षण्णामेव फलसम्बन्धस्सिध्यति। तथा हि—सर्वत्र प्रसिद्धपदसमभिव्याहारेणाऽप्रसिद्धपदार्थनिर्णयः। तद्यत्र नामधेयं प्रसिद्धम्, यथा चतुर्थान्त्यन्यायेन ज्योतिष्टोमप-दं सोमयागे, तत्र प्रकृतमात्रग्राहियजिनिर्णयः। यत्र वा यजि-

१. एतत्कर्मानुवादेनेति क. पु. २. तासां समुच्चय इति क. पु.
३. अव्यक्तत्वादिति क. पु. ४. कालबाधप्रसङ्गादिति क. पु.
५. सौमिकधर्मातिदेशप्रसङ्गानुपपत्तेरिति क. पु.
६. अनाशङ्क्यमेवेति क. पु. ७. कर्मान्तरविधिरेवेति क. पु.

पदं यागमात्रे प्रसिद्धम्, नामधेयं तु राजसूयादिरूपं प्रकृतया-गायागमात्रपरं सम्भाव्यते, तत्र यजिनैव चतुर्थपादाद्यन्यायेन नामधेयनिर्णयः। न च राजा सोमस्सूयते अभिषूयतेऽस्मिन्निति व्युत्पत्त्या राजसूयपदस्याऽपि सोमयागमात्रे ज्योतिष्टोमपदवत्प्र-सिद्धार्थकत्वात् तेनैव यजिनिर्णयोपपत्तेः कथं यजिना नामधेय-निर्णयः? राज्ञा क्षत्रियेण सूयते निष्पाद्यते असाविति व्युत्पत्त्या, राजा क्षत्रियः सुनोति स्नाति अभिषेकेणाऽऽर्द्रीक्रियतेऽस्मिन्निति व्युत्पत्त्या वा सर्वेष्वपीष्टिपशुसोमयागेषु राजसूयपदप्रवृत्तिसम्भ-वेन तस्य प्रसिद्धार्थकत्वाभावात् यजिना तन्निर्णयोपपत्तेः। त-दिह दर्शपूर्णमासाभ्यामिति द्विवचनान्तं नामधेयमपि न प्रसिद्धा-र्थम्। द्वित्वस्याऽऽज्यभागादौ प्रसिद्धत्वेऽपि प्रातिपदिकस्य का-ऽप्यप्रसिद्धत्वात्।

न च तस्याऽपि पौर्णमास्यमावास्याकालरूपस्वशक्यसम्ब-न्धेनाऽस्त्याग्नेयादौ प्रसिद्धिः, दर्शपूर्णमासपदस्य पौर्णमास्य मावास्यापदाऽऽभिन्नत्वेन तदर्थ(१)वाचकत्वे प्रमाणाभावात्। अत एव पौर्णमास्यमावास्यानामकयोरपि त्रिद्वद्वाक्यद्वयविहितकर्मणो-र्दर्शपूर्णमासपदेना ग्रहणम्। न चैवमपि द्वित्वमात्रस्यैव प्रसिद्धेः तदनुरोधेन यजिना आज्यभागयोरेवोपादानोपपत्तेस्तयोरेव.फ-लसम्बन्धापत्तिः, आग्नेयवाक्ये यागद्वयविधानस्याऽनुपदमेव व-क्ष्यमाणत्वात् तावादाय विनिगमनाविरहात्। अतो द्विवचनप्र-तिरूपकमव्ययमिदं यजिसामानाधिकरण्यात् प्रकृतयागवाचक-त्वेन निर्णीयते इति राजसूयन्यायेन सर्वेषां फलसम्बन्धान्न प-ञ्चयागमात्रवृत्ति फलम्।

अस्तु वा पूर्वोक्तनामैकदेशत्वादियुक्तिनिचयबलेन दर्शपूर्णमास-

१. वाचित्व इति क. पु.

शब्दस्य शक्त्या पौर्णमास्यमावास्याकालवाचित्वं निरूढलक्षणया च तद्योगिकर्मपरत्वम् , तथाऽपि आग्नेयादीनां षण्णां विद्वद्वाक्यविहितयोश्च कर्मणोः कालयोगस्याऽविशेषाद्दर्शपूर्णमासपदेन ग्रहणोपपत्तेः, द्विवचनस्य च(१) पाशाधिकरणन्यायेन बहुत्वलक्षणार्थत्वेऽपि बाधकाभावादष्टानामेव फलसम्बन्धोपपत्तेः न षण्णामेव सः। अथ वा विद्वद्वाक्यविहितकर्मणोः पौर्णमास्यमावास्यासंज्ञकत्वप्रसिध्या तत्पर्यायदर्शपूर्णमाससंज्ञकत्वस्याऽपि प्रसिद्धेः, सिद्धान्तवत्पूर्वपक्षेऽपि प्रचयशिष्टद्वित्वप्रसिध्युपपत्तेः, तयोरेव फलसम्बन्धान्न षण्णामेव सः। अपि चाऽऽग्नेयद्वये पौर्णमास्यमावास्याकालत्वेन प्रातिपदिकप्रसिद्धेरेकवाक्योपादानावगतद्वित्वप्रसिध्या च द्विवचनप्रसिध्युपपत्तेस्तस्यैव फलसम्बन्धान्न षण्णामेव सः। तस्माद्यस्य कस्यचित्फलसम्बन्धेऽपि विद्वद्वाक्ययोः कर्मान्तरविधित्वमभ्याहतमिति प्राप्ते-

( सिद्धान्तः )

अभिधीयते— नाऽत्राऽभ्यासस्वरूपमस्ति, 'यजत' इत्यस्य वर्तमानापदेशत्वेन विधित्वाभावात् । न चाऽप्राप्तार्थकत्वेन लेट्त्वनिश्चयः, आग्नेयादियागानां प्राप्तानामेवाऽनुवादसम्भवेन तदसिद्धेः। प्रत्युत यच्छब्दैवंशब्दसमभिव्याहारेणाऽनुवादत्वोपोद्बलनाच्च ।न च तयोर्वेदनमात्रविधिप्रतिबन्धकत्वेऽपि न यागविधिप्रतिबन्धकत्वम् ,तस्य तच्छब्दसमभिव्याहाराधिकसमभिव्याहृतमात्रवृत्तिविधिप्रतिबन्धकत्वस्य(२) 'देवांश्च याभिर्यजत' इत्यत्र साधितत्वात् । एवं सत्यपि यच्छब्दस्य प्राप्तिद्योतनमात्रकारित्वात् यदि प्रमाणान्तरेण विशेषणस्य विशेष्यस्य विशिष्टस्य वा प्राप्तिर्न भवेत्, ततोऽगत्या विधिरप्यङ्गीक्रियेत । अत एव

१. पू. मी. ९. ३. ४. २. पू. मी. २. ८ ११.

'यो दीक्षितो यदग्नीषोमीय'मित्यत्र यच्छब्दो दीक्षामात्ररूपविशेषणप्राप्तिद्योतक एव, यागस्त्वप्राप्तत्वाद्विधेय एवेति विशेषः । अतश्च यच्छब्दोपबन्धादपि न भेदत्वनिश्चयः ।

न चाऽऽनर्थक्यप्रसङ्गात्तन्निश्चयः, तदसिद्धेः । तथा हि—यजत इत्यनेन तावदेकैकेन प्रकृतत्वाविशेषेऽपि तत्तन्नामधेयसामानाधिकरण्यात् श्रुततत्कालयोगिन एव त्रयो यागा अनूद्यन्ते । तेषां च पौर्णमास्यमावास्यापदं तत्प्रख्यन्यायेन नामधेयम् । ततश्च त्रयाणापेक्षशब्दोपादानादेकप्रतीतिविषयत्वाच्च समुदायप्रतीतिः । अत एव 'पौर्णमासी' मित्याद्येकवचनं स्वाश्रयघटकत्वचित्वसम्बन्धेन बहुत्वलक्षणार्थम् । द्वितीया तु यागानां(१)अर्थाक्षिप्तकर्मानुवादिनी मन्यते यथाश्रुतैव । अत्र समुदायस्य चाऽनुवदितारौ समुदायवचनावेताविति यथाश्रुतभाष्याद्यनुसारान्न पौर्णमास्यमावास्यादिशब्दा आग्नेयादिसमुदायवचना इति न भ्रमितव्यम्, तयोः कालयोगाभावेन तत्प्रख्यन्यायाविषयत्वात् मानान्तराप्रमितत्वेनाऽनुवादायोगाच्च, यजिना तदनुवादे लक्षणापत्तेश्च । अतश्च समुदायिनामेव समुदायसिद्ध्यर्थमनुवाद इति द्रष्टव्यम् ।

तत्प्रयोजनं च फलवाक्ये निमित्तवाक्ये चाऽनूद्यमानानामेव फलादिसम्बन्धसिद्धिः । तथा हि—दर्शपूर्णमासशब्दस्य पौर्णमास्यमावास्याशब्दपर्यायत्वस्य स्थापितत्वात् तत्संज्ञकानामाग्नेयादीनां षण्णामेव फलादिसम्बन्धित्वेन यजिनोपादानं सिद्धं भवति । तत्रत्यद्विवचनस्य च बहुत्वलक्षणायां स्वाश्रयघटकत्वचित्वरूपशक्यसम्बन्धोऽपि प्रमापिता भवति ।

न चैतद्वाक्याभावेऽपि दर्शपूर्णमासप्रातिपदिकस्य श्रुतका-

---

१. अर्थाक्षिप्तकर्मत्वेनैवाऽनुवादादिति क. पु.

लयोगित्वाग्नेयादिष्वेव प्रवृत्त्युपपत्तेः, द्विवचनस्य च स्वाश्रयकालीनयागवृत्तित्वसम्बन्धेन बहुत्वलक्षणोपपत्तेः षण्णामेव फलादिसम्बन्धः (१)सिध्यतीति वाच्यम् । एतद्वाक्याभावे साक्षात्सम्बन्धेन कालद्वित्वोभययोगिनोराग्नेययोरेव तत्सम्बन्धापत्तौ बहुत्वलक्षणायां प्रमाणाभावेन षण्णां फलादिसम्बन्धासिद्धेः । अतस्तत्सिद्ध्यर्थोऽयं समुदायानुवादः । सति चास्मिन्ननुवाद आनर्थक्यभिया तत्प्रयोजनजिज्ञासायां फलवाक्यस्थद्विवचनस्य उक्तसम्बन्धेन बहुत्वलक्षणातात्पर्यग्राहकत्वावसायात् षण्णां फलसम्बन्धसिद्धिः सुलभैव ।

ननु नाऽऽग्नेयभेदे प्रमाणमस्ति । न तावदेकस्मिन् कर्मण्यसम्भवन्निवेशः समुच्चितकालद्वयलक्षणो गुणः, तस्याऽऽवृत्त्यापि निवेशोपपत्तेः । अन्यथा सायम्प्रातःकालभेदेनाऽग्निहोत्रस्याऽपि भेदापत्तेः । न च कालस्याऽनुपादेयत्वेनोद्देश्यत्वात् तदनेकत्वनिमित्तवाक्यभेदापत्त्या गुणविध्यैव भेदकत्वोपपत्तिः, कालस्योद्देश्यत्वेऽप्यङ्गत्वापरपर्यायस्याऽज्ञातज्ञापनाविषयत्वापरपर्यायस्य च विधेयत्वस्य सत्त्वेन 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन' इतिवद्वाक्यभेदानापादकत्वात् । विधेयानेकत्वकृतं तु सत्यपि प्राप्तकर्मानुवादे 'अर्धमन्तर्वेदि मिनोती'तिवत् पौर्णमास्यमावास्यापदाभ्यां पर्वलक्षणयोभयविधानोपपत्तौ यत्र परिहर्तुं शक्यः, तत्राऽपूर्वकर्मविधौ पिण्डपितृयज्ञवाक्य इव कालद्वयविशिष्टकर्मविधानोपपत्तेः कथं न शक्यते परिहर्तुम् ।

नाऽप्यनुपादेयगुणयोगरूपं प्रकरणान्तरं तद्भेदकम् तस्य 'सन्निधौ त्वविभागा'दिति न्यायेन सन्निधावप्रवृत्तेः । किञ्च संख्याव्यतिरिक्तभेदकप्रमाणानां वाक्यान्तरविहितकर्म-

१, सिध्यत्येवेताति. क पु.

प्रतियोगिकभेदकत्वनैरपेक्ष्यस्य पार्थसारथिनोक्तत्वान्न स्ववाक्य-विहितकर्मप्रतियोगिकभेदबोधकत्वं तयोः सम्भवति । अतश्च (१)आग्नेयैक्यस्यैव पार्थसारथ्युक्तस्य युक्तत्वात् कथं तावादाय फलसम्बन्धापत्तिरिति चेत्,

न; आग्नेयद्वित्वे गुणस्यैव भेदकत्वात्। तथा हि—यो हि पदार्थो भेदमावृत्तिं वा विना न कर्मान्वययोग्यः, स उत्पत्तिवाक्यस्थस्सन् कर्मभेदं बोधयति, उत्पन्नवाक्यस्थस्तु(२) पदार्थः तदावृत्तिम् । (३)दृष्टश्चैतत् सङ्ख्यायाम् । अतश्च समुच्चितकालद्वयरूपगुणोऽपि भेदमावृत्तिं वा विना कर्मान्वयमप्रतिपद्यमान उत्पत्तिवाक्यस्थत्वादिह कर्मभेदं बोधयति, उत्पन्नवाक्यस्थस्तु सायं प्रातः कालरूपमावृत्तिम् । अत एकस्मिन् कर्मण्यसम्भवन्निवेशो गुण एव समुच्चितकालद्वयरूपो भेदकः । यथा चैवं सति सङ्ख्याया न गुणान्तर्भावस्तथा(४) सङ्ख्याधिकरणे वक्ष्यते । प्रमाणबलेन च गुणस्य स्ववाक्यविहितकर्मप्रतियोगिकभेदबोधकत्वेऽपि न दोषः । अत एव पार्थसारथ्युक्तमुत्पत्तिशिष्टगुणावरोधे वाक्यभेदापत्तौ च गुणात् भेद इति द्वैविध्यं प्रमाणाभावेनैवाऽपास्तम्, 'वषट्कर्तुः प्रथमभक्ष' इत्यत्रैकप्रसरताभङ्गप्रसङ्गेन तस्य भेदकत्वाङ्गीकारात् ।

न च वषट्कर्तृ(५)भक्षोद्देशेन प्राथम्यविधौ(६) विशिष्टोद्देशापत्तेः वाक्यभेदाभियैव गुणस्तद्भेदक इति वाच्यम् । वषट्कर्तृत्वे निमित्ते भक्षानुवादेन प्राथम्यविधावपि विजातीयोद्देशे तद-

१. आग्नेयैकत्वस्यैवेति. क. पु.
२. पदार्थ इति नास्ति. क. पु.  ३. व्यक्तञ्चेति. क. पु.
४. पू. मी. २. २. ७  ५. भक्षानुवादेनेति क. पु.
६. विशिष्टोद्देशे वाक्यभेदापत्तेस्तान्नियैवेति क. पु.

मात्रादेकप्रसरताभङ्गभयेनैव तस्य भेदकत्वात् । अतो यथाकथ-ञ्चिदेककर्मण्यनिविशमानस्यैव गुणस्य भेदकत्वात् सिद्धोऽत्राऽपि गुणाद्भेदः । भेदोऽपि चाऽत्र सङ्ख्यावदनेकत्वबोधनद्वारैव बोध्यते, न तु किञ्चित् प्रतियोगिकः, प्रमाणान्तरवत् प्रतियो-गिनः पूर्वमप्रसिद्ध्या तन्निरूपितभेदस्य बोधयितुमशक्यत्वात् । तस्मादाग्नेयभेदः ।

केचित्त्वत्र (१)प्रकरणान्तरन्यायेन भेदं समर्थयन्ते । तथा हि—यद्यनिविशमानत्वेनाऽनुपादेयस्थलेऽपि गुणस्यैव भेदक-ता, ततो 'मासमग्निहोत्रमि'त्यत्रापि तस्यैव भेदकत्वोपपत्तेः कृतं प्रकरणान्तरेण । अतोऽनुपादेयत्वावाच्छिन्नं प्रति तावत् प्रकर-णान्तरस्यैव भेदकतेति स्वीकर्तव्यम् । न चैवमप्यसान्निध्यभावात् कथं तस्य भेदकता ? भेदबोधकतादशायां तत्प्रातियोगिककर्मो-पस्थित्यभावरूपस्याऽसन्निधेर्मासाग्निहोत्रवादिहापि तुल्यत्वादि-त्याहुः-तन्न, मासाख्यगुणस्याऽपूर्व(२)कर्मण्यसन्निविशमानत्वेऽ-प्यसान्निध्युपष्टम्भकत्वेन स्वतो भेदकत्वात् गुणवैलक्षण्येन प्रक-रणान्तरत्वोपपत्तेः । अत एव सन्निधौ सायं जुहोतीत्यत्र न तस्य भेदकत्वम् ।

किञ्चाऽसन्निधिः किमुपस्थित्यभावः ? उपस्थापकप्र-माणाभावो वा ? नाऽऽद्यः, अत्यन्तविस्मरणशीलस्य 'सायं जुहो-ती'त्यादावपि उपस्थित्यभावे भेदप्रमापत्तेः । 'मासमग्निहोत्रं जु-होती'त्यादावपि अत्यन्तमेधाविनः तत्सत्त्वे भेदप्रमानुपपत्तेश्च । अन्त्येऽपि ज्ञातस्य वा भेदबोधकता ? उताऽज्ञातस्य वा ? अ-न्त्ये उपस्थापकस्य प्रमाणस्य प्रकरणादेः भ्रमात्मकोपस्थिताव-पि 'मासमग्निहोत्रं जुहोती'त्यादौ वस्तुतः प्रमाणाभावस्य सत्त्वा-

---

१. पू मी. २. ३. ११ २. कर्मण्यनिविशमानत्वेऽपीति क. पु.

म् भेदप्रमाबोधापत्तेः। आद्ये तु आग्नेयवाक्ये भेदप्रतियोगिनोऽप्रसिद्धेः तदुपस्थापकप्रमाणाभावज्ञानस्याऽशक्यत्वात् भेदबोधासम्भवः। पासाग्निहोत्रादौ तु नित्याग्निहोत्रविधिनोपस्थितस्य प्रतियोगिन इहोपस्थापकप्रमाणाभावस्य ज्ञातुं शक्यत्वादसाभिध्यविघातः। तस्मात् गुणादेवाग्नेयभेदः। विस्तरेण चैतत् प्रकरणान्तरन्यायशरीरोपपादनप्रस्तावे उपपादयिष्यते।

अतश्चाग्नेयभेदात् समुदायानुवादाभावे तयोरेव फलसम्बन्धापत्तेः तद्व्यावृत्तिफलकतया षण्णां फलसम्बन्धसिद्धिरेव समुदायानुवादप्रयोजनमिति सिद्धम्। (१)विशेषाच्चेदं (२)चतुर्थे उपपादयिष्यते। अतश्चानर्थक्याभावादपि न तद्वयेन विधित्वनिश्चयः। अर्थवादस्त्वेतद्वाक्यफलीभूतसमुदायस्तावक एव सन् प्रयोगविधिबोध्यप्रवृत्तिप्रतिबन्धकीभूतालस्यनिवृत्तावेव परम्परासम्बन्धेनोपयुज्यत इति न सोऽपि विधित्वनिश्चायकः। अस्तु वा विधिनत्वानिश्चयः, तथाऽपि फलसम्बन्धसिध्युपयोगिसमुदायफलकत्वेन तस्याऽन्यपरत्वान्नाऽभ्यासस्वरूपसद्भावः स पस्तीति न कर्मान्तरम्। अत एवैतद्वाक्यविहितकर्मानुवादेन समिदादिदेवताविधिः, ज्योतिष्टोमधर्मातिदेशः, अन्यदपि वा देवताप्रापकं नैवोपन्यसनीयम्। ज्यौतिष्टोमिकधर्मातिदेशस्तु सोमविधेर्दक्षिणीयाद्यङ्गद्वारेण दर्शपूर्णमासविध्युपजीवित्वात् तयोरपि तदुपजीवित्वेऽइतरेतराश्रयापत्तिरिति भवदेवोक्तप्रकारेणाऽपि निराकर्त्तव्यः। वार्त्रघ्नीवृधन्वत्योस्तु लिङ्गक्रमाभ्यामाज्यभागात्ववगतेः न विद्वद्वाक्यविहितकर्मणि देवताविधायकत्वम्। न च ब्राह्मणवाक्येन तयोर्बाधः, अबाधेनाऽप्युपपत्तौ बाधायोगात्।

किञ्च ब्राह्मणवाक्यमपि स्वरमेनाऽऽज्यभागपरतामेव मन्त्र-

---

१. विशेषनश्चेति. क. पु.    २. पू. मी. ४. ४. ११

स्याऽवगमयति । अन्यथा पौर्णमास्यमावास्याप्रातिपदिकयोः क-र्मपरत्वे लक्षणापत्तेः, सप्तम्याः प्राधान्यलक्षणकत्वापत्तेश्च । अपूर्व-विधित्वाङ्गीकारे अश्रुतदेवताविधिकल्पने अश्रुतयाज्यान्तरकल्पने आज्यभागयोश्चाऽश्रुतानुवाक्याकल्पने गौरवापत्तेश्च । अतो म-न्त्रचतुष्टयस्याऽप्याज्यभागाङ्गतया अनियमेन प्राप्तस्य निय-ममात्रं विधिवाक्येन क्रियते, लाघवात् । पौर्णमास्यमावास्याप्रा-तिपदिकाभ्यां शक्त्या काल एव प्रतिपाद्यते, सप्तम्या चाऽधि-करणत्वं वा । अतश्चाज्यभागाङ्गतया प्राप्तयोर्वार्त्रघ्न्योः पौर्णमा-सीनिमित्तकत्वं, तादृशयोश्च वृधन्वत्योरमावास्यानिमित्तकत्वमिति सम्भवति, पौर्णमास्यमावास्ययोस्तन्निमित्तकता, आज्यभागयोः तत्कालीनप्रधानाङ्गत्वेन तत्कालकत्वात् । निमित्तसम्बन्धप्रयो-जनं च व्यवस्थासिद्धिरिति नियमफलकत्वं लाघवं च ।

वस्तुतस्तु न कालस्य निमित्तता, आज्यभागयोः प्रतिपदि क्रियमाणत्वेन तत्कालीनत्वाभावात् । न च खण्डपर्वाणि कदा-चित् तत्कालकत्वसम्भवात् निमित्तत्वोपपत्तिः; तथात्वे सम्पू-र्णपर्वाणि तत्कालिकत्वासम्भवेन मन्त्रनिवृत्तिरूपशेषपरिसंख्या-फलकत्वापत्तेः । अतः शेषनियमरूपलाघवानुरोधेन पौर्णमा-स्यमावास्यापदं तत्कालीनप्रधानाङ्गभूताज्यभागलक्षकम् । प्रधाने तत्कालीनता च प्रयोगारम्भद्वारिकैव, न तु साक्षात्, प्रधानस्य तस्मिन् काले नियमेनाऽकरणात् । अत एव प्रकृतौ सर्वत्र पौर्ण-मास्यादिकालविधिः वचनान्तरानुसारादारम्भद्वारक एव । स-प्तमी च प्राधान्यपरा । तेन तादृशाज्यभागयोर्मन्त्रविशेषविधानात् प्रकृतौ सर्वदैव व्यवस्थासिद्धिः । विकृतौ च पौर्णमासीविकार-स्याऽमावस्याविकारस्य वा यस्मिन् कस्मिंश्चित् दिने करणेऽपि वार्त्रघ्नीवृधन्वतोर्व्यवस्थासिद्धिः । अतो 'वार्त्रघ्नी पौर्णमास्यामि'

त्येतद्वाक्यद्वयमेव स्वगौरवपरिहारार्थमाज्यभागाङ्गत्वं मन्त्रस्याऽ-ऽप्यनुजानातीति न तद्बलेन विद्वद्वाक्यविहिते कर्माणि देवताविधिः सम्भवतीति देवताभावादपि समुदायानुवादत्वम् । न चैवं सर्व-स्य वाक्यस्याऽनुवादकत्वे अनधिगतार्थगन्तृत्वरूपप्रामाण्यानाप-पत्तिः, शक्यार्थानुवादकत्वेऽप्यनधिगतसमुदायादिबोधकत्वेन प्रा-माण्योपपत्ते(१)र्मन्त्राधिकरण एवोक्तत्वात् ।

नन्वेवं विद्वद्वाक्ययोरर्थवत्त्वेन प्रामाण्येऽपि 'पौर्णमास्यां पौ-र्णमास्या यजेते'त्यादिवाक्ययोरानर्थक्येनाऽप्रामाण्यापत्तिः स्यादे-व, कालस्याऽऽग्नेयादिषु पौर्णमास्यादिपदाभिधेयेषूत्पत्तिवाक्यै-रेव प्राप्तत्वादिति चेत्—न; एतद्वाक्याभावे हि उत्पत्तिवाक्येऽ-पि श्रुतः पौर्णमास्यमावस्याकालः फलसम्बन्धोत्तरकालं प्रयोग-विधिकल्पनवेलायां कालस्य प्रयोगद्वारैवाऽङ्गत्वादुत्पत्तिवाक्ये प्र-त्येकश्रुत्यनुरोधेन प्रत्येकमेव(२) 'अग्नयेऽनीकवते प्रातः पुरोडाश-मष्टाकपालमि' त्यादावनीकवत्यादिप्रयोगवत् प्रयोगं कल्पयति । न च प्रत्येकप्रयोगकल्पने एकफलसाधनत्वानुपपत्तिः, प्रत्येकं प्रयुक्तानामप्याग्नेयादीनामनीकवत्यादिवदेव अपूर्वरूपेणैकक्षण-वृत्तित्वेन फले साहित्योपपत्तेः । अत एव 'समे दर्शपूर्णमासाभ्यां यजेते' त्यनेन देशविधेः प्रयोगविधित्वात् षण्णां देशिकसाहि-त्यावगमेऽपि एकस्मिन्नेव समे तिष्ठसु पौर्णमासीष्वमावास्यासु चैकैकप्रधानस्याऽन्वाधानप्रभृतिब्राह्मणतर्पणान्ताङ्गविशिष्टस्य प्र-योगोऽपि नाऽनुपपन्नः । न चैवमपि लाघवादेकस्यामेव पौर्णमा-स्याममावास्यायां च तत्तत्कालीनप्रयोगतयोपपत्तेः पौर्णमास्या-दित्रयप्रसङ्गे प्रमाणाभावः । द्व्यहकालीनत्वप्रातःकालीनत्वयोरपि वचनान्तरप्रमितत्वेनैकस्यां तिथाविष्टित्रयकरणे तद्बाधप्रसङ्गात् ।

१. पू. मी. १. २. ४. २. मै. सं. १. १०. १.

अतः 'पौर्णमास्यां पौर्णमास्या यजेते' त्येतद्वाक्यद्वयाभावे प्रत्येकमेव साङ्गानामाग्नेयादीनां करणापत्तिः ।

यत्तु वार्तिके एकफल (१) सम्बन्धानुरोधादेकस्यैव प्रयोगविधेः कल्पनम् । तत्र चोत्पत्तिकालानुरोधात्त्रिषु पौर्णमासीषु प्रधानत्रयम् । लाघवादेकस्यामेव वा तत् । एवममावास्यायामपि । अतश्च मासत्रयकालीनः पक्षद्वयमात्रकालीनो वा एक एव षण्णां प्रयोगः, तदन्तःपातीनि चाऽङ्गानि सर्वाण्यपि सकृदेव सवनीयपश्वङ्गानामिव क्वचित्क्वचित् कर्तव्यानीत्येतद्वाक्याभावेऽनुष्ठानमुक्तम् ; तत् राजसूयचातुर्मास्यादिष्वपि एकफलसाधनत्वेनैकप्रयोगत्वापत्तेरौत्पत्तिककालभेदेऽपि च तत्तत्काले प्रधानमात्रकरणेन तावत्कालीनप्रयोगैक्योपपत्तौ अङ्गानामपि सकृत्करणापत्तेरुपेक्षितम् । यथा च सवनीये नाऽङ्गावृत्तिः, तथा (२)आघाराग्निहोत्राधिकरणे वक्ष्यते । अत उत्पत्तिवाक्येषु नैरपेक्ष्येण कालस्य श्रवणात् प्रत्येकमेव प्रयोगाणामेतद्वाक्यद्वयाभावे कल्पनापत्तेरेतद्वाक्यद्वयसत्त्वे च त्रयाणां त्रयाणामेकप्रयोगसिद्धेः तत्सिद्धिरेव वाक्यद्वयप्रयोजनमिति नाऽऽनर्थक्यम् । तथा हि—

पौर्णमासीशब्दवाच्यानां त्रयाणां प्रधानानां स्वरूपेण प्राप्तानामपि प्रयोगविषयत्वेनाऽप्राप्तत्वात् पौर्णमासीकाले उपादेयत्वावगमात् पौर्णमासीकालविशिष्टप्रधानत्रयप्रयोगविधानावगतेः प्रयोगस्य च(३)एकादशाधिकरणन्यायेन साङ्गतावत्प्रधानविषयत्वादङ्गसाहित्यस्य प्रधानगतपरस्परसाहित्यस्य च विधेयविशेषणत्वेन विवक्षितत्वात् एकस्मिन् काले युगपत् साङ्गप्रधानत्रयकर्तव्यतासिद्धिः । एवममावास्यावाक्येऽपि द्रष्टव्यम् । एवं च सत्यपि

---

१. सम्बन्धादिति. क. पु. २. पू. मी. २. २. ४.
३. पू. मी. ११. १. २.

कालिकप्रयोगविधिभेदे देशवाक्येन षण्णामेकप्रयोगस्य विधाना-देकस्मिन्नेव देशे षण्णां (१)साङ्गानां कर्तव्यताऽपि सिद्धा भवति । सर्वे हि देशकालादयः प्रयोगविशेषणत्वेनैवाऽन्वयं भजमानाः स्वसम्बन्धिनं प्रयोगं विनिगमनाविरहात् कल्पयन्ति । अतश्च तत्तद्वाक्ये कालादिविशिष्टप्रयोगविधिसिद्धिः ।

न च उत्पत्तिवाक्ये नैरपेक्ष्येण कालश्रवणात् फलसम्बन्धोत्तरकालं प्रयोगविधिकल्पने प्रत्येकमेव प्रयोगविधिकल्पनावगतेस्तदनुवादेनाऽत्र कालादिमात्रविधानोपपत्तेः प्रत्येकमेवाऽनुष्ठानप्रसङ्गेन एतद्वाक्यसत्त्वेऽपि नेष्टसिद्धिरिति वाच्यम् । प्रत्येकप्रयोगविधिकल्पनातः पूर्वमेवैतद्वाक्यप्रत्यक्षीकारेणाऽत्रैव प्रयोगविध्युपपत्तेः । अन्यथा तादृशानुष्ठानस्यैतद्वाक्याभावेऽपि सिद्धावेतद्वाक्यानर्थक्यापत्तेः । न चैवं 'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेते'ति वाक्येन सर्वासां विकृतीष्टीनामपि पर्वकालविशिष्टैकप्रयोगविधानादेकप्रयोगतापत्तिः, तत्र (२)यत्तच्छब्दसमभिव्याहारात् तत्तद्विकृतिप्रयोगानुवादेन कालमात्रविधानावगतेः तत्तद्विकृतिवाक्येष्वेव प्रत्येकप्रयोगविधिकल्पनाया अभ्यनुज्ञानात् , तत्तद्भिन्नफलसाधनानां तासामेकप्रयोगविधिविषयत्वानुपपत्तेश्च । अतश्च 'य इष्ट्ये'तिवाक्येनाऽवगतमपि तत्तद्विकृतिप्रयोगसाहित्यमनुपाद्यगतत्वाविवक्षितम् । प्रकृते तु (३)कालविशिष्टभावनारूपस्य प्रयोगस्यैव विधेयत्वाद्युक्तैवेष्टसिद्धिरिति वैषम्यम् ।

न चैवमुत्पत्तिवाक्ये कालश्रवणवैयर्थ्यापत्तिः, तस्य फलस-

---

१. यागानमिति. क. पु.
२. यच्छब्दतच्छब्दसमभिव्याहारादिति. क. पु.
३. कालविशिष्टप्रयोगस्यैवेति. क. पु.

प्रकरणात्कृत्स्नवाक्यगतविद्वद्वाक्यादिगतपौर्णमास्यमावास्यादि-पदप्रसिद्ध्यर्थत्वेनाऽर्थवत्त्वात्। अत एवोपांशुयाजस्योत्पत्तिवाक्ये कालसम्बन्धाभावेऽपि ‘तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यज’ न्निति वाक्येन कालसम्बन्धात्फलसम्बन्धसिद्धिः। अतश्च कृत्स्नाऽपि वाक्यस्य वैयर्थ्याभावात्समुदायसिद्ध्यर्थं समुदायानुवादके एव विद्वद्वाक्ये इति सिद्धम्।

सूत्रं तु—पौर्णमास्युपलक्षितयोर्विद्वद्वाक्ययोः, प्रकरणं प्रकृतानुवादः, रूपावचनात् कर्मान्तरविध्यनुपपत्तेरिति व्याख्येयम् ॥ ३ ॥

## विशेषदर्शनाच्च सर्वेषां सर्वेषु ह्यप्रवृत्तिस्स्यात् ॥ २–२–४ ॥

यदि चैतौ कर्मान्तरविधी स्याताम्, ततो यदि सर्वेषां समप्राधान्यम्, ततो विकृतिषु प्रधानस्याऽनतिदेशात् प्रयाजादीनामप्राप्तेः, सौर्ये ‘प्रयाजे प्रयाजे कृष्णलं जुहोती’त्यनेन प्रयाजानुवादेन कृष्णलरूपविशेषविधिर्नोपपद्येत। यदि तु विद्वद्वाक्यविहितकर्मणोरेव प्राधान्यम् तत आग्नेयादीनामङ्गत्वेऽपि सौर्यस्यौषधद्रव्यकत्वेनाऽऽग्नेयविकृतित्वस्यैवाऽऽवश्यकत्वात् तद्धर्माणामवघातादीनामतिदेशेऽपि प्रयाजादीनामनङ्गत्वेनाऽऽग्नेयादिसमत्वात् सौर्यादिष्वप्राप्तेः प्रयाजानुवादेन कृष्णलविधेरनुपपत्तिः तदवस्थैव। एवमाग्नेययोरेव प्राधान्यपक्षेऽपि द्रव्यसादृश्येन साम्नाय्याविकारस्यैव पशोः प्रयाजाङ्गत्वाभावात् तदनुवादेनैकादशत्वादिविध्यनुपपत्तिः। (१)अतो नैतौ कर्मान्तरविधी। अत्र च सू-

---

१. ‘अतश्च’ इति. क. पु.

त्रेऽन्वाचयवाचिचशब्दोपादानात् यागाद्रूपप्राधान्यपक्षे वाक्यभेद-
दोष इत्यव्यापकत्वादन्वाचयत्वं सूचितम् ॥ ४ ॥

## गुणस्तु श्रुतिसंयोगात् ॥ २-२-५ ॥

नैतौ समुदायानुवादौ, विधायकत्वेनाऽर्थवत्त्वसम्भवे तत्प्रयोजनस्याऽपि समुदायानुवादत्वस्याऽनुपपत्तेः । अतः कर्मविध्यपेक्षया प्रयोजनवत्तरत्वेनाऽन्यपरत्वाभावादभ्यासादेव कर्मभेदसिद्धिः । एवञ्च 'पौर्णमासी'मित्येकवचनं कर्मैकत्वेनोपपद्यते । अन्यथा स्वाश्रयघटकवृत्तित्वसम्बन्धेन समुदायिबहुत्वलक्षणा स्यात् । अतोऽत्र तावत् कर्मविधिः । न च रूपाभावः, यदाग्नेयादिवाक्यैस्तद्विधानोपपत्तेः । तथा हि—तत्रत्यपौर्णमास्यमावास्याशब्दाभ्यां विद्वद्वाक्यविहितकर्मोद्देशं कृत्वाऽऽग्नेयादिरूपविधानोपपत्तिः । एवञ्चैतेषु वाक्येष्वश्रुतयागकल्पनं विशिष्टविधिगौरवं च नैवाश्रितं भवति । न चैवं वाक्यभेदः, अग्नीषोमीयसान्नाय्यादिवाक्येषु तावदेकैकस्यैवोद्देशेन तन्निमित्तरूपवाक्यभेदस्य तावदप्रसक्तेः । आग्नेयादिवाक्येऽपि पौर्णमास्यमावास्याशब्दलक्षणया 'अग्रेण नवेदिं मिनोती'तिवत्प्रकृतप्रधानयागस्यैवोद्देशात् न तन्निमित्तो वाक्यभेदः । यदि तु (४)एतस्मिन्नपि[1] पक्षे प्रयाजादिसाधारण्येन सर्वेषां प्राधान्यमुच्येत, ततो रूपसाकाङ्क्षप्रकृतयागत्वस्यैव लक्ष्यतावच्छेदकत्वेनोद्देश्यतावच्छेदकत्वोपपत्तेर्न वाक्यभेदः ।

न चैवमपि द्रव्यदेवतारूपविधेयानेकत्वनिमित्तो वाक्यभेदस्तदवस्थ एवेति वाच्यम् । तद्धितान्तपदेनैकेनैव देवताविशिष्टद्रव्यविशेषवाचिना विशिष्टस्यैकस्यैव प्राप्तभावनानुवादेन विधानो-

१. अस्मिन्नपीति. ख. पु.

पत्तेः । अत एव (१)गुणाधिकरणे वक्ष्यमाणन्यायेनाऽष्टाकपा-
लपदस्य तात्पर्यग्राहकत्वान्न तदंशे तद्धितपदोपात्ततयाऽऽशङ्कनी-
या । अतश्चैकपदोपादानाद्वैशिष्ट्यबोधोपपत्तेर्न वाक्यभेदः ।
यत्र तु 'पञ्चदशान्याज्यानी'त्यादौ भिन्नपदोपादानम्, तत्र भा-
वनान्वयात्पूर्वं परस्परवैशिष्ट्याप्रतीतेः प्राप्तभावनानुवादेनोभय-
विधौ युक्तो वाक्यभेदः; प्रकृते त्वेकपदत्वेन भावनान्वयात्पूर्व-
मेव द्रव्यदेवतावैशिष्ट्यप्रतीतेः, प्रत्युत तदनङ्गीकारे 'साऽस्य
देवते'ति द्रव्यसम्बन्धाधिकारविहिततद्धितानुपपत्तेर्भावना-
न्वयात्पूर्वमेव परस्परवैशिष्ट्यस्याऽऽवश्यकत्वात् प्राप्तभावनानुवा-
देनाऽपि विशिष्टविध्युपपत्तेर्न वाक्यभेदः । अत एव न (२)पश्वे-
कत्वाधिकरणपूर्वपक्षन्यायेन देवताया अविवक्षा, तद्वदिह प्राथ-
मिकभावनान्वयस्य तद्धितभङ्गभयेनाऽव्युत्पन्नत्वात् ।

यच्चात्र भवदेवेन पुरोडाशसान्नाय्यादेः संस्कारविध्यन्य-
थानुपपत्त्यैव प्राप्तत्वादाग्नेयादिवाक्यैर्देवतामात्रविधानात् न वा-
क्यभेद इति परिहृतम्, तत् पुरोडाशादेः कथञ्चित् प्राप्तिसम्भ-
वेऽपि अष्टत्वादिप्राप्तेरभावात्, तद्विधाने वाक्यभेदापत्तेरेकैक-
स्मिन्नपि च द्रव्ये सर्वासां देवतानां विकल्पेन प्राप्त्यापत्तेरुपे-
क्षितम् । तस्मादुक्तप्रकारेणैव वाक्यभेदपरिहाराद्रूपवत्त्वोपपत्तेः
कर्मान्तरविधिरेवाऽयम् ।

अस्मिंश्च पक्षे विद्वद्वाक्यविहितयोरेव कर्मणोः प्राधान्या-
त्, प्रयाजादीनां तदङ्गत्वात्, सौर्यादीनां चाऽऽग्नेयवा-
क्यविहितयागाभावेन विद्वद्वाक्यविहितकर्मविकृतित्वादतिदेशेन
प्रयाजप्राप्त्युपपत्तेर्युक्तस्तदनुवादेन कृष्णलविधिः । यदि
त्वस्मिन्नपि पक्षे पूर्ववत्समप्राधान्याङ्गीकरणम्, ततः कृष्ण-

---

१. पू. मी. २. ३. ९. २. पू. मी. ४. १. ५.

लविशिष्टप्रयाजान्तरस्यैव सौर्ययागाङ्गतया विध्यङ्गीकारेण दार्श-पौर्णमासिकप्रयाजानुवादेन कृष्णत्वविध्यङ्गीकारेण वा 'यत्र नि-त्यानुवादवचनानि स्यु' रिति न्यायेन परिहर्तव्यम् । अतः क-थं समुदायानुवादकत्वमिति चेत्—

## चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थ-त्वात्तस्य तस्योपदिश्येत ॥ २-२-६ ॥

नाऽऽग्नेयादिवाक्ये रूपविधिस्सम्भवति, प्राप्तकर्मानुवादेन द्रव्यदेवतारूपानेकार्थविधाने वाक्यभेदात् । यत्र त्वप्राप्ता भा-वनाऽनेककारकविशिष्टा विधीयते, तत्र(१)श्रौतविधेर्वि-शिष्टभावनाविधान एव व्यापाराद्विशेषणानाञ्च विशिष्टविध्यन्य-थानुपपत्तिकल्पितविशेषणविधिभिरेव विधानसिद्धेः श्रौतस्य विधेस्तत्र व्यापाराभावात् न विधेयानेकत्वनिमित्तो वाक्यभेदः । न च तत्राऽपि विशिष्टज्ञानस्य विशेषणज्ञानाधीत्वाद्विशेषणविध्यु-त्तरकालप्रवृत्तिकस्य विशिष्टविधेर्न विशेषणविधिकल्पकत्वसम्भ-वः, विशिष्टज्ञानस्य विशेषणज्ञानाधीनत्वेऽपि विशिष्टकर्तव्यता-रूपस्य तद्विधेः विशेषणकर्तव्यताज्ञानाधीनज्ञानविषयत्वाभावात्, विशिष्टज्ञानापेक्षितविशेषणज्ञानस्य च विशिष्टविधिवेलायां सो-मादिपदैरेव जननोपपत्तेः । अतश्च श्रुतस्य विधेस्तत्तत्पदोपनी-तविशेषणयुक्तविशेष्यविधान एव व्यापारादार्थिकविशेषणविधि-वाचकपदकल्पनव्यापारकत्वेऽपि तद्विधानव्यापारकत्वाभावान्ना-ऽनेकविधितात्पर्यकत्वकृतो वाक्यभेदः ।

प्रकृते तु विशेष्यभूताया भावनाया विद्वद्वाक्यादेव प्रा-प्तत्वाद्विधेस्तद्विधितात्पर्यविषयत्वायोगादा(२)नर्थक्यतदङ्गन्यायेन

१. श्रौतस्य विधेरिति. क० पु० २. पू. मी. ३. १. ९

विशेषण एवाऽवतारात् तत्र च विशेषणानेकत्वे तेषां परस्परवि-शेषणविशेष्यभावे नियामकाभावेन प्रत्येकमेव विधितात्पर्यावगतेः सकृच्छ्रुतस्य चाऽनेकत्र तात्पर्यकल्पने आवृत्तिमन्तरेण तदयो-गादावृत्तिलक्षणो वाक्यभेदः । यद्यपि च विशिष्टविधिस्थले भा-वनाया अनेकान्वयित्वस्वाभाव्यादनेकेषां विशेषणानामन्वयेऽपि नाऽऽवृत्तिः, तथाऽपि विधेः विशिष्टविधावपि विशेष्यरूपैकवि-धायकतया क्लृप्तस्य नानेकविधित्वस्वाभाव्यम्, तस्मादिहाऽनेकवि-धाने वाक्यभेदो दुष्परिहर एव, आवृत्तिप्रसङ्गात् ।

अत एव प्राप्तायामपि मुख्यविशेष्यभूतायां भाव-नायां यत्र विशेषणानामपि व्युत्पत्तिवशेन परस्परवै-शिष्ट्यावगमः, तत्र भवत्येवानेकविशेषणविशिष्टस्याऽप्येकस्य विशेष्यस्य प्राप्तानुवादेन विधिः, यथा 'पशुना यजेत' (१)'धेनुर्दक्षिणे' त्यादौ जातिसंख्यादिविशिष्टस्यैकस्य कारकस्य, यथा चैकक्रयवादिमते (२)"अजया क्रीणाती"त्यादौ । (३)तत्र हि तृतीयोपात्ते करणत्वे पार्ष्ठिकान्वयलभ्यद्रव्यपरिच्छेदद्वारा समानाभिधानश्रुत्या संख्यायाः, पदश्रुत्या च जातेरन्वयो व्यु-त्पत्तिसिद्ध एव । अतश्च तत्रोभयकारकविशिष्टद्रव्यगतैककरण-त्वविधानान्न वाक्यभेदः । यद्यपि जातिसंख्याद्वयवृत्तिकरणत्व-द्वयस्यैव तृतीययोपादानमित्याश्रीयते, तथाऽपि द्वयोः करण-त्वयोरेकशब्दोपादानेन वाक्यभेदो(४) ऽवगन्तव्यः ।

एवं मूलानुयायिमते षष्ठ्या अपि भावनान्वयनियमाभावात् षष्ठ्यन्तस्य कारकविशेषणत्वोपपत्तेः प्राप्तभावनानुवादेनाऽपि विशिष्टविधिर्द्रष्टव्यः । यथा-'तस्य द्वादशशतं दक्षिणे' त्यत्र प्रा-

---

१. तै. सं. १. ८. १ २. तै. सं. ६. १. १०.
३. अत्र हीति. क पु. ४. अधिगन्तव्य इति. क. पु.

प्रदक्षिणानुवादेनाऽपि तच्छन्दोपात्तगोविशिष्टसंख्याविधिः । वस्तुतस्तु प्राप्तदक्षिणानुवादेन गोविशिष्टसंख्याविधावपि समुच्चिताश्वादेरपि विधेयत्वात् तत्रोभयविशिष्टदक्षिणाविधानमेव स्वीकर्तव्यम् । अत एव षष्ठीस्थलेऽपि निमित्तवत्प्रधानभूतभावनान्वये सम्भवति व्युत्पत्त्यन्तरकल्पनापादकोऽन्वयो नाऽङ्गीक्रियत एव । अतस्तत्राऽपि प्राप्तकर्मानुवादेनाऽनेकविधानेऽस्त्येव वाक्यभेदः ।

यत्त्वत्र पार्थसारथिना(१) 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपे"दित्यादौ प्राप्तद्रव्यानुवादेनाऽग्निर्दाता च विधीयते । न च तत्र वाक्यभेदः, अग्निदातृत्वयोः परस्परविशेषणविशेष्यभावस्य मन्त्रार्थवादादौ प्रसिद्धत्वेन दातृत्वगुणविशिष्टस्याऽग्नेः प्राप्तकर्मानुवादेऽपि द्रव्योद्देशेन विधातुं शक्यत्वादित्युक्तम्; तत् अन्यपरमन्त्रार्थवादादिकृतप्रसिद्ध्यवलम्बनेनाऽपि वैशिष्ट्योपपत्तौ सुतरां द्रव्यगुणयोर्वास्तविकलोकप्रसिद्धविशेषणविशेष्यभावेन वैशिष्ट्योपपत्तेः स्तोत्रानुवादेन संख्याविशिष्टाज्यविधाने वाक्यभेदानापत्तेरुपेक्षितम् ।

(२)यदप्युक्तं तन्त्ररत्ने दात्रादिपदानां कृदन्तानां सन्निहितद्रव्यवाचकत्वात् दातृपदेनैव दातृत्वगुणविशिष्टाग्निविधानम्, अग्निपदं चाऽऽमिक्षापदवत्तात्पर्यग्राहकं(३) इति, तत् स्वयमेव शास्त्रदीपिकाया(४)माग्नेय्यधिकरणे यौगिकानां पदानां सन्निहितमात्रवाचकत्वस्य निराकृतत्वादयुक्तमेव । न च आग्नेयीपदस्याऽकृदन्तस्य सन्निहितासन्निहितसाधारणद्रव्यमात्रवाचित्वेऽपि दातृशब्दस्य कृदन्तत्वात् सन्निहितमात्रवाचित्वोपपत्तिः;

१. तै. सं. २. ३. २. २. यदपि तन्त्ररत्न इति. क. पु.
३. इति परिहृतमिति. क. पु. ४. पू. मी. ३. २. ८.

दातृपदस्य सन्निहितवाचित्वे सर्वनामार्थविहिततद्धितान्ताग्नेयीपदस्य सुतरां तदापत्तिः, अतः तत्रापि प्राप्तकर्मानुवादेनाऽनेकविधानादस्त्येव वाक्यभेदः। अत एव तत्र द्रव्यदेवताविशिष्टभावनाविधिपक्ष एवाश्रयिष्यते। यानि च तत्पक्षे दूषणानि तानि तत्रैवोपन्यस्य परिहरिष्यामः।

तस्मात्सिद्धमव्युत्पन्नपरस्परविशेषणविशेष्यभावानां विशेषणानां प्राप्तभावनानुवादेन विधाने वाक्यभेद इति।

यत्तु प्रकृतेऽपि आग्नेय इति तद्धितवृत्तिविधानात् द्रव्यदेवतयोर्विशेषणविशेष्यभावोऽव्युत्पन्न एवेत्युक्तम्; तत्रेदमुत्तरं वाच्यम्—यत्र तद्धितवृत्तौ समासवृत्तौ वा कारकतातिरिक्तसम्बन्धेन वृत्तिस्तत्राऽकृत्वापि भावनासम्बन्धं प्रथमतोऽन्योन्यसम्बन्धेन वैशिष्ट्य उच्यमानेऽपि न वाक्यभेदः। अत एव(१) 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति', 'हिरण्यमालिनः प्रचरन्ती'त्यादौ प्राप्तप्रचारानुवादेन ऋत्विग्गतलौहित्यविशिष्टोष्णीषविधिः। एतदभिप्रायेणैव च(२) चित्राधिकरणे 'यदि पञ्चदशाज्यानीति समासः स्यात् ततो न वाक्यभेदो भवे'दिति पार्थसारथिनोक्तम्।

यत्र तु कारकतासम्बन्धेन वृत्तिः, यथा—आग्नेय इत्यादौ देवतात्वेन, तदपि हि सम्प्रदानकारकं कर्मकारकं वेत्यग्निमाधिकरणे वक्ष्यते, तत्र प्राथमिकक्रियासम्बन्धात् प्रागन्यसम्बन्धाभ्युपगमे कारकत्वव्याघातापत्तेः प्रथमतः क्रियासम्बन्ध एवाभ्युपगम्यते, पश्चात्तु द्रव्यसम्बन्धः, एकहायनीसम्बन्धवत्। युक्तश्चैतत्। यथैवाऽऽरुण्यस्य सत्यप्येकहायनीसामानाधिकरण्ये टाबन्तत्वे च कारकश्रुत्या क्रियासम्बन्धमेव

१. का. श्रौ. २२. ३. १५. २. पू. मी. १. ४. ३.

प्रथमतोऽभ्युपगतस्य पाश्चात्यसम्बन्धेनैव सामानाधिकरण्यादिर्नि-र्वाह्यते, न तु द्रव्यसम्बन्धस्यैव प्रथमतोऽभ्युपगतस्य परम्परासम्ब-न्धेन कारकत्वम्; तथा प्रकृतेऽपि कारकत्वाविशेषात् प्रथमतः क्रियासम्बन्धः पश्चादेव द्रव्यसम्बन्धः, तदभिप्रायिकैव च वृत्तिः। न च सम्बन्धज्ञानं विना वृत्त्यनुपपत्तिः, अरुणयेत्यादौ टावादा-विव द्रव्यासम्बन्धित्वानिश्चयस्यैव तद्बीजत्वात्। अतश्च सम्बन्धा-ज्ञानवत्सम्बन्धस्याऽप्यज्ञानात् वृत्त्युपपत्तेः द्रव्यवद् देवताकार-कस्यापि प्रथमतः क्रियासम्बन्धसिद्धिः। अतश्च "पञ्चदशान्या-ज्यानी"तिवद्देवोभयोः क्रियासम्बन्धाद्वैशिष्ट्यानुपपत्तेः प्राप्तभाव-नानुवादेनानेकगुणविधाने वाक्यभेदो दुरुद्धर एव। अत आ-ग्नेयादिवाक्ये द्रव्यदेवताविशिष्टयागान्तरस्यैव विधानात् विद्वद्वा-क्ये रूपाभावस्तदवस्थ एव।

नन्वेवमपि द्रव्यदेवताविशिष्टभावनामात्रविधिरेवाऽऽग्नेयादि-वाक्येष्वस्तु, न तु स्वतन्त्रयागकल्पनम्, गौरवात्, अभ्युदिते-ष्टौ भावनान्तरविधिवत्। तस्याश्चावच्छेदकीभूतयागापेक्षायां तद्व-देवेन्द्रियकामहोमवच्च विद्वद्वाक्यविहितौ यागौ यथायोगं पौर्णमा-स्यमावास्यापदोपनीतौ सम्बध्येते, अत एव विद्वद्वाक्येऽपि प्रा-प्तभावनानुवादेन यागमात्रविधिः, न तु यागविशिष्टभावनावि-धिरिति लाघवमिति चेन्न; तथा सति "तावब्रूतामग्नीषोमा-वाज्यस्यै"वेत्यादिवाक्यस्य वैयर्थ्यापत्तेः। इदं ह्युपांशुयाजस्या-न्तरालविधिवशेन सम्भवत्प्राप्तिकपौर्णमासीकालसम्बन्धव्यवधा-नार्थं सत्तस्य फलसम्बन्धार्थमित्युत्तराधिकरणे वक्ष्यते। विद्व-द्वाक्यविहितकर्मद्वयाङ्गीकारे च तस्यैव निर्ज्ञातनामकत्वेन फलस-म्बन्धापत्तेः उपांशुयाजे कालविधिरनर्थक एवेति तस्य कर्मवि-धायकताया एवाऽप्रसिद्धेः दुर्घटैवाऽऽग्नेयादिवाक्यविहितभावनाव-च्छेदकतोक्तिः।

वस्तुतस्तु अमावास्याऽभ्यावर्तनफलकत्वेनाऽपि तत्सार्थ-क्योपपत्तेः पूर्वोक्तविधयाऽन्यपरत्वाद्विधिकल्पकाभावेनाभ्यास स्वरूपविघटनेनैवाऽयं पूर्वपक्षो निराकर्तव्यः।

एतेन सत्यप्याग्नेयादिवाक्येषु यागान्तरविधाने विद्वद्वाक्य-विहितकर्मणोऽप्येकप्रयोगविधिपरिग्रहेण सान्नाय्यवदाग्नेयादि-यागैः सह तन्त्रेणाऽनुष्ठानोपपत्तेः तदीयद्रव्यदेवतायाः प्रसङ्गे-नोपकारकत्वोपपत्तेरुत्पन्नं रूपमिति विधित्वमित्यप्यपास्तम्, विद्वद्वाक्ये विधेरेवाऽनिश्चयेन कर्मविध्यनिश्चयात्, प्रत्युत यच्छ-ब्दोपबन्धत्वेनाऽनुवादत्वस्यैव निश्चयाच्च। अत एव समुदाया-नुवादकत्वापेक्षया प्रयोजनवत्तरमपि विधित्वं नैवाङ्गीकृतम्। किञ्चाऽस्मिन् पक्ष आग्नेयादिवाक्यस्थपौर्णमास्यमावास्याशब्दयोः सप्तम्यन्तयोः लाक्षणिकत्वमपि निष्प्रयोजनकमापद्येत। विद्वद्वा-क्यस्थ 'पौर्णमासी' मित्याद्येकवचनञ्चोपक्रमस्थयच्छब्दानुरोधेन लक्षणया नीयमानं न दुष्यति। तस्मात् समुदायानुवादौ।

सूत्रं तु—कर्मचोदना वा स्यात् आग्नेयादिवाक्ये, तथा सति गुणानां युगपदेकेन शास्त्रेण विधानं शक्यं कर्तुम्, प्राप्ते तु कर्मणि गुणमात्रविषयत्वात् विधेः तस्यतस्योपदेशे वाक्यभेदाप-त्तिः, इति व्याख्येयम्॥

## व्यपदेशश्च तद्वत ॥ २-२-७ ॥ ( सि )

"उग्राणि वा एतानि हवींष्यमावास्यायां सन्निश्रियन्ते आ-ग्नेयं प्रथममैन्द्रे उत्तरे" इत्यत्र त्रयाणामेव तावदग्रत्वापरपर्याय-प्राधान्यव्यपदेशो भवत्पक्षे न युज्यते। किञ्च द्वितीये पक्षे विद्व-द्वाक्यविहिते कर्मणि आग्नेयादिहविषां विकल्पापत्तेः सम्भर-णपदवाच्यं साहित्यं प्रथमादिपदवाच्यश्च क्रमो न युज्ये-त। एतदन्यथानुपपत्त्यैव समुच्चयविध्यङ्गीकारे त्वतिगौरवम्॥

## लिङ्गदर्शनाच्च ॥ २-२-८ ॥

"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशाऽमावास्यायां" मित्याहवनीयगतवषट्कारादिपरिगणनं प्रथमभवत्पक्षे पौर्णमास्यां पञ्चदशत्वापत्तेरमावास्यायां चतुर्दशत्वापत्तेः द्वितीयपक्षे चोभयत्र द्वादशत्वापत्तेर्नोपपद्येत । अस्मन्मते तु पञ्च प्रयाजाः, द्वावाज्यभागौ, स्विष्टकृत्, त्रयोऽनूयाजाः, पौर्णमास्यां प्रधानाहुतित्रयम्, अमावास्यायां सान्नाय्यस्य सहानुष्ठानात् प्रधानाहुतिद्वयमिति चतुर्दशत्वत्रयोदशत्वानुवादो नाऽनुपपन्नः । यद्यपि चाऽसोमयाजिनोऽग्नीषोमीयाभावादस्मन्मतेपि चतुर्दशत्वसङ्ख्याऽनुपपन्नैव, तथाऽपि सोमयाजिन एव तावत्सम्भवतीति न विरोधः । त्रयोदशत्वसंख्या त्वसन्नयतोऽप्यैन्द्राग्नविधानादुपपन्नैव । तस्मात्समुदायानुवादावेतौ, न कर्मान्तरविधी, इति सिद्धम् ॥ ८ ॥

इति तृतीयं पौर्णमास्यधिकरणम् ॥ ३ ॥

---

### अथ चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

## पौर्णमासीवदुपांशुयाजस्स्यात् ॥ २-२-९ ॥ (पू-)

दर्शपूर्णमासयोः "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाये"ति श्रुतम् । तैत्तिरीयशाखायां तु (१.)'उपांशुयाजमन्तरा यजत्यजामित्वाय' इत्यपि समाम्नातम् । तत्र सन्दे-

१. तै. सं. २. ६. ६.

हः—किं विष्ण्वादिवाक्येषु तत्तद्देवताविशिष्टयागविधिरन्तराल-वाक्ये च तेषां त्रयाणां समुदायार्थमनुवादः, अथ वा तत्रैवाऽन्तरा-लकालोपांशुत्वविशिष्टयागविधिः, इतरे तस्यैवार्थवादाः ? इति।

अत्र च समुदायानुवादत्वस्याऽपवादादनन्तरसङ्गतिस्तावत् स्पष्टा। पूर्वपक्षे गुणाद्वाऽभ्यासाद्वा कर्मभेदः, सिद्धान्ते नेत्यभिधा-नाच्च पादाध्यायसङ्गतिरपि द्रष्टव्या।

तत्र तव्यप्रत्ययस्य(१) 'स्वाध्यायोऽध्येतव्य' इतिवन्निस्सन्देहं विधित्वात् 'यजती'त्यस्य लट्लेट्साधारणत्वेन सन्दिग्धत्वादुभ-यत्र तुल्यत्वेऽपि वा(२) 'भूयस्त्वेनोभयश्रुती'त्यनेन न्यायेन यत्र यागपरिचायकदेवतादिमत्ता तत्रैव च यागविधिरिति निश्चयात् विष्ण्वादिवाक्येष्वेव कर्मविधानम्।

न चैवं विष्ण्वादिदेवतात्रयविशिष्टैककर्मविधाने तव्य-प्रत्ययान्तरपुनःश्रुतिवैयर्थ्यापत्तेः विनिगमनाविरहेण सर्वेषां विधायकत्वावसायात् विहितविधानायोगाच्च कर्मभेदे सति वैश्वानरवाक्यवदुपक्रमोपसंहारैक्यबलगम्यैकवाक्यत्वस्य विधे-यभेदेन भङ्गापत्तिरिति वाच्यम्, तत्र हि जातेष्ट्यैवोपक्रमात् तयैव चोपसंहाराद्युक्तैकवाक्यता, प्रकृते तु पुरोडाशनैरन्तर्यापा-दितालस्यापरपर्यायजामित्वेनोपक्रमादजामित्वेन चोपसंहारादु-पक्रमोपसंहारैक्याभावेनैकवाक्यत्वाप्रतीतेः।

यद्यपि च दोषरूपस्य जामित्वस्य तदपनायककर्मस्तुत्यर्थत्वेनैव सङ्कीर्तितत्वात् जामित्वाजामित्वयोरेकविषयत्वमुच्यते, तथाप्य-जामित्वस्य प्रत्येकमुपसंहारात् तदनुरोधेनोपक्रमस्यापि प्रत्येकम-नुषङ्गावगतेः भिन्नवाक्यत्वोपपत्तिः। न ह्यन्यथा प्रत्येकमुपसंहारः कथमपि युज्यते; जातेष्टिवत् युगपदेवोपसंहियेत। अतो भिन्न-

१. तै. आ. २. १५. २. पू. मी. सू. ३. ३. १०.

वाक्यत्वेऽपि न दोषः । अतश्च विष्ण्वादिवाक्येष्वेव तत्तद्देवतो-पांशुत्वविशिष्टयागत्रयविधानम् ।

यद्यपि तत्र कर्मोत्पत्तितद्धितप्रत्ययेन विष्ण्वादेः प्राधान्यं यागं प्रत्यवगम्यते, तथाऽपि सक्त्वादेरिव भूतभाव्युपयोगाभावाद्विनियोगभङ्गेन विष्ण्वादेः त्यज्यमानहविरुद्देशकर्मत्वमात्रविवक्षणेऽपि प्राधान्यांशाविवक्षया यागं प्रति वैशिष्ट्योपपत्तिः । अन्तरालवाक्यस्थयजिपदं तु तेषामेव यागानामनुवादकम् । उपांशुयाजपदं तु तेषामेवाऽव्युत्पन्नं सामानाधिकरण्यमात्रेणैव नामधेयम् । न तु तत्प्रख्यन्यायेन । उपांशुयाजपदे व्युत्पत्त्यङ्गीकारे(१) 'च जोः कुघिण्यतो'रित्यनेन चकारान्तस्य जकारान्तस्य वा धातोः घिति णिति च प्रत्यये परे कुत्वविधानादुपांशुयाग इति रूपापत्तेः उपांशुयाजपदे उपांशुत्वरूपगुणविधित्वशङ्काया एवानुपपत्तेः । अतः सामानाधिकरण्येन रूढमिदं नामधेयम् । अन्तरालकालमात्रं त्विह यागत्रयानुवादेन विधीयते । तच्चान्तरालकालस्तुत्यर्थम् । समुदायवाक्येऽप्यान्वितस्य जामित्वोपक्रमस्याऽव्यवहितत्वात् विष्ण्वादिवाक्येष्वप्यनुषङ्गेणाऽन्वयो नानुपपन्नः ।

वस्तुतस्तु तैत्तिरीयशाखायामन्तरालवाक्येऽप्यजामित्वोपसंहारादुपक्रमोऽपि तन्मात्रविषय एव । विष्ण्वादिवाक्येषु त्वजामित्वायेत्येतावन्मात्रमेवाऽजामित्वसम्पादकान्तरालकालयोगबललभ्याजामित्वसम्पादकतानुवादो यागस्तुत्यर्थो न विरुध्यते । तेषु च विष्ण्वादिदेवत्ययागेषु शाखाभेदेन क्रमाम्नातानि वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानि लिङ्गादेवाङ्गं भवन्तीति न तेषां सिद्धान्त इव मान्त्रवर्णिकदेवताकल्पकत्वमित्यपि लाघवम् ।

१. पा. सू. ७. ३. ५२.

अत एव विष्ण्वादिवाक्ये यागमात्रविधिः, देवता तु मान्त्र-वर्णिकीत्यपास्तम्, मान्त्रवर्णिकदेवताकल्पनापेक्षया तव्यप्रत्यय-द्वितीयोपात्तदेवतायां बलवत्त्वात्। तव्यादौ हि कर्मत्वमुपात्तमिति त्यज्यमानद्रव्योद्देशकर्मत्वरूपदेवतात्वं झटित्यवगम्यते, मन्त्रे तु तदपि कल्पनीयम्, इत्यस्त्येव विप्रकर्षः। तस्मात् विष्ण्वादि-वाक्यविहितानां यागानामन्तरालवाक्यमनुवादकमिति सिद्धम्।

न च तदप्यन्तरालविशिष्टयागान्तरविधायकमेव किं न स्या-दिति वाच्यम्, भेदकप्रमाणाभावेन यागान्तरत्वानुपपत्तेः। (१)विष्ण्वादियागेषु लिङ्गविनियुक्तानां मन्त्राणामस्मिन् क्रममा-त्रेण मान्त्रवर्णिकदेवताकल्पनायोगेनाऽक्लृप्तत्वाच्च। अतस्तत्र वि-ष्ण्वादिवाक्यविहितयागत्रयानुवादेनाऽन्तरालमात्रविधिः।

न च पुरोडाशनैरन्तर्यापादितजामितादोषनिवर्तकतानुवाद-बलादेव तत्सिद्धिः, 'न गिरागिरेति ब्रूया'दित्यनुवादबलादि-वेरापदस्य तत्स्थानतेति भवदेवोक्तं शक्यम्, अजामित्वानुवा-दान्यथानुपपत्तिकल्पितविधिबलेन सम्भवत्प्राप्तिकस्याऽपि प्रत्य-क्षविधिना विधातुं शक्यत्वात्। अन्यथा विधेयान्तराभावेनाऽ-न्तरालवाक्ये ऽसम्बद्धस्य जामित्वार्थवादस्य व्यवायेन विष्ण्वा-दिवाक्येष्वप्यन्वयानुपपत्तेः।

अस्तु वा विद्वद्वाक्येऽर्थवादान्वयवदत्रापि समुदायानुवादे तदन्वयः, तथापि समुदायानुवादप्रयोजनं त्रयाणामपि विष्ण्वा-दियागानां फलसम्बद्धसिद्धिः। एतदभावे हि 'तावब्रूता-मग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्नि'ति वाक्ये अग्नीषोमपदश्रवणात्तयोरुपलक्षणत्वेन विशेषणत्वेनैव वाऽन्व-यावगतेः अग्नीषोमदेवत्यस्यैव विजातीययागस्य पौर्णमासीका-

१. विष्ण्वादिवाक्येषु. इति. ख. पु.

शोद्देशेनोपादानात् त्रिद्रवाक्ये फलवाक्ये च सङ्ग्रहेण फलसम्बन्धस्याऽपत्तेः इतरयोरङ्गत्वमापद्येत । सति त्वेतस्मिन् समुदायानुवादे त्रयाणामप्युपांशुयाजसंज्ञकत्वप्रतीतेः 'उपांशु पौर्णमास्या'मिति नामैकदेशेन कालसम्बन्धोपपत्तेस्त्रयाणामपि 'प्राचीनप्रवणे वैश्वदेवेन यजेते'तिवत् फलसम्बन्धसिद्धिः । न हि तदाऽग्नीषोमीयपदमुपलक्षणं विशेषणं वा सम्भवति, समुदायानुवादवैयर्थ्यापत्त्या वैश्वदेवपदवदेव तस्य विष्ण्वादिदेवताद्वयोपलक्षकत्वात् । अतस्त्रयाणां फलसम्बन्धसिद्धिरेव समुदायानुवादप्रयोजनम् । सूत्रं निगदव्याख्यातम् ॥

( इति पूर्वः पक्षः )

( अथ सिद्धान्तः )

## चोदना वा प्रकृतत्वात् ॥ २-२-१० ॥ (सि.)

अन्तरालवाक्य एव कर्मचोदना, विष्ण्वादिवाक्ये कर्मविध्यसम्भवेनाऽनुवादासम्भवात् । तथा हि—वैश्वानरवाक्यन्यायेनोपक्रमोपसंहारैक्यादेकवाक्यत्वावगमेन नाऽत्र यागत्रयविधानमुपपत्तिमत् ; न च प्रत्येकमजामित्वार्थवादाद्भिन्नवाक्यत्वावगतिः, तस्य विष्ण्वादिदेवतासु प्रत्येकमजामिताकरणशक्तिप्रदर्शनमुखेन तज्जन्ययागस्तुतिपरतया एकवाक्यत्वेऽप्युपपत्तेः । अतोऽन्तरालवाक्य एवाऽप्राप्तिबलेन वेदत्वनिश्चयं कृत्वा यागविधिर्युक्तः, न तु प्रैषार्थकेन तव्यप्रत्ययेन, वाक्यभेदाल्लक्षणापत्तेश्च । तस्मिंश्च यागे ध्रौवद्रव्यस्य शाखाभेदेनोपांशुयाजक्रमाम्नातवैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलैः मान्त्रवर्णिकया देवतायाश्च प्राप्तत्वेन नाऽरूपत्वम् ।

नन्वेवमपि मान्त्रवर्णिकदेवताकल्पनापेक्षया तव्यप्रत्ययोपात्तदेवतात्वस्यैव विष्ण्वादेर्विधानं युक्तम् ; न च वाक्यभेद,ः

देवतात्रयविशिष्टैकयाग(१)विधानेनाऽवाक्यभेदादिति चेत्-

अत्र केचिदाहुः–मन्त्रकल्पितदेवतापेक्षया तव्यद्वितीयोपात्तदेवतात्वस्य दौर्बल्यम्। अत एव वार्तिके तद्धितचतुर्थ्यपेक्षयैव मन्त्रवर्णस्य दौर्बल्यमुक्तम्। अतश्च नोत्पत्तिवाक्ये विशिष्टविध्यापादकविष्ण्वादिविधियुक्त इति मन्त्रवर्णादेव तत्प्राप्तिरिति।

वस्तुतस्तु तव्यद्वितीयास्थले विष्ण्वादीनां तद्गतकर्मत्वस्य च क्लृप्तत्वात् केवलमुद्देशनिरूपितत्वमात्रं न व्युत्पत्तिसिद्धमिति कल्पनीयम्। यदि हि यजिस्त्यागविशिष्टमुद्देशमेव विशेष्यतया वदेत्ततोऽपि विशेष्यान्वयस्य व्युत्पत्तिसिद्धत्वादुद्देशनिरूपितत्वमपि न कल्प्येत। स तु वृद्धव्यवहारादुद्देशविशिष्टत्यागवाची, अतश्च कर्मत्वान्वयाय त्यागविशिष्टोद्देशे यजिपदस्य लक्षणामात्रमङ्गीकृत्य देवतात्वसिद्धिः। अथ वा यजिपदं यथाश्रुतमेवाऽङ्गीकृत्य त्यज्यमानहविरुद्देश्यत्वसमनियतो देवतात्वरूपाखण्डोपाधिरेव सम्प्रदानत्वैकदेशभूतो लक्ष्यते तव्यद्वितीयाभ्याम्। ततश्च तस्य त्यागं प्रत्येवान्वय इति लाघवम्। मन्त्रे तु स्वतन्त्रस्य वाक्यान्तरस्यैव कल्पनात् गौरवमिति स ततो दुर्बल एव।

अत एव देवताप्रमाणेष्वेवंविधो दौर्बल्यक्रमोऽनुसन्धेयः सर्वापेक्षया तावत्प्रबलो हविःपदसमभिव्याहृतस्तद्धितः, तस्य स्मृतिवृद्धव्यवहाराभ्यां त्यज्यमानद्रव्योद्देश्यत्वरूपे देवतात्व एव शक्तत्वात्। यस्तु देवताशब्दः (२)"इन्द्रो देवता वातो देवता" इत्यादाविव क्वचित् देवताविधायकः श्रूयेत, सोऽपि तद्धितापेक्षया दुर्बल एव, देवताशब्दस्य स्तुतिभाक्त्वहविर्भाक्त्वरूपद्विविधदेवतात्ववाचित्वेन साधारणत्वात्, देवतापदेन देवतात्वस्याऽधिष्ठानोपसर्जनतयाऽभिधानेन तद्धितवद्विशेष्यतयाऽप्रती-

१. विधानादिति चेत् इति ख. पु. २. तै० सं० ४. ३. ८.

तस्य झटिति क्रियान्वयाप्रतीतेश्च ।

चतुर्थ्यपि सम्प्रदानत्ववाचिनी तस्य त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वरूपस्य ब्राह्मणादाविव देवतायां प्रतिग्रहीतृत्वासम्भवेनाऽसम्भवादेकदेशलक्षणया देवतात्वापरपर्यायत्यज्यमानद्रव्योद्देश्यत्वरूपभाक्तसम्प्रदानत्वपरा सती ततोऽपि दुर्बलैव ।

द्वितीया तु पूर्वोक्तविधया देवतात्वं लक्षयन्त्यपि वाक्यतावच्छेदकाप्रविष्टस्यापि लक्ष्यतावच्छेदकत्वात् न चतुर्थीतुल्येति ततो दुर्बला ।

तव्यस्य तु कृदन्तत्वात् कर्मत्वोपसर्जनद्रव्यविशेष्यकबोधजनकत्वव्युत्पत्तेः न केवलं पूर्वोक्तविधया देवतात्वस्यैव लक्षणा, अपि तु तद्विशेष्यताया अपि क्रियान्वयार्थं लक्षणेति ततोऽपि दौर्बल्यम् ।

मन्त्रस्तु वाक्यान्तरकल्पकत्वात् ततोऽपि दुर्बल इत्युक्तमेवेति ।

अन्यथाऽपि समाधीयते—विष्ण्वादीनां हि तव्यप्रत्ययेन देवतात्वे लक्षिते समानाभिधानश्रुत्या तेनैव विधानोपपत्तेः पञ्चमलकारविधेयभावनायां वैशिष्ट्याभावाद्वाक्यभेदापत्तिः । नाच—अत एव तव्येन देवतात्वमात्रं लक्षयित्वा प्रवर्तनांशेऽनुवादत्वमङ्गीकृत्य तस्य विधेयभावनावैशिष्ट्योपपत्तिरिति वाच्यम्, विष्ण्वादिपदानामजामित्वोपपादकतया अर्थवादत्वेनोपपत्तावन्यतरसम्भवल्लाभविष्ण्वादिदेवताविशिष्टयागविध्यङ्गीकारायोगात् ।

अत एव नामधेयत्वेनाऽप्युपपन्नस्य अग्निहोत्रसमिदादिपदस्य मन्त्रवर्णेनाऽपि सम्भवल्लाभाग्निसमिदादिविधायकत्वं नाऽङ्गीकृतम् ; विशिष्टविधिगौरवापत्तेः । अत उत्पत्तिवाक्ये याग-

मात्रविधिः । नचैवं अर्थवादोन्नीतदेवताविधिकल्पनयाऽपि त-त्प्राप्तिसम्भवे मान्त्रवर्णिकतत्कल्पने प्रमाणाभावः । 'सूक्तभाजो हविर्भाजश्च देवता' इति स्मृत्या मन्त्रे तज्जन्यस्तुतिभाक्त्वरूपदेवतात्वस्याऽवगतौ हविर्भाक्त्वरूपस्य तस्य सुकल्पत्वात् । अत एव मान्त्रवर्णिकदेवताकल्पनापेक्षयाऽप्यार्थवादिकदेवताकल्पनं गु-र्विति ततोऽपि दुर्बलम् । अतश्चोत्पत्तिवाक्ये देवताविध्यभावेऽप्यन्तरालोपांशुत्वविशिष्ट एव यागो विधीयते ।

नचाऽन्तरालकालोऽपि पुरोडाशनैरन्तर्यापादितजामितादोषापनयनरूपफलबलादेव लभ्य इति तद्विध्यानर्थक्यम्, उपांशुयाजस्य वक्ष्यमाणरीत्या फलवत्त्वस्य क्लृप्तत्वेन दोषापनयनस्यार्थवादमात्रत्वात् । अथाऽप्यर्थवादस्यैवान्तरालकालविध्युन्नायकता भवेत्, तथाऽप्युत्पत्तिवाक्येऽन्तरालपदवैयर्थ्यापत्तेः कल्प्यविधिप्रवृत्तेः पूर्वमेवाऽनेनाऽभ्युदयशिरस्कत्वार्थमन्तरालकालो विधीयते, उपांशुत्वमपि चोपांशुयाजपदेनैव विधीयते । यद्यपि चास्य व्युत्पन्नत्वे कुत्वप्राप्तिरावश्यकी, तथापि 'दृष्टानुविधिश्छन्दसी' त्यनुसाराच्छन्दसि कुत्वाभावमात्रं वैकल्पिकम् । न त्वेतावता सर्वमेवेदमव्युत्पन्नं नामधेयम् ; प्रतीयमानावयवार्थत्यागेनाऽतिरिक्तशक्तिकल्पने प्रमाणाभावात् । अवयवार्थाङ्गीकारे चोपांशुत्वस्याऽप्राप्तत्वाद् गुणविधिरेवायमिति न किञ्चिदनुपपन्नम् । सूत्रं निगदव्याख्यातम् ॥

## गुणोपबन्धात् ॥ २–२–११ ॥ (सि)

पुरोडाशनैरन्तर्यापादिताया जामिताया अन्तरालसम्बन्धिना विधेयेन निवृत्तिप्रतीतेर्यत्राऽन्तरालकालरूपगुणोपबन्धस्तत्र क्लृप्तिरिति कर्मचोदनाप्रतीतेरन्तरालवाक्ये एव कर्मविधानम् ॥

## प्राये वचनाच्च ॥ २-२-१२ ॥ (सि)

'शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नी-षोमीयौ' इत्यर्थवादे प्रधानभूताग्नेयादिसाहचर्याच्चोपांशुयाजत्वा-वच्छेदेन प्राधान्यप्रतीतेः भवन्मते चाग्नीषोमदेवत्यस्यैव तस्य तदापत्तेः सामान्यधर्मेण साहचर्यवादानुपपत्तिः । तथाहि— 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यज' न्नित्य-न्तरालविधिसन्निधौ श्रुतमपि वचनं तदीयगुणविधिव्यवधानान्न तावत् तदर्थवाद इत्यसन्दिग्धम् । अतश्च विध्यन्तरैकवाक्यत्वा-भावात् पुराकल्पोन्नीतेनाऽपि विधिनाऽत्र न यागविधानम्, अ-न्तरालवाक्ये श्रुतेन विधिना तद्विधानसम्भवे कल्प्यविधिना त-द्विधानस्याऽन्याय्यत्वात् । नाप्युपांशुत्वस्य; उत्पत्तिवाक्येनैव प्रा-प्तिसम्भवे तद्विधाने निष्प्रयोजनत्वात् । अत एव नाऽऽज्याग्नीषोम-योः; तयोरपि 'सर्वस्मै वा एतद्यज्ञाये' त्यनेन मन्त्रवर्णेन च प्राप्त-त्वात् । यज्ञायेति चतुर्थ्यां तद्विधिसम्भवे षष्ठ्या तदङ्गीकारस्या-न्याय्यत्वाच्च । 'ना'वित्यस्य षष्ठीचतुर्थीसाधारणस्य देवताविधौ सन्दिग्धत्वाच्च । अतः परिशेषात् पौर्णमासकालविधिरेवायम् ।

यद्यपि चाऽसावन्तरालकालविध्यन्यथानुपपत्त्यैव प्राप्यते, तथापि ततः पूर्वमेव विधीयते । तत्प्रयोजनञ्च विद्वद्वाक्येऽधिकार-वाक्ये च पौर्णमास्यादिनामकत्वेन फलसम्बन्धलाभः । अन्यथा श्रुतपौर्णमासीकालसम्बन्धानामेवाऽऽग्नेयादीनां तन्नामकत्वलाभेन फलसम्बन्धापत्तेः उपांशुयाजस्याऽङ्गत्वापत्तिः । अतः फलस-म्बन्धसिद्ध्यर्थं पौर्णमासीविधिरर्थवान् । तत्र च यागत्रयपक्षेऽग्नी-षोमपदश्रवणात्तद्दैवत्यस्यैव यागविशेषस्याऽयं कालविधिस्स्या दिति तस्यैव फलसम्बन्धात् इतरयोर्वैष्णवप्राजापत्ययोरङ्गत्वमेव

स्यादित्युपांशुयाजत्वावच्छेदेन प्रधानप्रायपाठो न घटते ।

न च समुदायानुवादवैयर्थ्यापत्त्यैव प्राचीनप्रवणादिविधिवत् कालविधेस्सर्वविषयत्वम्, तस्य यागत्रयार्थवादत्वेनाप्युपपत्तेः । यागैकत्वपक्षे तु श्रूयमाणस्याऽप्यग्नीषोमपदस्याऽनुवाद्यगतत्वेनाऽविवक्षितत्वात् । त्रितयदेवत्यस्यापि फलसम्बन्धोपपत्तेः सामान्यावच्छेदेन प्रधानप्रायपाठो युज्यते ।

न च तत्राऽपि काले कर्मण उपादेयस्य स्वरूपेण प्राप्तस्याऽपि प्रयोगविधिविषयत्वेन विधेयत्वात् तद्विशेषणस्याऽग्नीषोमदेवत्यत्वस्य समुदायवाक्ये प्रधानत्रयसाहित्यस्यैव विधेयविशेषणत्वेन विवक्षोपपत्तेः कथं देवतात्रययुक्तस्य प्राधान्यमिति वाच्यम्; प्रयोगस्याऽपि समुदायवाक्यादेव प्राप्तत्वेनेह 'य इष्ट्ये' त्यादिवाक्यवत् कालसम्बन्धमात्रकरणात् । अतश्च तद्देवानुवाद्यविशेषणत्वान्न तद्विशेषणविवक्षा । अनुवाद्याऽपि चास्मिन् वाक्ये यागोत्पत्तिरेव, न तु प्राप्तत्वेऽपि यागप्रयोगः, तस्य फलसम्बन्धप्रयोजकत्वाभावेन कालसम्बन्धाकरणात् । अतश्च वैकल्पिकदेवतात्रययुक्तस्याऽप्युपांशुयाजस्य फलसम्बन्धात् सामान्यतः प्रधानप्रायपाठो युक्त एव ।

नचैवं तर्हि ममाऽप्यग्नीषोमदेवताकत्वस्याऽविवक्षितत्वात् सर्वप्राधान्योपपत्तिः, अग्नीषोमदेवताकत्वस्य विशेषणत्वेनाविवक्षायामपि उपलक्षणत्वेनाऽन्वयस्य ग्रहैकत्ववदावश्यकत्वात्, तत्र चोपलक्ष्यतावच्छेदकस्य विजातीययागत्वस्य लाभात्तदवच्छिन्नस्यैव कालसम्बन्धेन फलसम्बन्धापत्तेस्सर्वप्राधान्यानुपपत्तेः । ग्रहैकत्वस्थले तु ग्रहत्वातिरिक्तस्योपलक्ष्यतावच्छेदकस्याऽलाभात् तस्य च सर्वग्रहसाधारणत्वात् सर्वग्रहसम्मार्गसिद्धिः ।

अतएवाऽस्मन्मते सत्यप्यग्नीषोमपदस्योपलक्षकत्वे उपां-

शुत्वाद्युपलक्षकान्तरमहिम्ना उपांशुयाजत्वस्यैवोपलक्ष्यता- वच्छेदकस्य लाभात् तदनुवादेनैव कालविधिप्रतीतेः देव- तान्वययुक्तस्यैव फलसम्बन्धोपपत्तिः। अत एवोपांशुत्वादीना- मविवक्षितत्वाद्यजिना प्रयाजादीनामप्यनुवादात् फलसम्बन्धा- पत्तिरित्यपास्तम्, तेषामविवक्षितत्वेऽप्युपलक्षकत्वेन व्यावर्तक- त्वात्। अतो युक्तोऽस्मन्मते सामान्यमुखेन प्रधानमात्रपाठः।

नन्वेतत्सर्वमेतस्य वचनस्य फलसम्बन्धफलकत्वे स्यात्, न त्वेतत्सम्भवति, विनाऽपि श्रौतकालविधिमन्तरालविधित एव पौर्णमासीकालसम्बन्धस्य प्राप्तत्वेन फलसम्बन्धोपपत्तेः। न च तस्य विलम्बितप्रतीतिकत्वेन शीघ्रप्रतीतकालसम्बन्धानामाग्ने- यादीनां फलसम्बन्धापत्तेरर्थवद्वचनमिति वाच्यम्, तर्हि एत- द्वाक्यप्रतीतकालसम्बन्धसत्त्वेऽपि शीघ्रप्रतीतिकोत्पत्तिवाक्यश्रुत- कालसम्बन्धानामेवाऽऽग्नेयादीनां फलसम्बन्धापत्तेः उपांशुया- जस्य तदलाभतादवस्थ्यात्।

अथ त्वेतद्वचनवैयर्थ्यभयेनैव विलम्बितप्रतीतिकमपि कालं निमित्तीकृत्य पौर्णमास्यादिनामकत्वाङ्गीकारादुपांशुयाजस्य फ- लसम्बन्धाङ्गीकारः, ततोऽन्तरालस्य पौर्णमास्यामिवाऽमावास्या- यामपि सत्त्वात् तत्रोपांशुयाजनिवृत्तिफलकतयैतद्वचनसार्थक्योप- पत्तेर्न प्राबल्यसिद्धिः। अमावास्यायामपि कदाचिदस्त्येवाऽऽग्नै- न्द्राग्नपुरोडाशद्वयम्। तन्नैयत्यं तु पौर्णमास्यामपि नास्त्येव, असो- मयाजिनोऽग्नीषोमीयाभावात्। अतः कथं फलसम्बन्धफलकत्व- मस्य वचनस्येति चेत्, न; 'शिरो वा एतद्यज्ञस्य यदाग्नेय' इत्याद्यर्थवादात् 'त्रयोदशाऽमावास्याया'मित्यादिलिङ्गोपबृंहितात् 'यदन्वञ्चौ पुरोडाशा'वित्यर्थवादान्तर्गतपुरोडाशपदस्याऽऽग्नेया- ग्नीषोमीयमात्रपुरोडाशपरत्वे तात्पर्यावगमेनाऽमावास्यायामुपांशु-

याजामाप्तेः तद्वयाप्तिफलकपौर्णमासीविधिवैयर्थ्यादेतस्य फल-सम्बन्धमात्रफलकत्वोपपत्तेः ।

अत एव भवदेवोक्तम्—एतद्विध्यभावेऽन्तरालवाक्याद्यत्र पुरोडाशद्वयान्तरालं तत्रैवोपांशुयाजो न त्वेकपुरोडाशायामिति प्राप्नुयात्, एतद्विधिसत्त्वे तु विधिवैयर्थ्यभयेन पौर्णमासीका-लस्याऽन्तरालकालनैरपेक्ष्यप्रतीतेरेकपुरोडाशायामप्युपांशुयाजस्य पौर्णमासीसत्त्वेन प्राप्त्युपपत्तेः तद्बलेनैव चाऽऽन्तरालपदस्याऽग्नेयो-त्तरत्वमात्रलक्षणावगतेरेकपुरोडाशायामुपांशुयाजोऽनुष्ठेय इति प्र-योजनमपि एतद्विध्यभावेऽप्यन्तरालवाक्ये पुरोडाशद्वयस्य बलृ-प्तप्रयोजनत्वेनोपांशुयाजानङ्गत्वात् कालोपलक्षणत्वमात्रप्रतीतेः कालस्य च शङ्खवेलायामागन्तव्यमित्यादौ लोके श्रुतोपलक्ष-णाभावेऽप्युपलक्षकान्तरोपलक्षितस्याऽऽगमनादिक्रियान्वयदर्शनेन सुतरां प्रकृते आद्यपुरोडाशोपलक्षणेनैवाऽन्यपुरोडाशरूपोपलक्ष-णाभावेऽपि कालोपलक्षणसिद्धेः तत्रोपांशुयाजानुष्ठानस्य दशमे व-क्ष्यमाणत्वादुपेक्षितम् । तस्मादनन्यप्रयोजनकत्वाद्युक्तं फलस-म्बन्धप्रयोजनकत्वमेवैतस्य वचनस्य ।

वस्तुतस्तु 'शिरो वा एतद्यज्ञस्ये'त्यादिपौर्णमासीस्थपुरोडा-शतात्पर्यग्राहकवदेतरेयिशाखायां वैष्णवयाज्यानुवाक्यायुगलस्या-ग्नेयसाम्नाय्यान्तराले समाम्नानेनाऽमावास्यायामप्युपांशुयाजता-त्पर्यग्राहकस्य सत्त्वात् तद्भिन्नाप्तिफलकत्वोपपत्तेः नोक्तरीत्या फ-लसम्बन्धप्रयोजनकत्वोपपत्तिः । अतः तावब्रूतामित्यस्याऽनन्त-मेव 'उपांशुयाजमन्तरा यजती' त्यस्य कस्याश्चिच्छाखायामा-म्नानादिति वार्तिकदर्शनादेवं परिहर्तव्यम्—नैव 'तावब्रूता'मि-त्यस्य स्वतन्त्रविध्युन्नायकता, गौरवाद्वाक्यभेदापत्तेश्च ; अपि तु 'उपांशुयाजमन्तरा यजती'त्यनेनैकवाक्यतैव । अतश्चाऽनेन पौर्ण-

मासीकालोपांशुत्वान्तरालकालविशिष्टमुपांशुयाजाख्यं कर्म विधीयते, न त्वेतावताऽग्नीषोमदेवताऽऽज्यं च विधेयम्, प्रमाणान्तरेण सम्भवत्प्राप्तिकस्य पुनर्विधेः निष्प्रयोजनत्वात्, विशिष्टविधौ गौरवाच्च । अत एवाऽस्मिन्मते उपांशुत्वमप्युपांशुयजतीत्यनेन विधेयभावनाविशेषणत्वेन समर्प्यते, न तूपांशुयाजपदेन, तत्त्वव्युत्पन्नम्, तत्प्रख्यन्यायेन वा नामधेयमित्यवगन्तव्यम् । अन्यानि तु देवतादिपदानि अनुवादकानि सन्ति स्तावकानीति न दोषः । एवञ्चाऽग्नीषोमीयपुरोडाशवदेव पौर्णमासीकालस्योत्पत्तिशिष्टत्वात् फलसम्बन्धोपपत्तिः । अमावास्यायां चाऽकरणोपपत्तिरिति सिद्धम् । बह्वृचब्राह्मणेऽमावास्यायामप्युपांशुयाजविधानाद्वा तत्रापि तत्करणम् । दाशमिकाधिकरणं तु कृत्वाचिन्तया । 'त्रयोदशाऽमावास्याया'मिति लिङ्गं त्ववयुत्यानुवादः । एतद्बलादेवाऽमावास्यायां विकल्प इति गुरवः ॥

प्रयोजनं पूर्वपक्षे यागत्रयानुष्ठानम्, सिद्धान्त एकस्यैव देवता विकल्पनेति स्पष्टम् ॥

इति चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

---

**अथ पञ्चममाघाराग्निहोत्राधिकरणम् ॥ ५ ॥**

## आघाराग्निहोत्रमरूपत्वात ॥ २-२-१३ ॥ (पू-)

**( विषयसंशयौ )**

दर्शपूर्णमासयोः 'आघारमाघारयती'ति प्रकृत्य श्रुतम्—'ऊर्ध्वमाघारयति, सन्ततमाघारयती'त्यादि । तथा 'अग्निहोत्रं जुहोती'ति प्रकृत्य 'दध्ना जुहोती'त्यादि । तत्र किमूर्ध्वादिवाक्यैः दध्यादिवाक्यैश्च विहितानां कर्मणां संज्ञायुक्तवाक्ये समुदायानु-

वादके ? उत तयोरेव विहितयोः कर्मणोरितराणि गुणविधयः; इति सन्देहः ।

( सङ्गतिः )

पूर्वाधिकरणे तव्यस्य श्रुत्या विधायकत्वाभावात् वाक्यभेदापत्तेश्च युक्तमर्थवादत्वम्, इह तु त्वयाऽपि दध्यादिवाक्यानां विधित्वाङ्गीकारात् शुद्धगुणविधेश्च वक्ष्यमाणरीत्या असम्भवेन विशिष्टकर्मविध्यवश्यम्भावाद्युक्तः समुदायानुवाद इति पूर्वपक्षोत्थानादनन्तरसङ्गतिः, पूर्वपक्षे गुणादभ्यासाद्वा कर्मभेदः, सिद्धान्ते नेति पादाध्यायसङ्गतिरपि ।

( पूर्वपक्षः )

तत्र विधेः प्रवर्तनारूपत्वात्तस्याश्च धात्वर्थविशेषावच्छिन्नप्रवृत्तिरूपभावनाव्यतिरिक्तविषयत्वासम्भवेन शुद्धगुणविधानानुपपत्तेः दध्यादिवाक्येऽपि धात्वर्थावच्छिन्ना भावनैव विधेया, न च विहितस्य विधानं सम्भवति, इति भेदसिद्धिः । नच विहितस्यापि फलकालादिसम्बन्ध इव द्रव्यादिसम्बन्धेनाऽपि पुनर्विधानोपपत्तिः, स्वत उत्पन्नस्याऽपि फलसम्बन्धे विनियोगाधिकारयोः कालसम्बन्धे विनियोगमात्रस्य विधेयत्वेन विध्युपपत्तिवद्द्रव्यादिसम्बन्धे उत्पत्तेरेवाऽऽवश्यकत्वात्तस्याश्च प्राप्तत्वेन विधानायोगात् भेदोपपत्तेः । अतश्च दध्यादिवाक्येषु देवताविधिवाक्ययोः मन्त्रवाक्ययोश्च होमा एव गुणादभ्यासाद्वा भिन्ना विधीयन्ते । तेषां च समुदायसिद्ध्यर्थमनुवादोऽग्निहोत्रं जुहोतीत्यनेन क्रियते, न तु कर्मान्तरमभ्यासाद्विधीयते, रूपाभावात्; समुदायसिध्यर्थकत्वेनाऽनन्यपरत्वाभावाच्च ।

न च समुदायसिद्धिवैयर्थ्यम्, 'अग्निहोत्रं जुहोती'त्येतदभावे फलवाक्य निमित्तवाक्ये चाऽग्निहोत्रनामावच्छिन्नेन जुहोतिना

प्रसिद्धाग्निदेवताकस्यैव होमस्य फलादिसम्बन्धः स्यात्, न तु सूर्यदध्यादिहोमानाम् । एतत्सत्वे तु सर्वेषामेव 'वैश्वदेवेन यजेते' तिवदनुवादादग्निहोत्रनामकत्वोपपत्तेः फलादिसम्बन्धोपपत्तिः इति सार्थक्योपपत्तेः ।

नचैवं दध्यादिहोमे स्ववाक्यत एवाऽन्यादिदैवत्यहोमेषु चाक्षेपेण यत्किञ्चिद्द्रव्योपपत्तावपि दध्यादिहोमेषु स्ववाक्ये देवताभावाद्वाक्यान्तरेण देवतामात्रविधेश्च तत्राऽनिष्टत्वादाक्षेपेण देवताया अप्राप्तेररूपत्वापत्तिरिति वाच्यम्; एकफलसाधनानामेषां एकप्रयोगविधिपरिग्रहेण सान्नाय्यवत् सकृदनुष्ठानोपपत्तेः, होमान्तरेष्वप्यपेक्षितत्वाद्द्रव्यदेवतादीनां प्रसङ्गेनोपकारकत्वोपपत्तेः ।

एवमाघारस्थलेऽप्यूर्ध्वत्वादिगुणानां धात्वर्थावच्छिन्नभावनाविधिमन्तरेण विधानायोगात्तयोरपि विधिप्रतीतेः विहितविधानायोगेन भेदसिद्धिः । तेषां च ऊर्ध्वत्वादिगुणेन्द्रदेवतादिविशिष्टाघाराणामवान्तरप्रकरणादुपक्रमस्थत्वाद्वाऽऽ''घारमाघारयती'' त्ययं समुदायानुवादः, न तु ध्रौवाघारस्यापि; तस्याऽग्निसम्मार्गविधिना व्यवहितत्वात् । तत्प्रयोजनश्चैन्द्राघारेण सहप्रयोगविध्यवगतयौगपद्यसिद्ध्या तदीयेन्द्रदेवताकत्वसिद्धिद्वारा यागरूपतासिद्धिः यौगपद्यसिद्धिमात्रं वा । अन्यथा हि कदाचिदुत्तरकाले क्रियमाणेन समिद्यागेनाऽपि यौगपद्यं प्रसज्येत । तस्मा दृप्तिफलकेन्द्रयागयौगपद्यसिद्धिः समुदायानुवादप्रयोजनम् ।

केचित्तु 'तस्याऽऽघारमाघार्यै' त्यनेन प्रयाजार्थे चतुर्गृहीते संस्कार्ये सर्वेषां विनियुज्यमानानामाघारकर्मणामेकत्वसिद्धिः समुदायानुवादप्रयोजनमित्याहुः, तत्स्वयमेवाऽऽघारकर्मणोऽर्थकर्मत्वस्य तत्प्रख्याधिकरणे साधितत्वात् संस्कारकर्मत्वाङ्गीकारेऽपि

वा राजसूयन्यायेन समुदायानुवादं विनाऽपि तन्त्राभिधानावगत-समुदायाभिप्रायेणैकत्वोपपत्तेरुपेक्षितम् ।

यत्त्वत्र मूले आघाराग्निहोत्रवाक्ययोः समुदायानुवादकत्वे साधकान्तरमुक्तम्—उत्पत्तिवाक्ये रूपज्ञानाभावाद्विधानायोग्यत्वमिति; तस्याऽयमभिप्रायः-रूपवत्ताज्ञानस्य योग्यताज्ञानाविधया विधेयताज्ञानं प्रति कारणत्वमाग्नेयादिवाक्ये विद्वद्वाक्ये चान्वयव्यतिरेकाभ्यां क्लृप्तम्, नीरूपस्य विधानायोग्यत्वात्, अतः आघाराग्निहोत्रवाक्ययोरूपाश्रवणान्न तत्र कर्मणो विधानम्, तदभावे च तदनुवादेनाऽपि गुणविधानायोगान्न वाक्यान्तरेणाऽपि रूपवत्ताज्ञानमिति; तत्तु दध्यादिवाक्ये कर्मविधित्वेऽपि च देवताभावेन स्ववाक्ये रूपज्ञानाभावस्य तदवस्थत्वादयोग्यतानिश्चयाभावमात्रेण च योग्यताज्ञानाभावेऽपि श्रुतशब्दाच्छाब्दबोधस्याऽऽनुभाविकत्वाद्रूपवत्ताज्ञानस्य करणत्वानुपपत्तेः, तदभावेऽपि अरूपवत्तानिश्चयाभावमात्रेण विधेयत्वोपपत्तेः, पश्चाच्च रूपज्ञाने सत्यनुष्ठानोपपत्तेः रूपवत्ताज्ञानस्यैव कारणत्वकल्पनेऽपि वा उत्पत्तिवाक्येऽपीष्टसामान्यवदनिर्धारितविशेषरूपसामान्यज्ञानमात्रेण विधेयत्वोपपत्तेः उपेक्षितम् । यदि तु कथञ्चिदेतदुपन्यसनीयमित्याग्रहः, तदा दध्यादिवाक्येष्वपि 'यदग्नये चे'ति वाक्यस्थचतुर्थ्यन्तपदानुषङ्गेण स्ववाक्ये रूपलाभोपपत्तेः तदलाभचोद्यं परिहर्तव्यम् । तत्सिद्धमाघाराग्निहोत्रवाक्ये समुदायानुवादके इति ॥

सूत्रं निगदव्याख्यातम् ॥

## संज्ञोपबन्धात् ॥ २-२-१४ ॥ (पू)

एवं चाऽग्निहोत्रमाघारमिति द्वितीयान्तसंज्ञोपबन्धोऽपि दध्यादिवाक्यविहितानां कर्मणामर्थाक्षिप्तसाध्यत्वेनाऽनुवादादुपपन्नो

भवति । इतरथा स्वतन्त्रस्य विधेयत्वे तस्य करणत्वात् तृतीयार्थ-लक्षणा स्यात् ॥

## अप्रकृतत्वाच्च ॥ २-२-१५ ॥ ( पू )

नन्वेवं "अग्निहोत्रं जुहोती"त्यत्र वाक्यान्तरेण रूपालाभेऽपि स्ववाक्य एव(१) तत्प्रख्यन्यायाभावेन अग्निहोत्रशब्दस्य गुणविधित्वापत्त्या रूपलाभोपपत्तेः दध्यादिवाक्यवद्विनिगमनाविरहेण कर्मविध्यवसायात् कथं समुदायानुवादत्वमिति चेन्न ; तत्प्रख्याधिकरणोक्तमार्गेण चतुर्थीसमासस्य व्याकरणलक्षणाननुगततया प्रकर्षेणाऽकृतत्वात् देवतारूपगुणविधित्वाशङ्कानुपपत्तेः । अत एव 'मासमग्निहोत्रं जुहोती'त्यत्र अग्निहोत्रपदस्य गुणविधित्वमनयैव युक्त्या निराकर्तव्यम् , न तु तत्प्रख्यन्यायेन । तत्प्रख्याधिकरणे तदुक्तिस्तु अभ्युपेत्यवादेनैवेति द्रष्टव्यम् । अतश्च रूपवत्त्वात्समुदायानुवादावेतौ ॥

( इति पूर्वः पक्षः )

( अथ सिद्धान्तः )

## चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ २-२-१६ ॥ ( सि )

अन्यानाक्षिप्तविधिशक्तिकत्वादाघाराग्निहोत्रवाक्ययोः कर्मचोदनैव प्रत्येतव्या । एवं चाऽनुष्ठापकस्य विधेः स्वशब्दार्थभूतधात्वर्थावच्छिन्नभावनाविषयत्वात् प्रथमविधिप्रकाराङ्गीकरणाल्लाघवम् । अतश्चाऽनन्यपरपुनःश्रवणादपि कर्मविधित्वनिश्चयः । न च समुदायानुवादप्रयोजनकत्वेनाऽन्यपरता, दध्यादिवा-

---

१. पू. मी. १.४.४.

वयेषु पञ्चमविधिप्रकारापेक्षया लाघवेन तृतीयविधिप्रकाराङ्गी-करणस्यैव न्याय्यत्वावगमेन कर्मविध्यनुपपत्तेः समुदायानुवा-दायोगात् । न च प्रवर्तनारूपस्य विधेर्धात्वर्थविशेषावच्छिन्नभाव-नारूपप्रवृत्तिविषयतां विना सिद्धरूपगुणविषयत्वानुपपत्तेः न तृती-यविधिप्रकारोपपत्तिरिति वाच्यम् , सिद्धरूपस्य साक्षाद्विधिवि-षयत्वायोगेऽपि विधिविषयीभूतभावनावच्छेदकत्वेन परम्परया विधिविषयत्वोपपत्तेः । यद्यपि विधिगुणयोः नाऽनेन संसर्गेणा-न्वयो व्युत्पन्नः, तथाऽपि गुणो भावनायां कारकतादिसम्बन्धेन प्रकारीभवति, विधिश्च गुणविशिष्टां तां विदधत् फलतो गुण-विषयः सम्पद्यते ।

न च प्राप्तत्वात् भावनायाः पुनर्विधाने भेदापत्तिः, एकवारं कर्तव्यत्वेन बुद्धाया अपि गुणविशिष्टायाः पुनः कर्तव्यत्वबोधो-पपत्तेः; तस्य च विशेष्यांशे अज्ञातज्ञापनरूपविधिफलाभावेऽपि विशेषणांशे तत्फललाभेन सार्थक्योपपत्तिः । विशेष्यांशे त्वसा-वनुवाद एव । अत एव सर्वत्र प्रातीतिके विशिष्टभावनाविधाने सत्यपि फलविषयभेदादेव षड्विधिप्रकारा उद्भिदधिकरणेऽस्मा-भिरुपपादिताः । दौर्बल्यश्चोत्तरोत्तरं तेषामुक्तम् । वार्तिककारेण च प्रातीतिकभावनाविधिनैरपेक्ष्येणाऽष्टौ श्रुतिप्रकाराः परोक्ता दूषिताः । विस्तरभिया तु त इह न प्रपञ्च्यन्ते । अतोऽपि वि-शेष्यांशस्य प्राप्तत्वेऽपि गुणविशिष्टत्वेन रूपेण पुनर्विधानात् फ-लतश्च गुणविधित्वोपपत्तेः तृतीयप्रकारोपपत्तिः ।

तत्रापि च गुणकरणिकायां भावनायां धात्वर्थस्य कर्मत्वे-नैवाऽन्वयो न तु करणत्वेन, मत्वर्थलक्षणापत्तेः । उपपादितं चैत-(१)दुद्भिदधिकरणे । नचैवं प्राप्ताया अपि भावनाया गुणविधा-

१. पू. मी. १. ४. २.

नार्थं पुनर्विध्यभ्युपगमे विद्वद्वाक्यविहितभावनाया अप्या'ग्नेयोऽष्टाकपाल' इत्यत्र द्रव्यदेवताविशिष्टत्वेन रूपेण पुनर्विधानोपपत्तेर्वाक्यभेदानापत्तिः, विधिविषयभावनायामनेकगुणवैशिष्ट्योपपत्तावपि विधिफलस्यैकविषयत्वस्वाभाव्येनाऽनेकाविषयत्वे आवृत्त्यवश्यम्भावात् ।

अत एव यत्राऽपूर्वभावनाविधिः तत्र विधिफलस्य विशेष्य एवैकस्मिन् सत्त्वादार्थिकेन च विध्यन्तरेण विशेषणानां विधानाम्नावृत्तिरिति(१)स्पष्टं(२)पौर्णमास्यधिकरणे । प्रकृते तु विधिफलस्यैकदध्यादिविषयत्वेन वाक्यभेदाभावाद्युक्तस्तृतीयविधिप्रकार इति प्रकृतकर्माभावान्नाऽऽघाराग्निहोत्रवाक्ययोः समुदायानुवादकत्वम् । न च दध्यादिवाक्ये वाक्यभेदाभावेन कर्मविधायित्वाभावेऽपि 'यदग्नये चे'ति वाक्याभ्यां प्राप्तकर्मानुवादेनाऽनेकगुणविधाने वाक्यभेदापत्तेः कर्मविध्यवगमात्, विशेषतश्चोत्पत्तिवाक्यशिष्टदेवतासमुच्चयानुरोधेनाऽऽग्नेयवदेकैकस्मिन् वाक्ये कर्मद्वयविध्यवगतेश्चतुर्णां कर्मणामग्निहोत्रं जुहोतीत्ययं समुदायानुवादो भविष्यतीति वाच्यम्; तत्प्रख्याधिकरणोक्तमार्गेण तत्राऽपि प्रजापतिमात्रविधानेन सायंप्रातः कालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानेन वाऽग्निसूर्यादीनां मन्त्रवर्णैः प्राप्तिमभ्युपगम्य तृतीयविधिप्रकारोपपत्तेः । तस्मादग्निहोत्रं जुहोतीत्यमेव कर्मविधिः ।

न चैवमनेकेषां गुणानामेकार्थत्वाद्विकल्पापत्तिः, 'सायं जुहोति' 'प्रातर्जुहोती'ति वाक्याभ्यां तावत्कालविधानेऽपि 'स वै सायं च प्रातश्च जुहोति'त्यनेन च तत्समुच्चयविधानादुत्पन्नशिष्टसमुच्चयानुरोधेन साङ्गस्याऽऽवृत्तिरित्यवगतेः । न च पौर्णमा-

---

१. क्षुण्णं. हात. ग. पु. २. पू. मी. २. २. ३

स्यमावास्याकालीनयोः दर्शपूर्णमाससंज्ञयोः कर्मणोर्भेदेन तत्रा-ङ्गावृत्त्युपपत्तावपि अग्निहोत्रसंज्ञस्य कर्मणः सायम्प्रातःकालयोर्भे-देनाऽनुष्ठीयमानस्याऽपि स्वरूपेणैकत्वात् सकृत्कृतैरेवाऽङ्गैरुपका-रसिद्धेः प्रचारविप्रकर्षेऽपि सवनीये सकृदङ्गानुष्ठानवदिहापि तदु-पपत्तेः कथं साङ्गस्य द्विरावृत्तिरिति वाच्यम्, उत्पत्तिवाक्ये उत्प-न्नस्याऽपि कर्मणः सायम्प्रातःकालवाक्याभ्यां प्रयोगद्वयविधा-नात् तस्य च साङ्गप्रधानविषयत्वात् पौर्णमास्यमावास्ययोरिव साङ्गस्याऽभ्यावृत्तिसिद्धेः। सवनीये तूत्पत्तिवाक्य एवाऽऽश्विनग्र-हग्रहणोत्तरकालश्रवणात् प्रयोगविधिप्रतीतेः "वपया प्रातस्सवने चरन्ती"त्यादौ च सवनीयप्रयोगावयवभूतानामेव वपाप्रचारा-दीनां कालविधानात्तन्मात्रोपयोग्यङ्गविशिष्टानां प्रयोगविधानेऽ-पि सवनीयप्रयोगविधिपरिगृहीतानां तदीयपरमापूर्वोपयोगिप्र-याजादीनामुत्पत्त्यपूर्वोपयोगिनां च साधारणानां वपाप्रचारादि-वाक्यपरिगृहीतत्वेन नाऽऽवृत्तिरिति वैषम्यम्।

ननु-'आश्विनं ग्रहं गृहीत्वे'त्यस्य क्रमविधित्वात् कालवि-धित्वाभावे न सवनीयप्रयोग(१)विधित्वम्। क्रमस्य पाठादेव प्राप्त्युपपत्तेरस्य कालविधित्वावसायात्। "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीये"त्यनयोस्त्वान्तयोरुभयोरपि क्रियान्वयव्यु-त्पत्तेः। परस्परं च पाठादेव क्रमोपपत्तेः। परिवीयेत्यनेन परि-व्याणान्तरविधायकेन व्यवहितस्य त्वान्तस्य क्रमविधायकत्वानु-पपत्तेश्च। विशिष्य चेदमेकादशे निरूपयिष्यते। तस्मायुक्तः कालानुरोधेन साङ्गस्याऽभ्यासः।

एवमेकैकस्मिन्नपि काले दशाहुतिपक्षे 'द्वे आहवनीये जु-होति, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने, दश सम्पद्यन्ते,

१. विषय इति क० पा०

दशाक्षरा विराट्, य एवं विद्वान् विराड्सम्पन्नमग्निहोत्रं जुहोती'त्यत्राऽग्निहोत्रवाक्योत्पन्नस्य होमस्य विराट्सम्पत्तिवाक्येनाऽप्राप्तिवत्फलभ्यविधिशक्तिकेन दशधाऽऽवृत्तिर्विधीयते । तत्र 'द्वे आहवनीये' इति वाक्येनाऽभ्यासद्वयस्याऽऽहवनीयाधिकरणकत्वे विहिते ऽवशिष्टाभ्यासेषु तत्तद्वाक्याभ्यां गार्हपत्यान्वाहार्यपचनरूपाधिकरणमात्रविधानात्(१) 'समं स्यादश्रुतत्वा'दिति न्यायेन चैकैकस्मिन् गार्हपत्यान्वाहार्यपचनरूपेऽधिकरणेऽभ्यासचतुष्टयप्राप्तेर्दशधाऽभ्याससिद्धिः ।

न च "यदाहवनीये जुहोती"ति अनारभ्याधीतेनैवाऽभ्यासद्वय आहवनीयप्राप्तेरभ्यासान्तरेषु नाऽधिकरणविधित्वादेव तद्बोधोपपत्तेः 'द्वे आहवनीये' इत्यस्य वैयर्थ्यापत्तिरिति वाच्यम् । एतद्विध्यभावे विराट्सम्पत्तिवाक्यविहितेऽपि दशधाऽभ्यासे गार्हपत्यादिवाक्ययोः होमानुवादेनाऽधिकरणमात्रविधाने 'समं स्या'दिति न्यायेनैकैकस्मिन् पञ्चहोमाभ्यासापत्तेश्चतुःपदानुवादायोगात् चतुस्सङ्ख्याविशिष्टहोमोद्देशेनाऽधिकरणमात्रविधौ च वाक्यभेदापत्तेः चतुस्सङ्ख्योद्देशेनैव तद्विधौ चाऽधिकरणवचतुष्टयापत्तेः चतुस्सङ्ख्याकोद्देशेनाऽधिकरणविधौ चाऽतिप्रसक्तोपपत्तेः, सङ्ख्याधिकरणविशिष्टतावत्कर्मान्तरविध्यवश्यम्भावादष्टानामेतेषामग्निहोत्रवाक्यविहितस्य च देवताभेदेन द्विरावृत्तस्यैव कर्मणो विराट्सम्पत्तिवाक्ये लिङ्गसमवायेनाऽनुवादापत्तेः । न चेष्टापत्तिः, विराट्सम्पत्तिवाक्ये अग्निहोत्रपदस्य गौणत्वेऽङ्गीकृतेऽपि फलादिवाक्ये तदङ्गीकारे प्रमाणाभावेनाऽग्निहोत्रवाक्यविहितस्यैव फलादिसम्बन्धापत्त्याऽऽपराग्निकहोमानामफलत्वापत्तेः । अत उक्तविधया तेषामपि फलादिसम्बन्धसिद्ध्यर्थं "द्वे

१. जै. सू. १० २०

आहवनीये" इत्यस्य सार्थक्योपपत्तिः ।

ननु त्वदुक्तरीत्याश्रयणेऽपि 'द्वे आहवनीये' इत्यत्र द्वित्व विशिष्टहोमोद्देशेनाऽऽहवनीयविधौ वाक्यभेदापत्तेः न तावत् सामान्यविधितः पूर्वमेवैनद्विधिप्रवृत्त्यङ्गीकरणं युक्तम्, न च नैदोष्यमङ्गीकृत्याऽपि लक्षणया अभ्यासद्वयाभिन्नेष्वभ्यासेष्वाहवनीयनिवृत्तिर्विधीयत इति युक्तम्; तथा सति तेष्वाहवनीयप्राप्तेर्नैषत्वेन(?) 'न तौ पशौ करोति।' मिवद्विकल्पापत्तेः । अतः कथं त्वदुक्तस्याऽपि सिद्धिरिति चेत् ? न, अभ्यासद्वयभिन्नाभ्यासेष्वाऽऽहवनीयभिन्नमधिकरणं कुर्यादित्येवं पर्युदासाङ्गीकरणेन विकल्पानापत्तेः । नचैवं लक्षणापत्तिः, वचनव्यक्त्यन्तरासंभवेनाऽगत्याऽङ्गीकारात् । न ह्याहवनीयमुद्दिश्य द्विरभ्यासविनियोगविधिः सम्भवति, आहवनीयाङ्गत्वापत्तेः । नाऽऽप्याहवनीये निमित्ते तद्विधिः, तस्य नियतत्वेन निमित्तत्वानुपपत्तेः । यदि तु 'गार्हपत्ये जुहोति, (२)अन्वाहार्यपचने जुहोती' ति वाक्यान्तराभ्यां तस्य पाक्षिकतया निमित्तत्वमुच्यते, ततः प्राकरणिकत्वेन ताभ्यां तस्य बाधादेव नित्तित्वानुपपत्तिः । अतो युक्तो लक्षणया पर्युदासः । यद्यपि च न पर्युदासमात्रं तत्फलम्, तस्याऽधिकरणान्तरविधिबलादेव सिद्धेः, तथाऽप्यापराग्निकहोमानां फलादिमन्त्रव्यासिद्धिरुक्तविधया फलं भवतीति न कश्चिद्विरोधः ।

यत्त्वत्र कैश्चित् न्यायसुधाकृदुक्तपक्षान्तरावलम्बनेनोक्तम्-

---

१. तौ आज्यभागौ पशुयागे नाऽनुतिष्ठेदित्यर्थः । अत्र निषेधार्थं आज्यभागयोः दर्शपूर्णमासत अतिदेशावश्यंभावेन अतिदिष्टस्य शास्त्रीयत्वेनाऽत्यन्तबाधायोगात् विकल्पे पर्यवसानमिति सिद्धान्तितं दशमाष्टमे ।

२. अन्वाहार्यं दर्शपूर्णमासयोर्दक्षिणात्वेन देयमोदनम्, तत् पच्यते यस्मिन् इत्यन्वाहार्यपचनो दक्षिणाग्निः ।

कारेऽस्वरसबीजमुक्त्वा सुधोक्तं पक्षान्तरमुपपाद्य विधिरसायनदूषणाय प्रवृत्तम्; तथाहि—न तावत् 'द्वे आहवनीये' इति परिसङ्ख्याफलकोऽपूर्वविधिस्सम्भवति, सामान्यविधेरपि प्रत्यक्षत्वेन ततः पूर्वमेतद्विधिप्रवृत्त्यनुपपत्तेः, द्विरभ्यासोद्देशेनाऽऽहवनीयविधौ सामान्यविधिनोपसंहारापत्तेश्च। नाऽपि प्राप्तपरिसंङ्ख्या, त्रैदोष्यापत्तेः । अतश्च त्रिष्वपि वाक्येषु सङ्ख्यैव विधीयते। सा च यद्यपि न होमानुवादेन विधातुं शक्या, तथात्वे अधिकरणानां सर्वावृत्तिषु साङ्कर्यापत्तेः। सङ्ख्यानां तु समुच्चयेन सङ्ख्यान्तरोपजननापत्तेश्च, विकल्पे चतुस्सङ्ख्याविधायिवाक्यद्वयवैयर्थ्यापत्तेश्च, तथापि 'गार्हपत्ये जुहोति, अन्वाहार्यपचने जुहोती' ति वचनान्तरप्राप्ततत्तदधिकरणताकोद्देशेन विधीयते। तासां च विकल्पे प्राप्ते(१) 'तां चतुर्भिरादत्त' इतिवत् विराट्सम्पत्तिवाक्येन समुच्चयो विधीयत इति। तत्रेदं वक्तव्यम्-यस्तावदस्वरसः स पर्युदासाङ्गीकरणादेव निरस्तः। यदपि च पक्षान्तरमुक्तम्, तदपि गार्हपत्यान्वाहार्यपचनवाक्याभ्यामनारभ्याधीताहवनीयवाक्यबोधादाहवनीयाधिकरणताया अप्राप्तेः तदुद्देशेन द्वित्वविधानानुपपत्तेराहवनीयाधिकरणकत्वस्याऽपि च प्रतिप्रसवविधौ कर्मान्तरत्वापत्तेस्तस्य चाग्निहोत्रपदवाच्यत्वाभावेन फलसम्बन्धानापत्तेः परिहर्तव्यम्।

किञ्च द्विरावृत्त्यादीनां केन समुच्चयसिद्धिः? विराड्वाक्येनेति चेत्! तत्र समुच्चयवाचकपदाभावेन तद्विध्यनुपपत्तेः, 'तां चतुर्भि' रित्यत्र तु न समुच्चयो विधीयते। अपि तु समुच्चयफलकचतुस्सङ्ख्यैव विधीयत इत्युक्तम्, प्रकृते तु दशत्वसङ्ख्या-

१. चयनप्रकरणस्थं वाक्यमिदम्। तां अभ्रिं खनित्रं चतुर्भिर्मन्त्रैः देवस्यत्वेत्यादिभिः मृत्खननार्थं हस्ते गृह्णीयादित्यर्थः।

विध्यङ्गीकारे तत एव द्विराहुत्यादेः प्राप्तत्वात् न विधिसम्भवः। न च समुच्चय विध्यभावेऽपि त्रयाणामग्नीनामदृष्टार्थत्वेन समुच्चयात् तन्निमित्तकानामभ्यासनामपि समुच्चयापात्तिः, प्रक्षेपस्य प्रेक्ष्यद्रव्याधारं विनापि पूर्वाधारवियोगमात्रेणोपपत्तेः आहवनीयसंयोगस्याऽदृष्टार्थत्वेऽपि सप्तमीश्रुत्या आधारताजननरूपदृष्टद्वारैवाऽदृष्टार्थत्वावसायात् दृष्टावान्तरकार्यार्थत्वेन विकल्पोपपत्तेः। अत एव पदादिनाऽऽहवनीयादेर्बाधोऽपि सङ्गच्छते। नचैवं अग्नीनां दृष्टार्थत्वे प्रतिनिध्यापत्तिः, प्रतिनिधावदृष्टरूपाग्निसादृश्यसत्वे प्रमाणाभावेन तदनापत्तेः। अत एव क्वाचित्को (१)ब्राह्मणपाण्यादिविधिरभावे विधिरेव। अतः प्रकारान्तरेणाऽपि न समुच्चय सिद्धिः। तस्मादुक्तप्रकार एव श्रेयान्।

नचैवं 'गार्हपत्ये जुहोत्यन्वाहार्यपचने जुहोती' ति वचनान्तरेणैव 'समं स्या' दिति न्यायसहकृतेनाऽभ्यासचतुष्टये तत्तदधिकरणप्राप्तेः 'चतस्रो गार्हपत्य' इति वचनद्वयवैयर्थ्यमिति वाच्यम्, 'चतस्रो गार्हपत्य' इत्यादेरुपसंहारार्थत्वेन वचनचतुष्टयसार्थक्योपपत्तेः। अथ वा—अस्तु 'द्वे आहवनीय' इत्यस्य शाब्दपर्युदासरूपपरिसङ्ख्याविधेरिदं वाक्यद्वयम्, शेषो विधेयस्तुत्यर्थः सर्वथा 'द्वे आहवनीये' इत्यस्याऽऽपराग्निकहोमानां फलादिसम्बन्धासिध्यर्थत्वमिति सिद्धम्। तस्मादेकैकस्मिन्नपि काले दशधाऽभ्यासात् तद्देवतामन्त्रादीनां सर्वेषामेव समावेशोपपत्तेः न विकल्पः। एवं च 'द्वे आहवनीये, द्वे गार्हपत्ये, द्वे अन्वाहार्यपचने जुहोति, षट् सम्पद्यन्त' इति शाखान्तरवचनात् षडाहुतिपक्षे 'सप्त च शतानि विंशतिश्च संवत्सरे सायमाहुतयः। सप्त चो एव शतानि विंशतिश्च संवत्सरे प्रातराहुतय' इति लिङ्गात्

१. यद्यग्निं न विन्देत्। ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्। एष वा अग्निर्वैश्वानरो यद्ब्राह्मणः। इत्यादि॥

मितविधिबलेन वा द्व्याहुतिपक्षे च तावद्देवतामन्त्रादीनां न विकल्पः ।

नचैवं वाचनिकाऽभ्यासविधिवशादेव प्रजापतेरग्न्यादिसमुच्चयसिद्धौ पुनः 'यदग्नये च' त्यत्र तद्विधानानुपपत्तिः, लिङ्गानुमितविधिना इतराहुतीनां पाक्षिकत्वमापणेऽपि अस्यां शाखायां द्व्याहुतिसमुच्चयस्य 'यदग्नये चे' ति वाक्याधीनत्वात् । दध्यादिद्रव्याणामेकस्मिन् कर्मणि विकल्पोऽगत्या इष्ट एव । तस्मान्नाऽऽघाराग्निहोत्रवाक्यं समुदायानुवाद इति सिद्धम् ।

प्रयोजनम्—अग्निहोत्रवाक्ये पूर्वपक्षे दध्यादिद्रव्याणि सान्नाय्यवत् सम्प्रतिपन्नदेवताकत्वेन सहोपादाय सकृद्यागः, सिद्धान्ते तु विकल्पेनेति न्यायसुधोक्तमेव द्रष्टव्यम् ।

यत्त्वत्र केचित्—पूर्वपक्षे दध्यादिहोमेषु देवताप्राप्तिमुपपादयितुमशक्नुवन्तः तत्रत्यजुहोतेः प्रक्षेपमात्रलक्षकत्वेन पूर्वपक्षमुपपाद्य, न्यायसुधाकृतं बहुभाषित्वेन दूषयन्ति । तत् प्रसङ्गादनुषङ्गतो वा देवताप्राप्तेः पूर्वपक्षे उपपादितत्वात् जुहोतेः प्रक्षेपमात्रलक्षणायां प्रमाणाभावेनोपेक्षणीयम् ।

यदि तु दध्यादिवाक्ये गुणमात्रविधित्वाङ्गीकारेऽपि 'यदग्नये चे' ति वाक्यद्वये विहितकर्मणामेव समुदायानुवादोऽग्निहोत्रवाक्यमिति पूर्वपक्षीक्रियेत, तदाऽन्यदपि प्रयोजनम्—मासाग्निहोत्रे सायम्प्रातः कर्मणां मध्य एकस्य सौर्ये द्वयोराग्नेययोर्मध्ये एकस्यैव कस्यचिद्विकल्पेन धर्मातिदेशात् मासाग्निहोत्रे सायंप्रातर्वा विकल्पेन मासपर्यन्तं कार्यम् । न चाऽऽत्यन्तसंयोगत्वाचिद्द्वितीयान्तमासपदोपदिष्टसातत्यानुरोधेनोऽतिदेशिककालबाधात् सर्वदैव कर्तव्यत्वापत्तिः, आहारविहाराद्यावश्यककार्यानुरोधेन सातत्यबाधावश्यम्भावे जातेष्टिन्यायेनाऽऽतिदेशिककाला

नुरोधेनाऽपि तत्सम्पादनस्य सङ्कर्षे वक्ष्यमाणत्वात् ।

नचैवमपि 'उपसद्भिश्चरित्वे' ति क्त्वाप्रत्ययेनोपसदनन्त-रकर्तव्यतारूपक्रमविधानादातिदेशिककालबाधावश्यम्भावः, उप-सद्दिनोत्तरदिनेष्वबाधेऽपि वा तद्दिनेषु तद्बाध आवश्यक एवेति वाच्यम् ; व्यवहिताव्यवहितसाधारण्येन पूर्वकालतामात्रवाचि-क्त्वाप्रत्ययस्याऽसति प्रमाणान्तरेऽव्यवहितत्वरूपक्रमपरत्वेऽपि सायम्प्रातः कालप्रापकचोदकसत्त्वे पूर्वकालतामात्रपरत्वाङ्गीका-कारात् । अतो युक्तं मासाग्निहोत्रे सायम्प्रातर्वा विकल्पेनानुष्ठानं पूर्वपक्षे, सिद्धान्ते तु समुच्चयेनेति ।

आघारवाक्ये तु पूर्वपक्षे ऊर्ध्वत्वादीनां मध्ये यस्यैव दैवा-दन्तरायस्तद्युक्तस्यैव कर्मण आवृत्तिः, सिद्धान्ते तु गुणलोपनि मित्तं प्रायश्चित्तमात्रम्, न तु प्रधानावृत्तिरिति द्रष्टव्यम् । नच पूर्वपक्षेऽपि क्षरणरूपपदार्थस्य निष्पन्नत्वाद्गुणलोपनावृत्तिरिति वाच्यम्, क्षरणमात्रनिष्पत्तावपि ऊर्ध्वत्वैकाभिव्यङ्ग्यजात्यव-च्छिन्नस्याऽनिष्पत्तेः । सूत्रं निगदव्याख्यातम् ॥

इति पञ्चममाघाराग्निहोत्राधिकरणम् ॥ ५ ॥

## अथ षष्ठं पशुसोमाधिकरणम् ॥ ६ ॥

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥२-२-१७॥ (पू.)**

( विषयसंशयौ )

"यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति प्रकृत्य,

१. तै. सं. ६. १. ११.

"हृदयस्याऽग्रेऽवद्यति, अथ जिह्वाया, अथ वक्षस" इत्यादि श्रुतम्; तथा "सोमेन यजते"ति प्रकृत्य, "ऐन्द्रवायवं गृह्णाति, मैत्राव-रुणं गृह्णाति, आश्विनं गृह्णाती"ति। तत्र सन्देहः—किमवदा-नवाक्येषु ग्रहणवाक्येषु च विहितानां कर्मणां यथायथं पशुवा-क्ये सोमवाक्ये च समुदायासिद्ध्यर्थमनुवादः; उत तयोरेव तच्च-द्गुणविशिष्टयागविधिः, इतरेषु तु तदीयद्रव्योद्देशेनाऽवद्यानग्रह-णादिरूपसंस्कारविधिरिति।

( सङ्गतिः )

पादाध्यायसङ्गती पूर्ववत्। अनन्तरा तु—दध्यादिवा-क्यैराग्निहोत्रवाक्यविहितकर्मानुवादेन गुणमात्रस्य विधातुं शक्यत्वात् प्रकृतकर्माभावेनाऽग्निहोत्रवाक्ये समुदायानुवादत्वं नाङ्गीकृतम्, प्रकृते तु पशुसोमवाक्यविहितयागीयद्रव्योद्देशेन हृदयादिविषयकावदानादिरूपसंस्कारविध्ययोगादवश्यमवदाना-दिवाक्येषु कर्मविध्यवगतेः प्रकृतकर्मसद्भावेन समुदायानुवाद-त्वोपपत्तिरिति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा।

( पूर्वपक्षः )

तत्र पशुवाक्ये तावद्यद्यपि आग्नेयादिवाक्यवदेव द्रव्यदेव-ताविशिष्टयागविधिर्नानुपपन्नः, तथापि तत्र यागविधावुत्पत्ति-शिष्टस्य पशोरवदानेन नाशापत्तेः श्रुतयागसाधनताविघातात्त्वा-वदानवाक्य तद्वाक्यविहितयागीयद्रव्यसंस्कारविधिरुपपद्यते; न चोत्पत्तिशिष्टस्याऽपि पुरोडाशस्य मध्यपूर्वार्धावदा-नरूपसंस्कारवत् तदुपपत्तिः, मध्यपूर्वार्धावदानेऽपि पुरो-डाशत्वजातेः प्रत्यभिज्ञायमानत्वेनाऽनपायात् मध्यपूर्वा-र्धादेरपादानमात्रतया श्रवणेनाऽवदानं प्रति प्रकरणात्

द्विर्हविषोऽवद्यती"ति कर्मणिषष्ठीश्रवणाच्च पुरोडाशस्य संस्कार्य-
त्वोपपत्तावपि "हृदयस्याऽग्रेऽवद्यती"त्यादौ "तानि द्विर्द्विरवद्य-
ती"त्यादौ च कर्मत्वेन निर्दिष्टानां हृदयादीनामेवावदानसंस्कार्य-
त्वश्रवणेनावदानस्योत्पत्तिवाक्यशिष्टपशुसंस्कारकत्वायोगाच्च ।

नच हृदयादिपदैर्लक्षणया पशोरेव संस्कार्यत्वावगतिः, तथा-
त्वीकारेऽपि वाक्यान्तरवैयर्थ्यापत्तेः; । न चाऽस्तु हृदयादीनुद्दिश्यै-
वाऽवदानसंस्कारविधिः, तेषां भूतभाव्युपयोगाभावेन संस्कारा-
नर्हत्वात्; न च संस्कारविधिबलादेव तत्कल्पनम्, सक्तुष्वपि त-
दापत्तेः; उत्पत्तिशिष्टपशुसाधनताविरोधेन तत्साध्ये यागे हृद-
यादीनामुपयोगासंभवाच्च ।

अत एव नानुनिष्पन्नस्याऽपि लोहितनिरसनादिवदियं
प्रतिपत्तिः, पशोरेव साधनत्वेन हृदयादीनामनुनिष्पन्नत्वा-
भावात् । किंच हृदयादीनामुपयोगकल्पने तेष्वतिदेशेनैवाऽवदा-
नप्राप्तिसम्भवात् तद्विधानानर्थक्यम्; तस्मादेवं वाच्यम्—हृद-
याद्युद्देशेनैवाऽवदानाख्यसंस्कारविधिः; पूतीकोद्देशेनेवाऽभिषव-
विधिः । तत्र च यद्यपि पूतीकेषु सोमाभिषवस्यैव प्रत्यभिज्ञाय-
मानस्य पूतीकसम्बन्धित्वेन विधानात् तस्य च यागीयद्रव्यसं-
स्कारकत्वदर्शनात् पूतीकानां यागीयत्वानुमानवत् सान्नाय्याव-
दानस्यैव यागीयद्रव्यसंस्कारकत्वेन क्लृप्तस्याऽपि अप्रत्यभिज्ञाय-
मानत्वेन हृदयाद्युद्देशेन विधानायोगात् न तेषां यागीयत्वानु-
मानं सुकरम्. तथाऽपि प्रकरणान्तरन्यायेन स्वतन्त्रमेवावदानं
हृदयाद्युद्देशेन विधीयते ।

न चाऽतिदेशेन तस्य प्रत्याभिज्ञानम्, तस्य यागविध्य-
धीनत्वेन तदानीमसत्त्वात् । अतः स्वतन्त्रस्यैवाऽवदानस्य प्रा-
णिप्रभवद्रव्यकावदानत्वसामान्यात् सान्नाय्यावदानप्रकृतिक-

त्त्वावगतेरतिदेशेन यागीयद्रव्यवृत्तित्वस्याऽपि प्राप्तेः वदानमवदेयद्रव्याणां यागसाधनता कल्प्यमाना प्रत्यवदानं यागभेदमाक्षिपति । अतश्च पुतीकवदेव विवक्षितगत्या हृदया- दिद्रव्यकयागविधिसिद्ध्यर्थमेवाऽवदानविधिः, न तु प्राकृतकार्या- वदानप्राप्त्यर्थः, तस्य यागविध्युत्तरकालमतिदेशेनाऽपि प्राप्तिस- म्भवात् ।तांश्च सर्वान् यागानालभतिना लक्षणयाऽनूद्याऽग्नीषोमौ, देवताविधीयते। न चैवं पशुप्रकृतिकत्वस्यापि विधाने वाक्यभेदः, देवतातद्धितस्य पशुपदसामानाधिकरण्यानुपपत्तिश्चेति वाच्यम् , "छागस्य हविष" इति मन्त्रवर्णात् हृदयादीनां छागप्रकृतिक- त्वप्राप्तौ पशुपदेन लक्षणया हृदयादीनामेवानुवादात्; एवं च पशुवाक्ये विशिष्टविध्यनङ्गीकाराल्लाघवमपि ।

वस्तुतस्तु यागीयद्रव्यवृत्तित्वस्य प्रकृतौ सान्नाय्यावदाना- ङ्गत्वाभावेन इहाऽनतिदेशादुक्तरीत्या यागानुमानासम्भवेऽपि हृदयादिवाक्य एव सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य हृदया- दिविशिष्टावदानविधाने कृते आलभतिना लक्षणया तान्यनूद्य पूर्ववद्देवताविधौ कृते देवतात्वनिर्वाहार्थमाघारयतिवदुत्पत्ति- वाक्यस्थोऽवद्यतिर्यागपरोऽवधार्यते; तत्र त्वयं विशेषो–यदाघार- यतावजहत्स्वार्थलक्षणया यागोपस्थितिः; अवद्यतौ तु निर्वपतिवत् जहत्स्वार्थलक्षणेति; न त्वेतावता यागविधाने कश्चिद्विशेषः ।

अथ वा हृदयादिवाक्येष्वपि हृदयाद्युद्देशेनाऽवदानान्येव विधीयन्ते। तेषाञ्चोपयोगापेक्षायां पशुवाक्ये पशुपदेन लक्षणया तान्यनूद्य देवता विधीयते, आलभतिश्चाऽस्मिन् पक्षे अवदाना- क्षिप्तस्पर्शानुवादमात्रम् । हृदयादिसम्बन्धश्च देवताया यागं वि- नाऽनुपपन्न इति यावद्धृदयादि यागाः कल्प्यन्ते; न च प्राजापत्याधिकरणपूर्वपक्षन्यायादेकपदोपादानात् सहितानां हृद-

यादीनां एकदेवतासम्बन्धोपपत्तेः कथमनेकयागकल्पनमिति वाच्यम्', तद्वदिह साहित्यस्याऽनुवाद्यगतत्वेन विवक्षासम्भवात्। अतः सिद्धं पशुवाक्यस्यालभतिः पशुपदं च समुदायानुवाद इति। एवं च "हृदयस्याऽग्रेऽवद्यती"त्यादिक्रमदर्शनं "एकादश वै पशोरवदानानी"त्यादिसमुच्चयदर्शनं चोपपन्नं भवति; अन्यथा एकस्मिन् यागे हृदयादीनां विकल्पापत्तेः क्रमसमुच्चयदर्शनं नोपपद्येत ॥

तथा 'सोमेन यजेते'त्यत्रापि न सोमविशिष्टयागविधिः, तथात्वे उत्पत्तिशिष्टस्य सोमाख्यस्य लताद्रव्यस्याऽभिषवादसंस्कारैः विनाशप्रसङ्गेन तद्वाक्येषु सक्तुन्यायेन विनियोगभङ्गापत्तेः। एवं "ऐन्द्रवायवं गृह्णाती"त्यादावपि तद्धितस्य प्रकृतधारासमर्थद्रवद्रव्यवाचित्वेन लतोद्देशेन ग्रहणाख्यसंस्कारविध्ययोगाद्द्रवद्रव्यस्य च भूतभाव्युपयोगाभावेन विनियोगभङ्गापत्तिः।

एतेन सोमवाक्ये सोमविशिष्टयागविधिरेव, अभिषवादिवाक्यानि स्वर्थकर्माणि, ग्रहणवाक्येषु गृह्णातिना यागं लक्षणयाऽनूद्य देवतामात्रविधिरित्यपास्तम्, तद्धितस्य द्रवद्रव्यवाचित्वेन सोमपरत्वासम्भवात्; "दशैतानध्वर्युः प्रातस्सवने ग्रहान् गृह्णाति, आश्विनः दशमो गृह्यते, तं तृतीयं जुहोती"ति क्रमसमुच्चयदर्शनस्य देवतानामेकस्मिन्यागे विकल्पप्रसङ्गेनास्मिन्नपि पक्षेऽनुपपत्तेश्च।

किञ्च भवन्मते "ऐन्द्रवायवं गृह्णाती"त्यादौ किं विधीयते? न तावत् ग्रहणम्, तस्यार्थप्राप्तत्वात्; न हि पूतभृदाधवनीयद्रोणकलशेषु विद्यमानः सोमरसो ग्रहचमससाधनकेन होमेनाऽगृहीत्वा संस्कर्तुं शक्यते, अतो न तावत् ग्रहणम्; तस्य च गृह्यमाणसंस्कारार्थत्वमर्थसिद्धत्वादेव न विधेयम्।

नाऽपि तदनुवादेन देवता इन्द्रवाय्वादिः, तस्याः देवतात्वेन ग्रहणे अन्वयस्य बाधितत्वात्; देवतात्वं हि यागक्रियानिरूपितमेव, न तु क्रियान्तरनिरूपितम्; न च ग्रहणे देवतात्वेनाऽन्वयानुपपत्तावपि सम्बन्धसामान्ये ऐन्द्रवायवादितद्धितमङ्गीकृत्य तत्कालीनादृष्टार्थोच्चारणविषयत्वसम्बन्धेनेन्द्रवाय्वादेर्ग्रहणे अन्वयोपपत्तिरिति वाच्यम्; एवमपि मरुत्वतीयादौ(१)"द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ"ति सूत्रेण देवताधिकारपतितेन देवतात्वमात्राभिधानावगतेः 'मरुत्वतीयं गृह्णाती'त्यादौ देवतात्वसम्बन्धेन ग्रहणे अन्वयस्याशक्यत्वात् । नच देवताया यागातिरेकेण निर्वापक्रियायामन्वयवत् ग्रहणेऽप्यन्वयोऽस्त्विति वाच्यम्, देवतात्वस्य त्यागैकनिरूपितत्वेन निर्वापेऽपि जुष्टपदोपात्तयागद्वारैवाऽन्वयस्य नवमे वक्ष्यमाणत्वात् । प्रकृते तु यागस्य स्ववाक्येऽनुपादानान्न तद्द्वारा ग्रहणेऽन्वय इति वैषम्यम् । अत एव देवताविशिष्टग्रहणविधिरिति सिद्धान्त्यभिमतः पक्षोऽपि निरस्तः ।

किञ्च सोमवाक्ये ग्रहणवाक्ये च विशिष्टविध्यङ्गीकारापेक्षया वरमेकत्रैव ग्रहणवाक्ये विशिष्टविध्यङ्गीकरणम्, अतश्च द्रव्यदेवताविशिष्टा यागा एव गृह्णातिलक्षिता गुणाद्भिन्ना विधीयन्ते, तद्धितोक्तद्रव्यविशेषतात्पर्यग्राहकश्च 'अण्व्या धारया गृह्णाति' इत्यादिवाक्योन्नीतो(२) द्रवद्रव्याधिकारः । अत्र ह्यर्थप्राप्तग्रहणानुवादेन धारामात्रविधानेऽपि धाराया द्रवद्रव्यैकविषयत्वात् तदधिकारासिद्धिः । धाराशब्दस्य च ससम्बन्धिकत्वात् गृह्णातेश्च सकर्मकत्वात् प्रतिसम्बन्ध्यपेक्षायां प्रकृतः पावनादिसंस्कृतः पूतभृदाधवनीयपात्रस्थः सोमरस एव तत्त्वेन सम्बध्यते; न च संस्कारविध्यन्यथानुपपत्त्या

१. पा. सू. ४. २. ३२. २. वाक्योपपत्ति इति ग. ब. पुस्तकयोः ।

विनियोगकल्पनायोगात् पावनादिविधीनामर्थकर्मत्वं शक्यम्, 'अध्वर्युं वृणीत' इतिवत् संस्कारविध्यन्यथानुपपत्त्यापि तत्कल्पने बाधकाभावात्। अत एवोत्पत्तिशिष्टसोमावरोधात् सक्तुषु न तत्कल्पनमित्युक्तं सम्मार्गाधिकरणे। अतः सोमप्रकृतिकत्वस्याऽपि प्रमाणान्तरेण सिद्धे ससोमवाक्ये ऐन्द्रवायवादियागा एव यजिनाऽनूद्यन्ते, न तु सोमविशिष्टकर्मान्तरविधानम्, रूपालाभात्; तत्तद्याज्यापुरोरुचोश्च लिङ्गप्रकरणक्रमैरैन्द्रवायवादियागेष्वेव निवेशोपपत्तौ प्रकरणमात्रेणाऽश्रुतवैकल्पिकदेवताकल्पनानुपपत्तेश्च; अतोऽनुवाद एवायम्। सोमपदं च तत्प्रख्यन्यायात्तेषां नामधेयम्। सत्यपि च ज्योतिष्टोमनामकत्वे न्यायाविशेषादस्यापि नामत्वं नानुपपन्नम्। न चाऽनुवादे प्रयोजनाभावः, नामत्वसिद्धेरेव प्रयोजनत्वात्। प्रयोजनान्तरमपि अस्तुतशस्त्राणां सोमयागानां फलादिसम्बन्धसिद्धिः। अन्यथा हि ज्योतिष्टोमपदेन त्रिवृदादीनि ज्योतींषि स्तोमा एषामिति व्युत्पत्त्या सस्तुतशस्त्राणामेवोपादानात् फलादिसम्बन्धापत्तिः, नान्येषाम्; अस्मिन् समुदायानुवादे तु सति नामधेयानुरोधेन सोमद्रव्यकयागमात्रानुवादात् तद्वैयर्थ्यपरिहारार्थं ज्योतिष्टोमपदेनाऽपि गौण्या वृत्त्या सर्वेषामेव फलसम्बन्धोपपत्तिः।

नचैवं तर्हि सिद्धान्ते स्तोमसम्बन्धरहितसोमयागाभ्यासानां फलसम्बन्धानापत्तिः, स्तोमयुक्तयागाभ्यासानामेव फलसम्बन्धे तद्वाक्यस्थयजेरभ्यासलक्षणाप्रसङ्गेन सोमयागत्वावच्छिन्नस्यैव फलसम्बन्धात्। ज्योतिष्टोमपदं तु सोमयागमात्रस्य स्वसम्बन्ध्यभ्याससमुदायाश्रयवृत्तित्वसम्बन्धेन त्रिवृदादिस्तोमसम्बन्धसत्त्वान्नानुपपन्नम्। तत्सिद्धं सनामधेयस्यापि समुदायानुवादस्य सप्रयोजनत्वम्।

अथ वा सोमवाक्ये यजिना द्रवद्रव्यकयागाननूद्य सोमस्तदीयद्रव्यप्रकृतित्वेन विधीयते, साक्षाद्विधिसत्त्वे संस्कारविध्यन्यथानुपपत्त्या तत्कल्पनस्याऽन्याय्यत्वात्; सत्यपि प्रमाणान्तरेण सम्भवत्प्राप्तिकत्वे व्रीह्यादिवदभ्युदयाशिरस्कत्वकल्पनयापि सोमपदेनैव तद्विधानस्याऽभ्युपगन्तुं न्याय्यत्वाच्च।

यस्त्वत्र प्रदेयत्वेनैव लताविधिरिति पक्षो मूलोपन्यस्तः, स चोत्पत्तिशिष्टद्रव्यावरोधादतिशयार्थ इत्युपेक्षितः। एवं चात्राऽपि यागानामदृष्टार्थत्वेन समुच्चयात् विभिन्नदेवताकानां च क्रमापेक्षणात् "आश्विनो दशमो गृह्यते तं तृतीयं जुहोति। दशैतानध्वर्युः प्रातस्सवने ग्रहान् गृह्णाती"त्यादिक्रमसमुच्चयदर्शनमुपपन्नं भवति।

ननु यागक्रमसमुच्चयोपपत्तावपि भवन्मते गृह्णातिना यागानामेव लक्षणया विधानात् ग्रहणविध्यप्रतीतेः ग्रहणक्रमसमुच्चयदर्शनानुपपत्तिस्तदवस्थैवेति चेत्? गृह्णातिना ग्रहणविशिष्टयागलक्षणाङ्गीकाराददोष इति केचित्। तन्न; लक्ष्यतावच्छेदके गौरवापत्तेः। अत एवं परिहर्तव्यम्—दशमुष्टिपरिमितस्सोमरसः क्रयाभिषवपावनपूतभृदादिपात्राधारत्वादिसंस्कारसंस्कृतः तत्तद्यागाङ्गत्वेन विनियुज्यते, तस्य च 'अल्पं जुहोती'ति वाक्येन चतुरवत्तोद्देशेन होमविधिवदल्पमुद्दिश्य होमाख्यसंस्कारविधानाद्धोमानुवादेन च 'ग्रहैर्जुहोती'त्यादिवाक्यैर्जुह्वादिवत् ग्रहचमसादिरूपपात्रविधानात् पूतभृदादिपात्रस्थस्य च ग्रहणमन्तरेण ग्रहादिपात्रकरणकहोमसंस्कार्यत्वानुपपत्तेः यावद्यागं ग्रहणभेदोपपत्तिः।

नच सर्वयागाङ्गभूतस्य दशमुष्टिपरिमितस्य सोमस्य साधारणत्वात् सकृदेव होमोपपत्तेः न ग्रहणभेदापत्तिः,

पूर्वपक्षे दशमुष्टिपरिमितस्याऽपि सोमरसस्य तत्तद्यागाङ्गत्वा-वगतेः प्रतिप्रधानं पुरोडाशादिवदेव द्रव्यभेदात् होमभेदो-पपत्तेः । अतो ग्रहणानामपि भेदात् तदंशेऽपि क्रमसमुच्च-यदर्शनोपपत्तिः। तत्र तु यागस्यैकत्वात् गुणभूतग्रहणानुरोधेना-वृत्त्यनुपपत्तेः अनेकेषामपि च ग्रहणानां दृष्टविधया यागीयद्र-व्यसंस्कारार्थत्वेनैकार्थ्यात् बन्धनार्थत्वादिरत्वपालाशत्वादिवद्वि-कल्पापत्तेः उभयोरपि क्रमसमुच्चदर्शनानुपपत्तिः । न च ग्रहणा-नां दृष्टार्थत्वेऽपि तदङ्गभूतदेवतासंयोगानामदृष्टार्थत्वादुभयोरपि-समुच्चयोपपत्तिः, अङ्गिभूतानां ग्रहणानां विकल्पे प्रमिते वि-जातीयग्रहणप्रयोगे विजातीयदेवतासंयोगानामार्थत्वे तस्यैवा-दृष्टार्थस्याप्यनुष्ठानोपपत्तेः। तस्मात् समुदायानुवादौ।

सूत्रं तु—हृदयादिवाक्यं गृह्णातिवाक्यं च कर्मचोदना प्र-त्येतव्या, अन्यत्राऽसम्भवान्निवेशस्य हृदयरसादिद्रव्यस्य संयोगात् तथा हि-पशुसोमवाक्ययोरुत्पत्तिचोदनात्वे सति प्रकरणसापेक्षोऽ-वद्यतिगृह्णातिवाक्येषु, द्रव्यसंयोगो हृदयरसादिद्रव्यसंस्का-रो विधीयमानो न यागाङ्गत्वं प्रपद्यते, उत्पत्तिशिष्टपशुसोमावरो-धेन हृदयरसादीनां साधनत्वानुपपत्तेः, न हि तस्योत्पत्तिशिष्टस्य द्रव्यस्याऽवदानग्रहणादि संस्कारकं सम्भवति, नाशकत्वादिति व्याख्येयम् ।

भाष्यकारेण तु इदं सूत्रं सिद्धान्तपरत्वेनैव व्याख्यातम्। पशुसोमरूपापूर्वद्रव्यसंयोगात् पशुसोमवाक्ययोरेव कर्मचोदना, यतो द्रव्ये संयोगः पशुशब्दः सोमशब्दश्च प्रकृते हृदयादावन-र्थकः, लक्षणाप्रसङ्गात् , न हि हृदयादिवाक्यविहितयाग एव प्रदेयप्रकृतित्वेन पशुसोमाविधिः सम्भवति, पशुवाक्ये प्राप्तकर्मा-नुवादेन देवताविधिः प्रदेयप्रकृतिविधिश्चेति वाक्यभेदात्। सो-

पे तूत्तरसूत्रे वक्ष्यते इति ॥

( अथ सिद्धान्तः )

## अचोदकाश्च संस्काराः ॥२–२–१८॥ (सि.)

चशब्दस्त्वर्थस्सन् पूर्वपक्षनिराकरणार्थः । बुद्धिस्थयुक्तिसमुच्चयार्थो वा । तथा हि—पशौ तावत् पशुपदे हृदयादिलक्षणैव दोषः । न हि हृदयादिरूपे मांसे पशुशब्दप्रयोगोऽस्ति, पशुत्वाभिव्यक्तिर्वा; न च तर्हि पशुपदं हृदयादिप्रकृतिद्रव्यविधायकमस्तु, तथात्वे देवताया अपि विधाने वाक्यभेदापत्तेः । अतोऽवश्यं पशुवाक्ये तावद्द्रव्यदेवतासम्बन्धानुमितो यागस्तद्विशिष्टो विधेयः । किञ्चाऽवद्यतिवाक्येषु यागोपस्थापको न तावद्यजतिशब्दः, नाऽपि देवताश्रवणम्, अवदानमात्रस्य तु वत्सालम्भवन्न यागानुमापकत्वम् ।

न च हृदयाद्यवदानस्य सान्नाय्यावदानप्रकृतिकत्वादतिदेशेन यागीयद्रव्यवृत्तित्वलाभात् पूतीकवत् यागसाधनत्वानुमानोपपत्तिः, यागीयद्रव्यवृत्तित्वस्य प्रकृतावनङ्गत्वेन इहाप्राप्तेः । तद्धि संस्कारस्य फलम् । न च तस्याऽतिदेशोऽस्ति । न चौत्तरकालिकदेवतासम्बन्धबलादेवाऽवद्यतेः यागपरत्वावधारणं शक्यम्, पशुपदे हृदयादिलक्षणाया एवमप्यनिवारणात् । हृदयाद्युद्देशेनाऽवदानमात्रविधिसम्भवे हृदयादिविशिष्टयागविधेरवद्यतौ यागलक्षणयाश्चाऽनेकादृष्टानुबन्धिन्या अयोगाच्च । भवन्मते अनेकेषामपि यागानां सम्प्रतिपन्नदेवताकत्वेन सह प्रदानापत्तेः 'हृदयस्याऽग्रेऽवद्यती'त्यत्र यागक्रमवैशिष्ट्यस्याऽप्यवश्याविधेयत्वात् गौरवापत्तेश्च । मम त्ववदानमात्रस्य विधेयत्वात् तस्य पाठादेव क्रमसिद्धेः न विधानम् ।

योऽपि च पशुवाक्य एव यावद्धृदयादिद्रव्यं यागानुपा-नपक्ष उक्तः, सोऽपि पशुपदे लक्षणापत्तेरनेकादृष्टानुबन्ध्यनेक-यागकल्पनस्य च सत्यां गतावन्याय्यत्वादुपेक्षितः । तस्मात् पशु-वाक्यमेव यागविधायकम् , हृदयादिवाक्यानि तु संस्कारमात्र-विधायकानीत्येव युक्तम् ।

न चोत्पत्तिशिष्टपशुसाधनतया विशसनावदानादिसंस्कार-विधिविरोधः शङ्क्यः, पशुमिति द्वितीयया लक्षितस्य करणत्वस्य हृदयादिपरम्परयाऽप्युपपत्तेः। दृष्टं हि परम्परासम्बन्धेऽपि करणत्वं 'गोमयेन पचति' 'व्रीहिभिर्यजेते'त्यादौ । अत एव तादृशस्थले न लक्षणापि, साक्षात्परम्परासाधारण्येन करणत्वस्यैव तृतीयार्थ-त्वात् । असति तु परम्पराग्राहकप्रमाणे साक्षादेव तदित्याश्रीयते। अस्ति तु प्रकृते विशसनादिसंस्कारविधानमेव परम्पराग्राहकं प्रमाणम् । अतश्च पशोः परम्परया यागसाधनत्वमिव देवतास-म्बन्धित्वमपि नैवाऽनुपपन्नम् । अतश्च पशुसंस्कारकविशसनविधि-रूपतात्पर्यग्राहकसहकृतपशुशब्देनैवार्थाद्धृदयादीनां साधनत्वा-वगतेः तदुद्देशेनाऽवदानाख्यसंस्कारविधिरप्युपपन्न एव । अत एव व्रीह्युद्देशेनाऽवघातविधिरूपतात्पर्यग्राहकसहकृतेन व्रीहि-पदेनैवाऽर्थात्तण्डुलादीनामपि साधनतावगतेः तदुद्देशेन पेष-णादिविधिरप्युपपन्न एव ।

नचैवं पश्ववयवानामपि प्रदेयत्वरूपयागसाधनत्वलक्षणहवि-ष्ट्वावगतेः तत्संस्कारार्थस्य मध्यपूर्वार्धापादानरूपस्याऽवदानस्याऽति-देशेनैव प्राप्तेः तद्विधिवैयर्थ्यम् , अतिदेशप्राप्तस्याऽप्यवदानस्य हृद-यादिसंस्कारार्थत्वेन पुनर्विध्युपपत्तेः । तत्प्रयोजनं च तेषां प्रत्येकं हविष्ट्वसिद्धिः । एतद्विध्यभावे हि पशोर्विशसनविधानादवयवद्वारा साधनत्वावगतावप्यवयवानां न प्रत्येकं साधनत्वावगमः, अवय-

विनोऽयासस्य सर्वावयवनिष्ठत्वेन तत्साधनत्वान्यथानुऽपपत्त्यावय-वानामपि समुदितानामेव साधनत्वावगतेः। अतः समुदितस्यैवाऽवयवजातस्य हविष्ट्वावगमात् समुदितसंस्कारार्थत्वेन सकृदेवमध्य-पूर्वार्धापादानकमवदानं प्राप्नुयात्, एतद्विधिसत्त्वे तु प्राकृतावदान-स्य हविस्संस्कारार्थत्वेन क्लृप्तस्यैवाऽतिदेशसन्निधापितस्य प्रत्येकं हृदयादिसंस्कारार्थत्वेन विधानात् पूतीकानां यागसाधनत्वमिव हृदयादीनामपि प्रत्येकं हविष्ट्वावगमात् प्रत्येकं मध्यपूर्वार्धावदा-नसिद्धिः । ततश्च हृदयाद्येकादशावदानद्रव्यमात्रवृत्तिहविष्ट्वता-त्पर्यग्राहकसहकृतः पशुशब्दोऽपि तन्मात्रप्रकृतितयैव पशुं विधत्त इति तदितरेषामवयवानामवदानपरिसंख्याफलिका यागसाधन-त्वरूपहविष्ट्वपरिसंख्याऽपि 'हृदयस्याग्रेऽवद्यती'त्यादिवाक्यजातस्य फलमिति सिद्ध्यति। अत एव यद्यप्येतद्विध्यभावे अवयविसाध-नत्वान्यथानुपपत्त्या अवयवानामपि प्रत्येकमेव साधनत्वमवगम्येत ततश्च प्रत्येकमेवावदानं प्राप्नुयात्, तथापि तदितरावयवगतहवि-ष्ट्वपरिसंख्या एतद्वाक्यजातफलमित्युपपन्नमेव ।

यत्त्वत्र न्यायसुधायां 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यती'त्यस्याऽवयवान्तरपरिसंख्याफलकत्वमित्युक्तम्, तत् पञ्चावदानसम्पादकहविरवदानत्रित्वबाधेन तद्द्वित्वविधायकस्य तानीत्यस्य विशेषसमर्पकत्वेन 'एकादश वै' इत्यस्य तदेकवा-क्यत्वोपपत्तौ परिसंख्याफलकत्वाङ्गीकारेण भिन्नवाक्यत्वे प्रमा-णाभावात्, तस्यैव परिसंख्याफलकत्वाङ्गीकारे च 'हृदयस्याग्रे वद्यती'त्यादेः वैयर्थ्यापत्तेरुपेक्षितम्।

न चैवं 'एकादश वै' इत्येतदपेक्षितद्रव्यविशेषसमर्पकत्वेनैव 'हृदयस्याग्रेऽवद्यती'त्यादिवाक्यजातस्योपपत्तौ अवयवान्तरपरि-संख्याफलकत्वे प्रमाणाभावः, तथा सति हृदयादिश्रवणमात्रेण-

विशेषसमर्पणसिद्धौ अवद्यतिश्रवणस्य वैयर्थ्यापत्तेः। तस्मात् प्राकृतावदानस्यैव हृदयादिसंस्कारार्थत्वेन विधि तस्येतरावयवपरिसंख्याफलकत्वमेव युक्तमित्युत्पश्यामः। एवं च 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्ये'त्यनेन प्राकृतावदानानुवादेन पञ्चत्वविधानानुद्देश्यस्य चाऽवदानस्य वपया विशेषणसम्भवात् हृदयाद्यवदानेऽपि पञ्चत्वसिद्धिरजामदग्न्यानामप्याहतैव। पञ्चत्वप्रकारः परं वपाया उपस्तरणाभिघारणद्वयं हिरण्यशकलद्वयं वपेत्येवं वाचनिकः। अत एव प्राकृतस्य पञ्चत्वप्रकारस्य बाधः। तत्र च प्रकरणलभ्यावदानानुवादेन पञ्चत्वप्रकारविशेषस्य वपोद्देशेनैव विधानात् वपाग्रहणाविवक्षायां कारणाभावेन तस्य प्रकारस्याऽङ्गेष्वप्राप्तेः बाधकाभावेन प्राकृतप्रकारप्राप्तौ जातायां हविरवदानत्रित्वे प्राप्ते 'तानि द्विर्द्वि'रित्यनेन प्रकरणलभ्यावदानमनूद्यैव हृदयाद्युद्देशेन द्वित्वविधानात् पञ्चत्वसम्पत्तिरभिघारणवृद्ध्या सम्पादनीया।

वस्तुतस्तु पञ्चावत्तवाक्येऽवदानानुवादेन पञ्चत्वविधाने एकप्रसरताभङ्गापत्तेरवदानान्तरमेव प्राकृतावदानकार्यापन्नं विधीयते, तस्यैव च वपोद्देशेनैव विधानादङ्गेष्वप्राप्तावपि 'हृदयस्याग्रेऽवद्यती'त्यादिवाक्यैः हृदयादिसंस्कारार्थत्वेन विधिः, न प्राकृतस्य ; तस्य हृदयादिवाक्याभावे पञ्चावत्तवाक्यविहितावदानान्तरेण बाधितस्याऽतिदेशेनाऽप्राप्तेः। न चोत्पत्तिशिष्टसंस्कार्यावरोधात् संस्कार्यान्तरसम्बन्धानुपपत्तेः कर्मान्तरत्वापत्तिः, पञ्चावत्तवाक्ये उत्पन्नवपोद्देशेन विनियुक्तस्य चाऽवदानस्य हृदयाद्युद्देशेन विनियोगमात्रकरणात् विनियोगविधिभेदेऽप्युत्पत्तिभेदाभावेन तन्निबन्धनकर्मान्तरत्वाप्रसक्तेः। अत एव स्ववाक्योपात्तफलावरुद्धस्याऽप्युद्भिदादेर्वैविदिपावाक्येन ज्ञानाद्युद्देशेन विधि·

रभ्युपगम्यत एव । अतश्च वपायामिव हृदयादिष्वप्यवदानपृष्ठ-भावेन पश्चत्वप्राप्तेः पूर्वनदेवोभयत्राऽपि तत्सम्पादनप्रकारो द्रष्टव्यः। पार्थसारथेस्तु पश्चावत्तवाक्ये अवदानान्तरस्वीकारेऽपि वपाग्रह-णस्योपलक्षणार्थत्वं वदतोऽभिप्रायं न विद्मः । या च "तानि द्विर्द्वि"रित्यस्य वैयर्थ्यापत्तेः वपादिपदं हृदयादीनामुपलक्षकमि-त्युपपत्तिरुक्ता, सा जामदग्न्यनिमित्तपश्चावत्तसम्पादकहविष्ट्व-बाधेनाऽपि द्वित्वविध्युपपत्तेरुपेक्षणीयेत्यस्मदुक्तप्रकार एव श्रेयान्। विस्तरेण चैतद्दशमे वक्ष्यामः । तस्मादवदानविधिवैयर्थ्याभावात् पशुवाक्य एव यागविधिरिति सिद्धम् । हृदयादीनां चाऽन्यतमसा-धनत्वान्यथानुपपत्त्या समुच्चितानामेव साधनत्वावगतेः क्रमस-मुच्चयदर्शनस्याऽपि नाऽनुपपत्तिः ।

प्रयोजनम्—पूर्वपक्षे सवनीयादेः हृदयादियागानां मध्येऽ-न्यतमस्य विध्यन्तान्नैकादशावदानगणप्राप्तिः, सिद्धान्ते तु सेति द्रष्टव्यम् ।

सोमेऽपि च ऐन्द्रवायवादिवाक्येषु देवताविशिष्टश्रुतग्रहणवि-धिसम्भवे नाऽश्रुतयागकल्पनमुपपत्तिमत् । तथा हि—यद्यपि तावद्दे-वतात्वं यागक्रियानिरूपितमेव, तथाऽपि तद्धितोपात्तस्य इन्द्रवायुनि-ष्ठदेवतात्वस्य ग्रहणकालीनोच्चारणकर्मीभूतवृत्तित्वसम्बन्धेन ग्रहणे-ऽपि वैशिष्ट्यं न विरुध्यते । अतश्चोक्तसम्बन्धेन देवतात्वविशिष्टे ग्रहणे गृह्यमाणसंस्कारार्थे विहिते देवतात्वस्य यागैकघटितत्वाद्या-गापेक्षायां प्रकृतसोमवाक्योपात्तयागसम्बन्धोपपत्तिः । यथैव हि 'दध्नेन्द्रियकामस्ये'त्यादौ तृतीयोपात्तकरणत्वविशिष्टं दधि दधि-विशिष्टं वा करणत्वं करणतासंसर्गेण इन्द्रियोद्देशेन विधीयते इति पक्षयोः तृतीयोपात्तकरणत्वस्य निरूपकरूपाश्रयापेक्षायां प्रकृत-होमान्वयः तथात्रापीति द्रष्टव्यम् ।

यत्त्वत्र कैश्चित् ग्रहणान्वयार्थमैन्द्रवायवादिवाक्येष्वपि याजिकल्पनाङ्गीकारेऽपि न तत्र यागविधिः; अपि तु सोमवाक्य एव, ग्रहणवाक्ये तु कल्पितयजिपदमनुवादमात्रमित्युक्तम्; तद्यजिकल्पनं विनाऽप्युक्तप्रकारेण ग्रहणान्वयोपपत्तौ तत्कल्पने प्रमाणाभावात् तदन्वयस्य दुरुपपादत्वाच्चोपेक्षणीयम् ।

यदपि च भवदेवेन ग्रहणस्य यागावयवत्वात् देवतायाः तदन्वयोपपत्तेः अवयवान्तरापेक्षयैव च प्रकृतयागसम्बन्धोपपत्तेः न किंचित् बाधकमित्युक्तम्; तदप्ययगृहीतस्यापि यागोपपत्तेर्वार्तिक एवोक्तत्वात् ग्रहणस्य यागावयवत्वकल्पनानुपपत्तेः कल्पनेऽपि वा ग्रहणरूपावयवान्वयस्य पुनरपि दुरुपपादत्वोचापेक्षितम् ।

तस्मादुक्तप्रकारेणैव देवताविशिष्टग्रहणविधिः । अत एव देवताया वाक्येन ग्रहणाङ्गत्वावसायादुभयाकाङ्क्षालक्षणप्रकरणेन यागं प्रति दधिवदेव जनकत्वमात्रावगमेऽप्यङ्गत्वानवगमात् यागस्याऽव्यक्तत्वसिद्धिः । न च ग्रहणे देवतात्वान्वयोपपत्तावपि तत्संस्कार्यस्य तद्धितोपात्तस्य द्रव्यस्य सन्निधानात् द्रवरूपत्वावसायात्तस्य च सोमवाक्यविहिते यागे उत्पत्तिशिष्टसोमावरोधेनाऽपि विनियोगायोगात् संस्कार्यत्वानुपपत्तिः, उत्पत्तिवाक्ये सोमस्य साक्षात्परम्परासाधारण्येन करणत्वमात्रेऽवगते सोमसंस्कारकाभिषवविधिरूपतात्पर्यग्राहकबलेन परम्परया करणत्वाङ्गीकारात् हृदयादिवद्द्रवस्याऽप्यर्थात् साधनत्वावगतेः तदुद्देशेन ग्रहणाख्यसंस्काराविध्युपपत्तेः । अतएव पशुवत् सोमस्यापि रसप्रकृतित्वेन विधिरिष्टः ।

ननु न सोमवाक्ये सोमविधिर्विशिष्टविधिगौरवापादको युक्तः; स हि न तावत् प्रदेयत्वेनेष्टः, संस्कारविधिवैयर्थ्यापत्तेः;

नाऽपि प्रकृतित्वेन, तस्य संस्कारविध्यन्यथानुपपत्त्यापि प्राप्ति-सिद्धेः। तथाहि—ग्रहणवाक्ये तावत्तद्धितोपात्तस्य द्रव्यस्य ग्रहणसंस्कृतस्य विनियोगापेक्षायां देवतासम्बन्धान्यथानुपपत्त्य-वगततत्तद्यागाभ्यासेषु प्रदेयत्वेन विनियोगकल्पनं नाऽनुपपन्नम्, सर्वनामार्थकस्य च तद्धितस्य द्रव्यविशेषतात्पर्यग्राहकापेक्षायां सन्निधानाद्धारावाक्यप्रमितद्रवद्रव्यविशेषसिद्धिः। तत्र हि तत्त-द्वाक्यप्राप्तग्रहणविशेषानुवादेन धारापात्रस्य विधानम्, न त्व-णुत्वस्याऽपि, वाक्यभेदापत्तेः; अल्पपरिमाणेषु पात्रेषु स्थूलया ग्रहणे कृते पात्रात् बहिरपि पातापत्तेरणुत्वस्य प्राप्तत्वाच्च; धा-रायाश्च प्रतिसम्बन्ध्यपेक्षत्वात् गृह्णातेश्च कर्माकाङ्क्षत्वादुत्तरा-र्धादिवत् स्वतन्त्रजलादिप्रतिसम्बन्ध्याक्षेपकत्वानुपपत्तेः प्रकृत 'सोमं पावयती' त्यादिवाक्यप्रतीतसोमप्रकृतिकद्रवद्रव्यविषय-त्वम्; पावनवाक्ये हि सोमशब्दो न लतापरः, तस्यां पावन-संस्कार्यत्वानुपपत्तेः। अपि तु लक्षणया तद्रसपरः। अतश्च सोमप्रकृतित्वस्यापि तत्तत्संस्कारविधिबलादेवावगतिसिद्धेः न सोमवाक्ये तद्विधानाङ्गीकरणं युक्तम्। अत एव क्रयाभिषवादि-वाक्यस्थोऽपि सोमशब्दः तत्तद्यागाभ्यासापूर्वसाधनरसप्रकृ-तिभूतसोमपर एव।

नच संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पने सक्तु-ष्वपि तदापत्तेः सोमतद्रसयोः विनियोगाभावे क्रयादिवाक्याना-मर्थकर्मविधायित्वमेव स्यादिति वाच्यम्, 'अध्वर्युं वृणीते' 'स्वाध्यायोऽध्येतव्य' इत्यादौ संस्कारविध्यन्यथानुपपत्त्याऽपि विनियोगस्य सहस्रशः स्वीकृतत्वात्; सक्तुषु तूत्पत्तिशिष्टद्रव्य-विरोधान्न तत्कल्पनमित्युक्तमेव। नचैवमपि प्रत्यक्षविधिसत्त्वे संस्कारविध्यन्यथानुपपत्त्या तत्कल्पनानुपपत्तिः, यथा कथंचि-

त्वपि सम्भवत्प्राप्तिकत्वे प्रत्यक्षस्यापि विधेरनङ्गीकारात्। अत एव मान्त्रवर्णिकीमपि प्राप्तिमङ्गीकृत्य समिदादीनां नामधेयत्वमिष्टम्।

नचैवं संस्कारविध्यन्यथानुपपत्त्या व्रीहीणामपि प्राप्तिसम्भवात् तद्विध्यनापत्तिः, तद्वाक्ये विधेयान्तराभावेन अगत्या क्ष्युदशशिरस्कत्वसिध्यर्थं तद्विध्यङ्गीकारात्; प्रत्यक्षविध्यनुरोधेन संस्कारवाक्यस्थव्रीहिपदस्य यवलक्षकत्वापत्तेः तेषामप्राप्तत्वाच्च; सत्यामपि संस्कारविध्यन्यथानुपपत्तौ प्रकृतितासम्बन्धेन पुरोडाशाङ्गतया व्रीहिप्राप्तौ यागाङ्गत्वेन तद्विध्युपपत्तेश्च। तत्प्रयोजनं च पुरोडाशाङ्गत्वे तदङ्गभूतानेकपरिमाणशेषकार्यादिलोपप्रसङ्गेनैकव्रीहिमात्रबाधस्य युक्तत्वात् अल्पसत्त्वे न तदुपादानम्, अपि तु नीवारोपादानमेव। यागाङ्गत्वे त्वङ्गगुणविरोधन्यायेन पुरोडाशाङ्गभूतानामनेकेषामपि शेषकार्यादीनां लोपस्य युक्तत्वादल्पव्रीहिसत्त्वे यागाङ्गभूतव्रीह्युपादानमेवेति षष्ठोक्तम्। नन्वेदृक् सोमविधेः प्रयोजनमस्ति, अतोऽनुवादः तत्प्रख्यन्यायेन वा नामधेयं सोमपदमिति चेन्न; इहापि तत्तदभ्याससाधनीभूतरसाङ्गत्वेन प्राप्तिसम्भवेऽपि यागाङ्गत्वस्याप्राप्तत्वेन विधिसम्भवात्। तत्प्रयोजनं च—तत्तद्रसाङ्गत्वे प्रतिप्रधानावृत्तिन्यायेन तत्तदभ्यासापूर्वसाधनीभूतरसप्रकृतित्वेन विहितस्य दशमुष्टिपरिमितस्य सोमस्य चतुर्मुष्टिपरिमितव्रीहिभेदवद्भेदः प्राप्नुयात्।

न च क्रयस्य स्वतन्त्रकालाम्नानात्तदाप्तस्य सोमस्य पशुवत्प्रयार्थदीक्षाच्छिन्नयूपस्येव सर्वाभ्यासार्थं तन्त्रत्वापत्तिः, क्रयाप्राप्तस्य दशमुष्टिपरिमितस्य सोमस्याऽभिषुतस्य पूतस्याऽऽधवनीयादिस्थस्य 'आधवनीयात् गृह्णाती'त्युपादानत्वेन श्रवणा-

देकाभ्यासापूर्वसाधनीभूतरसव्यक्त्युपादनस्याऽऽधवनीयस्थस्यप्रयोद्रव्यकमन्थ्यादिवदभ्यासान्तरापूर्वसाधनभूतरसव्यक्त्यन्तरोपादानत्वानुपपत्तेरनेकरसव्यक्तिभेदेन तदुपादानभूताधवनीयस्थसोमरसभेदावगमात् तद्भेदेन च तत्प्रकृतिभूतसोमभेदोपपत्तेः । यागाकृत्वे तु यागत्वपर्याप्त्यधिकरणताकोद्देशेनैव सोमविधानात्तादृशस्यैव च दशमुष्टिपरिमाणक्रयादिसंस्कारविधानात् सत्यपि तत्तदभ्यासापूर्वसाधनीभूतरसव्यक्तिभेदे तत्प्रकृतिभूतस्य सोमस्य तत्प्रकृतित्वसिद्धिः । अत एव 'आधवनीयात् गृह्णाती'त्युपादानत्वश्रुतिरव्यवयवावयविसाधारण्येनोपपादनीया । अतस्तन्त्रतया प्रदेयप्रकृतिभूतस्य सोमस्याऽप्राप्तत्वाद्विध्युपपत्तिः । प्रयोजनान्तरं च सोमवत् सक्तूनामपि विकल्पेन विनियोगकल्पनाप्रसक्तौ तद्व्यावृत्तिः ।

न च विशिष्टविधिगौरवभिया भेदं विकल्पं चाऽङ्गीकृत्याऽपि नामधेयत्वं शङ्क्यम्, ज्योतिष्टोमनामात्ररूढस्य कर्मणो नामधेयान्तरवैयर्थ्यापत्तेः प्रयोजनलिप्सया 'सृष्टीरुपदधाती'त्यत्रेव गौरवस्याऽप्यङ्गीकारात् । अतो युक्तं सोमवाक्ये सोमस्य विधेयत्वेऽपि यागस्याऽपि श्रुतस्य विधेयत्वाङ्गीकारात्तस्यैव च सर्वदेवतासम्बन्धोपपादकत्वोपपत्तेः न ग्रहणवाक्येऽतिरिक्तयागान्तरकल्पना युक्तेति ।

नन्वेवं "सप्तदश प्राजापत्यान् पशूनालभते" 'आग्नेयमष्टाकपालं निर्वपेत्' 'सौम्यं चरुमि'त्यादावपि वाजपेयवाक्यवैश्वदेववाक्यविहितयागस्यैवोपपादकस्य सत्त्वात् प्राजापत्यादिवाक्येषु देवताविशिष्टालम्भनिर्वापमात्रविधानोपपत्तेः न यागान्तरकल्पनापत्तिरिति चेत् ? न, वाजपेये तावदेवं सति बलीयसा द्रव्यसादृश्येन पशुविध्यन्तापत्तेः ब्रह्मसामादिरूपसोमधर्मश्रा

ल्पाभावात् 'तान् ब्रह्मसाऽन्यालभत' इति कालविध्यनुपपत्तेः। वैश्वदेवेऽपि द्रव्यसादृश्यैनैष्टिकविध्यन्तप्राप्तौ निर्वापस्यापि प्राप्तिसम्भवात् तदनुवादेनाऽत्र देवताविधिर्वाच्यः। तत्र च निर्वापमात्रोद्देशे अग्न्यादिदेवतानामनियताष्टाकपालादिद्रव्यसम्बन्धिनिर्वापसम्बन्धापत्तेः, 'आग्नेयमष्टाकपालमि'ति सामानाधिकरण्यावगतपरस्परनियमानुपपत्तिः। अष्टाकपालविशिष्टनिर्वापोद्देशे तु वाक्यभेदः। निर्वापाख्यकर्मान्तरविधिस्तु भेदकप्रमाणाभावादेवाऽसिद्धः। न ह्यत्र प्रकरणान्तरमस्ति, अतिदेशेनोपस्थितत्वात्। अतिदेशावघृते निर्वापे सर्वासां देवतानामुत्पन्नशिष्टत्वाच्च न गुणोऽपि। अतस्तत्र कल्पितयागविधिरेवाऽगत्या समाश्रितः। प्रकृते तु वक्ष्यमाणरीत्या ग्रहणानामेव विधेयत्वादविधेयत्वेऽपि वा तदुद्देशेन देवतानामेव विधेयत्वोपपत्तेः न यागकल्पने प्रमाणमस्तीति वैषम्यम्।

सूत्रं तु-ग्रहणावदानवाक्यानि न यागस्य, चोदकानि कल्पकानि, संस्कारविधायित्वेनाऽप्युपपत्तेरिति व्याख्येयम्॥

( इति पशुवाक्ये सिद्धान्तः )

## तद्भेदात् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्यात् भेदो द्रव्यगुणीभावात्॥ २-२-१९॥

( अथ सोमवाक्ये सिद्धान्तः )

नन्वेवं सोमवाक्यविहितस्य यागस्यैकत्वात् क्रमसमुच्चयदर्शनोपपत्तिः कथम्? तथा हि—यागैकत्वे तावत् प्रदेयभूतं तद्द्रव्यमप्येकमेव, अतश्च सर्वोऽपि सोमरसः सकृदेव पुरोडाशवत् त्यक्तव्यः, 'अल्पं जुहोती'ति वचनाच्च तदेकदेशः सकृदेव प्रत्य-

दानबद्धोतव्यः, एकदेशान्तरस्य तु भक्षणादिप्रतिपत्तिरिति प्राप्नोति । अस्तु वा 'ऐन्द्रवायवमि'त्यादौ यथाकथञ्चित् प्रदेयद्रव्यभेदप्रतीतिः, तथाऽपि तेषामेकस्मिन् यागे विकल्प एव प्राप्नोति, गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् ; तद्वाक्यप्रमितनिरपेक्षसंस्कार्यत्वान्यथानुपपत्त्या नैरपेक्ष्येणैव साधनत्वप्रतीतेश्च । उत्पत्तिवाक्यादिप्रमितसमस्तसोमसाधनता तु प्रदेयद्रव्यापादानत्वाऽप्युपपन्नेति न विरोधः ; एवं सत्यपि यदि ग्रहणानां केनचित्प्रमाणेन समुच्चयोऽवधार्येत तदा गृहीतस्य पुनर्ग्रहणासम्भवाद्विनियुक्तसंस्कारायोगेन च भवेत् ग्राह्यद्रव्यभेदेन यागावृत्तिः ; न तु तदस्ति, द्रव्याणां विकल्पे तत्संस्काराणां ग्रहणानामदृष्टार्थानामपि विकल्पस्यैवाऽऽपत्तेः ।

वस्तुतस्तु आधवनीयादिस्थस्य सोमरसस्य ग्रहादिपात्रकरणकहोमसंस्कार्यतासम्पत्त्यर्थत्वात् ग्रहणस्य नैवाऽदृष्टार्थत्वम् । अत एवाऽर्थप्राप्तत्वान्नैन्द्रवायवादिवाक्येष्वपि तस्य विधेयता । अत एव न तद्भेदोऽपि; सत्यपि द्रव्याणां समुच्चये ग्रहणावृत्त्यैव सर्वेषां संस्कार्यत्वोपपत्तेः तद्भेदे प्रमाणाभावात् , देवतानामुत्पत्त्यशिष्टतया भेदकत्वायोगाच्च । ऐन्द्रवायवादिवाक्यैरपि च ग्रहणविध्यङ्गीकारेण तत्रोत्पन्नस्यैव वाक्योपात्तसंस्कार्यसम्बन्धेन विनियुक्तस्याऽपि वाक्यान्तरे संस्कारान्तरसम्बन्धेन विनियोगमात्रकरणादुत्पत्तिभेदाभावेनोद्भिद्यागस्येव विविदिषावाक्ये ज्ञानाद्यर्थत्ववत् भेदानुपपत्तेः ।

न चैवमेकस्यैव ग्रहणस्याऽनेकसंस्कार्यसम्बन्धोपपत्तावपि उत्पत्तिशिष्टैकदेवतावरोधे देवतान्तरनिवेशानुपपत्तेः गुणाद्भेदोपपत्तिरिति वाच्यम्; ग्रहणे देवतासंयोगानामदृष्टार्थत्वेनैककार्यत्वे प्रमाणाभावेन गुणन्यायाविषयत्वात् । आमिक्षायागस्य हि वाजिन-

कार्ये आमिक्षयैव जनिते तद्विषये निराकांक्षस्य वाजिनाग्राहक-त्वाद्युक्ता वाजिनस्य भेदकता; ग्रहणे तु मित्रावरुणदेवताकार्य-स्येन्द्रवायुदेवतयाऽजननान्नैराकांक्ष्यानुपपत्तेः न गुणान्वय-विषयत्वमिति विशेषः ।

अस्तु वा ग्रहणानां भेदः, तथाऽपि ग्राह्यद्रव्याणां विकल्पेन यागसाधनत्वात् ग्रहणानामपि विकल्पापत्तेः तदङ्गभूतदेवता-नामपि चाऽदृष्टार्थानामपि कार्यविकल्पबलेन व्यवस्थोपपत्तेः समु-च्चये प्रमाणाभावेन नाऽदृष्टार्थदेवतासमुच्चयानुरोधेन ग्रहणसमु-च्चयो यागावृत्तिर्वा युक्ता समाश्रयितुम् ।

वस्तुतस्तु ग्रहणे देवतोद्देशानामपि नाऽदृष्टविधयाऽङ्गता; नि-र्वाप इव वक्ष्यमाणदेवतास्मरणार्थत्वेनाऽभ्यासान्तरसाधनीभूत-द्रव्यव्याप्तिफलकैतदभ्याससाधनीभूतद्रव्योपलक्षणार्थत्वेन वा दृष्टद्वारैव ग्रहणेऽपि देवतोद्देशोपपत्तेः ।

न च तत्राऽऽग्नेयादिवाक्ये यागाङ्गत्वेन प्रमिताया देवताया युक्तो निर्वापे दृष्टविधया सम्बन्धः, प्रकृते तु ग्रहणसम्बन्धोत्तरकालमात्रित्वाद्यागसम्बन्धस्य कथं ग्रहण-सम्बन्धवेलायां दृष्टार्थत्वकल्पनेति वाच्यम्; उत्पत्तिवाक्ये दृष्टसामान्यस्य भाव्यत्वावगमवत् ग्रहणवाक्ये दृष्टादृष्टसा-धारण्येन भाव्यत्वावगमे जाते यागसम्बन्धोत्तरकालं दृष्टा-र्थत्वनिर्णयोपपत्तेः । अतश्च निर्वापवत् ग्रहणेऽपि देवतासंयोगो दृष्टार्थ एव । तत्र त्वयं विशेषः—यद्देवताया याग एवाङ्गत्वं न तु निर्वापे, उपकारकतामात्रेणैव तत्सम्बन्धोपपत्तेः; प्रकृते तु विप-रीतमिति । न त्वेतावताऽदृष्टार्थत्वापत्तिः ।

वस्तुतस्तु तत्तद्देवत्ययाज्यापुरोरुगादिमन्त्राम्नानाद्ग्रहेऽपि मा-न्त्रवर्णिकदेवताकल्पनस्य प्रथमत एव प्रतीतेः ग्रहणसंयोगोऽपि

देवतानामुपकारकत्वेनैव ; अत एव यागस्य देवताङ्गकत्वादव्यक्तत्वमपि दुर्वचम् । अतो ग्रहणवाक्ये देवताविशिष्टग्रहणविधिरप्युपकारकतासम्बन्धेन प्रत्येतव्यः ।

वस्तुतस्तु ग्रहणवाक्ये ग्रहणस्य स्वरूपेण ग्राह्यसंस्कारार्थत्वेन चाऽर्थादेव प्राप्तत्वात्, तस्मिंश्च देवतानां "उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामी" त्यादिमन्त्रलिङ्गादेव निर्वाप इव प्राप्तिसम्भवात्, विधेयाभावेन तव मते तद्वाक्यवैयर्थ्यमपि । अतो द्रव्याणां तत्संस्कारग्रहणानां तदङ्गदेवतासंयोगानां च विकल्पापत्तेः क्रमसमुच्चयदर्शनानुपपत्तिरिति चेत् ?

अत्र केचित् पार्थसारथिमतानुयायिनो लिङ्गदर्शनोपपत्तिमात्रमेवमाहुः—(१)"ग्रहैर्जुहोती" त्युपादेयगतपात्रसाहित्यस्य विवक्षितत्वात् तदनुरोधेन दृष्टार्थानामपि ग्रहणानां समुच्चयावगतेः यथागृहीतानामेव च होमात् तदभ्यासप्रतीतेः क्रमसमुच्चयदर्शनोपपत्तिरिति । तन्न, ग्रहाणां चमसानां च निरपेक्षसाधनत्वश्रवणेन समुच्चयाप्रतीतेः, तद्वृत्तिग्रहणानां तत्साध्यहोमाभ्यासानां च समुच्चयस्यैवमपि दुरुपपादत्वात् । एकस्यैव ऋतुपात्रादेरनेकदेवत्यग्रहणसाधनत्वश्रवणेन तादृशग्रहणानां विकल्पस्यैवमप्यनिवार्यत्वाच्च । अत एवं परिहर्तव्यम्—अन्यतस्सम्भवत्प्राप्तिकत्वे सत्यप्यैन्द्रवायवादिवाक्येषु देवताविशिष्टग्रहणविधिरेव विधेः पूर्वं प्रवृत्त्यङ्गीकारेणाऽऽश्रीयते । तथा हि—ऐन्द्रवायवमित्यत्र तद्धितार्थद्रव्यभेदस्तावत् प्रकृत्यर्थदेवताभेदाच्छब्दान्तरन्यायेन गुणन्यायेन वा सुप्रसिद्ध एव । अतश्च तत्तद्वाक्ये तत्तद्द्रव्योद्देशेन तत्तद्देवताविशिष्टतत्तद्ग्रहणविधिः । तत्प्रयोजनं च देवतांशे तावत् प्रत्ययार्थभेदासिद्धिः ग्रहणाङ्गत्वासिद्धिद्वारा यागस्याऽव्यक्त-

१. अनेनग्रहशब्दस्य रसाधारभूतपात्रवाचित्वमितिफलति ।

त्वासिद्धिश्च । एतद्विध्यभावे हि याज्यापुरोरुगादिमन्त्राम्नानाद्या-गाङ्गभूतानामेव देवतानां निर्वाप इव ग्रहणे तन्मन्त्रवर्णात् उप-कारकतामात्रं स्यात् । सति त्वस्मिन् प्रत्यक्षविधौ ग्रहणाङ्गत्वप्र-तीतेः यागे उपकारकतामात्रावसायात् याज्यादिमन्त्राणामपि तदकल्पकतया यागस्याऽव्यक्तत्वसिद्धिः । तत्प्रयोजनमपि चो-द्भिदादीनां तद्विकृतित्वासिद्धिः । ग्रहणांशे तु द्रव्यसंस्कारतया अर्थतः प्राप्तस्याऽपि स्वतन्त्रादृष्टार्थत्वसिद्धिः । एतद्वाक्ये हि ग्रह-णपुनर्विधिः प्रयोजनाकांक्षस्सन् प्रयोजनान्तरासम्भवात् ग्रहण-स्य प्रयाजादिवदारादुपकारकतां प्रकरणात् कल्पयति ।

अत एव सत्यपि वाक्यीये द्रव्यसंस्कारार्थत्वे ग्रहणानां प्रकरणग्राह्यत्वमाकरेऽभिहितम् । अत एव विधिपुनःश्रुतिबला-द्वाक्यीयस्याऽपि द्रव्यसंस्कारार्थत्वस्याऽऽनुषङ्गिकता प्राकरणि-कस्यापि चादृष्टार्थत्वस्य प्रयोजकताङ्गीक्रियते । अन्यथा अदृ-ष्टार्थत्वमात्रस्याऽप्रवृत्तिविशेषकरत्वेन विधिवैयर्थ्यतादवस्थ्यात् । अतश्च प्रयोजकीभूतादृष्टानुरोधेन ग्रहणानां तत्तद्देवतानां प्रया-जानुयाजवत् समुच्चयावगतेस्तदनुरोधेन च ग्राह्यद्रव्याणामपि समुच्चयप्रतीतेः विभिन्नदेवताकद्रव्यभेदबलेन यागावृत्तिसिद्धिः ।

यद्यपि प्रयोजनान्तरमपि किञ्चित् ग्रहणविधेः सम्भाव्येत, तथापि क्रमसमुच्चयदर्शनरूपतात्पर्यग्राहकबलादुक्तप्रयोजनस्या-प्यावश्यकत्वान्न काश्चिद्विरोधः ।

नन्विदं प्रयोजनं ग्रहणविधिसत्त्वे खल्वावश्यकम्, तत्रैव तु प्रमाणाभावः, ऐन्द्रवायवादिवाक्येऽर्थप्राप्तग्रहणानुवादेनाऽव्य-क्तत्वफलकदेवतामात्रविध्युपपत्तिरिति चेत् ? "उपांशुं गृह्णाति, अन्तर्यामं गृह्णाति" त्यादौ संज्ञायुक्तवाक्ये तावद्विधेयान्तरा-भावेन ग्रहणस्यैव विधेयत्वादुक्तप्रयोजनोपपत्तेः ऐन्द्रवायवादि-

वाक्येऽपि प्राप्तग्रहणानुवादेन देवताविधिः तत्तत्संस्कार्यसम्बन्धश्चेति वाक्यभेदापत्तेः ग्रहणविध्यावश्यकत्वात्। ग्रहणमात्रानुवादेन देवताविधाने वेदिबर्हिर्न्यायेन प्राकरणिकयत्किञ्चिद्द्रव्यग्रहणेऽपि तदापत्तेश्च।

यत्त्वस्मिन् पक्षे ऐन्द्रवायवपदे एकप्रसरताभङ्गापत्तेः ग्रहणानुवादेन देवताविधिरेवयुक्त इति कैश्चिदुक्तम्; तदेतादृशस्थले उद्देश्यद्रव्यस्य विधेयदेवतानिरूपितत्वाभावेन एकप्रसरताभङ्गस्यादोषत्वात्(१) 'सृष्टीरुपदधाती' त्यादौ च मन्त्रविशिष्टोपधानस्येष्टकासंस्कारार्थत्वेन विधेः स्वयमेव स्वीकृतत्वादुपेक्षितम्।

नचैवं तर्हि विशिष्टविधिगौरवापत्तेः ग्रहणमात्रमेव विधीयताम्, ऐन्द्रवायवादिपदंतु ग्रहणमन्त्रवर्णप्राप्तानुवाद एवाऽस्त्विति वाच्यम्, ऐन्द्रवायवादिपदवैयर्थ्यभयेन विशिष्टविधेरप्यङ्गीकारात्। तत्प्रयोजनंत्वव्यक्ततासिद्धिरित्युक्तमेव। अत एव संज्ञायुक्तग्रहणेष्वपि देवताङ्गकत्वबोधको विधिरन्वेष्टव्यः। अत एव गुणादेव ग्रहणभेदः, प्राप्तग्रहणानुवादेन देवतासंस्कार्योभयसम्बन्धकरणे वाक्यभेदापत्तेः, तदापादकस्यैव गुणस्य भेदकत्वादुत्पत्तिशिष्टदेवतावरोधनिमित्तकस्याऽपि गुणस्य सत्त्वाच्च। देवतानां दृष्टविधयैव ग्रहणाङ्गत्वाङ्गीकाराच्च एकयैव देवतया ग्रहणस्य नैराकांक्ष्यमपि सुवचम्।

'वस्तुतस्तु गुणन्यायेनैव नैराकांक्ष्यप्रवेशः, अपि तु गुणस्याऽनिविशमानत्वमात्रम्, अस्ति चात्र देवतानामदृष्टविषया ग्रहणाङ्गताङ्गीकारेऽपि तत्। तथाहि–एकस्मिन् ग्रहणे अनेकासां देवतानामदृष्टार्थानां न तावत् विकल्पो युक्तः, प्रयाजादिवदेवैकार्थत्वे प्रमाणाभावात्; समुच्चयस्तु एकस्मिन् ग्रहणे किं सर्वेषां

१. तै. सं. ५. ३.।

देवताप्रातिपदिकानामन्ते चतुर्थी समुच्चारणीयेत्येवंविधः, किंवा प्रत्येकं चतुर्थ्यन्तपदान्युच्चार्याऽन्ते ग्रहणमित्येवंविधः ? नाऽऽद्यः; प्रत्येकं तद्धितश्रवणानुपपत्तेः। अन्त्येऽपि किं सकृद्यागकरणं ग्रहणवत्, उत यागावृत्तिः ? नाऽऽद्यः, मित्रावरुणादीनामुपपादकीभूतयागसम्बन्धाभावेन देवतात्वानुपपत्तेः। नान्त्यः, प्रकृत्यर्थदेवताभेदेन प्रत्ययार्थभूतद्रव्यभेदावगमादनेकेषां द्रव्याणां सकृदनुष्ठीयमानग्रहणसंस्कार्यत्वायोगात्। न चैवमप्यावृत्त्यापि सर्वसंस्कारोपपत्तेः न ग्रहणभेदावश्यम्भावः, संख्यावत् गुणस्याऽपि स्वसम्बन्धिभेदकत्वसम्भवे तत्सम्बन्धयभ्यासभेदापादकत्वायोगात्; अन्यथा वाजिनस्यापि तदापत्तेः। अतो निविशमानेनापि गुणेन ग्रहणभेदावगमाद्युक्तस्तेषामुक्तविधया समुच्चयः।

न चास्तु ग्रहणानां समुच्चयः, तावद्ग्रहणसंस्कृतद्रव्यैस्तु युगपदेव यागसिद्धेः न तदावृत्तौ प्रमाणमस्तीति वाच्यम्, समुच्चितानेकदेवताकत्वात्सकृदनुष्ठानानुपपत्तेः। न हि सर्वा उद्दिश्य सकृत्त्यागः सम्भवति, देवतोद्देशसमकालीनत्यागस्यैव यागपदार्थतया वृद्धव्यवहारसिद्धत्वेन सर्वेषां देवतोद्देशानां त्यागसमानकालीनत्वानुपपत्तेः।

अत एव यत्र मन्त्रवर्णेनाऽनेकानि देवतात्वाधिष्ठानान्युच्यन्ते, तत्र देवतात्वस्य लाघवादेकस्यैव कल्पनेनाऽधिष्ठानोद्देशसमकालीनत्वासम्भवेऽपि देवतात्वोद्देशसमकालता नाऽनुपपन्ना। अत एव तादृशस्थले क्वचित् केषाञ्चित् प्रत्येकचतुर्थ्यन्तपदोच्चारणं निर्मूलमेव। अत एव सूक्तवाकादौ तत्तत्त्यागे अग्न्यादीनां प्रत्येकं देवतात्वेऽपि उपयुक्तदेवतापदवृत्तिदेवतात्वस्यैकस्यैव प्रस्तरादियागे कल्पनात् त्यागसमकालता उपपन्ना। यत्र तु "अग्नये कृत्तिकाभ्यः पुरोडाश" मित्यादौ द्वयोरप्यधिष्ठानदेव-

तात्त्वयोर्भेदः, तत्रैकवाक्योपादानावगतसाहित्यबलात् समका-लतावाधेऽपि न क्षतिः । प्रकृते तु प्रयोगविध्यवगतसाहित्यस्यो-त्तरकालिकत्वेन दुर्बलत्वान्न समकालत्वबाधकैतेति वैषम्यम् । प्रकृते च याज्यापुरोरुचोर्भेदात् सुतरां सकृदनुष्ठानानुपपत्तिः, पृथग्गृहीतानां द्रव्याणां विना वचनं मेलनासम्भवाच्च ।

अत एव च यत्रैकस्मिन्नेव पात्रे वायवे इन्द्रवायुभ्यां च ग्रहणं तत्र वचनान्मेलनेऽपि न दोषः । मेलनासम्भवेनैव चाऽग्निष्टुति "आग्नेया ग्रहा भवन्ती"ति वचनादग्निमात्रदेवत्यप्राकृतसर्वग्रहण-वति सम्प्रतिपन्नदेवताकत्वेऽप्यावृत्तिसिद्धिः । तस्माद्यागावृत्तेरपि न्यायसिद्धत्वादुक्तं क्रमसमुच्चयदर्शनम् । अथवाऽस्तु तद्विधायकम्, तेनैव चाऽग्निष्टुत्यावृत्तिसिद्धिरिति ध्येयम् ।

प्रयोजनं पूर्वपक्षे उत्पत्तौ यागार्थतया देवताश्रवणात् नो-द्भिदादौ तद्विध्यन्तः, अपि तूपांशुयाजीयः; सिद्धान्ते त्वव्य-क्तत्वात् सौमिकविध्यन्तः, सर्वाभ्यासविध्यन्तसमुच्चयाच्च यथाप्र-कृत्यनुष्ठानमिति द्रष्टव्यम् ।

सूत्रं तु—तद्भेदात देवतोद्देशभेदात्, कर्मणः ग्रहण-स्य, अभ्यासः भेद इति यावत् । नन्वर्थप्राप्ते ग्रहणे सर्वेषां देवतासंयोगानां विधानोपपत्तेः कथं तावन्मात्रेण भेदसिद्धिः, अत आह—द्रव्यपृथक्त्वात् प्रकृत्यर्थदेवताभेदादेव संस्कार्यद्रव्यपृ-थक्त्वावगमात्, अतश्च प्राप्तग्रहणानुवादेनोभयविधाने वाक्यभे-दापत्तेः युक्तो ग्रहणभेद इत्याशयः । नचैवमपि तेषां दृष्टार्थतया कथं समुच्चयः ? विधिबलेन दृष्टार्थताया अप्यङ्गीकारात्, अन्यथा विधिजातं अनर्थकमेव स्यात्, अतो दृष्टा-र्थत्वात् समुच्चयः । खादिरादिद्रव्याणां तु बन्धनक्रियां प्रति गुणभूतत्वाद्विकल्प इति भेद इति ग्रहणक्रमसमुच्चयदर्शनोपप-

त्तौ व्याख्येयम् । होमक्रमसमुच्चयदर्शनोपपत्तौ तु, तद्भेदात् समुच्चितदेवतोद्देशभेदात्, कर्मणः यागस्य, अभ्यासःआवृत्तिः, संस्कार्यद्रव्यस्य पृथक् ग्रहणाद्वचनं विना मेलनानुपपत्तेः, अन्यथा पृथक् ग्रहणमनर्थकं स्यात्, न चैवं यागभेदापत्तिः, देवतारूपस्य द्रव्यस्य ग्रहणं प्रत्येव गुणत्वेन स्ववाक्ये यागाकल्पकत्वात्; अतो यागावृत्तिमात्रबोधनाद्युक्ता होमेऽपि क्रमसमुच्चयदर्शनोपपत्तिरिति व्याख्येयम् ।

इति षष्ठं पशुसोमाधिकरणम् ॥ ६ ॥

## अथ सप्तमं संख्याधिकरणम् ॥ ७ ॥

## पृथक्त्वनिवेशात् संख्यया कर्मभेदस्स्यात् ॥२-२-२०॥

(विषयसंशयौ)

(१)"तिस्र आहुतीर्जुहोति" (२)"द्वादश द्वादशानि जुहोति" (३)"आज्यभागौ यजति" (४)"पार्वणौ जुहोति"त्यादौ किं यावत्संख्यं धात्वर्थभेदो भावनाभेदश्च, किं वा एक एव धात्वर्थो भावना चेति विचार्यते ।

( सङ्गतिः )

अत्र पादाध्यायसङ्गतिस्स्पष्टा । अभ्यासापवादत्वेन च पूर्वाधिकरणोत्थानात् तत्समाप्तया बुद्धिस्थेऽभ्यासेऽप्रकृतश्रवणात् युक्ता भेदकता, प्रकृते तु सकृच्छ्रवणात् न भेदकत्वोपपत्तिरिति पूर्वपक्षोत्थानादभ्यासाधिकरणेनाऽपि प्रत्युदाहरणरूपा ।

१. तै. सं. २. ३. ६. ? २. तै. सं. ५. ४. ८. २.
३ तै. सं. २. ६. २. १. ४. आप. श्रौ. १. ३. २०. ५.

( पूर्वपक्षः )

तत्र न तावद् संख्यायाः साक्षादेव भावनाभेदबोधकत्वम् । सत्यपि प्रथमत स्संख्यायाः अपि विशेष्यभूतायां भावनायामन्वये धात्वर्थवाच्याहुतिपदसामानाधिकरण्यदर्शनात् स्वाश्रयकरणकत्वसम्बन्धेन तदाश्रयणात्, संख्यायाश्चैकत्वातिरिक्तायास्स्वसमानाधिकरणस्वाश्रयप्रातियोगिकभेदव्याप्तत्वरूपपृथक्त्वनिवेशित्वस्वाभाव्यात्, सत्यपि स्वाधारवृत्तिभेदबोधकत्वे तदनाधारभावनाभेदबोधकत्वानुपपत्तेः । नाऽपि धात्वर्थभेदबोधनद्वारा, संख्यायाः पदान्तरोपात्तत्वेन समानपदप्रमितैकत्वसंख्यावरुद्धे धात्वर्थे साक्षात्सम्बन्धेन वृत्तित्वानुपपत्तेः । यद्यपि 'जुहोती'त्याख्यातोपात्तैकत्वं कर्तृगामित्वान्न धात्वर्थवृत्तित्वेन प्रमितम्, तथापि अनवच्छिन्नस्य धात्वर्थस्य भावनान्वयित्वानुपपत्तेः अवच्छेदकीभूतसंख्यापेक्षायां प्रथमातिक्रमे कारणाभावादेकत्वस्यैव धात्वर्थवृत्तित्वप्रमा नाऽनुपपन्ना । अतश्च यथैव "एकादश प्रयाजान् यजती"त्यादौ धात्वर्थसम्बन्धित्वेन श्रुताऽप्येकादशत्वसंख्या पञ्चत्वावरुद्धे धात्वर्थे साक्षाद्वृत्तितया निवेशमलभमाना धात्वर्थप्रयोगवृत्तित्वेनाऽऽश्रीयत इति सत्यपि प्रयोगरूपाभ्यासभेदे सोमयागवदेव न कर्मभेदकता, तथाऽत्रापि न धात्वर्थभेदकतेति द्रष्टव्यम् ।

अत एवाऽनन्तरसङ्गतिरपि; न चैकत्वसंख्याया अनुमितत्वेन न सामानाधिकरण्यप्रमितश्रुतसंख्यावृत्तिधात्वर्थानिष्ठत्वबाधकतेति वाच्यम्, एकत्वस्याऽनुमितत्वेन प्राबल्यात्; अन्यथा प्रयाजगतस्य पञ्चत्वस्य प्रत्येकैकत्वस्य च प्रकृतावार्थिकत्वेन प्राबल्यानुपपत्तेः । अत एव "तिस्र आहुती"रितिसामानाधिकरण्यमपि प्रयोगद्वारकमेव व्याख्येयम् ।

अस्तु वा धात्वर्थमात्रवृत्तिताङ्गीकारेण तद्भेदकता, तथाऽपि भावनाभेदे प्रमाणाभावः; न तावत्संख्या, तस्यास्तद्भेदकत्वा-नुपपत्तेरुक्तत्वात् । नाऽपि संख्यया धात्वर्थभेदस्तद्भेदे च शब्दा-न्तरन्यायेन भावनाभेद इति वाच्यम्, प्रकृतिभेदे हि तदर्था-नुबद्धायां भावनायां प्रकृत्यन्तरार्थस्य निवेशासम्भवाद्युक्तो भावनाभेदः; प्रकृते त्वनेकेषामपि धात्वर्थानामेकेन धातुनो-पादानात् सर्वेषामेकस्यामेव भावनायां समूहालम्बनवन्निवेशो-पपत्तेः न शब्दान्तरन्यायविषयत्वम् । किञ्च भावनानेकत्वे विधेयानेकमुख्यविशेष्यकत्वाच्च वाक्यभेदोऽपि; अतः 'समिधो यजती'तिवत् सत्यपि संख्याश्रवणे न भेदः इति प्राप्ते-

( सिद्धान्तः )

अभिधीयते-"तिस्र आहुती"रिति सामानाधिकरण्याद्धा-त्वर्थवृत्तित्वप्रतीतेः तद्भेदकत्वमेव संख्यायाः । न च प्रयाजैका-दशत्वन्यायविषयत्वम्, एकादशत्वविधितः पूर्वं प्रकृतौ प्रयाजा-नां प्रत्येकैकत्वेन वा प्रचयशिष्टपञ्चत्वेन वा निर्ज्ञातसंख्यत्वात्; प्रकृते तु यावन्न्यायेन धात्वर्थे संख्याऽनुमातुमारभ्यते तावत् प्रत्यक्षश्रुतया संख्यया निराकाङ्क्षीकृते नाऽनुमानप्रसरः सम्भवति ।

किञ्च कारणाभावे एव खल्वेकत्वकल्पको न्यायः । न चाऽत्र सोऽस्ति, त्रित्वश्रवणस्यैव कारणस्य सत्त्वात्; अतश्च प्रत्यक्षश्रुतसंख्यासत्त्वे धात्वर्थेन स्वपरिच्छेदार्थमे-कत्वसंख्यानुमानाद्युक्तस्तया धात्वर्थभेदः । न चैवं यत्रो-त्पत्तिवाक्ये संख्या न श्रुता वाक्यान्तरे च तस्याः श्रवणं तत्रापि श्रुतसंख्यासत्त्वे तदाक्षेपानवतारात् संख्यया कर्म-भेदापत्तिः; तादृशस्थले श्रुतसंख्याबोधकवाक्यस्य प्रवृत्तेः पूर्व-मेव तदुपजीव्येनोत्पत्तिवाक्येनैकत्वस्यैवाऽनुमानात् । तथा हि-

सर्वत्र पदश्रवणक्रमेण प्रथमतः पदार्थोपस्थितिः, पश्चात् सर्वेषां प्रत्यासत्तिक्रमेण भावनान्वयः, विशिष्टप्रतीत्युत्तरकालं च तस्यां विध्यन्वयः, तदुत्तरं चाऽपरिच्छिन्नानां क्रियान्वयायोगात् परिच्छेदकीभूतसंख्यानुमानमिति वस्तुस्थितिः । तद्यत्रोत्पत्तिवाक्य एव संख्याश्रवणं तत्रानुमानप्रवृत्तेः पूर्वमेव संख्याया भावनान्वयात् तन्निर्वाहार्थं तस्या धात्वर्थसम्बन्धावश्यम्भावात्तयैव निराकाङ्क्षत्वोपपत्तेः पश्चात् न संख्यान्तरानुमानप्रसक्तिः । यत्रोत्पत्तिवाक्ये सा न श्रुता, उत्पन्नवाक्यस्य च तदनुवादेन संख्याविधायकत्वात् तदुपजीवकत्वेन तदुत्तरप्रवृत्तिकत्वम्, तत्रोत्पत्तिवाक्येन स्ववाक्यार्थावधारणवेलायां परिच्छेदकीभूतसंख्यानुमाने तावन्न किञ्चिद्बाधकमस्ति ।

न चाऽनुमितस्याऽप्युत्तरकालं श्रुतेन बाधः, दुर्बलस्याऽपि पूर्वप्रवृत्तस्याऽतदुपजीव्य प्रवृत्तेनोत्तरेण बाधायोगात् । अन्यथा प्रथमप्रतीतस्याऽपि दुर्बलस्य यागगतकरणत्वस्यौत्तरकालिकेन श्रुतेन सोमकरणत्वेन बाधापत्तेः । न च उत्पन्नशिष्टस्याऽऽनर्थक्यम्; अभ्यासद्वारकतयाऽप्युपपत्तेः । प्रकृते त्वश्रुतसंख्यानुमानात् पूर्वमेव श्रुतायाः संख्यायाः भावनान्वयद्वारा विध्यन्वयप्रतीतेरौत्तरकालिकत्वाभावेनाऽनुमानप्रतिबन्धाद्युक्ता भेदकतेति वैषम्यम् ।

अत एव यत्र संख्यायाः उत्पत्तिवाक्यगताया अपि सम्भवत्प्राप्तिकाया विशिष्टविधिगौरवापत्तेर्न भावनान्वयद्वारा विध्यन्वयः । तत्र तस्याऽनुमानप्रतिबन्धकत्वाभावान्न धात्वर्थभेदकता । यथा—(१)'समिधो यजती'त्यत्र समिध इति बहुवचनं (२)"समिधो अग्न आज्यस्य व्यन्त्वि"ति मन्त्रवर्णे समिद्देवतागतत्वेन बहुत्वस्य प्राप्तत्वात् बहुत्वसंख्याविशिष्टयागविधौ च गौरवापत्तेः

१. तै. सं. २. ६. १.  २ तै. ब्रा. ३. १. ६.

स्वाश्रयदेवत्ययागवृत्तित्वसम्बन्धेनैकत्वलक्षणार्थं सत् समित्प्रातिपदिकलक्षिततत्तद्देवत्ययाग एवाऽन्वेतीति शक्यार्थस्य बहुत्वस्य विध्यन्वयाभावान्न धात्वर्थभेदकता । अतश्चोत्पद्यमानकर्मसमानाधिकरणा विधेया संख्या कर्मभेदिकेति सिद्धम् । कर्मसामानाधिकरण्याभावादेव च "त्रिर्वेदिं प्रोक्षती"त्यादौ न कर्मभेदः, त्रिरित्यस्य क्रियाभ्यावृत्तिगणनार्थसुच्प्रत्ययान्तत्वेनाऽभ्यासवृत्तिसंख्याप्रतिपादकस्य कर्मसामानाधिकरण्याभावात् । अतः सिद्धः संख्यया धात्वर्थभेदः ।

न चैवमपि भावनाभेदकाभावः, शब्दान्तरस्यैव सत्त्वात् । यद्यपि च समानपदोपात्तधात्वर्थावरोधे पदान्तरोपात्तधात्वर्थस्यावच्छेदकत्वायोग इत्येवंविधो गुणन्यायसङ्कीर्णो मूलोक्तशब्दान्तरन्यायो नाऽत्र भावनाभेदकत्वेन सम्भवी, तथाऽपि कार्यतावच्छेदकतत्तद्यागत्वादिभेदात् कारणतावच्छेदकयत्नत्वेऽपि वैजात्यमित्येवंविधोऽस्मदुक्तश्शब्दान्तरन्यायस्तु प्रकृतेऽपि सम्भवत्येवेति न कश्चिद्विरोधः । सत्यपि च विधेयभावनानेकत्वे एकपदोपादानाद्युगपत्प्रतीतेः न वाक्यभेदः । अत एवाऽस्माभिः भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमर्थैकत्वलक्षणमुक्त(१)मर्थैकत्वाधिकरणे । तस्माद्युक्तः संख्यया कर्मभेदः ।

न च संख्या न स्वतन्त्रं मानम्, एकस्मिन् कर्मण्यनिविशमानत्वसाम्येन गुण एवाऽन्तर्भावादिति वाच्यम्; अनिविशमानत्वसाम्येऽपि उत्पत्तिगतायाः संख्यायाः प्रमाणान्तरासिद्धोत्पत्तिकस्यैव कर्मणोऽनेकत्वमात्रबोधकत्वात् । 'तिस्र आहुती'रित्यत्र हि शब्दान्तरादिनैवोत्पत्तिपरत्वावधारणम्, न तु संख्यायास्तत्र व्यापारः, अपि त्वनेकत्वमात्रबोधे, गुणस्य तु सत्यप्यार्थमर्यादावुत्पत्तिवाक्यगतस्य भेदकत्वे उत्पन्नवाक्यगतस्याऽप्यनिविशमा-

नत्वेन स्वविशिष्टकर्मोत्पत्तिबोधनद्वारा भेदबोधकत्वमिति वैधर्म्यम्।

एवं संज्ञातोऽपि संख्याया वैलक्षण्यं द्रष्टव्यम्। तस्मात् संख्यापि स्वतन्त्रं प्रमाणम्।

प्रयोजनं—एतदङ्गभूतो मन्त्रः वेदिप्रोक्षणमन्त्रवत् सकृदेव प्रयोज्यः पूर्वपक्षे, सिद्धान्ते त्वावर्तनीय इति। तथा एतत्कर्माश्रितो गुणः प्रत्यभ्यासं सायम्प्रातरावृत्तहोमाश्रितदधिवदावर्तनीयः पूर्वपक्षे, सिद्धान्ते त्वाश्रयापेक्षायां प्रत्येकमेवाऽऽश्रयत्वकल्पनादनियमेन यस्मिन् कस्मिंश्चित् होमेऽनुष्ठेय इति। सूत्रं स्पष्टम्॥

भाष्यकारेण तु कर्मसमानाधिकरणायाः संख्याया भेदकत्वस्य स्फुटत्वात् तदनादृत्य "सप्तदश प्राजापत्यान् पशूनालभत" इति द्रव्यसमानाधिकरणसंख्याया भेदकत्वं विचारितम्—किमत्र सप्तदशपशुद्रव्यक एको यागो विधीयते? किंवा एकैकपशुद्रव्यकास्सप्तदश यागाः? इति। तत्र पादाध्यायप्रकरणसङ्गतयः पूर्ववदेव। अनन्तरा तु पूर्वाधिकरणे भिन्नवाक्योपात्तानामनेकेषामपि देवतात्वानामेकेन यागेनोपपत्तावुक्तायामेकवाक्योपात्तैकदेवतात्वस्य सुतरामेकेन यागेनोपपत्तिरिति पूर्वपक्षोत्थानात् द्रष्टव्या।

तत्र प्राजापत्यानिति पदे प्रकृत्या प्रजापतिस्तद्धितेन देवतात्वविशिष्टद्रव्यं सन्निहितं पश्वाख्यं द्वितीयया करणत्वं बहुवचनेन बहुत्वमुच्यत इति तावद्वस्तुस्थितिः, पशुपदं न द्रव्यविशेषतात्पर्यग्राहकम्, तत्र पदद्वयेऽपि बहुत्वस्य प्रथमतः करणत्वेनान्वितस्याऽपि पाष्ठिकः पश्वाख्यद्रव्येणैऽत्रान्वयः पश्वेकत्वाधिकरणवक्ष्यमाणन्यायेनाऽवगम्यते, न तु देवतात्वविशिष्टद्रव्येण।

न च पशुपदे तथान्वयेऽपि प्राजापत्यपदे बहुत्वस्य देवतात्व-

विशिष्टद्रव्य एव तद्धितार्थेऽन्वयो युक्तः; प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वनियमादिति वाच्यम्, संख्यारूपप्रत्ययार्थस्य प्रकृत्यर्थविशेष्यान्वयित्वव्युत्पत्तेः; अन्यथा द्वौ त्रय इत्यत्र द्वित्वादिविशिष्टे संख्यान्वये चतुर्णां नवानां वा प्रतीत्यापत्तेः; श्रुतविशेष्याऽन्वयबाधे हि क्वचित् विशेषणस्यैव विशेष्यत्वलक्षणयाऽन्वयः, यथा—"द्व्येकयोर्द्विवचनैकवचने" इत्यादौ, न तु क्वाऽपि विशिष्टेऽन्वयो दृष्टचरः ।

अत एव(१) "पञ्च पञ्चाशतस्त्रिवृतस्संवत्सरा" इत्यत्र पञ्चाशत्सङ्ख्यायामेव विशेष्यभूतायां पञ्चत्वान्वयः, संवत्सरसामानाधिकरण्यं तु संवत्सरपदस्य संवत्सरवृत्तिमल्लक्षणयेति न विरोधः । अतो देवतात्वविशिष्टद्रव्ये तद्धितार्थेऽपि बहुत्वान्वयो द्रव्य एवेति सिद्धम् । स चोभयथा सम्भवी, द्रव्ये देवतात्वान्वयोत्तरं, ततः पूर्वं वा, तत्र यद्युत्तरं ततो देवतासम्बन्धस्य प्रतिसम्बन्धिनि द्रव्ये साहित्यानवगमात् प्रत्येकं देवतासम्बन्धप्रतीतेः स्यादनेकयागकल्पनम्, पूर्वभाविनि तु तस्मिन् साहित्यावच्छिन्नस्यैव प्रतिसम्बन्धित्वात् सत्यप्याधिष्ठानभेदे प्रतिसम्बन्धितापर्याप्त्यधिकरणतावच्छेदकस्यैकत्वेन द्रव्यदेवतासम्बन्धैक्यप्रतीतेरेकयागकल्पनम् । तदेवमुभयोपपत्तावनेकयागतदपूर्वकल्पनागौरवभिया बहुत्वान्वयस्य पूर्वत्वमेवाऽऽश्रीयते । एवं च पशुपद इव तद्धितेऽपि बहुत्वान्वयात् पूर्वमेकशेषः क्रियमाणो द्रव्य एवाऽऽश्रितः स्यात् न तु देवतात्वे प्रजापतिरूपे च प्रकृत्यर्थेऽपीत्यपि लाघवम् । एवञ्च यद्यपि क्वचित् बहुत्वस्य विशिष्टेऽप्यन्वयो दृष्टचरो भवेत्, तथाऽपि विशेष्यमात्रेऽप्यन्वयदर्शनादुभयथा व्युत्पत्तिसत्त्वे पूर्वोक्तविधयाऽत्रोभयथाऽप्युपपत्तौ च लाघवस्यैव नियामकत्वाद्युक्तमेकयागकल्पनम् ।

नन्वतिदेशशास्त्रस्य नियामकत्वसम्भवेन बाधवाक्यस्यन्या-यस्य नियामकता युक्ता; स हि प्रकृतित एकपशुनिष्पन्नैकावदा-वदानगणमेकं प्रापयति । प्रकृतौ हि 'पशुमालभेते'ति हृदयादिप्र-कृतिभूतपशुगतमेकत्वं विवक्षितम् । 'हृदयस्याऽग्रेऽवद्यती'त्यादि-ष्वपि च संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनदशायां अध्वर्युगतैकत्ववद्धृदयादिगतैकत्वस्य विवक्षितत्वादेक एवावदा-नगणोऽङ्गम् । अतश्च तस्य यागैकत्वे आतिदेशिकत्वादेकस्यैव प्राप्तेः सप्तदशपशुप्रकृतिकत्वानुपपत्तिः ।

यद्यपि चौपदेशिकया पशुसंख्यया आतिदेशिक्याः तस्या बाधस्स्यात्, तथाऽपि हृदयाद्येकत्वस्य भिन्नविषयत्वात् बाधकाभावेन तस्य सप्तदशपशुप्रकृतिकत्वानुपपत्तिस्तद-वस्थैव । यागभेदे तु प्रतियागमतिदेशभेदात् तावतां गणानां प्राप्तेर्युक्ता तावत्पशुप्रकृतिकतेति । अतोऽतिदे-शेनैव वाक्यशेषस्थानीयेन निर्णयोपपत्तेः देवतात्वान्वयोत्तरं द्रव्यमात्रे बहुत्वान्वयो विशिष्ट एव वा स इत्यङ्गीकर्तुं युक्त मिति चेत्—न ; अतिदेशस्योभयथाऽप्युपपत्तावनिर्णायकत्वात् । तथाहि—

प्रकृतौ पशुशास्त्रस्य विशसनादिरूपतात्पर्यग्राहकबलेन सर्वाव-यवद्वारा पशुसाधनताबोधकत्वे प्राप्ते हृदयादिशास्त्रं परिसंख्यार्थमि-त्युक्तम्; स्थास्यति च । अतः पशुशास्त्रमेवार्थाद्धृदयादिसाधनता-विधायकं नाऽवदानशास्त्रम् । तत्र च पशुगतैकत्वेन हृदयाद्येकत्व-स्याऽर्थसिद्धत्वान्न तदंशेऽपि विधिकल्पनम् । एवं च यद्यप्यवदान-विध्यन्यथानुपपत्त्यैव हृदयादिविधिकल्पनम्, तथाऽप्यर्थसिद्धत्वा-न्नैकत्वविशिष्टस्य तस्य । अतश्च हृदयादिगणस्य यागसाधनस्यापि यथैव पशुगतैकत्वानुरोधेन प्रकृतावेकत्वं तथैवाऽत्र तद्गतसप्तदशत्वा-

नुरोधेन सप्तदशत्वमिति न कश्चित् यागैकत्वेऽपि तस्य विरोधः। अतो द्रव्यदेवतासम्बन्धस्यैकत्वे लाघवन्यायस्यैव नियामकत्वात् युक्तं यागैकत्वम् ।

अस्तु वा यथाकथञ्चित् सम्बन्धभेदः, तथाऽपि सर्वसम्बन्धोपपादकत्वेन सोमयागवल्लाघवेनैकस्यैव यागस्य कल्पनोपपत्तेः नाऽनेकत्वे प्रमाणमस्ति । तेन यथैव सिद्धान्ते सकृदनुष्ठानेनैवाऽनेकयागनिष्पत्तिः, तथा मन्मतेऽप्येकेनैव यागेन सर्वदेवतासम्बन्धोपपत्तिः । अतो न कर्मान्तरम् ।

यत्त्वत्र न्यायसुधाकृता तद्धितोत्तरबहुवचनमात्रालोचने विशिष्ट एव ताद्धितार्थे बहुत्वान्वयापत्तेः पूर्वपक्षानुत्थानप्रसङ्गात् न तन्मात्रालोचनेनाऽत्र पूर्वपक्षः, किन्तु तद्धितस्य सर्वनामार्थवृत्तित्वात् सर्वनाम्नश्च सन्निहितपशुपरामर्शित्वात् बहुवचनान्तपशुपदानुरोधेन सर्वनाम्न एवैकशेषत्वकल्पनया बहुत्वसंख्यावच्छिन्नसर्वनामार्थ एव ताद्धितोत्पादात् तदुत्तरबहुवचनस्याऽत एवानुवादत्वात् बहूनां पशूनामेकदेवतासम्बन्धेन कर्मैकत्वमित्येव पूर्वःपक्ष इत्युक्तम्; तत् बहुत्वान्वयस्य विशेष्य एव व्युत्पन्नतया अश्रुतसर्वनामैकशेषत्वकल्पने प्रमाणाभावाच्चोपेक्षितम् । अतः प्रागुक्त एव पक्षो युक्तः इति प्राप्ते—

## ( सिद्धान्तः )

अभिधीयते—सत्यं संख्याया विशेष्यान्वय एव व्युत्पन्नः, तथापि तु समानाभिधानश्रुत्या संख्यान्वयात् पूर्वमेव देवतात्वं द्रव्येऽन्वेति, पश्चादेव पदश्रुत्या संख्या । अतश्च देवतात्वस्य प्रतिसम्बन्धिनि द्रव्ये साहित्यानवगमात् पशुत्वस्यैव प्रतिसम्बन्धितावच्छेदकत्वप्रतीतेः उत्तरकाले बहुत्वान्वयेन पशुत्वावच्छि-

भेदप्रतीतेः सम्बन्धितापर्याप्त्यधिकरणताभेदेन देवतासम्बन्धानामपि योग्यतावशेन भेदप्रतीतिः। न च पशुत्वस्य पशुपदाधीनप्रतीतिकत्वात् तस्य च बहुवचनान्तत्वेन सामानाधिकरण्यसम्बन्धेन बहुत्वविशिष्टस्यैव तस्य प्रतिसम्बन्धितावच्छेदकत्वप्रतीतिरिति वाच्यम्, पशुत्वविशेषावधारणस्य उत्तरकालमप्युपपत्तौ तद्धितस्य पशुपदाधीनप्रवृत्तिकत्वे प्रमाणाभावात्।

न च तात्पर्यग्राहकज्ञानस्य तद्धितपदजन्यपदार्थोपस्थितावेव सहकारिकारणत्वाभ्युपगमात् कथं तद्धितपदस्य पशुपदाधीनप्रवृत्तिकत्वाभाव इति वाच्यम्, तात्पर्यग्राहकज्ञानाभावेऽपि तद्धितपदमात्रश्रवणेनाऽनिर्धारितद्रव्यविशेषबोधे बाधकाभावात्। अन्यथा तद्धितमात्रश्रवणात् द्रव्यविशेषसंशयानुपपत्तेः। अतोऽनिर्धारितद्रव्यविशेषे बुद्धेऽपि विशेषणान्तरव्यावृत्तिमात्रफलकत्वं तात्पर्यग्राहकस्येति द्रष्टव्यम्।

अस्तु वा गुणाधिकरणवार्तिकस्वारस्यात् तात्पर्यग्राहकस्य पदार्थोपस्थितावेवोपयोगः, तथाऽपि तत्त्वेन पशुप्रातिपदिकस्यैवोपयोगः, योग्यत्वात्, न तु बहुवचनादेरपि, बहुवचनस्योभयथाप्युपपन्नत्वेन तात्पर्यग्राहकत्वाभावाच्च। तथाहि—बहुत्वस्य पार्ष्ठिको द्रव्यसम्बन्धो द्वेधा सम्भाव्यते—करणत्वानां बहुत्वेनैकत्वेन वा। तद्यत्र प्रमाणान्तरेण प्रत्येकव्यावृत्तिकरणत्वमवगतम्, यथाऽऽग्नेयादिषु तत्तदुत्पत्तिवाक्ये, यथा वा(१)"तां चतुर्भिरादत्ते" त्रिवृद्बहिष्पवमान"मित्यादौ, तत्तन्मन्त्रवृत्त्यर्थप्रकाशनकरणत्वे लोकव्युत्पत्तितः तत्र प्रत्येककरणताश्रयाणामेव पार्ष्ठिको बहुत्वान्वयः। अत एव तत्र करणानां समुच्चयो, न तु समुदितानां करणत्वमेकम्; यत्र तु प्रमाणान्तरेण न तद्भेदावगमः तत्र लाघ-

१. श. ब्रा. ६. ३. १. ४३. २. ता. ब्रा.

वेन करणत्वस्यैकस्यैव कल्पनादेककरणताश्रय एव पार्ष्ठिको बहुत्वान्वयः। अत एव तत्र समुदितानामेकं करणत्वम्। शक्यते तु तादृशस्थलेऽपि प्राथमिककरणतान्वयवेलायां बहुत्वानवच्छिन्नस्यैव प्रातिपदिकार्थस्य करणत्वान्वयमभ्युपगम्य तन्निर्वाहार्थं पार्ष्ठिको बहुत्वान्वयोऽपि करणीभूतप्रातिपदिकार्थस्यैव प्रतीयत इति तत्रापि करणानामेव समुच्चयो, न तु समुच्चितानां करणत्वमिति वक्तुम्। अतो यत्र प्रमाणान्तरेणैवैका करणता प्रतीयते तत्रैव समुदितानां करणत्वमिति द्रष्टव्यम् ।

तदिह पशूनामपि यागकरणत्वं योग्यतया प्रत्येकमेवावगतम्। न हि पशुसमुदाये एकं स्वत्वम्, प्रमाणाभावात्, यथेष्टविनियोगादिरूपस्य स्वत्वकार्यस्य प्रत्येकं दर्शनाच्च, समुदायस्य स्वातन्त्र्येण यथेष्टविनियोगानर्हत्वाच्च । अतः प्रत्येकं पशूनां स्वत्वाश्रयत्वात् तद्ध्वंसानुकूलव्यापाराख्ययागकरणत्वमपि प्रत्येकमेवाऽवगम्यते। अत एवाऽत्र करणानामेव समुच्चयो, न तु समुदितानां करणत्वम्। अतश्च प्रत्येकमेव यागसाधनत्वाख्यहविष्ट्वावगतेः तदर्थविहितदेवतातद्धितेनाऽपि प्रत्येकमेव देवतात्वसम्बन्धावगतिः ।

अत एव करणत्वविशिष्टपशुबोधकस्यैव शब्दस्य तात्पर्यग्राहकता न बहुवचनस्यापि। तदर्थस्य हविष्ट्वानवच्छेदकत्वात्। यद्यपि च पशुपदमात्रश्रवणेन यागसाधनत्वरूपं हविष्ट्वं न प्रतीयते, तथापि देवतातद्धितश्रवणाद्देवतात्वसम्बन्धात् पूर्वं तत्प्रतीतिरावश्यकी । अन्यथा "सूक्तहविषोरिष्टि" रिति स्मृत्या तस्य नियतविषयत्वाद्नुपपत्त्यनापत्तेः। अतो हविष्ट्वे पशूनां(१)प्रमिते देवतासम्बन्धः, तद्वचरं च यागस्य प्रमाणान्तरेणान-

१. प्रतीते इति. क. पु.

वगमात् कल्पनेत्यवधेयम् ।

यद्यपि च प्रदेयत्वाख्यं हृदयादीनामेव हविष्ट्वम्, तथापि प्रदेयप्रकृतित्वाख्यं हविष्ट्वं पशूनां देवतासम्बन्धसिद्ध्यर्थमिहोक्तमिति न विरोधः ।

नचैवमपि हविष्ट्वस्य स्वरूपसत एव तद्धितोत्पत्त्यावुपयोगात्र ज्ञानापेक्षेति वाच्यम्, तथात्वे सर्वनामार्थस्यापि स्वरूपसत एवोपयोगोपपत्तौ देवतात्वमात्रस्य वाच्यताप्रसङ्गेन द्रव्यविशेषस्याऽप्यवाच्यतापत्तेः । अतश्च यथैव सूत्रकृदुक्तः अस्यशब्दार्थो वाच्यकोटिप्रविष्ट इति गुणाधिकरणे वक्ष्यते तथा भाष्यकृदुक्तो हविरादिविशेषोऽपि वाच्यकोटिप्रविष्ट एवेति तत्प्रतीतिरपि देवतासम्बन्धात् पूर्वमावश्यकी । अतश्च यागसाधनत्व योग्यतावच्छेदकपशुत्वात्रच्छिन्नस्यैव बहुत्वानवच्छिन्नस्य देवतासम्बन्धात् तस्य च प्रतिसम्बन्धितापर्याप्त्यधिकरणभेदेन भिन्नत्वात् भेदसिद्धिः। अत एव(१) वसन्ताय कपिञ्जलानालभेते" यत्रापि चतुर्थ्युपात्तस्य त्यज्यमानद्रव्योद्देश्यत्वाख्यस्य देवतात्वस्य त्यज्यमानद्रव्यस्वरूपहविष्ट्वं विनानुपपत्तेः कपिञ्जलानां च प्रत्यक्षमेव यागसाधनत्वाख्यहविष्ट्वयोग्यत्वात् पूर्ववद्देवतासम्बन्धभेदोपपत्तिः ।

अत एव पार्थसारथेः तदनुयायिनां चैकपशुनिष्पन्नैकादशावदानगणैकताप्रापिचोदकानुरोधेनैव देवतासम्बन्धभेदोपपादनं निर्मूलमेव ।

किञ्चैवं सति(२)सप्तदश मारुतीः त्रिवत्सा उपाकरोति सप्तदश प्रश्नीनुक्षणः तान् पर्यग्निकृतानुत्सृजन्ति मैत्रावरुणाः आलभन्ते" इत्यत्रोक्तवाक्ये पर्यग्निकरणान्ताङ्गरीतिविधानादेकादशावदानगणप्राप्त्यभावेन कथं देवतासम्बन्धभेदसिद्धिः ? यद्यपि तत्राऽने-

---

१. मै. सं. ३. १४. १.  २. ता. ब्रा. २१. १४. ८.

कमाहुतीयागविधाय्युपाकरोत्यनुषङ्गादवैरूप्यार्थमुक्षस्वपि अने-
कयागकल्पनं शक्यते वक्तुम्, तथापि(१)"ईशानाय परस्वत आ-
लभत" इत्यत्र तदभावात् पर्यग्निकरणान्ताङ्गरीतिविधानेन च
एकादशावदानगणप्राप्त्यभावाद्यागभेदो दुरुपपादः ।

न च तत्राऽस्तु यागैकत्वम्, तदा हि परस्वतां प्रत्येकं कर-
णीभूतानां समुच्चयस्स्वीक्रियते, समुदितानां वा करणता ?
नाद्यः; तथा सति बहुत्वस्य करणतावच्छेदकत्वादस्मदुक्तप्रका-
रेण यागभेदस्यैवाऽऽपत्तेः ।

अत एव प्राजापत्योदाहरणे यागैक्यसिद्ध्यर्थं पूर्वपक्षे समु-
च्चितानामेव करणत्वमुक्तं वार्तिककृता । नान्त्यः, तथात्वे प्रतिप-
रस्वतं नियोजनोपाकरणादिसंस्कारानापत्तेः । प्रकृतौ हि यागसा-
धनीभूते पूर्वसाधनतापर्याप्त्याधिकरणे संस्काराः कृताः, इहापि
तादृशे समुदाये कर्तव्याः, न समुदायाधिष्ठानेषु प्रत्येकम् । नहि
व्रीहिसंस्काराः प्रतिव्यक्ति क्रियन्ते, अपि त्वपूर्वसाधनतापर्या-
प्त्यधिकरणे चतुर्मुष्टिपरिमिते समुदाये । अतएव वार्तिके आग्ने-
यादीनां समुदितानां साधनत्वे न प्रत्येकामितिकर्तव्यतान्वयः,
अपि तु प्रत्येकसाधनत्व एवेत्यसकृत् क्षुण्णम् ।

न चैवं(२) नवमे इष्टकासमुदायस्याग्निपदवाच्यत्वमङ्गी-
कृत्य हिरण्यशकलप्रोक्षणस्य प्रतीष्टकं कर्तव्यतारूपपूर्वपक्षकरणा-
नुपपत्तिः, तत्रत्यसमुदायपदस्य सन्निवेशविशेषविशिष्टेष्टकारू-
पसमुदायिपरत्वस्यैवाऽङ्गीकारात् । तस्मात् समुदायस्य साधनत्वे
प्रतिपशु संस्कारानुपपत्तेः परस्वद्वाक्ये यागैक्योक्तिर्मुधैव ।

किञ्चैवं वसन्तवाक्येऽपि यागैक्यं किमिति नाऽङ्गीक्रियते ?
एकादशावदानगणानुपपत्तेः प्रकृतावेकत्वस्याऽर्थिकत्वेन परिहर्तुं

१. मै. सं. ३. १४. १०. २. पू. मी. ९. १. ८.

शक्यत्वात्। अथाऽस्तु भवदुक्तकल्पैव परस्परद्वाक्ये कर्मभेदः, ततो वसन्तवाक्येऽपि तत एव भेदसिद्धेः किमव्यापकेन स्वरूपासिद्धेन चैकादशावदानगणानुपपत्त्युपन्यासेन ?। तस्मात् सिद्धः प्राजापत्यवाक्ये अन्येष्वप्येवञ्जातीयकेषु कर्मभेदः। अत एवैकपशुसाध्यताऽप्यतिदेशप्राप्तानुगृहीता भवति। अन्यथा साम्प्रदश्येन तद्बाधापत्तेः। अत एव सम्बन्धभेदाङ्गीकारेऽप्यनेकसम्बन्धोपपादकैकयागकल्पनैव लाघवादस्त्वित्यप्यपास्तम्, सम्बन्धानामुभयथाऽप्येकानेकयागकल्पनयैवोपपत्तौ लाघवाख्यन्यायापेक्षया पश्वैकताप्राप्त्यतिदेशशास्त्रस्यैव नियामकत्वौचित्यात्। अत एवाऽनेकयागकल्पनायां गौरवमपि प्रामाणिकम्। एवं चित्रेष्ट्यादावपि द्रव्यैकताप्रापिचोदक एव नियामकः।

यत्त्वत्र मूले अवदानगणैकताप्राप्त्या सिद्धान्तकरणम्, तदतिशयार्थमिति द्रष्टव्यम्। तस्मात् सिद्धो धात्वर्थभेदः। तद्भेदाच्च भावना भेदः पूर्ववत्। अपूर्वभेदस्तु भाव्यभूतापूर्वभेदं विना भावनाभेदानुपपत्तेर्द्रष्टव्यः।

प्रयोजनम्—पूर्वपक्षे सम्बन्धैकत्वपक्षे अवदानप्रकृतिभूतपशुगतसमुदायस्य देवतासम्बन्धात् तस्य चैकत्वेन प्रकृतिप्राप्तदेवतासम्बन्धवृत्तिप्रोक्षणोपाकरणादिधर्मजातं सकृदेव कार्यम्। दृष्टार्थं तु(१) नियोजनविशसनादि प्रतिपशु प्रयोजनानुरोधेन कार्यम्। तथैकस्य पशोर्नाशे तद्घटितसमुदायस्य नाशेन तद्वृत्तिसंस्काराणामपि नाशादानीयमानपशुसहितैतत्पशुसमुदायान्तरे पुनरपि संस्कारः कार्यः, तत्पशुविशसनोत्तरमेतत्पशुनाशे तु पश्वन्तराण्युत्पाद्यानि, सम्बन्धभेदपक्षे त्वेकपशुविस्मरणेऽपि यागस्यैकस्य जातत्वान्न तदर्थं पुनः करणम्। सिद्धान्ते तु पशु-

१. अञ्जनोपाकारणादि.

नामेव देवतासम्बन्धात् गृह्यमाणविशेषत्वेन प्रतिपशु प्रोक्षणादि, एकपशुनाशे च तत्रैव संस्कारकरणम्, विशसनोत्तरमप्येकस्यै-वोत्पत्तिः, विस्मरणे पुनर्यागकरणमिति ध्येयम् ॥ सूत्रं स्पष्टम् ॥

इति सप्तमं संख्याधिकरणम् ॥ ७ ॥

---

अथाऽष्टमं संज्ञाधिकरणम् ॥ ८ ॥

## संज्ञा चोत्पत्तिसंयोगात् ॥ २–२–२१ ॥

( विषयसंशयौ )

ज्योतिष्टोमं प्रकृत्य श्रूयते-(१)"अथैष ज्योतिः" "(२)अथैष विश्वज्योतिः" (३)"अथैष सर्वज्योतिः।" "एतेन सहस्रदक्षिणेन यजेत, एतेन ऋद्धिकामो यजेते" ति; तथा(४)"अथैष गौः" (५)"अथैष आयु" रित्यादि च। तत्र किं ज्योतिष्टोमात् कर्मान्तराण्येवंसंज्ञकानि विधीयन्ते ? उत तस्यैवैताः संज्ञा? इति विचारः।

( सङ्गतिः )

पादाध्यायसङ्गती स्पष्टे। अनन्तरा तु सङ्ख्यावत् संज्ञायाः स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदव्याप्तत्वरूपपृथक्त्वनिवेशित्वाभावान्न भेदकतेति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा।

( पूर्वपक्षः )

तत्र "अथैष ज्योति" रित्यादीनि तावद्विभज्यमानसाकां-

---

१. ता. ब्रा. १६ ८. १. २ ता. ब्रा. १६, ९. १.
३. ता. ब्रा. १६. १०. १. ४. ता. ब्रा. १६. ३. १.
५. ता. ब्रा. १६. ४. १.

क्षत्वाभावात्(१) त्रीणि वाक्यानि, "एतेने" त्यत्यनुषङ्गे प्रमाणाभावात् 'तस्मिन् सीदे' तिवच्चतुर्थमित्यप्यविवादम् । तत्र "अथैष ज्योति" रित्यादिवाक्येषु प्रथमान्तत्वादस्तीत्येतदध्याह्रियते । तेन च भेदकप्रमाणाभावात् प्रकृत एव यागोऽनूद्यते । तथाहि—न तावदत्र शब्दान्तरमस्ति, तस्य भावनामात्रभेदकत्वेनाऽसिधातोश्च भावनानवच्छेदकत्वेनाऽभावात् । सिद्धे हि यागान्तरे तस्याऽप्राप्तत्वात् विधिः भावना वा कल्प्येत, न च तत्सिद्धिः शब्दान्तरन्यायप्रमाणिका । अत एव विधिपुनःश्रवणाभावाच्चाऽभ्यासोऽपि । सहस्रदक्षिणादिवाक्ये तत्सत्त्वेऽपि वाऽनन्यपरत्वाभावात् नाऽभ्यासता; ऋध्याख्यफलसम्बन्धपरत्वस्याऽपि स्वर्गवदुपपत्तेश्च । न च गुणः; ज्योतिरादिशब्दानां नामत्वस्य साधितत्वात्, गवादिशब्दानामपि दक्षिणात्वेन फलत्वेन च गवादीनां प्राप्तत्वात् तत्प्रख्यन्यायेनैव ज्योतिष्टोमनामत्वात् । न च गोस्तत्त्वेन प्राप्तावपि हविष्ट्वेन विधानोपपत्तेः प्रकृते च कर्मण्युत्पत्तिशिष्टसोमावरोधान्निवेशानुपपत्तेः भेदावश्यम्भाव इति वाच्यम्; गुणवाचिपदस्य नामधेयत्वेनाऽप्युपपत्तौ अपूर्वान्तरकल्पनानुबन्धिकर्मान्तरकल्पकत्वे प्रमाणाभावात् । न च वाजिनवत् कर्माणि प्रवृत्तिनिमित्ताभावः, गोसम्बन्धस्य प्राप्तत्वेन समिदादिवल्लक्षणया नामत्वोपपत्तेः । अतो न तावत् ज्योतिरादिपदवाच्यगुणस्य भेदकत्वम् । नाऽपि सहस्रद-

---

१. अत्रेदं चिन्त्यम्—ताण्ड्यं षोडशेऽध्यायेऽष्टमकण्डिकारम्भे "अथैष ज्योतिः" इति वाक्यं श्रूयते । नवमदशमयोः कण्डिकयोरादावग्रिमे वाक्ये । मध्ये बहुभिर्वाक्यैर्व्यवधानदेषामेकवाक्यत्वसंशयः कथमुदेति ? यदभावबोधनार्थं विभज्यमानसाकाङ्क्षत्वाभावो हेतूक्रियत इति । अथ वा दक्षिणाफलवाक्यसहितं वाक्यत्रयमिदं कस्यां चिच्छाखायामेकत्रैव पठितं भवेत्, इति विभावनीयम् ।

क्षिणादेः, तस्योत्पत्तिशिष्टगुणविरोधित्वात् भेदकत्वानुपपत्तेः। नाऽपि प्रकरणान्तरम्, अनुपादेयगुणाभावात्। ऋद्धिवाक्ये तत्सत्त्वेऽपि प्रकरणात् पूर्वपरामर्शितच्छब्दयोगाच्चोपस्थितिसत्त्वेनाऽसान्निध्याभावाच्च।

नन्वधिकारार्थाथशब्दश्रुत्या कर्मान्तरविषयाधिकारावगमात् पूर्वकर्मप्रत्यभिज्ञाबाधेन प्रकरणस्य व्यापारासम्भवात्, एतच्छब्दस्य च जघन्यत्वेन दुर्बलत्वात्तदुपमर्दकत्वानुपपत्तेः, वस्तुतः तदादिसर्वनाम्नां पूर्वप्रकृतपरामर्शित्वेऽपि एतच्छब्दस्योभयसाधारण्येन सन्निहितप्रत्यक्ष एव प्रयोगानुसारेण शक्त्यवधारणात्, अथशब्दानुरोधेन वक्ष्यमाणपरामर्शित्वस्याऽप्युपपत्तेरसान्निधिसत्त्वेन तत्सहकृतफलरूपानुपादेयगुणस्य प्रकरणान्तरन्यायेन भेदकत्वोपपत्तिः। न चाऽत्राथशब्दस्याऽऽनन्तर्यार्थकत्वं शक्यते शङ्कितुम्, तव मते आनन्तर्यप्रतियोगिनः कर्मान्तरस्याऽसत्त्वेन तदर्थकत्वानुपपत्तेः, काम्यानां कर्मणां भिन्नप्रयोगविधिपरिग्रहेण क्रमासम्भवाच्च, उत्तरकालतामात्रस्य च प्राप्तत्वेनाऽथशब्दवैयर्थ्यापत्तेश्च।

अत एव पूर्वप्रकृतापेक्षत्वपरत्वस्याऽनुपपत्तिः, तद्धि संहत्य फलसाधनत्वाद्वा स्यादङ्गाङ्गिभावाद्वा? अतिदेशसिद्ध्यर्थं वा? नाऽऽद्यौ, नैरपेक्ष्येण फलसाधनत्वात्। नाऽन्त्यः, अथशब्दं विनाऽपि तत्सिद्धेः। अत एव पूर्वप्रकृतकर्मापेक्षित्वपरत्वानङ्गीकारेऽपि अनुवादार्थं पूर्वप्रकृतज्योतिष्टोमाविध्यपेक्षित्वपरत्वं भविष्यतीत्यपास्तम्; तदभावेऽपि "दध्ना जुहोती" तिवत् तत्सिद्धेः। अतः परिशेषात् "(१)अथ शब्दानुशासन" मितिवदधिकारार्थत्वावगमाद्युक्तमेव प्रकरणान्तरन्यायेन कर्मान्तरत्वमिति चेत्—

न; ज्योतिरादिसंज्ञकज्योतिष्टोमप्रयोगविशेषाधिकारार्थत्वेना-

१. व्याक. महाभा. १. १. १.

प्यथशब्दस्य सार्थक्येन प्रत्यभिज्ञाविच्छेदानुपपत्तेः । तथाहि–

ज्योतिरादिसंज्ञास्तावदेताः ज्योतिष्टोमस्यैव, प्रकरणात्; तत्रैव वक्ष्यमाणरीत्या प्रवृत्तिनिमित्तसत्त्वाच्च । तथा चैतासां ज्योतिष्टोमसंज्ञया विकल्पेन सङ्कल्पादावुल्लेखः । अतश्च ज्योतिरादिसंज्ञोल्लेखयुक्तयागप्रयोगाधिकारार्थोऽथशब्दः । तत्प्रयोजनं च ज्योतिष्टोमसंज्ञोल्लेखयुक्तयागप्रयोगप्रत्यभिज्ञानोच्छेदात् तत्र सहस्रदक्षिणादिव्यावृत्तिः । एतदभावे हि सर्वप्रयोगेष्वेव तत् प्राप्नुयात्, सति त्वस्मिन् पूर्वाधिकृतानामेव प्रयोगविशेषाणामेतेनेत्यनेन परामर्शात् सहस्रदक्षिणादिकमपि तत्रैवेति सिद्ध्यति ।

अत एव सहस्रस्य द्वादशशतेनाऽष्टदोषदुष्टो विकल्पः कर्मैकत्वपक्षे प्रसज्यते, 'सहस्रदक्षिणेन यजेत' इत्येतावतैवार्थसिद्धेः वाक्यान्तराण्येतद्वाक्यगतश्चैतच्छब्दोऽनर्थकः स्यादित्यपास्तम् । तस्मादथशब्दस्य प्रयोगविशेषप्रत्यभिज्ञोच्छेदकत्वेऽपि कर्मप्रत्यभिज्ञोच्छेदकत्वाभावान्न प्रकरणान्तरन्यायेन कर्मान्तरत्वम् ।

अत एवाऽनुपादेयगुणाभावेऽप्यथशब्दमात्रेणैवास्तु भेद इत्यपास्तम् । न चाऽऽलमनङ्गीकृतभेदकप्रमाणोपन्यासेन, संज्ञयैव त्वत्र भेदोपपत्तेः कथं कर्मैक्यमिति वाच्यम्; संज्ञा हि संख्यावत् पृथक्त्वनिवेशित्वस्वाभाव्याद्वा भेदिका ? गुणवत् पूर्वकर्मण्यनिविशमानत्वाद्वा ? नाऽऽद्यः; संज्ञायास्तथा पूर्वकर्मवाचित्वानभ्युपगमेन शक्ततासम्बन्धेनाऽपि पूर्वकर्मवाचित्वाभावाद्व्यासज्यवृत्तित्वाभावाच्च स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदव्याप्तत्वरूपपृथक्त्वनिवेशित्वासम्भवात् ।

नच तथाविधपृथक्त्वनिवेशित्वासम्भवेऽपि द्वयोस्संज्ञयोः परस्पराश्रयाभिन्नवाचित्वव्याप्तत्वरूपस्य तस्य सम्भवः, घटकलशा-

दिपर्यायेषु द्वयोस्संज्ञयोरेकाश्रयत्वस्याऽपि दर्शनात् । नाऽन्त्यः; तथात्वे गुण एवान्तर्भावप्रसङ्गात् ।

किञ्चाऽनिर्विशमानत्वमपि किमनेकशक्तिकल्पनप्रसङ्गभिया, उत वैयर्थ्यप्रसङ्गेन ? नाऽऽद्यः; अनेकशक्तिकल्पनस्य कर्मान्तरत्वपक्षेऽपि तुल्यत्वात् ; प्रत्युत मम शब्दभेदाच्छब्दाश्रितशक्तिभेदेऽप्यर्थस्यैकत्वात् तद्विषयैकत्वकल्पने लाघवम् । अन्यच्च कर्मान्तरापूर्वान्तरभावनान्तरतद्वाचकविधिवाचकपदकल्पनाभावाल्लाघवम् । ज्योतिरादिवाक्येषु हि प्रकृतं ज्योतिष्टोममेतच्छब्देनाऽनूद्य विद्वद्वाक्यवत् सहस्रदक्षिणादिव्यवस्थाफलकज्योतिरादिसंज्ञामात्रं क्रियत इति न विधिभावनावाचकपदापेक्षा ।

वस्तुतस्तु ज्योतिष्टोमपदेऽपि ज्योतींषि स्तोमा यस्मिन् इत्यपदार्थस्य यागस्य लक्ष्यत्वात् सर्वज्योतिर्विश्वज्योतिःपदयोरपि तथैव यागस्य लक्षणीयत्वात् ज्योतिःपदेऽपि च भामा सत्यभामेतिवत् स्वार्थवाचकपदघटितपदगम्यत्वसम्बन्धेन "वसन्ते वसन्ते ज्योतिषा यजेते"ति वद्यागस्य लक्षणीयत्वावगतेः । अन्यथा तत्रापि कर्मान्तरत्वापत्तेर्दुर्निवारत्वात् । आयुर्गोपदयोरपि च स्वशक्यसम्बन्धेन लक्षणावगतेर्न काऽपि शक्तिकल्पनाप्रसङ्गः । तत्र परम्परासम्बन्धानां यागकल्पनातः पूर्वमप्रसिद्धत्वात् शक्तिकल्पनेति गौरवम् । नान्त्यः ; सहस्रदक्षिणादिव्यवस्थाफलकत्वेन सार्थक्यस्योक्तत्वात् ।

किञ्च तव मते संज्ञात्वसिद्धावेव प्रमाणाभावः । न तावदुद्भिन्न्यायः, रूढत्वेन तुल्यवद्वृत्तिकत्वाभावात् । नाऽपि वाक्यभेदः ; गुणान्तरानुपादानात् । तत्प्रख्यन्यायस्तु कर्मान्तरसिध्युत्तरकालं सम्भवन्नपि ततः पूर्वमनुपस्थितेर्न नामधेयत्वबोधक इति कथं तद्बोधात् कर्मान्तरत्वबोधः ? । न च कर्मा-

न्तरे प्रवृत्तिनिमित्तमस्ति, उक्तप्रवृत्तिनिमित्तस्य ज्योतिष्टोमैकविषयत्वात्। अतो धर्मिग्राहकप्रमाणेन सिद्धस्य संज्ञात्वस्य ज्योतिष्टोमविषयत्वावधारणान्न संज्ञयाऽपि भेदसिद्धिः। तेन सिद्धं भेदकप्रमाणाभावान्न कर्मान्तरमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भेदकान्तराभावेऽपि संज्ञाया एव भेदकत्वात् कर्मान्तरत्वसिद्धिः। तथा हि संज्ञात्वमेव तावदेवं सिद्ध्यति—ज्योतिरादिशब्दास्तावन्न ज्योतिष्टोमे गुणविधयः, उत्पत्तिशिष्ट(१)सोमावरोधेन तत्र गुणविधानासम्भवात्; अतः कर्मान्तरत्वापेक्षया लघुभूतं संज्ञात्वं तावत्प्रथमतोऽवधार्यते। तच्च यद्यपि प्रकृतत्वात् प्रवृत्तिनिमित्तावगमाच्च ज्योतिष्टोमविषयकत्वेनैवाऽवधारितम्, तथाऽपि वक्ष्यमाणरीत्या तद्विषयकत्वबाधेऽपि न संज्ञात्वस्याऽपि बाधः। न हि ज्योतिष्टोमविषयकत्वाभावव्याप्तः संज्ञात्वाभावः, अन्यविषयिण्या अपि संज्ञायास्सम्भवात्। अतश्चाऽन्यविषयत्वासम्भवनिश्चयाभावदशायां संज्ञात्वं पूर्वं प्रमितं बाधकाभावेनाऽवतिष्ठमानं पूर्वविषयासम्भवाद्विषयान्तरं स्वसङ्गतये कल्पयतीति युक्तः संज्ञाप्रमाणको भेदः।

न च कर्मान्तरे प्रवृत्तिनिमित्तानवगम एवाऽन्यविषयत्वासम्भवनिश्चायकस्सन् भवति बाधकः, अग्निहोत्रवत्पूर्वं प्रवृत्तिनिमित्तानवगमेऽपि वक्ष्यमाणरीत्या कर्मान्तरबोधोत्तरकालमवगमसम्भवात्। अत एव उत्पत्तिवाक्ये इष्टसामान्यस्येव पूर्वं सामान्यतः किञ्चिदस्य प्रवृत्तिनिमित्तं भविष्यतीत्यवधार्य संज्ञात्वे निर्णीते ततो भेदावधारणोत्तरं तद्विशेषनिश्चये नैव बाधकं पश्यामः

१. सोमावरोधादिनेति. ख. पु.

न चाऽवधारितेऽपि कर्मान्तरे ज्योतिरादिपदानां तत्र गुणविधित्वोपपत्तौ संज्ञात्वे प्रमाणाभावः । अतश्च कर्मान्तरत्वावधारणात्पूर्वं निश्चितमपि संज्ञात्वं उत्तरकालं गुणविधित्वोपपत्त्या बाध्यताम्, अतश्च वाजिनवत् परं गुणादेव कर्मभेद इत्यवधार्यतामिति वाच्यम् ।[1] विशिष्टविधिगौरवभिया गुणविधित्वाभावनिश्चयेन संज्ञात्वे बाधकाभावात् । एवं सत्यपि यदि सोमवाजिनवदत्र प्रवृत्तिनिमित्ताभावोऽवधार्येत, ततो विशिष्टविधिगौरवापादकमपि गुणविधित्वमेव निश्चित्य संज्ञात्वं बाध्येत, न तु तदस्ति। अतो यत्र संज्ञात्वं पूर्वं प्रमितमुत्तरकालमपि च न बाध्यते तत्र संज्ञया भेदः, अन्यत्र तु गुणादिति विवेकः ।

किं पुनरत्र प्रवृत्तिनिमित्तम् ? तदुच्यते—ज्योतिश्शब्दादीनां तावत् द्योतते(?) "द्युतेरिसिन्नादेश्च ज" इत्यौणादिके इसिन्प्रत्यये कृते आदिभूतस्य दकारस्य जादेशाज्ज्योतिश्शब्दव्युत्पत्त्यवगतेः स्वफलसाधनतया द्योतनरूपमुख्यार्थयोगेनैव ज्योतिश्शब्दप्रवृत्तिः समस्तफलसाधनत्वाच्चेतरयोरपि द्रष्टव्या ।

यद्यपि चेदं प्रवृत्तिनिमित्तमतिप्रसक्तम्, तथाऽपि कर्मान्तरे रूढिकल्पनया प्राचीनप्रयोगस्य सहकारिकारणत्वकल्पनया वा नाऽतिप्रसङ्गः । गवादिशब्दानां त्वतिदेशप्राप्तगोसम्बन्धेन वाक्यान्तरप्राप्तायुःफलसम्बन्धेन च लाक्षणिकत्वात् प्रवृत्तिनिमित्तोपपत्तिः । ज्योतिरादिपदेष्वपि वाऽतिदेशेन ज्योतिःपदगम्यत्रिवृदादिसमस्तस्तोमसम्बन्धात् लाक्षणिकत्वोपपत्तिः । अतः कर्मान्तरेऽपि प्रवृत्तिनिमित्तस्य सत्त्वात् संज्ञात्वनिश्चयोपपत्तेः युक्तं तत्प्रमाणकं कर्मान्तरत्वम् । न च संज्ञात्वसिद्धावपि तस्योत्पत्तिविधया ज्योतिष्टोमविषयत्वस्यैवोपपत्तौ विषयान्तरकल्पक-

---

१. पा. ऊ. सू. १२७ ।

त्वानुपपत्तिः, प्रकृतसोमयागस्य ज्योतिष्टोमसंज्ञावरुद्धत्वेन संज्ञा-न्तरविषयत्वानुपपत्तेः । तथा हि—

संज्ञाकार्यस्य व्यवहारस्यैकेनैवोपपत्तौ संज्ञान्तरस्य तावद्वै-यर्थ्यमेव । न च विनिगमनाविरहाद्वैकल्पिकी व्रीहियवादिवद्व्य-वहारहेतुता, अथशब्देन सोमयागाधिकारविच्छेदार्थकेन विनि-गन्तुं शक्यत्वात् । सोमयागाधिकारवर्तिनी हि संज्ञा तद्विषयि-णीति शीघ्रं निश्चीयते, न विच्छिन्नाधिकारिकेति कथं विनिग-गमनाविरहः ? न चाऽथशब्देन पूर्वसंज्ञावाच्छिन्नप्रयोगस्यैवाऽधि-काराविच्छेदात् तदनुरोधेन चैतच्छब्दस्य संज्ञान्तरयुक्तप्रयोगपरा-मर्शित्वावगतेः तत्र सहस्रदक्षिणादिव्यवस्थार्थत्वेन संज्ञान्तरसा-र्थक्यमिति वाच्यम् । कर्मण एव प्रधानत्वेन पुरस्स्फूर्तिकस्याऽ-थशब्देनाऽधिकारविच्छेदात् , सर्वनाम्नामुपस्थितार्थमात्रपरत्वेनै-तच्छब्दस्य ज्योतिरादिपदवाच्यकर्ममात्रपरामर्शित्वावगतेः, अ-व्युत्पत्तिसिद्धसंज्ञायुक्तकर्मप्रयोगपरामर्शित्वाङ्गीकारस्याऽयुक्त-त्वाच्च । न हि घटोऽस्ति एनमानयेत्यादौ घटपदयुक्तस्य सर्वना-म्ना परामर्शः क्वचित् दृष्टः । अतः सहस्रदक्षिणादिव्यवस्थाफल-कत्वासम्भवात् कर्माधिकारविच्छेदार्थकेनाऽथशब्देन पूर्वसंज्ञातो ज्योतिरादिसंज्ञानां विलम्बितत्वावधारणान्न व्रीहियवादिवद्वि-कल्पोपपत्तिः ।

अत एव यत्र न किञ्चिन्नियामकं लभ्यते तत्र विकल्पो ऽङ्गीक्रियत एव । यथा—"वैश्वानरो ज्योतिष्टोमः प्रायणीय-महर्भवति" इत्यत्र वैश्वानरप्रायणीयपदयोः । अत्र हि वैश्वा-नरदेवत्यग्रहणाम्नानाद्यागेऽपि प्रसङ्गेन तद्देवताजन्योपकारला-भाद्वैश्वानरपदवाच्यत्वोपपत्तेः वैश्वानरपदं तत्प्रख्यन्यायेन ना-मधेयम् । प्रायणीयपदमपि प्राथम्यगुणयोगेन । एतयोश्च वि-

निगमनाविरहेण द्वयोरप्येकस्मिन्नेव कर्मणि निवेशावगमादेक-संज्ञावरुद्धे संज्ञान्तरस्य वैयर्थ्यमित्येवंविधस्य च संज्ञाभेदकत्व-न्यायस्याऽभावेन कर्मान्तरबोधकत्वासम्भवात् अगत्या व्रीह्या-दिवत् सङ्कल्पादावेकस्या उल्लेख इत्येवंविधो विकल्प एव। ज्यो-तिष्टोमपदं तु ज्योतिष्टोमविध्यन्तप्रतिप्रसवार्थं सन्नामातिदेशकम्। एतदभावे हि गणत्वसामान्याद्द्वादशाहविध्यन्त एव प्राप्नुयात्, न ज्योतिष्टोमविध्यन्त इति विरोधे तस्यैव प्राप्त्यर्थं ज्योतिष्टोम-पदम्। तेन यत्र पूर्वस्मिन् कर्मण्येकसंज्ञावरुद्धेऽपि संज्ञान्तरस्य कार्यान्तरकल्पनया सार्थक्यम्, यत्र वा विनिगमनाविरहेण द्वयोरपि विकल्पः तत्र संज्ञायाः कर्मभेदकत्वाभावेऽपि यत्र पूर्व-कर्मण्येकसंज्ञावरुद्धे संज्ञान्तरस्य वैयर्थ्यप्रसङ्गः तत्र तेन स्ववि-षयसिद्ध्यर्थं कर्मान्तरकल्पनाऽऽवश्यक्येव। अस्ति च प्रकृते ज्यो-तिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावेऽप्यविच्छिन्नेऽधिकारे समाम्ना-नेन तया शीघ्रमवरोधः, ज्योतिरादीनां च विच्छिन्नेऽधिकारे समाम्नानात् कार्यान्तराभावाच्च वैयर्थ्यप्रसङ्गेन तैरनवरोधः।

अत एव "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्राऽविच्छिन्ने-ऽधिकारे समाम्नानात् ज्योतिस्संज्ञायाश्च ज्योतिष्टोमसंज्ञैकदेशत्वेन तदानुगुण्यान्न कर्मान्तरत्वम्। न वा "अथैष ज्योति"रित्यस्यैव निमित्तसम्बन्धः, अपि तु ज्योतिष्टोमस्यैव। अत एव यत्र तदानु-गुण्यम्, यथा—उद्भिदादौ, तत्र पूर्वसंज्ञावरुद्धे सोमयागे उद्भि-त्संज्ञायाः कथमपि सार्थक्यासम्भवादसत्यप्यधिकारविच्छेदे संज्ञया केवलयैव कर्मान्तरत्वसिद्धिः।

न च तत्र द्वयोरपि संज्ञयोरुत्पत्तिशिष्टत्वाभावा-विशेषाद्विकल्पो वैपरीत्यं वा किं न स्यादिति वाच्य-म्; ज्योतिष्टोमपदमन्त्राचीनिमित्तस्य त्रिवृदादिस्तोमसम्बन्ध-

स्य(१) "ग्रहं वा गृहीत्वे" ति वचनेन सोमयाग शीघ्रं बुध्यमानत्वात् । अतः क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसंज्ञावरुद्धे सोमयागे उद्भित्संज्ञायाः सार्थक्यासम्भवाद्युक्तं तया कर्मान्तरत्वम् ।

न चैवं गुणान्तर्भावः शङ्कनीयः, संज्ञाया हि पूर्वस्य कर्मणो नियमेन तत्कार्ये नैराकांक्ष्यावगमे सत्येव स्ववैयर्थ्यभिया भेदकत्वम् , गुणे तु पूर्वकर्मणो नैराकांक्ष्यनियममनादृत्य तत्र स्वस्याऽनिविशमानत्वमात्रेणैव भेदकत्वम् । न हि वाक्यभेदापादकगुणभेदस्थले पूर्वस्य विद्वद्वाक्यविहितस्य कर्मणो नैरपेक्ष्यं सम्भवति । अतो निवेशासम्भवेन गुणस्य भेदकता, वैयर्थ्येन तु संज्ञाया इति वैलक्षण्यम् । तस्मात्सिद्धः संज्ञया कर्मभेदः ।

एवं च तत्तद्विजातीययागत्वप्रकारकयागविशेष्यकशाब्दत्वावच्छिन्नं प्रति प्रवृत्तिनिमित्तसम्बन्धेन तत्तत्पदवत्ताज्ञानस्य कारणत्वकल्पनाल्लाघवम् । अन्यथा कर्मान्तरत्वानभ्युपगमात् तत्पदवत्ताज्ञानाभावेऽपि पदान्तरवत्ताज्ञानेन तादृशकार्यतावच्छेदकावच्छिन्नजननात् व्यभिचारापत्तेः । घटकलशादिपर्यायवत् तत्तत्पदश्रवणाव्यवहितोत्तरतादृशशाब्दत्वावच्छिन्नं प्रति तत्तत्पदवत्ताज्ञानस्य कारणत्वमिति कल्पनात् कार्यतावच्छेदके गौरवापत्तेः । अतः "अथैष ज्योति"रित्यादिषु त्रिषु वाक्येषु त्रीणि कर्माणि तत्तत्संज्ञानि विधीयन्ते । तेषां च यागरूपत्वं अव्यक्तत्वसादृश्यप्रमाणकातिदेशोत्तरं गुणवाक्ये यागानुवादाद्वा निश्चीयते । तानि च कर्माण्येतच्छब्देऽनूद्य सहस्रदक्षिणाविधानम् । फलवाक्ये च तेषां फले विधानम् । एतेनेत्येकवचनं च समुदायाभिप्रायेण राजसूयवद् बहुत्वलक्षणार्थम् । विश्वज्योतिरादिवाक्ययोश्चाऽथशब्दो न पूर्वयागाधिका-

१. तै. सं. ३. १. २.

रविच्छेदकः, अपि तु यागान्तरोत्पत्त्यधिकारार्थः। अन्यथा पूर्वयागे फलकल्पनापत्तेः। सर्वथा सिद्धो भेदः।

प्रयोजनं पूर्वपक्षे सहस्रदक्षिणायाः प्रकृतिभूतसोमयागाङ्गत्वादाद्यप्रयोगेऽपि तदनुष्ठानम्, सिद्धान्ते तु विकृतिविशेषाङ्गत्वान्नेति द्रष्टव्यम्।

सूत्रं तु संज्ञाऽपि भेदिका, उत्पत्तावेव संज्ञान्तरेण संयोगादिति व्याख्येयम्।

इत्यष्टमं संज्ञाधिकरणम् ॥ ८ ॥

---

## अथ नवमं गुणाधिकरणम् ॥ ९ ॥

## गुणश्चाऽपूर्वसंयोगे वाक्ययोस्समत्वात् ॥ २-२-२९ ॥

### ( विषयसंशयौ )

चातुर्मास्येषु वैश्वदेवे पर्वणि "वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मिति श्रुतम्। तत्राऽमिक्षावाक्ये तावत् प्राप्तकर्मानुवादेन द्रव्यदेवतारूपानेकगुणविधानाद्वाक्यभेदापत्तेः पौर्णमास्यधिकरणे प्रसङ्गादुक्तेन वाक्यभेदापादकेन गुणेनैव कर्मविधित्वमविवादम्। वाजिनवाक्यं तु किं पूर्वयागानुवादेन द्रव्यदेवतान्यतरविधिः, उत कर्मान्तरविधिरिति विचार्यते।

### ( सङ्गतिः )

पादाध्यायसङ्गती पूर्ववत्। अनन्तरा तु सत्यप्यसम्भववैयर्थ्याभ्यां संज्ञागुणयोरवान्तरभेदे अनिविशमानत्वसाम्यात् संज्ञाविचारानन्तरं गुणविचार इति सङ्गतिः।

( पूर्वपक्षः )

तत्र यद्यपि वाजिपदमश्वे प्रसिद्धम्, तथापि तेषां चतुर्थ्युपात्तदेवतात्वेनाऽप्रसिद्धत्वात् वाजिपदस्य यौगिकत्वावगतेः वाजमन्नं विद्यते येषां त इति व्युत्पत्त्या। वाजिशब्दस्याऽऽमिक्षारूपवाजरूपान्नयोगेन पूर्वोपस्थितविश्वदेवपरत्वावगतेः तत्सम्बन्धेनैवाऽत्र वाजिनं द्रव्यं विधीयते, न त्वपूर्वदेवतासम्बन्धेन। ततश्च द्रव्यदेवतासम्बन्धाद्यागः कल्प्यमानो नाऽपूर्वः कल्प्यते, किन्तु विश्वदेवदेवत्ययागमेव कल्पितयजिपदेनाऽनूद्य तत्र वाजिनं विधीयते, ततश्च विवक्षितगत्या वाजिपदं कल्पितयजिपदस्याऽऽमिक्षायागतात्पर्यग्राहकमित्येवं द्रष्टव्यम्। अत एव विश्वदेवदेवत्ययागोद्देशेन वाजिनविधानात् विशिष्टोद्देशे वाक्यभेदोऽपि नाऽऽशङ्क्यः, वाजिपदस्यैव तात्पर्यग्राहकानुरोधेन विजातीययागपरत्वाङ्गीकारात्। कल्पितयजिपदेन वाजिनान्वयाङ्गीकारादेव च कारकसम्बन्धप्रसङ्गात् चतुर्थ्यन्तवाजिपदानन्वयोऽप्यनाशङ्क्यः।

न च तात्पर्यग्राहकस्याऽपि वाजिपदस्य वाजिसम्बन्धाविशेषेण प्रकृतसर्वदेवतोपस्थापकत्वापत्तेः बहुवचनस्याऽधिष्ठानाभिप्रायकत्वाङ्गीकारेऽपि चाऽप्रकृतमन्त्रदेवतोपस्थापकत्वस्याऽप्यापत्तेरामिक्षायागमात्रतात्पर्यग्राहकत्वानुपपत्तिरिति वाच्यम्; वाजिशब्दस्य सर्वनामार्थकत्वात् तस्य चाव्यवहितपरामर्शकत्वसम्भवे व्यवहितपरामर्शकत्वस्याऽव्युत्पत्तिसिद्धत्वात्, विश्वदेवमात्रोपस्थापकत्वसम्भवेनाऽऽमिक्षायागतात्पर्यग्राहकत्वोपपत्तेः।

न चैवमुत्पत्तिशिष्टद्रव्यावरोधेनाऽनिवेशः शङ्क्यः, साक्षाद्वचनेनैव तस्मिन्यागे वाजिनविधानात्। अतश्च यथैव तस्मिन्यागे वाजिनमिति वाक्ये सति नोत्पत्तिशिष्टमात्रस्यमभ्युपगन्तुं श-

क्यम्, वचनस्यातिभाराभावात्, तथैवाऽत्रापीति द्रष्टव्यम्। तेनाऽऽमिक्षयाऽपि सह वाजिने समुच्चयो विकल्पो वा। यदि तात्पर्यग्राहके वाजिपदे वाजरूपाया आमिक्षायाः विशेषणत्वं ततः समुच्चयः, यद्युपलक्षणत्वं ततो विकल्प इति द्रष्टव्यम्।

अथवा अस्तु वाजिनपदमामिक्षायागनामधेयम्, वाजिनस्याऽऽमिक्षानुनिष्पन्नतया शकुलकोहितादिवत्तद्यागसम्बन्धित्वेन प्राप्तत्वात्। अतश्च तत्प्रख्यन्यायेन वाजिनपदेनाऽऽमिक्षायागमात्रमनूद्य वाजिदेवता उत्पन्नशिष्टाऽपि वचनाद्विधीयते। न च वाजिशब्दार्थस्य न देवतात्वम्, तत्त्वेनाऽप्रसिद्धेरिति शङ्क्यम्, तत्त्वेनाऽप्रसिद्धानामपि वसन्तादिवद्देवतात्वोपपत्तेः। एवञ्च वाजिपदस्य न रूढार्थत्यागोऽपि। न चाऽस्मिन् पक्षे यजिपदकल्पनाऽप्यावश्यकी, वाजिनपदेनैव तदुपस्थितेः। तस्मात् भेदकप्रमाणाभावात् प्रकृतहानाप्रकृतयागभावनापूर्वकल्पनाविशिष्टविधिगौरवाद्यभावाच्च कर्मैक्यमेव युक्तम्।

किञ्च सत्यप्युत्पन्नशिष्टत्वे यथा संख्यायाः पूर्वकर्मण्यनिविशमानाया अपि न स्वसङ्गतये कर्मोत्पत्तिपरत्वम्, अपि त्वभ्यासापादनेन तत्रैव निवेशः, तथा गुणस्याऽप्यभ्यासापादनेन विकल्पसमुच्चयाभ्यां वा तत्रैव निवेशोपपत्तेः न स्वसङ्गतये कर्मोत्पत्तिपरत्वम्। अन्यथा हि(१) तत्रापि(२) तदापत्तेः इति प्राप्ते।

( सिद्धान्तः )

अभिधीयते—स्ववाक्यस्थत्वात्तयोः द्रव्यदेवतयोः वाक्यान्तरोपात्तद्रव्यदेवतापेक्षया शीघ्रोपस्थितिकत्वेन ताभ्यामेव यागस्य नैराकांक्ष्यप्रतीतेः न वाक्यान्तरोपात्तयोः तत्र निवेशो युक्तः। न चोत्पत्तिवाक्ये वैशिष्ट्यप्रतीत्या नैराकांक्ष्यावगमेऽपि

(१) वा. इति ख. ग. घ.। (२) तथापि इति च पु.।

विशेष्यमात्रस्याऽनुवादादाभिधानिकाकाङ्क्षोपपत्तेः वास्तविकया अपि च तद्बलेन कल्पनादुत्पन्नशिष्टस्याऽपि निवेशोपपत्तिः; क्लृप्ताकाङ्क्षाहेतुकसम्बन्धेन कल्प्याकाङ्क्षाहेतुकसम्बन्धस्य द्रव्यदेवतस्यैवमपि बाधोपपत्तेश्च; वाजिनवाक्यस्थयजेरधिकाराख्यप्रकरणसापेक्षस्य प्रकृतयागोपस्थापकत्वात् तदनपेक्ष्यैवोपस्थापकस्याऽऽमिक्षावाक्यस्थस्य यजेः द्रव्यदेवतापदान्वये सन्निकर्षाच्च ।

किञ्चोभयत्रापि यजिकल्पकत्वमाद्यपक्षे द्रव्ये देवतासम्बन्धः, स चामिक्षायामेकपदोपादानात् प्रतीयते, वाजिनस्य तु पदान्तरोपादानादिति विप्रकर्षः । तथाहि—"वैश्वदेवी"ति तद्धिते तावद्विश्वे देवाः प्रातिपदिकार्थः, तद्धितार्थस्तु देवतात्वविशिष्टो द्रव्यविशेषो यः प्रकृतः, तद्धितस्य "साऽस्य देवते"ति सर्वनामार्थे स्मरणात् । सर्वनाम्नां हि बुद्धिस्थप्रकारावच्छिन्नबोधकत्वमनुभवसिद्धम्, अतश्च लाघवेन शक्तिकल्पनायां बुद्धिस्थप्रकारे एव घटत्वादौ तद्व्यक्तित्वादौ वा शक्तिः, न तु तदवच्छिन्नेऽपि, तस्य व्यक्तिन्यायेन लाभोपपत्तेः । अत एवामिक्षापदसमानार्थकत्वं सर्वनाम्नामुक्तं वार्तिककृता । न चैवं बुद्धिस्थत्व एव लाघवात् शक्तिरस्तु ? तस्य शाब्दबोधे मानाभावेन शक्तिविषयत्वानुपपत्तेः ।

न चैवं तत्तत्प्रकाराणां युगपदनुपस्थितेः शक्तिग्रहासम्भवः शङ्क्यः, बुद्धिस्थत्वस्यैवैकस्य शक्तिग्रहे उपलक्षणत्वात् । शक्तिग्रहे उपलक्षणस्यैव शक्यतावच्छेदकत्वमित्युत्सर्गस्तु मानाभावादपोदित इति न कश्चिद्विरोधः । सर्वनामार्थे च देवतात्वविशिष्टे तद्धितस्य शक्तिः । तथाहि—तद्धितपदश्रवणोत्तरं तावत् तद्बोध इत्यवश्यमङ्गीकर्तव्यम्, इतरथा देवतात्वमात्रबोधे आमिक्षापदसमानाधिकरण्यानुपपत्तेः, अतश्च सर्वनामार्थबोधस्याऽप्यावश्य-

कत्वात् तत्रापि शक्तिः । न च तस्य व्यक्तिन्यायेन बोधसम्भवः; तथात्वे (१)"साऽस्य देवते"ति सर्वनामार्थकत्वानुशासनवैयर्थ्यापत्तेः । तदा हि (२)"सम्प्रदाने चतुर्थी"तिवद्देवतायां तद्धित इत्येवानुशिष्येत ।

एतेन देवतात्वस्य प्रकृतिप्रत्ययार्थसंसर्गबलादेव भानोपपत्तेः सर्वनामार्थ एव तद्धितस्य शक्तिरङ्गिक्रियतामिति निरस्तम्, संसर्गविधया भासमानस्य पदार्थानुशासनप्रवृत्तैरनुशासनानुपपत्तेः । अतो देवतात्वविशिष्टसर्वनामार्थ एव तद्धितस्य शक्तिः । सर्वनामार्थस्य देवतात्वं प्रति विशेष्यतायां च विभक्त्यर्थान्वय एव बीजम् । विश्वेदेवास्तु सेत्यनुशासनेनाऽनुशिष्टा अपि न तद्धितार्थः, प्रकृतिपदार्थत्वात् । तस्य चाऽऽश्रयत्वं देवतात्वे संसर्गः । देवतात्वस्य च निरूप्यत्वं सर्वनामार्थे वैशिष्ट्यमिति प्राञ्चः ।

अस्तु वा देवतात्वस्यैव वा तद्धितवाच्यता, सर्वनामार्थस्य तु व्यक्तिन्यायेन बोधः, सर्वनामार्थ एव शक्तिः, देवतात्वे कृदन्त इव कृतौ निरूढलक्षणा; अनुशासनस्याऽबोधव्युदासमात्रफलकत्वेन निरूढलक्षणाज्ञापकत्वेन वोपपत्तेः । दृष्टं हि तादृशमप्यनुशासनं "कर्माणि षष्ठी"त्यादि । तेन सर्वथा द्रव्यविशेषप्रत्ययस्य तद्धितपदादेव जायमानत्वादेकपदोपात्तस्तत्र द्रव्यदेवतासम्बन्धः । न चैवमामिक्षापदवैयर्थ्यं शङ्क्यम्, तेनाऽऽमिक्षात्वानुपस्थितौ तद्धितस्य बुद्धिस्थप्रकारवाचिनस्स्वार्थबोधकतानुपपत्तेः । तेनाऽऽमिक्षापदं तात्पर्यग्राहकं सत्तद्धितपदार्थबोधे व्याप्रियत इति देवताया आमिक्षासम्बन्धोऽपि तद्धितान्तपदार्थोपस्थितिवेलायामेवेति न तस्य वाक्यीयत्वम् ।

---

१. पा. सू. ४. २. २४. २. पा. सू. २. ३. १३.

अस्तु वा तद्धितान्तपदमात्रश्रवणे आमिक्षापदाश्रवणेऽपि द्रव्यविशेषसंज्ञायोत्पादात् तद्धितान्तपदादेवाऽनिर्धारितद्रव्यविशेषप्रतीतिः, आमिक्षापदं च पश्चादेव तन्निर्धारणार्थमिति न तस्य तद्धितपदार्थोपस्थितौ व्यापार इति, तथाऽप्यामिक्षापदस्य विशेषान्तरव्यावृत्तिमात्रफलकत्वेनाऽनिर्धारितद्रव्यविशेषे देवतासम्बन्धस्य पदश्रुतिमात्रप्रमाणकत्वमव्याहतम् । वाजिभ्य इति चतुर्थीपञ्चमीसाधारणत्वाच्छब्दत एव तावत्सान्दिग्धम्, कथञ्चिच्चतुर्थीत्वेन निर्णीयते, चतुर्थ्यपि च सम्प्रदानत्वमात्रवाचिनी प्रतिगृहीतृत्वासम्भवात् देवतात्वमेव तावल्लक्षणया वदेत् तु द्रव्यसम्बन्धम्, देवता हि स्वप्रतिसम्बन्धिनं द्रव्यमाक्षिपेदर्थापत्तिविधया, न तु शाब्दबोधे तस्य भानम्, आक्षेपोऽपि च सर्वप्रमाणप्रवृत्त्यस्तमये भवेत्, अस्ति चाऽत्र वाजिनपदसमभिव्याहार एव तत्र प्रमाणम्, अतो वाजिभ्य इति पदात् तद्विषयिणी आकाङ्क्षैव केवलं भवेत्, न तु द्रव्यसम्बन्ध इति तस्य पदान्तरगम्यत्वादामिक्षासम्बन्धापेक्षया वाजिनसम्बन्धस्य विप्रकृष्टत्वम् । वाजिनपदस्य नामधेयत्वपक्षेऽपि च उपांशुयाजाधिकरणोक्तप्रकारेण तद्धितोपात्तदेवतात्वैः विश्वैः देवैरवरुद्धे यागे चतुर्थ्युपात्तदेवतात्वानां वाजिनां निवेशायोगो द्रष्टव्यः । उत्पत्त्युत्पन्नशिष्टादिबलाबलं च समस्त्येव । न च पक्षद्वयेऽपि तस्मिन्नेव यागे वाजिनमितिवदत्रामिक्षायागानुवादाभावे आनर्थक्यम्, कर्मान्तरविधानेनाऽपि चारितार्थ्यात् ।

यच्चात्र संख्यावदभ्यासाद्यापादनेन पूर्वकर्मणि निवेश इत्युक्तम्, तद्द्वित्वादिसंख्यायाः पूर्वावधारितैकत्वादि संख्यासमानाधिकरणत्वस्वभावतया तथाङ्गीकारेऽपि गुणे तदभावान्न निवेशोपपत्तिः । कर्मस्वरूपे त्वेकत्वे सत्येवाऽभ्यस्ते तस्मिन्नेकादश-

त्वं निविशते । वाजिनस्य त्वामिक्षासामानाधिकरण्येनाऽनिवेशादभ्यस्तस्याऽपि पूर्वकर्मणस्तत्त्वानपायेनाऽऽमिक्षयाऽवरोधाच्च वाजिननिवेश इति वैषम्यम् । अतो द्रव्यदेवतासम्बन्धकल्पितं यागान्तरमेव सान्नाय्यप्रकृतिकं आमिक्षानुनिष्पन्नवाजिनप्रतिपत्त्यर्थतया आमिक्षायागमात्राङ्गत्वेन विधीयते । गुणश्चाऽत्र पूर्वे कर्मण्यनिविशमानो भेदकः । अनिवेशश्च क्वचिद्वाक्यभेदापत्त्या । तदुदाहरणं च प्रसङ्गात् पौर्णमास्याधिकरण एव दर्शितम् । क्वचिच्चैकप्रसरताभङ्गादिना तत्र तत्र वक्ष्यते । प्रकृते च सन्निकर्षविप्रकर्षादिभिः । अत एव पार्थसारथ्युक्तद्वैविध्यमप्येकप्रसरताभङ्गादेरपि गुण एवान्तर्भावात् नातीवाऽऽदर्तव्यमित्यप्युक्तं पौर्णमास्यधिकरणे ।

यत्त्वत्र न्यायसुधाभवदेवाभ्याम्—उत्पत्तिशिष्टैकहायन्यवरुद्धेऽपि क्रये "(१)वाससा क्रीणाती"त्यादिना वासःप्रभृतिद्रव्यान्तरविधानम्, न हि तत्रोत्पन्नशिष्टानां गुणानां निवेशोऽसम्भवी, आनतिरूपकार्यभेदात्; न चानतीनामेवैकसोमप्राप्तिजनकत्वेन विरोधसम्भवः, द्वारभूतस्य विक्रेतृमनस्समाधानस्यानेकैरपि जननेनाऽविरोधसम्भवात्; अत एव तेषां द्वादशे समुच्चय उक्तः, न च विनिगमनाविरहात् क्व क्रयविधिः क्व वा गुणमात्रविधिरिति निश्चयासम्भवः, एकहायनीवाक्ये अनेकगुणोपादानस्यैव नियामकत्वात् इत्युक्तम्; तन्न, सोमचमसादिवैकृतदक्षिणया प्राकृतदक्षिणाबाधस्य तन्त्रिदक्षिणया दाक्षिणाप्रसङ्गसिद्धेश्च शतशो निरूपयिष्यमाणत्वेन विक्रेत्रानतिवशेन समुच्चयस्य वक्तुमनुचितत्वात् ।

अत एव विक्रेताऽपि ऋत्विग्वत्तादृश एव सम्पाद्येत, य

१. तै. सं. ६. १. ६

एकमात्रद्रव्यानतः। द्वादशोक्तस्तु समुच्चयो "दशभिः क्रीणाती"-ति वचनात् क्रयाणामेव सम्पद्यत इति न विरोधः। यदि तु क्रयैक्यमावश्यकम्, ततो "दशभिः क्रीणाती"ति वचनादेवो-त्पत्तिशिष्टद्रव्यावरोधेऽप्युत्पन्नशिष्टद्रव्याणां निवेशो वक्तव्यः।

वस्तुतस्तु उक्तवचनस्य क्रयसमुच्चयार्थत्वेनाऽप्युपपत्तौ द्रव्याणामवगतस्य परस्परनैरपेक्ष्यस्य गुणविधया क्रयभेदकत्वस्य च बाधे प्रमाणाभाव एव। तस्मात्सर्वत्रैव गुणस्य पूर्वकर्मसं-योगासम्भवे भेदकत्वम्। न च पूर्वकर्मनिवेशासम्भवेऽपि वैश्वदे-ववाक्यवत् भेदकत्वाभावः शक्यः, विधायकत्वांशे आमिक्षावा-क्यस्य वाजिनवाक्यस्य च समत्वेनाऽनुवादकत्वशङ्कानुपपत्ते-रिति सूत्रार्थः॥ २१॥

प्रयोजनं स्पष्टम्॥

इति नवमं गुणाधिकरणम्॥ ९॥

---

अथ दशमं गुणशेषाधिकरणम्॥ १०॥

## अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत॥ २-२-२२॥

यत्रोत्पत्तिवाक्ये गुणो नैव श्रूयते, उत्पन्नवाक्येषु चैकैक एव श्रूयते, यथा—दध्यादौ, तत्राऽपि कर्मैकत्वे विकल्पप्रसङ्गात् पूर्वकर्मनिवेशानुपपत्तेः तत्तद्गुणविशिष्टतत्तत्कर्मण एव तत्तद्वा-क्ये विधेयत्वावगतेर्युक्तो भेदः। न च विकल्पस्योत्तरकाली-नत्वात् पूर्वप्रमितविशेषणमात्रविधिलाघवेनाऽवगतस्य पूर्वकर्मनि-वेशस्य बाधानुपपत्तेः कथं भेदावगतिरिति वाच्यम्। अष्टदो-षदुष्टविकल्पानुरोधेन पूर्वप्रमितस्याऽपि निवेशस्य बाधोपपत्तेः।

अन्यथा "नाऽनूयाजेषु ये यजामहं करोती"त्यादौ विकल्पप्रसङ्गेनाऽभाववाचिनो नञोऽन्योन्याभावलक्षकत्वमङ्गीकृत्याऽनूयाजभिन्नेष्विति पर्युदासाङ्गीकरणं न युज्यते। अतो विकल्पानुरोधेनाऽप्यनिविशमानत्वोपपत्तेः पूर्वाधिकरणवदेव युक्तो भेद इति प्राप्ते—

अभिधीयते—नाऽत्र पूर्वकर्मानिवेशः, गुणमात्रविधानेन तदुपपत्तेः। न च विकल्पप्रसङ्गस्तद्बाधकः, तस्य तत्तद्वाक्यार्थपर्यालोचनकालेऽनुदयेन फलमुखत्वात्। 'नानूयाजेष्वि'त्यत्र तु प्रतिषेधपक्षे तस्य प्राप्तिसापेक्षत्वात् प्रापकप्रमाणप्रवृत्त्युत्तरकालप्रवृत्तित्वावगतेः, तस्य च शास्त्रत्वेनाऽत्यन्तबाधायोगाद्विकल्पस्य वाक्यार्थबोधवेलायामेव प्रतीतेर्युक्तं तदनुरोधेन लक्षणाश्रयणम्।

वस्तुतस्तु अन्योन्याभाववत्यपि "तदन्यतद्विरुद्धतदभावेषु नञ्" इति प्रसिद्धेर्नञः शक्तिरेवेत्यनूयाजपदमनूयाजभिन्नलक्षकम्, नञ्पदं तात्पर्यग्राहकम्, प्रत्ययार्थान्वयानुरोधात्। अत एव प्रतिषेधापेक्षया पर्युदासो दुर्बल इति वक्ष्यते। प्रकृते तु दध्यादिविधीनामन्योन्यसम्बन्धानादरेण प्रधानविधिमात्रसम्बन्धिनामेकवाक्यार्थबोधवेलायामितरापेक्षाभावात् विकल्पस्योत्तरकालिकत्वमिति विशेषः।

न चैवमपि पाठक्रमेण प्रधानविधेरेकसम्बन्धावगमोत्तरमन्यसम्बन्धायोगात् वाजिनन्यायेन भेदोपपत्तिः, प्रधानविधेः पर्यायेणाऽङ्गताग्राहकत्वस्य(१)एकादशे निषेत्स्यमानत्वेन पाठस्याऽनियामकत्वात्। अत एव तादृशस्थलेऽनुष्ठानवेलायामप्यनियामकः पाठो नान्तरीयकत्वात् पारायणादावेवोपयुज्यत इति द्रष्टव्यम्। अतः सर्वेषां युगपत् सम्बन्धान्न वाजिनन्यायेनाऽपि भेदकत्वमिति।

१. पू. मी. ११. १. ८.

प्रयोजनं—पूर्वपक्षे दध्यादिहोमानां समुच्चयः, सिद्धान्ते दध्यादीनां विकल्प इति। अथवेदं सूत्रं वाजिनन्यायप्रत्युदाहरणमेव, न त्वधिकरणान्तरम्। सूत्रं स्पष्टम्॥ २३॥

इति दशमं गुणशेषाधिकरणम्॥ १०॥

अथैकादशमिन्द्रियकामाधिकरणम्॥ ११॥

## फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्॥ २-२-२४॥

(विषयसंशयौ)

अग्निहोत्रं प्रकृत्य "दध्नेन्द्रियकामस्य जुहुया"दिति श्रुतम्। तत्र किं तस्यैव कर्मणो दधिविशिष्टस्य फले विधानम्? उत कर्मान्तरस्य दधिविशिष्टस्य? उत दध्न एव फले विधानं, होमस्त्वाश्रयत्वेन प्रकरणप्राप्तोऽनूद्यत? इति विचारः।

(सङ्गतिः)

आद्यपक्षे भावनाभेदाभावादितरयोश्च गुणप्रमाणकस्य तस्य सत्त्वात् पादाध्यायसङ्गती स्पष्टे। अनन्तरा तु पूर्वसूत्रस्य प्रत्युदाहरणत्वपक्षे पूर्वाधिकरणोक्तवाक्यभेदापादकगुणस्याऽपवादादुद्रष्टव्या। न च तस्य पौर्णमास्यधिकरणे निरूपितत्वान्न पूर्वाधिकरणविषयत्वमिति वाच्यम्। गुणमा[illegible]स्य पूर्वाधिकरणविषयत्वेऽपि प्रसङ्गादन्यत्र निरूपणे बाधकाभावात्, वाजिनवाक्येऽपि पूर्वयागानुवादेनोभयविधौ तस्य वक्तुं शक्य[illegible]। अधिकरणान्तरत्वपक्षेऽपि च "गुणस्तत्र प्रतीयेते"ति पूर्वसूत्रोक्ताया गुणस्य पूर्वकर्माङ्गताया अपवादाद्द्रष्टव्या।

( पूर्वपक्षः )

तत्रेन्द्रियकर्मिकायां भावनायां भावार्थाधिकरणन्यायेन होमस्यैव करणत्वोपपत्तौ न तावत् गुणस्य करणत्वोपपत्तिः। नाऽपि कर्मान्तरम्, भेदकप्रमाणाभावात्। तथा हि—भेदकप्रमाणानां मध्ये गुणस्त्वया भेदकत्वेन शङ्क्यते ? प्रकरणान्तरं वा ? नाऽऽद्यः; उत्पत्तिशिष्टगुणान्तराभावेन वाजिनन्यायेन तस्याऽभेदकत्वात्।

ननु तथाऽप्युत्पत्तिवाक्ये कर्मणः प्राप्तत्वात् तदनुवादेन फलसम्बन्धस्य गुणसम्बन्धस्य च विधौ वाक्यभेदापत्तेः तदापादकस्य गुणस्य भेदकत्वं भविष्यत्येव। न च गुणस्य "दध्ना जुहोती"त्यनेनैव प्राप्तत्वात् तद्वाचकपदस्याऽनुवादकत्वेन नामधेयत्वेन चोपपत्तेः केवलफलसम्बन्धमात्रकरणान्न वाक्यभेद इति वाच्यम्। अग्निहोत्रे द्रव्यान्तरस्याऽपि विहितत्वेनेन्द्रियकामप्रयोगे दध्नो नियमेन प्राप्त्यभावात् पाक्षिकानुवादकत्वनामधेयत्वयोरसम्भवेन विधेयत्वापत्तेः वाक्यभेदानिवारणात् गोदोहनादीनां कदाचिदपि प्राप्त्यभावेन एतत्परिहारानुपपत्तेश्चेति चेन्न; उत्पन्नस्याऽपि कर्मणः फलोद्देशेन विधेयत्वात्, तत्र गुणविशिष्टस्य विधानोपपत्तेः; अन्यथा "राजा राजसूयेने"त्यत्र प्राप्तस्याऽपि राजसूयस्य राजकर्तृविशिष्टस्य फले विधानानुपपत्तेः।

न च तत्र राजपदस्य स्वाराज्यकामपदसमभिव्याहारादधिकारिविशेषणत्वमात्राङ्गीकारान्नैतादृशवाक्यार्थाङ्गीकरणमिति वाच्यम्। तथात्वे उद्देश्यविशेषणत्वेन स्वाराज्यकामपदोपात्तपुंस्ववद्राजत्वस्याऽप्यविवक्षापत्तेः।

अत एव शुचित्वाहिताग्नित्वादीन्यपि तत्तत्प्रमाणप्रमितान्येव मिलित्वा स्वातन्त्र्येणाऽधिकारविधिं कल्पयन्ति, न तु

श्रूयमाणे विधौ विशेषणतां प्रतिपद्यन्ते । अतश्च राजत्वस्य कर्तृत्वेनैव यागविशेषणत्वस्य वाच्यत्वात् कर्तृविशेषणस्याऽपि चाऽर्थादधिकारिविशेषणत्वेन कल्पनोपपत्तेः फलोद्देशेन विशिष्टयागविधानादेव वाक्यभेदपरिहारो वाच्यः ।

न च राजत्वस्योपादेयकर्तृविशेषणत्वे तत्पदोपात्तस्य पुंस्त्वस्याऽपि विवक्षापत्तिः, प्रमाणान्तरेण स्त्रिया अप्यधिकारावगमेन "वसन्ते ब्राह्मणोऽग्नीनादधीते"तिवत् कस्यचिल्लिङ्गस्य साधुत्वार्थं वक्तव्यस्याऽवर्जनीयतया पुंस्त्वानुवादेन गौरवापादकविधेयताङ्गीकारानुपपत्तेः । अतो यथैव राजत्वविशिष्टस्य प्राप्तस्याऽपि राजसूयस्य फलोद्देशेन विधानान्न वाक्यभेदः, तथात्राऽपीति द्रष्टव्यम् । अवश्यं चाऽयं प्रकारः "त्रिवृदग्निष्टुदग्निष्टोम" इत्युत्पत्तिवाक्यप्राप्ताग्निष्टुत एव "वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेते"ति फलवाक्ये अग्निष्टोमकर्तृत्वात्तिवाय्वादिगुणविशिष्टस्य फलोद्देशेन विधानादङ्गीकर्तव्यः । दर्शपूर्णमासवाक्ये च साहित्यविशिष्टानां प्राप्तानामप्याग्नेयादीनां फले विधानात् । तस्मान्न तावत् गुणात् भेदः ।

अत एव फलरूपानुपादेयगुणयोगादनुपादेयगुणविशिष्टस्य कर्मणो मासाग्निहोत्रवदुत्सर्गतः प्राप्तस्य विधेयत्वस्याऽपवादकाभावात् प्रत्यभिज्ञायाश्च प्रणयनादिमात्रविषयिण्यो भिन्नविषयत्वेन गोदोहनविशिष्टप्रणयनवृत्तिविधेयतापादकत्वायोगात् दध्यादावपि दधिमात्रविशिष्टहोमवृत्तिविधेयताया दशद्रव्यविशिष्टहोमविषयकप्रत्यभिज्ञयाऽपवादायोगस्य तुल्यत्वादनुपादेयगुणसहकृतानुपस्थितिरूपप्रकरणान्तरमेव मूलोक्तं भेदकं प्रत्युक्तम् । राजसूयादिस्थले विशेष्यमात्रप्रत्यभिज्ञायाः तन्मात्रवृत्त्युत्पत्तिविधिविषयतारूपविधेयताप्रतिबन्धत्वस्यैव प्रकृतेऽपि सम्भवात् ।

तस्मात् भेदकप्रमाणासम्भवेन कर्मान्तरत्वायोगात् तदेव कर्म गुणविशिष्टं फलोद्देशेन विधीयत इत्येकः पक्षः। तत्र पूर्वसूत्रमपि योजयितुं शक्यत इत्येवं योऽयम्—अगुणेऽपि कर्मप्रापके शब्द इति तत्र फलसम्बन्धकरणे गुणोऽपि वैशिष्ट्येन प्रतीयेतेति।

द्वितीयस्तु—गुण एव वाक्यभेदापादको भेदकः। तथाहि—विधिस्तावत् चतुर्विधः—उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिरधिकारविधिरित्यविवादम्। अङ्गान्यपि च कानिचिद्द्रव्य-देवतादीन्युत्पत्तौ, कानिचित् साहित्यादीनि विनियोगे, कानिचिच्च कर्तृदेशकालादीनि प्रयोगेऽन्वीयन्ते (१)इत्यप्येकादशे वक्ष्यते। अत एव द्रव्यादीनां प्रधानमात्रे कर्त्रादीनां च साङ्गे प्रधाने निवेशो लभ्यते। अत एव यत्रैकस्मिन्नेव वाक्ये विधिचतुष्टयं विधित्रयं विधिद्वयं वा तत्र पूर्वविशिष्टापरविध्यङ्गीकारेऽपि यथायोगमङ्गानामन्वयो द्रष्टव्यः। तदिह दध्नः उत्पत्त्यावन्वयायोग्यस्य विनियोगान्वयादिन्द्रियकामवाक्ये च तव मते विनियोगमात्रकरणेनोत्पत्त्यविधानाद्वैशिष्ट्यासम्भवेन प्राप्तोत्पत्त्यनुवादेन दधिविधिः, इन्द्रियोद्देशेन च होमविनियोगविधिरिति वाक्यभेदो दुरपह्नवः। देशादिवाक्ये तु साहित्यस्य विनियोगविधावन्वययोग्यत्वेन फलोद्देशेन विधेयविनियोगविशेषणत्वोपपत्तेः विशिष्टविधिसम्भवान्न भेदः।

एवं राजसूयवायव्यादिवाक्येष्वपि विषयस्य विशिष्टविधिसम्भवेन वाक्यभेदः परिहर्तव्यः। यद्यपि चाऽनुमत्यादीनां प्रत्येकं दैशिककालिकप्रयोगा देशकालविधिषु प्राप्ताः, तथाऽपि अप्राप्तकर्तृसम्बन्धेन प्रयोगान्तरविधिः कालसम्बन्धेन प्राप्तेऽपि दर्शपूर्णमासप्रयोगे समवाक्ये देशसम्बन्धेन प्रयोगान्तरविधि-

१. पू. मी. ११. २. १.

वन्नाऽनुपपन्नः । अयश्चैकः प्रयोगो मुख्यकर्तृविषयः, प्रत्येकं दक्षिणाम्नानात्तु ऋत्विक्कर्तृविषया भिन्ना एव प्रयोगा इति द्रष्टव्यम् ।

वायव्यवाक्येऽपि च क्त्वाप्रत्ययोपात्तस्य पूर्वकालत्वादेः प्रयोगविशेषणत्वात् न वाक्यभेद इत्युत्तराधिकरणे निरूपयिष्यामः । तस्माद्दधिवाक्ये वाक्यभेदसम्पादकस्य गुणस्यैव भेदकस्य सत्त्वात् कर्मान्तरत्वोपपत्तिः ।

न च रूपाभावाद्विधानयोग्यत्वम्, सत्यपि दर्वीहोमत्वे आकांक्षावशेन दधिद्रव्यहोमत्वसादृश्येन चाऽग्निहोत्रधर्मातिदेशोपपत्तेः । न दर्वीहोमानामपूर्वत्वमिति राजाज्ञा, कृत्स्नविधानत्वात् प्रकृतिविशेषनिर्णयाभावाच्च तदिति हि(१) वक्ष्यते । न चाऽत्र तद्द्वयमप्यस्ति, अतो रूपसत्त्वात् कर्मान्तरत्वमेव युक्तम् ।

सूत्रं तु-फले होमविनियोगस्य श्रवणात् तत्र च दध्याद्यन्वयायोगेन कर्मान्तरमेव विधेयं स्यात् । न च गुणफलसम्बन्धशङ्का, फलस्य भावार्थाधिकरणन्यायेन कर्मयोगित्वावगमादिति व्याख्येयम् ॥ २४ ॥

( इति पूर्वः पक्षः )

( अथ सिद्धान्तः )

## अतुल्यत्वाद्वाक्ययोर्गुणे तस्य प्रतीयेत ॥२-२-२५॥

तत्र भावार्थाधिकरणन्यायो यत्र धात्वर्थादनुच्चारणं विधेः । तदपि च यत्र धात्वर्थमात्रमप्राप्तम्, धात्वर्थनामार्थावुभावप्राप्तौ, यत्र वोभौ सम्भवत्प्राप्तिकौ, प्राप्तौ वा, यथा—"अग्निहोत्रं जुहोति" "सोमेन यजेत" "उरुप्रथस्वेति पुरोडाशं प्रथयति"

१. भाट्टदीपिकायामष्टमाध्याये चतुर्थपादे ।

"ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेर-न्नि"त्यादौ। अत्र हि ऐन्द्रवायवाग्रतायाः पाठाद्ग्रहणानां च तत्तद्विधिभ्यः प्राप्तत्वेऽपि प्रजाफलसम्बन्धो ग्रहणानामेव भावा-र्थाधिकरणन्यायेनेति (१)दशमे वक्ष्यते।

यत्र तु नामार्थ एवाऽप्राप्तः तत्र तन्मात्रसंक्रान्तत्वाद्विधि-शक्तेर्धात्वर्थविधाने गौरवापत्तेरन्यतः प्राप्तधात्वर्थानुवादमपेक्ष्य गुणमात्रं विधिर्विधत्ते। तत्र धात्वर्थांशे विधेयताया अभावेन प्रयोजनाकाङ्क्षत्वात् फलसम्बन्धस्य पक्षेऽप्यप्राप्तत्वेन प्रयासत्ते-रनियामकत्वात् न भावार्थाधिकरणन्यायप्रवृत्तिरिति नामार्थस्यैव विधेयत्वेन प्रयोजनसाकाङ्क्षत्वात् फलसम्बन्धः स्वीक्रियते।

एवं नामार्थेष्वपि यत्र कश्चिदेवार्थोऽप्राप्तः अन्ये तु प्राप्ताः, तत्राऽपि तस्यैव फलसम्बन्ध इति द्रष्टव्यम्। अत एव "साकं प्रस्थायीयेन यजेत पशुकाम" इत्यादौ सहत्वमात्रं फलाय विधी-यते; न तु यागः प्रस्थानं वेति (२)वक्ष्यते। तदिह धात्वर्थस्याऽ-न्यतः प्राप्तत्वात् गोदोहनादेश्च गुणस्याऽप्राप्तेः दध्यादेश्च नियमे-नाऽप्राप्तेः तस्यैव फलसम्बन्धः।

यद्यपि च दधिहोमयोरुभयोरपि स्वरूपेण प्राप्तिः इन्द्रिय-सम्बन्धेन चाऽप्राप्तिस्तुल्या, तथाऽपीन्द्रियकामपदाभावे द-धिनियमं कर्तुमारभमाणस्य विधेः दधिमात्रविषयत्वप्रतीतेः त-स्यैव फलसम्बन्धात्। न च दधिनियमस्याऽपि "दध्ना जुहोती"-त्यनेनैव प्राप्तत्वादैन्द्रवायवादिग्रहणवद्धात्वर्थस्यैव फलसम्बन्धो युक्त इति वाच्यम्। तथात्वे दधिपदस्य पाक्षिकानुवादत्वैयर्थ्या-पत्तेः दधिविशिष्टधात्वर्थस्य फलसम्बन्धे गौरवापत्तेः दधिमा-त्रस्य फलसम्बन्धाङ्गीकारात्।

---

१. पू. मी. १०. ५. १८. २. पू. मी. २. ३. ४.

ऐन्द्रवायवाग्रत्वस्य तु शुक्राग्रत्वेन पाक्षिकानुवादाद्या-पत्तावपि न फलसम्बन्धः, तथात्वे काम्यत्वेन बृहत्सामत्व-पक्षेऽपि तदापत्त्या "यदि रथन्तरसामे"त्येतद्वाक्यावगताया रथन्तरसामकत्वाभावे ऐन्द्रवायवाग्रत्वाभावव्याप्तेर्भङ्गापत्तेः । अतस्तात्पर्यग्राहकानुरोधेन तत्र पाक्षिकानुवादत्वमङ्गीकृत्या-ऽपि धात्वर्थस्यैव फलसम्बन्धः, न तु प्रकृते । अतो दधि-पदवाच्या दधित्वादिजातिरेव तदुपलक्षितव्यक्तिर्वा फलार्थं वि-धीयते । तस्याश्चाऽऽश्रयत्वेन प्रकरणप्राप्त एव होमो जुहोतिना-ऽनूद्यते प्रत्ययसाधुत्वाय । तथा हि—दध्यादेस्तावत् सिद्धरूपत्वेन न यागादिवत् क्रियान्तरानपेक्षस्य फलजनकत्वम्, तथात्वे वि-धिं विनाऽपि फलकामनायां सत्यां कारणस्य सत्त्वेन फलोत्पत्त्यु-पपत्तौ कारणविधिवैयर्थ्यापत्तिः । न हि कार्यकारणभावो विधि-ना जन्यते, अपि तु बोध्यते । न च तद्भावस्य यागादाविव कि-ञ्चित्फलमस्ति, तमन्तरेणाऽपि कारणस्य सत्त्वेन फलोपपत्तेः । अत एवेतिकर्तव्यताविधय एव परमुपयुज्यन्तां, न तु दधिरूप-करणविधिरपि । अतो विधिसार्थक्याय इष्टविधया कृतिसाध्य-धात्वर्थविशेषरूपाश्रयसम्बन्धित्वमवश्यमपेक्षणीयम् ।

तत्र च यद्यपि योग्यताबलेन स्वोत्पादनस्वसाध्यभोजन-होमाद्यनेकधात्वर्थविशेषसम्बन्धो नियमेन प्रसज्यते, तथापि प्र-करणेनाऽधिकाराख्येन विधिकल्पनद्वारा होमस्यैवोपनयान्नेतर-धात्वर्थानामाश्रयत्वप्रसक्तिः । अत एव न कल्पितेनाऽपि विधिना दधिहोमयोरङ्गाङ्गिभावो बोध्यते, गौरवात्, क्लृप्तप्रयोजनत्वाच्च; अपि तु लोकसिद्धकार्यकारणभावनियममात्रम् —दध्ना होमः क-र्तव्य इति ।

न च दधिजन्यहोमकर्तव्यताया अपि "दध्ना जुहोती"त्य-

नेनैवाऽवगतिसिद्धेर्दधिविशिष्टहोमानुष्ठानेनैव फलोपपत्तौ पुनरपीन्द्रियकामवाक्यवैयर्थ्यापत्तिः, इन्द्रियकामनाया अधिकारिविशेषणत्वज्ञापनफलकत्वेन सार्थक्यात् । एतद्विध्यभावे हि दधिविशिष्टहोमानुष्ठानस्य नेन्द्रियोद्देश्यकता सिध्यतीति तत्सिध्यर्थमिन्द्रियकामविधिरर्थवानेव । प्रकरणकल्पितविधिबलादेव वाऽऽश्रयलाभसिद्धेः न "दध्ना जुहोती"त्यादेराश्रयसमर्पकत्वमाशङ्कनीयम् । अतोऽनन्यलभ्यत्वात्तेन क्रत्वर्थतैव बोध्यत इति ध्येयम् । अन्यलभ्यत्वादेव चेन्द्रियकामवाक्यस्थजुहोतिनाऽप्याश्रयतासम्बन्धेन होमविशिष्टदधिविधानमङ्गीकृत्याऽऽश्रयविधिरित्यपि निरस्तम् । यथा च प्रकारान्तरेणाऽपि न वाक्येनाऽऽश्रयविधिः तथाऽग्रिमाधिकरणे वक्ष्यते । अङ्गतासम्बन्धेन होमविशिष्टदधिविधिस्तु होमस्य प्रयोजनानाकाङ्क्षत्वान्निराकर्तव्यः । अतोऽत्र दधिमात्रमेव फलोद्देशेन विधीयते । होमस्त्वाश्रयतासम्बन्धेन प्रकरणप्राप्तो जुहोतिना साधुत्वार्थमनूद्यते ।

अत एव भावनाया दधिकरणिकाया अवच्छेदकीभूतधात्वर्थविशेषापेक्षायां समानपदश्रुत्युपात्तो होमोऽवच्छेदकतयाऽन्वितोऽपि न तदंशेऽपि विधिव्यापारकल्पना, होमावच्छेदस्य महाप्रकरणात् प्रणयनाद्यवच्छेदस्य चाऽवान्तरप्रकरणाल्लाभोपपत्तेः । अत एव करणविधिवैयर्थ्यस्याऽऽश्रयत्वनियामकत्वात् भावनाया अवच्छेदकापेक्षाऽपि तन्नियामिकेति द्रष्टव्यम् ।

किञ्च यत्र ससम्बन्धिक एव पदार्थोऽप्राप्तत्वेन फलोद्देशेन विधीयते, तत्र तस्य सत्यपि यागादिवत् साक्षात्कृतिव्याप्यत्वे ससम्बन्धिकत्वादेव प्रतिसम्बन्धिरूपाश्रयलाभो न विरुध्यते, यथा—"पशुकाम उक्थ्यं गृह्णीया"दित्यादौ, उक्थ्यादिपदाभिधेयायास्संस्थायास्समापयतिधातुवाच्यत्वेन यागादिवत्साक्षा-

त्कृतिसाध्यत्वेऽपि ससम्बन्धिकत्वादेव प्रतिसम्बन्धिभूतज्योतिष्टोमरूपाश्रयलाभः ।

यदा तु सौभराधिकरणन्यायमुखाकृदुक्तरीत्या उक्थ्यादिपदवाच्यग्रहयागाभ्यासा एव फले विधीयन्ते, तदाऽभ्यासस्य प्रतिसम्बन्धियागापेक्षयैव ज्योतिष्टोमस्याऽऽश्रयत्वम् । यथाचाऽयं पक्षो दुश्लिष्टस्तथा (१)संस्थाधिकरणे वक्ष्यामः । सर्वथा कृतिसाध्यभावार्थविशेषसम्बन्धित्वं दृष्टविधया फलार्थं विधीयमानस्य गुणस्य स्वनिष्ठकरणतासम्पादकत्वेनाऽपेक्षितम् । अत एव न विधियमानगुणजन्यत्वमेवाऽऽश्रयत्वम्, तदभावेऽपि "मन्थ्यग्रानाभिचरन्" इत्यादौ ग्रहणानां मन्थिग्रहाग्रत्वरूपगुणाश्रयत्वदर्शनात् । अपि तु अदृष्टाद्वारकसम्बन्धेन गुणविशेषावच्छिन्नत्वम् । अदृष्टाद्वारकेति पदकृत्यं तु वारवन्तीयादेरग्निष्टोमस्तोत्रजन्यादृष्टद्वारा यागेन सम्बन्धात् तस्याऽऽश्रयत्वव्यावृत्तिरित्युत्तराधिकरणे वक्ष्यते । तदेवं दध्यादौ यागादिवत्फलनिरूपितैव करणतेति पक्षमाश्रित्य करणविधिवैयर्थ्यादिना आश्रयाकांक्षोपपादिता ।

यदा तु दध्नेति तृतीयोपात्तं करणत्वं नेन्द्रियनिरूपितम्, अपि तु करणतासंसर्गेणैवेन्द्रियेऽन्वेति, अतश्च करणत्वविशिष्टस्य दध्नो दधिविशिष्टस्य वा करणत्वस्य करणतासंसर्गेणेन्द्रिये समन्वयो न तु यागादिवत्तृतीयोपात्तस्य करणत्वस्य निरूपकतासंसर्गेणेति पक्ष आश्रीयते, तदा तृतीयोपात्तस्य करणत्वस्य निरूपकापेक्षायां प्रतिसम्बन्धिविधयैव प्राकरणिकाश्रयलाभो न विरुध्यते । परन्तु निरूपकतासंसर्गापेक्षया करणतासंसर्गस्य गुरुभूतत्वाद्यागादिवैलक्षण्ये प्रमाणाभावाच्चाऽयं पक्षो नातिवाऽऽद्रि-

१. पू. मी. ३. ६. ८.

यते । सर्वथा प्रकरणादाश्रयलाभोपपत्तेरनेन गुणमात्रं विधीयते । भावनाऽपि च सैव, धात्वर्थवत्तस्या अपि प्रत्यभिज्ञायमानत्वात् । न च प्राप्तभावनानुवादेन गुणसम्बन्धः फलसम्बन्धश्च विधीयेतेति वाक्यभेदापादकगुणादेव भेदः, भावनायाः फलसम्बन्धस्य राग-प्राप्तत्वेनाऽविधेयत्वादिति भवदेवः ।

वस्तुतस्तु इन्द्रियाख्यफलस्य जन्यत्वेन व्यापारमात्रजन्य-त्वावगमेऽपि लोकाद्विजातीययत्नजन्यत्वानवगमाद्विशेषतश्चाऽग्नि-होत्रहोमानुकूलयत्ने स्वर्गादिजनकत्वेनाऽवगते इन्द्रियजनकत्वस्य प्रमाणान्तरेणाऽनवगतेर्वाक्येनैव विधेयत्वापातात् दधिरूपद्रव्यस्य चोत्पत्तावन्वयेन राजसूयन्यायाविषयत्वाद्वाक्यभेदावश्यम्भा-वेन गुणात् भेद एव । न ह्यत्र धात्वर्थाविवक्षावद्भावनाया अप्य-विवक्षामङ्गीकृत्य गुणफलयोरेव मिथोऽन्वयो वक्तुं युक्तः, कार-कान्वयस्याऽव्युत्पन्नत्वात् । अतो भावना भिन्नैव । सकृदनु-ष्ठानेऽपि सान्नाय्यादिवत् तत्तज्जात्यवच्छिन्नव्यक्तिद्वयोत्पत्त्यङ्गी-कारान्नैकव्यक्त्याश्रितजातिद्वयाङ्गीकारापत्तिः ।

अस्तु वा तत्, तथाऽपि न साङ्कर्यम्; होमविधिविधेय-तावच्छेदकजातेर्गुणविधिविधेयतावच्छेदकजातिव्यतिरेकेण स-त्त्वेऽपि तस्यास्तद्व्यतिरेकेणाऽन्यत्राऽसत्त्वात् । व्यक्तिभेदपक्षे तु यत्नद्वयस्याऽप्यवच्छेदकीभूतो धात्वर्थ एक एव, प्रमाणबलेन चैकस्य धात्वर्थस्य युगपदुत्पद्यमानयत्नद्वयजन्यतापि जायमाना न विरुध्यते । तस्मादत्र दधिकरणकामिन्द्रियकर्मकं भावनान्तर-मेव विधीयत इति सिद्धम् ।

अपूर्वं तु दधिजन्यमेकमिन्द्रियजनकम्, होमजन्यं च स्वर्गादि-जनकमपरम्; अपूर्वस्य शक्तिरूपत्वेन शक्तिभेदे भेदस्याऽऽवश्य-कत्वात् । आश्रयस्य प्रणयनादेर्दृष्टविधया स्वकार्योपयोगे तु गुणज-

न्यमेव पश्वादिजनकं न त्विन्द्रियाद्यनुकूलं होमजन्यमपरम्, होमस्योत्तरक्षण एव दधिनिष्ठकरणतासम्पादकत्वेनाऽपूर्वाजनकत्वात्। यदि ह्याश्रयत्वं नामाऽवान्तरव्यापारत्वमुच्येत, ततः क्षणिकस्य होमस्येन्द्रियजनकत्वायोगात् तदनुकूलमप्यपूर्वं कल्प्येत। न तु तत्त्वे प्रमाणमस्ति, करणविधेः तज्जन्यत्वमात्रेणाऽप्युपपत्तेः तज्जन्यजनकत्वस्याऽपि कल्पने गौरवात् । अतो गुणफलसम्बन्धस्थले भावनाभेदात् गुणजन्यमप्यपूर्वं भिन्नमेव ।

भावनान्तरस्य चेतिकर्तव्यतापेक्षायामाश्रयतो धर्मातिदेशः । तथा हि—न तावदाश्रयस्यैव प्रकरणादितिकर्तव्यतात्वेनाऽपि ग्रहणं शंक्यम्, वाक्येन स्वर्गादिसंयुक्तस्य होमस्य प्रकरणाविषयत्वात् । न चाऽङ्गत्वाभावेऽप्याश्रयस्य सतः प्रसङ्गेनेतिकर्तव्यताकाङ्क्षानिवर्तकत्वोपपत्तेः नाऽतिरिक्तेतिकर्तव्यताकाङ्क्षेति वाच्यम्। आश्रयस्य करणतानिर्वाहकत्वेन करणकोटावन्तर्भावात् तदनुग्राहकेतिकर्तव्यताया भेदेनैवाऽपेक्षितत्वात् । आश्रयाकाङ्क्षा करणाकाङ्क्षातो भिन्नेति मते आश्रयस्य करणकोटावनन्तर्भावेऽप्याश्रयस्य दृष्टविधया करणतासम्पादकस्याऽदृष्टार्थाया भावनाया अदृष्टोपायापेक्षत्वात् न तदुपकारकत्वं सम्भवतीति युक्तं तद्व्यतिरिक्तेतिकर्तव्यतापेक्षणम् ।

यद्यप्याश्रयान्तरकरणे फलानुत्पत्तेराश्रयनियमादृष्टस्याऽप्युत्पत्तेरावश्यकत्वात् तद्द्वारा तन्नियमस्येतिकर्तव्यतात्वमाशङ्क्येत, तथाऽपि दध्यादिगुणसन्निपत्योपकारस्य क्रयसम्पादनादेरपेक्षितत्वात् आश्रयसमानविधानत्वस्य च (१)संस्थाधिकरणे निषेत्स्यमानत्वात् युक्त आश्रयतो धर्मातिदेशः । न चैवमपि सादृश्याभावात्कथं कल्पितवचनातिदेशः? सादृश्यकार्यस्य प्रकृति-

१. पू. मी. ३. ६. ८.

विशेषोपस्थापनस्य प्रकरणेनैवेह सिद्धेः तदनपेक्षणात् । यद्यपि च ये प्रकृतावाश्रयस्वरूपसिद्ध्यर्था देवतादयः तेषामिह गुणस्वरूपसिद्ध्यर्थत्वासम्भवात् बाध एव प्राप्नोति, तथाऽपि तदन्येषामतिदेशः, ते त्वाश्रयसिद्ध्यर्थं क्रियमाणा अपि न गुण उपकुर्वन्ति।

न च येऽपि प्रकृतौ प्रधानद्वारा तदपूर्वसाधनीभूतद्रव्यसंस्कारार्थाविज्वलनादयः, तेऽपि कथं प्राकृतप्रणाडीरहिते गुणे प्राप्नुयुः ? सत्यमेवं न प्राप्नुवन्ति, तथाऽपि दध्यादौ क्रत्वर्थत्वस्याऽपि सत्त्वात् गोदोहनादेश्च नित्यचमसस्थानत्वात् स्थानापत्तिरूपातिदेशेन प्रणयनानङ्गभूतेऽपि प्रणयनोपकारके गोदोहने धर्माः प्राप्नुवन्त्येव । परं तु ते प्रणयनादिकार्यप्रयुक्ता एव न तु गुणापूर्वप्रयुक्ताः । गुणस्याऽपि त्वपेक्षिताः केचित्सम्पादनप्रक्षालनादयः प्रसङ्गादुपकुर्वन्ति, अन्ये त्वारादुपकारका जपोपस्थानादयो गुणभावनायामतिदेशेन प्राप्नुवन्ति । तत्राऽपि तज्जन्या उपकारा एवाऽतिदिश्यन्ते, न तु तज्जनकीभूताः पदार्था अपि, गुणस्य स्वर्गादिप्रयुक्ताश्रयोपजीवित्वेन तत्तन्त्रमध्यपातावगमात् प्रसङ्गेन तदर्थानुष्ठिताङ्गजन्योपकारलाभोपपत्तेः स्वातन्त्र्येण जनकानपेक्षत्वस्य(१) द्वादशे वक्ष्यमाणत्वात् । अत एव गोदोहनादेः दर्शपूर्णमासापूर्वप्रयुक्तप्रणयनाद्युपजीवित्वात् सौर्यादावनतिदेश इति वक्ष्यते । आश्रयानुष्ठापकत्वं त्वाश्रयस्याऽनङ्गत्वात् क्लृप्तानुष्ठापकान्तरयुक्तत्वाच्च स्पष्टमेव । तस्मात्सिद्धं गुणादेव फलमिति ।

प्रयोजनम्—आद्यपक्षे दध्यपचारे प्रतिनिध्युपादानमारम्भोत्तरम्, ततः प्राक् दध्यभावेऽनारम्भ एव । द्वितीयपक्षे यद्यपि "वि वा एतद्यज्ञश्छिद्यते यदन्यस्य तन्त्रे प्रतते अ-

---

१. पू. मी.

न्यस्य तन्त्रं प्रतायत" इति वचनादेकप्रयोगमध्येऽपरस्य काम-स्य प्रयोगस्सामान्यतो निषिद्धः, तथाऽपि द्वयोरनयोरग्निहोत्र-कर्मान्तरयोरेककालत्वात्तन्त्रप्रयोगापत्तेः सङ्कल्पादौ तत्तत्फलार्थं कर्मद्वयमपि तन्त्रेण करिष्य इत्युल्लेखः प्रयोजनम्। गोदोहनो-दाहरणे तु प्रयोगात् बहिः प्रणयनानुष्ठानम्।

यत्तु वार्त्तिके प्रणयतीत्यस्य कर्मसाकाङ्क्षत्वात् "अपः प्र-णयती"ति वाक्यान्तरश्रुतद्वितीयान्तापदानुषङ्गावगतेरपां चोप-योगसत्त्वेन तत्संस्कारार्थस्यैव प्रणयनस्य फलार्थत्वावगमात् परप्रयुक्तसंस्कार्योपजीवित्वेन पक्षद्वयेऽपि क्रतुप्रयोगमध्यकर-णोपपत्तेः नाऽनुष्ठाने भेदो लभ्यत इत्युक्तम्; तदनुषक्तस्याऽ-प्यप्पदस्य संस्कार्यपरत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेः सक्तु-न्यायेन विनियोगभङ्गावसायाल्लौकिकापसाधनकप्रणनयनस्य पश्वर्थत्वावगतेरातिशयार्थम्।

सिद्धान्ते तु तत्तत्फलार्थकेन गुणेन सहाश्रयं स्वफलार्थं करिष्य इत्युल्लेखः प्रयोजनं द्रष्टव्यम्।

सूत्रं तु—यागादिवाक्यस्य दध्यादिवाक्यस्य च भावा-र्थाधिकरणप्रवृत्त्यप्रवृत्तिभ्यां तुल्यत्वाभावात् तस्याऽऽश्रयस्य फलसम्बन्धिनि गुण एव दध्यादिवाक्यस्थं फलं प्रतीयेतेति योज्यम्॥

इत्येकादशमिन्द्रियकामाधिकरणम्॥ ११॥

## अथ द्वादशं रेवत्यधिकरणम् ॥ १२ ॥

## समेषु कर्मयुक्तं स्यात् ॥ २-१-२६ ॥

### ( विषयसंशयौ )

ज्योतिष्टोमप्रकृतिकोऽग्निष्टुद्यागः समाम्नातः-(१)"त्रिवृद्-ग्निष्टुदग्निष्टोमः, तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्म-वर्चसकामो ह्येतेन यजते"ति । अत्र च प्रथमान्तत्रयस्य यजेते-त्यनेनान्वयात् कर्तव्यपदाध्याहारेण भिन्नवाक्यत्वं ताव-दावश्यकम् । तत्र च त्रिवृत्पदं तावदातिदेशिकचतुस्तोम-त्वव्यावृत्तिफलकतया सर्वस्तोत्रेषु त्रिवृत्स्तोमविधायकम् । अग्नि-ष्टुत्पदं"माग्नेयीषु स्तुवत" इति वचनादाग्नेयमन्त्रसाध्यस्तो-त्राङ्गकत्वात् तत्प्रख्यन्यायेन नामधेयम् । अग्निष्टोमपदं चाग्नि-ष्टोमसंस्थाकत्वप्रतिप्रसवार्थम् ।

यद्यपि हि ज्योतिष्टोमात् नियतमेवाऽग्निष्टोमसंस्था नित्य-त्वात् प्राप्यते, तथाऽप्येतत्पूर्वभावियागस्योक्थ्यसंस्थाकस्य नि-कायित्वेन एतद्यागप्रकृतित्वावसायात् ततः उक्थ्यसंस्थाया एव प्राप्स्यमानत्वेन प्रतिप्रसवत्वोपपत्तिः । राजन्यनिमित्तकाग्निष्टोम-संस्थाविकारभूताग्निष्टोमताव्यावृत्तिफलको वाऽयं सर्वसाधा-रण्येनाऽग्निष्टोमसंस्थाविधिरिति द्रष्टव्यम् । गुणद्वयविशिष्टापूर्व-कर्मविधानाच्च न वाक्यभेदः । तस्येति वाक्येन तु राजसूयन्या-येन वायव्यमन्त्रैकविंशस्तोमविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरका-लतादिविशिष्टो यागप्रयोगः फलोद्देशेन विधीयते । तत्र वायव्य-मन्त्राणामतिदेशप्राप्तमन्त्रबोधनाऽऽग्नेयीमन्त्रबाधेन वा निवेशः ।

---

१. ता. ब्रा. १७. ६१. अस्य विवरणमधिकरणान्ते करिष्यामः ।

यद्यपि चात्राऽग्निष्टोमसामपदसमभिव्याहारादाधारतासम्बन्धेन साम्नि मन्त्राणां विशेषणत्वं प्रतीयते, तथाऽपि अक्लृप्तकार्यकल्पनापत्तेः न सामाङ्गत्वेन मन्त्रविधिः, किन्तु पार्ष्ठिकान्वयलभ्यं समसम्बन्धमनूद्य विशेषणप्रधानमग्निष्टोमशब्दमङ्गीकृत्य स्तोत्राङ्गतयैव मन्त्रविधिः । एवमेकविंशस्तोमकताप्रतिप्रसवोऽपि तत्रैव । प्रकृतितो हि अग्निष्टोमस्तोत्र एकविंशस्तोमकत्वे प्राप्ते आतिदेशिकेन त्रिवृत्सामान्यविधिना निवर्तमाने ऽयं प्रतिप्रसवः । अतश्चोभयविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालादिविशिष्टयागप्रयोगविधिरेवाऽयम् । यद्यपि चाऽग्निष्टोमस्तोत्रभावनोत्तरकालाद्यतिदेशतः सम्भवत्प्राप्तिकम्, तथाऽप्येकवाक्यत्वसिध्यर्थं विशिष्टविधिसन्दष्टन्यायेन वाऽतिदेशप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा तस्य विधिर्नाऽनुपपन्नः । यद्यपि चाऽग्निष्टोमस्तोत्रस्य प्रकृतौ सर्वान्त्यत्वान्न यागप्रयोगपूर्वकालत्वं सम्भवति, तथाऽपि सर्वाङ्गानुष्ठानसौकर्यार्थंमादितोऽवधारणादग्निष्टोमस्तोत्रस्याऽपि तत्सिद्धेः प्रतिपत्तिपूर्वकालत्वाभिप्रायेण तदिति मूलानुयायिनः ।

वस्तुतस्त्वेतादृशविषये मुखं व्यादाय स्वपितीतिवत् समकालत्वमेव प्रयोगमध्यवृत्तित्वरूपं लक्षणया क्त्वाप्रत्ययार्थो विधीयते वाक्यभेदपरिहारार्थम् ।

अथवा अस्तु समानकर्तृकत्वमात्रमत्र तदर्थः । यद्यपि च ऋत्विक्कर्तृकस्तोत्रसमानकर्तृकत्वं यजमानकर्तृके यागे न मुख्यम्, तथाऽपि प्रयोजककर्तृत्वाभिप्रायेण तदुपपत्तेर्न विरोधः; तत्प्रकरणे च 'वारयन्तीयमग्निष्टोमसाम कार्यमि'ति श्रुतेन वाक्येन प्राकृत यज्ञायज्ञीयाख्याग्निष्टोमस्तोत्रं वारवन्तीयं विहितम् । तदनन्तर "श्वैतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते"ति श्रुतम् । तत्र च पूर्ववदेव त्रेधा सन्देहः । पादाध्यायसङ्गती स्पष्टे । आपवादिकी त्वनन्तरा ।

( पूर्वपक्षः )

तत्र प्रकृतप्रत्यभिज्ञानादेतच्छब्दश्रुतेः प्रमाणाभावाच्च न तावत्कर्मान्तरम्, सिद्धान्ते वक्ष्यमाणरीत्यैव चाऽऽश्रयाभावान्नाऽपि गुणफलसम्बन्धः, अतो वायव्यवाक्यवदेव रेवतीमात्रविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालतादिविशिष्टो यागप्रयोगः फलार्थं विधीयते । न ह्यत्र दधिन्यायेन गुणस्योत्पत्तावन्वययोग्यत्वम्, अपि तु कालादिरूपत्वाद्राजसूयन्यायेन प्रयोगविशेषणत्वमेव, अतोऽत्र गुणविशिष्टस्य तस्यैव कर्मणः फलोद्देशेन विधानमित्येकः पक्षः । द्वितीयस्तु नाऽत्र राजसूयन्यायः, प्रयोगस्य वायव्यवाक्येनैव प्राप्तत्वात्, फलान्तरश्रवणेऽपि च विविदिषावाक्यवद्विनियोगमात्रकरणेन प्रयोगान्तरस्याऽविधानोपपत्तेः । न च विनिगमनाविरहः, प्राथम्येन वायव्यवाक्य एव प्रयोगविधेर्नियन्तुं शक्यत्वात् ।

एवं सत्यपि यदि विशेषणीभूतस्य रेवतीमात्रविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालतादेरप्राप्तिः स्यात् ततोऽत्रेष्टेः "यदि ब्राह्मणो यजेत"त्यादौ विधेयकर्तृकालादिरूपानेकगुणवशादिव प्रयोगान्तरमपि विधीयते, न त्वेतदस्ति, तस्याऽपि वायव्यवाक्येनैव प्राप्तत्वात् । न ह्यत्र ततः पूर्वप्रवृत्तिश्शक्यते वक्तुम्, प्रापकस्याऽपि प्रत्यक्षत्वात् । न च प्राप्तस्याऽपि विशिष्टविधिसन्दष्टन्यायेन विधेयतामापाद्य प्रयोगभेदकत्वम्, अन्योन्याश्रयापत्तेः । सति हि प्रयोगविधौ विशिष्टविधिसन्दष्टता, (१)यस्यां च विधेयत्वात प्रयोगविधिरिति । अतः परिशेषाद्रेवतीमात्रप्राप्ताग्निष्टोमस्तोत्रोत्पत्त्यनुवादेन विधेयम्, फलोद्देशेन यागविनियोगश्चेति वाक्यभेदतादवस्थ्यात् दधिन्यायेनाऽत्र लाघवात्

१. तस्यामिति क. पु.

गुणफलसम्बन्धविधिरेव । तत्राऽपि रेवतीनामत्स्याऽप्राप्तत्वात् यद्यपि निमित्तमात्र एव संक्रमते, तथाऽपि नाऽत्र तासां फलसम्बन्धः । तथात्वे तासां विभिन्नसङ्घत्वादेतच्छब्देन तृतीयान्तेन फलसाधनतयाऽपादानानुपपत्तेः, किन्तु प्राप्तस्याऽपि रेवतीविशिष्टस्य वारवन्तीयस्यैव । यद्यपि चाऽत्राऽप्यक्लृप्तकार्यकल्पनापत्तेः रेवतीनामाग्निष्टोमस्तोत्र एवाऽङ्गत्वम् , तथाऽपि पार्ष्ठिकान्वयलब्ध्या धारतासम्बन्धेनैव साम्नि रेवतीनां वैशिष्ट्यं नाऽनुपपन्नम् ।

अत एवैतच्छब्दोपपत्तावपि नाऽग्निष्टोमस्तोत्रस्यैव रेवसङ्कस्य फलसम्बन्धः, अग्निष्टोमसामपदस्य विशेषणप्रधानत्वे लक्षणापत्तेः । न च रेवतीवारवन्तीययोः पृथक्पदोपात्तकारकत्वेनं कथं वैशिष्ट्योपपत्तिः? फलकर्मकभावनाया विधेयत्वेन तस्यामुभयोः प्रथमतस्सम्बन्धाङ्गीकरणेन सोमादिवत्पश्चात् परस्परवैशिष्ट्योपपत्तेः । क्त्वाशब्दश्रवणेन रेवतीषु कृत्वा वारवन्तीयं तेन फलं भावयेदित्यर्थावगमाद्वैशिष्ट्योपपत्तेश्च । अतो(१) रेवतीविशिष्टस्य वारवन्तीयस्य फलसम्बन्धः, तस्य च स्वरसमाहारात्मकस्य सोमरादिवत् सिद्धरूपत्वेनाऽऽश्रयापेक्षायां प्राकृतस्य यागस्यैवाऽऽश्रयत्वम् । न हि गायतिधातुवाच्यत्वात् साम्नः क्रियात्मकत्वाशङ्का, 'गौड वदनैकदेश' इत्यादौ गण्डादीनां धातुवाच्यत्वेऽपि सिद्धरूपत्ववत् । सामशब्दस्य "सामाथो यः कश्च रोवणः स्वर' इति श्रुतेः षड्जादिस्वरसमाहारवाचित्वात् स्वरशब्दस्य च "मारुतस्तूरासि चरन्मन्द्रं जनयति स्वर"मित्यादि सङ्गीतशास्त्रपर्यालोचनया सिद्धरूपत्वायवीयसंयोगविभागजनितध्वन्यात्मकशब्द-

१. युक्तो रेवतीविशिष्टस्येति. क. पु.

विशेषत्वाचित्त्वावगमेन वारवन्तीयादेः सिद्धरूपत्वप्रतीतेः। अ-
तश्च तस्याऽऽश्रयापेक्षायां युक्तमेव यागस्याऽऽश्रयत्वम्। शक्यते
हि साम्ना ऋगक्षराभिव्यक्तिद्वारा स्तोत्रमिव यागस्साधयितुम्।
अतश्च सौभरसाम्नस्स्तोत्राश्रितत्वमिव वारवन्तीयस्याऽपि या-
गाश्रितत्वं तदीययाज्यादिमात्राधारतया उच्चैष्ट्वादिवन्न विरुध्यते।

रेवतीनामपि चाऽत एव याज्यादिकार्ये निवेशोऽभ्युपेयः।
काम्येन च वारवन्तीयादिना सामान्यविधिप्राप्तस्य वाऽतिदेशप्रा-
प्तस्य वैकश्रुत्यादेर्बाधोऽपि सुवच एव। (१)यदि चाऽग्निष्टोमसा-
मेत्यनुवादानुपपत्तिराशङ्क्येत, ततोऽग्निष्टोमस्तोत्रद्वारैव यागस्य
जन्यत्वापरपर्यायमाश्रयत्वम्। इष्यत एव हि व्रीह्यादौ परम्परा-
सम्बन्धेन जन्यत्वम्, आश्रयत्वमपि च सौभरादौ स्तोत्रादेः।

अस्तु वा यागस्याऽग्निष्टोमस्तोत्रजन्यत्वात् परम्परासम्ब-
न्धेन जन्यत्वापरपर्यायाश्रयत्वायोगेऽप्यानर्थक्यतदङ्गन्यायेनाऽ-
ग्निष्टोमस्तोत्रेऽवतारः। इष्यते चोक्थ्यादिस्तोत्रनिरूपितसमाप्ति-
प्रतियोगित्वरूपस्याऽऽश्रयत्वस्य साक्षात् प्रकृते यागेऽसम्भवेन
(२)प्रयोगे चाऽवतारः 'पशुकाम उक्थ्यं गृह्णीया"दित्यादौ। न
च स्तोत्राणामपि प्रकृतयागाङ्गत्वादग्निष्टोमस्तोत्र एवाऽवतारे प्रमा-
णाभावः, अग्निष्टोमस्तोत्रस्य वायव्यवाक्ये विहितत्वेन वारवन्ती-
यवाक्येऽनुवादेन चाऽतिदेशिकस्तोत्रान्तरापेक्षया विशिष्योपस्थि-
तत्वात् शास्त्रस्याऽबाधपक्षपातित्वेन काम्यस्याऽपि वारवन्ती-
यस्य स्तोत्रान्तरे निवेशः। आतिदेशिकसामबाधापत्तेः वारव-
न्तीयाङ्गकाग्निष्टोमस्तोत्रमात्रनिवेशावगमाच्च।

एतेन यत् सिद्धान्तवार्तिके पुरुषार्थवारन्तीयस्य क्रत्वर्थेन
सहाऽभेदाद्वाऽग्निष्टोमस्तोत्रवृत्तित्वं भवेत् क्रत्वर्थस्य तद्वृत्तिदर्शि-

---

१. यदि त्विति. क. पु. २. तदीये प्रयोग इति क. पु.

नेनाऽत्राप्यनुमानाद्वा एतस्य तत्, स्थानापन्नत्वाद्वा ? नाऽऽद्यः, एकस्य देवदत्तस्य युद्धभोजनादिकार्यभेदेन एकस्थानानियम-वदेकस्थानत्वे प्रमाणाभावात् । न द्वितीयः, सामान्यतो दृष्टस्या-ऽप्रयोजकत्वात्, वारवन्तीयत्वहेतोराधानेऽनैकान्तिकत्वाच्च । अग्निष्टोमस्तोत्रवृत्तित्वस्य च साधनतापरपर्यायस्य सामप्रयोजन-त्वेन सामानङ्गतया कार्यापत्त्याऽप्यनतिदेशान्न तृतीयोऽपि । अ-तो नाऽग्निष्टोमस्तोत्रमात्रवृत्तिता सम्भवतीत्युक्तम्, तदपि परा-स्तम्, अबाधेनोपपत्तौ बाधायोगादिति न्यायेनैव तदुपपत्तेः । यस्त्वस्मिन् पक्षे रेवतीभिर्वायव्याबाधः, स स्तोत्रान्तरेऽप्यातिदे-शिकऋगन्तरबाधातुल्य इत्यकिञ्चित्करः । अतो युक्त एव(१) आनर्थक्यतदङ्गन्यायेनाऽग्निष्टोमस्तोत्रमात्रेऽवतारः ।

अस्तु वाऽग्निष्टोमस्तोत्रस्यैव विशिष्योपस्थित्यादिनाऽऽश्रय-त्वम्, तस्य च धर्मिग्राहकप्रमाणेनाऽग्निष्टुद्यागसम्बन्धिन एव लाभाद्यजिः, षष्ठ्यन्तैतच्छब्दः कत्वाप्रत्ययश्च सर्वमनुवादः ।

अथ वा वारवन्तीयमग्निष्टोमसामकार्यमिति प्राकरणिक-वाक्येनैव लाघवादाश्रयसम्बन्धो विधीयते, न त्वङ्गाङ्गिसम्बन्धः, गौरवात् । दध्यादिवाक्येषु त्वन्यलभ्यत्वादाश्रयस्याऽगत्या गौरवाङ्गीकरणम् । तदेवं वारवन्तीयस्यैव फलसम्बन्ध इति मूलोक्तः पक्ष उपपादितः ।

अथ वाऽस्तु रेवतीनामेवाऽप्राप्तत्वात् तस्यैव विधिसंक्रमणा-वगतेस्तासामेव फलसम्बन्धः । सप्तमी चेयं यद्यपि स्तोत्रनिरू-पितं सामनिरूपितमेव वाऽधिकरणत्वं वदति, तथाऽप्येतच्छब्देन तृतीयान्तेन रेवतीविशिष्टवारवन्तीयस्यैव पूर्वोपस्थितस्य परामर्शा-त् तत्र च विशेष्यस्य प्राप्तत्वेनाऽविधेयत्वादप्राप्तरेवतीरूपविशेषण-

१. पू. मी. ३. १. ९.

स्यैव दाक्षायणयज्ञपदे आवृत्तेरिव फलसम्बन्धोपपत्तिः। अत एवैतच्छब्दस्य विलिङ्गसंख्यत्वान्न रेवतीपरामर्शकत्वमित्यप्यपास्तम्, विशिष्टपरामर्शकत्वेनाऽविरोधात्।

न चैतस्मिन्पक्षे रेवतीनामग्निष्टोमस्तोत्रमात्रवृत्तित्वस्य पूर्वोक्तविधयाऽप्यलाभात् कथं गुणफलसम्बन्धोपपत्तिः; प्रकरणेन तदलाभेऽपि वाक्येनाऽऽश्रयलाभोपपत्तेः। तथा हि—दध्यादावपि सम्भवत्येव वाक्येनाऽऽश्रयविधिः। न च वाक्यभेदः, होमविशिष्टदध्नः फलोद्देशेन विधानोपपत्तेः। न चैवं होमस्य दध्यङ्गत्वापत्तिः, क्लृप्तप्रयोजनत्वेनाऽङ्गतासम्बन्धेन वैशिष्ट्यानङ्गीकारात्, अपि स्वपेक्षावशादाश्रयतासम्बन्धेनैव। अतश्च यथैव "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादौ न दर्शपूर्णमासयोः सोमाङ्गत्वमुत्तरकालाङ्गत्वं वा, अपि तु निरूपकतासम्बन्धेनैवोत्तरकालतायां वैशिष्ट्यम्, तथाऽत्राऽप्याश्रयतासम्बन्धेन तदङ्गीकारे न कश्चिद्विरोधः। स तु तत्र नाऽऽश्रितः, अन्यत एव लाभोपपत्तेः। प्रकृते तु प्रकरणेनाऽऽश्रयप्राप्तेः(१) असम्भवाद्वाक्येनैवाऽग्निष्टुद्यागवृत्त्यग्निष्टोमस्तोत्रसाधनीभूतरेवतीविधानाद्वाक्यभेदं विनैवाऽऽश्रयलाभोपपत्तिः।

अथ वा अग्निष्टोमस्तोत्रस्यैवाऽऽश्रयतासम्बन्धेन वैशिष्ट्यम्, तस्य तु प्रकरणात् प्रणयनादेरिवाऽग्निष्टुद्यागसम्बन्धिन एवोपस्थितेस्स्वव्यन्तैतच्छब्दो यजिश्च वारवन्तीयपदवदनुवादः।

किञ्चाऽस्मिन् पक्षे यथैव सिद्धान्ते रेवत्यादिविशिष्टस्तोत्रभावनाविशिष्टयागभावनाविधानं कृत्वा शब्दमहिम्ना न दुष्यति, तथैव ममाऽप्याश्रयभावनाविशिष्टगुणभावनाविधानमिति सर्वथा आश्रयप्राप्तेस्सत्त्वाद्गुणफलसम्बन्धविधिरेव युक्त इति प्राप्ते—

१. असम्भवेऽपीति क. पु.

## ( सिद्धान्तः )

अभिधीयते—नाऽत्र गुणात् फलम्, आश्रयालाभात् । तथा हि-वारवन्तीयस्य फलसम्बन्धित्वपक्षे तावन्नाश्रयलाभः । स हि प्रकरणादभिप्रेतो वाक्याद्वा ? आद्येऽपि किं यागस्यैवाऽऽश्रयत्वम्, अग्निष्टोमस्तोत्रस्य वा ? तत्राऽपि किं यागस्य साक्षादग्निष्टोमस्तोत्रद्वारा वा ? नाऽद्यः; अग्निष्टोमसामेत्यस्याऽनुवादानुपपत्तेः । न द्वितीयः, स्तोत्रस्याऽदृष्टविधया यागाङ्गत्वात् तद्द्वारा यागस्याऽऽश्रयत्वानुपपत्तेः । दृष्टविधया हि कृतिसाध्यधात्वर्थसम्बन्धित्वं गुणस्याऽपेक्षितमित्युक्तं पूर्वाधिकरणे । अदृष्टद्वारा हि तदाश्रयणे गुणस्याऽऽश्रयं विनाऽपि फलकरणत्वस्याऽदृष्टद्वारोपपत्तेः कृतमाश्रयाकाङ्क्षया । न चेष्टापत्तिः, करणविधिवैयर्थ्यापत्तेरुक्तत्वात् ।

न चैवमपि पूर्वकालतादिरूपदृष्टसम्बन्धेनैवाऽग्निष्टोमस्तोत्रस्य द्वारत्वोपपत्तेः युक्तमेव परम्परया यागस्याऽऽश्रयत्वमिति वाच्यम् । एवमपि यागस्यैव तदीयऋगाधारत्वेनाऽऽश्रयत्वोपपत्तेः स्तोत्रद्वारकपरम्परायामेव प्रमाणाभावात् । न च 'अग्निष्टोमसामे'-त्यनुवादानुपपत्तिः प्रमाणम्, तथात्वे तस्याऽपि तत्र तात्पर्यकल्पनेन वाक्यभेदस्याऽपरिहार्यत्वात् ।

किञ्चाऽस्तु वा यागस्य साक्षात्सामाश्रयत्वयोग्यत्वम्, तथाऽप्यग्निष्टोमस्तोत्रस्यैव द्वारत्वनिवेशे किं मानम् ? तस्यौपदेशिक्युपस्थितिरिति चेत् ? तस्या द्वारत्वाभावसाधकत्वेन विरुद्धत्वात् । न ह्यातिदेशिकस्तोत्रवृत्तिऋग्बाधसम्भवे औपदेशिकस्तोत्रवृत्त्यापदेशिकवाधयव्याबाधो रेवतीभिर्युक्तः । तस्मादौपदेशिकत्वस्य द्वारत्वासाधकत्वादग्निष्टोमस्तोत्रस्यैव न द्वारत्वे प्रमाणम-

मस्ति । एतेन तस्यैव विशिष्योपस्थितेः साक्षादाश्रयत्वं यागे, आनर्थक्येन वा तत्रैवाऽवतरणं प्रत्युक्तम् ।

किञ्च नाऽयमानर्थक्यतदङ्गन्यायस्य विषयः । सर्वत्र हि श्रुतशब्दजन्यशाब्दबोधे योग्यताज्ञानाभावेऽप्ययोग्यतानिश्चयाभावमात्रेण शाब्दबोधस्याऽऽनुभाविकत्वात् तन्निश्चयः प्रतिबन्धकमात्रम् । अतश्च "सप्तदशारत्निर्वाजपेयस्य"त्यादौ श्रुतषष्ठ्या अयोग्यतानिश्चयाभावमात्रेण शाब्दबोधे जाते पश्चाद्योग्यतालोचनादशायां साक्षादसम्भवेऽप्युक्तपरम्पराश्रयणम् । यत्र तु कल्पितशब्देन शाब्दबोधः, तत्र शब्दकल्पनायां योग्यताज्ञानस्यैव कारणत्वम्, अयोग्यतानिश्चयाभावसत्त्वेऽपि योग्यताज्ञानाभावे शब्दकल्पनानुदयस्याऽऽनुभाविकत्वात् । अतश्च यागगतयोग्यताज्ञानाभावेन तद्गताश्रयत्वबोधकशब्दस्यैव प्रकरणेनाऽकल्पनात् कुतस्तदसम्भवे अङ्गेऽवतारः ।

यत्तु प्रकरणेनाश्रयलाभाभावेऽपि वारवन्तीयवाक्येनैव तल्लाभोपपत्तिरित्युक्तम्, तन्न; तथात्वेऽग्निष्टुद्यागमात्रवृत्त्यग्निष्टोमस्तोत्रस्यैवाऽऽश्रयत्वे प्रमाणाभावात् । न ह्यग्निष्टोमपदस्याऽविशेषप्रवृत्तस्याऽनपेक्षत्वे सति अधिकाराख्यप्रकरणमात्रेण सङ्कोचो युक्तः, (१)'तुल्येषु नाऽधिकारस्स्या'दिति न्यायात् । यद्यपि च प्रयुक्तिशक्तिकल्पनागौरवपरिहारार्थं क्रतुप्रयोगवृत्तित्वमग्निष्टोमस्तोत्रस्याऽपेक्ष्यते, तथाऽपि क्रत्वन्तरप्रयोगवृत्तित्वस्याऽपि सम्भवात् नाऽधिकारेण सङ्कोचः ।

ननु नेदं कुशकाशावलम्बनं युज्यते, गुणविधेः प्रयुक्तिशक्तिकल्पनापरिहारार्थं हि प्रणयनादेरिवाऽग्निष्टोमस्तोत्रस्याऽपि प्रयोजकान्तरापेक्षायां युज्यत एव प्रकृतक्रत्वधिकारस्य सङ्कोचक-

---

१. जै. सू. ९. १. ११.

त्वम् । अत एव यदपि वार्तिके वारवन्तीयवाक्यस्य गुणफलवाक्यस्य च द्वयोरपि यागोत्पत्तिवाक्येनैवाऽन्वयात् परस्परान्वयाभावेन न वारवन्तीयवाक्यस्याऽऽश्रयसमर्पकत्वं युज्यत इति समाहितम्, तदप्यपेक्षावशेन व्युढाद्युत्पत्तिवाक्यवत् वारवन्तीयवाक्यस्याऽपि गुणफलवाक्यैकवाक्यतयाऽऽश्रयसमर्पकत्वोपपत्तेरकिञ्चित्करम् ।

यदपि च प्राकरणिकाश्रयपक्षे अग्निष्टोमस्तोत्रमात्रवृत्तित्वासम्भवे कारणमौपदेशिकऋग्बाधायोगरूपमुक्तम्, तदपि स्तोत्रान्तरस्याऽऽश्रयत्वे ऋचां साम्नश्च बाधापत्तेरुभयबाधापेक्षया चैकस्यैवौपदेशिकस्याऽपि बाधौचित्यात् कुशकाशावलम्बनमिति कथं रेवत्साधारस्य वारवन्तीयस्याऽऽश्रयालाभात् फलसम्बन्धानुपपत्तिरिति चेत्? सत्यम्, वारवन्तीयस्य फलसम्बन्धानुपपत्तौ नाऽऽश्रयालाभः प्रयोजकः, अपि तु प्राप्तत्वेन ततो विध्युत्तारणमेव यागादिभ्य इव, अतश्च परिशेषान्मूलानुक्तोऽपि रेवतीमात्रफलसम्बन्धपक्ष एव मुख्यपूर्वपक्षत्वेन सम्भावनीयः । तस्य चाऽऽश्रयलाभान्निराकरणं युक्तमेव । न हि तदा प्रकरणादाश्रयो लभ्यते, ऋङ्मात्रबाधस्याऽऽतिदेशिकेष्वेव युक्तत्वेनाऽग्निष्टोमस्तोत्रवृत्तित्वस्य वारवन्तीयमात्राधारत्वस्य वाऽप्राप्तत्वादनुवादानुपपत्तेः । वारवन्तीयवाक्यस्य त्वाश्रयसमर्पकत्वमस्मिन् पक्षेऽनाशंक्यमेव ।

न च प्रकारान्तरेणाऽऽश्रयालाभेऽपि वाक्येनैव तल्लाभोपपत्तिः, तेनाऽपि ह्यग्निष्टोमस्तोत्रमात्रस्यैवाऽऽश्रयत्वं विधीयते, यागविशिष्टस्य वा? नोभयथाऽपि सम्भवति । तथा हि—सर्वत्रैव तावद्ध्यादौ न वाक्येनाऽऽश्रयविधानं युक्तम् । तदा त्वाश्रयस्य प्रथमत एव तावन्न गुणं प्रति वैशिष्ट्यं सम्भवति, कारकत्वात्,

अतः सोमादिवदेव भावनासम्बन्धोत्तरकालं पार्ष्ठिकं तदित्याश्रयणीयम् ।

न च गुणभावनायामाश्रयस्याऽन्वयस्सम्भावयितुं शक्यः । स हि न तावत् करणत्वेन, तथात्वे भावार्थाधिकरणन्यायप्रवृत्त्या तस्यैव फलसम्बन्धापत्तेः, करणत्वेनोपस्थितस्य गुणसम्बन्धायोग्यत्वाच्च । क्लृप्तप्रयोजनत्वात् गुणाङ्गत्वापत्तेश्च नेतिकर्तव्यतात्वेन । अतः परिशेषात् कर्मत्वेनाऽन्वयो वाच्यः । तत्राऽपि यदीप्सितकर्मत्वरूपेण भाव्यत्वेन, तत उद्देश्यानेकत्वाद्वाक्यभेदो गुणस्याऽऽश्रयाङ्गत्वापत्तिश्च । यदि तु अनीप्सितकर्मत्वेनाऽन्वयः, तदाऽपि फलस्य कर्मत्वेनाऽन्वयात् प्रत्ययस्य द्विकर्मकत्वापत्तिः । न चेष्टापत्तिः, करोतिपर्यायत्वेन प्रतीत्यनुसारेण चैककर्मकत्वस्य (१)सन्मार्गाधिकरणे स्थापितत्वात् ।

न च दध्यादावाश्रयस्य वाक्येनाऽविधानेऽपि प्रकृते क्त्वाशब्दोक्तभावनायामन्वितस्याऽग्निष्टोमस्तोत्रस्य साम्नो वा गुणे वैशिष्ट्योपपत्तेर्वाक्येन तद्विधानोपपत्तिः । क्त्वाशब्दोक्तभावना हि क्रत्वर्थैव वा ? भावनान्तरं वा ? गुणफलभावना वा ? नाऽऽद्यः; तस्या हि गुणफलभावनासम्बन्धाभावेन वैशिष्ट्यानुपपत्त्या सिद्धान्तिवदेकभावनाविशिष्टापरभावनाविधानानुपपत्तेः ।

न द्वितीयः, तस्याः प्रयोजनान्तराभावेन गुणभावनाङ्गत्वापत्तौ तत्सम्बन्धिनस्स्तोत्रादेरपि तदङ्गत्वापत्त्या बहिःक्रत्वनुष्ठानापत्तेः, यजेतेत्यनुवादानुपपत्तेश्च; तस्याऽपि तु विधाने भावनाया द्विकर्मकत्वापत्तिस्तदवस्थैव । तृतीयस्तु क्रियाद्वयाभावेन क्त्वाप्रत्ययानुपपत्तेरनाशङ्क्य एव । तस्मात् कथमप्याश्रयालाभात् गुण-

---

१. पू. मी. २. १. ५.

फलसम्बन्धानुपपत्त्या(१) पूर्वकर्मण्यनिविशमानात् रेवतीरूपात् गुणादेव कर्मान्तरम् ।

तत्र चाऽपूर्वकर्मविधित्वाद्वाक्यभेदं विनैव यद्यपि सर्वमेव विधातुं शक्यम्, तथाऽपि (२)"न चेदन्येन शिष्टा" इति न्यायेन यदप्राप्तं तदेव विधीयते, इतरत्तु प्राप्तमनूद्यत इति नाऽतीव गौरवम् ।

न चैवमपि फलोद्देशेन यागविधिः, तत्र चाऽतिदेशादेवाग्नि- ष्टोमस्तोत्रस्य निकायित्वेन च पूर्वयागातिदेशाद्वारवन्तीयमा- म्नो वाऽप्राप्तत्वात् तदुद्देशेन रेवतीविधिरिति वैशिष्ट्यासम्भ- वाद्वाक्यभेदस्स्यादेवेति वाच्यम् । वैशिष्ट्यसम्पत्तये विशिष्टवि- धिसन्दष्टन्यायेन वाऽतिदेशप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण वाऽग्नि- ष्टोमस्तोत्रभावनोत्तरकालताविधेर्वायव्यवाक्यन्यायेनाऽङ्गीकर- णात् । अत एव तावतैव रेवतीविधिसिद्धेर्न वारवन्तीयस्या- प्युत्तरीत्या विध्यङ्गीकरणम् । न च विनिगमनाविरहः, अक्लृ- प्तकार्यकल्पनाभिया सामाङ्गत्वासम्भवेन स्तोत्राङ्गत्वस्यैव न्या- य्यत्वात् ।

अत एवाऽग्निष्टोमसामेत्यपि विशेषणप्रधानतया स्तोत्रपर- मेव, वारवन्तीयपदं तु निकायितया प्राप्तवारवन्तीयानुवादः । रेवतीनां च स्तोत्रं प्रत्यपि तदनुकूलपदशक्त्याधारत्वेन "आ- ग्नेयीषु स्तुवत" इतिवदधिकरणत्वोपपत्तेः सप्तमी यथाश्रुतैव, करणत्वलक्षणार्था वा । अतश्च रेवतीमात्रविशिष्टस्तोत्रभावना उत्तरकालादिसम्बन्धेन यागभावनाविशेषणमिति तद्विशिष्टो यागः फलोद्देशेन विधीयते इति सिद्धम् । न च भावनाया अ- कारकत्वात् कथं भावनान्तरविशेषणत्वम्, क्त्वाप्रत्ययादिस्थले

१. अनुपपत्तौ. इति ख. पु. २. जै. सू. १. ४. ९.

उत्तरकालतादिसम्बन्धेनाऽपि विशेषणत्वव्युत्पत्तेः। अत एव पूर्वभावनाया मुख्यविशेष्यत्वाभावेऽपि रेवत्यादिकारकाणां तत्रैवाऽन्वय इत्युक्तं भावनानिरूपणे।

अत एव पशैकत्वाधिकरणपूर्वपक्षन्यायेन मुख्याविशेष्यभूतभावनाविशेषणविशेषणीभूतासु रेवतीषु विशेषणविधिकल्पनायोगात् तासामविवक्षेत्यप्यनाशङ्क्यम्, मुख्यविशेष्यभूतभावनाविशेषणत्वाभावेऽपि क्त्वाशब्दोक्तभावनाविशेषणत्वस्य सत्त्वेन पशैकत्वाधिकरणपूर्वपक्षन्यायाविषयत्वात्। अपि च यत्र लिङ्गसंख्यादौ कारकान्वयद्वारा भावनान्वयो व्युत्पत्तिसिद्धः तत्र तेषां तदनादरेण द्रव्यान्वये विशेषणविशेषणत्वाच्च विधिकल्पनेति तद्विषयोऽसौ न्यायः। न तु यत्राऽपि कारकातिरिक्तसम्बन्धेन समासादौ द्रव्यान्वयद्वाराऽपि भावनान्वयव्युत्पत्तिः, यथा—"लोहितोष्णीषा ऋत्विज" इत्यादौ, तत्र विशेषणविशेषणेऽपि विशेषणविधिकल्पनायां न किञ्चित् बाधकमस्ति। अतस्तादृशस्थले प्राप्तकर्मानुवादेनाऽपि परस्परवैशिष्ट्यस्य पूर्वमेव प्रमितत्वादनेकविधानेऽपि न वाक्यभेदः।

चित्रयेत्यादौ च लिङ्गस्य प्रातिपदिकार्थेऽन्वयोऽव्युत्पन्न इति वैशिष्ट्यस्य पूर्वमप्राप्तत्वात् प्राप्तकर्मानुवादेनाऽनेकविधाने युक्तो वाक्यभेदः। प्रकृते तु रेवतीनां भावनान्वयस्याऽपि सत्त्वात् भावनायाश्चोत्तरकालतादिसम्बन्धेन मुख्यभावनाविशेषणत्वोपपत्तेर्युक्तं विशिष्टविधानम्। तस्मात् कर्मान्तरविधिरेवाऽयम्।

नन्वेवमपि न कर्मान्तरत्वे प्रमाणमस्ति, "यदि ब्राह्मणो यजेते"त्यादावत्रेष्टेरिवाऽग्निष्टुत एव प्रयोगान्तरोपपत्तेः; न हुभयत्राऽपि वाजिनन्यायेन कर्मान्तरत्वाशङ्का सम्भवति। वाजि-

नस्य ह्युत्पत्त्यन्वयिनस्तद्विधिभेदापादकस्य युक्तं कर्मान्तरत्वापादकत्वम्, कर्तृकालादिरूपस्य गुणस्य तु प्रयोगविध्यन्वयित्वेनोत्पत्त्यनन्वयान्नोत्पत्तिविधिभेदनिबन्धनकर्मभेदापादकत्वम्। अत एव कालोऽपि यः प्रयोजनविशेषार्थमुत्पत्तावेवाऽन्वेति, यथाऽऽग्नौ, तत्रेष्ट एव तेनाऽप्याग्नेयकर्मभेदः; "यदि ब्राह्मणो यजेत" इत्यादौ तु ब्राह्मणादेः कर्तुः प्रयोगान्वयित्वात् तद्भेदकत्वमेवाऽङ्गीकरिष्यत इति तन्न्यायेन प्रकृतेऽप्युत्तरकालतादिरूपस्य गुणस्य प्रयोगभेदकत्वस्यैव युक्तत्वान्न कर्मभेदकता युक्तेति चेत्—न; क्त्वाप्रत्ययोपात्तस्य गुणस्याऽतिदेशत एव सम्भवत्प्राप्तिकतया स्वरूपेण विशेषणविध्यविषयस्याऽत्र भेदकत्वाभावात्। सर्वत्र हि संख्यावत् गुणोऽपि विधेय एव भेदकः, न त्वविधेयः। 'यावज्जीव'मित्यादावपि च निमित्तस्य स्वरूपेण विधेयस्याऽपि नैमित्तिकसम्बन्धित्वेनाऽप्राप्ततया विधेयत्वात् विनियोगभेदकत्वाविघातः।

अत एव "यदि ब्राह्मणो यजेत" इत्यादौ ब्राह्मणादिकर्तृकत्वस्याऽप्राप्तत्वाद्युक्ता भेदकता। प्रकृते तु क्त्वाप्रत्ययोपात्तस्याऽग्निष्टोमस्तोत्रोत्तरकालतादेस्स्वरूपेण कर्मसम्बन्धित्वेन चाऽतिदेशादेव प्राप्तत्वात् नैवाऽस्ति भेदकत्वम्; अपि तु रेवतीरूपस्य गुणस्यैव। तस्य चोत्पत्त्यन्वयित्वात् कर्मभेदकत्वमेव न प्रयोगभेदकत्वम्।

न चैवं रेवतीरूपस्य गुणस्याऽग्निष्टोमस्तोत्र एवाऽन्वयात् तद्भेदकत्वमेव स्यात् न कर्मभेदकत्वमिति वाच्यम्। तथात्वे फलोद्देशेन यागप्रयोगान्तरस्याऽप्यवश्यविधेयत्वापत्तेर्लाघवेन कर्ममात्रभेदकत्वस्यैवाऽङ्गीकारात्। अत एव विवक्षितगत्या परम्परासम्बन्धेन रेवतीविशिष्टयागविधिरेवाऽयम्। शाब्दबोधेऽन्वयनि-

र्थाद्यार्थं तु सम्भवत्प्राप्तिकस्याऽग्निष्टोमस्तोत्रादेर्विशिष्टविधिस-न्दष्टन्यायादिना विधेयत्वाङ्गीकरणम्, न वस्तुतः। अतश्च वि-वक्षितगत्या रेवतीरूपस्य गुणस्य यागान्वयिततयैव विधेयत्वानु-क्ता तत्स्वरूपभेदकता । अतस्सिद्धं कर्मान्तरमेवाऽत्र फलोद्देशेन विधीयत इति ।

न चैवमपि षष्ठ्यन्तैतच्छब्देन पूर्वकर्माङ्गतयाऽप्येतद्विधिप्र-तीतेः कथं फलोद्देशेन कर्मान्तरविधानमिति वाच्यम् । तस्योद्दे-श्यानेकत्वकृतवाक्यभेदभिया निराकांक्षितया प्राप्तपूर्वयागप्रकृति-स्वरूपसम्बन्धानुवादकत्वात् वाक्येन च फलोद्देशेन विधानात्। प्रकरणात् पूर्वयागाङ्गत्वं त्वनाशङ्क्यमेव । तस्मात् फलार्थं क-र्मान्तरमेव विधीयते । तृतीयान्तैतच्छब्दस्तु "अथैष ज्योति" रितिवत् प्रस्तोष्यमाणकर्मवचन इति न विरोधः । प्रयोजनं स्पष्टम् ।

सूत्रं त्वाश्रयतया परस्परानन्वयात् समेष्वेषु वाक्येषु कर्मयुक्तमेव फलं स्यादिति व्याख्येयम् ॥

इति द्वादशं रेवत्यधिकरणम् ॥ १२ ॥

## अथ त्रयोदशं सौभराधिकरणम् ॥

## सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥२-२-२७॥

(विषयसंशयौ)

ज्योतिष्टोमे सौभराख्यं साम त्रेधा समाम्नातं—नित्यं नैमित्तिकं काम्यं च । तत्र षोडशिसंस्थावान्तरप्रकरणे "सौभरमुक्थानां

ब्रह्म साम भवती"त्यनेन नित्यतया विहितम्। अत्र हि ब्रह्मसामाख्यस्तोत्रोद्देशेन समाम्नायाऽवगतं सौभरं विधीयते, प्रकरणाच्च षोडशिसंस्थापूर्वसाधनीभूतता स्तोत्रे लभ्यते, तस्य च स्तोत्रस्य वस्तुत उक्थ्याख्यस्तोत्रत्रयमध्यमत्वात् 'उक्थ्याना' मित्यनुवादः। नैमित्तिकतया तु अतिरात्रसंस्थावान्तरप्रकरणे "यदि बृहत्सामाऽतिरात्रस्स्यात् सौभरमुक्थ्यानां ब्रह्मसाम कार्यमि"त्यनेन विहितम्। अत्राऽप्यतिरात्रसंस्थायामतिदेशप्राप्ते बृहत्सामत्वे निमित्ते तदपूर्वसाधनीभूतब्रह्माख्यस्तोत्रोद्देशेनैव सौभरं विधीयते। तत्रैवाऽतिदेशप्राप्ते रथन्तरसामकत्वे निमित्ते तु "यदि रथन्तरं सौभरमुक्थ्येषु कुर्यादि"त्यनेनाऽतिरात्रसंस्थापूर्वसाधनीभूतोक्थ्यस्तोत्रोद्देशेन सौभरं विधीयते। पुनश्च नित्यविधिसन्निधौ "यो वृष्टिकामो योऽन्नाद्यकामो यस्स्वर्गकामः स सौभरेण स्तुवीते"त्यनेन फलत्रयार्थं सौभरं विधीयते। अत्र चोद्देश्यानेकत्वात् 'सौभरेण स्तुवीते" त्यस्याऽनुषङ्गाङ्गीकारेण वाक्यत्रयं द्रष्टव्यम्। सौभरस्य च षड्जादिस्वरसमाहारात्मकस्य ध्वन्यात्मकशब्दत्वेन सिद्धरूपस्य दध्यादिवदेवाऽऽश्रयापेक्षायां षोडशिसंस्थाङ्गभूतब्रह्माख्यस्तोत्रमेव प्रकरणात्प्रणयनादिवदाश्रयत्वेन सम्बध्यते।

यत्त्वत्र पार्थसारथिना भवदेवेन च सौभरस्य गीतिरूपक्रियावाचित्वादाश्रयापेक्षाभावेन 'स्तुवीते'त्यनुवादानुपपत्तिमाशङ्क्य, अनुवादान्यथानुपपत्त्यैव तृतीयान्तेन सौभरपदेन करणत्वविशिष्टस्यैव सौभरस्य करणतासम्बन्धेन फलोद्देशेन विधानादाद्यकरणत्वस्य निरूपकापेक्षायां प्रकरणात् पूर्वस्तोत्रविशेषसम्बन्धोपपत्तिरित्युपपादनायोपन्यस्तम्, तत् गीतेरपि षड्जादिस्वरसमाहारात्मकत्वस्य पूर्वाधिकरणे साधितत्वादुपेक्षितम्।

न च सौभरस्याऽपि क्रत्वर्थत्वेन प्राप्तत्वादुभयप्राप्तौ ऐन्द्रवायवाग्रानितिवद्धात्त्वर्थस्य स्तोत्रस्यैव फलोद्देशेन विधिरस्त्विति वाच्यम्। तथा सति स्तोत्रस्यैव बहिःक्रतुप्रयोगापत्तौ तत्र सौभरस्याऽप्राप्तत्वात्, तथाऽपि विधाने विशिष्टविधिगौरवापत्तेः, सौभरस्य फलसम्बन्धाङ्गीकारात्। अतस्सिद्धं सौभरस्य काम्यत्वमपि। तस्य च समानकाले शाखाभेदेन निधनाख्यान्तिमसामावयवाधारत्वेन 'हीष्, ऊर्क्, ऊ' इत्यादीनि स्तोभाक्षराणि समाम्नातानि। तदेवंविधं सौभरं प्रकृत्य श्रूयते,–"हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाये"ति। तत्र किं हीषादिस्तोभाक्षराणि प्रकृतसौभराश्रितानि वृष्ट्याद्यर्थत्वेन विधीयन्ते, उत वृष्ट्याद्यर्थे सौभर एवाऽनियमेन प्राप्तानि नियम्यन्त इति विचारः।

( सङ्गतिः )

वाक्यभेदापादकगुणप्रमाणकभावनाभेदाभेदविचारात् पादाध्यायसङ्गती स्पष्टे। इन्द्रियकामाधिकरणरेवत्यधिकरणयोर्द्वयोरप्यपवादात्त्वनन्तरा।

( पूर्वपक्षः )

तत्र वृष्टिकामपदस्य तावत् स्वर्गकामाधिकरणन्यायेन फलपरत्वात् तादर्थ्यचतुर्थ्या तदर्थत्वेन हीषादिकं दध्यादिवत् गुणसंक्रान्तशक्तिकेन विधिना विधीयते। अत एव निधनपदमाश्रयतया प्राप्तनिधनसम्बन्धानुवादः। तथा हि—हीषाद्यक्षराणि तावत्सिद्धरूपाणि सामभागपरिपूरकत्वेन योग्यत्वात् प्रकृतसौभराख्यं सामैवाश्रयत्वेनाऽवलम्बन्ते। युक्तं हि तस्य स्वावयवद्वारा स्तोभाक्षराधारत्वात् दृष्टविधया हीषादिस-

म्बन्धित्वम् । अतश्च यथैव स्तोत्रादेः स्वसाधनीभूतऋगक्षराभि-
व्यक्त्यर्थकसौभरादिसाध्यत्वात् परम्परासम्बन्धेऽप्याश्रयत्वा-
विघातः, तथा साम्नोऽपि स्वावयवद्वारा स्तोभाक्षरसाध्यत्वा-
दाश्रयत्वोपपत्तिः । न ह्यत्र वारवन्तीयादिवददृष्टं द्वारतया प्रवि-
ष्टम्, येनाऽऽश्रयत्वं विहन्येत ।

न चैवमपि भवन्मते साम्नः सिद्धरूपत्वेनाऽऽश्रयत्वोपप-
त्तिः; सिद्धरूपस्याऽप्युच्चारणक्रियाविशिष्टत्वेन कृतिसाध्यत्वात्
रूपादिवदाश्रयत्वोपपत्तेः, ध्वन्यात्मकशब्दस्य नित्यत्वानङ्गी-
काराच्च । न चैवमपि सौभरस्याऽनेकभागत्वान्निधनस्यैवाश्रय-
त्वे प्रमाणाभावः, निधनाधारतया हीषादिपाठस्यैव लाघवेना-
श्रयतानियामकत्वात्, अन्यथा क्रत्वर्थनिधनाङ्गतया हीषादिवि-
धौ गौरवापत्तेः ।

अस्तु वा तस्य तत्, तथाऽपि भागान्तरे हीषादिनिवेशे
स्तोभान्तरबाधापत्तेः क्वचिच्च प्रधानभूतऋगक्षरान्तरस्यैव बा-
धापत्तेरबाधपक्षपातिना शास्त्रेण क्रतुसादगुण्यार्थं निधनाधार-
तयाऽवश्यप्रयोज्यस्य हीषादेस्तन्मात्राश्रयत्वलाभो नाऽनुपप-
न्नः । अतश्च निधनानुवादोपपत्तेः रेवत्यधिकरणन्यायेन ही-
षादिविशिष्टनिधनान्तरविध्याशङ्कानुपपत्तेर्दध्यादिवद्गुणसंक्रान्त-
शक्तिना विधिना इन्द्रियकामाधिकरणन्यायेन हीषादिकमेव त-
त्तत्फलोद्देशेन विधीयते ।

न च रेवत्यधिकरणन्यायापेक्षया लघुभूतेन्द्रियकामाधिक-
रणन्यायेन गुणफलसम्बन्धविध्युपपत्तावपि गुणफलसम्बन्धे
अपूर्वविध्यापत्तेस्ततोऽप्यतिलघुभूतनियमविध्यापादकं तत्तत्फ-
लकसौभरसम्बन्धिनिधनाधारतया हीषादिविधिरिति पक्षा-
न्तरमेव किमिति नाऽऽश्रीयत इति वाच्यम् । उक्तविधोद्देश्यप्र-
त्यायकाभावेन तादृशवचनव्यक्तिपक्षस्याऽनुक्तिसहत्वात् । त-

था हि—निधनपदं वोद्देश्यसमर्पकम् ? वृष्टिकामादिपदं वा ? नाऽऽद्यः; निधनमात्रोद्देशेन विधानस्य तावत्पाठप्राप्तिसम्भवे-नाऽनुपपत्तेः। वृष्टिकामपदेन वृष्टिसाधनसौभरीयत्वविशेषणे तु विशिष्टोद्देशे वाक्यभेदः। सौभरीयत्वस्य वृष्टिकामपदशक्त्या-ऽलाभात् लक्षणापत्तिश्च। अत एव न द्वितीयः। न चैकं पदं वृष्टिसाधनसौभरसम्बन्धिनिधनलक्षकम्, अन्यच्च तात्पर्यग्रा-हकमिति शक्यते वक्तुम्, विनिगमनाविरहात्। तात्पर्यग्राह-कस्याऽपि शाब्दबोधसामग्र्यन्तर्गतत्वेन वाक्यभेदानिवारणात्। अन्यथा हविरुभयत्वविवक्षाया दुर्निवारत्वात्।

किञ्च वृष्ट्यादिसाधनसौभरवृत्तिनिधनोद्देशेनाऽपि हीषादेः पाठत एव प्राप्तत्वान्न विधिसम्भवः। यदि तु वृष्टिसाधनीभू-तसौभरनिधन इव तदसाधनसौभरनिधनेऽपि कदाचिद्धीषः, प्राप्तिसम्भवात् तत्र तद्व्यावृत्तिफलकनियमस्यैव फलत्वोपपत्तेः विधिसम्भव इत्युच्यते, ततो नित्यनैमित्तिकसौभरप्रयोगे निध-नाधारस्तोभाक्षराभावेन सापेक्षत्वापत्तिः। अतो लघुभूतस्या-ऽपि नियमविधेरसम्भवात् वृष्टिकामपदस्य शक्त्युपस्थापितफ-लार्थत्वसम्भवे लाक्षणिकवृष्टिसाधनसौभरवृत्तिनिधनार्थत्वकल्प-ने प्रमाणाभावाच्च गुरुभूतोऽपि गुणफलसम्बन्धपक्ष एवाऽऽश्री-यते। एवं च कारणवैजात्येन कार्यवैजात्यस्याऽऽवश्यकत्वात् सौ-भरजन्यवृष्ट्यादिभ्यो हीषादिजन्यवृष्ट्यादीनि व्यक्तितो जाति-तश्च भिन्नानीत्यपि द्रष्टव्यम्।

सूत्रं तु—सौभरसम्बन्धिनिधनाश्रिते हीषादौ कामान्तर-संयोग एव वृष्टिकामपदेन प्रत्येतव्यः, श्रुत्यादिवृष्टिकामशब्देन वृष्टिकामस्यैव पुरुषस्योक्तत्वेन वृष्टिसाधनसौभरवृत्तिनिधनकाम-परत्वे लक्षणापत्तेरिति व्याख्येयम्॥

( इति पूर्वपक्षः )

( अथ सिद्धान्तः )

## सर्वस्यैवोक्तकामत्वात् तस्मिन् कामश्रुतिस्यान्निधनार्था पुनश्श्रुतिः ॥ २-२-२८ ॥(सि)

आश्रयालाभादेव तावन्नाऽत्र गुणफलसम्बन्धो युक्तः । न ह्यत्र सौभरमनेकावयवात्मकं सिद्धरूपश्चैकाक्षराश्रयत्वेनाऽन्वेतुं योग्यम् । यद्यपि निधनद्वारा निधनमेव वा कथञ्चिद्योग्यं स्यात्; तथाऽपि तस्य विशेषत उपस्थित्यभावान्नाश्रयत्वेन द्वारत्वेन वा सम्बन्धः । वस्तुतस्तु शास्त्रस्याऽबाधपक्षपातित्वस्वाभाव्येन निधनस्यैव तदुपपत्तेः मूलोक्तकुशकाशावलम्बनेनाऽऽश्रयालाभोपपादनासम्भवान्नियमविधिलाघवानुरोधेनैव गुणविधिपक्षो निराकर्तव्यः । तथा हि-फलत्रयार्थमपि सौभरं(१)योगसिद्ध्यधिकरणन्यायेन सकृदुच्चरितमेकस्मिन्प्रयोगे एकमेव फलं साधयति नेतरत् । तत्र चैकार्थत्वादेकसौभरेऽनियमेन हीषादीनि त्रीण्यपि निधनानि प्राप्येरन् । ततश्च वृष्टिफलार्थे सौभरप्रयोगे यथा हीष् प्राप्यते तथाऽन्यान्यपि विकल्पेन प्राप्येरन् । यदा चान्यानि प्राप्यन्ते तदा हीषोऽप्राप्तेर्युक्तो नियमः । नियमोऽप्ययं वृष्ट्यर्थसौभरप्रयोगे हीषेवेत्येवंविधः शेषस्यैव, न तु वृष्ट्यर्थसौभरप्रयोग एव हीष् इत्येवंविधः शेषिणः, विधेयशेषगतनियमफलसम्भवे उद्देश्यगतस्य तस्याऽन्याय्यत्वात् । न ह्ययं प्राप्तनियमः, येन हीषोऽविधेयत्वमाशङ्क्येत, अत्यक्षस्याऽपि पाठस्य विधिकल्पनया सामान्यमुखेन च वृष्टिकामप्रयोगमुपारूढस्य मन्थरप्रवृत्तिकतया ततः पूर्वप्रवृत्तस्यङ्गीकारेणाऽत्र हीष एव विधेय-

१. पू. मि. ४. ३. ११.

त्वात् । अतश्च तद्गतस्यैव नियमस्य फलत्वोपपत्तिः । एवञ्च श्रेषनियमाकरणान्नित्यनैमित्तिकसौभरप्रयोगे हीषाद्यप्राप्तिः ।

न चैवमपि प्रबलेन वाक्येन चतुर्थीश्रुत्या वा वृष्ट्यर्थसौभरप्रयोगविशेषाङ्गतया हीषादिविधौ लिङ्गादिवदेव दुर्बलस्य श्रुत्यकल्पकत्वात् कथं नित्यनैमित्तिकप्रयोगे हीषादिप्राप्तिः ? दुर्बलस्याऽपि पाठस्याऽत्यन्तवैयर्थ्यप्रसङ्गेन चमसिनां भक्षे समाख्याया इव पौर्णमासीस्थवेदिकरणादौ प्रकरणे पाठादेरिव च नित्यनैमित्तिकप्रयोगविषये हीषादिविधिकल्पकत्वस्याऽङ्गीकारात् । लिङ्गादेस्तु गार्हपत्यादौ लक्ष्ये शक्यसम्बन्धार्थमेवोपपत्तेः नैन्द्रादिविषये तस्य श्रुतिकल्पकत्वम् ।

नन्वेवं पाठस्याऽपि वृष्ट्याद्यर्थसौभरप्रयोग एव निधनाख्यद्वारसम्बन्धेन कृतार्थत्वान्न नित्यनैमित्तिकयोगेन श्रुतिकल्पकत्वापत्तिः ? न हि विधिवाक्ये वृष्ट्यर्थसौभरसम्बन्धिनिधनस्यैवोद्देश्यता सम्भवति, येन पाठं विनैव निधनसम्बन्धो लभ्येत, वृष्टिकामपदेन तु वृष्टिसम्बन्धिप्रकृतसौभरमात्रलक्षणेऽपि निधनलक्षणायामेव प्रमाणाभावात् न तदन्तस्योद्देश्यत्वम् , अतः पाठस्यैव निधनसम्बन्धप्रयोजकत्वात् नैमित्तिकप्रयोगे हीषाद्यप्राप्तिस्तदवस्थैवेति चेत्—न; वृष्टिसम्बन्धिसौभरमात्रस्यैवोद्देश्यत्वेऽपि हीषूविधेर्लघुभूतनियमफलकत्वलाभाय निधनस्थानकत्वलाभोपपत्तेः । एतद्विध्यभावे हि पाठेन निधन एवाऽनियमेन हीषादिः प्राप्येत, ततश्च विधिफलसामर्थ्यादेवाऽत्र निधनस्थानकत्वलाभः, न तु पाठात् , तस्य वस्तुतो नित्यनैमित्तिकप्रयोगमात्रविषयत्वात् । अत एव पाठेन सामान्यतो यत्किञ्चित्प्रयोगवृत्तिसौभरीयनिधनसम्बन्धितयैव कल्पिताऽपि श्रुतिः विशेषविधिना बाधादाहवनीयादिशास्त्रवद्वाद्यविषयातिरिक्तविषयाऽत्र-

तिष्ठत इति युक्तं तस्य नित्यनैमित्तिकप्रयोगमात्रविषयत्वम् । ईषादेश्च विधिफलसामर्थ्यात् निधनस्थानकत्वम् । नियमफलकत्वादेव च वृष्टिपदेन वृष्ट्यवच्छिन्नप्रकृतसौभरलक्षणाऽपि नाऽतीव दोषमावहति । इष्यत एव हि नियमविधिलाघवाद्यनुरोधेन "वार्त्रघ्नी पौर्णमास्याम्" इत्यादौ पौर्णमासीपदेन पौर्णमासीप्रधानसम्बन्ध्याज्यभागलक्षणा प्रयाजशेषाभिघारणादौ च द्वितीयाद्यर्थलक्षणा । वृष्ट्यवच्छिन्नसौभरत्वस्यैव च लक्ष्यतावच्छेदकत्वात् न युगपद्वृत्तिद्वयाविरोधः, नाऽपि विशिष्टोद्देशे वाक्यभेदः ।

वस्तुतस्तु न लक्षणाऽपि, विधिफलसामर्थ्यानुरोधेन प्रकरणावगतसौभराङ्गत्वानुरोधेन च वृष्ट्यर्थत्वस्यैव परम्परासम्बन्धेनाश्रयणात् । अतश्च यथैव "वासिष्ठानां नाराशंसो द्वितीयः प्रयाज" इत्यदौ नाराशंसमन्त्रस्य वासिष्ठार्थत्वं प्रमाणान्तरावगतद्वितीयप्रयाजाङ्गत्वनिर्वाहाय तत्रैव शाखान्तरप्राप्ततनूनपान्मन्त्रव्यावृत्तिफलकनियमलाभाय च वासिष्ठाभिलषितफलसाधनदर्शाद्यङ्गद्वितीयप्रयाजद्वारैव समाश्रयिष्यते, तथा प्रकृते सत्यपि चतुर्थीयोगे युक्तितौल्यात् परम्परासम्बन्धाङ्गीकरणे न दोष इति लक्षणाश्रयणेऽपि प्रमाणाभावः । अतो वृष्टौ ईषेव परम्परासम्बन्धेन कर्तव्य इति नियमफलकोऽयं विधिरिति सिद्धम् ।

अत एव परम्परासम्बन्धे प्रकृतसौभरप्रवेशात् कारीर्यादिजन्यवृष्टौ ईषभावेऽपि न विघातः । अत एव परम्परासम्बन्धघटकत्वेन विजातीयसौभरविशेष एव विवक्ष्यते न तु सौभरत्वावच्छिन्नानि सर्वाणि । शाखाभेदेन हि सौभराणि तत्तद्गीतिविशेषभिन्नान्येव समाम्नातानि । क्वचित् समानगीतिकान्यपि ।

अत एव गीतिभेदभिन्नेषु न शाखान्तराधिकरणन्यायप्रवृ-

त्तिरिति तत्र सौभराणां भेद एव । अतश्च विजातीये सौभरे हीषः पक्षेऽप्यप्राप्तत्वात्तस्य हीषादिनियमविषयत्वायोगेन न तस्य परम्परासम्बन्धघटकत्वम् । ततश्च वृष्टौ हीषेत्र विजातीय-सौभरद्वारा कुर्यादित्येतद्वाक्यार्थः फलितो भवति । एवञ्च वृष्ट्य-र्थसौभरविधावपि विजातीयानां सौभराणां विकल्पेन वृष्ट्यर्थं प्राप्तानां हीषूनिधनकस्यैव सौभरविशेषस्य वृष्टिसाधनता नाऽन्येषामित्यपि नियमः फलितो भवति । न ह्यन्यथा वृष्टौ हीषे-वेति नियमः कथमपि सम्पादयितुं शक्यः, निधनान्तरयुक्तेऽपि सौभरान्तरस्य तदर्थं क्रियमाणत्वात् । अतो हीषूनियमवि-धेः समानजातीयसौभरस्थले शाखान्तरायोगादिनिधनान्तर-व्यावृत्तिफलकत्वेऽपि हीषभिन्ननिधनयुक्तविजातीयसौभरस्थले तस्य वृष्ट्यर्थताव्यावृत्तिफलकत्वमपि कांस्यभोजिन्यायेन न विरुध्यते ।

अत एव यत्र न कांस्यभोजिन्यायः, यथा कारीर्या-दौ, तत्र न तस्य वृष्ट्यर्थता व्यावर्त्यते, वृष्ट्यर्थसौभरविधेस्तु हीषूनिधनकसौभरमात्रग्रहणेन चारितार्थ्यात् युक्ता विजातीय-सौभरव्यावृत्तिफलकनियमफलकतेति विशेषः । अतः सौभरा-न्तरस्याऽपि नित्यनैमित्तिकप्रयोगविषयत्वमेव, न तु काम्यप्रयोग-विषयत्वमित्यपि द्रष्टव्यम् । अतः सिद्धं हीषादिविधौ विधि-लाघवानुरोधेनैव न गुणफलसम्बन्धः, न वा तदर्थं गुणाम्ना-यनाभेद इति ।

प्रयोजनं--पूर्वपक्षे वृष्ट्यर्थं सर्वसौभरानुष्ठानेऽपि अन्नाद्या-द्यर्थमूर्गादिनिधानानुष्ठानं वृष्ट्यन्तरार्थं वा हीष एवाऽनुष्ठानम्, सिद्धान्ते तु नेत्यादि स्पष्टम् ।

सूत्रं तु—सर्वस्य सौभरस्योक्तकामत्वेन प्रत्यभिज्ञानात्

स्मिन् द्वारभूते सत्येव हीषादेः कामश्रुतिस्स्यात् । न चैवं सौभभरे हीषादेः पाठादेव प्राप्तत्वात् विधानानर्थक्यम्, दृष्टिसाधनीभूतविजातीयसौभरवृत्तिनिधनव्यवस्थार्थत्वेन पुनःश्रुतिसार्थक्यादित्येव व्याख्येयम् ॥

मीमांसाम्बुनिधिं प्रमथ्य सुहृदैर्न्यायोच्चयैर्निर्झरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥

श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या भेदाध्याये द्वितीयोऽङ्घ्रिः ॥

इति श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीरुद्रदेवसूनुखण्डदेवविरचितमीमांसाकौस्तुभे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

श्रियै नमः ।

# मीमांसाकौस्तुभः ।

## द्वितीयाध्यायस्य तृतीयः पादः । ( रथन्तरपादः )

### प्रथमं रथन्तराधिकरणम् (१) ॥

सू—गुणस्तु क्रतुसंयोगात्, कर्मान्तरं प्रयोजयेत् संयोगस्याशेषभूतत्वात् ॥ २—३—१. ॥ ( पू )

ज्योतिष्टोमे—"यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्" "यदि बृहत्सामा शुक्राग्रान्" "यदि जगत्सामा आग्रयणाग्रान्" इति श्रुतम् । तत्र किमाद्ययोः वाक्ययोः रथन्तरसामत्वे बृहत्सामत्वे च निमित्ते ज्योतिष्टोमापूर्वसाधनीभूतग्रहणानुवादेनैन्द्रवायवाग्रता शुक्राग्रता च यथायोगं विधीयेते, अथ वा रथन्तरसामत्वैन्द्रवायवाग्रत्वोभयविशिष्टकर्मान्तरं विधीयते इति सन्देहः ।

अत्र कृतिसाध्यत्वेनानिश्चितविधेयताकगुणप्रयोज्यभेदनिरूपणं पादार्थः । पूर्वपादे हि वाजिनादयो गुणाः पक्षद्वये निश्चितविधेयताका एव भेदकत्वेन (१)निर्धारिताः । अत्र तु रथन्तरसा-

१. विचारिताः,

मत्वं गुणः पूर्वपक्षे विधेयः, सिद्धान्ते त्वविधेय इत्यनिश्चितविधेयताकः । अतोऽस्ति पादसङ्गतिः । यथाचायं पादार्थः सर्वत्राप्यविरुद्धः तथा तत्तदधिकरणे निरूपयिष्यामः ।

अध्यायसङ्गतिस्तु स्पष्टा । अनन्तरा तु दृष्टेः (१)सौभरसम्बन्धित्वेन प्रमाणान्तरप्राप्तत्वात् युक्तं हीष्वनियमं प्रति निमित्तत्वम् । अत्र तु केवलरथन्तरसामकत्वस्य समासार्थभूतस्य ज्योतिष्टोमेऽप्राप्तत्वात् न ग्रहाग्रताया निमित्तत्वोपपत्तिरिति पूर्वपक्षोत्थानाद्युद्रष्टव्या ।

तत्र यद्यपि यदिशब्दः(२) "यदि राजन्यं वैश्यं वा याजये"दित्यादौ निमित्तत्वपरो दृष्टः, तथापि अत्र विशेषणस्य विशेष्यस्य विशिष्टस्य वा निमित्तत्वासम्भवात् न नैमित्तिको गुणः (३)प्रकृते विधातुं शक्यते । तथा हि—

न तावदत्र विशेषणस्य रथन्तरसामत्वादेः निमित्तत्वम्, बहुव्रीह्यन्तपदे प्रथमोपनिपातितस्य रथन्तरादिशब्दस्य अन्यपदार्थोपसर्जनीभूतस्वार्थप्रतिपादकत्वेन तस्मिन् यदिशब्दोपात्तनिमित्तत्वान्वयानुपपत्तेः, अन्यथा ऋद्धस्येति षष्ठ्यन्तस्यापि राजपुरुष इति पदोपात्ते राज्ञि अन्वयापत्तेः, रथन्तरसा-

---

१. तत्संज्ञकस्सामविशेषः ।

२. "यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य तास्संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्" इत्यत्र राजन्यवैश्यान्यतरकर्तृकत्वे निमित्ते भक्षोद्देशेन सोमस्थाने फलचमसविधिपरे वाक्ये यदिशब्दस्य यथा निमित्तत्वपरता तद्वदित्यर्थः । स्तिभिन्यः फलानि । अस्यैव फलचमस इति संज्ञा ।

३. प्रकृतक्रत्वङ्गतया ।

त्वस्य निमित्तत्वे (१)अग्रावपि विद्यमानस्य निमित्तत्वापत्तेश्च ।

नाप्यन्यपदार्थरूपस्य विशेष्यस्य; स हि सोमपदसमभिव्याहारात् सोमद्रव्यं भवेत्; तस्य तु नित्यत्वादेव यदिशब्दोपात्तकादाचित्कत्वव्याप्यनिमित्तत्वानुपपत्तिः । कथञ्चित् निमित्तत्वाङ्गीकारेऽपि वा ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः विकल्पापत्तिः; बहुव्रीह्यन्तपदवैयर्थ्यापत्तिश्च । एतेन सोमशब्देन स्वसाध्यं प्रकृतं यागं लक्षयित्वा तस्यैव निमित्तत्वाङ्गीकारः प्रत्युक्तः ।

नापि विशिष्टस्य, (२)हविरुभयत्ववद्वाक्यभेदापत्तेः । किञ्च वैशिष्ट्यपक्षेऽपि अन्यपदार्थो विशेषणम् ? विशेष्यं वा, ? (३) नाद्यः; व्युत्पत्तिभङ्गापत्तेः । न च विग्रहवेलायां अन्यपदार्थस्य षष्ठ्यन्तत्वेन विशेषणत्वात् रथन्तरस्य प्रथमान्तत्वेन विशेष्यत्वात् क्रतुविशिष्टस्य रथन्तरादेः यदिशब्दोपात्तनिमित्तत्वान्वयोपपत्तिरिति वाच्यम् । विग्रहवाक्यस्यावैदिकत्वेन तदुपात्तविशेषणविशेष्यभावेन निमित्तत्वान्वयानुपपत्तेः ।

किञ्च ग्रहाग्रतानिमित्तभूते रथन्तरे न तावत् ज्योतिष्टोमाख्यक्रतोः स्वायोगव्यावृत्त्या विशेषणत्वम्, प्रकरणादेव तत्सिद्धेः । नापि क्रत्वन्तरयोगव्यावृत्त्या; उपदेशेन तद्व्यावृत्तेः प्रमाणाभावेनैव सिद्धत्वात् । अतिदेशेन तद्व्यावृत्तिस्तु तत्रापि अनिष्टैव ।

न द्वितीयः; सामान्तराणामपि गायत्रादीनां स्तोत्रान्तर-

---

१. चयने "पृष्ठैरुपतिष्ठते" इत्यनेन उपस्थानाङ्गत्वेन पृष्ठविधानात् तदन्तर्गतत्वात् रथन्तरस्येति भावः ।

२. "यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्र उभयत्वविशिष्टस्य हविषः निमित्तत्वे यथा विशिष्टोद्देश्यत्वरूपो वाक्यभेदः तद्वदित्यर्थः ।

३. बहुव्रीहेरन्यपदार्थविशेष्यकबोधजनकत्वनियमभङ्गापत्तेरित्यर्थः ।

सम्बन्धितया ज्योतिष्टोमे विशिष्य विहितत्वेन तद्व्यावृत्त्या रथन्तरादेः विशेषणत्वानुपपत्तेः, यद्यपि च स्वसाध्यपृष्ठस्तोत्रे वैकल्पिकपृष्ठस्तोत्रान्तरसाधनबृहद्व्यावर्तकत्वं रथन्तरस्य, रथन्तरव्यावर्तकत्वं वा बृहतः सम्भवति तथापि समुच्चितस्तोत्रान्तरसाधनसामान्तरव्यावृत्त्यसम्भवात् सापेक्षस्य रथन्तरादेः अन्यपदार्थविशेषणत्वे सामर्थ्यभङ्गप्रसङ्गेन समासानुपपत्तेः वैशिष्ट्यानुपपत्तिः।

अत एव रथन्तरस्य पाक्षिकत्वादग्रताविशेषनिमित्तभूते क्रतौ स्वायोगव्यावृत्त्या विशेषणत्वमित्यप्यपास्तम्। शङ्खः पाण्डुर एवे" त्यादौ पाण्डुरत्वादेः विशेष्ये अवच्छेदकावच्छेदेनैव स्वायोगव्यावृत्त्या विशेषणत्वदर्शनेन प्रकृते तदसम्भवात्। न हि गायत्रादिसामान्तरकार्यावच्छिन्ने क्रतौ शक्यो रथन्तरायोगो व्यावर्तयितुम्।

न चैकदेशेऽपि तद्व्यावृत्त्या विशेषणत्वव्यवहारः; अव्याप्यवृत्तिनीलवति नीलो घटः इति व्यवहारादर्शनात्। अतश्च रथन्तरमेवास्य सामेति समासार्थावगमात् तस्य च (१)प्रकृते अप्राप्तत्वेन निमित्तत्वानुपपत्तेः विधेयत्वावगमात्, प्रकृते च ज्योतिष्टोमे केवलरथन्तरसामकत्वादेः विधाने ऐन्द्रवायवाग्रत्वादेरपि विधेयत्वाद्वाक्यभेदापत्तेः, वाक्यभेदाङ्गीकारेऽपि च केवलरथन्तरसाम्नो ज्योतिष्टोमे साक्षादनन्वयेन स्तोत्रसाधनीभूतमन्त्रद्वारैव निवेशस्य वाच्यत्वात् तेषु च तत्तत्सामान्तरस्य विशिष्याम्नानसिद्धत्वेन विषमशिष्टविकल्पायोगात् अनिविशमानस्य रथन्तरमात्रसामकत्वादेः गुणस्य भेदकत्वावगतेः गुणद्वयविशिष्टकर्मान्तरविधिरेवायम्। तत्राव्यक्तत्वात् अतिदेशप्राप्तसर्वस्तोत्रेषु रथन्तरसाम्नो निवेशः।

१, प्रकरणं

न च "उक्थ्यो वैरूपसामे" त्यादाविव पृष्ठस्तोत्र एव निवेशः शङ्क्यः । एतदधिकरणपूर्वपक्षवादिना एकदेशसंयोगानंगीकारेण (१)वैरूपादीनामपि सर्वस्तोत्रे निवेशस्य वाच्यत्वात् । अतएवैतदधिकरणसिद्धान्ते एकदेशसंयोगे स्थिते बहुव्रीह्यन्तत्वसादेश्येन वैरूपादीनां पृष्ठस्तोत्र एव निवेशो (२)दशमे वक्ष्यते ।

(३)न च विधायकस्य स्यादित्यादेः यदिशब्दोपहतविधिशक्तिकत्वात् कर्मान्तरविधायकत्वानुपपत्तिः । यदिशब्दस्याप्राप्तिद्योतकमात्रत्वेन प्रमाणान्तरेण प्राप्त्यसम्भवे(४)'यदाग्नेय' इत्यादिवदविवक्षितार्थत्वात् ।

अथ वा यदिशब्दपरित्यागात् वरमध्याहारः । तेन यागानुकूलप्रवृत्तिजनकीभूताया इच्छायाः विधिना आक्षिप्तायाः यदिशब्दोपात्तनिमित्तत्वान्वयार्थं वाचकीभूतरुचिधात्वध्याहारः क्रियते । अतश्च कर्मान्तरस्य प्रकरणात् ज्योतिष्टोमाङ्गस्य सोमवाक्यविहितयागसमप्रधानस्य वा पाक्षिकत्वसिद्ध्यर्थं रुचेर्निमित्तत्वकल्पनमिति न वैयर्थ्यमपि ।

अथ वा अध्याहारादपि निपातोपसर्गाणामनेकार्थत्वात् यदिशब्दस्य' यदि वेदाः प्रमाणम्' इति वदेवकारार्थत्वपरिकल्पनैव भवदेवोक्ता युक्ता समाश्रयितुम् । अतश्च प्रयाजादिवत् कर्मान्त-

---

१. वैरूपं तत्संज्ञकसामविशेषः ।

२. पू. मी. १०-६-६.

३. इत आरभ्य पूर्वपक्षसमाप्तिपर्यन्तो ग्रन्थः "यदि शब्दपरित्यागो रुच्यध्याहारकल्पना । व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङ्" ( तं. वा. पृ. ५८१. ) इति वार्तिकस्यैव विवरणरूपो द्रष्टव्यः ।

४. 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवती'त्यत्र सत्यपि यच्छब्दसमभिव्याहारे तदर्थस्याविवक्षामङ्गीकृत्याप्राप्तत्वात् यथा विधायकत्वमङ्गीक्रियते तद्वदित्यर्थः ।

रस्यापि नियमेनैव प्रयोगविधिना सङ्ग्रहात् यदिशब्दोऽप्याव-श्यकत्वानुवादः ।

वस्तुतस्तु-पक्षत्रयमपि आख्यातद्वयस्य भिन्नवाक्यतापत्तेः तद-ङ्गीकारेऽपि च केवलरथन्तरसामकत्वस्योत्पत्तिशिष्टसामान्तरविरो-धाभावेन प्रकृत एव ज्योतिष्टोमे निवेष्टुं शक्यतया कर्मान्तरा-नापादकत्वापत्तेरयुक्तम् । न च सामान्तराणां विशिष्याम्नात-त्वेन बलवत्त्वम् । एतस्यापि प्रधानाश्रितस्य विशिष्याम्नानावि-शेषेण ततो बलवत्त्वात् ।

अत एवं परिहर्तव्यम्-(१)"कामप्रवेदनेऽकच्चिति" इति स्मृत्या कच्चित्पदाप्रयोगे कामशब्दाभिधेयाया इच्छायाः अपि लिङ्लक्ष्यत्वस्य अनुशासनात् गृह्णीयादिति लिङा इच्छावगमेन यदिशब्दस्य च तत्र व्यवहितान्वयं कृत्वा, यदि ऐन्द्रवायवा-ग्रान् ग्रहान् ग्रहीतुमिच्छेत् तदा केवलरथन्तरसामानं क्रतुं कुर्वीतेति वाक्यार्थप्रतीतेरेकवाक्यत्वोपपत्तिः । अस्मिन् हि पक्षे स्यादिति लिङैव गुणद्वयविशिष्टयागविधानम् । गृह्णीयात् इति लिङा तु यदिशब्दतात्पर्यग्राहकसहकृतेनेच्छामात्रोपादानमिति न वाक्यभेदः । तत्प्रयोजनं च एकवाक्यतापादनद्वारा स्ववा-क्योपात्तकर्मान्तरप्रयुक्तत्वसूचनमुखेन तदङ्गत्वबोधनात् प्राकरणि-कज्योतिष्टोमाङ्गत्वव्यावृत्तिः । भिन्नवाक्यत्वे हि ग्रहाग्रतायाः कर्मान्तराङ्गत्वे प्रमाणाभावेन प्रकरणात् ज्योतिष्टोमाङ्गत्वमेव स्यात् ।

न च "यदि रथन्तरसामा सोमस्स्यात् सौभरेण स्तुवीते" ति रथन्तरसामकयागपुरस्कारेणाग्रेऽपि गुणविधानात् अवा-

---

१. पा. सू. ३-३-१५२.

न्तरप्रकरणाद् कर्मान्तराङ्गत्वोपपत्तिरिति न्यायसुधाकृदुक्तं शङ्क्यम् । सौभरविधेः बृहत्सामककर्मान्तरादिविधिव्यवहितत्वेन अतिरात्रसंस्थात्वान्तरप्रकरणस्थत्वेन च सन्देशाभिव्यञ्जकत्वाभावाद् । अतो युक्त एव स्याच्छब्दस्य विधायकत्वेऽपि यदिशब्दसंयोगः ।

नन्विदं "कामप्रवेदनेऽकच्चिति" इति सूत्रस्य इच्छायां लिङित्यर्थकत्वे भवेद् । तस्य तु कामप्रवेदने प्रकारान्तरेण गम्यमाने सर्वलकारापवादत्वेन लिङो विधानमित्येवंपरतया काशिकाकारेण व्याख्यानात् कामो मे भुञ्जीत भवान् इत्युदाहरणस्योक्तत्वात् कथं लिङ एवेच्छार्थकत्वमिति चेद् ?

कामप्रवेदने कर्तव्ये लिङ् इत्येव सूत्रार्थोपपत्तौ प्रकारान्तरेणेत्यस्याध्याहारे गौरवात् (१)"इच्छार्थेषु लिङ्लोटौ" इति सूत्रे महाभाष्यकारेण कामप्रवेदने चेत् इच्छार्थेभ्य उपपदेभ्यो गम्यमाने इत्येव व्याख्यातत्वेन विवक्षितार्थस्य तेनैव सिद्धौ 'कामप्रवेदन' इति सूत्रस्य वैयर्थ्यापत्तेश्च । अतः काशिकापूर्वकालीनैः शबरादिभिर्व्याख्यातत्वात् इच्छायामेव लिङ् इति सूत्रार्थः ।

यदपि पदमञ्जर्यादौ पौनरुक्त्यं परिहृतम्–यत्र अर्थः प्रकरणादिनापि कामप्रवेदनं गम्यते तत्र 'कामप्रवेदन' इति सूत्रम्, यत्र तु तद्वाचकशब्दप्रयोगः तत्रे'च्छार्थेष्वि'त्यस्य सूत्रस्य सार्थकत्वाल्लोडर्थकत्वम् । तत्र लोटा च लिङो बाधो माभूदिति लिङ्प्युक्त इति, तदप्यपास्तम् ; शबरादिप्रदर्शितव्याख्याने पौनरुक्त्यस्यैवाप्रसक्त्या-(२)वुक्तविधया तत्परिहारस्यानुक्तिसहत्वात । तस्मादिच्छायामपि लिङिष्ट इति युक्त एवोक्तविधया यदिशब्दः ।

अथ वा व्यवहितान्वयस्याप्यन्याय्यत्वात् (३)"हेतुहेतुमतो-

---

१. पा. सू. ३-३-१५७. २. उक्तविधपरिहाराभासस्य
३. पा. सू. ३-३-१५६.

ङिङि" ति स्मृत्या प्रयोजकापरपर्याये हेतौ, प्रयोज्यापरपर्याये हेतुमति च लिङो विधानात् यदिशब्दस्य च तदर्थतात्पर्यग्राहकत्वेन स्यादिति हेतौ लिङ्, गृह्णीयादिति विधौ। तेन कर्मान्तरहेतुको ग्रहाग्रताविशेषः कर्तव्य इति वाक्यार्थः। अस्मिंश्च पक्षे आर्थिकः कर्मान्तरविधिः। हेतुत्वाभिधानस्य च ज्योतिष्टोमाङ्गताव्यावृत्तिफलककर्मान्तराङ्गत्वसिद्धिरेव पूर्ववत् फलम्। अङ्गिविशेषकबोधस्य न्याय्यत्वात् गृह्णीयादिति वा हेतुमति लिङ्, स्यादिति च विधौ; तदा च ग्रहाग्रता(१)हेतुकं रथन्तरसामानं क्रतुं कुर्वीतेति वाक्यार्थः। हेतुमत्त्वाभिधानस्य च पूर्ववदेव प्रयोजनम्। अस्मिंश्च पक्षे यदिशब्दो यथास्थानास्थित एव एकस्याख्यातस्य विधायकतामपरस्य हेतुपदर्थकतां सूचयतीति न व्यवहितकल्पनापि। विशेष्यावगमोत्तरविशेषणावगमरूपाविमृष्टविधेयांशता तु पटोऽस्ति शुक्ल इतिवन्न दोषाय। तस्मात् यदिशब्दस्य (२)"यदि ब्राह्मणो यजेते"ति वत् विधिशक्तिविघातकत्वाविघातः।

सूत्रे तु अन्यपदार्थरूपक्रतुसंयोगे योऽगुणः केवलरथन्तरसामत्वादिरूपः स कर्मान्तरं प्रयोजयेत्; विशेषणसंयोगस्य विशेष्यावच्छेदेन वृत्तिस्वाभाव्यादिति व्याख्येयम्॥

( इति रथन्तराधिकरणपूर्वपक्षः )

---

१. प्रयोज्यताकं।

२. "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्" इत्यत्र यदि शब्दस्य यथा न विधिशक्तिप्रतिबन्धकत्वं तद्वदित्यर्थः। एतच्चाग्रिमाधिकरणे स्पष्टीभविष्यति।

( अथ सिद्धान्तः )

## सू—एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ १–३–२. ॥ ( सि )

न तावद्यदिशब्दोपात्तनिमित्तत्वं रथन्तरविशिष्टस्य क्रतोरुच्यमानमपि समासं भिनत्ति, बृहद्रथन्तरसाम्नपृष्ठयोः ज्योतिष्टोमे वैकल्पिकत्वेन स्वायोगव्यावृत्त्यापि विशेषणत्वसम्भवात् एकार्थीभावलक्षणसामर्थ्यविघातानुपपत्तेः । न च विशेष्यावच्छेदेनैव विशेषणेन स्वायोगो व्यावर्तनीयः इत्यपि नियमोऽस्ति । दण्डी पुरुष इत्यादौ व्यभिचारात् ।

किञ्च स्वावान्तरकार्यद्वारा सर्वेणापि विशेषणेन विशेष्यमवच्छेत्तव्यम् । अत एव व्याप्यवृत्तिताप्यवान्तरकार्य एव द्रष्टव्या । अस्ति च बृहद्रथन्तरयोः पृष्ठरूपावान्तरकार्ये सा । तत्तस्तद्द्वारा क्रत्वावच्छेदकावच्छेदेन सा अव्याहतैव । न हि कर्मान्तरत्वत्वादिनापि प्रोक्षणावघातादिष्वव्ययोगो व्यावर्तनीयः । अपि तु स्तोत्रादिरूपावान्तरकार्य एव । तत्र च प्रोक्षणादीनामिव स्तोत्रान्तराणामपि बृहद्रथन्तरकार्यत्वाभावात् तेष्वयोगव्यावृत्तावपि न क्षतिः । अतश्च पृष्ठस्तोत्रावच्छेदेनायोगव्यावृत्तेः सत्वात् व्याप्यवृत्तितया विशेषणत्वाविरोधः । किञ्चानयैव दिशा परस्परव्यावर्तकत्वादन्ययोगव्यावृत्त्यापि विशेषणत्वोपपत्तिः ।

किञ्चैवं यद्यपि बृहद्रथन्तरयोस्समुच्चयो भवेद् तथापि साम्नां तत्तद्वाक्य निरपेक्षसाधनतावगमेन समुच्चयेऽपि व्यामिश्रप्रवृत्तिसाधनत्वाभावात् नाग्नेयैन्द्रपीतादिवत् असामर्थ्यमिसेकेना-

पि विशेषणतोपपत्तिः । इष्यत एव हि डित्थडवित्थयोर्मातरि डित्थमातेति प्रयोगः, अनेकच्छन्दस्केऽपि च प्रातस्सवने गायत्रच्छन्दस इति प्रयोगः । अत एव रथन्तरसामेति व्यपदेशोपपत्तावपि यदिशब्दोपात्तनिमित्तत्वान्वयार्थं बृहद्रथन्तरयोः वैकल्पिकत्वोपन्यास इति द्रष्टव्यम् । तेन सिद्धं रथन्तरविशिष्टस्य क्रतोर्निमित्तत्वमिति ।

वस्तुतस्तु विशिष्टोद्देशे वाक्यभेदापत्तेः न क्रतुविशिष्टरथन्तरवदेव रथन्तरविशिष्टक्रतोरिह निमित्तत्वम् । न च(१) हविरार्तिन्यायेन उद्देश्यान्तर्गत्यङ्गीकारात् न वाक्यभेदापत्तिरिति भवदेवोक्तं शक्यम् । वक्ष्यमाणरीत्या रथन्तरस्यैव निमित्तत्वपर्यवसानोपपत्तौ क्रतोरपि तदन्तर्भावस्योभयत्वदप्रामाणिकत्वात् ।

किञ्च क्रतोरप्यन्तर्भावे प्रकृतत्वात् ज्योतिष्टोमे एवान्तर्भाव्येत, ततश्च ज्योतिष्टोमे निमित्ते प्रकृतापूर्वसाधनीभूतग्रहणाङ्गत्वेनाग्रता विधीयते । ततश्च विकृतौ तदपूर्वस्थानापन्नत्वात् अङ्गिताग्रच्छदकसद्भावेऽपि निमित्ताभावात् भेदनरहितायां विकृतौ तद्धर्मवत् नैवाग्रताविशेषः प्राप्येत । न हि निमित्तपदे अपूर्वसाधनलक्षणा निमित्तस्थानापत्तिर्वा वैकृतक्रतोरस्ति, येन तत्रैव निमित्तान्तर्भावश्शङ्क्येत । अतो विशिष्टस्य क्रतु-

---

१. "यस्याभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्र केवलाया आर्तेः सार्वदिकत्वेन निमित्तत्वासम्भवात् तद्विशेषणस्यापि हविषः उद्देश्यकुक्षौ प्रवेशमङ्गीकृत्य हविरार्तेरेवोद्देश्यत्वमङ्गीकृतं तद्वदत्रापि रथन्तरस्यापि उद्देश्यकोटौ प्रवेशमङ्गीकृत्य वाक्यभेदः परिह्रियतामित्यर्थः । यस्य यजमानस्य दर्शसम्बन्धि सायंकालिकं हविः दधिरूपं प्रातःकालिकं हविः पयोरूपं च नश्यति स ऐन्द्रं शरावपञ्चकपक्वौदनद्रव्यकं यागं कुर्यात् इति विषयवाक्यार्थः ।

मात्रस्य वा निमित्तत्वायोगात् रथन्तरस्यैव निमित्तत्वम् ।

यद्यपि च परोपसर्जनीभूते पदार्थान्तरेऽन्वयोऽव्युत्पन्नः तथापि शाब्दबोधे विशिष्ट एवान्वितस्यापि निमित्तत्वस्य विशेष्ये विशिष्टे वा कादाचित्कत्वाभावादिना बाधात् "सविशेषणे विधिनिषेधौ विशेषणे सङ्क्रामतो विशेष्यबाधे" इति न्यायेन 'स्वर्गी ध्वस्मो' 'लोहितोष्णीषा' इत्यादिवद्विशेषणीभूतेऽपि रथन्तरमात्रत्वे सङ्क्रमणं नानुपपन्नम् । इत एव चोद्देश्यस्थलेऽपि स्वर्गकामपदे विशेषणीभूतेऽपि स्वर्गे भाव्यतासङ्क्रमणम् ।

अस्तु वा एतादृशविषये तद्धितेन समस्तपदे रथन्तरविशेष्यत्वलक्षणा, तथापि उपक्रमस्थयदिशब्दत्यागापेक्षयाऽसौ न दोष एव । अतः रथन्तरमेव निमित्तम् । अन्यपदार्थविशेषणता तु प्रकरणलभ्यत्वादनुवादः । तत्प्रयोजनं च "वैरूपसामे" त्यादौ बहुव्रीहियुक्तत्वसादृश्येन पृष्ठस्तोत्रमात्रसाधनत्वलाभः, न तु सर्वस्तोत्रसाधनत्वम् । (१)कौत्सादिवद्वा पवमानमात्रसाधनत्वम् । रथन्तरमात्रनिमित्तत्वेऽपि च यदिशब्दोपात्तस्य निमित्तत्वस्य कादाचित्कत्वव्याप्यत्वात् कादाचित्कत्वस्य च बृहद्रथन्तरयोरन्योन्यविरोधप्रयुक्तत्वात् बृहद्विरोधिनो रथन्तरस्य, रथन्तरविरोधिनो वा बृहतः निमित्तता । अत एवान्योन्यविरोधित्वस्य निमित्तस्वभावलभ्यत्वात् न तद्विवक्षाकृतो वाक्यभेदोऽपि ।

विरोधिता च क्वचित् वैकल्पिकत्वात्, क्वचित् बाध-

---

१. कौत्सं भवति" (ता. ब्रा. १४-११-२५.) काण्वं भवति"वासिष्ठस्य जनित्रे भवतः, (ता. ब्रा. १४-११-२२.) क्रौञ्चानि भवन्ति ( ता. ब्रा. १९-३-८. ) इति विहितानां कौत्सादीनां साम्नां स्वसमसंख्याकप्राकृतसामबाधकत्वम् । तच्च पवमानस्तोत्र एवेत्युक्तं दशमे तद्वादित्यर्थः ।

कत्वात् । अतएवोभयत्रैव रथन्तरस्य निमित्तता । यथा प्रकृतौ वैकल्पिकत्वात् विकृतावपि च यत्र नैकतरनियमः । यत्र तु तन्नियमः तत्र बाधकत्वात् विरोधिता । यत्र तु द्विविधविरोधिताभावः तत्र सत्यपि रथन्तरादौ न तस्य निमित्तत्वम् । अत एव(१) संसवादौ बृहद्रथन्तरयोः समुच्चयेन सत्वे ऽपि विरोधित्वाभावाव न निमित्तता । यत्र वा विश्वजिदादौ 'पवमाने रथन्तरं, आर्भवे बृहद्' इत्यादिवचनाव स्तोत्रान्तरेऽपूर्वविधानेन प्रापकप्रमाणाभावादेवेतरबाधकतानुपपत्तेः न विरोधिता तत्रापि न निमित्तत्वम् । तस्माव बृहद्विरोधिरथन्तरसामत्वे रथन्तरविरोधिबृहत्सामत्वे वा निमित्ते ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः प्रकृतापूर्वसाधनीभूतग्रहोद्देशेन विधानमिति सिद्धम् । निमित्तफलयोश्च विजातीयोद्देश्यताकत्वाव(२)यावज्जीवादिवाक्यववउद्देश्यानेकत्वनिमित्तोऽपि न वाक्यभेदः । अतश्चैतद्वाक्यद्वयस्यापि निमित्तार्थत्वेनापि नैमित्तिकविधायकत्वोपपत्तेः भेदकप्रमाणाभावाव विशिष्टविधिगौरवापादककर्मान्तरविधायकत्वमन्याय्यमेव ।

नच बृहत्सामत्वे निमित्ते अग्राग्रशुक्रग्रहविधानोपपत्तावपि रथन्तरसामकत्वे(३) धाराग्रहेभ्यः पूर्वमैन्द्रवायवाग्रतायाः पाठादेव

---

१. संसवगोसवादयः सोमयागविशेषाः ।

२. "यावज्जीवमग्निहोत्रं जुहोति" इत्यादौ नित्यकर्मस्थले पापक्षयस्याप्युद्देश्यत्वाङ्गीकारावश्यम्भावेन तत्र निमित्तपापक्षययोरुभयोरप्युद्देश्यत्वेऽपि निमित्तस्यानीप्सितत्वेन पापक्षयस्य चेप्सितत्वेन ईप्सितानीप्सितरूपानेकोद्देश्यकत्वेऽपि यथा न वाक्यभेदः तद्वदित्यर्थः ।

३. "अणय्या धारया गृह्णाती" ति विधिना धारया गृहीतव्यतया विहिताः ग्रहाः धाराग्रहाः ।

प्राप्तत्वात्, अधाराग्रहैभ्यः पूर्वमैन्द्रवायवाग्रताविधेश्च(१) दशमे निषेत्स्यमानत्वात् तद्वाक्यं विधेयाभावेन कर्मान्तरविधायकत्वोपपत्तिरिति वाच्यम्। पाठेन सम्भवत्प्राप्तिकाया अपि ऐन्द्रवायवाग्रताया निमित्तसम्बन्धेन विधानोपपत्तेः। तत्प्रयोजनं च पाठस्य क्रमनियामकताप्रतिबन्धः। निमित्तं हि स्वसत्त्वे नैमित्तिकावश्यकर्तव्यतां बोधयति। सा च यदि प्रमाणान्तरेण प्राप्ता भवेत् तदा स्वाभावे नैमित्तिकाभावं बोधयतीति युक्तः क्रमनियामकताप्रतिबन्धः। तत्फलमपि च पृष्ठस्तोत्रप्राप्तबैरूपसामवति क्रतौ रथन्तराभावात् क्रमनियमः। प्रकृतावपि यथाशक्त्युपबन्धेन रथन्तरादिराहित्ये सः। तत्सिद्धं वाक्यद्वयेऽपि निमित्तार्थं श्रवणमिति।

आग्रयणाग्रतावाक्यमपि प्रकृतौ विकृतौ वा जगत्संज्ञकसामाभावात् यत्र(२) विषुवति जगत्यामृचि उत्पन्नं महादिवाकीर्त्यं साम तत्र वाक्येन प्रकरणं बाधित्वा आग्रयणाग्रताविधानपरमिति दशमे वक्ष्यमाणत्वात् न कर्मान्तरविधानपरम्। येन तत्साहचर्यादनयोरपि कर्मान्तरविधानमाशङ्क्येत। अत एव तत्रत्यो यदिशब्दोऽपि जगत्साम्नः पाक्षिकत्वाभावेन निमित्तपरत्वासंभवात् यत्रेत्यर्थस्तन्नुत्कर्षपर एव—यत्र जगत्साम तत्राग्रयणाग्रानिति। बहुव्रीह्यन्तं च विषुवल्लक्षकमिति न विशिष्टोद्देशे वाक्यभेदः।

अथ वा अन्यपदार्थस्य अवच्छेदकान्तराभावात् जगत्सामत्वमेव ग्रहत्ववदुद्देश्यतावच्छेदकत्वेन विवक्षितम्। पूर्ववाक्ययोस्तु प्रकृतपरामर्शिसोमपदेन ज्योतिष्टोमस्यैवान्यपदार्थावच्छेदकत्वप्रतीतेः रथन्तरसामत्वस्यापि निमित्तविशेषणत्वे युक्तो वाक्यभेदः।

---

१. १०-५-१७. उपांश्वन्तर्यामौ अधाराग्रहौ।

२. गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके(३६१)यो मध्यमो दिवसः स विषुवान्।

वस्तुतस्तु ईदृशस्थले "अश्वाभिधानी" मितिवत् विशिष्टस्य व्युत्पन्नत्वाद्वाक्यभेदाभावेऽपि विशेष्यस्य निमित्तान्तर्गत्याशङ्का- प्रयोजनाभावादेव निराकर्तव्या । तस्मात् रथन्तरादिनिमित्तकग्र- हाग्रताविशेष एव ज्योतिष्टोमाङ्गत्वेन विधीयत इति सिद्धम् ।

प्रयोजनं पूर्वपक्षे कर्मान्तरस्य सोमयागाङ्गस्य समप्रधानस्य वा रथन्तरमात्रसामकस्य पूर्वयागेन सह ग्रहाग्रतायां विशेषाभा- वेन तन्त्रानुष्ठानेऽपि रथन्तरमात्रसामकत्वात् स्तोत्राण्यावर्तनीया- नि । बृहत्सामकस्य तु ग्रहाग्रतायामपि विशेषसत्वेन सुत्यान्तर- स्यैवानुष्ठानम् । सिद्धान्ते नेति स्पष्टम् ।

सूत्रं तु एकस्यैव ज्योतिष्टोमस्य रथन्तरादितत्तद्रूपलि- ङ्गभेदेन ग्रहाग्रताविधिप्रयोजनार्थमुच्चारणं क्रियते । यतः पूर्व- कर्मनिवेशिगुणवाक्यत्वादेतयोः कर्मान्तरविधायित्वानुपपत्तेः एक- त्वं ज्योतिष्टोमाभेद एवात्र प्रतीयत इति व्याख्येयम् ॥

इति प्रथमं रथन्तराधिकरणम् ॥

## अथ द्वितीयमवेष्ट्यधिकरणम् (२)

### सू-अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्येत॥२-३-३॥(सि)

( विषयसंशयौ )

राजसूये(१)अवेष्टिनामकानि पञ्च कर्माणि समाम्नाता- नि(२)आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेका- अवेष्टि-

१. दिक्सम्बन्धिधनामुन्मादायतृणामवजननहेतुत्वात् दिति कर्मनामधेयम् । २. तै. सं. १-८-१९.

दशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा" इत्येवैमादिभिः । अत्र गुणवाक्ये एकावेष्टिसंज्ञासंयोगेऽपि साकमेधवदुत्पत्तिवाक्ये प्रत्येकदक्षिणाम्नानाद्दक्षिणायाश्च कर्त्रानत्यर्थत्वात् तेन कर्तृत्वभेदप्रतीतेः तद्भेदेन च प्रयोगभेदावगतेः एकैकं कर्म अन्वाधानादिब्राह्मणतर्पणान्ताङ्गविशिष्टं भेदेनानुष्ठेयमित्येकादशे वक्ष्यमाणत्वात् अविवादम् । तदवान्तरप्रकरणे च "यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत, यदि राजन्यः ऐन्द्रं, यदि वैश्यो वैश्वदेव" मित्येवं समाम्नातम् । तत्रापि किं पूर्ववदेव ब्राह्मणादिग्रहणं निमित्तार्थमुत विधानार्थमिति संशयः ।

## ( सङ्गतिः )

ब्राह्मणत्वादेः गुणस्यानिश्चितविधेयताकत्वात कृतिसाध्यत्वाभावाच्च तत्प्रयोज्यभेदनिरूपणेन पादाध्यायसङ्गतिः स्पष्टा । गुणादीनां विध्यापादनद्वारा भेदकत्वात कर्त्रादीनां च गुणानां भावनोत्पत्तावनन्वयित्वेन तद्विध्यापादनद्वारा तद्भेदकत्वाभावेऽपि प्रयोगान्वयित्वात् तद्विध्यापादनद्वारा भावनाप्रयोगभेदकत्वनिरूपणादध्यायसङ्गतिः । अनन्तरा त्वापवादिकी ।

## ( पूर्वपक्षः )

तत्र पूर्ववदेव यदिशब्दसंयोगात विशिष्टविधिगौरवाभावाच्च ब्राह्मणत्वादि कर्तृतासम्बन्धेन निमित्तम । न च क्षत्रियमात्रकर्तृकराजसूयान्तर्गतावेष्टौ ब्राह्मणवैश्ययोः तेन संबन्धेन प्राप्त्यभावात, क्षत्रियस्य च नित्यप्राप्तत्वेन निमित्तत्वानुपपत्तेः कथं पूर्वाधिकरणन्यायविषयत्वमिति वाच्यम । राजसूयाधिकारवाक्यस्थराजपदस्य क्षत्रियमात्रवाचित्वाभावेन अस्य तन्मात्रकर्तृक-

त्वासिद्धेः । तथा हि—

आर्यावर्तानार्यावर्तसाधारण्येन अविगीतसार्वलौकिकप्रसिद्ध्या राजशब्दो मनुष्यमात्रवृत्त्यन्याप्रेरितप्रजापालनकर्तृत्वे शक्तः चोरादिशब्दा इव परस्वापहरणकर्तृत्वे । अत्र राज(१)पुरुषे राजशब्दप्रयोगाभावात् अन्याप्रेरितेति विशेषणम् ।

न चैवं सखण्डोपाधेः शक्यतावच्छेदकत्वकल्पने गौरवापत्तेः द्रविडानामपालयितर्यपि क्षत्रिये राजशब्दप्रयोगात् जातिवाचित्वमेव लाघवाद्युक्तमिति वाच्यम् । द्रविडानां प्रसन्नदेशनिवासित्वेन म्लेच्छदेशस्थत्वात् तत्प्रसिद्धेरार्यावर्तसकलजनप्रसिद्धितो दौर्बल्येन पीलुशब्द इव राजशब्दे शक्तिग्राहकत्वानुपपत्तेः । न हि शक्तिग्राहकप्रमाणगते प्राबल्य एव निर्णायके सति लाघवस्य शक्तिनिर्णायकत्वं शक्यते वक्तुम्, लाघवस्य प्रमाणानुग्राहकत्वेन संदेह एव निर्णायकत्वात् । अन्यथा आश्वलशब्दस्य क्लृप्तावयवशक्त्यैव विशिष्टार्थबोधकत्वोपपत्तौ प्राबल्यस्यापि शक्तिग्राहकत्वानुपपत्तेः । अत एव न बर्हिराज्यादिशब्दतुल्यत्वम् । तत्र जातिं विहाय क्वचिदप्यप्रयोगेण लाघवस्य नियामकत्वोपपत्तेः । प्रकृते तु जातिव्यभिचारेण प्रबलप्रमाणप्रमितेनोपाधिव्यभिचारस्य दुर्बलप्रमाणप्रमितस्य बाधात् न तस्य जाति(२)वाचकनिर्णायकत्वोपपत्तिः ।

ननु—स्वरूपेण दुर्बलस्यापि व्याकरणादेस्स्मृत्युपष्टम्भत्वेन प्राबल्योपपत्तिः; तथा हि—तस्य कर्मण्यर्थे राजशब्दात् ब्राह्मणादिगणपठितात् (३)ष्यञ्प्रत्ययं पुरोहितादिगणपठिताद्वा यक्प्रत्ययं (४)"पत्यन्तपुरोहितादिभ्यो यक्" इति सूत्रेण स्मरन्ति पा-

---

१. राजमनुष्ये २. वाचित्व

३. गुणवचनब्राह्मणादिभ्यः कर्मणि च (पा. सू. ५-१-१२४) इति सूत्रविहितमित्यर्थः । ४. पा. सू. ५-१-१२८

णिन्यादयः । ततश्च राज्ञः कर्म राज्यमित्येवं प्रजापालने राजकर्मणि राज्यशब्दव्युत्पत्तेः राजशब्दस्य च ब्राह्मणादिशब्दवत् प्रजापालनकारिवाचित्वाव्युत्पत्तेः सिद्धवन्निर्देशेन जातिवाचितावसीयते । तथा राजन्यशब्दस्य क्षत्रियमात्रवचनत्वेन निस्सन्दिग्धस्य "(१)राजश्वशुराद्यत्" इति सूत्रेण तस्यापत्यमित्यस्मिन्नर्थे यत्प्रत्ययविधानेन राजशब्दप्रकृतिकत्वान्वाख्यानादपि क्षत्रियापत्यं क्षत्रिय इतिवत् राजशब्दस्यापि जातिवाचित्वमवसीयते ।

तथा मन्वादयोऽपि क्षत्रियस्यैव प्रजापालनं परमो धर्मः, (२)"राजा सर्वस्येष्टे ब्राह्मणवर्ज" मित्याद्युपदिशन्तः राजपुरस्कारेण प्रजापालनविधानात् राजशब्दस्य पूर्वप्रसिद्ध्यपेक्षायां क्षत्रियमात्रपुरस्कारेण तद्विधानाद्राजशब्दस्य क्षत्रियमात्रवाचितामनुमन्यन्ते । अतः स्मृत्युपष्टम्भस्य दुर्बलस्यापि प्रमाणस्य शक्तिग्राहकत्वोपपत्तिरिति चेत्—

न; प्रबलस्यापि प्रमाणस्य (३)"न राज्ञः प्रतिगृह्णीयात्(४)न राजन्यप्रसूतितः (५)"न शूद्रराज्ये निवसेदि" त्यादिस्मृत्युपष्टम्भत्वाविशेषेण शक्तिग्राहकत्वोपपत्तेः ।

किञ्च न व्याकरणादिस्मृतिः शक्तिग्रहे प्रमाणम्, साधुत्वादिकथनमात्रपरत्वात् । अथापि प्रमाणं स्यात् तथापि न तया पालनकारिवाचित्वं व्यावर्तितम् । तत्सत्वेऽपि राज्यशब्दस्य

१. पा. सू. ४-१-१३७ २. गौ. ध. ११-१. ३. म. स्मृ. ४-८४.
४. अराजन्यप्रसूतितः इतीदानीं मुद्रितेषु मनुस्मृतिपुस्तकेषूपलभ्यते पाठो न्यायसुधायां प्रभावल्यां च । परन्तु कौस्तुभ सर्वत्राप्यादर्शपुस्तकेषु "न राजन्यप्रसूतितः" इत्यत्रोपलभ्यत इति स एव निवेशितः । ५. म. स्मृ. ४-६१.

त्वकर्मत्वाचित्त्वोपपत्तेः । नचैनावता राजशब्दव्युत्पत्तिग्रहसापेक्षत्वम् । राजशब्दव्युत्पत्तिग्रहस्य तदभावेऽपि पालनत्वेन बुद्धस्यैव तस्य कर्तृतावच्छेदकत्वोपपत्तेः । राज्यशब्द एव परमन्वयवार्थप्रसभिन्नःनात् चौर्यशब्दवत् पालनत्वावच्छिन्नपालनकारिकर्मणि यौगिको रूढो वा, नत्वेतावतेतरेतराश्रयत्वम् । राजन्यशब्दान्वाख्याने तु कात्यायनेनैव राज्ञोऽपत्ये जातिग्रहणमिति परिसंख्यानात् राजन्यशब्दस्य सामान्यतः पालनकार्यपत्यवाचित्वेन प्रसक्तस्य पङ्कजादिशब्दवत् क्षत्रियत्वसमानाधिकरणस्यैव तस्य वाच्यत्वनियमकरणेन शुद्धराजपदस्य पालनकारिवाचित्वाभ्यनुज्ञानात् विपरीतसाधनत्वम् ।

न च जातिपदस्य मनुष्यत्वादिजातिमात्रेणाप्युपपत्तेः क्षत्रियत्वग्रहण एव प्रमाणाभावः । विधानसामर्थ्यादेव मनुष्यत्वप्राप्तेः मनुष्यत्वग्रहणासम्भवेन राजन्यशब्दस्य क्षत्रियमात्रप्रयोगेण च क्षत्रियत्वग्रहणोपपत्तेः । मन्वादिस्मृतेस्तु क्षत्रियमात्रोद्देशेन पालनावश्यकताविधायकत्वेऽपि रागादिना ब्राह्मणादावपि पालयितृत्वसम्भवात् नोपष्टम्भकता । न हि विहितपालनकारित्वं राजपदशक्यतावच्छेदकं, गौरवापत्तेः प्रमाणाभावाच्च ।

किञ्च आर्यावर्तप्रयोग एव परं "यदि ब्राह्मणो यजेत" इत्यादिवाक्यस्थयदिशब्देन निमित्तत्ववाचिना पाक्षिकप्राप्तिमपेक्षमाणेन क्षत्रियमात्रवचनत्वे तदनुपपत्तेः राजशब्दस्य पालयितृवाचित्वमाक्षिपता उपष्टब्धः । अतो राजशब्दस्य क्षत्रियमात्रवचनत्वाभावात् अपालयितृव्यावृत्तिमात्रफलकस्य पालयित्रधिकारमात्रपरत्वावगतेः आहिताग्नित्वादिरूपाधिकारिविशेषणेन शूद्रादिव्यावृत्तावपि ब्राह्मणादिव्यावृत्तौ प्रमाणाभावात् राजसूयस्य पालयितृत्रैवर्णिकाधिकारिकत्वावगतेः तदन्तर्गतायामपि अवेष्टौ

ब्राह्मणादेः प्रापकत्वात् निमित्तत्वोपपत्तिः । तन्नैमित्तिकश्च बार्हस्पत्यादिमध्यनिधानपूर्वकप्रत्याहुत्यभिघारणविशिष्टः प्रयोगः, न त्वभिघारणमात्रं, मध्यनिधानविशिष्टाभिघारणस्य पञ्चहविष्कैकेष्टिप्रयोगं विना(१)नुपपद्यमानस्य एकैकहविष्केष्टिप्रयोगेष्वनिवेशात् ।

अत एवाभिघारणस्य कर्मोत्पत्त्यन्वयिनोऽपि न कर्मान्तराक्षेपकत्वम् । तथात्वे तस्य कर्मान्तरस्य दर्शपूर्णमासप्रकृतिकत्वापत्त्या प्रकृतहविर्मध्यनिधानरूपविशेषणानुपपत्तेः । अतो मध्यनिधानरूपविशेषणसामर्थ्यात् अभिघारणस्याप्यवेष्टिप्रयोगान्तराक्षेपकत्वमेव ।

नचैवं पूर्वपक्षसिद्धान्तयोरुभयोरपि प्रयोगान्तरत्वे भेदाभेदचिन्ताभावाल्लक्षणासङ्गतिः । ब्राह्मणादिरूपगुणस्य वाक्यभेदापादनविधया भेदकत्वविचारेण सङ्गत्युपपत्तेः । तत्प्रयोजनञ्च राजसूयात् बहिरपि ब्राह्मणादिकर्तृकावेष्टिमात्रप्रयोगसिद्धिः । ब्राह्मणादिश्रवणस्य निमित्तार्थत्वे हि राजसूयान्तर्गतोऽपि नैमित्तिकः पञ्चहविष्कैकेष्टिप्रयोगस्स्यात्, प्रापकत्वपक्षे तु बहिरेवेत्यस्ति प्रयोजनम् । अत एव पञ्चेष्टिप्रयोगा अपि (२)बार्हद्गिरादिवदनुलोमादिविषयत्वेन व्यवस्थापनीयाः ।

अत एव राजसूयान्तर्गतप्रयोगाणां राजसूयाधिकारविधिना स्वाराज्यफलकत्वावगमेऽपि "एतयान्नाद्यकामं याजये" दित्यधिकारान्तरविधिना नित्यनैमित्तिकानां अवेष्टिमात्रप्रयोगाणां अ-

---

१ अनुपपत्तेः तस्य ।

२ "बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य" इति द्वादशाहे श्रु(त्)ानां बार्हद्गिरादीनां सत्रात्मके द्वादशाहे ब्राह्मणेतरस्य प्राप्त्यभावात् यथा अहीनविषयतया व्यवस्था क्रियते, तद्वत् प्रत्येकप्रयोगाः पञ्चानुलोमविषयतया व्यवस्थापनीया इत्यर्थः ।

न्नाद्यरूपफलसम्बन्धस्याप्यवगमात् युगपत्प्रयोगे च योगसिद्ध्यधिकरणन्यायेन अनेकफलजननायोगात् राजसूयाद्बहिरपि तत्तत्प्रयोगाणामन्नाद्यार्थमनुष्ठानं वेदितव्यम् । न त्वेतावता अन्नाद्यवाक्येऽपि प्रयोगान्तरविधिः । तस्य लाघवेन फलसम्बन्धमात्रपरत्वोपपत्तौ प्रयोगान्तरविधायित्वे प्रमाणाभावात् । अत एव तस्यैव प्रयोगस्य बहिर्व्यक्तिभेदमात्रं, न तु वैजात्यम् । तस्मात् ब्राह्मणत्वादिनिमित्ते स्वाराज्यार्थं अन्नाद्यार्थं वा मध्येनिधानपूर्वकाभिघारणविशिष्टावेष्टिप्रयोग एव तत्तद्वाक्ये विधीयत इति सिद्धं ब्राह्मणश्रवणस्य निमित्तार्थत्वात् अभेदकत्वमिति प्राप्ते—

( अथ सिद्धान्तः )

अभिधीयते—नैतानि निमित्तार्थानि, अप्राप्तत्वात् ब्राह्मणादीनां राजसूये । तथा हि—न राजशब्दः प्रजापालनक्रियाकर्तृवाची द्रविडानामपालयत्स्वपि क्षत्रिये राजशब्दप्रयोगेण पालनस्य बहिराज्यशब्देषु संस्कारस्येव व्यभिचारात् । न चार्यावर्तसकलजनानां पालयितरि ब्राह्मणादावपि प्रयोगेण बलीयसा जातेरपि व्यभिचारावगमात् पालनकारित्वाचित्वनिश्चयः । बलीयसोऽपि बलवत्प्रमाणानुगृहीतेन द्रविडप्रयोगेण बाधात् । तथा हि-

अस्तु तावत् स्मृतेरनुग्राहकत्वम् , श्रुतिरेव सकलप्रमाणमूर्धन्यानुग्राहिका समस्ति । अभिषेको हि पालनाधिकारसंपत्तये क्षत्रियपुरस्कारेण समाम्नातः । तद्विधौ च 'राजानमभिषेचयेत्' इत्यत्र राजोद्देशेनाभिषेको विधीयते । उद्देश्यस्य च पूर्वप्रसिद्धिसापेक्षत्वात् न पालनकर्तृत्ववाचित्वे सा सम्भवति । न ह्यभिषेकात् पूर्वं पालयितृत्वमस्ति । अभिषेकस्य पालनाधिकारसम्पादकत्वेनैव विधेयत्वात् ।

न चाभिषेकात् पूर्वं पालयितृत्वासम्भवेऽपि तद्योग्यत्वमादायैव राजशब्दप्रसिध्युपपत्तिः । तत्र किं योग्यत्वमात्रे तत्त्व-राजशब्दस्य लक्षणा ? शक्तिर्वा ? नाद्यः ; मनुष्यमात्रस्य प्रजापालनयोग्यत्वेन पालनयोग्यत्वस्य पालनाधिकारसम्पादकाभिषेकविधिसामर्थ्यलभ्यत्वेन च राजपदवैयर्थ्यापत्तेः ।

अत एव न द्वितीयोऽपि । राजसूयाधिकारवाक्यस्थराजपदस्यापि व्यावर्त्याभावेनास्मिन् पक्षे वैयर्थ्यापत्तेः ।

न च क्रौर्यशौर्यातिशयवत्त्वस्य पालनयोग्यतावच्छेदकत्वाङ्गीकारात् तद्रहितव्यावृत्त्यापि राजपदसार्थक्योपपत्तिरिति वाच्यम् । क्रौर्यशौर्याद्यतिशयवति पालनयोग्ये ब्राह्मणादौ राजपदप्रयोगाभावेन तादृशयोग्यतावच्छेदकावच्छिन्ने राजपदशक्त्यङ्गीकारे शक्तिग्राहकप्रमाणाभावात् । अतो योग्यतामादाय पालनमादाय वा राजपदस्याभिषेकविधिस्थस्य पूर्वप्रसिध्यनुपपत्तेः द्रविडप्रयोगोन्नीतं क्षत्रियवाचित्वमेवाभिषेकविधिरनुमन्यते ।

एतेन पूर्वप्रसिध्यभावेऽपि "यूपं छिनत्ती" तिवत् अभिषेकजन्यादृष्टत्वस्यैव राजपदशक्यतावच्छेदकस्य तद्विधिप्रवृत्त्युत्तरकालं तद्बलेनैव बोधोपपत्तेः न द्रविडप्रयोगोन्नीतक्षत्रियवाचित्वसम्भव इत्यपास्तम् । "व्रीहीनवहन्ती" त्यादिवत् कथञ्चिदपि पूर्वप्रसिद्धिसम्भवे अभिषेकपरस्य विधेः गुरुभूतशक्यतावच्छेदकत्वविषयशक्तिग्राहकत्वकल्पने गौरवापत्तेः । अभिषेकस्य ब्राह्मणादावविहितत्वेन कृतेऽपि अभिषेके तज्जन्यादृष्टवत्त्वे प्रमाणाभावात् । ब्राह्मणादेः राजसूयाधिकाराभावप्रसङ्गेन भवदिष्टसिध्यभावाच्च । अत एव न "राजेत्येतानाभिषिक्तानाचक्षते" इत्यादिलिङ्गान्यपि अभिषेकजन्यादृष्टवत्त्वे राजपदस्य शक्तिरित्येवंपराणि । शक्यतावच्छेदके गौरवात् । अपि तु निरूढलक्षणापराणि । तत्प-

प्रयोजनञ्च राजसूये प्रजापालनादिविधौ अभिषिक्तक्षत्रियपरत्व-सिद्धिः ।

अत एव अभिषिक्तक्षत्रियलक्षकराजप्रातिपदिकघटितराजन्य-पदस्यापि तल्लक्षकत्वप्रसक्तौ परिसंख्यानार्थं 'राज्ञोपत्ये जातिग्रहण'मिति वार्तिकम् । तेन राजन्यपदस्य नाभिषिक्ते निरूढलक्षणेत्यपि सिध्यति । अतः श्रुत्युपष्टम्भद्राविडप्रयोगेणैव लाघवतर्कसहकृतेन क्षत्रियवाचित्वसिद्धिः ।

आर्यावर्तप्रयोगस्तु राजकार्यपालनकारित्वात् गौणः । एवञ्च व्याकरणादिरपि न चौर्यादिशब्दवत् पालनकारिकर्मणि राज्य-शब्दः साधुरित्येवंपरत्वेन व्याख्येयः, अपि तु क्षत्रियकर्मणीत्येवंपरत्वेनैवेति द्रष्टव्यम् । यद्दिशब्दस्तु निपातत्वात् पूर्वाधिकरणोक्तरीत्या लिङः हेतुमद्भावादिपरत्वतात्पर्यग्राहकतयापि व्याख्यायमानो न दुष्यति इति ब्राह्मणादीनां राजसूये प्राप्त्यभावात् निमित्तार्थत्वानुपपत्तेः युक्तैव विधेयब्राह्मणादिरूपगुणवशात् प्रयोगभेदसिद्धिः । यथैव हि मध्येनिधानविशिष्टाभिघारणस्य पूर्वप्रयोगेषु पूर्वपक्षयुक्तरीत्याऽनिविशमानत्वात् प्रयोगभेदकत्वं, तथैव ब्राह्मणत्वादेः निर्ज्ञातक्षत्रियमात्रकर्तृकावेष्टिप्रयोगेष्वनिवेशात् वाक्यभेदापादकत्वाच्च प्रयोगभेदकत्वं युक्तमेव । अतो ब्राह्मणादिसकलविशेषणविशिष्ट एकप्रयोगो विधीयते ।

वार्तिककारीयकर्मान्तरविधिपक्षस्तु वाजिनादिवदुत्पत्त्यन्वयिगुणाभावात् प्रौढिवादमात्रम् । योऽप्यभिघारलक्षणो गुणः सोऽपि मध्येनिधानरूपविशेषणसामर्थ्यात् प्रयोगाक्षेपक एव । कर्मान्तरविधित्वे हि तस्य दर्शपूर्णमासविकारत्वापत्तेः कथञ्चिद्वा प्रकृतहविर्विकारत्वेऽपि एकविकारत्वापत्तेः अन्यहविःप्राप्त्यभावेन मध्येनिधानानुपपत्तिः । अतः प्रयोगान्तरमेव विधीयते । तस्य च धर्मि-

ग्राहकप्रमाणेनैव राजसूयबहिर्भावसिद्धिः ।

अत एव ब्राह्मणादिश्रवणानवच्छिन्ना अवेष्टिप्रयोगा एव राजसूयमहाप्रयोगान्तर्गता इति वेदितव्यम् । अत एव च बहिरनुष्ठीयमानपञ्चहविष्कैकेष्टिप्रयोगस्य फलापेक्षायां अपेक्षितविधानन्यायेन "एतया अन्नाद्यकामं याजये" दित्यनेन फलसम्बन्धः क्रियते इत्येकैकहविःप्रयोगेभ्यो नान्नाद्योत्पत्तिः, अपि तु राजसूयमहाप्रयोगान्तर्गतेभ्यः तेभ्यः स्वाराज्योत्पत्तिरेव । अत एव प्रकृतपरामर्शैतच्छब्दनिर्दिष्टावेष्टिमात्रपुरस्कारेणान्नाद्याम्नानात् निरवकाशान्नाद्यावरुद्धावेष्टिर्निराकाङ्क्षत्वात् न तद्व्यतिरिक्तविषयेऽपि सावकाशं स्वाराज्यं गृह्णातीत्यपास्तम् । अन्नाद्यस्यापि ब्राह्मणादिकर्तृकप्रयोगे सावकाशत्वात् । अतश्च राजसूयप्रकरणपाठसार्थक्यार्थं एकैकहविष्केष्टिप्रयोगाः स्वाराज्यफलका एव । न च विनिगमनाविरहः, ब्राह्मणादिसम्बन्धस्यैव स्वाराज्यप्रयोगे असम्बध्यमानस्य नियामकत्वात् ।

किञ्च यद्यप्यत्र प्रयोगभेदो न स्यात् तथापि निरवकाशेनापि फलेनावरुद्धा अवेष्टिः सावकाशेनापि फलेन गृह्यत एव । न च वाजिनो(१)पांशुत्वादिन्यायः । तत्र हि वाजिनोपांशुत्वादेः गुणभूतत्वादामिक्षायागदीक्षणीयादावुत्पत्तिशिष्टनिरवकाशगुणावरुद्धे आकाङ्क्षोत्थापनासम्भवात् युक्तो बाधः, प्रकृते तु सावकाशस्यापि प्रधानत्वात् फलस्याकाङ्क्षोत्थापकत्वोपपत्तेः न बाधो युक्तः । अत एव उत्पत्तिशिष्टनिरवकाशपशुरूपफलावरुद्धस्यापि

१ उपांशुत्वन्याय इति । "तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति" इति वाक्यविहितस्योपांशुस्वरस्य यज्ञभागसम्बन्धिनः यथा "यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात्" इति दीक्षणीयामात्रोद्देशेन विशेषविहितेन कामस्वरेण बाधः तथैवात्रापि बाधो भवत्विर्थः ।

उद्भिदादेः(१)विविदिषाफलेन आकाङ्क्षोत्थापनम् ।

नचैवं श्रुत्या गार्हपत्याङ्गत्वेन प्रमितस्यापि मन्त्रस्य आकाङ्क्षोत्थापनेन लिङ्गादिन्द्राङ्गत्वापत्तिः, लिङ्गोन्नीतश्रुतेः कल्पत्वेन तत्र स्वारसिकाकाङ्क्षाया एव कारणत्वात् । अस्तु वा निरवकाशेनापि शेषिणा सावकाशस्यापि शेषिणो बाधः, तथापि पूर्वोक्तविधया अन्नाद्यस्यापि सावकाशत्वात् स्वाराज्यतुल्यत्वम् । अत एव(२)"ईश्वरो वा एष दिशोनून्मदितोः । यं दिशोऽनुव्यास्थापयन्ति । दिशामवेष्टयो भवन्ति ।" इति राजसूयान्तर्गततया विहितदिग्व्यवस्थापननिमित्तोन्मादपरिहारसाधनत्वेन अवेष्टीनां स्तुतिरपि राजसूयप्रयोगान्तःपातादुपपद्यते ।

एतेन एकैकहविष्केष्टिपञ्चकस्य राजसूयप्रयोगान्तःपातेऽपि द्विविधस्यापि प्रयोगस्य अन्नाद्यफलकत्वमेव, एतच्छब्देन परामर्शाविशेषात् इत्यप्यपास्तम् । सन्निधानाविशेषेऽपि आकाङ्क्षितसम्बन्धस्य न्याय्यत्वेन ब्राह्मणादिकर्तृकप्रयोगस्यैवान्नाद्यफलकत्वौचित्यात् । तेन सिद्धं राजसूयात् बहिरनुष्ठेयानि प्रयोगान्तराण्येवान्नाद्यफलकानि विधीयन्ते ब्राह्मणादिवाक्यैरिति ।

न च ब्राह्मणवैश्यवाक्ययोस्तद्विधानेऽपि राजन्यवाक्ये राजन्यस्य राजसूये प्राप्तत्वेनाविधेयत्वात् नित्यप्राप्तत्वेन च निमित्तत्वायोगेऽपि यदिशब्दस्य ब्राह्मणवैश्यवाक्ययोरिव परित्यागादिना राजन्यस्यानुवादमात्रत्वोपपत्तेः मध्येनिधानस्य पञ्चेष्टिप्रयोगेष्वनिवेशेन प्रयोगान्तरविधायकत्वेऽपि तस्य स्वाराज्यफलार्थं राजसूयप्रयोगान्तःपातेनैव विकल्पेन समुच्चयेन वा करणोपपत्तेः न

---

१ "विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति वाक्येन सर्वकर्मणां तत्तत्फले विनियुक्तानामपि विविदिषार्थत्वेनापि विनियोगात् तत्सम्बन्धार्थं आकांक्षोत्थाप्यत इत्यर्थः ।

२ तै॰ ब्रा. १-८-३ १.

प्रयोगबहिर्भावोपपत्तिरिति वाच्यम् । राजन्यपदस्य अनुवाद-मात्रत्वे वैयर्थ्यापत्तेः तस्य चाभिषिक्तानभिषिक्तसाधारणक्षत्रिय-मात्रवाचित्वेनानभिषिक्तक्षत्रियस्य राजसूये अप्राप्तस्यानुवादायो-गात् राजन्यपदस्य क्षत्रियविधायित्वावगतेः ब्राह्मणादिवाक्य-न्यायेनाभिषिक्तानभिषिक्तक्षत्रियसाधारण्येन राजसूयप्रयोगबहिर्भू-तप्रयोगान्तरविधायित्वस्यैवावसायात् । अतस्सिद्धं ब्राह्मणादि-गुणस्य भेदकत्वम् ।

नचैतेषु प्रयोगेषु दक्षिणाभावः, औत्पत्तिकदक्षिणया एकै-कहविष्कप्रयोग एवावरुद्धत्वादिति वाच्यम् । तस्याः प्रयोगा-क्षेपकत्वेऽपि साङ्गप्रधानाङ्गत्वेनेहापि निरूढपशुवादौ महावेदिवत् प्राप्त्युपपत्तेः । अनयैव दिशा पूर्वपक्षेऽपि नैमित्तिकप्रयोगे दक्षि-णाप्राप्तिरुपपादनीया । प्रयोजनं प्रसङ्गात् पूर्वमेवोक्तम् ।

सूत्रं तु अवेष्ट्यवान्तरप्रकरणस्थेषु ब्राह्मणादिरूपगुणश्रवणं क्रतुप्रधानमवेष्टिप्रयोगभेदनियामकं राजसूययज्ञे क्षत्रियस्यैव संयोगेन ब्राह्मणादीनामप्राप्तानां विधेयत्वादिति व्याख्येयम् ॥

इति द्वितीयमवेष्ट्यधिकरणम् ।

---

## अथ तृतीयमाधानाधिकरणम् (३)

## सू—आधानेऽसर्वशेषत्वात् ॥ २–३–४. ॥ (सि)

### ( विषयसंशयौ )

अनारभ्य श्रुतं(१)"वसन्ते ब्राह्मणोऽग्नीनादधीत" "ग्रीष्मे

---

१ तै. ब्रा. १–१–२–६.

राजन्यः" "शरदि वैश्यः" इति। तथा "वसन्ते ब्राह्मण-मुपनयीत" "ग्रीष्मे राजन्यं" "शरदि वैश्य" मित्यादि।

तत्र पूर्ववदेव ब्राह्मणादिश्रवणानि कालविधौ, ब्राह्मणादिविधौ वा कालश्रवणानि निमित्तार्थानि उत स्वस्ववाक्ये आधानविधिबोधनद्वारा तदुद्देश्यबोधकानीति संशयः।

( सङ्गतिः )

पादाध्यायसङ्गती पूर्ववत्। अनन्तरा तु पूर्वत्र राजसूयस्य क्षत्रियमात्रकर्तृकत्वात् ब्राह्मणादीनां कथमप्यप्राप्तेर्युक्ता विधेयत्वेन भेदकता। प्रकृते तु आधानस्योपनयनस्य वा आक्षेपादेव सर्वकालकर्तृकत्वोपपत्तेः प्राप्तानां ब्राह्मणादीनां निमित्तत्वोपपत्तिरिति पूर्वपक्षोत्थानात् द्रष्टव्या।

( पूर्वपक्षः )

तत्र नित्यकाम्यसाधारण्येन सर्वेषां क्रतूनां अग्निविद्यासापेक्षत्वात् अग्निविद्ययोश्च स्वजनकीभूताधानाध्ययनापेक्षत्वात् अध्ययनस्य चोपनयनसाध्यत्वात् क्रतुविधीनां आधानोपनयनाक्षेपकत्वमवगम्यते। न चाधानोपनयनयोः परम्परया क्रतुजनकत्वेऽपि अङ्गताग्राहकप्रमाणभावेन क्रत्वनङ्गत्वात् क्रतुप्रयोगविधिविषयत्वाभावेन कथं तत्प्रयुक्तत्वमिति वाच्यम्। अनङ्गस्यापि अभिक्रमणादिवदन्यथानुपपत्तिमात्रेण प्रधानविधिप्रयुक्तत्वोपपत्तेः।

अथ तत्र प्रयाजविधिरेव प्रयोजक इत्युच्यते ततोऽत्रापि अग्निरध्ययनं चाङ्गत्वाभावेऽपि जनकत्वादाधानोपनयनयोः प्रयोजकमित्यपि शक्यं वक्तुम्। आधानस्य वक्ष्यमाणरीत्या(१)विहितत्वस्यापि सत्त्वेन अग्न्यङ्गत्वोपपत्तेश्च। अतश्च क्रतुविधिप्रयुक्त-

१ विहितत्वेऽपि तत्वेन

योराधानोपनयनयोः तत्कर्तृकत्वेन निर्ज्ञातत्वात् क्रतूनां च स्वर्गकामत्वाविशेषेण ब्राह्मणादिकर्तृकत्वात् तदाक्षिप्ताधानोपनयनयोरपि ब्राह्मणादिकर्तृकत्वप्राप्तेः ब्राह्मणश्रवणस्य निमित्तार्थत्वोपपत्तिः ।

नचात्र यदिशब्दाभावात् निमित्तत्वानुपपत्तिः । यदिशब्दस्यापि प्राप्तिद्योतकमात्रत्वेन प्रकृते तदभावेऽपि प्राप्तिमात्रेण निमित्तत्वोपपत्तेः, तन्नैमित्तिकश्च वसन्तादिकालाधिकरणतानियमः । अत एव कालस्य सन्ध्यावन्दनादिवन्निमित्ताधीनानुष्ठानविषयत्वरूपनैमित्तिकत्वासम्भवेऽपि निमित्तान्वयव्यतिरेकानुविधाय्यधिकरणताकत्वमेव तदिति द्रष्टव्यम् ।

आधानोपनयनयोश्च वक्ष्यमाणरीत्या वाक्यान्तरादर्थाच्च प्राप्तयोरीप्सिततत्वाख्योद्देश्यत्वेऽपि विजातीयानेकोद्देश्यत्वात् न वाक्यभेदः । कालस्य चानुपादेयत्वेनोद्देश्यत्वेऽपि विधेयत्वादपि न सः । अतश्च कर्तृतासम्बन्धेन ब्राह्मणत्वादौ निमित्ते आधानाद्युद्देशेन वसन्तादिकालो विधीयते । तेन ब्राह्मणादेः कालान्तरनिवृत्तिः, ब्राह्मणाद्यतिरिक्तस्य च शूद्रादेरनियतकालकत्वं सिद्धं भवति ।

अथ वा क्रतुविधिभिः सर्वसाधारण्येन आधानोपनयनाक्षेपवत् सर्वकालसाधारण्येनापि स क्रियते । न हि क्रतुविधिभिराक्षेपपक्षेऽपि प्रयाजादिवत् प्रयोगान्तःपाती स इति युज्यते । अग्नीनामन्ते प्रतिपत्तिविधानेन तत्साधनस्याधानस्य (१)यावत्

१ "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इत्यनेन पात्राग्न्योः दाहं प्रति गुणत्वावगमेऽपि "दक्षिणहस्ते जुहूमासादयति, सव्यहस्ते ध्रुवाम्" इत्यादिना द्वितीयानिर्देशात् प्रतिपत्तिसंस्कार्यत्वावगतेः तदर्थं दर्शपूर्णमासारम्भकाले सम्पादितानामेव पात्राणां यावज्जीव

साधारणत्वापत्त्या प्रयोगाद् बहिरेवानियतकाल(१)कर्तव्यत्वप्राप्तेः। उपनयनस्य त्वध्ययनार्थत्वेन सामर्थ्यादेव प्रयोगबहिर्भावः। अतश्चाग्निहोत्रादिप्रयोगपूर्वभावितया अनियतकाले प्रसक्तयोराधानोपनयनयोः वसन्तादिकालकत्वे निमित्ते ब्राह्मणादिकर्तृकत्वं विधीयते। एवञ्च "यद्गृहत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्" इत्यादिन्यायात् वसन्तादिकालस्य निमित्तता प्राथम्यादुपपन्ना भवति। तत्फलं च वसन्ताद्यतिरिक्तहेमन्तादिकालकस्याधानस्योपनयनस्य वा ब्राह्मणाद्यनियतकर्तृकत्वसिद्धिः। सर्वथा नोभयविशिष्टाधानोपनयनविधिः, गौरवात्, अन्यतः सम्भवत्प्राप्तिकत्वाच्च।

ननु—उपनयनस्य सामर्थ्याद्ध्ययनजनकत्वेऽपि नियमेनानाक्षेपाद्विधिविषयत्वोपपत्तिः, आधानस्य तु अदृष्टरूपाहवनीयादिजनकत्वं न विधिं विना पक्षेऽप्यवगतमिति कथं न तद्विषयत्वं? किञ्चाधानविध्यभावे आहवनीयादिपदार्थ एवानवगतः, न ह्यसौ लोकप्रसिद्धः (२)यूपादिवत्। आधानजन्यादृष्टविशेषस्तु विधिं विना असिद्ध एव। ततश्चाहवनीयादिपदार्थस्यैवाप्रसिद्धौ आधानजन्यत्वस्य सुतरामप्रसिद्धेः कथं कामश्रुतिभिः तदाक्षेप इति चेत्—

न; पक्षप्राप्त एवोपनयने गुणसङ्क्रान्तशक्तिना विधिना नैमित्तिकविधानोपपत्तेः। आधानप्राप्तौ तु यतन्ते—

---

धारणात् यथा सर्वकर्मसाधारण्यं तेषां, तद्वत् अग्नीनामपि "दक्षिणहस्ते आहवनीयम्" इत्यादिना प्रतिपत्तिविधानात् तत्साधनस्याप्याधानस्य सर्वकर्मसाधारण्यापत्तेरित्यर्थः। पात्राणां सर्वकर्मसाधारण्यं च एकादशे 'यज्ञायुधानि धार्येर'( ११-२-१३. ) मित्यत्र निरूपितम्।

१ कर्तृत्व २ यूपो यथा न लोकप्रसिद्धस्तद्वदित्यर्थः।

तत्र पार्थसारथिस्तावत्—(१) "नक्तं गार्हपत्यमादधा-ति । दिवाहवनीयम्" इत्यादिवाक्येषु आधानानुवादेन नक्ता-दिरूपगुणविधायकेषु आहवनीयादिजनकत्वेन आधानानुवादात् तत्प्राप्तिः । इष्यते चानुवादतोऽपि पदार्थप्राप्तिः । "न गिरा-गिरेति ब्रूयात्" इति निषेधानुवादबलेन इरापदस्य गिरापदका-र्यकारित्वप्राप्तेरङ्गीकारात् । अवश्यं च वसन्तादिवाक्येषु आ-धानविधित्वादिनापि तत्राहवनीयादिपदाश्रवणात् तज्जनकत्वमाधा-नस्याग्निपदस्य वा तत्पर्यायत्वं नक्तादिवाक्येषु अनुवादत एवागन्तव्यम् । अतश्च ममापि तत एव प्राप्त्युपपत्तेः निमित्ता-र्थं श्रवणमिति ।

तन्न; अनुवादतो विशेष्यप्राप्त्यङ्गीकारे विशिष्टविधिमा-त्रोच्छेदापत्तेः । इरापदस्थले तु विकारार्थतद्धितेनानियतानेकप-दविकारत्वापत्त्या अनियतानेककार्यकारित्वप्रसक्तौ अनुवादबलेन नियममात्रम्, नत्वपूर्वावगतिरिति वैषम्यम् । सिद्धान्तेऽपि च पदान्तरसामानाधिकरण्यादिवत् अनुवादोऽप्युत्पत्तिवाक्यगता-ग्निपदस्य आहवनीयादितात्पर्यग्राहकतया न विरुध्यते ।

भवदेवस्तु "आहितोऽग्निराहवनीय" इत्याद्यर्थवादवशात् आहवनीयादेराधानजन्यत्वावगतिरित्याह । तदपि वक्ष्यमाणरी-त्या प्रत्यक्षविधिसद्भावे अर्थवादोन्नीतविधिकल्पनस्यान्याय्य-त्वादुपेक्षणीयम् ।

अत एवं परिहर्तव्यम्—यद्यपि विशिष्टविधिगौरवभिया नान्यो विधिः आधानप्रापकतया सम्भवी । तथापि टुप्टीकोक्तरीत्या "स-म्भारेष्वग्निमादधाती" त्ययं अनन्याक्षिप्तशक्तित्वात् आधानविधा-

---

१ तै० ब्रा० १-१-४-३.

फ्कः सम्भवत्येव । नह्यत्र सम्भारविधिः, तेषां (१)वार्क्षपार्थिवानां वाक्यान्तरप्रमितत्वात् । नापि तेषामाधानाधिकरणताविधिः। तस्या अपि सामर्थ्यात् (२) "तस्मिन्नाधीयतामय" मित्यादिमन्त्रवर्णाच्च प्राप्तत्वात् ।

एतेनाधिकरणताविशिष्टाधानविधिरिति न्यायसुधाकृदुक्तप्रकारोऽपि प्रतिबन्द्यापत्तेः प्रत्युक्तः । तदा हि नक्तादिवाक्यमादाय प्रतिबन्दी स्फुटैव । अतोऽत्राधानमात्रं विधीयते । तस्य च प्रयोगः प्रयाजादिवत् प्रधानविधिभिरेव । प्रयोगस्यापि ह्यन्यतस्सम्भवत्प्राप्तिकस्य विधाने गौरवात्, प्रयोगविधिचिह्नस्य कालकर्त्रादेरभावाच्च । अतश्च "व्रीहीन् प्रोक्षति" इत्यादिवदुत्पत्तिविनियोगश्चानेन क्रियते । अत्रत्याग्निपदं च गुणवाक्यानुसारात् "आहितोऽग्निराहवनीय" इत्याद्यर्थवादवशाच्चोन्नीताहिताग्निपर्यायाहवनीयादिपरम् । अतोऽनन्याक्षिप्तविधिशक्तिकसम्भारवाक्येनैवाधानस्योत्पन्नस्य विनियुक्तस्य च क्रतुविधिभिः सर्वसाधारण्येन प्रयोगविधानात् ब्राह्मणादिश्रवणं निमित्तार्थमेव ।

नचैवं सम्भारवाक्ये परस्मैपदनिर्देशात् अनाधातारं प्रति आहवनीयत्वाभावानवगतेः अन्येनाहितानामपि क्रयणेनान्यस्या-

---

(१) "सप्त पार्थिवान् सम्भारानाहरति" ( आप. श्रौ. ५-१-५.) इति विहिताः सप्त पार्थिवास्सम्भाराः । ते च सिकता, षा, खुकरीष, वल्मीकमृत्, सूद, वराहविहत, शर्करा, रूपाः । ऊषाः ऊषरमृत् । अखुकरीषं मूषिकोद्धृता मृत् । सूदः अशोष्यस्य जलाशयस्य मृत् । शर्कराः क्षुद्रपाषाणाः, कङ्कड् इति भाषायाम् । अन्यत् प्रसिद्धम् । एवं अश्वत्थो, दुम्बर, पलाश, शमी, विकङ्कता, शनिहतवृक्ष, पद्मपत्ररूपाः सप्त वार्क्षाः । वार्क्षाः वृक्षसम्बन्धिनः ।

२ यत् पृथिव्या अनामृतꣳसम्बभूव त्वे सचा । तमभिरमयेऽवदात् तस्मिन्नाधीयतामयम्" इति समग्रो मन्त्रः ।

हवनीयसम्भवेन तद्व्याप्तिफलकस्याधातृमात्रसम्बन्धित्वरूपात्मने-पदार्थस्यापि वसन्तादिवाक्ये विधानाद्वाक्यभेदापत्तिः । "उद्गातारः स्तुवत" इत्यादौ अकर्तर्यपि क्रियाफलदर्शनेन कर्तृमात्रवृत्ति-फलकत्वस्यात्मनेपदार्थत्वाभावात् । अत एव (१)"स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यादिस्मृतिरपि प्रयोगविरोधादुपलक्ष-णत्वेन द्रष्टव्या ।

अथ वा तर्हस्तु आत्मनेपदयुक्तमेव अनन्याक्षिप्तशक्तिकं "य एवं विद्वानग्निमाधत्त" इत्याधानोत्पत्तिविनियोगपरं वाक्यम् । तेन चाधातृसम्बन्धित्वस्य प्राप्तत्वात् वसन्तादिवाक्ये न वाक्य-भेद इति । सर्वथा निमित्तार्थता ब्राह्मणादिश्रवणस्येति प्राप्ते—

## ( सिद्धान्तः )

अभिधीयते—नैतदपि निमित्तार्थम्, क्रतुविधिभिरुपनय-नस्य तावन्नियमेनानाक्षेपात् । ते हि ज्ञानस्य यद्यपि नियमेनाक्षे-पकाः तथापि तत्साधनस्याध्ययनस्य न नियमेनाक्षेपकाः उपा-यान्तरेणापि तत्सम्भवात् । अध्ययनमपि चोपनयनस्य न निय-मेनाक्षेपकम् । अनुपनीतस्यापि तत्सम्भवात् । अतः पक्षे सम्भव-त्प्राप्तिकस्योपनयनस्य वसन्तादिवाक्ये सम्भवत्येव विधिः ।

न च गुणसङ्क्रान्तशक्तिना विधिना पक्षप्राप्तमेवोपनयनं भा-व्यतयोद्दिश्य नैमित्तिकगुणविधिसम्भवे विशिष्टविधेरन्याय्यत्वमिति वाच्यम् । उपनयनविधेरध्ययनविधेश्च नित्यवच्छ्रवणावगतनित्य-वद्वाक्यैकवाक्यताभङ्गभयेन विशिष्टविधेरप्यङ्गीकारात् ।

किञ्च ब्राह्मणकालयोः कस्य निमित्तत्वं कस्य विधेयतेत्यत्र विनिगमनाविरहात् उभयविशिष्टोपनयनविधिः । न च प्राथम्यं

---

१ पा० सू० १-३-७२.

नियामकम् । तस्योद्देश्यताबोधकत्ववत् सप्तम्या उपपदविभक्तित्वप्रसङ्गेन विधेयताबोधकत्वस्यापि सम्भवेनानियामकत्वात् । अनेनैव चाधानवाक्येऽपि विशिष्टविधिर्द्रष्टव्यः ।

किञ्च सम्भारवाक्ये आधानोत्पत्त्यङ्गीकारे आत्मनेपदार्थस्याप्राप्तत्वात् वसन्तादिवाक्येषु वाक्यभेदप्रसङ्गः । न च "उद्गातारः स्तुवत" इति प्रयोगात् कर्तृमात्रवृत्तिफलकत्वस्य नात्मनेपदार्थत्वम् । स्मृतिविरोधेन क्वाचित्कप्रयोगस्य अर्थाविवक्षया साधुत्वमात्रार्थत्वेन स्तोत्रक्रियाजन्यदाक्षिणालाभरूपफलाभिप्रायेण वा उपपन्नत्वात् । (१)विद्वद्वाक्यस्य चाधानोत्पादकत्वं, वर्तमानापदेशत्वात् यच्छब्दाद्युपबन्धात् विध्यन्तरार्थवादत्वाच्चायुक्तमेव । इदं हि "एवं सपत्नं भ्रातृव्यमवार्तिं सहत" इत्यर्थवादसहितमपि "अप उपसृजती" त्यादिविशेषविधिविहितानामुदकादिसम्भाराणां "अथ सम्भारान् सम्भरती" ति यः स्थापनाविधिस्तस्य शेषः । यो विद्वानेवमुदकादिस्थापनपूर्वं अग्निमाधत्ते स स्थापनरूपाङ्गसामर्थ्यात् सहायसम्पन्नमपि वैरिणं वर्तनरहितं कुरुते इत्यर्थवादेन स्थापनप्रशंसा । अत आधानप्रापकाभावात् वसन्तादिवाक्ये आधानसम्बन्धिन्यपि विशिष्टविधित्वमेव ।

सोऽपि च नोत्पत्तिविनियोगयोरेव, अपितु कर्तृकालादिरूपाणां गुणानामनन्वयप्रसङ्गेन तत्प्रयोगस्यापि । अत एव आधानापेक्षयनयोः स्वविधिप्रयुक्तयोरेव लाभात् क्रतुविधयोऽपि तयोस्तत्कार्ययोर्वा न प्रयोजकाः तदधिकारिणामेव च त्रैवर्णिकानामधिकारिणां लाभात् न शूद्रस्याप्यधिकारित्वकल्पनया अग्निविद्योपायाक्षेपका इत्यादि लाघवमपि ।

न च अग्निविद्ययोः स्वस्वविधिप्रयुक्तत्वेऽपि नित्यतावेदक-

---

१ 'य एवं विद्वानग्निमाधत्ते" इतीदमत्र विद्वद्वाक्यम् ।

प्रमाणाभावेन नियमेन करणानापत्तेः तथा नित्यैः क्रतुविधिभिस्तदाक्षेपोऽप्यावश्यक एवेति वाच्यम् । नित्यानामपि क्रतुविधीनां लाघवेन परप्रयुक्ताग्निविद्योपजीवित्वे श्रमिते स्वस्वविधिसिद्धाग्निविद्यावतः तदकरणे प्रत्यवायोत्पत्तावपि तद्रहितस्य तदुत्पत्तौ प्रमाणाभावेनाग्निविद्याक्षेपकत्वानुपपत्तेः । एतेन क्रतुविधीनां नित्यत्वात् आधानविधीनामपि फलतो नित्यत्वमिति पार्थसारथ्युक्तिरपास्ता ।

वस्तुतस्तु "अनधीयाना व्रात्या भवन्ति" "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्"(१)"ब्रह्मक्षत्रविशां काल औपनायनिकः परः" "अत ऊर्ध्वं (२)पतन्त्येते यथाकालमसंस्कृताः" इत्यादिनाध्ययनज्ञानोपनयनानां "नानाहिताग्निर्भवेत्" इत्यादिश्रुत्या च आधानस्य स्वरूपेणैव नित्यत्वमिष्टम् । न हीयं श्रुतिरनाहिताग्निमरणस्य तत्पुत्रकर्त्तव्यप्रायश्चित्ताधिकारमात्रपरा, पुंश्चल्यादि(३)वंशप्रायश्चित्तवदिति वाच्यम् । तत्पुत्रकर्त्तव्यप्रायश्चित्तस्य विशिष्टानाम्नातत्वात्, तथात्वे अनाहिताग्नितायाः उपपातकेषु पाठानुपपत्तेः । अतश्च तदेकवाक्यतयेयमपि श्रुतिः आधानावश्यकत्वपरैव । अतश्च आधानोपनयनयोः नित्यत्वात् न नित्यक्रतूनां तदाक्षेपकत्वप्रसक्तिरिति लाघवम् । अतः कर्त्तृकालविशिष्टोत्पत्तिविनियोगपूर्वकः प्रयोग एव वसन्तादिवाक्यैर्विधीयते ।

न च वसन्तादिवाक्येषु आधानप्रयोगविधिसम्भवेऽपि उत्पत्तिविनियोगयोः (४)सम्भारविधिबलेनापि प्राप्तिसम्भवाद्-

१ म. स्मृ. २-३९. २ अयोऽप्यते. ३ दर्शन.

४ "अग्ने सम्भारान् सम्भरति" इत्ययं विधिस्सम्भारविधिः । अनेन ग्रामानां पार्थिवानां वानस्पत्यानां च सम्भारा विधीयन्ते ।

विधानमिति वाच्यम्, तथात्वे आत्मनेपदार्थस्य आधातृगामिफलत्वरूपस्य उत्पत्तौ विनियोगे वा अन्वययोग्यस्य प्राप्तत्वाद्यनुवादेन विधिः ब्राह्मणादिविशिष्टप्रयोगविधिश्चेति वैशिष्ट्यासम्भवात् वाक्यभेदापत्तेः, (१)संभारवाक्ये "अग्निमादधीते" त्येतावतैव उत्पत्तिविनियोगपरत्वसिद्धौ सम्भारेष्वित्यस्य वैयर्थ्यापत्तेश्च।

अत एव तत्र "तस्मिन्नाधीयतामय"मिति मन्त्रवर्णाव सम्भवत्प्राप्तिकाया अपि सम्भाराधिकरणताया: अभ्युदयशिरस्कत्वार्थं विधिः। अतश्च त्रिष्वपि ब्राह्मणादिवाक्येषु प्रयोगवदुत्पत्तिविनियोगयोरपि करणात् प्रयोगभेदवत् आधानस्वरूपस्यापि भेदः।

अस्तु वा प्राथम्यात् ब्राह्मणवाक्य एवोत्पत्तिविनियोगविशिष्टप्रयोगविधिः। राजन्यादिवाक्ययोस्तु प्रयोगान्वयिकर्तृकालरूपगुणयोगात् प्रयोगभेदमात्रम्। अत एव तत्र कर्तृकालविशिष्टः प्रयोग एव विधीयते। आत्मनेपदार्थस्तु उत्पत्तिवाक्यप्राप्तोऽनूद्यते। सर्वथा ब्राह्मणादिश्रवणानि न निमित्तार्थानि।

नन्वेवं सम्भारवाक्यादिना उत्पत्तिविनियोगप्रयोगाणां प्राप्त्यभावेऽपि "जातपुत्रः कृष्णकेशोऽग्नीनादधीते" ति वाक्येन वयोवस्थाविशेषापन्नकर्तृविशिष्टाधानविधिरयमस्तु। अनेकविशेषणविशिष्टविध्यपेक्षया एकविशिष्टविध्यङ्गीकारस्य न्याय्यत्वात् शूद्रादिसाधारणैकप्रयोगविधिसम्भवे ब्राह्मणादित्रयस्य त्रयप्रयोगविध्यङ्गीकारानौचित्याच्च। अतश्च तेनैव प्राप्तानां ब्राह्मणादीनां निमित्तार्थं श्रवणमिति चेत्--

---

१ "सम्भारेष्वग्निमादधीते" ति सम्भारवाक्यम्।

न; एवमपि कर्तृकालयोः कस्य निमित्तत्वं कस्य विधेयता इत्यत्र विनिगमनाविरहानिवारणात् । अतः सिद्धं ब्राह्मणादेः गुणस्य विधेयत्वाद् भेदकत्वमिति । प्रयोजनं स्पष्टम् ।

सूत्रं तु आधाने तुल्यन्यायत्वाद् उपनयने च ब्राह्मणादिश्रवणं क्रतुप्रधानं, आधानादिप्रयोगभेदनियामकमित्यनुपपद्यते । आधानादेः सर्वपुरुषशेषत्वेन अप्राप्तत्वादिति अकारप्रश्लेषेण व्याख्येयम् ॥

इति तृतीयमाधानाधिकरणम् ।

---

अथ चतुर्थं दाक्षायणयज्ञाधिकरणम् (४) ॥

## सू—अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥२—३—५॥ (पू.)

### ( विषयसंशयौ )

दर्शपूर्णमासयोः "दाक्षायणयज्ञेन यजेत प्रजाकामः" । "साकंप्रस्थायीयेन यजेत पशुकामः" । "सङ्क्रमयज्ञेन यजेतान्नाद्यकामः" इति श्रुतम् । तत्र किमेवंसंज्ञककर्मान्तरविधिः ? उत दर्शपूर्णमासाश्रितो गुणो दाक्षायणादिपदाभिधेयः फलार्थं विधीयते ? इति सन्देहः ।

### ( सङ्गतिः )

पूर्वपक्षे गुणस्याप्रसिद्धत्वादिना अविधेयत्वात् अनिश्चितविधेयताकस्य सिद्धान्ते गुणफलसम्बन्धाङ्गीकारेऽपि भावनाभेदकत्वोपपादनाद् पादसङ्गतिः । अनन्तरा तु ब्राह्मणत्वादेः गुण-

स्याप्राप्तत्वेन विधेयत्वात् युक्ता भेदकता। प्रकृते तु गुणस्याप्रसिद्धत्वात् कथञ्चित् प्रसिद्धस्य वा वक्ष्यमाणरीत्या प्राप्तत्वात् न भावनाभेदकता युक्ता। यदि परं भेद एवाग्रहः तदा संज्ञादिभिरेव स युक्त इति पूर्वपक्षोत्थानात् द्रष्टव्या। अध्यायसङ्गतिस्तु स्पष्टैव। (१)इन्द्रियकामाधिकरणसिद्धस्यैव गुणफलसम्बन्धस्याक्षेपसमाधानाच्च न तेन पौनरुक्त्यम्।

( पूर्वपक्षः )

तत्र दाक्षायणयज्ञादिपदानां समुदायप्रसिद्ध्या अवयवप्रसिद्ध्या वा गुणविशेषे लोके वेदे वा प्रसिद्ध्यभावात् प्रसिद्धयजिसामानाधिकरण्येन यागनामधेयत्वं तावन्निरवबाधम्। अत एव "पयसा मैत्रावरुणं चरन्ति" "पयसा दाक्षायणयज्ञेन" इत्यादिप्रसिद्धकर्मनामधेयमैत्रावरुणपदसामानाधिकरण्यमपि सङ्गच्छते। अन्यथा दाक्षायणपदवाच्यायाः प्रयोगावृत्तेः द्रव्यानपेक्षत्वेन पयोविधानानुपपत्तेः। अतश्च उद्भिदादिसंज्ञावदेवात्र तया कर्मान्तरचोदनैव युक्ता। अत एव दाक्षायणादिपदानां कर्मान्तरेऽवयवशक्त्यसम्भवेऽपि रूढिकल्पनया विजातीययागत्वस्यैव शक्यतावच्छेदकत्वं कल्प्यते इति न दोषः। सूत्रं स्पष्टम्॥

## सू—अगुणा च कर्मचोदना॥ २–३–६.॥

ननु—नेदं नामधेयम्, दाक्षायणादिपदार्थस्य गुणस्य लोकेऽप्रसिद्धस्यापि वेदात् प्रसिद्ध्युपपत्तेः। तथा हि—

दक्षस्य यजमानस्य इमे दाक्षा ऋत्विजः तेषां कर्तृभूतानामयनं प्रयोगावृत्तिः दाक्षायण इत्येवमवयवव्युत्पत्त्यनुसारेणावगते क्रियती

---

१ पू. मी. २–२–११.

आवृत्तिरिति विशेषापेक्षायां "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेते" इति वाक्यान्तरात् द्विरावृत्तिः दाक्षायणपदाभिधेयेत्यवगम्यते।

तथा साकंप्रस्थाय्यपदेनापि साकं सह प्रस्थानं यत्रेति व्युत्पत्त्या सहप्रस्थानेऽवगते केन सहेत्यपेक्षायां "सह कुम्भीभिरभिक्रामेत्" इति वाक्यात् कुम्भीसाहित्यमित्यवगम्यते। एवं सङ्क्रमपदेनापि सङ्क्रमणे उक्ते, क्वेत्यपेक्षायां भवदेवोक्तविधया आहवनीयरूपहोमदेशो इत्यवगम्यते। अतश्च लोकाप्रसिद्धत्वेऽपि वैदिकप्रसिद्धिमात्रेण दाक्षायणादिपदानां गुणवाचित्वोपपत्तेः दध्यादिवत् फलसम्बन्धो युक्त एवेति चेत्—

न; 'द्वे पौर्णमास्यौ' इत्यादि वाक्यानां प्रकरणात् क्रत्वङ्गतया द्वित्वादिरूपगुणविधायिनां दाक्षायणादिपदार्थतात्पर्यग्राहकत्वानुपपत्तेः। अन्यथा "दध्ना जुहोति" इत्यस्यापि आश्रयमात्रपरत्वोपपत्तौ क्रत्वङ्गताबोधकत्वानुपपत्तेः।

अथ तु तेन क्रत्वर्थतयैव द्वित्वविधावपि अयनपदवाच्यायाः आवृत्तेः प्रमाणाभावादेव अधिकायाः प्रसक्त्यभावात् द्वित्व एव पर्यवसानोपपत्तेः फले विधानमित्युच्येत ततो गुणधात्वर्थयोरुभयोरपि नित्यवत् प्राप्तौ (१)ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति" तिवत्(२) भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसम्बन्धोपपत्तेः न गुणफलसम्बन्धोपपत्तिः। दध्यादौ तु नित्यवदनुवादायोगात् तथाङ्गीकार इति वैषम्यम्।

किञ्च "द्वे पौर्णमास्यौ" इत्यनेनापि पौर्णमास्यादिपदवाच्यप्रधानत्रयगणावानुवादेनैव द्वित्वविधानात् प्रकरणेन च तस्यैवाश्रयत्वावगतेः न साङ्गप्रयोगावृत्तिः फले विधातुं शक्यते। वि-

१. तै. स. ७-२-७. २. पू. मी. २-१-२.

लक्षितगुणस्य च दाक्षायणादिपदेनैव वक्तुं शक्यत्वात् यज्ञपद-वैयर्थ्यापत्तिः ।

साकंप्रस्थायीये तु प्रस्थानस्य असाक्रमणविधिनैव प्राप्तत्वादप्राप्तं साहित्यमेव प्रस्थानाश्रितं विधेयम् । न च प्रस्थानस्य प्रणयनादिवदवान्तरप्रकरणमस्ति । सान्नाय्यस्य तु तत्सत्त्वेऽपि साक्षाद(१)योग्यत्वमिति नाश्रयत्वम् । सङ्क्रमस्य तु आहवनीयाधिकरणकहोमविधिनैवार्थाक्षेपात् उभयप्राप्तौ भावार्थाधिकरणन्यायेन धात्वर्थादेव फलोपपत्तेः न गुणफलसम्बन्धविध्युपपत्तिः । एवञ्च गुणचोदनाऽसम्भवेन विधेः गुणसङ्क्रान्तशक्तिकत्वाभावात् धात्वर्थभावनयोरेव चोदनाप्रतीतेः अभ्यासादपि भेदसिद्धिरिति सूत्रार्थः ।

ननु—फलसम्बन्धपरत्वसम्भवेनाभ्यासस्वरूपाभावात् कथं भेद सिद्धिः ? अत आह—

## सू—समाप्तञ्च फले वाक्यम् ॥ २–३–७. ॥

"सर्वेभ्यो दर्शपूर्णमासा" वित्यनेन फलसम्बन्धस्यापि प्राप्तत्वात् अनन्यपरत्वमव्याहतमेव । अतोऽभ्यासादपि कर्मभेदसिद्धिः ।

अथ वा फलस्य अनुपादेयस्य सत्त्वात् प्रकरणान्तरन्यायेनापि भेदसिद्धिः । न च सन्निधानादुपस्थितिः । संज्ञया विच्छेदोपपत्तेः । संज्ञा हि कर्मान्तरबुद्धिं जनयन्त्यपि पूर्वबुद्धिविच्छेदमपि तावज्जनयति । अतः तदंशोऽनुपादेयसहायेन प्रकरणान्तरस्याप्युपपत्तिः। अतो वरं संज्ञाभ्यासप्रकरणान्तरैः कर्मान्तरमेव। न तु गुणफलसम्बन्धः । एवञ्च फलप्राप्तेः क्रियैकजन्यत्वस्वभावोऽपि अनुगृहीतो भवति । अतो नात्र गुणस्य भावनाभेदकत्वम् ।

१. क्रियाया एवाश्रयत्वयोग्यत्वादिति भावः ।

## सू—विकारो वा प्रकरणात ॥ २-३-८. ॥ (सि)

नेदं कर्मान्तरम्, भेदकप्रमाणस्यैवासिद्धेः । न तावदभ्यासः । प्रकृतस्यैव कर्मणः फले विनियोगसम्भवेन उत्पत्त्यभावेऽपि अभ्यासासम्भवात् । न च सार्वकाम्यवाक्येन तत्प्राप्तिः, तेन तत्सम्भवेऽपि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' तिवद् अभ्युदयशिरस्कत्वार्थं अनेनैव तद्विधिसम्भवात् ।

नापि प्रकरणान्तरम्; प्रकृतस्यैव कर्मणः विहितत्वेन तदभावात् । न च संज्ञया पूर्वबुद्धिविच्छेदः । संज्ञाभ्यासादीनां स्वाश्रयतावच्छेदकविधेयतावच्छेदकमात्राक्षेपकत्वेन कर्मान्तरबुद्धिजनकत्वेऽपि पूर्वकर्मबुद्धिविच्छेदकत्वाभावात् । न हि तेषां भेदानुपजीविपूर्वकर्मोपस्थापकप्रमाणाभावः प्रकरणान्तरवत् स्वरूपं सहकारिकारणं वा । तथात्वे तनूनपादादियागोत्तराम्नाताभिक्रमणस्य समिद्यागाङ्गत्वानापत्तेः । अपि तु प्रकरणान्तरस्यैव सः ।

अत एव तत्र नाम्न एवातिदेशार्थं पूर्वकर्मोपस्थापकत्वात् भेदानुपजीवीति विशेषणम् । अतश्च प्रकृते पूर्वबुद्धिविच्छेदकाभावात् प्रकरणस्य (१.)चोपस्थापकस्य सत्त्वात् न प्रकरणान्तरन्यायेन भेदः ।

अत एवो"द्भिदा यजेत" त्यादौ संज्ञयैव भेदो वार्तिके उक्तः, न तु प्रकरणान्तरात् । प्रकृते तु संज्ञाया भेदकत्वं उत्तरसूत्रे निराकरिष्यामः । अतो वक्ष्यमाणरीत्या दाक्षायणादिपदवाच्यस्याऽऽवृत्त्यादेः गुणस्यैव नित्यगुणविकारतया फलार्थत्वेन विधानम् । एवं चाश्रयत्वेन प्रकृतकर्मत्वन्वयात् कथम्भावाका-

---

१ पूर्वोप.

ङ्गःलक्षणप्रकरणानुग्रहाभावेऽपि अधिकारात्मकप्रकरणानुग्रहो भवति । इतरथा तद्बाधापत्तिः ।

सू—लिङ्गदर्शनाच्च ॥ २–३–९. ॥

"त्रिंशद्वर्षाणि जीर्णो दर्शपूर्णमासाभ्यां यजेत' यदि दाक्षायणयाजी स्यात् अथापि पञ्चदशैव वर्षाणि यजेत, अत्रैव ह्येता सम्पद्यते, द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत" इत्यत्र यावज्जीवपक्षानुकूलतया त्रिंशद्वर्षपक्षमुक्त्वा तदनुकूलत्वेनापि दाक्षायणयाजिनः पञ्चदशवर्षपक्षमुपदिश्य तदर्थवादे तावतैव त्रिंशद्वर्षसाध्यप्रयोगावृत्तिरुच्यमाना आवृत्तेः फलार्थत्व एव युज्येत । तथा हि—

गुणवाक्ये पौर्णमास्यादिपदवाच्यप्रधानमात्रसम्बन्धित्वेन श्रुतापि द्विरावृत्तिः फलवाक्ये दक्षयजमानसम्बन्धिऋत्विक्सम्बन्धित्वेन श्रवणात् दर्शपूर्णमासप्रयोगाश्रितेति विज्ञायते । अतश्च फलार्थमपि सन्ततफलकामेन काकतालीयन्यायेन पञ्चदशवर्षपर्यन्तद्विरावृत्तदर्शपूर्णमासप्रयोगानुष्ठाने तावतैव त्रिंशद्वर्षसाध्यप्रयोगसंख्यासम्पत्तेः पञ्चदशवर्षपक्षस्तुतिरुपपन्ना भवति । कर्मान्तरत्वे तु तस्याव्यक्तत्वे ज्योतिष्टोमविकारत्वात्, दर्शपूर्णमासविकारत्वेऽपि वा पञ्चदशवर्षपर्यन्तमावृत्तत्वेन प्रमाणाभावः । न चातिदेशेन पञ्चदशवर्षकालीनावृत्तिप्राप्तिः, पञ्चदशादिवाक्येषु यावज्जीववाक्यवत् नैमित्तिकप्रयोगस्यैव पुरुषार्थ(१)त्वेन विधेयत्वेन तस्याः तद्वदेव विकृतावनतिदेशात ।

नन्वेवं पञ्चदशवर्षकालस्यैव पौर्णमास्यमावास्यावाच्छिन्नस्य जीवनवन्निमित्तत्वापत्तिः । अतश्च यथैव पौर्णमास्याद्यवच्छिन्नस्य

१ पुरुषार्थस्य

वसन्तस्य निमित्तत्वे तस्यैकत्वादेकस्मिन् वसन्ते सकृदेव ज्योतिष्टोमकरणं, निमित्तावृत्तौ चावृत्तिः, तथा पञ्चदशवर्षकालस्यापि पौर्णमास्याद्यवच्छिन्नस्य एकत्वादेकवारमेव दर्शपूर्णमासप्रयोगः तदावृत्तौ च पुनरावृत्तिरिति प्राप्नुयात्। जीवनानान्तु प्रतिपर्व भिन्नत्वात् युक्ता प्रयोगावृत्तिरिति वैषम्यम्। अतो यावज्जीवाधिकरणपूर्वपक्षन्यायेन तावन्तं कालं दर्शपूर्णमासावृत्तिरेव कर्माङ्गत्वेन विधीयते इति कर्मान्तरेऽपि तस्यातिदेशो युक्त एवेति चेत्—

न; आधानाव्यवहितोत्तरकालीनपञ्चदशवर्षत्वादेः निमित्तत्वेऽपि निमित्तपरया अत्यन्तसंयोगवाचिद्वितीयया सातत्यानुष्ठापकत्वरूपनिमित्तत्वावगतेः वसन्तवैषम्यात्। अत एव निमित्तश्रुत्या सातत्यानुष्ठाने प्रसक्ते आहारविहारादिवशेन तद्बाधात् (१)जातेष्टिपासाग्निहोत्रन्यायेन पौर्णमास्याद्यनुग्रहेऽपि सातत्यस्य अत्यन्तबाधायोगात् पुनः पुनः अनुष्ठानोपपत्तिः। प्रमाणान्तरावगताधानाव्यवहितोत्तरत्वबलेन च नाधानोत्तरभाविपञ्चदशवर्षोत्तरं पुनः करणापत्तिः। अतश्च(२)यावज्जीवाधिकरणसिद्धान्तन्यायेन निमित्तपरत्वस्यैवोपपत्तेः नावृत्तेः कर्माङ्गत्वेन विधिरिति पुरुषार्थस्य नैमित्तिकप्रयोगस्य विकृता-

१. जातेष्टौ निमित्तानन्तरानुष्ठेयत्वे प्राप्तेऽपि नालच्छेदात् पूर्वं स्तनप्राशननिषेधात् तत्पूर्वमेव च जातकर्मविधानात् जातेष्टेर्जननानन्तरमेव करणे तदनन्तरं जातकर्म कृत्वा छिन्ने नाले प्राशनस्य कर्तव्यतापत्त्या तावता शिशोर्मरणापत्त्या शेषिलोपप्रसङ्गात् तदर्थं जातेष्टेरुत्कर्षेऽवश्याङ्गीकर्तव्ये उत्कृष्टायाः तस्याः अवैगुण्याय आशौचापगमनन्तरं पौर्णमास्यादिकाल एव मलमासादिरहिते सानुष्ठेयेति चतुर्थे (४-३-१७.) सिद्धान्तितम्, तन्न्यायेनेत्यर्थः।

२. पू. मी. २-४-२.

वनतिदेशात् कर्मान्तरस्य पञ्चदशवर्षपर्यन्तमावृत्तिः ।

न च भवन्मत इव फलार्थस्यापि कर्मान्तरस्य काकतालीयन्यायेन पञ्चदशवर्षपर्यन्तमावृत्त्युपपत्तिः । तथात्वेऽपि द्विरावृत्तौ प्रमाणाभावेन त्रिंशत्सम्पत्त्यनुपपत्तेः । यदि तु पूर्वपक्षे क्रत्वर्थत्वेन द्विरावृत्तिविधेरिष्टत्वात् कर्मान्तरेऽपि द्विरावृत्तेः प्राप्तिरुच्येत तदा त्रिंशद्वर्षपक्षस्यापि द्विरावृत्त्यैवानुष्ठानापत्तेः सुतरां स्तुत्यनुपपत्तिः ।

अस्तु वा कर्मान्तरस्य त्रिंशद्वर्षसाध्यप्रयोगसंख्याकप्रयोगवत्त्वम् । कथं तावता दर्शपूर्णमासगतपञ्चदशपक्षस्तुतिः । व्यधिकरणत्वात् । अतो लिङ्गदर्शनादपि आवृत्तिरेव फलार्थे विधीयते ।

## सू—गुणात् संज्ञोपबन्धः ॥ २–३–१०.॥

यस्त्वया संज्ञोपबन्धो भेदहेतुत्वेनोक्तः, स गुणविधित्वात् दाक्षायणादिपदानामसिद्धः, यद्यपि च गुणो न लोके प्रसिद्धः तथा(१)प्युक्थ्यव्यूढादिवत् वाक्यान्तरप्रसिद्ध एव दाक्षायणादिपदवाच्यत्वेन युक्तस्समाश्रयितुम् ।

वस्तुतस्तु पूर्वोक्तविधया लौकिकात्ययनप्रसिद्ध्यैव दाक्षायणादिपदानामावृत्त्यादिवाचित्वम, अत एव दाक्षायणवाक्ये क्र-

१. उक्थ्यग्रहस्य दध्यादिवत् लोकप्रसिध्यभावेऽपि "य एवं विद्वानुक्थ्यं गृह्णाति" इति वाक्योत्पन्नस्यैव तस्य "पशुकाम उक्थ्यं गृह्णीयात्" इति वाक्येन यथा फलार्थं विधानम्, यथा वा व्यूढाख्यस्य द्वादशाहगताग्रताविशेषस्य लोकतोऽप्रसिद्धस्यापि "अथ व्यूढः—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे" इति वाक्येनोत्पन्नस्यैव "यः कामयेत बहु स्यां प्रजायेयेति स व्यूढेन यजेत" इति वाक्येन फलार्थं विधानं तद्वदित्यर्थः ।

त्विक्संबन्धिनी आवृत्तिरेव फलार्थं विधीयते । तस्याश्चाश्रयापेक्षायां विधेयसामर्थ्यसहकृतप्रकरणेन दर्शपूर्णमासप्रयोग एवाश्रयत्वेन सम्बध्यते । गुणाश्रययोश्च नात्यन्तं दध्यादिवत् भेदः इति सूचनार्थमेव यज्ञशब्दस्समासे ।

वस्तुतस्तु (१)"पूर्वपदात् संज्ञायामगः" इत्यनेन गकारवर्जितपूर्वपदनिमित्तं णत्वं संज्ञायामेव विदधतां संज्ञात्वाभावे णत्वस्यैवानापत्तेः यद्यपि संज्ञात्वमेवावश्यकं, तथाप्यवयवार्थप्रतीत्या योगरूढ्यङ्गीकारात् संज्ञात्वेऽप्यावृत्तिविधौ न किञ्चित् बाधकम् । एवञ्च सूत्रमप्याञ्जस्येन सङ्गच्छते । आवृत्तिश्च कियतीति विशेषापेक्षायां 'द्वे पौर्णमास्या' विति वाक्येन द्वित्वविधिः । अत एवापेक्षितविधानात् द्वित्वमपि न क्रतुकर्थभावेन गृह्यते ।

साकंप्रस्थाय्यवाक्येऽपि अवयवव्युत्पत्त्या विशेषणीभूतमप्राप्तं सहत्वमेव फलोद्देशेन विधीयते । न तु प्रस्थानमपि, तस्य नित्यप्रयोगेऽपि(२) होमार्थं प्राप्तत्वेन क्रतुवदविधेयत्वात् । सहत्वस्य चाश्रयापेक्षायां वाक्यान्तरेण(३) "आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुंभीभिरभिक्रामे" दित्यनेनाभिक्रमणं सान्नाय्यहोमाङ्गभूतमाश्रयत्वेन समर्प्यते । अत्र हि प्रकरणात् विधेयसामर्थ्याच्च सान्नाय्यहोमाङ्गभूताभिक्रमणापरपर्यायाभिक्रमणानुवादेन कुम्भीसाहित्यमेवाश्रयितासम्बन्धेन धीयते । प्रकरणानुमितवाक्य इव होमानुवादेन दाधिविधिः । निपातोपसर्गाणाञ्च परस्परान्वयस्य व्युत्पन्नत्वात् न कुम्भी तत्साहित्यञ्चेति अनेकविधानकृतवाक्यभेदोऽपि । 'कुंभीभि'रिति बहुवचनञ्च प्रकरणात् "सुपां सुपो भवन्ती"त्येवं द्वित्वलक्षणार्थं सदनुवादः । कुंभीनाञ्च सान्नाय्याङ्गत्वात् अभिक्रमणमपि त

१. पा. सू. ८-४-३. २. प्राप्तावपि ३. आप. श्रौ. २-१६-१७

द्धोमसाधनमित्येवं विधेयसामर्थ्यादवगम्यते। अत एव पुरोडाश-प्रचारोत्तरकालत्वाद्यनुवादः। स्रुचामधोधारणस्य चेडावदानाव-धि निषिद्धत्वात् योग्यतयैवान्यस्मै दाने प्राप्ते कर्मकरत्वादग्नीधे दानमनूद्यते। अतश्च प्रस्थानस्य प्रणयनादिवदवान्तरप्रकरणाभा-वेऽपि वाक्येनैवाश्रयत्वं नानुपपन्नम्। सहत्वस्य चाधिकरणापे-क्षायां कुंभी अपि तेनैव लभ्येते इति न किञ्चिदनुपपन्नम्।

एवं सङ्क्रमवाक्येऽपि लोकप्रसिद्ध एव संक्रमणे फलार्थं विहिते किमर्थं क्वेत्यपेक्षायां भवदेवलिखितोन्नीतवचनवशेन होमार्थं आहवनीयदेश इत्यवगम्यते। न च तस्य नित्यवत् प्रा-प्तत्वात् "ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेर"न्नितिवदुभयप्राप्तौ क्रियाफलसम्बन्ध एव युक्त इति शंक्यम्। तत्र हि उभयोः स्वरूपेण नित्यवत् प्राप्तिवत् फलस-म्बन्धेनापि द्वयोः अप्राप्तेः युक्तो भावार्थाधिकरणन्यायेन क्रिया-फलसम्बन्धः। प्रकृते तु द्वयोः स्वरूपेण प्राप्तिवदन्नाद्यफलेऽपि क्रियायाः सार्वकाम्यवाक्येन प्राप्तत्वादप्राप्तगुणविनियोग एव विधिसंक्रमणात् युक्त इन्द्रियकामाधिकरणन्यायेन गुणफलसम्ब-न्ध इति न संज्ञोपबन्धस्य भेदकत्वम्।

## सू—समाप्तिरविशिष्टा ॥ २–३–११. ॥

या च क्रियात एव फलप्राप्तिर्दृष्टा न गुणात् इत्युक्तं तद्गुणाद-पि दध्यादेः फलप्राप्तिरविशिष्टैव दृष्टेति न किञ्चिदनुपपन्नम्।

तस्मात् गुणस्यैव युक्तत्वात् युक्तं गुणस्य भावनाभेदक-त्वम्। प्रयोजनं स्पष्टम्।

इति चतुर्थं दाक्षायणयज्ञाधिकरणम्।

अथ पञ्चमं ईषालम्भाधिकरणम् (५) ॥

सू–संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्॥२–३–१२.॥(पू)

( विषयसंशयौ )

अनारभ्य श्रुतम्(१)–"वायव्यं श्वेतमालभेत भूतिकामः" "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इति । तथा दर्शपूर्णमासयोः 'ईषामालभेत, 'चतुरो मुष्टीन् निर्वपेत्' इति तत्र दार्शपौर्णमासिकेषालम्भचतुर्मुष्टिनिर्वापानुवादेन श्वेतचर्वादिगुणौ विधीयेते, उत यावदुक्ते आलम्भानिर्वापरूपे कर्मान्तरे गुणफलयुक्ते, उत यागरूपे ? इति सन्देहः ।

( सङ्गतिः )

अनिश्चितविधेयताकस्य देवतादेर्गुणस्य भेदकत्वविचारात् पादाध्यायसङ्गतिः । धात्वर्थमनूद्य गुणमात्रविधानस्य पूर्वाधिकरणोक्तस्यापवादात् अनन्तरसङ्गतिः ।

( प्रथमपूर्वपक्षः )

तत्र गुणमात्रविधिसम्भवे विशिष्टविधिगौरवस्य अश्रुतयागकल्पनस्य चान्याय्यत्वात् श्वेतचर्वादिगुणस्य चोपादेयत्वेन दूरस्थालम्भाद्यनुवादेनापि 'यदाहवनीये जुहोति' इतिवत् विधातुं शक्यत्वात् पूर्वाधिकरणन्यायेनात्रापि गुणमात्रविधानम् । न च फलस्य अनुपादेयस्य सत्वात् कर्मान्तरत्वोपपत्तिः । अनुपादेयान्वयस्य विधेयस्यैव वक्ष्यमाणरीत्या प्रकरणान्तरन्यायोपयोगित्वेन प्रकृते तदभावनाभेदकत्वात् । प्राप्त एव दार्शपौर्णमासिकयोः आल-

१ तै. सं. २–१–१.

म्भनिर्वापयोः सार्वकाम्यवाक्येन प्रयोजकत्वाख्यो भूत्यादि-फलसम्बन्धः । अतो भूतिकामादिपदं अनुवादः । धातु-र्लक्षणया आलम्भनिर्वापविशेषपरत्वतात्पर्यग्राहकः ।

अत एव होमस्य विहितत्वघटितदेवतैकसाध्यत्वेन लोके अभावात् युक्तं तदनुवादेनाहवनीयविधानम् । आलम्भादेस्तु लोकेऽपि सत्त्वेन हिरण्यधारणवत् दार्शपौर्णमासिकस्यैवेहानुप-स्थितेर्न तदनुवादेन गुणविधिरित्यपास्तम् । (१)"यावतोऽश्वान् प्रतिगृह्णीयात्" इत्यत्र विधिरूपतात्पर्यग्राहकानुरोधेन धातोर्वैश्वदा-नलक्षकत्ववत् प्रकृतेऽपि फलपदतात्पर्यग्राहकानुरोधेन वैधाल-म्भादिलक्षकत्वोपपत्तेः ।

न चैवमपि अनेकगुणश्रवणात् गुणात् कर्मान्तरत्वापत्तिः। एकस्यैव गुणस्य विधेयत्वेन विधेयगुणानेकश्रवणाभावेन तद-नापत्तेः । आलम्भानुवादेन हि ईषायां श्वेतगुणमात्रं कर्तव्य-तया विधीयते । वायव्यपदं तु सर्ववनस्पतीनां अर्थवादतो वा-युदेवताकत्वसंस्तवात् ईषाद्रव्यपरत्वेनानुवादः । निर्वापानुवादे-न च चरुमितिपदेन लक्षणया स्थाली अधिकरणत्वेन विधीयते। प्राकरणिकश्रौतशूर्पावरोधाद्वा तत्प्रातिपदिकेन स्थालीपरिमितं लक्षणया विधीयते । पञ्चशरावमोदनमितिवच्च स्थालीपरि-मितव्रीहिजातस्यैव चतुर्भिर्मुष्टिभिः निर्वापोपपत्तिः । सौर्यमि-ति चाग्नेयस्यैव द्रव्यस्य तेजोदेवत्यत्वसामान्यादनुवादः ।

अथ वा आलम्भाद्यनुवादेन वाय्वादिदेवताविधिरेव ग्रहण इवेन्द्रवाय्वादेः । श्वेतचरुशब्दौ तु जघन्यौ प्रायिकत्वात् चरु-साधकत्वाच्चानुवादौ ।

अथ वा वाय्वादिदेवतासम्बन्धस्य उत्पत्तिशिष्टाग्न्याधव-

१. तै. सं. २-३-१२.

रुद्धाग्नेयादियागोपपाद्यत्वानुपपत्तेः फलपदस्वारस्यानुरोधेन च फलोद्देशेन श्वेतचरुगुणौ विधीयेते। वायव्यादिपदं तु सर्वपदार्थानां सूर्यवायुसंबन्धादनुवादः। फलार्थमाङ्मुखत्वस्य भोजनमिव आलम्भादि रागप्राप्तमपि आश्रयत्वेन सम्बध्यते। सर्वथा न कर्मान्तरम्।

सूत्रं तु अप्रकरणे यो गुणः सोऽपि न कर्मभेदकः एकगुणसंक्रान्तशक्तित्वेन विधेः कर्मशब्दत्वाभावात्, कर्मान्तरत्वे अविनियुक्तद्रव्यकत्वेन लोकप्रसिद्धसंस्कारत्वानुपपत्तेश्च इति व्याख्येयम्।

## सू-यावदुक्तं वा कर्मणः श्रुतिमूलत्वात॥२-३-१३॥ (पू)

### ( द्वितीयपूर्वपक्षः )

नात्रालंभाद्यनुवादेन गुणविधिः, तथात्वे फलपदस्य स्वार्थस्य वाक्यार्थान्वयाभावेन अविवक्षितार्थकत्वापत्तेः। अश्वप्रतिग्रहेष्टौ तु वाक्यभेदापत्तेः तथाङ्गीकरणमदोषः। एवञ्च आलम्भादेः लौकिकस्यापि सत्वात् दार्शिकस्यैवानुवादे प्रमाणाभावः।

न चाश्वप्रतिग्रहविधिरपि तत्तात्पर्यग्राहकः इति शङ्क्यम्। तथाङ्गीकारेऽपि विधायकाभावेन गुणविधानानुपपत्तेः। अतो दार्शिकस्यैवालम्भादेः विशेषत उपस्थित्यभावात् न तदनुवादेन गुणविधिः।

नापि गुणफलसम्बन्धः; आलम्भादेः प्रकरणाभावेनाश्रयत्वानुपपत्तेः। भोजनस्य तु पूर्वोत्तरभाविनिषेधाविषयत्वेन उपस्थितत्वात् आश्रयत्वोपपत्तिरित्युक्तं व्याकरणाधिकरणे। अतो

गुणफलरूपानेकगुणोपादानात् प्रकरणान्तराच्च कर्मान्तरमेवाल-म्भनिर्वापरूपगुणविशिष्टं फलोद्देशेन विधीयते। वायुसूर्यावपि च अस्मिन् पक्षे तत्कालोच्चार्यत्वसम्बन्धेन क्रियान्वयं प्रतिपद्येते। उच्चार्यत्वापरपर्यायमुद्देश्यत्वमेव च देवतात्वं, न त्यज्यमानद्रव्योद्दे-श्यत्वं, गौरवात्। अतो देवतात्वस्य यागाक्षेपकत्वाभावात् यागक-ल्पनेऽपि प्रमाणाभावः। अतो यावदुक्तं विधानमेवेदं, न तु गुणमा-त्रस्य। एवं हि कर्मणो धात्वर्थस्य पदश्रुतिमूलकं विधानमादृतं भवतीति सूत्रार्थः॥

## सू—यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्म-सम्बन्धात्॥ २–३–१४.॥ (सि)

### ( सिद्धान्तः )

नेदं श्रौतधात्वर्थविधानम्; तथात्वे उपक्रमस्थदेवतात्ववा-चितद्धितानुपपत्तेः। न चोद्देश्यत्वमेव देवतात्वम्, सूक्तभाजो ह-विर्भाजश्च देवता इति स्मृत्या वैदिकव्यवहाराच्च स्तुतिभाक्त्वरूप-देवतात्ववत् त्यज्यमानहविरुद्देश्यत्वस्यैव देवतात्वात्। अत एव ब्राह्मणोद्देशेन पक्केऽप्यन्ने तदुद्देशेनात्यक्ते देवतात्वाप्रसिद्धिः। अत एव द्रव्यरूपहविस्संयोगाद्धविर्भोक्तृत्वरूपमेव देवतात्वमत्र तद्धितार्थः। तस्या यागैकघटितत्वाद्यागापेक्षायां प्रमाणान्तरे-ण तस्याप्राप्तत्वादनेनैव वाक्येन विधेयत्वप्राप्तौ अध्याहारापेक्ष-या लक्षणायाः लघुत्वात् धातुना यागो लक्ष्यते। शक्यार्थस्तु प्रमा-णान्तरप्राप्तत्वादनूद्यते। लाक्षणिकपदोपादानप्रयोजनञ्च निर्व-पत्यादिधातुमद्वाक्यसम्बन्धित्वरूपप्रकृतिसादृश्यसिद्धिः। याग-विधिप्रकारश्चास्माभिः अनागतावेक्षणन्यायेन आग्नेयाधिकरण

एव प्रदर्शितः । तस्मात् फलोद्देशेन द्रव्यदेवताविशिष्टयागभावना-विधिरेवायमिति युक्तमेवात्र गुणस्य भेदकत्वम् ॥

सूत्रं तु द्रव्यस्य भोक्तृपदवाच्यदेवतायाश्च संयोगाद्याग एवात्र विधीयते । सोऽपि च फलसंयोगादर्थकर्मत्वेन । एवेषां द्रव्यफलभोक्तॄणां यागगतार्थकर्मत्वेन व्याप्तत्वात् इति व्याख्येयम् । यद्यपि चात्र द्वितीयपूर्वपक्षवादिना न संस्कारकर्मत्वमङ्गीक्रियते, तथापि प्रथमपूर्वपक्षवादिना तदङ्गीकरणात् स्वानभिमतत्वसूचनार्थं सिद्धान्ते अर्थकर्महेतुतया फलग्रहणम् ॥

## सू—लिङ्गदर्शनाच्च ॥ २–३–१५. ॥

(१)"सोमारौद्रं घृते चरुं निर्वपेत्" इति प्रकृत्य"(२)परिश्रिते याजये"दिति गुणविधिपरे वाक्ये यजिश्रवणं द्रव्यदेवतासम्बन्धात् यागानुमितिमुपोद्बलयति । प्रयोजनं स्पष्टम् ॥

इति पञ्चममीषालम्भाधिकरणम् ॥

### अथ षष्ठं वत्सालम्भाधिकरणम् (६) ॥

## सू—विशये प्रायदर्शनात् ॥ २–३–१६. ॥ (सि)

### ( विषयसंशयौ )

अग्निहोत्रे दोहाधिकारे "वत्समालभेते" ति श्रुतम् । तत्र किं अग्नीषोमीययागानुवादेन वत्सविधिः ? उत अग्निहोत्रहोमाङ्गत्वेन वत्सद्रव्यकयागविधिः ? उत वत्ससंस्कारार्थत्वेनालम्भमात्रविधिरिति । अत्रापवादिकी अनन्तरा प्रकृतिः ।

१. तै. सं. २–२–१०–१. २. तै. सं. –२–२–१०–२.

( प्रथमपूर्वपक्षः )

तत्र वेदप्रयुक्तालभते "ईषामालभेते" इत्यादौ स्पर्शमात्रवाचित्वेऽपि दैक्षादिवाक्येषु प्राणिसंयोगेन यागवाचित्वावगमात् नात्रार्थमाप्तालम्भविधिर्युक्तः। इष्यते च धातूनामनेकार्थत्वात् गमनार्थकस्यापि गमेः स्त्रीसंयोगे मैथुनार्थकत्वम्। अतो यागार्थकस्यालभतेः प्रकृतहोमानुवादकत्वेऽपि प्रकृतिभूताग्नीषोमीययागानुवादकत्वात् तदनुवादेन विनियोगभङ्गकल्पनयापि वत्सविधिः। वाक्यीयवत्सजात्या मान्त्रवर्णिकच्छागजातिबाधेन विकल्पेन वा वत्सविधिरिति—प्रथमः पक्षः।

( द्वितीयपूर्वपक्षः )

द्वितीयस्तु—नालभतिर्यागवाची। स्पर्शवाचकस्यैव दैक्षादिवाक्ये देवतापदसमभिव्याहारेण यागलक्षकत्वाङ्गीकारात्। अतश्च 'वत्समालभेते' इत्यत्रापि "पूषासीति वत्समुपावसृजती"ति विनियुक्तमन्त्रवर्णकल्प्यदेवताबलेनापारव्ययागकल्पनोपपत्तेरपूर्वयागलक्षकत्वमेव।

अत्र हि नोपावसर्जने मन्त्रविधिः। तथात्वे तस्यापि मान्त्रवर्णिकदेवताकल्पनया यागरूपत्वापत्तेः। अतो विशिष्टविधिगौरवपरिहारार्थं 'वत्समालभेते' इत्यत्र विहितस्यैव यागस्य मान्त्रवर्णिकदेवताकल्पनफलकमन्त्रमात्रविध्युपगमात् उपावसृजतिरपि यागलक्षणार्थं इत्यवगम्यते। अतश्च वत्सद्रव्यकः पूषदेवताकाग्नीषोमीयप्रकृतिको यागोऽग्निहोत्राङ्गत्वेन विधीयते इति।

( सिद्धान्तः )

सिद्धान्तस्तु—पूषासीत्यस्य पुष्टिगुणयोगेन अदन्तकत्वेन वा (१)पुरोवस्थितवत्सपरामर्शकत्वोपपत्तेः शक्योपावसर्जनाङ्गत्वेनैव

१. पूर्वोपस्थित।

मन्त्रविध्यवसायात् न यागकल्पकत्वोपपत्तिः । अतश्च द्वितीयया वत्समुद्दिश्य उपावसर्जनविधिवत् आलम्भाख्यसंस्कारविधिरेवायम् । एवं च संस्कारविधिप्रायपाठोऽप्युपपन्नो भवति । न च उपावसर्जनेनैव स्पर्शाख्यस्यालम्भस्यार्थप्राप्तत्वात् न विध्युपपत्तिरिति वाच्यम् । धेनुविनियोगाख्योपावसर्जनेन धेनुसमीपधारणफलकाध्वर्युकर्तृकस्पर्शस्य नियमेन प्राप्त्यभावात् ।

नचैवं दोहनानुपपत्तिः, तस्यान्यकर्तृकत्वेन बाधकाभावात् । अतो वत्ससंस्कारार्थत्वेनालम्भविधिरेवायम् ॥

सूत्रं विशये संशये संस्कारप्रायपाठदर्शनान्निर्णय इति व्याख्येयम् ।

## सू–अर्थवादोपपत्तेश्च ॥ २–३–१७. ॥

"वत्सनिकान्ता हि पशवः" इत्यर्थवादे पशूनां वत्सप्रियत्वात् समीपधारणफलकस्पर्शेन प्रस्नवनं जायत इति स्तुतिरालम्भविधित्वे सत्युपपद्यते न यागपरत्वे ।

प्रयोजनं स्पष्टम् । अत्र च सिद्धान्ते दार्शपौर्णमासिकेपालम्भादयमालम्भः संस्कार्यरूपानुपादेयगुणयोगात् प्रकरणान्तरन्यायेन कर्मान्तरमिति सिद्ध्यति । ततश्च वत्साख्यगुणस्यानिश्चितविधेयताकस्य भेदप्रयोजकत्वात् पादसङ्गतिरध्यायसङ्गतिश्च ॥

इति षष्ठं वत्सालम्भाधिकरणम् ॥

——:०:——

## अथ सप्तमं चरूपधानाधिकरणम् (७)॥

### सू–संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ (सि) ॥ २–३–१८. ॥

( विषयसंशयौ )

अग्नौ "नैवारश्चरुर्भवति, बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इत्युक्त्वा 'चरुमुपदधाति' इति श्रुतम् । तत्र किं चरुद्रव्यं बृहस्पतिदेवता च भावनाधात्वर्थयोर्भेदिका उत नेति संशयः ।

( सङ्गतिः )

तत्र पूर्वपक्षे नैवारवाक्ये चरुरूपस्य द्रव्यस्य आर्थवादिकस्याश्च बृहस्पतिदेवताया रात्रिसत्रन्यायेन विधेयत्वात्, सिद्धान्ते चाविधेयत्वात् अनिश्चितविधेयताकस्य द्रव्यदेवताख्यस्य गुणस्य भेदकत्वनिरूपणात् पादाध्यायसङ्गतिः । अनन्तरा तु पूषासित्यस्य द्रव्यपरत्वेनैव उपपत्तेः न मान्त्रवर्णिकदेवताकल्पनद्वारा यागपरत्वनिश्चायकत्वम् । प्रकृते तु अर्थवादस्थबृहस्पतेरन्यपरत्वासम्भवात् आर्थवादिकदेवताकल्पनावश्यम्भावेन यागकल्पनोपपत्तेर्युक्ता भेदकतेति पूर्वपक्षोत्थानात् द्रष्टव्या ।

( पूर्वपक्षः )

तत्र नैवारवाक्ये तावत् भवत्याक्षिप्तायां नैवारकार्मिकायां भावनायां अप्राप्तिवलभ्यविधिना विहितायां चरोः प्रयोजनाकाङ्क्षत्वात् भावनायाश्चावच्छेदकधात्वर्थापेक्षत्वात् किंचिद्धात्वर्थकल्पनमावश्यकम् । न च उपधानमेव स इति शङ्क्यम् । उपधानं प्रति चरोर्द्वितीयया संस्कार्यत्वावगमेन करणत्वासम्भवात् । अतः उपधानभावनातो भिन्नैवेयं चरुद्रव्यकयागकरणिका भावना ।

नचैवमपि देवताभावात् यागत्वप्रत्यायकाभावः । अर्थवादे बृहस्पतेः षष्ठ्या नीवारसम्बन्धावगमात् सम्बन्धान्तरासम्भवेन देवतात्वस्यैवागतेः तस्य यागं विनानुपपत्तेः यागत्वप्रत्ययात् । तैत्तिरीयशाखायान्तु "बार्हस्पत्यो भवती" त्येवं तद्धितान्त एवार्थवादः श्रुत इति देवतात्वावगतिः स्पष्टैव । अतो द्रव्यदेवतासम्बन्धानुमितो याग एवाग्नेयप्रकृतिको विधीयते । 'चरुमुपदधाती'ति तु स्विष्टकृदादिप्रतिपत्तिबाधेन प्रतिपत्त्यन्तरविधिरिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—सर्वत्र विध्यपेक्षित एवार्थोऽर्थवादोन्नीतविधिना विधीयते, न त्वनपेक्षित इति स्पष्टं पर्णतादौ । प्रकृते च नैवारवाक्ये यद्यपि नैवारचरुविशिष्टभावनाविधिस्स्यात् तथापि तस्याः प्रयोजनाद्याकाङ्क्षायामुपधानस्यैव श्रुतस्य तत्त्वेनान्वयोपपत्तेः नार्थवादो देवतादिकल्पनायै प्रभवति । नचैवं चरोर्द्वितीयान्तत्वानापत्तिः । उपदधातेस्सकर्मकत्वेन चरुमिति द्वितीयाया अनीप्सितकर्मत्वेनाप्युपपत्तेः ।

वस्तुतस्तु एतादृशविषये सक्तुष्विव करणत्वलक्षणाया आवश्यकत्वात् वाक्यद्वयेऽपि विधिगौरापत्तेश्च नैवारवाक्येऽपि नीवारमात्रमेव प्रकृतित्वसम्बन्धेन चरुकर्मकभावनानुवादेन विधीयते । उपधानवाक्ये तु चरुसंस्कारकत्वेन विहितमप्युपधानं संस्कारविध्यन्यथानुपपत्त्या "अध्वर्युं वृणीत" इतिवत् चरोस्सामर्थ्यात् कर्मोपयोगिस्थण्डिलनिष्पत्त्यर्थत्वेन उपयोगं कल्पयति । अतश्च सामर्थ्यकल्पितेन विधिना चरुभावनायाः प्राप्तत्वात्तदनुवादेन नीवारमात्रविधिर्नानुपपन्नः ।

न च स्थण्डिलनिष्पत्तेः श्रौतेष्टकावरुद्धत्वात् कल्पितचरुसा-

ध्यत्वानुपपत्तेरर्थकर्मैवेदमुपधानं चयनप्रदेशे विधीयते इति केषां-
चिदुक्तं युक्तम् । चरोर्मन्त्रदेवोक्तविधया इष्टकासन्धिपूरणार्थतया
विधेयत्वेनेष्टकाविरोधित्वाभावात् । अन्यथा अर्थकर्मत्वपक्षेऽपि
आनुषङ्गिक्याः स्थलनिष्पत्तेरावश्यकत्वेनेष्टकाविरोधस्य दुष्परि-
हरत्वात् । अतश्च श्रौतकर्मत्वत्यागे प्रमाणाभावात् चरुविनि-
योगविधिकल्पनात् तदनुवादेन नीवारमात्रविधिरेव युक्तः ।
अतश्च विधेर्देवतानाकाङ्क्षत्वात् नार्थवादतस्तत्कल्पनम् ।

अत एव यत्रापेक्षा तत्रैव तत्कल्पनमिष्टम्, यथा–पूर्णा-
हुतिविधिवाक्यशेषे "अन्नादं वा एतमात्मनो जनयते यदग्नि"मि-
ति (१)वाक्यशेषे अग्नेः । प्रकृते त्वनपेक्षत्वात् न तत्कल्पनमिति
विशेषः । अत एव 'मुन्यन्नं ब्राह्मणस्योक्तम्' इत्यादिस्मृतिपर्या-
लोचनया बृहस्पतेर्ब्राह्मणस्य मुन्यन्नभूता नीवारा अन्नमिति
अर्थवादो व्याख्येयः । तैत्तिरीयशाखास्थार्थवादगततद्धितोऽपि
अनेनैव सम्बन्धेन व्याख्येयः । न तु देवतात्वपरः । देवता-
त्वस्य त्यज्यमानद्रव्योद्देश्यत्वे सति विहितत्वपर्यन्तस्य वृद्धव्य-
वहारसिद्धतया विधिसमभिव्याहाराभावेऽप्रतीतेः । न च य-
दाग्नेयादिवाक्य इव विधिकल्पनम् । विध्यन्तरैकवाक्यताभङ्गभ-
येन तदनुपपत्तेः। अतो न नैवारवाक्ये यागो, न वा तत्करणकं
भावनान्तरमिति सिद्धम् । प्रयोजनं स्पष्टम् ॥

सूत्रं तु स्थलनिष्पत्तिरूपार्थोन्नायकेन शब्देनोपदधातिना
संयुक्तः चरुः स्थलनिष्पत्त्यर्थ एव, तादृशप्रयोजनोन्नायकशब्दसं-
योगस्य श्रौतत्वादिति व्याख्येयम् ॥

इति सप्तमं चरूपधानाधिकरणम् ॥

---

१. वाक्यशेषात् ।

## अथाष्टमं पात्नीवताधिकरणम् (८) ॥

### सू—पात्नीवते तु पूर्वत्वादवच्छेदः ॥ २–३–१९. ॥(सि)

( विषय संशयौ )

"त्वाष्ट्रं पात्नीवतमालभेते" अनेन यागं विधायाम्नायते-"पर्यग्निकृतं पात्नीवतमुत्सृजती"ति । तत्र कर्मान्तरविधिः ? उत पूर्वस्मिन् यागे गुणमात्रविधिरिति चिन्त्यते ।

( पूर्वपक्षः )

पत्नीवद्देवतालक्षणस्य गुणस्यानिश्चितविधेयताकस्यैव भेदकत्वविचारात् पादाध्यायसङ्गतिः । पूर्वत्रार्थवादस्थतद्धितस्य देवतापरत्वे निरस्ते विधिस्थस्य (१)तस्य निस्सन्दिग्धस्य देवतापरत्वोपपत्तेः यागानुमापकत्वोपपत्तिरिति पूर्वपक्षोत्थानात् अनन्तरा च ।

तत्र यद्यपि पूर्वयागोपस्थापकं प्रकरणमस्ति तथापि तस्य पत्नीवद्देवत्यत्वाऽसम्भवात् कर्मान्तरत्वम् । तथा हि—

न तावत् पत्नीवद्देवत्यताऽनूद्यते । पूर्वयागस्य त्वष्टृपत्नीवद्देवत्यत्वेन शुद्धपत्नीवद्देवत्यत्वाप्राप्तेः । अतश्च यथैवा "ग्रेयं चतुर्धा करोती" त्यत्र तद्धितसामर्थ्यभङ्गभयेन नाग्नीषोमीयादेः ग्रहणं तथा प्रकृतेऽपि । न च (२) "पत्नीवंतं ग्रहं गृह्णामी" त्यत्र मन्त्रवर्णोपात्ताग्निपरत्वस्येव पत्नीवच्छब्दस्य यौगिकत्वात् विशेष्यापेक्षायां उत्पत्तिवाक्यावगतत्वष्ट्राख्यविशेष्यपरत्वोपपत्तेः अविरोधेनानुवादोपपत्तिरिति वाच्यम् । पत्नीवच्छब्दस्याश्वे वाजिशब्दस्येव देवताविशेषे रूढत्वेन विशेष्यानपेक्षत्वात् "पात्नीव-

---

१. तस्य निस्सन्दिग्धस्य । २. तै. सं. १-४-२७.

तं गृह्णावी" त्यादौ तु अनन्यगतिकमन्त्रवर्णानुरोधेन यौगिकत्वा-ङ्गीकरणम् । प्रकृते तु "वाजिभ्यो वाजिन" मितिवत् कर्मान्तर-त्वेनाप्युपपत्तेः तात्पर्यग्राहकाभावेन रूढित्यागे न किञ्चित्कार-णमस्ति । अतो न तावत् पत्नीवद्देवत्यताऽनूद्यते ।

नापि पूर्वत्रैव यागे विधीयते । उत्पत्तिशिष्टत्वष्ट्रविरोधात् । अतो वाजिनवदेव गुणाद्देवताविशिष्टयागान्तरविधानम् ।

किञ्च यागान्तरविधानाभावे किं त्वया विधेयम् ? न तावत् स एव यागः, प्राप्तत्वात् । नापि तत्र देवतान्तरम्, उत्प-त्तिशिष्टत्वष्ट्रविरोधात् । नापि पर्यग्निकरणम् , तस्यातिदेशप्राप्त-त्वात्, नापि पर्यग्निकरणोत्तरकालतोत्सर्गे, तस्या अप्यतिदेशे-नैव लाभात् । नापि पर्यग्निकरणाव्यवहितोत्तरकालता त्यागाख्ये उत्सर्गे, निष्ठासंज्ञकक्तप्रत्ययस्य व्यवहिताव्यवहितसाधारण्येन भू-तकालमात्रवाचित्वेऽपि उत्तरकालताया एवात्र लक्ष्यत्वोपपत्तेः अतिदेशानुरोधेन कथंचिद्व्यवहितकालक्षणेऽपि अव्यवहितो-त्तरकालतालक्षणायां प्रमाणाभावात् । न चैतद्वाक्यानर्थक्यम्, कर्मान्तरविधायकत्वेनाप्युपपत्तेः ।

एतेन प्राजापत्येषु "तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसा-म्न्यालभते" इतिवदानन्तर्यलक्षणामप्यङ्गीकृत्य पर्यग्नि-करणोत्तरकालीनानामङ्गानामुत्सृजतिनाऽऽनन्तर्यनिषेधः क्रि-यत इत्यप्यपास्तम् । तत्र हि देवताभावेन कर्मान्तरविधानानु-पपत्तेः ब्रह्मसामादिकालविधानाच्च सर्वाङ्गप्रतिषेधानुपपत्तेः युक्तः पर्यग्निकरणानन्तर्यप्रतिषेधः, प्रकृते तु कर्मान्तरविधायित्वेनो-पपत्तौ न लक्षणाङ्गीकारे प्रमाणमस्तीति वैषम्यम् ।

न चैवमपि गृहमेधीयाज्यभागन्यायेनापूर्वताज्ञापनद्वारा इत-राङ्गपरिसंख्याफलकः पर्यग्निकरणमात्रविधिः तदन्ताङ्गकलाप-

विधिर्वास्त्विति वाच्यम् । "आज्यभागौ यजती"त्यनेन हि अनुष्ठेयत्वेन प्रतीतयोस्तयोः प्रमाणान्तरमन्तरेणैव गृहमेधीयाङ्गत्वावगतेर्युक्तं नैराकाङ्क्ष्यापादनमुखेनेतराङ्गप्रापकप्रमाण्यपरिलोपकत्वम् । प्रकृते तु निष्ठायोगेन पर्यग्निकरणस्य प्रमाणान्तरेण नित्याङ्गभावप्रतीतेः अतिदेशव्यतिरेकेण चात्र प्रमाणान्तराभावात् तत्परिलोपकत्वानुपपत्तिः । तदन्ताङ्गकलापस्य तु वाचकपदाभावात् विधिर्दूरापास्त एव । तस्मात् द्रव्यदेवतासम्बन्धकल्पितयागान्तरविधिरेवायम् । पर्यग्निकृतशब्दस्तु "आग्नेयं सवनीयं पशु"मित्यत्र पशु(१)शब्द इवानुवादः प्रकृतिप्राप्तत्वात् । अतो यागान्तरमेवेदम् । त्वाष्ट्रप्रकृतितयाऽग्नीषोमीयपशुप्रकृतितया दर्शपूर्णमासप्रकृतितयैव वा विधीयते इति प्राप्ते—

अभिधीयते—नात्र कर्मान्तरविधिः, पूर्वस्यैव प्रकरणेन प्रत्युभिज्ञानात् । न च पत्नीवद्देवत्याऽनुवादानुपपत्तिः, सत्यप्युत्पत्तिवाक्ये त्वष्टृपत्नीवतोः अग्नीषोमादिवद्यासङ्ग्यन्नात्तिदेवतात्वे(२) मनोतास्थाग्निशब्दस्येव पत्नीवच्छब्दस्यापि लक्षणया देवतापरत्वोपपत्तेः । "आग्नेयं चतुर्धा करोती"त्यत्रापि यदि प्रकरणे केवलोऽग्नि र्न स्यात् ततोऽग्नीषोमौ लक्षयेदेव; केवलाग्नेयसत्त्वात्तु न लक्षणेति स्पष्टं तदधिकरणे ।

वस्तुतस्तु पत्नीवच्छब्दस्य यौगिकत्वाद्विशेष्यविशेषापेक्षायां पात्नीवतग्रहे मन्त्रवर्णोपात्ताग्नेरिवालोत्पत्तिवाक्यावगतत्वष्टुरपि ग्रहणोपपत्तेः न लक्षणा; न वाश्विनाञ्जिशब्दानामिव पत्नीवच्छब्दो न यौगिकः, रूढिकल्पने प्रमाणाभावात्, किमुत यदोत्पत्ति-

१. शब्दस्येव २. "त्वꣳ ह्यग्ने प्रथमो मनोता" इति अग्नीषोमीयपशुयागप्रकरणगतमन्त्रस्थाग्निशब्दस्य केवलस्याप्यग्नीषोमलक्षकत्वं यथा तद्वत् पत्नीवच्छब्दस्य त्वष्टृपत्नीवदुभयलक्षकत्वोपपत्तिरित्यर्थः ।

वाक्य एव पृथक्तद्धितश्रवणात् 'अग्नये शुचये' इतिवत् सत्यप्यधिष्ठानैक्ये देवतात्वभेदावगतेः पत्नीवतोऽपि पृथगस्त्येव देवतात्वम्, तदा पत्नीवच्छब्देन तन्मात्रानुवादे न कश्चिद्विरोधः ।

नचैवं देवतात्वभेदे एकार्थत्वाद्विकल्पापत्तिः, द्वयोरप्येकवाक्योपादानात्'अग्नये शुचय' इतिवदेव पार्ष्ठिकान्वयावगतेः पत्नीवच्छब्दस्य विशेष्यसापेक्षत्वेन च समुच्चयप्रतीतेः । अतश्च सत्यपि समुच्चये डित्थडवित्थमातर्यपि मातृत्वस्य प्रत्येकवृत्तित्वात् डित्थमातेति प्रयोगवत् समुच्चितोभयदेवत्येऽपि पात्नीवतपदव्यपदेशोपपत्तिः । अतश्च भेदकप्रमाणाभावात् पूर्वयागानुवादेनैवात्र गुणमात्रविधिः, लाघवात् । गुणोऽपि च नात्र पर्यग्निकरणमात्रम्, अपि तु क्तप्रत्ययान्तपदावगतं कृतपर्यग्निकरणत्वम् । तस्य च पूर्वाङ्गेष्वकृतेषु असम्भवात् तान्याक्षिप्यन्ते इति फलतः पर्यग्निकरणान्ताङ्गकलापो विधीयते । तस्य च भेदकप्रमाणाभावेन प्राकृतस्यैव विधेयत्वात् अतिदेशेन सम्भवत्प्राप्तिकत्वेऽपि क्लृप्तोपकारत्वेन ततः पूर्वमेव गृहमेधीयाज्यभागन्यायेन विधानावगतेः तावतैव क्रतुप्रयोगविधेर्नैराकांक्ष्यापादनेनातिदेशकल्पनप्रतिबन्धात् उत्तराङ्गव्यावृत्तिफलकत्वोपपत्तिः ।

नचाज्यभागयोः अनुष्ठेयतया प्रतीतयोः प्रमाणान्तरं विनापि गृहमेधीयाङ्गत्वप्रतीतेः अतिदेशप्रतिबन्धकत्वोपपत्तावपि पर्यग्निकरणान्तत्वस्य क्तप्रत्ययेन प्रमाणान्तरविहितत्वावगतेःअतिदेशोपजीवित्वेन तत्प्रतिबन्धकत्वानुपपत्तिः इति वाच्यम् ।(१)प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादौ प्रमाणान्तरमन्तरेणापि वि-

१. 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती'त्यत्र प्रमाणान्तरेणाप्राप्तस्य प्रोक्षणस्याङ्गत्वालूखलमुसलाङ्गत्वेन विधीयमानत्वेऽपि क्तप्रत्ययप्रयोगदर्शनादित्यर्थः ।

धानदर्शनात् । निष्पन्नत्वप्रतीतिस्तु एतद्विधिविधानोत्तरकालीनावस्थाऽभिप्रायेण । विस्तरेणचैत(१)न्नवमे "पर्यग्निकृतानारण्यानुत्सृजती"त्यत्र निरूपयिष्यते । नचैवं पौनरुक्त्यापत्तिः,तत्र पर्यग्निकृतानुवादेन विशिष्टदेवतोद्देशनिरपेक्षोत्सर्गाख्यत्यागविधेराशङ्कितस्य देवतासंयोगाभावेन निरासात् । तस्मात् त्वाष्ट्रयागमेवोत्सृजतिनानूद्य पर्यग्निकरणान्ताङ्गरीतिर्विधीयते । पात्नीवतशब्दस्तु नित्यानुवादः ।

प्रयोजनं पूर्वपक्षे त्वाष्ट्रयागस्य ब्राह्मणतर्पणान्तमनुष्ठानं, पात्नीवतयागस्य च दर्शपूर्णमासस्थाग्नेयप्रकृतितया । सिद्धान्ते तु त्वाष्ट्रस्यैव पर्यग्निकरणान्तमिति ।

सूत्रं तु पात्नीवते पूर्वस्यैव त्वाष्ट्रस्य प्रत्यभिज्ञानात् तदन्ताङ्गकलापविधानेन फलतोऽवच्छेद एवोत्तराङ्गानामिति व्याख्येयम् ॥

इत्यष्टमं पात्नीवताधिकरणम् ॥

---

अथ नवममंश्वदाभ्याधिकरणम् ॥ (९) ॥

## सू—अद्रव्यत्वात्तु केवले कर्मशेषस्स्यात ॥ २-३-२० ॥

( विषयसंशयौ )

अनारभ्य श्रूयते(२) "एष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय यजते" इति, तथा(३)"परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाती"ति च । तत्र किं ज्योतिष्टोमोद्देशेन यागान्तरविधानमिदम् ? उत ग्रहान्तरविधानमिति ।

---

१. ९-४-१२. २-३. तै. सं. ३-३-४-२.

( सङ्गतिः )

पूर्वं पर्यग्निकृतवाक्ये यागानुवादेन गुणविध्यङ्गीकारात् यागान्तरविधौ निरस्ते तत्प्रसङ्गादिहापि तन्निराकरणादनन्तरसङ्गतिः ।

( पूर्वपक्षः )

तत्र न तावदत्र ग्रहणमात्रविधिश्शक्यते कर्तुम् । स ह्यंश्वदाभ्यपदयोर्नामधेयत्वमङ्गीकृत्य वा ? गुणपरत्वमङ्गीकृत्य वा ? नाद्यः, ग्रहणस्य संस्कारकर्मणः संस्कार्यावच्छेदेनैव व्यवच्छेदसिद्धेः नामधेयानपेक्षणात्, गृह्णातेः सकर्मकत्वात् नित्यं कर्मसाकाङ्क्षत्वेन तदभावे ग्रहणविधानानुपपत्तेश्च । अदाभ्यशब्दस्य हिंसाख्यदम्भानर्हद्रव्यवाचकत्वादंशुशब्दस्य निर्यासशक्तत्वेन नामधेयत्वानुपपत्तेश्च ।

नान्त्यः; अव्यभिचरितक्रतुसम्बन्धाभावेन द्रव्यमात्रोद्देशेन संस्कारविधानानुपपत्तेः । अदाभ्यवाक्ये यागविशिष्टद्रव्योद्देशे वाक्यभेदापत्तेश्च । ज्योतिष्टोमे सोमस्य देवतात्वेन अप्राप्तत्वात् तस्याः ग्रहणस्य च विधाने वाक्यभेदापत्तेश्च । देवताविशिष्टग्रहणविधाने क्तप्रत्ययान्तपदोत्तराम्नातायाः पूर्वान्वये विधौ समासपुनरात्तत्वरूपदोषापत्तेश्च ।

न च (१) "यत्ते सोमादाभ्यं नाम जागृवि तस्मै" इत्यादिमन्त्रवर्णादेव सोमदेवताया ग्रहणे प्राप्तत्वाद्विधिस्थसोमपदस्यानुवादत्वेन न समासपुनरात्तत्वदोष इति वाच्यम् । अंशौ "उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि" इति मन्त्रवर्णेन ग्रहणे देवतायाः प्राप्तत्वेऽपि अदाभ्ये "यत्ते सोमे"ति मन्त्रस्य स्वाहाकारान्तस्य होमलिङ्गकत्वेन ग्रहणलिङ्गकत्वाभावात् अत्र देवताप्रा-

१. तै. सं. ३-३-३-२.

प्त्यनुपपत्तेः । होम एव मान्त्रवर्णिकदेवतायाः प्राप्तिमङ्गीकृत्य सोमायेत्यस्यानुवादाभ्युपगमे ज्योतिष्टोमस्य व्यक्तत्वापत्तेश्च ।

अस्तु वोभयत्रापि ग्रहणे देवताप्राप्तिः । तथापि तदुपपादकस्य 'ऐन्द्रवायवं गृह्णाती'त्यत्रेव प्रकृतस्य यागस्याभावात् न ग्रहणे देवताविधिस्सम्भवतीति नात्र(१)ग्रहणविधिर्युक्तः । अत एव देवतारूपस्य गुणस्य ग्रहणेऽसम्भवन्निवेशस्य यागान्तरावेदकत्वात् पादाध्यायसङ्गतिः । देवतारूपस्य च गुणस्य सिद्धान्ते ग्रहणे विधेयत्वात्, पूर्वपक्षे च यागे विधेयत्वात् सन्दिग्धविधेयताकत्वम् । अतश्च अंश्वदाभ्यद्रव्यको याग एव गृह्णातिना विधीयते, अंश्वदाभ्यनामको वा । तत्तद्द्रव्यकत्वपक्षे तावत् अदाभ्यवाक्येऽदाभ्यपदेन हिंसानर्हद्रव्यमात्रप्रतीतावपि 'हविषा हविर्यजति' इत्यर्थवादादेव देवताभिन्नसोमप्रतीतिः । अतश्च सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य सोमद्रव्यको यागः मान्त्रवर्णिकदेवतासम्बन्धकल्प्यो गृह्णातिना लक्षयित्वा यजत्यभिहितज्योतिष्टोमाङ्गत्वेन विधीयते । सोमद्रव्यकत्वसादृश्येन ज्योतिष्टोमधर्मातिदेशा(२)च्च ग्रहणस्य प्राप्तत्वेनानुवादोपपत्तेः यजतिनैव यागान्तरं ज्योतिष्टोमाङ्गत्वेन विधीयते । ज्योतिष्टोमशेषत्वे च प्रमाणं तैत्तिरीयशाखास्थं प्राकरणिकं वाक्यम् ।

एवमंशुवाक्येऽपि "प्रजापतये स्वाहे" ति मन्त्रवर्णप्राप्तदेवताकोंऽशुद्रव्यको यागो ज्योतिष्टोमोद्देशेन विधीयते । नामधेयत्वपक्षेऽपि च देवतासम्बन्धबलादेव यागे कल्पितेऽतिदेशात् पुरोडाशादिद्रव्यलाभः । अस्तु वा अंशुवाक्ये प्रमाणान्तरेण देवताया अप्राप्तिः, तथापि ग्रहणे नाम्नोऽनन्वयात् अंशुसंज्ञकं अनिर्धारितविशेषावच्छिन्नं कर्म कुर्यादित्युक्ते अव्यक्तत्वेन अतिदे-

१. गुण  २. वा

अतो द्रव्यदेवताभावे सति यागत्वसिद्धिः । अतो यागान्तरविधानमेवैतदिति प्राप्ते

## ( सिद्धान्तः )

अभिधीयते—नेदं यागान्तरविधानम्, गृहातौ लक्षणायां प्रमाणाभावात्, भेदकप्रमाणाभावेन यागान्तरत्वे प्रमाणाभावाच्च। न च देवतासंयोगलक्षणो गुणः सः, देवतासंयोगलक्षणस्य गुणस्य श्रौतेऽपि ग्रहणे निवेशसम्भवेन यागाभेदकत्वात् ।

नचैन्द्रवायवादिवत् यागप्रकरणाभावात् अनिवेशः । प्रकरणाभावेऽपि तैत्तिरीयशाखास्थवाक्येन ज्योतिष्टोमस्याङ्गिताबोधवत् उपपादकताबोधस्याप्युपपत्तौ ग्रहणे देवतासंयोगस्योपपत्तेः । अतश्च अंशौ तावत् मान्त्रवर्णिक्या देवताया ग्रहणाङ्गत्वं सुकरमेव । मन्त्रस्य लिङ्गेन ग्रहणाङ्गत्वावगमात् । यस्तु होममन्त्रः स उत्तरभावियागोपकारकतासम्बन्धेनैन्द्रवायवाभ्याससम्बन्धियाज्यादिमन्त्रवत् यागीयदेवताप्रकाशकत्वेऽपि न देवताया यागाङ्गतापरः ।

न च तद्वदिह ग्रहणाङ्गताबोधकवाक्याभावात् विनिगमनाविरहः । ग्रहणप्रकरणस्यैव नियामकत्वात्। अदाभ्यवाक्येऽपि यद्यपि मन्त्रवर्णात् ग्रहणाङ्गतया न देवताप्राप्तिरस्ति तथापि विधिवाक्य एव लक्षणाभिया विनियोगभङ्गातिदेशकल्पनादिदोषभिया च समाप्तपुनरात्तत्वमेवैकं व्यवहितकल्पनावदङ्गीकृत्य गुणसङ्क्रान्तशक्तिना विधिना देवताविशिष्टं ग्रहणमेव यागोद्देशेन विधियते ।

न च लक्षणादिदोषभिया ग्रहणविध्यङ्गीकारेऽपि देवताया मन्त्रवर्णेनैव प्राप्तिसम्भवात् न तद्विशिष्टस्यापि विधेयत्वमिति वाच्यम् । मन्त्रवर्णस्य हि ज्योतिष्टोमयागाङ्गतया देवताप्रापक-

त्वमभ्युपगम्यते? ग्रहणाङ्गतया वा? नाद्यः; सामान्यसम्बन्धबोधकप्रमाणाभावेन मन्त्रस्य तदङ्गत्वे प्रमाणाभावात्। नान्त्यः, मन्त्रस्य स्वाहाकारान्तलिङ्गत्वेन सन्निधिमात्रेण ग्रहणाङ्गत्वानुपपत्तेः। (१)"शुक्रं ते शुक्रेण गृह्णामी"ति मन्त्रेण लिङ्गविनियुक्तेन सन्निधिबाधाच्च।

अत एव तद्विध्यभावेन देवताप्राप्तेरभावाद्विधिनैव देवता विधेया। सापि न पूर्वयागे यागान्तरे वा। वाक्यभेदविनियोगभङ्गादेः विना कारणं निष्प्रमाणकत्वात्, देवतामात्रविधानेऽपि 'अदाभ्यं गृहीत्वा' इत्यस्यानर्थक्यप्रसङ्गाच्च। अतः समाप्तपुनरात्तत्वरूपदोषमेवाङ्गीकृत्य देवताविशिष्टं ग्रहणमेव यागोद्देशेन विधीयते। अतो न तावत् गुणो भेदकः।

नाप्यदाभ्यवाक्ये उत्तरकालतारूपानुपादेयगुणश्रवणात् यागान्तरम्। अनुपादेयगुणस्य स्ववृत्तिविध्युत्तारणपूर्वकं पारिशेष्याद्धात्वर्थवृत्तित्वबोधनद्वारा भेदोपयोगित्वं वक्ष्यते। प्रकृते तु विध्युत्तारणेऽपि विधेर्ग्रहणसङ्क्रान्ततया पारिशेष्याभावेन प्रकरणान्तरन्यायाविषयत्वात्।

न च संज्ञया भेदः; संज्ञाया यागसामानाधिकरण्याभावेन तदभेदकत्वात्। अत एव ग्रहणसामानाधिकरण्यात् तद्भेदकत्वमुपांश्वन्तर्याम्याद्यपेक्षया इष्टमेव। ऐन्द्रवायवाद्यपेक्षया तु भेदो देवतारूपगुणादधिगन्तव्यः। संज्ञात्वं च ग्रहणस्य ग्राह्यसंस्कारत्वप्रसिद्धेः ज्योतिष्टोमाङ्गताबलेन तदीयसोमसंस्कारार्थत्वप्रतीतेः शक्यार्थस्य प्राप्तत्वात्तत्प्रख्यन्यायेन। अतश्च स्ववाक्योपात्तकर्माभावेऽपि अध्याहारेण तदन्वयोपपत्तेः ग्रहणसंज्ञात्वं अंश्वदाभ्यपदयोः नानुपपन्नमिति मूलानुयायिनः।

---

२ तै. सं. ३-३-३-२.

वस्तुतस्तु उक्तविषया सोमाख्यद्रव्यपरत्वेनैवोपपत्तौ कर्म-कारकाध्याहारद्वितीयाभ्रमादौ प्रमाणाभावात् "यत्ते सोमादाभ्यं नाम जागृवि" इति मन्त्राददाभ्यशब्दस्य सोमपरत्वप्रतीतेश्च द्रव्यसंज्ञैवेयमिति न्यायसुधोक्तः पन्थाः युक्त इत्युत्पश्यामः ।'

प्रयोजनं पूर्वपक्षे यथाशक्त्युपन्नन्धविषयत्वम्, अङ्गत्वात् । सिद्धान्ते प्रधानत्वान्नेति ध्येयम् ।

सूत्रं तु द्रव्यपदलक्षितदेवताया यागाङ्गत्वाभावात् केवले अनारभ्याधीतेऽपि अस्मिन् ग्रहणमेव कर्मशेषत्वस्यात्, दूरस्थस्यापि यागस्य देवतासम्बन्धोपपादकत्वोपपत्तेरिति व्याख्येयम् ।

इति नवममंशुदाभ्याधिकरणम् ॥

---

अथ दशमं चयनाधिकरणम् ॥ (१०) ॥

## सू–अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥ २–३–२१. ॥ ( पू ) ॥

( विषयसंशयौ )

अनारभ्यैव श्रुतम्–"य एवं विद्वानग्निं चिनुते" इति । तथा 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन, तमतिरात्रेण, तं षोडशिना तं द्विरात्रेणे'त्यादि एकादशरात्रान्तम् । तत्र चिनोतिः लक्षणया यागान्तरविधायकः ? अथ वा चयनविधायकः ? इति विचार्यते । तत्र अग्निपदवाच्यः शुद्धोऽग्निः न तावत् चयनेनोत्पाद्यत इति न तज्जनकत्वेन चयनविधिर्युक्तः, चयनसंस्कृतलौकिकाग्नेश्च भूतभाव्युपयोगाभावात् न चयनसंस्कार्यत्वत् ।

( पूर्वपक्षः )

न चाग्निशब्दस्य निरूढलक्षणयाऽऽहवनीयादिपरत्वमङ्गीकृत्य तदुद्देशेन चयनविधिः। आहवनीयस्याऽऽधानैकजन्यत्वेन चयनज-न्यत्वस्य तावदसम्भवात्। अन्यथा चयनवाक्यस्थाग्निशब्देनाऽऽ-हवनीयादौ निरूढलक्षणायामपि प्रमाणाभावात्। आधानप्रकरण एव हि आग्निपदस्य आहवनीयादिपदसमभिव्याहारात् निरूढल-क्षणा समाश्रिता। अतश्च धर्मिग्राहकप्रमाणेनाहवनीयादेराधानैकज-न्यत्वात् न चयनजन्यत्वसम्भवः। नापि चयनसम्पादितस्थण्डिला-धारत्वसम्बन्धेन संस्कार्यत्वम्, तथा सम्भवेऽपि चयनस्य 'इष्टका-भिरग्निं चिनुते' इति वचनेन प्राप्तस्याविधेयत्वात्। यद्यपि च तत्र गुणमात्रविधानमङ्गीकृत्येह चयनोत्पत्तिरिष्येत, तथापि उत्तरवाक्येषु अनुयजनप्रतियोगित्वरूपस्य गुणस्य यागमन्तरे-णानुपपद्यमानस्य श्रवणात् तदनुरोधेन चिनोतेरपि लक्षणया यागपरत्वनिश्चयः। तथा हि—

'अथातोऽग्नि'मित्यत्राग्निमिति द्वितीया न कर्मकारकपरा, अपि तु (१)'अनुर्लक्षण' इति सूत्रात् काललक्षणार्थस्यानोः क-र्मप्रवचनीयसंज्ञत्वात् तद्योगनिमित्ता। अतश्च अग्निष्टोमादिष्व-प्यनुयजनप्रतियोगित्वं तत्पूर्वभावित्वलक्षणं द्वितीयार्थः। तस्य च 'देवदत्तमनुगच्छति यज्ञदत्त' इत्यादौ तुल्यक्रियाश्रयत्वाविना-भावादग्निपदस्य यागपरत्वं गम्यते। अस्ति चाऽऽहवनीयप्रा-प्त्या तत्प्रख्यन्यायः। एवं च विशिष्टविधिगौरवपरिहारार्थमग्नि-संज्ञकयागप्राप्त्यालोचने क्रियमाणे विद्वद्वाक्यमेवानन्याक्षिप्तप्र-क्तित्वाद्यागविधायित्वेन निश्चीयते।

अत एव तत्रत्यचिनोतिः इष्टकावाक्यप्राप्तचयनानुवादक-

---

१. पा. सू. १-४-८४.

स्मन् यागलक्षकः । तस्य च फलापेक्षायां "पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्ति" इतिवत् कालविधिपरेणापि 'अथात' इति वाक्येन अर्थात् कृत्स्नाङ्गत्वसिद्धेः 'ऋध्नोत्येवे'ति फलश्रवणमर्थवादः । अङ्गापेक्षायां च अव्यक्तत्वात्सोमादतिदेशकल्पनम् । अतश्च सिद्धं वाक्यान्तरोपात्तात् अनुयजनप्रतियोगित्वरूपात् गुणात् यागान्तरत्वम् ।

(सङ्गतिः)

अत एव पादाध्यायसङ्गतिरपि । अनुयजनप्रतियोगित्वस्य च वक्ष्यमाणरीत्या सिद्धान्तेऽविधेयत्वात् संदिग्धविधेयताकत्वम् । अनन्तरा तु वाक्यान्तरोपात्तो देवतारूपो गुणो ग्रहणेऽपि सम्भवात्स भेदको यागस्य । अयं तु चयनेऽनिविशमानत्वात् भेदक एवेति पूर्वपक्षोत्थानात् द्रष्टव्या ।

यत्तु वार्तिकेऽग्निशब्दस्य 'अथात' इत्यादिवाक्ये 'अग्निं यजती'ति यागसामानाधिकरण्यात् यागनामधेयत्वावगमात् उत्पत्तिवाक्येऽपि चिनोतेर्यागपरत्वं, 'अथात' इत्यादिवाक्येषु तु तन्नामानुवादेनाग्निष्टोमादिसंस्था द्विरात्रादिकालाश्च वैकल्पिका विधीयन्ते, तत्रत्यानुशब्दश्च(१)"एष वाव प्रथमो यज्ञो यज्ञानां" इत्यनेन प्राप्तज्योतिष्टोमोत्तरकालतानुवादः । उक्थ्यादिवाक्येषु च यजतिपदस्यैवानुषङ्गः, नानुशब्दस्य । यागस्य च ऋद्धिः फलं रात्रिसत्रवदिति पक्षान्तरमुक्तम्, तत् गुणप्रमाणकभेदाभावेन असङ्गतिप्रसङ्गात् अग्निपदस्य रूढस्य सामानाधिकरण्यमात्रेण नामधेयत्वायोगात् सामानाधिकरण्यस्य चाग्निशब्दस्य अनुशब्दयोगनिमित्तद्वितीयान्तत्वेन दुरुपपादत्वात्, अन्यथा अनुशब्दस्य सापेक्षत्वापत्तेः उपेक्षितम् ।

१. ता. ब्रा. १६-१-२.

तस्मात् पूर्वोक्तविधयैव यागविधिः। एवं च "अग्नेः स्तोत्र" "अग्नेश्शस्त्रं" "चित्यस्य षडुपसदो भवन्ती"त्यादिलिङ्गदर्शनमप्युपपन्नं भवति। अन्यथा चयनस्यापूर्वत्वेन स्तोत्राद्यभावात् लिङ्गदर्शनानुपपत्तिः। सूत्रं स्पष्टम्।

( सिद्धान्तः )

## सू—द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २—३—२२. ॥ (सि)

अग्निशब्दस्य निरूढलक्षणयाऽऽहवनीयादिपरत्वात् तत्संस्कारकत्वेनैव स्वानेष्पाद्यस्थण्डिलाधारत्वसम्बन्धेन यथाश्रुतचयनविध्युपपत्तौ उभयोरप्यश्रुतयागपरत्वकल्पने इष्टकावाक्यस्य च विशिष्टविधिपरत्वकल्पने प्रमाणाभावः।

न चानुयजनप्रतियोगित्वस्य यागपरत्वं विनानुपपत्तिः, 'पाकमनुभुङ्क्ते' इत्यादौ विजातीयक्रियास्थलेऽपि तद्दर्शनात्। देवदत्तमनुगच्छतीत्यादौ तु क्रियान्तरानुपादानादुपस्थितत्वात् गमनस्यैव प्रतीतिः। प्रकृते तु चयनक्रियाया एव प्रकृतत्वात्तामादायैवानुशब्दोपपत्तिः। अत एव चयनोत्पत्तिवाक्ये आहवनीयादेस्संस्कार्यत्वावगमेऽपि आधानवदनुत्पाद्यत्वेन स्वरूपे आनर्थक्यात् 'अग्निं संमार्ष्टि' तिवदुपयोगापेक्षायां प्रकरणाभावेऽपि 'अथात' इत्यादिवाक्यैः अग्निष्टोमसंस्थाकज्योतिष्टोमाद्यङ्गत्वेनं चयनं विधीयते। अत एव तत्र चयनस्य शाब्दत्वसिद्ध्यर्थं तत्राग्निपदेन चयनसंस्कृताग्निलक्षणा चयनमात्रलक्षणा वा अभ्युपगम्यते। उत्पत्तिवाक्ये चोपयोक्ष्यमाणाहवनीयाधारभूतस्थलनिष्पादकत्वावगमात् तस्य च पूर्वकालं विना अनुपपत्तेः उप-

साह्निनान्तरत्वस्य प्रमाणान्तरसिद्धत्वाच्च अनुशब्दोऽनुवादः। अग्निष्टोमशब्दस्य च जातिशक्तिन्यायेन संस्थावाचकस्यापि व्यक्तिन्यायेन स्वसम्बन्धिक्रतूपस्थापकत्वात् "प्रकृतौ वा द्विरुक्तत्वा"दिति न्यायात् ज्योतिष्टोम एव प्रचुरप्रयोगाद्वा तदुपस्थापकत्वोपपत्तेः तदुद्देशेन चयनं विधीयते, अग्निष्टोमसंस्थाकत्वविशिष्टज्योतिष्टोमत्वस्य च अग्निष्टोमपदशक्यतावच्छेदकस्य उद्देश्यतावच्छेदकत्वात् नाग्निष्टोमसंस्थाकत्वरूपविशेषणाविवक्षा।

अथवा लाघवेन ज्योतिष्टोमत्वस्यैव वा उद्देश्यतावच्छेदकत्वकल्पनात् तदविवक्षायामपि न दोषः। यजतिश्च साधुत्वार्थमनुवादः। अथातश्शब्दावपि प्राप्तार्थत्वात् केवलं ज्योतिष्टोमोद्देशेन चयनमात्रमथात इत्यत्र आद्येन वाक्येन विधीयते।

अत्र च ज्योतिष्टोमप्रयोगसंवलितत्वाच्चयनप्रयोगस्य अनुष्ठानसादृश्यात् ज्योतिष्टोमाङ्गत्वप्रसक्तावपि "पशुकामश्चिन्वीते"ति वाक्यैः चयनस्य काम्यत्वावगमात् न तदङ्गत्वम्। चयनस्य हि पश्वर्थत्वे क्रियारूपत्वेन च आश्रयापेक्षाभावेऽपि चिनोतेः सकर्मकत्वात् उत्पत्तिवाक्यावगताग्निकर्मत्वावगतेः आहवनीयसंस्कारकस्य चयनस्य पश्वर्थत्वानवगमात् तस्य चोपयोगापेक्षायां येष्वाहवनीय औपदेशिकप्रक्षेपद्वारा प्राप्तस्तत्प्रयोगान्तःपातावगमेऽपि ज्योतिष्टोमप्रयोगसंवलितत्वाच्चयनप्रयोगस्य तत्प्रयोगान्तःपातः सुलभ एव। तत्र च अप्राप्ताङ्गत्वासिद्ध्यर्थमयं विधिरर्थवानेव।

अत एव निर्ज्ञातप्रयोजनत्वात् कालार्थ एवायं संयोग इत्यपास्तम्। कालस्य प्राप्तत्वेन अविधेयत्वात्। न च ज्योतिष्टोमस्य प्राकरणिकोत्तरवेद्यवरोधात् एतस्य वचनस्य विकृताग्निष्टोमाभिप्रायत्वं शंक्यम्। अग्निष्टोमपदस्य प्रचुरप्रयोगेण ज्यो-

तिष्टोम एव शक्ततया एतस्यापि निरवकाशत्वात् । "सोत्तरवेदिषु क्रतुषु चिन्वीत, उत्तरवेद्याᳪं ह्यग्निश्चीयते" इति वचनेन अग्न्युत्तरवेद्योः समुच्चयविधानेनाविरोधाच्च । इदं हि वचनं चयननिष्पाद्यस्थण्डिलाधारत्वेन निरवकाशत्वात्, सिद्धवन्निर्देशान्यथानुपपत्तिकल्पितेन विधिना उत्तरवेदिं विदधत् समुच्चय फलति । दाशमिकी अग्नेर्विकल्पोक्तिस्तु नोत्तरवेदिप्रतियोगित्वविषयिणी, अपि तु स्वाभावप्रतियोगित्वविषयिणी । तत्प्रमाणं च सत्रे समारोपकालविधिपरे वाक्ये 'यदग्निं चेष्यमाणा भवन्ती' ति सिद्धवत्पाक्षिकानुवाद इति तत्रैव वक्ष्यते ।

नचैवं चयनमात्रमिव उत्तरवेदिमात्रमपि ज्योतिष्टोमे कदापि न स्यादिति वाच्यम् । 'उत्तरवेद्यामग्निं निदधाती'ति वचनेन उत्तरवेदेः संयोगपृथक्त्वन्यायेन साक्षादग्निधारणार्थत्वेनापि विनियोगात् । इदं हि वचनं न परम्परासम्बन्धेन आधारविधानपरम्, चयनाधारत्वविधिबलेनैव तत्सिद्धेः । अपि तु चयनाभावपक्षे साक्षादाहवनीयाधारविधिपरम् । यद्यपि एतद्विधिविधेयस्य साक्षादाधारत्वस्य प्राकरणिकत्वात् तदवरोधे चयननिष्पाद्यस्थण्डिलानिवेश इति शक्यते वक्तुम्, तथाप्यग्निष्टोमपदस्य प्रचुरप्रयोगेण ज्योतिष्टोम एव शक्ततया निरवकाशत्वात् न कोऽपि विरोधः; अत एव बौधायनकल्पादौ 'अग्निष्टोमेन यक्ष्यमाणो भवति, 'सन्तिष्ठतेऽग्निष्टोम'इत्युपक्रमोपसंहाराभ्यां दीक्षणीयाद्यङ्गाम्नानं सङ्गच्छते। अन्यथा अग्निष्टोमशब्दस्य प्रकृतिविकृतिसाधारणाग्निष्टोमसंस्थक्रतुमात्रपरत्वे दीक्षणीयादीनामपि प्रकृतिविकृतिसाधारण्यापत्तेः अतिदेशविधेः तदीयस्यानुपपत्तेः । अतो ऽग्निष्टोमादिपदानां पार्थपदस्येवार्जुने ज्योतिष्टोम एव प्रचुरप्रयोगात् तत्परतया निरवकाशत्वम् ।

नचैवं अग्नेः उत्तरवेद्या समुच्चये भिन्नकार्यत्वापत्तेः उत्तरवेदिकार्यापत्त्या तदीयधर्मप्राप्तिः संकर्षे वक्ष्यमाणा विरुध्येतेति वाच्यम् । उत्तरवेदेः संयोगपृथक्त्वन्यायेन कार्यद्वयावगमात् तद्धर्माणामपि कार्यद्वयप्रयुक्तत्वावगतेः चयननिष्पादितस्थण्डिलस्य साक्षादग्निधारणरूपकार्यार्थत्वेन तदंशे उत्तरवेदिकार्यापन्नत्वात् तद्धर्मप्राप्त्युपपत्तेः । अतएव कार्यान्तरांशे समुच्चीयमानोत्तरवेद्यामपि धर्मा भवन्त्येव । तत्राविरुद्धेषु तन्त्रता, विरुद्धेषु तु आवृत्तिरित्यन्यदेतत् । सर्वथा ज्योतिष्टोमोद्देशेन चयनविनियोगविधिरिति सिद्धम् ।

अत एवानुशब्दोक्तकालयोगेऽपि चयनसंक्रान्तत्वात् विधेः अदाभ्यवाक्यवदेव न ज्योतिष्टोमान्तरत्वशङ्का, ज्योतिष्टोमातिदेशेनैव सर्वविकृतिषु चयनप्राप्तिवत् द्विरात्रादिष्वपि प्राप्तिसिद्धावपि तेषु पुनर्वचनं चयनाश्रितगुणकामानां "श्येनचितं चिन्वीत स्वर्गकाम" इत्यादीनां प्राप्त्यर्थमिति(१) दशमे वक्ष्यते। गुणकामानां हि आष्टमिकन्यायेन प्रणयनवत् लौकिकचयनस्याश्रयत्वव्यावृत्त्यर्थं चयने अपूर्वीयत्वविवक्षावश्यंभावे ज्योतिष्टोमप्रकरणाभावेऽपि 'अथात' इति वाक्येन ज्योतिष्टोमस्यैवोपस्थितत्वात् तदपूर्वसाधनीभूतचयनस्यैवाश्रयत्वापत्तेः तस्य विकृतौ प्राप्त्यभावेन ज्योतिष्टोमतुल्योपस्थितिसंपादनद्वारा तत्तदपूर्वसाधनीभूतचयनस्य तत्तद्विकृतिष्वपि कासुचिदा(२)श्रयप्राप्त्यर्थं चयनपुनर्विधानं युज्यते।

अत एव अतिरात्रादिपदानां प्रचुरप्रयोगात् तत्तत्संस्थाकज्योतिष्टोमवाचिनामपि ज्योतिष्टोमे चयनस्य पूर्ववाक्यादेव सिद्धेः तदाश्रितफलार्थं संस्थास्वपि चयनोपदेशस्य श्येनचित्यादिगुणकामानां संस्थाश्रयभूतज्योतिष्टोमसंबन्धिचयनोपदेशेनैव प्रा-

१. १०-९-११. २. तत्प्राप्त्यर्थं

प्तिसंभवेन व्यर्थत्वात् अगत्या तत्तत्संस्थाकविकृतिलक्षकत्वं नानुपपन्नम् ।

एवं गुणकामप्राप्तिरूपप्रयोजनसत्त्वे ऽपि प्रकृतावग्नेरुक्तलिङ्गवशेन।"अग्निः सोमाङ्गं वेच्छता"मिति ज्योतिष्टोमप्रकरणस्थकात्यायनवचनेन च पाक्षिकत्वावगमात् सर्वविकृतिष्वपि तथैव प्राप्तेः 'यत्रमयश्चरुर्भवति' 'उत्तरेऽहन् द्विरात्रस्य गृह्णत' इत्यादिवदुक्थ्यादिषु कासुचिद्विकृतिषु पुनःश्रवणं नियमफलकमिति प्रयोजनान्तरमपि ज्ञेयम् ।

न च चयनप्रकरणस्थगुणकामप्राप्तिफलकत्वे संभवति दूरस्थतत्तद्विकृतिविध्येकतापन्नातिदेशप्रमाणकाग्निपाक्षिकत्वोपस्थितिसापेक्षनियमफलकत्वकल्पनानुपपत्तिरिति वाच्यम् । तत्तद्विकृतित्वावच्छेदकावच्छेदेन अग्निविधौ नियमस्यार्थसिद्धत्वेनाकल्पनीयत्वात् । अतिदेशोपस्थितिं विना अग्निविधिगतवैयर्थ्यप्रतिसन्धानाभावेन गुणकामप्राप्तेरपि प्रयोजनत्वाकल्पनाच्च । अतिदेशोपस्थितौ च झटिति तद्बोधितपाक्षिकत्वस्यैव उपस्थितौ नियमस्यैव फलत्वौचित्याच्च ।

नचैवं क्लृप्तोपकाराग्निपुनःश्रवणात् गृहमेधीयाज्यभागन्यायेनाङ्गान्तरपरिसंख्याफलकत्वस्याप्यापत्तिः । तद्वदिहापि अतिदेशाधीनप्राप्तिकाहवनीयप्राप्त्युपजीवकत्वेन अतिदेश(१)बाधकत्वानुपपत्तेः, द्विरात्रादिष्वतिदेशप्राप्ताङ्गविषयलिङ्गसद्भावाच्च । अतः परिसंख्याफलकत्वासंभवेऽप्युक्तरूपोभयफलकत्वेन काचिदनुपपत्तिः । तन्त्ररत्नादौ तु नियमफलकत्वाङ्गीकारे बीजं न पश्यामः ।

---

(१) लोपकत्वा

न चैकस्य फलद्वयसंकरो दोषाय। "उत्तरेऽहन्द्विरात्रस्य गृह्यते, मध्यमेऽहंस्त्रिरात्रस्य, चतुर्थे चतुर्थेऽहन्यहीनस्य" इत्यादौ बहुशस्तथा दृष्टत्वात्। तथा हि—

ज्योतिष्टोमप्रकरणे 'य एवं विद्वान् षोडशिनं गृह्णाति' इत्यनेन षोडशिसंज्ञकं ग्रहणमाम्नातं ज्योतिष्टोमाङ्गम्। तस्य मान्त्रवर्णिकदेवताबलात् ऐन्द्रवायवादिवदेव यागाभ्यासोऽप्यर्थसिद्धः। "एकविंशो भवति प्रतिष्ठित्यै" इत्यनेन च तदङ्गत्वेन स्तोत्रं विहितम्। तदत्र षोडश्यादिशब्दा यथाग्रहणे प्रयुज्यन्ते तथा स्तोत्रेऽपि, 'एकविंशः षोडशी अग्निष्टोमसाम' इत्यादिप्रयोगात्; संस्थावाचित्वञ्चैषां श्रुतिस्मृतिकल्पसूत्रादिषु प्रयोगात् स्पष्टमेव। संस्थाश्च संपूर्वकस्य तिष्ठतेः समाप्तिवाचित्वात् तत्तत्स्तोत्रैः क्रतोः समाप्तय उच्यन्ते। यद्यपि च ततः परमप्यङ्गानि प्रधानाभ्यासाश्च केचित् सन्त्येव, तथापि स्तोत्राणि न कानिचिदिति संस्थात्वाविघातः।

अत्र च षोडश्यादिशब्दानां प्रचुरप्रयोगात् संस्थास्वेव शक्तिः। न तु ग्रहणादौ। यद्यपि तत्तत्संस्थाकज्योतिष्टोमेऽपि प्रचुरप्रयोगोऽस्त्येव, तथापि नागृहीतविशेषणन्यायात् प्रचुरतया प्रयोगाच्च संस्थायामेव शक्तिः, ज्योतिष्टोमे तु निरूढलक्षणा, प्रचुरप्रयोगात्। क्रत्वन्तरे तु साम्प्रतिकी, क्वाचित्कप्रयोगात्। तत्र चेयं स्थितिः—वाचनिकाग्निष्टोमसंस्थायां नाग्निष्टोमस्तोत्रोत्तरं उक्थ्यादिकं किंचित्। उक्थ्यसंस्थायां तु तदुत्तरं उक्थ्यस्तोत्राणि, न तु तस्याप्युत्तरं षोडश्यादि। षोडशिसंस्थायां तु तदुत्तरं षोडशिस्तोत्रं, न तस्याप्युत्तरमतिरात्रादि। अतिरात्रसंस्थायां तु तेनैव समाप्तिरिति।

तत्र च षोडशिसंस्थायाः प्रकरणात् 'चतस्रः सोमसंस्थाः'

इति वचनाच्च ज्योतिष्टोमाङ्गत्वप्रसक्तौ "षोडशिना वीर्यकामः स्तुवीत" इति वचनेन ज्योतिष्टोमाश्रितायाः तस्याः फलोद्देशेन विधिः उक्थ्यातिरात्रयोरिव "पशुकाम उक्थ्यं गृह्णीयात्" "अतिरात्रेण प्रजाकामं याजयेत्" इति वचनाभ्याम् । नत्वग्निष्टोमसंस्थावत् क्रत्वङ्गत्वम् । अत्र च सर्वत्र संस्था एव फलोद्देशेन विधीयन्ते । न तु स्तोत्रादि, तत्तत्संस्थाकयागादिर्वा ; तत्र षोडश्यादिपदानां अशक्तत्वात्, लक्षणायां प्रमाणाभावाच्च । अतएवात्र स्तुवीतेत्यादिधातुः (१)निर्वपतिवत् अनुवाद एव ; अतश्च षोडशिनः काम्यत्वेऽपि क्रत्वङ्गतासिद्ध्यर्थं "अग्निष्टोमे राजन्यस्य गृह्णीयात्, अत्युक्थ्ये" इति एतद्वचनद्वयं न विरुध्यते ।

अत्र हि नाग्निष्टोमादिसंस्थाङ्गत्वेन षोडशिसंस्थाविधिः, विरोधेन संस्थायाः संस्थाङ्गत्वासम्भवात् । अपि तु प्रतिप्रसवार्थापिशब्दस्वारस्यात् प्रकरणाच्च ज्योतिष्टोमाङ्गतयैव । अत एव तत्रस्थं अग्निष्टोमादिपदं लक्षणया तत्तद्ग्रहग्रहणाभ्यासपरम्, सप्तमी च सतिसप्तमी आनन्तर्यादिरूपकालपरा । अतश्च राजन्यकर्तृकत्वे निमित्ते ज्योतिष्टोमाङ्गतया अग्निष्टोमाभ्यासोत्तरकालविशिष्टषोडशिसंस्थाप्रयोगो विधीयते । अर्थाच्च तस्य तत्तत्संस्थानिवृत्तिः । ततश्च नित्याग्निष्टोमसंस्था काम्या चोक्थ्यसंस्था ब्राह्मणवैश्ययोरेव । काम्या तु षोडशिसंस्था सर्वेषामेवेति विवेकः । एतस्यैव चाग्निष्टोमस्तोत्रोत्तरकालीनस्य षो-

---

(१) 'सौर्यं चरुं निर्वपेत्' 'आग्नेयमष्टाकपालं निर्वपेत्' इत्यादौ श्रुतो निर्वपतिशब्दो यथा तत्र द्रव्यदेवता[illegible]धात्वनु[illegible] यागे कल्पिते, तत्साधनीभूते द्रव्ये[illegible]समुदायात् पृथक्[illegible]रूपस्य निर्वापस्यानुवादकः तद्वत् 'षोडशिना वीर्यकामः स्तुवीत' इत्यादौ संस्थासु विहितासु तदन्यथानुपपत्तिसिद्धस्तोत्राद्यनुवादकः स्तुवीत, गृह्णीयादित्यादिशब्द इत्यर्थः ।

न चैकस्य फलद्वयसंकरो दोषाय । "उत्तरेऽहन्द्विरात्रस्य गृह्यते, मध्यमेऽहंस्त्रिरात्रस्य, चतुर्थे चतुर्थेऽहन्यहीनस्य" इत्यादौ बहुशस्तथा दृष्टत्वात् । तथा हि–

ज्योतिष्टोमप्रकरणे 'य एवं विद्वान् षोडशिनं गृह्णाति' इत्यनेन षोडशिसंज्ञकं ग्रहणमाम्नातं ज्योतिष्टोमाङ्गम् । तस्य मान्त्रवर्णिकदेवताबलात् ऐन्द्रवायवादिवदेव यागाभ्यासोऽप्यर्थसिद्धः । "एकविंशो भवति प्रतिष्ठित्यै" इत्यनेन च तदङ्गत्वेन स्तोत्रं विहितम् । तदत्र षोडश्यादिशब्दा यथाग्रहणे प्रयुज्यन्ते तथा स्तोत्रेऽपि, 'एकविंशः षोडशी अग्निष्टोमसाम' इत्यादिप्रयोगात्; संस्थावाचित्वञ्चैषां श्रुतिस्मृतिकल्पसूत्रादिषु प्रयोगात् स्पष्टमेव । संस्थाश्च संपूर्वकस्य तिष्ठतेः समाप्तिवाचित्वात् तत्तत्स्तोत्रैः क्रतोः समाप्तय उच्यन्ते । यद्यपि च ततः परमप्यङ्गानि प्रधानाभ्यासाश्च केचित् सन्त्येव, तथापि स्तोत्राणि न कानिचिदिति संस्थात्वाविघातः ।

अत्र च षोडश्यादिशब्दानां प्रचुरप्रयोगात् संस्थास्वेव शक्तिः । न तु ग्रहणादौ । यद्यपि तत्तत्संस्थाकज्योतिष्टोमेऽपि प्रचुरप्रयोगोऽस्त्येव, तथापि नागृहीतविशेषणन्यायात् प्रचुरतया प्रयोगाच्च संस्थायामेव शक्तिः, ज्योतिष्टोमे तु निरूढलक्षणा, प्रचुरप्रयोगात् । क्रत्वन्तरे तु साम्प्रतिकी, क्वाचित्कप्रयोगात् । तत्र चेयं स्थितिः—वाचनिकाग्निष्टोमसंस्थायां नाग्निष्टोमस्तोत्रोत्तरं उक्थ्यादिकं किंचित् । उक्थ्यसंस्थायां तु तदुत्तरं उक्थ्यस्तोत्राणि, न तु तस्याप्युत्तरं षोडश्यादि । षोडशिसंस्थायां तु तदुत्तरं षोडशिस्तोत्रं, न तस्याप्युत्तरमतिरात्रादि । अतिरात्रसंस्थायां तु तेनैव समाप्तिरिति ।

तत्र च षोडशिसंस्थायाः प्रकरणात् 'चतस्रः सोमसंस्थाः'

इति वचनाच्च ज्योतिष्टोमाङ्गत्वप्रसक्तौ "षोडशिना वीर्यकामः स्तुवीत" इति वचनेन ज्योतिष्टोमाश्रितायाः तस्याः फलोद्देशेन विधिः उक्थ्यातिरात्रयोरिव "पशुकाम उक्थ्यं गृह्णीयात्" "अतिरात्रेण प्रजाकामं याजयेत्" इति वचनाभ्याम् । तस्मादग्निष्टोमसंस्थावत् क्रत्वङ्गत्वम् । अत्र च सर्वत्र संस्था एव फलोद्देशेन विधीयन्ते । न तु स्तोत्रादि, तत्तत्संस्थाकयागादिर्वा ; तत्र षोडश्यादिपदानां अशक्तत्वात्, लक्षणायां प्रमाणाभावाच्च । अत एवात्र स्तुवीतेत्यादिधातुः (१)निर्वपतिवत् अनुवाद एव ; अतश्च षोडशिनः काम्यत्वेऽपि क्रत्वङ्गतासिद्ध्यर्थं "अग्निष्टोमे राजन्यस्य गृह्णीयात्, अत्युक्थ्ये" इति एतद्वचनद्वयं न विरुध्यते ।

अत्र हि नाग्निष्टोमादिसंस्थाङ्गत्वेन षोडशिसंस्थाविधिः, विरोधेन संस्थायाः संस्थाङ्गत्वासम्भवात् । अपि तु प्रतिप्रसवार्थापिशब्दस्वारस्यात् प्रकरणाच्च ज्योतिष्टोमाङ्गतयैव । अत एव तत्रत्यं अग्निष्टोमादिपदं लक्षणया तत्तद्ग्रहप्रयोगाभ्यासपरम्, सप्तमी च सतिसप्तमी आनन्तर्यादिरूपकालपरा । अतश्च राजन्यकर्तृकत्वे निमित्ते ज्योतिष्टोमाङ्गतया अग्निष्टोमाभ्यासोत्तरकालविशिष्टषोडशिसंस्थाप्रयोगो विधीयते । अर्थाच्च तस्य तत्तत्संस्थानिवृत्तिः । ततश्च नित्याग्निष्टोमसंस्था काम्या चोक्थ्यसंस्था ब्राह्मणवैश्ययोरेव । काम्या तु षोडशिसंस्था सर्वेषामेवेति विवेकः । एतस्यैव चाग्निष्टोमस्तोत्रोत्तरकालीनस्य षो-

(१) 'सौर्यं चरुं निर्वपेत्' 'आग्नेयमष्टाकपालं निर्वपेत्' इत्यादौ श्रुतो निर्वपतिशब्दो यथा तत्र द्रव्यदेवतासम्बन्धानुमानेन यागं कल्पयते, तत्साधनीभूते द्रव्ये [illegible] रूपस्य निर्वापस्यानुवादकः तद्वत् 'षोडशिना वीर्यकामः स्तुवीत' इत्यादौ संस्थासु विहितासु तदन्यथानुपपत्तिसिद्धस्तोत्राद्यनुवादकाः स्तुवीत, गृह्णीयादित्यादिशब्दा इत्यर्थः ।

डशिनोऽत्यग्निष्टोम इति संज्ञा । "अत्यग्निष्टोमे राजन्यस्य गृह्णीया" दिति शाखान्तरवचनात् ।

यत्तु "अतिरात्रे ब्राह्मणस्य गृह्णीया"दिति वचनं तत् ब्राह्मणकर्तृकत्वे निमित्ते ऽतिरात्रसंस्थाकज्योतिष्टोमोद्देशेन षोडशिग्रहणविधायकं, न त्वतिरात्रसंस्थोद्देशेन, तस्याः प्राकृताङ्गैरेव निराकाङ्क्षत्वात् । नाप्यग्निष्टोम इतिवद्विधिः । अपिशब्दाभावात् । अनुषङ्गाङ्गीकारे उक्थ्यवाक्ये तत्पाठवैयर्थ्यात् । अतो यथोक्त एव वाक्यार्थः । तस्य च नित्यवत्प्राप्तौ "नातिरात्रे षोडशिनं गृह्णाती"त्यनेन पाक्षिकत्वसिद्ध्यर्थं निषेधोऽपि नानुपपन्नः। तेन ब्राह्मणस्य विकल्पः, अन्येषां नैवेति सिद्धम् ।

यत्तु "अतिरात्रे षोडशिनं गृह्णाती"ति क्वचिल्लिख्यते वचनं तत् "अतिरात्रे ब्राह्मणस्ये" त्येतदेव ब्राह्मणपदत्यागेनेति वेदितव्यम्। गुणत्वेऽपि वा ब्राह्मणवाक्येनोपसंहार इत्यवधेयम् । अतश्च उत्तरेऽहन्नित्यादिवाक्येषु द्विरात्रोत्तराहस्यातिरात्रसंस्थाकत्वादतिदेशतो विकल्पेन प्राप्तस्य षोडशिग्रहणस्य नियमः ब्राह्मणनिमित्तकत्वेन प्राप्तस्यानैमित्तिकत्वसिद्धिद्वारा राजन्यवैश्ययोरपि तस्य प्राप्तिश्च पार्थसारथ्युक्त्या फलम् । अहीनादीनामहरन्तरेषु अतिरात्रसंस्थाकेषु षोडशिग्रहपरिसंख्या च फलम् । अत एव एकस्याहीनस्य एकमेव चतुर्थं वीप्सा त्वहीनान्तरमादाय, इति (१)दशमे वक्ष्यते । तेन सर्वत्रैव फलसाङ्कर्यस्येष्टत्वात् 'तमुक्थ्येने'त्यादावपि तत्सङ्कारो न दोषायेति सिद्धम् । सूत्रं स्पष्टम् ।

## सू०—तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि २–३–२३॥

(१) १०–५–१३.

यत्तु लिङ्गदर्शनं अग्निशब्दस्य यागपरत्वे उपन्यस्तम् 'अग्नेः शस्त्र'मित्यादि, तत्रत्याग्निशब्दस्य लक्षणया चयनसंपादितस्थण्डिलस्थापिताग्निसंपादितयागपरत्वेनाप्युपपत्तेरकिञ्चित्करम् । अत एव चयनप्रकरणेऽग्निशब्द उत्पत्तिवाक्यस्थाहवनीयपरः विनियोगवाक्यस्थश्चयनपरः "हिरण्यशकलैरग्निं प्रोक्षति" इत्यादिवाक्येषु अग्निस्थापनप्राग्भाविपदार्थविधायकेषु स्थलपरः, 'अग्नेः स्तोत्र'मित्यादिषु यागपर इति धर्मविधानोपपत्तिः ।

प्रयोजनम् सूत्रश्च स्पष्टम् ।

इति दशमं चयनाधिकरणम् ।

## अथैकादशं प्रकरणान्तराधिकरणम् (११)॥

## सू—प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २–३–२४.(सि)

तदेवं गुणप्रमाणकं भेदं सापवादं प्रसाध्याधुना क्रमप्राप्तः प्रकरणान्तराद्भेदो निरूप्यते ।

( विषयसंशयौ )

कुण्डपायिनामयने श्रूयते—"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते, मासं वैश्वदेवेन, मासं वरुणप्रघासैः, मासं साकमेधेन, मासं शुनासीरीयेण" इति। तत्र किमेषु प्रसिद्धाग्निहोत्राद्यनुवादेन मासादिगुणविधिः ? उत मासादिविशिष्टकर्मान्तरविधिरिति विचार्यते ।

( सङ्गतिः )

अत्र च मासादेरनुपादेयस्य गुणस्य पूर्वपक्षे सिद्धान्ते वि-

येयत्वे निश्चितेऽपि कृतिसाध्यत्वरूपोपादेयत्वेनानिश्चयात्, तादृ-
ग्गुणप्रयोज्यभेदनिरूपणेन पादाध्यायसङ्गतिः । दूरस्थस्यापि
चयनस्याग्निष्टोमपदलक्ष्यज्योतिष्टोमाङ्गत्वेऽभिहिते सुतरामग्निहोत्र-
पदवाच्यपूर्वकर्माङ्गत्वं मासादेर्गुणस्य संभवतीति पूर्वपक्षोत्थानात्
अनन्तरा ।

( पूर्वपक्षः )

तत्र धातोः पूर्वविहिताविहितसाधारणवाचकस्यापि पूर्वविहि-
तमात्रवाचकेन नाम्ना समभिव्याहारात् पूर्वविहितकर्मोपस्थापकत्वो-
पपत्तेः न तावद्दूरस्थत्वमात्रेण कर्मान्तरविधायित्वशङ्का । न चैव-
मभ्यासाद्भेदोपपत्तिः, मासादिविधानार्थत्वेनान्यपरत्वात् । न च
मासादेर्विधानायोग्यत्वम्, कर्त्रादिवत्कृतिसाध्यत्वेन रूपेण तद-
संभवेऽपि कृत्यधिकरणत्वादिना तत्संभवात्, अन्यथा कालादेः
विधिसंस्पर्शाभावेनाविवक्षाप्रसङ्गात् ।

नचैवमपि प्राकरणिकसायमादिकालावरोधेन मासादिगु-
णस्य निवेशानुपपत्तेः गुणाद्भेदोपपत्तिः । सायंप्रातःकालस्य
तावदमावास्यापराह्णवद्व्याप्यव्यापकभावेनोपपत्तेः विरोधाभावात् ।

न चात्यन्तसंयोगवाचिद्वितीयान्तमासपदोपादिष्टसातत्येन
विरोधः । आहाराद्यावश्यककार्यानुरोधेन सातत्यबाधावश्यंभा-
वेन जातेष्टिन्यायेन प्राकरणिककालोपसङ्ग्रहस्यापि सिद्धान्त
इवोपपत्तेः ।

न च जीवनाख्यनिमित्तेन तस्य विरोधः, सायमादिकाले-
नैव निमित्तस्य मासेनाप्यवच्छेदोपपत्तेः । अतश्च मासावच्छिन्नसा-
यंप्रातःकालीनजीवनस्यैव निमित्तत्वात् तावद्भिः प्रयोगैरेकः प्रय-
योगपरिहार इति सिद्ध्यति । काम्यप्रयोगे वा मासादिविधाना-
न्न कश्चिद्विरोधः ।

वस्तुतस्तु सत्यपि विरोधे मासस्य विशिष्यैव विहितत्वेन निरवकाशत्वात् अग्न्युत्तरवेद्योरसाक्षादग्न्याधारतायामिव विकल्पोपपत्तिः । अत एव दर्शपूर्णमासादौ पौर्णमास्यादिकालेन विरोधपरिहारासंभवेऽपि न दोषः ।

अस्तु वा मासादेर्जरामरणादिरूपनित्यप्रयोगविधिवदनुकल्पतया विधिः । अथ वा काण्डपायिनामयन एव दीक्षितत्वेन पर्युदस्तस्य निषिद्धस्य वाग्निहोत्रादेः मासं प्रतिप्रसवः। अथ वा अग्निहोत्राद्युद्देशेन मासकाले विहितेऽपि उद्देश्यत्वेन प्रकरणे उपस्थितानामग्निहोत्रादीनां निराकाङ्क्षाणामपि सत्रप्रयोगवचनेन फलं विधानान्नित्यप्रयोगेणापि विरोधः ।

नचैवं 'द्वादशाहीनस्ये'त्यादावपि अहीनस्योद्देश्यत्वेनोपस्थितत्वाज्ज्योतिष्टोमप्रयोगविधिना फलेऽङ्गतया वा ग्रहणापत्तिः । संवत्सरपरिमितसत्रप्रयोगस्य षण्मासपरिमितसोमयागैः अपरिपूरणादाकाङ्क्षावशेन स्वतो निराकाङ्क्षाणामपि अग्निहोत्रादीनां फले विधानेऽपि अहीनादौ तदप्रसङ्गात् । अतो मासादिरूपस्य गुणस्य कालान्तरावरोधेऽपि निवेशोपपत्तेः न गुणाद्भेदः ।

न च प्राप्तकर्मानुवादेनोपसदां तदुत्तरकालत्वस्य मासस्य कर्तृबहुत्वस्य च विधौ वाक्यभेदापत्तेः तदापादकस्य गुणस्य भेदकत्वोपपत्तिः । कालविधेः प्रयोगविधित्वेन "पौर्णमास्यां पौर्णमास्या यजेते"त्यादौ कालत्रिकसाहित्यरूपानेकगुणविधिवदवाक्यभेदात् । "मासं दर्शपूर्णमासाभ्या"मित्यत्रोपसदुत्तरकालस्याश्रुतत्वेनाविधेयत्वाच्च ।

न च "उपसद्भिश्चरित्वा" इत्यस्यानुषङ्गसंभवः । [illegible]योरप्यनपेक्षितत्वेन तदसंभवात् । अतो न कर्मान्तरविधिरिति [illegible]—

( सिद्धान्तः )

अभीधीयते—सत्यं न प्रमाणान्तरमस्ति भेदकम्। तथापि अनुपादेयगुणयुक्तानुपस्थितिरूपं प्रकरणान्तरं समस्त्येव भेदकम्। तथा हि—

विधिस्तावदप्रवृत्तप्रवर्तनस्वभावः, प्रमाणत्वाच्चाज्ञातज्ञापनफल इत्यविवादम्। अतो विधेरज्ञातज्ञापनविषयत्वापरपर्यायं विधेयत्वं, पुरुषप्रवृत्तिविषयत्वापरपर्यायश्चोपादेयत्वं द्वयमपि ज्ञाप्यम्, तदपि सामानाधिकरण्येनेत्युत्सर्गः। तच्च पदश्रुत्या धात्वर्थ एवेत्यप्युत्सर्ग एव। योग्योपपदसद्भावे तु तदर्थवृत्ति इत्यपवादः। अत एव "यदाहवनीये जुहोती"त्यत्र विशिष्टविधिगौरवभिया पदश्रुत्युपात्तधात्वर्थस्य च भाव्यत्वलिप्सयोपादेयत्वं विधेयत्वं च सामानाधिकरण्येनाहवनीय एव बोध्यते। संभवति च तस्य वाजपेयाधिकरणोक्तरीत्या प्रणयनप्रादुष्करणादिरूपक्रियाविशिष्टत्वेन उपादेयता विधेयता च।

अत एव तन्निर्वाहार्थं कर्मणः प्राप्त्यालोचनायां प्रापकविध्युपस्थापकप्रमाणान्तराभावेऽपि जुहोतिनैव कथंचिदुपस्थापनादुद्देश्यत्वाविघातः। यत्र तु न योग्यमुपपदं यथा मासाग्निहोत्रादौ कालादेर्वाजपेयाधिकरणोक्तरीत्यैवोपादेयत्वाविषयत्वात्तत्रोपादेयत्वस्य पारिशेष्येण धात्वर्थमात्रवृत्तित्वात् सामानाधिकरण्यार्थं विधेयत्वमपि तद्गतमेव विधिरवबोधयति।

एवं सत्यपि यदि 'सायं जुहोती' त्यादिवत् प्रत्यभिज्ञापकं प्रमाणं सन्निध्याद्यभविष्यत् ततोऽगत्या कालादौ विधेयत्वं कर्मणि चोपादेयत्वं इत्येवं वैयधिकरण्यमपि आश्रीयेत। सम्भवति हि कालादौ कृतिव्याप्यत्वरूपोपादेयत्वासम्भवेऽपि कृत्यधिकरणत्वादिना अज्ञातज्ञापनविषयत्वाख्यं विधेयत्वम्। अत एव

च विधिसंस्पर्शाद्विवक्षा अङ्गत्वं च । न तु तदस्ति । अतस्सामानाधिकरण्यलाभार्थं विधेयत्वस्यापि धात्वार्थवृत्तितयैव बोधनात् विहितविधानायोगाद्भेदसिद्धिः ।

अत्र धात्वर्थे उपादेयत्वसामानाधिकरण्येन विधेयत्वबोधनं प्रकरणान्तरव्यापारः । तत्राप्यनुपादेयगुणान्वयस्य स्ववृत्त्युपादेयतापनयनद्वारा परिशेषाख्यप्रमाणसहकृतस्य धात्वर्थवृत्त्युपादेयतापादनं व्यापारः । प्रत्यभिज्ञापकप्रमाणस्य च सान्निध्यादेरुपादेयत्वविधेयत्वसामानाधिकरण्यप्रतिबन्धकत्वस्य वक्ष्यमाणत्वात् प्रत्यभिज्ञापकप्रमाणाभावरूपस्यासंनिधेरुक्तविधोपादेयत्वसामानाधिकरण्येन विधेयत्वबोधनं व्यापारः । एते एव च भवदेवादिग्रन्थे प्रयोगोत्पत्तिशब्दाभ्यामभिप्रेते ।

अत्र चोपादेयगुणाभाव एव प्रयोजकः, नत्वनुपादेयगुणान्वयोऽपि । गुणसामान्याभावेऽपि पारिशेष्येण धात्वर्थवृत्त्युपादेयतापादनोपपत्तेः । अत एव (१)दशमे गृहमेधीये "आज्यभागौ यजति" इत्यत्र कर्मान्तरत्वपूर्वपक्षे प्रकरणान्तरप्रमाणोपन्यासो युज्यते ।

नचैवं "तनूनपातं यजती" त्यादावपि तदापत्तेः कृतमभ्यासेनेति वाच्यम् । सत्यप्युपधेयसाङ्कर्ये न्यायस्वरूपस्यासाङ्कर्यात् । अभ्यासे हि उपादेयतामतन्त्रीकृत्य पारिशेष्येण धात्वर्थे विधेयत्वापादनमेव व्यापारः । अत एव तत्र सन्निधिः प्रतिबध्यः, न तु प्रकरणान्तर इव प्रतिबन्धकः । प्रकरणान्तरस्थले तु न पारिशेष्येण विधेयत्वापादनं व्यापारः, विशिष्टविधिविधया कालादेरपि विधेयत्वाङ्गीकरणेन तदसंभवात्, अपि तु सत्यपि विधेयान्तरे स्वापादितोपादेयतासामानाधिकरण्यलाभार्थं धा-

(१) १०-७-९.

त्वर्थेऽपि विधेयतापादनम्। अतो न्यायशरीरस्यासङ्कीर्णत्वाद्यु-
क्तः प्रकरणान्तराद्भेदः।

ननु प्रकरणाद्यपेक्षयापि प्रबलस्य नाम्न एव सन्निधापक-
प्रमाणस्य सत्वात्सामानाधिकरण्यप्रतिबन्धकत्वोपपत्तेः कथं
"मासमग्निहोत्रं जुहोति" इत्यत्रापि भेदसिद्धिरिति चेत्-

न; नाम्नः खण्डवाक्यार्थबोधदशायां लिङ्गसंख्याप्रकारकस्वा-
र्थबोधकत्वेन तदप्रकारकधातुपदबोध्यधात्वर्थवृत्तिविधेयत्वस्य स-
मानप्रकारत्वाभावेन नाम्ना प्रतिबद्धुमशक्यत्वात्। एवं हि सान्नि-
धेर्धात्वर्थवृत्तिविधेयताप्रतिबन्धकत्वं यद्धातोः स्वविषयपरत्वप्रमा-
पकत्वम्। धातोर्हि सन्निधिविषयीभूतपूर्वकर्मपरत्वे प्रमापिते
विधेयार्थकत्वं प्रतिबध्यते। अतश्च सान्निधिना "अग्निहोत्रं
जुहोति" इत्येतद्वाक्यगतजुहोतिपदबोध्यस्य लिङ्गसंख्यानन्वयिन
एव होमविशेषत्वमात्रप्रकारतयोपस्थापितस्य 'सायं जुहोति' इत्येत-
द्वाक्यगतजुहोतिबोध्यत्वप्रमापणात् युक्ता तस्य तद्वाक्यगत-
जुहोतिवृत्तिविधेयार्थकत्वप्रतिबन्धकता। प्रकृते तु लिङ्गसंख्या-
न्वयिहोमविशेषत्वप्रकारतया नाम्नोपस्थापितस्य होमस्य 'मासम-
ग्निहोत्रं जुहोति' इत्येतद्वाक्यगतजुहोतिना बाधयितुमशक्यत्वेन
न नाम्नस्तद्वृत्तिविधेयतार्थकत्वप्रतिबन्धकत्वोपपत्तिः।

वस्तुतस्तु न नाम्नो विजातीयहोमत्वप्रकारकबोधजनकता-
पि, तथात्वे जुहोतिपर्यायत्वेन समप्रयोगानापत्तेः। अपित्वग्निदेव-
ताकहोमत्वेनैव। अतिप्रसङ्गस्य प्राचीनप्रयोगाभावेनैवोद्भिदधि-
करणे स्थापितत्वेन योगरूढत्वस्यनङ्गीकाराच्च। अन्यथा म-
त्वर्थलक्षणादिभिया अतिप्रसङ्गभङ्गार्थमपि रूढ्यङ्गीकारे सोमादा-
वपि तदापत्तेः। अतस्समानप्रकारत्वाभावान्न नाम्नो धात्वर्थवृ-
त्तिविधेयत्वप्रतिबन्धकता।

अस्तु वा विजातीयहोमत्वप्रकारकबोधजनकता नाम्नः, तथापि तज्जन्योपस्थितेर्भावनादि देशविषया भेदानुगुणत्वेऽप्युपपद्यमानत्वान्न तद्बाधप्रतिबन्धकता । अत एव यत्र नाख्यातेन भेदबाधः तत्र नाम्नः पूर्वकर्मोपस्थापकत्वमाख्यातसमानाधिकरणत्वादिष्टमेव ।

अत एव यत्र श्रुतायां अनुमितायां वा भावनायां विधेयधात्वर्थश्रवणाभावेन नामार्थस्यैव करणत्वेनान्वयः तत्र नाम्नः पूर्वकर्मोपस्थापकत्वात्तस्यैव वैयधिकरण्यमाश्रित्य फलादिसंबन्धविधिः यथा—"यज्ञेन दानेन तपसाऽनाशकेन विविदिषन्ति" । "सर्वेभ्यो ज्योतिष्टोम"इति च । अत्र हि प्रत्ययोपात्तानां तत्तद्यज्ञाधिकरणकभावनानामेव ज्ञानाख्येन विविदिषाख्येन वा फलेन संबन्धो, न तु यज्ञान्तरस्य भावनान्तरस्य वा । यज्ञादिपदैस्सुबन्तैस्तत्तद्यागादीनामुपस्थितत्वात् ।

ननु—यज्ञादिपदस्य सुबन्तत्वेऽपि 'मासं जुहोति' इतिवत् पूर्वविहिताविहितसाधारण्येन यज्ञमात्रवाचित्वाक्षिप्तमेन पूर्वकर्मानुपस्थितेः कर्मान्तरत्वोपपत्तिः । न च रूपाभावः । अव्यक्तत्वादिसादृश्येन ज्योतिष्टोमान्तरविध्यन्तरोपपत्तिरिति चेत्—

विविदिषादिफलापेक्षितचित्तशुद्धिरूपद्वारसमर्पके "स ह वा आत्मयाजी यो वेदेदमनेनाङ्गं संस्क्रियते इदमनेनाङ्गमुपधीयते" इति वचने एतच्छब्देन पूर्वविहितयज्ञादिपरामर्शात्तदनुरोधेन द्वारसमर्पके विविदिषावाक्येऽपि यज्ञादिपदेन पूर्वविहितयज्ञादिपरामर्शोपपत्तेः ।

न च "अथैष ज्योति" रितिवदेतच्छब्दस्यापि पूर्वविहिताविहितसाधारण्यम् । "स यदेव यजेते" ति पूर्ववाक्ये यच्छब्दोपबन्धेन "य इज्या पशुने" तिवद्याजिना पूर्वविहितकर्ममात्रपराम-

त्वर्थेऽपि विधेयतापादनम् । अतो न्यायशरीरस्यासङ्कीर्णत्वाद्युक्तः प्रकरणान्तराद्भेदः ।

ननु प्रकरणाद्यपेक्षयापि प्रबलस्य नाम्न एव सन्निधापकप्रमाणस्य सत्वात्सामानाधिकरण्यप्रतिबन्धकत्वोपपत्तेः कथं "मासमग्निहोत्रं जुहोति" इत्यत्रापि भेदसिद्धिरिति चेत्-

न; नाम्नः खण्डवाक्यार्थबोधदशायां लिङ्गसंख्याप्रकारकस्वार्थबोधकत्वेन तदप्रकारकधातुपदबोध्यधात्वर्थवृत्तिविधेयत्वस्य समानप्रकारत्वाभावेन नाम्ना प्रतिबद्धुमशक्यत्वात् । एवं हि सान्निधेर्धात्वर्थवृत्तिविधेयताप्रतिबन्धकत्वं यद्धातोः स्वविषयपरत्वप्रमापकत्वम् । धातोर्हि सन्निधिविषयीभूतपूर्वकर्मपरत्वे प्रमापिते विधेयार्थकत्वं प्रतिबध्यते । अतश्च सान्निधिना "अग्निहोत्रं जुहोति" इत्येतद्वाक्यगतजुहोतिपदबोध्यस्य लिङ्गसंख्यानन्वयिन एव होमविशेषत्वमात्रप्रकारतयोपस्थापितस्य 'सायं जुहोति' इत्येतद्वाक्यगतजुहोतिबोध्यत्वप्रमापणात् युक्ता तस्य तद्वाक्यगतजुहोतिवृत्तिविधेयार्थकत्वप्रतिबन्धकता । प्रकृते तु लिङ्गसंख्यान्वयिहोमविशेषत्वप्रकारतया नाम्नोपस्थापितस्य होमस्य 'मासमग्निहोत्रं जुहोति' इत्येतद्वाक्यगतजुहोतिना बाधयितुमशक्यत्वेन न नाम्नस्तद्वृत्तिविधेयतार्थकत्वप्रतिबन्धकत्वोपपत्तिः ।

वस्तुतस्तु न नाम्नो विजातीयहोमत्वप्रकारकबोधजनकतापि, तथात्वे जुहोतिपर्यायत्वेन समप्रयोगानापत्तेः। अपित्वग्निदेवताकहोमत्वेनैव । अतिप्रसङ्गस्य प्राचीनप्रयोगाभावेनैवोद्भिदधिकरणे स्थापितत्वेन योगरूढत्वनङ्गीकाराच्च । अन्यथा मत्वर्थलक्षणादिभिया अतिप्रसङ्गभङ्गार्थमपि रूढ्यङ्गीकारे सोमादावपि तदापत्तेः । अतस्समानप्रकारत्वाभावान्न नाम्नो धात्वर्थवृत्तिविधेयत्वप्रतिबन्धकता ।

अस्तु वा विजातीयहोमत्वप्रकारकबोधजनकता नाम्नः, तथापि तज्जन्योपस्थितेर्मीमांसादेशविषया भेदानुगुणत्वेऽप्युपपद्यमानत्वान्न तद्बाधप्रतिबन्धकता । अत एव यत्र नाख्यातेन भेदबोधः तत्र नाम्नः पूर्वकर्मोपस्थापकत्वमाख्यातसमानाधिकरणत्वादिष्टमेव ।

अत एव यत्र श्रुतायां अनुमितायां वा भावनायां विधेयधात्वर्थश्रवणाभावेन नामार्थस्यैव करणत्वेनान्वयः तत्र नाम्नः पूर्वकर्मोपस्थापकत्वात्तस्यैव वैयधिकरण्यमाश्रित्य फलादिसंबन्धविधिः यथा—"यज्ञेन दानेन तपसाऽनाशकेन विविदिषन्ति" । "सर्वेभ्यो ज्योतिष्टोम" इति च । अत्र हि प्रत्ययोपात्तानां तत्तद्यज्ञाधिकरणकभावनानामेव ज्ञानाख्येन विविदिषाख्येन वा फलेन संबन्धो, न तु यज्ञान्तरस्य भावनान्तरस्य वा । यज्ञादिपदैस्सुबन्तैस्तत्तद्यागादीनामुपस्थितत्वात् ।

ननु—यज्ञादिपदस्य सुबन्तत्वेऽपि 'मासं जुहोति' इतिवत् पूर्वविहिताविहितसाधारण्येन यज्ञमात्रवाचित्वान्नियमेन पूर्वकर्मानुपस्थितेः कर्मान्तरत्वोपपत्तिः । न च रूपाभावः । अव्यक्तत्वादिसादृश्येन ज्योतिष्टोमान्तरविध्यन्तरोपपत्तिरिति चेत्—

विविदिषादिफलापेक्षितचित्तशुद्धिरूपद्वारसमर्पके "स ह वा आत्मयाजी यो वेदेदमनेनाङ्गं संस्क्रियते इदमनेनाङ्गमुपधीयते" इति वचने एतच्छन्देन पूर्वविहितयज्ञादिपरामर्शावदनुरोधेन द्वारसमर्पके विविदिषावाक्येऽपि यज्ञादिपदेन पूर्वविहितयज्ञादिपरामर्शोपपत्तेः ।

न च "अथैष ज्योति" रितिवदेतच्छब्दस्यापि पूर्वविहिताविहितसाधारण्यम् । "स यदेव यजेत" ति पूर्ववाक्ये यच्छब्दोपबन्धेन "य इज्या पशुने" तिवद्याजिना पूर्वविहितकर्ममात्रपराक-

र्शात् तदनुरोधेनैतच्छब्दस्यापि पूर्वविहितकर्ममात्रपरामर्शकत्वोपपत्तेः । अतश्च तात्पर्यग्राहकत्वस्याग्न्यादिपदस्य पूर्वकर्मोपस्थापकत्वोपपत्तेर्न कर्मान्तरत्वापत्तिः ।

न च यज्याद्यभेदेऽपि भावनोपस्थापकाभावात्तद्भेदोपपत्तिः। "सर्वेभ्यो दर्शपूर्णमासा" वित्यादियज्यादेरेव स्वसम्बन्ध्यव्यभिचरितभावनोपस्थापकत्वोपपत्तेः ।

न च फलभेदाद्भावनाभेदः, प्रमाणाभावात् । अत एव "भिद्यते भावनामात्र" मित्यादिवार्तिकोक्तिः प्रौढिमात्रमेव ।

नचैवमनेकासां भावनानां विधानाद्वाक्यभेदाशङ्का, एकप्रत्ययोपादानेन "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" तिवत् तदनापत्तेः ; तासां च तत्तद्यज्यादिकरणत्वं प्राप्तमेवेति यज्यादिपदमनुवादो भावनान्तरत्वप्रतिबन्धार्थः । विविदिषाफलसम्बन्धेन विनियोगमात्रकरणाच्च एकपदोपादानेऽपि "य इष्ट्ये" तिवद् नैकप्रयोगता ।

तदेवमुक्तप्रकारेणैकवाक्यत्वसम्भवेऽपि 'विविदिषन्ती' सस्यानुषङ्गेण वाक्यभेदाङ्गीकरणं 'अर्धमन्तर्वेदि मिनोति' इतिवच्च कर्मसामान्यलक्षणामङ्गीकृत्यैकवाक्यत्वोपपादनं पितामहानामभ्युपेत्यवादमात्रम् । 'सर्वेभ्यो ज्योतिष्टोम' इत्यत्रापि भवदेवोक्तविधया अनारभ्याधीतत्वेऽपि नाम्नः पूर्वकर्मोपस्थापकत्वोपपत्तेर्न तावद्यागभेदः । तेनैव स्वाव्यभिचरितभावनोपस्थितिसम्भवान्न तद्भेदोऽपि । श्रुतवाक्यनिर्वाहार्थन्तु अश्रुतकर्तव्यपदाध्याहार इति विशेषः । वस्तुतस्तु प्राकरणिकत्वादेव सूत्रोक्तादकर्मान्तरम् ।

एवं यत्र गवामयनादौ "चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यष्षडह" इत्यादि वचनैर्यागान् विधाय पुनः प्रकरणान्तरे

तादृशैरेव वचनैः श्रूयन्ते तत्र मत्यप्यप्राप्तोपादेयगुणाभावसहकृ-तासन्निधौ नाम्नैव पूर्वयागानां तैश्च भावनानामुपस्थितत्वाच्च कर्मान्तरत्वम् । नचैवमभ्यासाद्भेदशङ्कयः । "यं कामं कामयते तमेतेनाप्नोती"ति सन्निधिपठितवाक्यान्तरप्रमितफलसम्बन्धार्थत्वेनान्यपरत्वाभावात् । अतश्च तस्यैव कर्मणो गवामयनप्रकरणपाठात्तदीयफलसम्बन्धः । प्रकरणान्तरपाठाच्च फलान्तरसम्बन्ध इति वेदितव्यम् ।

यदि तु नामातिदेशादिव्यवहारसिध्यर्थं भेदावश्यकता ततः कोत्पत्तिपरत्वं क्व वा फलसम्बन्धार्थं पुनः श्रवणमिति विनिगमनाविरहरूपाभ्यासादेवोभयत्राप्युत्पत्तिविधित्वमङ्गीकृत्य भेदः प्रसाध्यः ॥

एवं द्वादशाहप्रकरणस्थे 'प्रायणीयोऽतिरात्र' इति वचने विहितस्यातिरात्रसंस्थाकप्रायणीयस्य गवामयनप्रकरणस्थेन "वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति" इति वाक्येन विधेयगुणाभावात् तस्मिन्नपि वाक्ये कर्मान्तरमेव विधेयम् । वैश्वानरपदं हि वाक्यान्तरेण वैश्वानरदेवत्यग्रहस्य प्राप्तत्वान्नामधेयमेव । ज्योतिष्टोमपदस्य द्वादशाहे ज्योतिष्टोमधर्मकत्वस्य चोदनालिङ्गातिदेशेनैव प्राप्तत्वादविधेयार्थकत्वम् । अतश्च विधेयान्तराभावात् कर्मान्तरविधिरेवायम् ।

न चैतद्वाक्यविहितकर्मानुवादेन द्वादशाहिकवाक्ये अतिरात्रसंस्थामात्रविधानोपपत्तेः कथं कर्मान्तरत्वमिति वाच्यम् । गवामयनप्रकरणेऽपि प्रथमेऽहन्यतिरात्रसंस्थाविधेः पार्थक्येन भासत्वात् । अतोऽत्रापि विनिगमनाविरहादेव कर्मान्तरत्वम् । भाष्यकारीयप्रकरणान्तरन्यायेन भेदोक्तिस्तु अप्राप्तोपादेयगुणाभावविशिष्टसन्निधिमात्रेण व्याख्येया ।

एवं "वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती" इत्यत्रापि प्रकरणान्तरात् भेदोक्तिः सन्निधिविरहमात्रेणैव, न तु वस्तुतः प्रकरणान्तरन्यायोऽस्ति। उपादेयगुणाभावाभावात्, अत्र भृथपदनाम्न्यातमपानाधिकरणेन सौमिकावभृथस्यैवोपस्थितत्वाच्च। भेदस्तु तत्र प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेर्गुणादेव। यद्यपि चात्र निष्कासस्य करणत्वेन श्रुतस्यापि प्रयाजशेषवत् संस्कार्यत्वं कल्प्येत तथापि प्राप्तकर्मानुवादेन तुषाख्यद्रव्यसम्बन्धस्संस्कार्यसम्बन्धश्चेति(१) इन्द्रियकामाधिकरणोक्तरीत्या वाक्यभेदप्रसङ्गात् कर्मान्तरम्।

अत्र हि निष्कासस्य प्रयाजशेषवत् संस्कार्यत्वेऽपि न तुषाणां प्रकृतपुरोडाशानुनिष्पन्नानामपि संस्कार्यत्वं न्यायसुधोक्तं युक्तम्। तथात्वे कर्मान्तरविधानेऽपि उद्देश्यानेकत्वनिमित्तवाक्यभेदस्यापरिहार्यत्वात्। नचोभयोरपि उपयोगित्वाविशेषात् विनिगमनाविरहः, तुषपदस्य जाघनीपदवदवयवविशेषवाचित्वेऽपि उत्तरार्धादिपदवत् ससम्बन्धिकवचनत्वाभावेन लौकिकतुषपरत्वोपपत्तौ विहितप्रतिपत्तिकपुरोडाशीयतुषग्रहणे प्रमाणाभावात्। अत एव बौधायनीयकल्पे लौकिकतुषग्रहणमेवोपादिष्टम्। निष्कासपदस्य ससम्बन्धिवचनत्वात् 'वारुण्या' इत्यनेन विशेषणाच्च अर्थकर्मत्ववादिमतेऽपि च परप्रयुक्तद्रव्योपजीवित्वस्यावश्यकत्वेन लौकिकनिष्कासग्रहणानुपपत्तेरुपयुक्तस्य निष्कासस्यैव तेन ग्रहणात् प्रयाजशेषन्यायेन युक्तं संस्कार्यत्वम्।

नाचातिदेशकप्रातिपत्त्यन्तरानिराकाङ्क्षस्य प्रयाजशेषन्यायविषयत्वासम्भवः। अर्थकर्मत्वपक्षेऽपि निष्कासांशे आतिदेशिकप्रतिपत्तिबाधस्यावश्यकत्वात्। प्रयाजशेषस्यापि सर्वहोमसम्भवेना

१ पू० मी० २-२-११.

नपेक्षस्यैव प्रतिपत्तिविधानाच्च। अतो निष्कासस्संस्कारार्थत्वेनाव-भृथविधानात् प्राप्तावभृथानुवादेन च द्रव्यविधानाद्वाक्यभेदापत्तेः गुणात् कर्मान्तरमेव प्रसिद्धावभृथधर्मकं तुषद्रव्यकश्च संस्कारा-र्थत्वेन विधीयते। निष्कासस्यापि च त्यागांशं प्रति गुणत्वाच्च-शब्दोपात्ततुषसमुच्चयोपपत्तिः।

नचैवं निष्कासस्य संस्कार्यत्वपक्षे(१)-'प्रतिपत्तिरिति चेन्न कर्मसंयोगात्' इति एकादशाधिकरणसूत्रविरोधः; तस्य तुषांशे प्रतिपत्तिनिराकरणार्थत्वेनाप्युपपत्तेः।

नचैवं तस्य कर्मान्तरस्य प्रतिपत्तित्वे अर्थकर्मभूतप्रसिद्धा-वभृथसादृश्याभावादवभृथशब्दप्रयोगानुपपत्तिः। अग्निहोत्रा-दिवत् संस्कार्यकृतसादृश्याभावेऽपि नामातिदेशविधया साध्यध-र्मसादृश्येन तदुपपत्तेः।

अस्तु वा तत्रस्थभाष्यानुसारान्निष्कासांशेऽप्यर्थकर्मत्वम्। तथापि प्राप्तकर्मानुवादेन द्रव्यद्वयविधाने वाक्यभेदापत्तेर्गुणादेव भेदो, न तु प्रकरणान्तरात् इत्यवधेयम्।

(२)केचित्तु उपादेयैकगुणाभाव एवासन्निधिसहितः प्रकर-णान्तरम्, अनुपादेयगुणवदुपादेयानेकत्वस्यापि वाक्यभेदापरपर्या धात्वर्थनिष्ठविधेयतापादकत्वात्। अतश्च तुषनिष्कासरूपानेकगु-णविधाने वाक्यभेदापत्तेर्यागभावनान्तरस्यैव विधेयत्वावगमात् प्रकरणान्तरादेव भेदसिद्धिः। न चैवं वाक्यभेदापादकगुणानेक-त्वस्य गुणविधया भेदकत्वानुपपत्तिः, सर्वस्यैव गुणनामधेयादेस-न्निधावेव तत्वेन भेदकत्वाङ्गीकारात्। असन्निधौ तु प्रकरणा-

---

१ जै. सू. ११-२-६५.

२ पक्षोऽयं मीमांसाबालप्रकाशे सम्यगुपपादितः श्रीशङ्करभट्टै-रवत एवायमत्रत्यः, तस्यैव च खण्डनमत्र क्रियत इति बोद्धव्यम्॥

न्तरविधया । अत एव "विश्वजिता यजेते"त्यत्र न संज्ञाया भेदकत्वम् , अपि तूपादेयैकगुणाभावतया प्रकरणान्तरस्यैवेत्याहुः।

तन्न ; उपादेयतामतन्त्रीकृत्य स्वमात्रवृत्तिविधेयतापनयेन धात्वर्थवृत्तिविधेयतासम्पादनव्यापारकत्वेन स्वापादितोपादेयतासामानाधिकरण्येन विधेयतासम्पादनाख्यप्रकरणान्तरव्यापारकत्वाभावात्तदन्तर्भावानुपपत्तेः । तथा हि——

सन्निधावसान्निध्यौ वा गुणानेकत्वं नोपादेयतानेकत्वाद्भेदकम् , सत्यप्युपादेयानेकत्वे "यदग्नये च प्रजापतये चे"त्यादौ अग्नेः प्राप्तत्वेन वाक्यभेदाप्रसक्तेः अभेदकत्वात् । अपि तु विधेयानेकत्वात् । अतश्च तत्रोपादेयतामतन्त्रीकृत्य सान्निध्यसान्निधिसाधारण्येन स्वमात्रवृत्तिविधेयतापनयनपूर्वकधात्वर्थवृत्तिविधेयतापादनं व्यापारः, प्रकरणान्तरस्थले तु न मामवृत्तिविधेयतापनीयते । प्राप्तकर्मानुवादेनापि मासविधानसम्भवात् , अपि तूपादेयता । अतश्च स्ववृत्त्युपादेयतापनयनद्वारा पारिशेष्याद्धात्वर्थवृत्त्युपादेयतामापाद्य तत्सामानाधिकरण्येन विधेयताबोधनपेक्षप्रमाणान्तरासङ्कीर्णव्यापारः प्रकरणान्तरस्य । अतश्च प्रकरणान्तरव्यापाराभावादुपादेयगुणानेकत्वस्य सन्निधाविवासान्निध्येऽपि गुणविधयैव भेदकत्वम् ।

अत एव नामधेयस्यापि सन्निधाविवासान्निध्येऽपि उपादेयतामतन्त्रीकृत्य स्वशक्यतावच्छेदकत्वाक्षेपकत्वेनैव भेदकत्वात् प्रकरणान्तरव्यापारकत्वाभावेन नामधेयत्वेनैव भेदकत्वम् । अतः पूर्वोक्तप्रकारेणैव तुपानिष्कासादौ भेदसिद्धिः । तत्सिद्धं उपादेयगुणाभावविशिष्टानुपस्थितेः प्रकरणान्तराख्याया मासाग्निहोत्रं कर्मान्तरमिति ।

"मासं दर्शपूर्णमासाभ्या"मित्यादिवाक्येऽप्ययमेवम् । तत्र त्वयं

विशेषः(१)-साप्तमिकन्यायेन दर्शपदस्य पूर्णमासपदस्य च प्राकृत-यागत्रिकद्रव्यदेवताद्यतिदेशकत्वात्तेषां च एकपदोपादानेन समुच्च-यावगतेरुत्पत्तिवाक्यगतसमुच्चितद्रव्यदेवतानुरोधेन संख्यावत् कर्मभेदावसायात् प्रकृतिवद्यागषट्कमेव विधेयमिति ।

नचैवमग्निहोत्रेऽपि प्राकृतसायंप्रातःकालादीनां समुच्चयेनातिदेशादुत्पत्तिवाक्यगतत्वेन भेदकत्वापत्तिः । सायंप्रातःकालादिवत "विराट्सम्पन्नमग्निहोत्रं भवती"त्यादि वाक्यविहितानां आवृत्तेरपि अतिदेशात्तदादायैव कालादिसमुच्चयोपपत्तेः । प्रकृते तु तदभावात् कर्मभेद इति वैषम्यम् ।

न चैवं सौर्येऽपि प्राकृताग्नेयद्रव्यधर्माणामेकेन प्रकृतिवच्छब्देनातिदेशात् समुच्चयावगतेरुत्पत्तिवाक्यगतत्वेन भेदकत्वापत्तिः । तत्राकाङ्क्षावशेन कल्प्यस्य प्रकृतिवच्छब्दस्यैकप्रकृतिधर्मैरेव निराकाङ्क्षत्वोपपत्तेः अन्यतराग्नेयवदित्येव कल्पनात् । प्रकृते तु तेन शब्देन लक्षणया धर्मप्राप्तौ समुच्चयस्यावश्यकत्वात् युक्ता भेदकतेति वैषम्यम् ।

यत्तु केश्चित् 'मासं दर्शपूर्णमासाभ्या'मित्यनेन द्विवचनेन कर्मद्वयेऽवगते पश्चात्समुच्चितद्रव्यदेवतानुरोधेनैकजात्यवच्छिन्नस्यावान्तरभेद इत्युक्तम्, तत् द्विवचनस्य प्रातिपदिकाभिहितप्रकृतियागगतधर्मसमुदायगतत्वेनानुवादात् "समिधो यजती"तिवद्भेदकत्वानुपपत्तेरुपेक्षितम् ।

नन्वेवमैन्द्राग्नद्रव्यदेवत्यस्यापि दर्शपदेनातिदेशात्सप्तकर्मापत्तिः । न च(२) सोमप्राक्कालरूपैन्द्राग्नधर्माभावादनतिदेशः ।

---

१ सप्तमाध्यायचतुर्थपादीयप्रथमाधिकरणन्यायेनेत्यर्थः ।

२ 'नासोमयाजी सन्नयेत्' इति असोमयाजिनस्सान्नाय्यनिषेधेन असन्नयत एवैन्द्राग्नविधानेन सोमप्राक्कालिकत्वमैन्द्राग्नधर्म इति भावः ।

तस्यौपदेशिकेन(१) सत्रस्य सोमोत्तरकालत्वेन बाधेऽपि चातुर्मास्यादिवत्स्वैन्द्राग्नविकृतित्वेन धर्मान्तरातिदेशोपपत्तेः। अत एव प्रकृतिवद्भावबाधापत्तेः नैन्द्राग्नधर्मातिदेश इति केषाञ्चिदुक्तमपास्तम्। विकृत्यन्तरेष्वपि तदापत्तेरिति चेत्—

याज्ञिकाचारमूलभूतश्रुत्या ऐन्द्राग्नधर्मपर्युदासोपपत्तेः। सर्वथा प्रकरणान्तरन्यायेन कर्मान्तरमित्येतावत् स्थितम्।

एवं यत्र देशाख्योऽनुपादेयो गुणो निमित्ताख्यो वा तत्रापि कर्मान्तरत्वम्, यथा "सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपाल" इति। न चात्रोपादेयगुणाभावविशिष्टानुपस्थितिसत्त्वेऽपि 'सर्वेभ्यो ज्योतिष्टोमः' इति वदन्यसमानाधिकरणाग्नेयपदस्यैव पूर्वकर्मोपस्थापकत्वोपपत्तेर्भेदानुपपत्तिरिति वाच्यम्। आग्नेयपदस्य नामधेयत्वाभावेन यजिपदेन पूर्वविहिताविहितकर्मसाधारणेनाग्निदेवत्यद्रव्यमात्रवचनस्य विशिष्य पूर्वकर्मोपस्थापकत्वाभावात्।

निमित्तस्य तु 'सत्रायागूर्य विश्वजिता यजेत' इति। आगूरणं सङ्कल्पः, सत्रमकुर्वतः तद्विश्वजितो निमित्तमिति वक्ष्यते। अतश्च 'विश्वजिता यजेत' इति विहिताद्यागात् कर्मान्तरमिदम्।

नचानेन विनियुक्तस्य प्रयुक्तस्य वा 'विश्वजिता यजेत' इत्ययमुत्पत्तिविधिरेव किं न स्यादिति वाच्यम्। विनियोगप्रयोगविषयतासामानाधिकरण्येनावगतस्योत्पत्तिपरत्वस्य सन्निधिं विना बाधे प्रमाणाभावात्। तस्मात् सिद्धं कर्मान्तरत्वम्।

प्रयोजनं सूत्रं च स्पष्टम्॥

इत्येकादशं प्रकरणान्तराधिकरणम्।

---

१ "आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशास्सत्रमासीरन्" इति वाक्येन प्रथमयज्ञपदवाच्याग्निष्टोमसंस्थाकज्योतिष्टोमोत्तरमेव सत्रविधानात् सोमोत्तरकालत्वं सत्रस्येत्याशयः।

## अथ आदशं फलसंस्कार्याधिकरणम् (१२) ॥

## सू—फलश्चाकर्मसन्निधौ ॥२—३—२५॥(सि)

एवं फलं चकारात्संस्कार्यं चानुपादेयत्वाद्भेदकम् । यथा-अनारभ्य श्रुते(१) "रुक्काम आग्नेयमष्टाकपालं निर्वपेदि"त्यादौ यज्ञश्रवणेऽपि देशवाक्यगतैव कर्मान्तरत्वोपपत्तिः। संस्कार्यभेदात्तु अश्वमेधे(२) "त्रैधातवीया दीक्षणीया भवती"ति । अत्र हि त्रैधातवीयादीक्षणीययोः भेदात् सामानाधिकरण्यानुपपत्तेः जघन्यदीक्षणीयापदं स्वशक्यकार्यं यजमानसंस्कारं लक्षयति । अतश्च दीक्षणीयापदेन लक्षणया संस्कारश्रवणया यजमानस्य संस्कार्यस्योपस्थितत्वात् अनुपादेयमहकृतानुपस्थितेः प्रसिद्धत्रैधातवीयापेक्षया कर्मान्तरमेवेदम् ।

वस्तुतस्तु यज्ञसमानाधिकरणस्य त्रैधातवीयापदस्य पूर्वकर्मोपस्थापकत्वोपपत्तेः नेदं कर्मान्तरम् ।

यत्तु भवदेवेन त्रैधातव्यापदस्य पूर्वकर्मोपस्थापकत्वे कार्यान्तरसम्बन्धे च गौरवापत्तेः कर्मान्तरविधिरेवायं इत्युक्तम् । तत् "सर्वेभ्यो दर्शपूर्णमासा" वित्यादावपि तदापत्तेः पूर्वकर्मोपस्थापकत्वे च व्यापारान्तरानपेक्षणात् प्रत्युत कर्मान्तरविश्राम एव गौरवापत्तेरुपेक्षितम् । वार्तिके तदुदाहरणन्तु धात्वर्थाभेदेऽपि भावनाभेद इति प्रौढिवक्षाभिप्रायेण ।

---

१. रुक्कामः तेजस्कामः ।

२. आप श्रौ २०-८-४. आग्नावैष्णवहविष्का काचिदिष्टिः त्रैधातवीयेष्टिः । त्रैधातवीयापदनिर्वचनं तु तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशानुवाके द्रष्टव्यम् ।

संस्कार्योदाहरणन्तु 'औदुम्बरीं प्रोक्षती' त्यादि व्रीहि-प्रोक्षणाद्यपेक्षया प्रोक्षणान्तरविधायकमिति द्रष्टव्यम् ।

नन्वेवमपि पूर्वसूत्रेणैव सर्वानुपादेयसङ्ग्रहोपपत्तेस्सूत्रान्तर-प्रणयनवैयर्थ्यम् । न हि फलसंस्कार्ययोरनुपादेयत्वं दुर्ज्ञेयम् । येन तदुपपादनार्थमेतदारम्भो युज्येत । वाजपेयाधिकरणे प-श्वानामप्यनुपादेयत्वस्य स्थापितत्वादिति चेत्-

न ; फलसंस्कार्ययोः प्रकरणान्तरविधया भेदकत्वानुपपत्ति-शङ्कानिराकरणार्थत्वात् । एतयोर्हि अङ्गित्वाद्विनियोगविधि-विषयत्वापरपर्यायाङ्गत्वमात्रस्य धात्वर्थद्वारानयया आक्षेपात्तत्साधना-नाधिकारव्येनोत्पत्तिविषयत्वापरपर्यायविधेयत्वाक्षेपकत्वेऽपि उ-पादेयत्वानाक्षेपकत्वान्न प्रकरणान्तरविधया भेदकत्वम् । का-लदेशनिमित्तानां त्वनुष्ठापकत्वेन प्रयोगविशेषणत्वाद्धात्वर्थे अनु-ष्ठाप्यत्वापरपर्यायोपादेयत्वाक्षेपकत्वाद्युक्तं तद्विधया भेदकत्व-मितीमामाशङ्कां निराकर्तुमिदं सूत्रम् । सत्यप्यङ्गित्वे अनुष्ठा-पकत्वस्यापि कामनाविषयत्वेन सत्वादुपादेयत्वाक्षेपकत्वोपपत्तेः-रकर्मसन्निधौ युक्तं तद्विधया भेदकत्वमिति ।

अत्र केचित्-कृतिविषयत्वमेवोपादेयत्वमङ्गीकृत्य कर्तृविशेष-णानामेकत्वब्राह्मणत्वादीनामपि अनुपादेयत्वमिच्छन्ति । अत एव 'आनुपादेयमेकत्वं यजमानस्य कालवत्' इति कण्डिका सङ्-च्छते इत्याहुः । तन्न, कृतिर्हि यथैव विषयनिरूप्या तथा आ-श्रयनिरूप्यापि । अतश्चोपादेयत्वमपि कृतिविषयत्वाश्रयत्वान्य-तरत्वमेव । अत एवास्मद्गुरुचरणैः प्रवर्तनाख्यविधिव्यापारगम्यत्वमु-पादेयस्येत्युक्तम् । अत एव चाख्यातोपात्तः कर्ता उपादेय इत्य-पि कण्डिकान्तरं सङ्गच्छते । अन्यथा कृतिविषयत्वाभावेन तस्य तदनुपपत्तेः ।

नः च कर्तुराश्रयत्वेऽपि तद्विशेषणानामेकत्वादीनां तदभावात् कथमुपादेयतोपपत्तिः । क्रियाया अविषयत्वेऽपि तद्विशेषणानां द्रव्यादीनां विषयत्वेनोपादेयत्ववदेकत्वस्यापि तदुपपत्तेः । अत एवास्माभिः कृतिसमवायाघटितसम्बन्धेनेत्यत्र विशेषितमनुपादेयत्वलक्षणे । एकत्वादेरनुपादेयत्वोक्तिस्तु यथाशक्त्युपबन्धप्रयोजकीभूतकृतिविषयत्वरूपोपादेयत्वनिषेधपरा । तस्मात् पञ्चैवानुपादेयानीति तान्येव भेदप्रयोजकानि ।

प्रयोजनं—पूर्वपक्षे प्रकृतित्वात् प्रतिपदि करणम् । सिद्धान्ते पर्वणीति ।

सूत्रं स्पष्टम् ॥

इति द्वादशं फलसंस्कार्याधिकरणम् ।

अथ त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥(१३)

## सू—सन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥ २-३-२६. ॥ (सि)

( विषयः )

पञ्चस्वपि अनुपादेयेषु सन्निधौ प्रत्युदाहरणार्थमिदं सूत्रम् । यथा 'सायं जुहोति' इत्यादि अग्निहोत्रं प्रकृत्य, 'समे दर्शपूर्णमासाभ्यां यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति दर्शपूर्णमासौ प्र-

कृत्य, "स्विष्टकृतं यजती" ति प्रकृत्य च 'सुषात स्विष्टकृतं यजती'ति श्रुतानि पञ्चानामप्युदाहरणानि ।

( संशयः )

तत्रापि किमुपादेयगुणाभावमात्रेण भेदः ? उत नेति विचार्यते ।

( पूर्वपक्षः )

तत्र यद्यप्युपादेयत्वस्य कृतिविषयत्वाश्रयत्वान्यतरत्वरूपस्य विधेयत्वस्य चासाधारणरूपस्य भेदो वाजपेयाधिकरण एव निरूपितः तथापि तयोरुत्सर्गसिद्धस्य सामानाधिकरण्यस्य त्यागे प्रमाणाभावात् सन्निधावपि उपादेयगुणान्तराभावेन उपादेयत्वे धात्वर्थवृत्तितयाऽऽदिष्टे उत्पत्तिविधिविषयत्वाख्यं विधेयत्वमपि सामानाधिकरण्यसिद्ध्यर्थमाक्षेप्तव्यम् । न चात्र वैयधिकरण्येनापि तदाक्षेप्तुं शक्यम् । कालाद्युत्पत्तेर्लोकसिद्धत्वेनाविधेयत्वात् । निमित्तफलसंस्काराणामनङ्गत्वेन विनियोगविधिविषयत्वादिरूपस्यापि विधेयत्वस्यायोगाच्च । अतः कर्मैव विधेयमिति विहितविधानायोगाद्भिद्यत इति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—पूर्वकर्मोपस्थापकाधिकाराख्यस्य सन्निधेर्बाधायोगान्नात्र कर्मभेदः । न च विधिश्रुतिप्रापितसामानाधिकरण्यानुरोधेनाख्यात इव सन्निधेर्बाधो युक्त इति वाच्यम् । विधेरेव "दध्ना जुहोती" त्यादिविशिष्टोत्पत्तिविधिगौरवपरिहारार्थं सन्निध्युपजीवकत्वेनोत्पत्तिपरत्वानङ्गीकारात्सामानाधिकरण्यासिद्धेः । 'मासमग्निहोत्रं जुहोति' इत्यत्र तु सन्निध्यभावात्सामानाधिकरण्यबाधो जुहोतेश्च कथञ्चित् "यदाहवनीये जुहोती"ति पूर्वकर्मोपस्था-

पकत्वकल्पनेति दोषद्वयापेक्षया विशिष्टविध्यङ्गीकार एव युक्त-
इति वैषम्यम् ।

अत एव कालदेशवाक्ययोः न कालादिविधिपरत्वम् । अपि
तु कर्मांशे प्रयोगविधिः, कालांशे विनियोगविधिः, संभवति हि
कालदेशयोः वाजपेयाधिकरणोक्तरीत्या कृतिव्याप्यत्वरूपप्रयोग-
विषयत्वासंभवेऽपि यागोद्देशप्रवृत्तपुरुषकर्तृ अधिकरणतासम्ब-
न्धेन कारकत्वाद्यागाङ्गत्वेन विनियोगः । यत्र तु 'य इष्ट्वा'
इत्यादौ प्रयोगोऽपि प्राप्तस्तत्र कर्मानुवादेन कालाद्यंशे विनि-
योगविधिरेवेत्युक्तं पौर्णमास्यधिकरणे । निमित्तफलसंस्कार्याणां
स्वनङ्गत्वेन विनियोगानर्हत्वात्तदनुवादेन स्वरूपेण प्राप्तस्यापि
कर्मणो विनियोगविशिष्टप्रयोगविधानं विनियोगमात्रविधानं वा ।
तत्र निमित्तस्य कृतिकारकत्वाभावेनानङ्गत्ववत् पुरुषार्थत्वाभावे-
नानाङ्गित्वस्यापि सत्त्वादनुष्ठापकत्वेन च प्रयोगाक्षेपकत्वात् तस्य
च फलापेक्षायां यावज्जीवाधिकरणवक्ष्यमाणरीत्या पापक्षयाद्यर्थं
विनियोगः कल्प्यते ।

फलसंस्कार्ययोस्तु पुरुषार्थत्वात् स्वार्थमेव विनियोगः । काम-
नाया अनुष्ठापकत्वात्तत्र प्रयोगोऽपि । संस्कार्ये तु प्रधानस्यैवानु-
ष्ठापकत्वात् प्रयोगस्यान्यतो लाभेन शेषाख्यसंस्कार्योद्देशेन वि-
नियोगमात्रमिति विवेकः ।

तदेवमुत्पत्तिमत्यभिज्ञाने विधिफलस्य विनियोगादिविषय-
त्वेनोपपत्तेरुत्पत्तिविषयत्वाभावान्न कर्मभेदः । एवमधिकारा-
ख्यसन्निध्यभावेऽपि यत्र यच्छब्दयोगो यथा 'य इष्ट्वा'
इत्यादौ तत्रापि पूर्वविहितकर्मोत्पत्त्याद्यनुवादप्रतीतेः का-
लविनियोगविधिमात्रकरणेन कर्मभेदः । यजेत इति प्र-
त्ययेन च सकलभावनानुवादान्न तदनेकत्वकृता वाक्यभेदः ।

पदद्वयेन च पर्वलक्षणात् चशब्दस्य च निपातत्वेन भावनान्व- यं विनापि कालान्वयोपपत्तेर्विकल्पविशिष्टकालविधानान्न तदने- कत्वकृतोऽपि वाक्यभेदः ।

तथा यच्छब्दयोगस्याप्यभावेऽपि "एतया पुनराधेयसम्मि- तयेष्ट्वाऽग्निहोत्रं जुहोती"ति विधौ नाग्निहोत्रभेदः । "दीक्षितो न जुहोती"तिनिषेधापेक्षितोदवसानीयरूपावधिमात्रविधौ तात्पर्य- ग्राहकतयाऽनुवादात् । अतस्सिद्धं पूर्वकर्मोपस्थापकप्रमाणं कर्मा- न्तरत्वप्रमाप्रतिबन्धकमिति ।

ननु-स्वरूपसत्पूर्वकर्मोपस्थापकं प्रमाणं कर्मान्तरत्वप्रमाप्रति- बन्धकम्, तदभावश्च तां प्रति कारणम् । 'मासमग्निहोत्रं जु- होति' इत्यत्र पूर्वकर्मोपस्थापकभ्रमदशायां वस्तुतस्तदभावसत्त्वेन भे- दप्रमोत्पत्तिप्रसङ्गात् । नापि भ्रमप्रमासाधारणं तदभावज्ञानं कार- णम् । तथात्वे 'सायं जुहोती'त्यादावभावभ्रमदशायां भेदप्रमा- पत्तेः । नापि तदभावप्रमा । गृहमेधीये 'आज्यभागौ यजति' इत्य- त्र पूर्वकर्मोपस्थापकस्यातिदेशस्याभावभ्रमदशायां भेदप्रमापत्तेः ।

अत एव पूर्वकर्मोपस्थापकप्रमाणज्ञानत्वेन भ्रमप्रमासाधारण्ये- न प्रतिबन्धकता, भेदज्ञानत्वेन प्रतिबध्यता, अतश्च प्रतिबन्धकाभा- वसत्त्वे भेदज्ञानोत्पत्तेर्विषयाबाधेन प्रमात्वसिद्धिरित्यपास्तम् । उ- क्तप्रमाणज्ञानेऽप्रामाण्यज्ञानदशायां उत्तेजकसत्त्वेन भेदप्रमापत्तेः ।

नचात एव कैश्चिन्नोपादेयगुणाभावो भेदप्रयोजकः, अपि तु अनुपादेयगुणसत्त्वैवेत्युक्तम् । अतश्चोक्तोदाहरणे तदभावेनैव भेदाप्रसक्तेर्युक्तमेव नाग्नेस्सान्निध्याभावेऽपि पूर्वकर्मोपस्थापकत्व- मिति वाच्यम् । अनुपादेयगुणस्य पारिशेष्येण धात्वर्थप्रत्यु- पादेयत्वापादनस्य तदभावेऽपि गुणसामान्याभावमात्रेण सिद्धेरु- पादेयगुणाभावस्यैव भेदप्रयोजकत्वात् । अतः कथं सन्निधेस्तत्प्र-

तिबन्धकत्वमिति चेत्—

न; भेदाननुगुणस्वेतराबाध्यपूर्वकर्मोपस्थापकप्रमाणज्ञानमात्रस्य भेदप्रमाप्रतिबन्धकताङ्गीकारात् । अस्ति च 'साम्नं जुहोती'त्यादौ तत्, पूर्वकर्मोपस्थापकस्य सन्निधेः केनाप्यबाध्यमानेनाबाधात् नाम्नः पूर्वकर्मोपस्थापकस्यापि नामातिदेशविधया भेदानुगुणत्वाच्च भेदप्रमाप्रतिबन्धकत्वम्। अस्ति च "आज्यभागौ यजती" त्यत्रापि पूर्वकर्मोपस्थापकप्रमाणस्यातिदेशभेदस्य स्वपदोपात्तभेदबाध्यत्वेऽपि तदितरेणाबाध्यत्वम् । न हि तत्रातिदेशः प्रकारान्तरेण बाध्यते अपि तु क्लृप्तोपकारपूर्वाज्यभागाभेदादेव। अतश्च तत्रासत्यपि प्रमाणे स्वेतराबाध्यपूर्वकर्मोपस्थापकप्रमाणज्ञानस्य संभावनात्मकस्य सत्त्वाद्भेदप्रमाप्रतिबन्धकत्वोपपत्तिः । 'मासमग्निहोत्रं जुहोती'त्यत्रापि उक्तविधज्ञाने प्रमात्मके सति भेदप्रमाप्रतिबन्धसत्त्वान्न व्याहतिः ।

भेदप्रमाजनकं च भेदाननुगुणपूर्वकर्मोपस्थापकप्रमाणप्रतियोगिकस्य स्वेतरप्रयुक्तस्याभावस्य प्रमा । अस्ति चेदं मासाग्निहोत्रे सन्निध्यभावस्याभेदातिरिक्तासंबन्धिपदव्यवधानप्रयुक्तत्वात् । आज्यभागयोश्चातिदेशाभावस्याभेदप्रयुक्तत्वेऽपि तदितरप्रयुक्तत्वाभावेन कर्मान्तरत्वानापत्तिः । नह्यभेदोपजीव्यतिदेशाभावस्योपजीव्यविरुद्धभेदप्रयोजकत्वं सम्भवतीति युक्तं अकर्मान्तरत्वम् । अतस्सिद्धं प्रत्यभिज्ञाने सर्वत्राकर्मान्तरत्वम् । प्रयोजनं स्पष्टम् ।

सूत्रं फलशब्दस्यानुपादेयमात्रोपलक्षणत्वं 'आज्यभागौ यजती'त्यत्र च गृहमेधीयसंबन्धोपलक्षणत्वमङ्गीकृत्य व्याख्येयम् ।

इति त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥

———:o:———

## अथ चतुर्दशमाग्नेयस्तुत्यर्थताधिकरणम् ॥ (१४)

### सू—आग्नेस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २—३—२७. ॥ (पू)

( विषयसंशयौ )

कालद्वये आग्नेयद्वयं विधाय तत्रैव प्रदेशान्तरे(१)'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति पुनराम्नातम्। तत्र किं अच्युतवाक्यबोध्यदर्शस्थाग्नेयापेक्षया कर्मान्तरविधानं ? उत नेति संशयः।

( सङ्गतिः )

पादाध्यायसङ्गती पूर्ववत्। आतिदेशिकी त्वनन्तरा। अधिकाशङ्कार्थश्चेदं सूत्रम्। तथा हि—

( पूर्वपक्षः )

पूर्वत्र हि सत्यप्यप्राप्तोपादेयगुणाभावे सन्निधिसत्त्वात्र भेदकता। प्रकृते तु सत्यपि सन्निधाने न तस्य भेदप्रतिबन्धकत्वम्। स हि कर्मोत्पत्तिं प्रत्याभिज्ञापयन् विधिफलस्य च फलादिसंबन्धिविषयत्वञ्चोपनयन् उत्पत्तिनिबन्धनभेदं प्रतिबध्नाति। प्रकृते तु विधिफलस्यान्यविषयत्वानुपपत्तेः उत्पत्तिविषयत्वावसायान्न विधिविरोधिनस्सन्निधेर्भेदप्रतिबन्धकत्वोपपत्तिः। न चैतस्य स्तावकत्वाङ्गीकारेण भेदकत्वस्यैव सिद्धिः। आग्नेयस्य तावत् प्रदेशान्तरस्थत्वेनैव स्तुत्यनुपपत्तेः। ऐन्द्राग्नस्य तु आ[illegible]गतप्रशस्तत्वकीर्तनात् स्तुतिरनाशङ्क्य-

---

१ तै. सं. २–५–३.

व । अतः वैयर्थ्यपरिहारार्थमेव विधित्वावश्यम्भावात् अप्राप्तोपादेय-
गुणाभावसत्त्वेन च प्रकरणान्तरस्याविकल्पत्वात्कर्मभेदसिद्धिः ।

अथ वा अस्तत्वभ्यासात्भेदः । अभ्यासाभावस्थायां आग्नेयद्वयं कार्यमिति पूर्वपक्षे प्रयोजनं सिध्यति । न च सम्प्रतिपन्नदेवता-कत्वात् सहानुष्ठानशङ्का, पुनर्विधिवैयर्थ्यस्यैव तद्बाधकत्वात् । एतत्सूत्रं आग्नेयः उक्तप्रमाणवशात् भिन्नः प्रतीयेत । तत्थानु-ानकालेऽपि द्विरभ्यस्येतेति व्याख्येयम् ॥

## सू-अविभागात्तु कर्मणो द्विरुक्तेन विधीयेत ॥ २-३-२८. ॥

सिद्धान्तैकदेशी समाधत्ते—सत्यप्यप्राप्तोपादेयगुणाभावे स-न्निधिना तदीयद्रव्यदेवताकस्य तदनुमितयागस्य प्रत्यभिज्ञानान्ना-त्र कर्मान्तरम् । न च विधिफलाभावः, द्विराम्नानबलात् वाक्यद्व-यविहितस्यैवाभ्युदयकारित्वकल्पनया पूर्वकर्मण एव विधिफल-विषयत्वोपपत्तेः । न चैकेन विहिते इतरस्य विधायकतानुपप-त्तिः । पिङ्गाक्ष्यैकहायनीशब्दाभ्यां द्रव्यविशेषस्येव वाक्यद्वयेना-प्येकस्य कर्मणो युगपद्विधानोपपत्तेः । सूत्रं स्पष्टम् ॥

( सिद्धान्तः )

## सू—अन्यार्था वा पुनः श्रुतिः ॥ २-३-२९. ॥ (सि)

सिद्धान्तस्तु—सत्यं न कर्मभेदः । तथापि नापि विधि-त्वम्, एकेन विहिते अपरेण तदयोगात् एकहायन्यादौ गुणान्त-रविधानादर्थवत्ता । नचाभ्युदयशिरस्कत्वे सा, यत्र ह्यभिन्न वि-षयभेदः विषययोश्चैकेनैव संभवल्लाभत्वं तत्राग्नेयाभ्युदयशिरस्क-त्वकल्पनं, यथा—अनारभ्याधीतमित्रविन्दादिप्रकरणस्थसाद्गुण्य-

विध्योः । तत्र हि एकस्य वाक्यस्य सामिधेनीसंबन्धो विषयः अपरस्य च क्रतुसंबन्धः इति विषयद्वयस्यैकेनापि सम्भवल्लाभम् । तत्रैकेनैकस्यैवावगमे अभ्युदयशिरस्कत्वकल्पनं युक्तम् । न च विनिगमनाविरहः । झटित्युपस्थापकत्वस्यैव तत्त्वात् । प्रकृते तु विषयभेदाभावान्नाभ्युदयशिरस्कत्वकल्पनावसरः । अत एव समित्तनूनपाद्वाक्ययोस्तथात्वाङ्गीकृतम् ।

किंचेदं सति विधित्वे युज्यते । तत्तु ऐन्द्राग्नविध्येकवाक्यतया तत्प्रशंसार्थत्वेनोपपत्तेरसिद्धम् । संभवति चातिप्रशस्ताग्नेयसाहित्यैन्द्राग्नस्यातिप्रशस्ततरत्वमिति स्तुतिः । (१)तस्मान्नेदं कर्मान्तरम् ।

मीमांसाम्बुनिधिं प्रमथ्य सुदृढैर्न्यायोच्चयैर्निर्जरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमत्र कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥
श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या भेदाध्याये तृतीयाङ्घ्रेः ।

इति पूर्वोत्तरमीमांसापारावारपारीणश्रीरुद्रदेवसूनोः
खण्डदेवस्य कृतौ मीमांसाकौस्तुभे
द्वितीयस्याध्यायस्य
तृतीयः पादः ॥

॥ शुभमस्तु ॥

---

(१) तस्मादकर्मान्तरम् ।

॥ श्रीः ॥

# मीमांसाकौस्तुभः ।

## द्वितीयाध्यायस्य चतुर्थः पादः ( यावज्जीवपादः )

### यावज्जीवाधिकरणम् ॥ १ ॥

### सू—यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् (२–४–१.)

( विषयसंशयौ )

"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत," "यावज्जीवमग्निहोत्रं जुहोती"ति श्रुतम् । तत्र किं काम्य एव स्वर्गाद्यर्थे दर्शपूर्णमासादिप्रयोगे जीवनपर्याप्तकालविधिरयम् ? किं वा क्लृप्तफलात् फलान्तरार्थं जीवनाख्यनिमित्तरूपगुणवशेन दर्शादेर्विनियोगान्तरविधिरिति विचारः ।

( सङ्गतिः )

विनियोगभेदनिरूपणस्य च पादार्थत्वात् पादाध्यायसङ्गतिः । पूर्वत्र कर्मस्वरूपभेदः क्वचिच्च(१.)अत्रेष्ट्यधिकरणादौ प्रयोगभेद एव निरूपितः, न क्वचिदपि विशिष्य विनियोगभेद इति इह निरूप्यमाणत्वात् पादार्थः । अनन्तरा तु निमित्तस्य इह गुणविधया भेदकत्वेऽपि अनुपादेयत्वमात्रेण प्रकरणान्तरतुल्यत्वात् प्रसङ्गरूपा ।

---

१. पू. मी. २–३–२.

( पूर्वपक्षः )

तत्र यावज्जीवशब्दस्य "यावद्दोहं तिष्ठती" त्यादौ कालेऽपि निरूढलक्षणया प्रयोगदर्शनेन कालपरत्वोपपत्तेः, णमुलन्तस्यापि च (१)"अभिक्रामं जुहोती" त्यादौ निमित्तपरत्वादर्शनात्, अनुशासनाभावाच्च तत्परत्वानुपपत्तेः, स्वर्गार्थेषु दर्शादिषु जीवनपर्याप्तकालविधिरेवायम्। एवञ्च कालस्य वाक्येनैवाङ्गताबोधनेऽपि इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणापेक्षितार्थसमर्पणात् प्रकरणानुग्रहोऽपि। इतरथा हि प्रकृतयोर्दर्शपूर्णमासयोरेव निमित्तसम्बन्धात् अधिकारात्मकप्रकरणाऽनुग्रहेऽपि निमित्तस्याऽनङ्गतया कथम्भावात्मकप्रकरणापेक्षितार्थसमर्पणाऽभावान्न तदनुग्रहः। अत एव कालरूपानुपादेयगुणसत्त्वेऽपि अनुपस्थित्यभावात् न कर्मान्तरविधिः।

न च उत्पत्तिशिष्टपौर्णमास्यादिकालावरोधात् न जीवनपर्याप्तकालविधिसम्भवः। "अमावास्यायामपराह्ण" इत्यादिवद्व्याप्यव्यापकभावेनाऽविरोधात्।

अत्र च यथैव "सायं जुहोति" "पौर्णमास्यां पौर्णमास्या यजेते" त्यादौ कालविशिष्टप्रयोगविधिः एकादशे वक्ष्यते तथैवेहापि जीवनपर्याप्तकालविशिष्टप्रयोगविधिर्विनिगमनाविरहादभ्युपगन्तव्यः। अत एव व्याप्यकालिकप्रयोगविधौ प्रतिप्रयोगपर्याप्तः धर्मः विधेयतावच्छेदकत्वेनाङ्गीकर्तव्यः। व्यापककालिकप्रयोगविधौ तु जीवनपर्याप्तेषु तावत्सु व्याप्यकालिकप्रयोगेषु व्यासक्तः। द्वयोः प्रयोगविध्योः व्याप्यव्यापकभावेनाऽविरोधात्।

---

१. तै. सं. २-५-७.

अत एव आर्थिक एव तावन्तं कालं कर्माभ्यासः, न तु यावज्जीववाक्ये विधिना लक्ष्यो वा ।

यद्यपि च यावज्जीववाक्येऽपि विनिगमनाविरहेण व्यापककालिकप्रयोगान्तरविधिः पूर्वपक्षिणो नानिष्टः । तथापि व्याप्यव्यापकरूपप्रयोगविशिष्टस्य कर्मणः फलापेक्षायां स्वर्गकाम्यादिवाक्येन स्वर्गाद्यर्थतयैव विनियोगात् न यावज्जीववाक्ये पापक्षयाद्यर्थं विनियोगभेद इष्टः । अत एव जीवनपर्याप्तैः तावद्भिः प्रयोगैः एकमेव फलमित्यप्यर्थः पूर्वपक्षे लभ्यते ।

यत्तु मूले काम्यप्रयोगानुवादेन यावज्जीववाक्ये कालमात्रविधिरिति पूर्वपक्षितम् , तत् काम्यप्रयोगस्य फलवाक्ये सिद्धान्तिनोऽपि विध्यनङ्गीकारात् पौर्णमास्यादिकालवाक्ये तद्विधौ च विनिगमनाविरहेण प्रकृतेऽपि तदापत्तेः उपेक्षितम् । तस्मात् पूर्वोक्तरीत्यैव तावद्व्याप्यप्रयोगव्यासक्तव्यापकप्रयोगैक्यात् एकफलकत्वं इत्येवं पूर्वपक्षः कार्यः । एवञ्च "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं" इति दीर्घकालिकैकप्रयोगत्वेन सत्रसादृश्यवचनमुपपन्नं भवति । इतरथा सायंप्रातःकालसाध्यैकप्रयोगत्वादग्निहोत्रस्य तदनुपपत्तिः । तस्मान्नात्र विनियोगभेदः ॥

सूत्रं यावज्जीवपदेन निरूढलक्षणया प्रतिपाद्योऽभ्यासाऽऽपादकः काल एव कर्मधर्मतया विधीयते, अत एव इतिकर्तव्यताकाङ्क्षाप्रकरणमपि आनुकूल्येनानुगृहीतं भवतीति व्याख्येयम् ।

अस्तु वा सूत्रानुगुण्यात् कालविशिष्टाभ्यास एव कर्मधर्मतया विधीयत इति वार्तिकोक्तः पक्षः, सर्वथा न विनियोगभेद इति सिद्धम् ॥

## सू—कर्तुर्वा श्रुतिसंयोगात् (२—४—२.) (सि)

### ( सिद्धान्तः )

नायं कालविधिः, काललक्षणाऽऽपत्तेः, यावच्छब्दो हि जीवनगतसामस्त्यवाची धातुश्च जीवनवाची, णमुल् च साधुत्वार्थे भावे वा। यद्यपि 'चात्र अव्ययीभावसमासस्स्यात् तथापि तावानेवार्थः, सर्वथा कालस्याशक्यत्वात् लक्षणैव।

वस्तुतस्तु अवधारणाभावात् नाव्ययीभावः इति णमुलन्त एव लक्षणाप्रसङ्गः।

यत्तु निमित्तत्वेऽप्येतत्तुल्यमिति, तत्रोच्यते(१) "धातुसम्बन्धे प्रत्ययाः," इत्यनुशासनात् णमुल् यस्माद्धातोरुच्चार्यते, तद्धात्वर्थस्य धात्वर्थान्तरेण सम्बन्धः संसर्गविधया पार्ष्ठिकान्वयबलेन वाऽवश्यमवगम्यते। अतश्च जीवनस्य दर्शादेश्च सम्बन्धस्तावत् लक्षणां विना(२) प्युपपद्यते। तस्य च विशेषापेक्षायां सम्बन्धान्तरासम्भवात् यावच्छब्दस्य च तात्पर्यग्राहकस्य सत्वात् निमित्तपरत्वमेव व्यक्तिन्यायेनाश्रीयते। यावच्छब्दो हि सामस्त्यं वदन् निमित्तत्वपक्षे पतितः निमित्तनैमित्तिकावृत्तिन्यायेन जीवनगतसामस्त्यस्य नैमित्तिकसम्बन्धित्वेन प्राप्तत्वात् स्वार्थानुवादको भवतीति जीवनस्य स्वपरिमितकालकत्वरूपेऽन्यस्मिन् सम्बन्धे आश्रीयमाणे तु कालाद्यनुरोधेन प्रधानावृत्तेः न्यायतः प्राप्त्यभावादप्राप्तस्य जीवनगतसामस्त्यस्यापि विधानापत्तेः एकपदत्वात् विशिष्टप्रयोगविधाना-

---

१. पा. सू.। ३-४-१.

२. प्यवगम्यते।

च्च वाक्यभेदाभावे ऽपि गौरवं समस्तस्यैव । अतश्च लाघवलिप्सया यावच्छब्दस्य निमित्तत्वरूपसंसर्गविशेषतात्पर्यग्राहकत्वमविरुद्धम् ।

एतेन जीवनस्य स्वपरिमितकालकर्तृत्वसम्बन्धेन दर्शान्वयाच्च काललक्षणेत्यपास्तम्, तादृशसम्बन्धस्य तात्पर्यग्राहकाभावेनाऽयोग्यत्वात् ।

न च विनियोगान्तरविधिगौरवस्य निमित्तत्वपक्षेऽपि तुल्यत्वात्ततो वरं सामस्त्यविधिगौरवाऽऽश्रयणमेवेति वाच्यम्। तस्य श्रुतनिमित्तनैमित्तिकभावप्रतीत्युत्तरप्रतीतिकत्वेन फलमुखत्वात् प्रयोगान्तरविधिगौरवस्य तत्रापि तुल्यत्वाच्च । मम तु तमेव प्रयोगमुपजीव्य विविदिषावाक्यवद्विनियोगान्तरकरणमिति लाघवम् ।

नच निमित्तस्याऽनुष्ठापकत्वात् प्रयोगाक्षेपकत्वमिति वाच्यम् । सायंकालादिवाक्यविहितस्य पूर्वप्रयोगस्यैव विनियोगान्तरफलकनिमित्तसम्बन्धमात्रोपपत्तौ प्रयोगान्तरकल्पने प्रमाणाभावात् ।

नचैवं प्रयोगैक्ये नित्यकाम्यप्रयोगयोस्तन्त्रप्रसङ्गविचाराऽनुपपत्तिः । प्रयोगगतवैजात्याभावेऽपि (१)योगसिद्ध्यधिकरणप्रसक्तप्रयोगव्यक्तिभेदाभिप्रायेण तदुपपत्तेः । अतः विनियोगान्तरत्वेऽपि न प्रयोगभेद इति लाघवम्। अतः कालस्य संसर्गविधया भाने गौरवापत्तेः पदार्थविधया लक्षणावश्यंभावात् न कालविधिः ।

किञ्चैवं यजातेवाभ्यासलक्षणाऽऽपत्तिः । तथा हि–

१. पू. मी. ४-३-९.

न तावत् वसन्तादिकाल इव जीवनव्याप्ते काले सकृदेव सायंप्रातःकालादौ अनुष्ठानसम्भवः, तथात्वे कर्मशास्त्रेणैव तादृशानुष्ठानसिद्धौ कालविधिवैयर्थ्यात् । वसन्तादिविधेर्हि ग्रीष्मादिव्यावृत्त्याऽपि फललाभात् न सातत्येनानुष्ठापकत्वम् । प्रकृते त्वजीवत्कालस्याऽप्रसक्तत्वेनाऽव्यावर्तनीयत्वात्, अयोगव्यावृत्तेश्च कर्मशास्त्रेण सिद्धाया अफलत्वाद्व्याप्त्यैव कालो विधेयः । यावच्छब्दोऽपि अमुमेवार्थं गमयति । अतो न तावत् मरणान्तकालीनं सायंप्रातःकालादौ सकृदेवानुष्ठानम् ।

नापि मरणावधि सायंप्रातः कालादौ अवयवशः प्रयोगः । तथात्वे सायंकालादिवाक्यस्य प्रतीयमानैकप्रयोगविधायित्वबाधापत्तेः, मरणस्याऽनियतकालत्वेन प्रयोगसमाप्तेः कदाप्यसम्भवाच्च । अतः सायंकालादिसमाप्यप्रयोगस्यैव मरणावधिकाभ्यासोऽवश्यमास्थेयः । तस्य च फलसाधनकोटौ प्रविष्टत्वात् तत्साधनत्वस्य च विधिं विनाऽयोगात् तस्य च शाब्दत्वं विनाऽनुपपत्तेः अभ्याहृतविधिकल्पनातो यजावेवाभ्यासलक्षणाऽवश्यमास्थेया । अन्यथा अभ्यासस्यानङ्गत्वात्तदकरणेऽपि फलापत्तेः । मम तु एकनिमित्तस्य सन्निपाते सकृन्नैमित्तिकानुष्ठानात् फलसिद्ध्युपपत्तेः विधिपर्यवसानात् पुनरावृत्तेश्च पुनर्निमित्तपातेन काम्यप्रयोगाऽऽवृत्तिवदार्थिकत्वेन विधिव्यापाराऽविषयत्वान्न लक्षणा ।

वस्तुतस्तु पूर्वपक्षेऽपि अभ्यासस्यानङ्गत्वेऽपि तदकरणे वैगुण्यस्य कर्मणि जीवनपरिमितकालव्याप्त्यसंपादनप्रयुक्तत्वेनाभ्यासाऽकरणप्रयुक्तत्वाभावान्न क्षतिः । अतः अभ्यासस्याङ्गत्वसिद्ध्यर्थं लक्षणासम्भवेऽपि काललक्षणादिनैव पूर्वपक्षो निराकर्तव्यः । अभ्यासलक्षणामपि तु प्रकारान्तरेणाग्रे निरूपयिष्यामः ।

तस्मान्निमित्तपर एव यावज्जीवशब्दः । जीवनानां च प्राण-क्रियाऽपरपर्यायाणां प्रतिक्षणं भेदान्निमित्तावृत्त्युपपत्तेः यावच्छब्दोऽनुवादः ।

न चैवं तिथ्यन्तरस्थजीवनस्यापि निमित्तत्वापत्तिः । षाड्न्यायेन कालशास्त्रस्य निमित्तशास्त्रैकवाक्यताङ्गीकारेण तद्व्यावृत्त्युपपत्तेः ।

नन्वेवमपि पौर्णमास्यामेव जीवनानां प्रतिक्षणं भिन्नत्वान्निमित्तावृत्तिस्स्यात् । न हि कालोऽपि निमित्तकोटावन्तर्भवति, येन तदैक्यत्वादनावृत्तिः प्रसज्येत । अपि तु कालान्तरीयस्य जीवनस्य निमित्तताव्यावर्तनेनावच्छेदकत्वमात्रम् । अत एव ज्योतिष्टोमे एकस्मिन् प्रसक्ते पौर्णमास्यादिभेदेऽपि नावृत्तिः, निमित्तावृत्त्यभावात् । अत एव एकस्यामपि पौर्णमास्यां जीवनानां भेदादावृत्तिस्स्यादेवेति चेत्—

पौर्णमास्यादिकालवत् पौर्वाह्णादिकालस्यापि निमित्तावच्छेदकत्वेन तदप्रसक्तेः । अतो युक्तमेव जीवनस्य निमित्तत्वम् । निमित्तत्वं चात्र(१) नियतानुष्ठापकत्वं, न तु अनुष्ठापकत्वमात्रं कामनादिवत् । तथात्वे कामशास्त्रेणैव तादृशानुष्ठानसिद्धावेतद्वचनानर्थक्यापत्तेः, यावच्छब्दानुवादानुपपत्तेश्च । नियतत्वस्य बुद्धिपूर्वकारिणा पुरुषेण स्वतोऽसम्पाद्यमानत्वान्निमित्तसमभिव्याहृतो विधिः योग्यतावलेन विधेयाकरणस्य तत्समानकालीनान्यकरणस्य वा प्रत्यवायसाधनतां बोधयति । तद्भिया पुरुषो नैमित्तिके प्रवर्तते । करणस्य तु न किञ्चित् फलमिति प्राभाकराः ।

१ प्रतिनियतानुष्ठापकत्वम्.

वस्तुतस्तु प्रत्ययवाच्यभावनाया भाव्यसाकाङ्क्षत्वनियमात् कल्प्यमेवा(१)वश्यं फलम्। तच्चाकरणनिमित्तप्रत्यवायप्रागभावपरिपालनमिति न्यायसुधाकारः।

वस्तुतस्तु प्रागभावस्याजन्यत्वान्न फलत्वम्। न च परिपालनस्य प्रतियोग्यनुत्पत्तिरूपस्य फलत्वम्, अनुत्पत्तेः उत्पत्तिप्रागभावरूपाया अजन्यत्वेन तदयोगात्। किञ्चाकरणजन्यस्य प्रतियोगिनः करणे कदाप्यनुत्पत्तेः नैव तदभावस्य प्रागभावत्वम्, अपि तु अत्यन्ताभावत्वमेवेति न तस्य फलत्वोपपत्तिः।

नापि स्वर्गो विश्वजिन्न्यायलभ्यः स्वर्गकामवाक्यप्रमितो वा। तत्र हि कामशब्दयोगात् कामना अनुष्ठापकत्वेन प्रतीयते। न च जीवनस्य तदा अनुष्ठापकत्वं सम्भवति। द्वयोरनुष्ठापकत्वाङ्गीकारेऽपि तादृशार्थस्य निमित्तश्रुतिं विनापि सिद्धेः तद्वैयर्थ्यात्। अत एव कामार्थे कर्मणि निमित्तरूपगुणान्वयानुपपत्तेः फलान्तरार्थं तद्विनियोग इह आवश्यकः।

नन्वस्तु निमित्तस्यैवाऽकरणे प्रत्यवायभियानुष्ठापकत्वम्। करणात्तु स्वर्गः अकाम्यमानोऽपि पुत्रगतपूतत्वादिवत् पापक्षयवच्चानुषङ्गिको (२)विश्वजिन्न्यायेन फलं भविष्यति, न तु तत्कामनायाः अनुष्ठापकत्वकल्पनम्, अनुष्ठापकानपेक्षत्वात्। न च स्वर्गफलकत्वे तस्य मुमुक्षुपरिपन्थित्वाद्यावज्जीवविधेः अमुमुक्षुविषयत्वापत्तेः संकोचापत्तिः, विश्वजिद्विधिवत् संकोचेऽप्यदोषादिति चेत्—

सत्यं कार्यतावच्छेदकलाघवाद्विधिसङ्कोचो न दोषाय, तथापि "महद्वा आत्मयाजी यो वेदेदमनेनाङ्गं संस्क्रियते,

१ अन्यत्. २ पू. मी. ६–२–९.

इदमनेनाङ्गमुपधीयते" इति, (१)"धर्मेण पापमपनुदति" इत्यादि श्रुतिस्मृतिपर्यालोचनया सामान्यतः(२)"पूर्वां संध्यां जपन् विप्रो नैशमेनो व्यपोहति"(३)"यद्रात्र्या पापमकार्षम् । मनसा वाचा हस्ताभ्यां" इत्यादिपर्यालोचनया विशेषतश्च निषिद्धाचरणजन्य-प्रत्यवायक्षयफलत्वावगमात् रात्रिसत्रवत् स्वर्गकल्पने गौरवा-पत्तेः न तत्फलत्वेनाध्यवसानम् । न हि "धर्मेण पापमपनुद-ती" त्यादिवचनं पापापनोदकद्वादशाब्दादिविषयत्वेन युक्तमुपसं-हर्तुम्, वैयर्थ्यापत्तेः । इदमनेनेत्येतच्छब्दस्य स यदेव यजेतेति प्रकृतयज्ञादिपरामर्शित्वाच्च । अतो नित्यनैमित्तिकभावनापेक्षि-तफलप्रतिपादकत्वमेवैषाम् ।

यदि त्वेवं नाङ्गीक्रियते ततो भावनाया भाव्यापेक्षायां याव-ज्जीवमग्निहोत्रं जुहोती" त्यादौ समानपदोपात्तस्य धात्वर्थस्य तज्जन्याऽपूर्वस्यैव वा अपुरुषार्थस्याऽपि फलत्वोपपत्तेः प्रवृत्तेश्चा-करणे प्रत्यवायभियाप्युपपत्तेः पुरुषार्थभाव्यकत्वानाक्षेपात् पाप-क्षयादेः फलत्वं दुरुपपादमेव । तस्मात् पूर्वोक्तविधयैव पापक्षयस्य भाव्यत्वम् । तस्य च भाव्यत्वेऽपि न तत्कामना अनुष्ठापिका, निमि-त्तश्रुतिविरोधापत्तेः । अतो निमित्तानुष्ठापितस्यैव पापक्षय आ-नुषङ्गिक इति दिक् । तस्मात् निमित्तरूपगुणवशेन फलान्वरार्थे विनियोगभेद इति सिद्धम् ।

सूत्रं तु कर्तुरेव निमित्तवतोऽयं दर्शादिर्धर्मो वेदितव्यः पुरुषार्थ इति यावत् । एवं सति श्रुतिसंयोगो भवति । इतरथा लक्षणापत्तेः इति व्याख्येयम् ।

---

१ तै. आ. १०-६९. २ मनु. अ. २. श्लो. १०२.
३ तै. आ. ३२-१.

सू—लिङ्गदर्शनाच्च कर्मधर्मो(१) हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात् ॥ २-४-३. ॥

(२) "अप वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेत्" इति लिङ्गमस्मत्पक्षस्य साधकम् । कर्मधर्मत्वेन कालविधिपक्षे यावज्जीवव्यापकस्यैकप्रयोगस्यैव फलसाधनत्वात् 'दर्शपूर्णमासयाजी सन्नि'त्यनेन कृतदर्शपूर्णमासकरणकभावनाकत्वनिर्देशो विरुध्यते । अतो "दर्शपूर्णमासयाजी"ति प्रक्रान्तदर्शपूर्णमास इति व्याख्येयम् । तत्र अन्यदतिपातयेदित्यनुपक्रमदर्शनं विरुध्येत ।

अथ 'अतिपातयेदिति' असमापयेदिति व्याख्यायेत ततोऽप्यन्यत्प्रायश्चित्तविधानं(३) "सोऽग्नये पथिकृतेऽष्टाकपालं निर्वपे"दिति वि[illegible]ध्येत । समापनकाले जीवनान्त्यक्षणरूपे अतीते हि मृते वा मतेऽतिपत्तिस्स्यात् । तत्र च नैमित्तिकानुष्ठानविरोधः । मम तु माससाध्यप्रयोगस्यैकफलसाधकत्वात् एकस्मिन्मासे तु कृतदर्शपूर्णमासकरणकभावनाकत्वं मासान्तरे च तदकरणरूपातिपादनमिति द्वयसंभवः ।

ममापि तत्तत्कालिकव्याप्यप्रयोगाभ्यासानां भेदादुभयोपपत्तिरिति चेत्, अभ्यासानां मुख्यस्वर्गादिफलकत्वाभावेन दर्शपूर्णमासपदवाच्यत्वाभावेन च दर्शपूर्णमासयाजीत्यादिव्यपदेशस्य औपचारिकत्वापत्तेः । तस्मादपि विनियोगभेदः ।

---

१ कर्मधर्मे हि  २ तै. सं. २-२-२.
३ तै. सं. २-२-२.

सू-(१)व्यपवर्गश्च दर्शयति कालश्चेत् कर्मभेदस्स्यात् ॥ २-४-४. ॥

किञ्च "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यत्र फलोद्देश्यकदर्शपूर्णमासकरणकभावनासमाप्तिरूपो व्यपवर्गः उत्तरकालत्वप्रतियोगितया निर्दिश्यते । नचासौ जीवनान्त्यक्षणसमाप्यत्वे सम्भवति, तथात्वे सोमस्य तदुत्तरकालविध्यनुपपत्तेः । अतः उत्तरकालाऽनुग्रहार्थमपि दर्शादिकर्मणां विनियोगभेद आश्रयितव्यः । अत्राप्यभ्यासमादाय समाप्त्युपपत्तिशङ्कातत्परिहारौ पूर्ववदेव द्रष्टव्यौ ।

अथ वा कालश्चेत् पूर्वपक्षे जीवनपर्याप्तो विधीयते ततो वितते दर्शादिप्रयोगे सति मध्ये सोमादिप्रयोगापत्तेः "वि वा एतद्यज्ञश्छिद्यते यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतायते" इत्यादिनिन्दोन्नीतनिषेधविरोधरूपो भेदस्स्यात् । नचानन्यगतिकत्वं दर्शप्रयोगवृत्तिपिण्डपितृयज्ञप्रयोगवत्, सिद्धान्तरीत्याप्युपपत्तेः । अतोऽयं निषेधः दर्शपूर्णमासप्रयोगसमाप्तिरूपं व्यपवर्गं दर्शयत्येवेति व्याख्येयम् ॥

सू-अनित्यत्वात्तु नैवं स्यात ॥ २--४-५. ॥

किञ्च "आहिताग्निर्वा एष सन्नाग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजेत, तदाहुतिभाजोऽनुध्यायिनीः करोती"ति अनुध्यायिनीवचनार्थवादोऽपि काम्यत्वपक्षे नोपपद्यते । यस्य यत् नियमेन देयं तस्मिन्नदीयमाने तस्यानुध्यानं भवति । नच काम्यत्वपक्षे नियमेन देयत्वम् । अपि तु नित्यत्वपक्ष एवेत्यतोऽपि विनियोगभेदः ।

---

१ अपवर्गमिति क्वचित् वर्तते

अपि च "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ, जरया वा एताभ्यां मुच्यते मृत्युना वे"ति जरामरणाभ्यां नि-र्मोचनावधारणवचनं नित्यत्वपक्षे उपपद्यते न काम्यत्वपक्षे, तदा हि अप्रयोगादपि मुच्येतैव। यत्तु सत्रसादृश्यं प्रयोगभेदे नो-पपद्यत इत्युक्तं तद्दीर्घकालिकैककर्मत्वादुपपन्नम् ॥

सू—विरोधश्चापि पूर्ववत् ॥ २–४–६. ॥

अङ्गत्वेन कालविधिपक्षे च तस्य विकृतिष्वप्यतिदेशात् तासामभ्यासापत्तेः कामनावशेनानेकासां विकृतीनामारब्धानां या-वज्जीविकाभ्यासेऽशक्यार्थतारूपो विरोधः स्यात्। निमित्तपक्षे तु तस्यानङ्गत्वेनातिदेशाभावात् न विरोधः ॥

सू-(१)कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं(२) स्यात् ॥ २–४–७. ॥

नन्वस्तु काललक्षणाभिया जीवनस्य निमित्तत्वम्। "वसन्ते वसन्ते ज्योतिषा यजेते"त्यादिषु तु तदभावात् प्रत्युत निमित्तत्व-पक्ष एव अधिकरणवाचिन्या सप्तम्या निमित्तत्वलक्षणापत्तेः काम्यप्रयोग एव कालविधिरस्तु।

यदि तु वीप्सया सर्ववसन्तव्याप्त्यवगतेः तस्याश्चाङ्गभूतका-लानुरोधेन कामनानुरोधप्रवृत्तिकप्रधानावृत्तेरन्यायत्वेनाऽप्रा-प्तत्वात् विधेयत्वापत्तेः कालविधौ वाक्यभेदो गौरवं वा शं-क्येत, ततोस्तु काम्यप्रयोगे वीप्सार्थविधिरेव। कालस्य तु 'वस-न्ते ज्योतिषा यजेते'त्यनेन वाक्येनैव प्राप्तस्यानुवादात्।

---

१ कर्तुस्तु नियमादिति क्वचित्  २ निमित्तार्थे

आवश्यकश्चायं विधिस्सिद्धान्तिनोऽपि । अन्यथा वीप्सायुक्तवाक्यस्य निमित्तपरत्वेऽपि काम्यप्रयोगे विध्यभावेन वसन्तनियमाभावप्रसङ्गात् । अतो वाक्यान्तरप्राप्तकालानुवादेन तद्गतव्याप्तिमात्रं ज्योतिष्टोमोद्देशेन विधीयते । अतश्च काम्यस्यैव ज्योतिष्टोमस्य प्रतिवसन्तमभ्यस्तस्य फलसाधनत्वम् ।

एवं यावज्जीववाक्येऽपि जीवनस्य स्वावच्छिन्नकालकृत्वसम्बन्धेनार्थप्राप्तत्वात् तद्गतव्याप्तिरेव यावच्छब्दवाच्या कर्मोद्देशेन विधीयत इति शक्यं वक्तुम् । नचैवं व्याप्तेः साक्षात्कर्मणि निवेशायोगात् यजावभ्यासलक्षणापत्तिः । साक्षादन्वयायोगेऽपि अभ्यासद्वारा तदापत्तेः । न चैवं लक्षणा । अपूर्वेऽपि तदापत्तेः, इति चेत्–

सत्यं न लक्षणा तथापि श्रुतसम्बन्धनिर्वाहार्थं द्वारेऽपि अभ्यासशब्दाध्याहारस्त्वावश्यकएव । अत एवापूर्वेऽप्यपूर्वकृत्वेतिशब्दाध्याहारोऽस्त्येवेत्युक्तं वार्त्तिककृताऽस्माभिश्चाऽपूर्वाधिकरणे ।

मास्तु वा द्वारे शब्दाध्याहारः । अर्थाध्याहारस्तु विधिगौरवापादक आवश्यक एव । तद्वरं निमित्ते 'सप्तमी वाच्ये'त्यानुशासनिकनिरुढलक्षणाङ्गीरेणापि वसन्तादेर्निमित्तत्वाङ्गीकारः । न चैतस्मिन्नपि पक्षे अभ्यासाध्याहार आवश्यकः निमित्ते नैमित्तिकविधिमात्रेण पर्यवसन्ने विधौ अवर्जनीयाभ्यासस्य विधिगौरवापादकाध्याहारविषयत्वाभावात् । अतो नैमित्तिकविनियोगान्तरविधिरेवायम् । अत एव(१)"जायमानो वै ब्राह्मणः त्रिभिर्ऋणवा जायते' ' 'यज्ञेन देवेभ्यः"इत्यर्थवादोऽपि आवश्यकत्वप्रतिपादनार्थस्सङ्गच्छते ।

---

१ तै.सं. ६–३–१०.

यत्तु न्यायसुधाकृता ऋणसंस्तवकल्प्येन विधिना चौलो पनयनादिवदावश्यकस्स्वतन्त्र एव सकृत्प्रयोगो विधीयत इत्युक्तं, तत् ऋणसंस्तवस्य विध्यन्तरशेषत्वाद्वीप्सावाक्यप्राप्तावश्यकसकृत्प्रयोगानुवादोपपत्तेः, (१)षाष्ठाधिकरणभाष्यविरोधाच्चोपेक्षणीयम् । अत्रत्यवार्तिकं तु (२)"अपुनर्भक्ष्योऽस्य सोमपीथो भवती" तिलिङ्गानुमेयावश्यकसकृत्प्रयोगविध्यभिप्रायम् । तस्मात्सिद्धः सर्वत्रैवंजातीयके विनियोगभेदः ।

प्रयोजनं-सौर्यादौ यावज्जीविकोऽभ्यासः, सिद्धान्ते नेति ।

सूत्रं तु कर्तृधर्मो नियम इत्यङ्गीकारे लाघवस्य सत्वात् कालशास्त्रत्वेन भासमानमपि वसन्तवाक्यं निमित्तपरमेव स्यादिति व्याख्येयम् ॥

इति प्रथमं यावज्जीवाधिकरणम् ॥

॥ अथ द्वितीयं शाखान्तराधिकरणम् ॥

## सू-नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदस्स्यात् ।

(विषयसंशयौ)

एकवेदगतनानाशाखासु श्रुतानां अग्निहोत्रादीनां किं भेदः ? उत नेति विचार्यते ।

(सङ्गतिः)

उत्पत्तिप्रयोगविनियोगभेदानां त्रयाणामपि पूर्वनिरूपिता-

---

१. पू. मी. ६-२-११. २ तै. ब्रा. ३-२-३

मां इत्यपवादेऽपि विनियोगभेदापवादस्यापि तावत् सत्त्वात् पा-
दाध्यायसङ्गतिरनन्तरा च ।

( पूर्वपक्षः )

तत्र संज्ञागुणाभ्यासप्रकरणान्तरैः कर्मान्तरत्वम् । संज्ञा-
तावत् तत्तत्कर्मणि काठकं कालापकमित्यादिरूपेण वैदिकैः प्रयु-
क्ता कर्मभेदं गमयति । न च काठकादिशब्दस्य शाखाया-
मपि प्रयोगात् तत्रैव शक्तिः, कर्मणि लक्षणेति वाच्यम्; विनिग-
मनाविरहेण उभयत्रापि शक्तिकल्पनात् ।

न च(१)"कलापिवैशम्पायनान्तेवासिभ्यश्च" इति सूत्रेण(२)
"तेन प्रोक्तमि"त्यस्मिन्नर्थे णिनिप्रत्ययविधायकेन कठशब्दात् वैश-
म्पायनान्तेवासिपुरुषविशेषवचनात् णिनिप्रत्यये कृते तस्य च(३)
'कठचरकाल्लुक्' इत्यनेन लुकि कृते(४)"छन्दोब्राह्मणानि च तद्वि-
षयाणि" (५)'तदधीते तद्वेद' इत्यनेन कठेन प्रोक्तं छन्दोब्राह्मणं यो-
ऽधीते वेद वेत्यस्मिन्नर्थेऽण्प्रत्यये कृते"(६)"प्रोक्ताल्लुक्" इत्यनेन
च तस्यापि लुकि कृते कठेन प्रोक्तं योऽधीते स कठ इति स्थिते(७)
"तस्येद"मित्यस्मिन्नर्थे(८)'गोत्रचरणात् वुञ्'इत्यनेन वुञि कृते
तस्य च अकादेशे कृते काठकमिति रूपावगतेः उपस्थितत्वाच
ग्रन्थस्यैव सम्बन्धितया ग्रहणादनुशासनस्यैव शाखावाचितायां
नियामकत्वमिति वाच्यम् । "चरणाद्धर्माम्नाययोरिष्यते" इति
स्मृत्या कठसम्बन्धिशाखाविषयत्ववत् तत्सम्बन्धिधर्मविषय-
त्वस्याप्युपपत्तेः कर्मण्यपि शक्तिकल्पनोपपत्तेः ।

---

१ पा. सू. ४-३-१०४. २ पा. सू. ४-३-१०१.
३ पा. सू. ४-३-१०७. ४ पा. सू. ४-२-६६.
५ पा. सू. ४-२-५९. ६ पा. सू. ४-२-६४.
७ पा. सू. ४-३-१२०. ८ पा. सू. ४-३-१२६.

वस्तुतस्तु कठचरणादिशब्दानां चरणव्यूहादौ शाखास्वपि प्रयोगात् पूर्वोक्तविधया वुञ्प्रत्यये कृते तत्सम्बन्धिकर्मण्येव शक्तिकल्पनोपपत्तिः।

अस्तु वा कर्मणि लक्षणा, तथापि श्येनादिपदवत् लाक्षणिक्यपि संज्ञा भेदिका भवेदेव। तथा क्वचिद् द्रव्यदेवतारूपकर्मलक्षणगुणादपि एकादशकपालद्वादशकपालत्वरूपात् शाखाभेदेनाम्नातात्(१)वाजिनन्यायेन भेदासिद्धिः। तथा धर्मविशेषलक्षणादपि गुणाद्भेदः। यथा कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति, अपरे नेति।

यद्यपि चैते धर्माः अध्ययनाङ्गत्वात् न कर्माङ्गं, तथाप्युपकारकत्वस्य सत्त्वात्तद्भेदस्य कर्मभेदकत्वोपपत्तिः। तथा प्रतिशाखं समानगुणफलककर्मोपदेशात् अनन्यपरपुनःश्रवणस्यापि भेदकत्वम्। नच पुनःश्रवणादेः उत्पत्तिपरत्वाक्षेपकत्वेऽपि तत्तच्छाखास्थवाक्यस्य तत्तच्छाखाध्येतृपुरुषान् प्रति एककर्मविषय एवाज्ञातज्ञापकत्वोपपत्तेः न कर्मभेदाक्षेपकत्वमिति वाच्यम्। प्रतिशाखमध्येतृभेदनियमे प्रमाणाभावात्। न च 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वैरधीयत इति व्युत्पत्त्या पित्रादिपरंपरागतैकशाखाध्ययननियमावगतेः येनैका शाखाऽधीयते तद्भिन्ना शाखा अन्येनैव पठनीयेति प्रतिशाखमध्येतृभेदोपपत्तिः इति वाच्यम्। अध्ययनविधौ शाखाया उद्देश्यत्वेन तद्गतयोः स्वीयत्वैकत्वयोर्विशेषणयोः अविवक्षितत्वात्।

अथ तु शाखाया अध्ययनं प्रत्युद्देश्यत्वेऽपि अर्थज्ञानं प्रत्यु-

---

१ "सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इत्यत्र यथा वाजिनरूपो गुणः पूर्वस्मिन् कर्मण्यामिक्षाद्रव्यकेऽसम्भवान्निवेशः कर्म भिनत्ति तद्वदित्यर्थः। एतच्च पूर्वमीमांसायां–२–२–९ मे विचारितम्।

पादेयत्वात् , "अध्वर्युं वृणीते" इतिवत् विशेषणविवक्षोच्यते, ततः शाखान्तराध्ययनवत् वेदान्तराध्ययनस्याप्रसक्तेः-"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं" इत्यादि शास्त्रविरोधः । अतश्च वचनान्तरानुरोधात् अविवक्षितविशेषणाया एव शाखाया अर्थज्ञानं प्रति विधिरिति प्रतिज्ञाखमध्येतृभेदाभावात् तमादाय सर्ववाक्यानां अज्ञातज्ञापकत्वानुपपत्तेः युक्तमेव कर्मभेदाक्षेपकत्वम् । तथा उदितहोमविधिसन्निधौ अनुदितहोमनिन्दा "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रं । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योति र्न तदा ज्योतिरेषां" इत्येवंरूपा, अनुदितहोमविधिसन्निधौ च तदितरनिन्दा(१) "यथातिथये प्रद्रुताय अन्नं हरेयुः तादृगेव तद्यदुदिते जुह्वति" इत्येवंरूपा सापि गुणविधया कर्मभेदमाक्षिपति । नह्यत्रैकादशकपालत्वादिवत् निन्दयोर्विकल्पोऽप्युद्भावयितुं शक्यः । उदितानुदितकालरूपाङ्गयोरुभयोरप्यनिषिद्धत्वेन निन्दाविषयत्वस्यैवानुपपत्तेः । यद्यपि नेयं निन्दा निन्दात्वपर्यवसायिनी, निषेधैकवाक्यताऽभावात्, अपि तु विधेयस्तुत्यर्थेत्युच्येत तथापि स्तुत्यालम्बनभूताया निन्दाया अप्यनिषिद्धविषयत्वानुपपत्तेः युक्तं भेदकत्वम् । तदा हि यस्मिन्कर्मण्युदितकालनियमः तत्र तदितरकालस्यार्थान्निषिद्धत्वान्निन्दोपपत्तिः । एकत्वे च कर्मणः सर्वशाखास्थाङ्गोपसंहाराशक्तेः एकशाखाविहिते कर्मण्यसंभवन्निवेशात् शाखान्तरीयाङ्गरूपादपि गुणाद्भेदः ।

तथा "अस्माकं योऽग्निस्सोन्वारोहेषु समाप्यते, अन्येषामन्यत्रे"ति समाप्तिभेदवचनस्यापि गुणविधया भेदकत्वम् । एवमुदितहोमिनामनुदितहोमे, अनुदितहोमिनां च उदितहोमे प्रायश्चि-

---

१ तै. ब्रा. २-१-२-१२.

त्तमप्रत्ययनिषिद्धे प्रायश्चित्तासंभवात् निन्दावद्गुणविध्यैव भेदकम्। निन्दा हि अनिषिद्धेऽपि कथंचित्संभवति स्तुत्यर्थं न तु प्राय-श्चित्तमिति पृथगुपन्यासः ।

तथा कालाद्यनुपादेयगुणयुक्तानुपस्थितिरूपात्प्रकरणान्तरा-दपि भेदः । इदमेव सूत्रे शाखान्तरपदेन हेतुगर्भपक्षप्रतिपादकेन सूचितम् । तस्मात्सिद्धो भेदः ।

अत एव क्वचिच्छाखायां द्वादशाहान्तर्गतप्रायणीयं प्रकृत्य श्रुतं "यदि पुरा दिदीक्षाणास्स्युस्तत्र तमेव बृहत्सामानमतिरात्र-मुपेयुरुपेतमेषां रथन्तरमथ यद्यदिदीक्षाणास्ततो रथन्तरसामानमेव" इति लिङ्गमुपपद्यते। एककर्मत्वे हि (१)"एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तद्भवति" इति ताण्ड्कशाखास्थवचनेन विकृत्यन्तराणामिव सर्वशाखास्थस्या-पि द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावनियमात् तत्रादीक्षितदर्शनानु-पपत्तिः । भेदपक्षे तु ताण्डकशाखास्थयज्ञानामेवोपस्थितत्वात् अ-न्यपदेनोपादानात्तच्छाखास्थद्वादशाहस्यैव ज्योतिष्टोमपश्चाद्भाव-नियमात् एतच्छाखास्थद्वादशाहस्य तन्नियामकप्रमाणाभावेन पक्षे अदीक्षितदर्शनोपपत्तिः ।

तथा यूपैकादशिन्यां(२)"यत्पक्षसम्मितां मिनुयात् कनीयाँसं यज्ञक्रतुमुपेयात् पापीयस्यस्यात्मनः प्रजा स्यात्, वेदिसंमितां मि-नोति" इति लिङ्गं अनियमेनाऽर्थप्राप्तयोः इतेनाख्यपक्ष्या-कारस्थलावयवभूतपक्षद्वयसंमितत्ववेदिसंमितत्वपक्षयो र्मध्ये ए-कं निन्दित्वा इतरविधिरूपं भेदपक्ष एवोपपद्यते ।

कर्मैकत्वपक्षे तु शाखान्तरीयस्य "रथाक्षमात्राणि यूपान्तरा-ळानि भवन्ती" ति विधिविहितस्य रथाक्षमात्रान्तराळस्यापि उ-

१ ता. ब्रा. १६-१-२. २ तै. सं. ५-६-९-१.

पसङ्गहात् न वेदिसम्मानं विधातुं शक्यम् । वेदेरल्पपरिमाणत्वात् सुतराञ्च पक्षसम्मानं निन्दितुमप्रसक्तत्वात् । न च प्रकृतौ वेदिः सम्मानस्याङ्गम् । येन कार्यवशेन परिमाण्यं बाधित्वा वर्ध्येत । न तु तदस्ति । अन्तर्वेदिबहिर्वेदिपदलक्षितदेशविशेषस्यैव तदङ्गत्वात् । अतोऽपि कर्मभेदः ।

तथा शाखाभेदेन ज्योतिष्टोमातिरात्रे "तिस्रः संस्तुतानां विराजमतिरिच्यन्ते द्वे संस्तुतानां विराजमतिरिच्येते" इति संस्तुतपदवाच्यानां स्तोत्रीयाणां मध्ये विराट्पदवाच्येन दशकेन भागं दत्वा द्वयोस्तिसृणां च अतिरेकवचनं कर्मैकत्वे नोपपद्यते ।

तथा सारस्वतसत्रे "ये पुरोडाशिनस्त उपवसन्ति, ये सान्नाय्यिनः ते वत्सान् धारयन्ती"ति असोमयाज्यधिकारिकैन्द्राग्नाभिप्रायेण पुरोडाशिन इति वचनमनिष्टप्रथमयज्ञत्वज्ञापकं दीक्षितदर्शनवत् कर्मभेद उपपद्यते। परिहारभेदात्तु पृथगुपन्यासः। इदमेव चानेकलिङ्गोपन्यासे बीजम् ।

तथा उपहव्ये क्रतौ शाखाभेदेन "उपहव्योऽनिरुक्तः, अग्निष्टोमो रथन्तरसामाऽश्वः श्यावो दक्षिणा। उपहव्योऽनिरुक्तउक्थो बृहत्सामाऽश्वः श्वेतो दक्षिणे" त्याभ्याम् वाक्याभ्यां बृहद्रथन्तरसामनी विहिते । तत्कर्मैकत्वपक्षे विकल्पापत्तेः तस्य चातिदेशेनैव प्राप्तत्वादनर्थकम। भेदपक्षे तु विकल्पेन प्राप्तयोर्नियमार्थमिति भेद एव न्याय्यः । सूत्रं निगदव्याख्यातम् ॥

सू—एकं वा संयोगरूपचोदनाख्याऽविशेषात् ॥

२—४—९. ॥ (सि)

( सिद्धान्तः )

प्रतिशाखमेकमेव कर्म, प्रत्यभिज्ञानात् । न ह्यत्र प्रत्यभिज्ञावि-

च्छद्कमीषदप्यस्ति । फलसंयोगस्य द्रव्यदेवतादिलक्षणस्य रूपस्य धात्वर्थावच्छिन्नभावनाविषयकविधिरूपायाश्चोदनायाः ज्योतिष्टोमादिनामधेयस्य च प्रतिशाखमविशेषात् ।

ननु प्रत्यभिज्ञाया अपि ज्योतिरादिसंज्ञया बाधदर्शनात् भेदोपपत्तिः । अत आह—

## सू—न नाम्ना स्यादचोदनाभिधानात् ॥२–४–१०.॥

न काठकादिनाम्ना भेदस्स्यात् । तस्य विधीयमानकर्मवाचित्वाभावात् । ग्रन्थ एव ह्यस्य शक्तिः, न कर्मण्यपि; अनेकशक्तिकल्पनापत्तेः । ग्रन्थप्रतिपाद्यत्वसम्बन्धेन कर्मणि लक्षणोपपत्तेश्च ।

न च विपर्ययः । अनेकेषु कर्मसु शक्तिकल्पनापेक्षया एकस्मिन्ग्रन्थ एव शाखारूपे शक्तिकल्पनस्य न्याय्यत्वात् । न च लाक्षणिकसंज्ञाभेदादेव भेदः । संज्ञा हि वैदिकवाक्यगता कर्मभेदहेतुर्भवेत् । इयं तु व्यवहारसौकर्यार्थं स्वाध्येयग्रन्थसम्बन्धेन तत्तद्वैदिके कर्मणि प्रयुज्यमाना न भेदहेतुः ॥

## सू—सर्वेषां चैककर्म्यं स्यात् ॥२–४–११.॥

इदं भाष्यकारेण यदि काठकादिसंज्ञाभेदात् कर्मभेदस्स्यात् ततस्संज्ञैक्यात् एकशाखान्तर्वर्तिसर्वकर्मणामभेदस्स्यात् इत्येवं व्याख्यातम् ।

तत्र वार्तिके चातुर्मास्यादिसंज्ञैक्येऽपि आग्नेयादिभेददर्शनेन संज्ञैक्यस्य अभेदव्याप्त्यभावात् असाधकत्वमाशङ्क्य असदुत्तरमेव पूर्वपक्षस्यातितुच्छत्वज्ञापनायोक्तमिति समाहितम् ।

एवं तु सूत्रकारस्य शून्यहृदयतापत्तेः एवं व्याख्येयम् । यदि हि सम्बन्धान्तरेणेयं संज्ञा तया च कर्मभेदस्स्यात् ततः कठशाखास्थे विजातीये कर्मणि कलापिशाखिनामपि काठक-

मित्येवप्रयोगस्स्यात् । कठशाखिनामेव तु प्रयोगात् स्वाध्येयग्रन्थसम्बन्धेन प्रयोग इति निश्चयात् न कर्मभेदकत्वमिति ॥

## सू–कृतकं चाऽभिधानम् ॥ २–४–१२. ॥

पूर्वपक्षयुक्तरीत्या काठकादिपदस्य वैशम्पायनान्तेवासिपुरुषविशेषवाचिकठशब्दघटितत्वात्तस्य च सादित्वेन समाख्याया अपि तत्त्वापत्तेः तादृश्या च तया न अनादिवाक्यविहितकर्मभेदोपपत्तिः ।

वस्तुतस्तु अत्रध्यस्मरणात् वैशम्पायनान्तेवासिपुरुषविशेषस्य प्रवाहानादित्वमभ्युपगम्य संज्ञाया अनादित्वम् ।

यदि वा ब्राह्मणत्वावान्तरजातिचरणत्वावान्तरजातिरूपं कठत्वमङ्गीकृत्य तद्वाचिनः कठशब्दाद्वुञ्प्रत्ययोत्पादनेन काठकमिति रूपं व्युत्पाद्य तदुपपादयितुं शक्यम् । अथ वा कठत्वजातिवचनात्कठशब्दात्तेन प्रोक्तमित्यस्मिन्नर्थेऽणं व्युत्पाद्य स्वार्थिककप्रत्ययान्तरूपाऽभ्युपगमेन तदुपपादनीयम् । अतश्च कृतकत्वेनाभेदकत्वाभिधानमन्वाचय एवेति चशब्देन सूचितम् ।

## सू–एकत्वेऽपि परम् ॥ २–४–१३. ॥

यदेकादशकपालत्वद्वादशकपालत्वरूपभेदाख्यं परं भेदकारणमुक्तं तदेकत्वेऽपि व्रीहियवन्यायेन विकल्पोपपत्तेरविरुद्धम् ।

न चोत्पत्त्युत्पन्नशिष्टत्वात्तदसम्भवः । द्वाभ्यामपि गुणाभ्यां स्वस्ववाक्ये कर्मोत्पत्त्याक्षेपेण द्वयोरप्युत्पत्तिशिष्टत्वात् ।

न चैवं उत्पन्नस्य उत्पत्त्ययोगात् भेदः । अनेकेषामपि नानाशाखास्थवाक्यानामेककर्मविषयेऽपि अध्येतृपुरुषभेदेनाज्ञातज्ञापनरूपकर्मोत्पत्तिपरत्वस्य "अद्विर्वचनं वा" इत्यत्र सूत्रे वक्ष्यमाणत्वात् ।

सू—विद्यायां धर्मशास्त्रम् ॥ २—४—१४. ॥

यत् पुनर्भूमिभोजनादि धर्मशास्त्रं कर्मभेदकत्वेनोक्तं तद्धर्माणां कर्माङ्गताबोधकप्रमाणाभावात् द्वादशे च विघ्ननिवृत्तिद्वारा विद्याङ्गत्वस्य च वक्ष्यमाणत्वादकिंचित्करम् ॥

सू—आग्नेयवत्पुनर्वचनम् ॥ २—४—१५. ॥

यत् पुनर्यथा अग्नेयस्य आम्नायायामेव पुनर्वचनं तदधिकरणपूर्वपक्षे भेदकत्वेनोक्तं, तथा प्रतिशाखं अग्निहोत्रादिपुनर्वचनमपि । न च तत्रत्यसिद्धान्तन्यायेन अत्र पुनःश्रवणस्य किंचित् प्रयोजनं शक्यं कल्पयितुमित्युक्तम् । तदनुभाषणार्थमिदं सूत्रम् ।

अथ वा यत्पुनर्वचनं भेदकत्वेनोक्तं तदाग्नेयाधिकरणसिद्धान्तन्यायेन किंचित्प्रयोजनं कल्पयित्वा परिहर्तव्यमित्येवं परिहारार्थं सूत्रम् ।

सू—अद्विर्वचनं वा श्रुतिसंयोगाऽविशेषात् ॥ २—४—१६. ॥

अथ वा नैवास्य पुनःश्रुतित्वं, येनाग्नेयवत् प्रयोजनं कल्प्येत । अपूर्वश्रुतिसंयोगाख्याज्ञातज्ञापकत्वाऽविशेषात् सर्व एवैते विधयः । तथा हि यच्छाखास्थं वाक्यं यं प्रति ज्ञापकं, न तं प्रति तद्भिन्नशाखास्थवाक्यस्य ज्ञापकता । स्वाध्यायपदे स्त्रीयत्वैकत्वयोः विवक्षितत्वेन एकस्य शाखाद्वयाध्ययनाभावात् काठकादिसमाख्यया तत्तच्छाखाध्ययने कठादीनामेव नियतत्वाच्च । नचैवं वेदान्तराध्ययनानापत्तिः "अनया त्रय्या विद्यया लोकं जयति" "वेदानधीत्य वेदौ" वेत्यादिश्रुतिस्मृतिवचनैः तत्सिद्धेः । अत एव वचनान्तरैकवाक्यतया अध्यायपदं ऋग्वेदत्वादि-

ध्याप्यशाखापरं सत् तत्रैव स्वीयत्वैकत्वयोः विशेषणतामङ्गीकरोति, तेन च विशेषणेन ऋग्वेदध्याप्या एकैव पित्र्यादिपरम्परागता शाखा पठनीया, नान्येति फलितं भवति । न तु वेदान्तरगताऽपि पठनीयेति । अतश्च वचनद्वयाऽनुरोधात् वेदत्रयगतैकैकशाखाध्ययनमावश्यकम् । न तु शाखान्तराध्ययनम् । अत एव त्रयीसाध्यज्योतिष्टोमादिकर्मसिद्धिरपि उपपन्ना भवति। अत एव च तत्र अध्येतृभेदाभावात् यजुर्वेद एव यागपरिचायकेतिकर्तव्यताबाहुल्यात् ज्योतिष्टोमस्योत्पत्तिः, वेदान्तरे तु तदनुवादेन गुणविधानमात्रम् ।

एवं यत्र सामवेदे एकस्यामेव शाखायां पञ्चविंशषड्विंशाख्यब्राह्मणभेदः तत्रापि अध्येतृभेदाभावात् एकत्र विधिः अपरत्र अनुवादो बाहुल्यसत्वे, तदभावे तु कर्मान्तरमेव । अत एव नात्र तदुदाहरणम् । शाखान्तरस्थले तु अध्येतृभेदेन प्रमातृभेदात् सर्वशाखास्थवाक्यानां एककर्मविषयेऽपि अज्ञातज्ञापकत्वोपपत्तेः नेदं पुनःश्रवणम् । येन प्रयोजनं, तदसंभवे भेदं वाऽऽक्षिपेत् ।

नचैकस्य पुरुषस्य शाखान्तरे स्वाध्यायविधिबोधितवैधाध्ययनाभावेऽपि अध्ययनाद्यर्थं अनिषिद्धरागप्राप्तशाखान्तरावगमस्य संभवेन एकस्मिन् प्रमातरि वाक्यद्वयस्य नाज्ञातज्ञापकत्वोपपत्तिरिति वाच्यम् । सर्वस्यापि शाखान्तरावगमे नियमेन प्रवृत्त्यभावात् क्वचित्तदनुपपत्तावपि पुरुषान्तरं प्रत्यज्ञातज्ञापकत्वोपपत्तेः।

इममेवार्थं विवृणोति—

सू—वाक्यासमवायात ॥ २–४–१७ ॥

न शाखान्तरवाक्यमेकस्मिन्प्रमातरि नियमेन समवैतीत्यर्थः॥

## सू—अर्थासन्निधेश्च ॥ २—४—१८ ॥

यत्पुनरर्थस्य पूर्वकर्मणोऽनुपस्थितिरूपं प्रकरणान्तरं भेदकारणमुक्तं, तदध्ययनेनैव अभ्यासस्य भेदकत्वनिराकरणप्रकारेण प्रत्युक्तम् । अस्यापि प्रमातृभेदेनोत्पत्त्याक्षेपकत्वेऽपि भेदाक्षेपकत्वाभावात् ।

## सू—न चैकं प्रति शिष्यते ॥२—४—१९॥

यदि वा अध्येतृभेदमनङ्गीकृत्य कर्मभेद उच्यते । ततो न तावत् प्रतिशाखास्थाग्निहोत्रकर्मणां पुरुषविशेषपुरस्कारेण शक्या व्यवस्था कल्पयितुम् । अर्थिमात्रोद्देशेन विहितत्वात् ।

न च काठकादिसमाख्यानां शाखास्विव कर्मण्यपि प्रयोगात् ताभिराध्वर्यवादिसमाख्यावत् पुरुषविशेषनियमोपपत्तिः । कर्मणि प्रयोगस्य कठप्रोक्तग्रन्थविहितत्वसम्बन्धनिमित्तकस्य कर्तृतासम्बन्धेन कठनियामकत्वायोगात् । सम्बन्धसामान्ये वुञ्प्रत्ययं व्युत्पाद्य "धर्मसमाम्नाययोरिष्यते"इति वचनात् कर्मण्यपि कर्तृतासम्बन्धेन अधिकारितासम्बन्धेन वा कठनियमाङ्गीकारस्तु अर्थिवाक्यस्य कठाऽकठसाधारण्यात् कठानां वैकल्पिकप्राप्त्यभावेन समाख्यायाः तन्नियामकत्वायोगात् अकठव्यावृत्त्यर्थकत्वे च परिसङ्ख्याफलकत्वापत्तेः कठप्रोक्तग्रन्थविहितत्वसम्बन्धेनैव कर्माणि प्रयोगोपपत्तेः समाख्याया राजत्ववदप्यधिकारसंकोचकत्वायोगादयुक्तः ।

अतश्च भेदपक्षे सर्वशाखास्थकर्मणां सर्वपुरुषान् प्रत्येकफलोद्देशेन विधानात् अव्यवस्थितविकल्पापत्तिः ।

मम त्वेकस्मिन् कर्मणि सर्वशाखास्थवाक्यानां विकल्पेऽपि

स्वाध्यायविधौ स्वीयत्वैकत्वयोः विवक्षितत्वेन व्यवस्थितत्वात् नाव्यवस्थितविकल्पापत्तिः ।

यत्तु मूले अस्य सूत्रस्य कर्मभेदपक्षे प्राकरणिकानामङ्गानां तत्तत्कर्मविषयत्वेन व्यवस्थितविकल्पापत्तावपि वाक्यसंयुक्तानां "उदिते जुहोती"त्येवमादीनां सङ्कोचकप्रमाणाभावेन सर्वशाखा-विहिताग्निहोत्रकर्माङ्गत्वापत्तेः अव्यवस्थाप्रसङ्गेन शाखान्तरीया-ङ्गोपसंहाराभावः पूर्वपक्षप्रयोजनं न सिध्येदित्येवं प्रयोजन-दूषणार्थत्वेन व्याख्यातम् ।

तद्वाक्यसंयुक्तानामपि व्रीहिभिर्यजेतेतिवत् प्रकृतकर्मविषय-त्वोपपत्तेः स्वपरशाखादिविहितज्योतिष्टोमाद्यनङ्गत्ववत् परशाखा-स्थाग्निहोत्राङ्गत्वेऽपि प्रमाणाभावादुपेक्षितम् ।

वस्तुतस्तु कर्मैकत्वपक्षेऽपि न सर्वशाखास्थाङ्गोपसंहारः प्र-योजनं सिध्यति । काठकादिसमाख्यया तत्तच्छाखास्थानामङ्गा-नां प्रधानानां च कठादीन् प्रत्येव व्यवस्थितत्वादित्याशङ्कानिरा-करणार्थमिदं सूत्रम् । समाख्यायाः पूर्वोक्तरीत्याप्युपपत्तेः अङ्गा-नां कठाद्यर्थत्वे प्रमाणाभावात् प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः तस्य च पूर्वोक्तरीत्या सर्वपुरुषसाधारणत्वादिष्टप्रयोजनसिद्धिः ।

नचैवमपि शाखान्तरीयाङ्गानां प्रधानानां वा अध्ययनवि-धिसिद्धज्ञानाभावात् कथमनुष्ठानोपपत्तिः? क्रतुविधीनां स्वकर्तृ-शाखास्थविषये अध्ययनविधिसिद्धार्थज्ञानकामेन तदुपायानाक्षेप-कत्वेऽपि शाखान्तरस्थाचिस्त्रानुष्ठेयार्थविषये अध्ययनविध्यविषय-त्वेनार्थज्ञानोपायाक्षेपकत्वोपपत्तेः ।

नचैवमपि शूद्रस्याप्यर्थज्ञानोपायाक्षेपेण अधिकारापत्तिः । तस्याग्न्यभावात्, वेदाक्षरश्रवणनिषेधात्, कर्माधिकारनिषेधाद्वा

तदन्नापत्तेः । (१)वाष्ठमपशूद्राधिकरणं तु कर्माधिकारनिषेधकव-चनाभावेऽपि अग्निसाध्येषु कर्मसु अग्न्यभावेन अनधिकारमति-पादनार्थम् ।

अतः सर्वाङ्गोपसंहारोपपत्तेः युक्तं प्रयोजनम् ॥

## सू—समाप्तिवच्च संप्रेक्षा ॥ २—४—२०. ॥

"अत्रास्माकमग्निःपरिसमाप्यते, नान्यत्रेति" समाप्तिव्यपदे-शो यथा अस्माकं योऽग्निः इत्यर्थाङ्गीकारेण भेदसाधकः तथा योऽग्निः सोऽस्माकमत्र समाप्यते, अन्येषामन्यत्रेत्यर्थाङ्गीकारेणा-स्मच्छाखाधीताङ्गापेक्षया समाप्तिरन्यशाखाङ्गापेक्षया च असमा-प्तिः अभेदस्यापि साधिकैव ।

सूत्रं समाप्तिमती, अकारप्रश्लेषेण असमाप्तिमती वा या अ-पेक्षाबुद्धिरूपा संप्रेक्षा सा अभेदसाधिकैवेति व्याख्येयम् ॥

## सू-एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २—४—२१ ॥

यानि पुनः पुनर्वचनात् पराणि निन्दादीनि तानि एकत्वे-ऽप्युपपन्नानि । उदितानुदितकालयोस्तात्रद्वैकल्पिकत्वेन इतरेत-रानिन्दा इतरेतरस्तुत्यर्था । स्तुतिघटकीभूताया निन्दायाश्च आ-रोपेणाप्युपपत्तेः अनिषिद्धविषयत्वेऽपि न क्षतिः । सर्वाङ्गोपसं-हारेऽपि तत्तच्छाखागताङ्गानां बाहुल्येन समानत्वाद् केषांचिदंश-त्वाधिक्येन नाशक्यार्थता ।

---

१. पू. मी. ६-१-७.

यत्तु केचिद्वाक्यसंयुक्तानामेवोपसंहारः प्रकरणसंयुक्तानां तु व्यवस्थैवेति;

तन्न, तत्तच्छाखास्थप्रकरणानां तत्तच्छाखास्थिताङ्गसम्बन्धकत्वेऽपि पुरुषविशेषविषयत्वे प्राकरणिकानां प्रमाणाभावात्। यत्र हि विधिवाक्यानि नानाशाखास्थानि एकपदार्थविषये पुरुषभेदेन बोधकतायां व्यवस्थितान्यपि नाधिकारे व्यवस्थापकानि तथैव नानाशाखास्थप्रकरणान्यपि।

न च सर्वशाखास्थाङ्गोपसंहारे तत्तद्देशनिवासिपुरुषाध्ययनशाखाज्ञानासंभवादशक्यार्थता, शाखान्तरीयाङ्गोपसंहारस्य सूत्रकारैः कृतत्वेन सर्वशाखास्थाङ्गज्ञानोपपत्तेः। अतश्च एकस्मिन् कल्पसूत्रे कतिपयशाखास्थाङ्गोपसंहारात् सर्वकल्पसूत्राध्ययने सर्वशाखास्थाङ्गज्ञानोपपत्तिः। यत्तु "बहल्पं वा स्वगृह्योक्तमि"त्यादिवचनं तत् सर्वाङ्गोपसंहारासंभवे अनुकल्पविधानार्थं, समाप्तिभेदश्च स्वाधीताङ्गापेक्षया कर्मैकत्वेऽप्युपपन्न एवेत्युक्तमेव।

## सू०—प्रायश्चित्तं निमित्तेन ॥ २—४—२२ ॥

उदितानुदितकालातिक्रमे यत्प्रायश्चित्ताम्नानं तस्य कः परिहारः इत्यनुभाषणसूत्रम् ॥

## सू—प्रक्रमाद्वा नियोगेन ॥ २—४—२३ ॥

अङ्गानामपि वैकल्पिकानां प्रयोगाऽविक्षेपार्थं प्रयोगोपक्रमे संकल्पात्तदतिक्रमे प्रायश्चित्तोपपत्तिः। वस्तुतस्तु छन्दोगपरिशिष्टादौ—

"रूपं कालोऽनुनिर्वापः श्रपणं देवता तथा।
आदौ ये विधृताः पक्षाः त इमे सर्वदा स्मृताः ॥

तदनापत्तेः । (१)षाष्ठमपशूद्राधिकरणं तु कर्माधिकारनिषेधकव-चनाभावेऽपि अग्निसाध्येषु कर्मसु अङ्गाभावेन अनधिकारप्रति-पादनार्थम् ।

अतः सर्वाङ्गोपसंहारोपपत्तेः युक्तं प्रयोजनम् ॥

## सू-समाप्तिवच्च संप्रेक्षा ॥ २–४–२०. ॥

"अत्रास्माकमग्निःपरिसमाप्यते, नान्यत्रेति" समाप्तिव्यपदे-शो यथा अस्माकं योऽग्निः इत्यर्थाङ्गीकारेण भेदसाधकः तथा योऽग्निः सोऽस्माकमत्र समाप्यते, अन्येषामन्यत्रेत्यर्थाङ्गीकारेणा-स्मच्छाखाधीताङ्गापेक्षया समाप्तिरन्यशाखाङ्गापेक्षया च असमा-प्तिः अभेदस्यापि साधिकैव ।

सूत्रं समाप्तिमती, अकारप्रश्लेषेण असमाप्तिमती वा या अ-पेक्षाबुद्धिरूपा संप्रेक्षा सा अभेदसाधिकैवेति व्याख्येयम् ॥

## सू-एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २–४–२१ ॥

यानि पुनः पुनर्वचनात् पराणि निन्दादीनि तानि एकत्वे-ऽप्युपपन्नानि । उदितानुदितकालयोस्तत्रद्वैकल्पिकत्वेन इतरेत-रनिन्दा इतरेतरस्तुत्यर्था । स्तुतिघटकीभूताया निन्दायाश्च आ-रोपेणाप्युपपत्तेः अनिषिद्धविषयत्वेऽपि न क्षतिः । सर्वाङ्गोपसं-हारेऽपि तत्तच्छाखागताङ्गानां बाहुल्येन समानत्वात् केषांचिदेव-त्वाधिक्येन नाशक्यार्थता ।

---

१. पू. मी. ६-१-७.

यत्तु केचिद्वाक्यसंयुक्तानामेवोपसंहारः प्रकरणप्रयुक्तानां तु व्यवस्थैवेति;

तन्न, तत्तच्छाखास्थप्रकरणाम्नाततत्तच्छाखास्थितप्राहकत्वेऽपि पुरुषविशेषविषयत्वे प्राकरणिकानां प्रमाणाभावात् यत्र हि विधिवाक्यानि नानाशाखास्थानि एकपदार्थविषये पुरुषभेदेन बोधकतायां व्यवस्थितान्यपि नाविकारे व्यवस्थापकानि तथैव नानाशाखास्थप्रकरणान्यपि।

न च सर्वशाखास्थाङ्गोपसंहारे तत्तद्देशनिवासिपुरुषाध्ययशाखाज्ञानासंभवादशक्यार्थता, शाखान्तरीयाङ्गोपसंहारस्य सूत्रकारैः कृतत्वेन सर्वशाखास्थाङ्गज्ञानोपपत्तेः। अतश्च एकस्मिन् कल्पसूत्रे कतिपयशाखास्थाङ्गोपसंहारात् सर्वकल्पसूत्राध्ययने सर्वशाखास्थाङ्गज्ञानोपपत्तिः। यत्तु "बहल्पं वा स्वगृह्योक्तमि" त्यादिवचनं तत् सर्वाङ्गोपसंहारासंभवे अनुकल्पविधानार्थं, समाप्तिभेदश्च स्वाधीताङ्गापेक्षया कर्मैकत्वेऽप्युपपन्न एवेत्युक्तमेव।

## सू०—प्रायश्चित्तं निमित्तेन ॥ २—४—२२ ॥

उदितानुदितकालातिक्रमे यत्प्रायश्चित्ताम्नानं तस्य कः परिहारः इत्यनुभाषणसूत्रम् ॥

## सू—प्रक्रमाद्वा नियोगेन ॥ २—४—२३ ॥

अङ्गानामपि वैकल्पिकानां प्रयोगाऽविक्षेपार्थं प्रयोगोपक्रमे संकल्पात्तदतिक्रमे प्रायश्चित्तोपपत्तिः। वस्तुतस्तु छन्दोगपरिशिष्टादौ—

"रूपं कालोऽनुनिर्वापः श्रपणं देवता तथा।
आदौ ये विधृताः पक्षाः त इमे सर्वदा स्मृताः॥

इति वचनेन वैकल्पिकस्य कालस्य आद्यप्रयोगे परिगृहीतस्यैव प्रतिप्रयोगं परिगृहविधानात् तदतिक्रमे सुतरां प्रायश्चित्तोपपत्तिः। अत एव शाखान्तरीयस्यापि पक्षस्य स्वशाखीयेन तुल्यवदेव आद्यप्रयोगे विकल्पः।

यत्तु (१)बलाबलाधिकरणे शाखान्तरीयस्य दुर्बलत्वाभिधानं तत् मूलानवगमेऽपि यत्र परोक्तिमात्रेण पदार्थावगमः तत्र मूलावगमपर्यन्तं बाध्यते इत्येवं परम् ॥

सू—समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयते॥२—४—२४॥

ननु समाप्तेरुभयपक्षसाधकत्वस्य वाक्यार्थद्वयाभिप्रायेण उक्तत्वात् कस्मादभेदपक्षसाधकतैवाऽवगम्यत इत्याशङ्क्य अभेदस्य प्रत्यभिज्ञादिभिः साधितत्वात् तत्पूर्विका समाप्तिरपि तथैव प्रतीयत इत्युक्तम् ॥

सू—लिङ्गमविशिष्टं सर्वशेषत्वात न हि कर्मचोदना तस्माद्द्वादशाहस्याहारव्यपदेशस्स्यात॥२—४—२५॥

यददीक्षितदर्शनानुपपत्तिरूपं लिङ्गमुक्तं तत्तवाप्यविशिष्टम्। ताण्डकवचनेन सर्वद्वादशाहानां ज्योतिष्टोमपश्वाङ्गत्वविधानात्। न हि तद्द्वादशाहरूपकर्मप्रकरणे चोद्यते । येन व्रीहिभिर्यजेतेतिवत् प्रकृतस्यैवोद्देशात् शाखान्तरीयद्वादशाहे पश्वाङ्गत्वनियमो न प्राप्येत। अनारभ्याधीतत्वात्तु यज्ञान्तराणामिव शाखान्तरीयद्वादशाहेऽप्यविशिष्टः।

न च प्रकरणवत् स्वशाखागतत्वस्यापि उद्देश्यतावच्छेदक-

१. पू. मी. ६-१-७.

त्वोपपत्तेः प्रकरणाभावेऽपि प्रकृते स्वसमानशाखीययज्ञमात्रोद्देशान्न शाखान्तरीयद्वादशाहे पश्चाद्भावनियमप्राप्तिरिति वाच्यम् । अनुवादस्य पुरोवादापेक्षायामसम्बन्धयर्थाविच्छेदरूपस्य अधिकाराख्यप्रकरणस्यानुवाद्यावच्छेदकत्वेऽपि तदभावे यज्ञपदेन स्वापूर्वसाधनीभूतयज्ञमात्रोद्देशात् स्वशाखागतत्वस्योद्देश्यतावच्छेदकत्वानुपपत्तेः । अत एव यो ज्योतिष्टोमविकारः शाखान्तर एवाम्नातः तत्र तत्पश्चाद्भावनियम इष्ट एव । अतश्चादीक्षितदर्शनानुपपत्तिः तवापि समानेत्युभाभ्यामपि द्वादशाहस्यैव काम्यप्रथमप्रयोगभावाऽभावाभ्यां दीक्षिताऽदीक्षितदर्शनोपपत्तिः कर्तव्येति न किंचिदनुपपन्नम् ॥

सू—द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यात् निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादस्स्यात् ॥३—४—२६॥

यदपि पक्षसंमाननिन्दापूर्वकवेदिसम्मानविधिरूपं लिङ्गं तदपि तव मतेऽपि अग्न्याख्ये द्रव्ये यूपैकादशिन्या अविहितत्वान्न पक्षसंमाननिन्दा, अप्रसक्तत्वान्न वेदिसम्मानविधिः, नवा रथाक्षमात्रान्तरालविधिरुपपद्यते । सति ह्यग्नौ यूपैकादशिनीनिर्देशे विरुद्धानां मानविधीनां व्यवस्थाऽपेक्ष्येत । तदभावात्तु पक्षसम्माननिन्दा नित्यानुवादो वेदिसम्मानस्तुत्यर्थः । स्तुतिपूर्वकस्तद्विधिरपि च न विधानार्थः । अपि तु "जर्तिलयवाग्वा वा जुहुयात्" इतिवत् पश्वैकादशिनीवृत्तियूपैक्यविधिस्तुत्यर्थ एव, एकवाक्यतालाभात् । पक्षसम्मानापेक्षया अतिप्रशस्तमपि वेदिसम्मानं यूपैक्यापेक्षया अप्रशस्तमेवेत्येवं स्तुतिः । एवं च रथाक्षमात्रान्तरालता यत्र वाचस्तोमादौ यूपैकादशिनी विहिता तद्विषयेति भाष्यकाराभिप्रायः ।

वार्तिककारस्तु—नैवेदं वेदिसम्मानवाक्यं यूपैकयविधिस्तुत्यर्थं अनिन्दितत्वात् जर्तिलवाक्यं हि पयोहोमस्तुत्यर्थं "अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च" इत्यनेन जर्तिलादीनां निन्दितत्वात् समाश्रितम् । अतश्च वेदिसम्मानविधिः विधानार्थ एव । तदपि न प्राचस्तोमादावुत्कृष्यते, अपि तु शाखान्तरे यूपैकादशिन्या अपि चयनप्रकरणे समाम्नानात् तत्रैव निविशते । अतश्च अनारभ्याधीतः रथाक्षमात्रान्तरालविधिः याश्वाग्निरहितासु विकृतिषु यूपैकादशिनी विहितास्ति तासु गमिष्यति । वेदिसम्मानस्य ज्योतिष्टोमापूर्वसाधनीभूताग्न्यङ्गयूपैकादशिन्युद्देशेनैव विधानाङ्गीकारात् पश्वपूर्वसाधनीभूतयूपैकादशत्वोद्देशेन तद्विधाने रथाक्षमात्रान्तरालतया विकल्पापत्तेः । अत एवं सूत्रं—अग्निप्रकरणे अन्तरालस्याचोदितत्वात् तद्विधेर्न प्रकरणे व्यवस्थितिः स्यात् । वेदिसम्मानस्यैव तु पठितत्वात् सा भवेत् । पक्षसाम्मितिनिन्दा तु नित्यानुवादस्स्यात्—इति व्याख्येयमित्याह ॥

## सू—विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात्॥ २—४—२७॥

यदपि तिस्रस्संस्तुतानां विराजमि" इत्यादिलिङ्गं तदपि ज्योतिष्टोमातिरात्रे षोडशिनो वैकल्पिकत्वात् करणपक्षे बहिष्पवमानेनव। आज्येषु चतुर्षु माध्यन्दिनपवमाने च पञ्चदशस्तोमकत्वात् मिलित्वा पञ्चसप्ततिः । पृष्ठेषु चतुर्षु आर्भवे च सप्तदशस्तोमकत्वाच्चयैव पञ्चाशीतिः। अग्निष्टोमस्तोत्रे त्रिषूक्थपर्यायेषु षोडशिनि च एकविंशस्तोमकत्वात्तथैव पञ्चोत्तरशतम् । द्वादशस्वतिरात्रस्तोत्रेषु पञ्चदशस्तोमकत्वात् अशीत्युत्तरशतम् । रथन्तरे नव। तत्र सर्वेषां मेलनं त्रिषष्ट्युत्तरशतचतुष्टयोपजननात् दशकेन भागे दत्ते तिस्रोऽवशिष्यन्ते । अकरणपक्षे च एकस्या एकविंशतेरगणने

द्विचत्वारिंशदुत्तरचतुश्शत्युपजननात् भागदाने द्वे अवशिष्येते इत्युपपन्नम् ॥

## सू–सारस्वते विप्रतिषेधात् यदेति स्यात् ॥२–४–२८॥

ये पुरोडाशिन इत्यादि लिङ्गानुपपत्तेस्तु तत्रापि अदीक्षित-दर्शनवत् तुल्यत्वादेव गतिः। मित्रावरुणयोरयनाख्ये सारस्वतसत्रे "यथा अमावास्यायामतिरात्रस्स्यात् तथा दीक्षेरन् तेनाऽमावा-स्यायामतिरात्रं संस्थाप्य तदहरेव वत्सानपाकुर्युः, तं पक्षमा-मावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः, पौर्णमासेनोत्तरं व्रजि-त्वा अमावास्यायामायुषमुपेयुः, एवमावर्तयन्तो व्रजेयु"रि त्यनेन प्रतिपक्षममावास्याख्यपौर्णमासाख्यकर्मविधानात्तदभिप्रेत्य पुरो-डाशिसान्नाय्ययाजिशब्द इति। यदा पुरोडाशसाध्यं कर्मेति च कालभेदविवक्षायामपि ये पुरोडाशिन इति कर्तृभेदपरशब्दप्रयोग औपचारिक इति भावः ॥

## सू(१)–हव्ये प्रतिप्रसवः ॥ २–४–२९ ॥

यस्तूपहव्ये बृहद्रथन्तरयोर्नियमरूपः प्रतिप्रसवः भेदसाधक-त्वेनोक्तः तस्य कः परिहारः इत्यनुभाषणसूत्रमेतत् ॥

## सू–गुणार्था वा पुनःश्रुतिः ॥ २–४–३० ॥

प्राप्तयोरपि बृहद्रथन्तरयोः संस्थाव्यवस्थार्थं दक्षिणाव्यव-स्थार्थं च पुनःश्रवणमुपपत्तिमत्। विशिष्टकर्मविभित्वेऽपि च

१. 'उपहव्ये इति बहुत्र पाठः।

विशेषणानां पार्ष्ठिकसंबन्धावगमात् साम्नश्च प्राप्तत्वेन सहकारि-तामात्रेण पार्ष्ठिकसम्बन्धायोगात् निमित्ततया तदाश्रयणम्। अथ वा साम्नि निमित्ते तदितरगुणविशिष्टकर्मविधानम् । तत्र च विशेष्यविध्यभावे साम्नः प्राप्त्यभावेन तत्प्रति निमित्तत्वायो-गेऽपि विशेषणविध्यभावेऽतिदेशेन तत्प्राप्तिसंभवात् तां प्रति नि-मित्तत्वोपपत्तिः ॥

## सू—प्रत्ययं चापि दर्शयति ॥२—४—३१॥

"ऋतवो वै प्रयाजाः समानत्र प्रतिष्ठता होतव्या" इति शाखा-न्तरविहितप्रयाजानुवादेन सहहोमाख्यं गुणं विदधत्सर्वशाखा-प्रत्ययमेकं कर्म दर्शयति । अन्यथा अत्रापि प्रयाजान्तरविधाने विशिष्टविधिनिमित्तगौरवापत्तेः। तथा "कुक्कुटोऽसि"इत्यश्मान-मादत्ते, "कुटरुरसि वे"ति शाखान्तरीयेण कुक्कुटोऽसीत्यनेन स्व-शाखाविहितस्य मन्त्रस्य विकल्पमनुवदन् कर्मैकत्वं दर्शयति। तदा हि यथाम्नातमन्त्रस्य विनियोगमात्रकरणाल्लाघवम् । इत-रथा मन्त्रोत्पत्तेरपि करणात् गौरवापत्तिः ॥

## सू—अपि वा क्रमसंयोगात विधिपृथक्त्वमेकस्यां ॥ व्यवतिष्ठेत २—४—३२ ॥

न प्रतिशाखमेकमेव कर्म, अपि तु एकैकस्यां शाखायां कर्मभेदापादकं विधिपृथक्त्वं व्यवतिष्ठेत । इतरथा सर्वाङ्गोपसं-हारे क्रियमाणे क्रमकालपरिमाणभेदापत्तिः । भेदे तु स्वशाखा-विहितानामङ्गानां पाठादिबोधितः क्रमः पूर्वाह्णादिकालः अङ्ग-परिमाणं चानुगृहीतं भवति ॥

सू—विरोधिनां त्वसंयोगादैककर्म्येन संयोगात विधीनां सर्वप्रत्ययस्स्यात ॥ २–४–३३ ॥

ऐककर्म्ये सति सर्वशाखास्थानां विधिपदोक्तानां विधेयानामङ्गानां तेनैकेन कर्मणा संयोगावगतेः विरोधिनां क्रमकालपरिमाणानां(१)शिष्टाकोपाधिकरणोक्तरीत्या संयोगाभावात् सर्वशाखास्थानामङ्गानामेककर्माङ्गत्वप्रत्यय इत्यर्थः । नचैवं "अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्, तेष्वदर्शनाद्विरोधस्य" इत्यन्तसूत्रच्छेदपक्षे शिष्टाकोपाधिकरणेनैतस्य पौनरुक्त्यमिति वाच्यम् । इह साधितस्याविरोधस्य तत्र हेतुत्वेनोपादानात् । तस्मात्सिद्धः शाखान्तरे उत्पत्तिप्रयोगभेदवत् विनियोगभेदोऽपि ॥

इति द्वितीयं शाखान्तराधिकरणम् ॥

शब्दान्तरमभ्यासस्संख्या संज्ञा गुणव्यवच्छेदाः ।
भेदे मानमिहोक्तं ततः परं शेषवाग्जालम् ॥

मीमांसाम्बुनिधिं प्रमथ्य सुदृढैः न्यायोच्चयैर्निर्जरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥

---

१. १—३—३.

इति श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या भेदाध्याये चतुर्थाङ्घ्रिः ॥

इति पूर्वोत्तरमीमांसापारावारपारीण श्रीरुद्रदेवसूनोः
खण्डदेवस्य कृतौ मीमांसाकौस्तुभे द्वितीया-
ध्यायस्य चतुर्थः पादः ॥

द्वितीयाध्यायः समाप्तः ॥

॥ शुभमस्तु ॥

* श्रीः *

# मीमांसाकौस्तुभः

## तृतीयाध्यायस्य प्रथमः पादः। (श्रुतिपादः)

### प्रतिज्ञाधिकरणम् ॥

### सू—अथातश्शेषलक्षणम् ॥ ३—१—१ ॥

एवं सिद्धे कर्मभेदे शेषत्वमिदानीं निरूप्यते। भेदे हि शेषिनिरूपितशेषत्वं संभवति, नाभेद इति भेदनिरूपणस्य तन्निरूपणं प्रति हेतुता। यद्यपि च कर्मनिरूपितकर्मवृत्तिशेषानिरूपणं प्रत्येव पूर्वोक्ताभ्यासादिप्रमाणस्य हेतुता। न तु द्रव्यकर्मणां अन्योन्यनिरूपितान्योन्यवृत्तिशेषत्वनिरूपणं प्रति। तद्भेदस्य लोकसिद्धत्वेन द्वितीये अप्रतिपाद्यमानत्वात्। तथापि उक्तनिरूपणस्यैव हेतुतासंभवेन सङ्गतौ सिद्धायां निरूपणान्तरस्य शेषत्वप्रसङ्गात् सङ्गत्युपपत्तिः।

सत्यपि प्रयोजकत्वादिनिरूपितप्रयोज्यत्वादि प्रत्यपि भेदस्य हेतुत्वे शेषत्वस्यापि क्वचित् तत्सत्वात् तन्निरूपणस्य पूर्वता।

अत्र च श्रुत्यादिषट्प्रमाणकं शेषत्वमेवाध्यायार्थः। न तु शेषित्वमपि। तस्य निरूपकतया शेषसम्बन्धित्वरूपस्यार्थादेव सिद्धेः, वक्ष्यमाणारीत्या द्वितीयादेरपि श्रुत्यादिषट्कस्य शेषत्व एव प्रमाणत्वाच्च। अतस्तन्निरूपणप्रतिज्ञार्थमिदं सूत्रम्।

तत्र "अथ" शब्दः अधिकारार्थः। प्रथमसूत्रे हि प्रारब्धव्यानुपादानात् जिज्ञासापदाभिधेययोश्च ज्ञानेच्छयोः प्रमाणवस्तु-

परतन्त्रत्वेन अकृतिसाध्ययोः अनारब्धव्यत्वात्, विचारलक्षणायां च प्रमाणाभावात् अधिकारार्थत्वं अथशब्दस्य नाश्रितम् ; किन्तु अध्ययनानन्तर्यार्थत्वमेवोक्तम् । प्रकृते तु लक्षणापदाभिधेयस्य अध्यायस्य तदर्थस्य वा न्यायसन्दर्भरूपस्य प्रारब्धव्यस्योपात्तत्वात् अधिकारार्थत्वमेव युक्तम् ।

"अतः" शब्दः उक्तविधहेत्वादिसङ्गत्यभिधानार्थः । शेषत्वं चानेकप्रकारमत्र निरूप्यते—लक्षणं, शेषपदशक्यतावच्छेदकं, श्रुत्यादीनि षट् अङ्गत्वबोधे प्रमाणानि, तयोः विरोधे बलाबलं, विरोधश्च क्वास्ति क्वनास्ति—इत्यादि । एवं च अतिदेशस्यापि अङ्गत्वप्रमाणत्वे इहानिरूपणेऽपि न क्षतिः ॥

इति प्रथमं प्रतिज्ञाधिकरणम् ।

---

## अथ द्वितीयं शेषलक्षणाधिकरणम् ।

### सू—शेषः परार्थत्वात् ॥ ३–१–२ ॥

इह शक्यतावच्छेदकं, लक्षणं, च श्रुत्यर्थाभ्यामुच्यते । प्रयाजादौ शेषपदवाच्यतानुमाने हि परार्थत्वं पञ्चम्या हेतुरुच्यते । अतस्तच्छेषपदशक्यतावच्छेदकम् । अर्थाच्च लक्षणमपि ।

अनेन च उपकारकत्वं शेषत्वमिति बादरिमतं परास्तम् । पश्वङ्गभूतानामपि प्रयाजगोदोहनादीनां पुरोडाशप्रणयनाद्युपकारकत्वेन तत्वापत्तेः, आमिक्षादिप्रयुक्तदध्यानयनादेः वाजिनाद्यङ्गत्वापत्तेश्च, अग्न्यादिस्वरूपमात्रपर्यवसायिनां आधानादीनां क्रत्वङ्गत्वापत्तेश्च ।

अथ अनन्यार्थस्य अन्योपकारकत्वं तदिति भवदेवोक्तं

युक्तम् । अनन्यार्थत्वं हि अनन्योपकारकत्वं अभिप्रेतं वा ? उत पारार्थ्यं वा ? नाद्यः, पुरोडाशाद्युपकारकाणां पूर्वोक्तानां पश्वङ्गत्वाद्यनापत्तेः । नान्त्यः, पारार्थ्यस्य त्वया अनङ्गीकारेण तद्घटितलक्षणस्यायोगात् । पक्षद्वयेऽपि पुरोडाशार्थकपालस्य तुषोपवापाङ्गत्वायोगाच्च । न च कपालस्य रूपान्तरेण तुषोपवापोपकारकत्वेऽपि पुरोडाश इव आधारतया अनुपकारकत्वात् न क्षतिरिति वाच्यम् । प्रकृत्यर्थानामङ्गानां तेनैव रूपेण उपकारकत्वस्य विकृतावितिष्टत्वात् एकरूपप्रवेशानुपपत्तेः । अतो लक्षणान्तरासंभवात् पारार्थ्यमेव शेषत्वं जैमिनिराह ।

ननु–किमिदं पारार्थ्यम् परोद्देशप्रवृत्तकृतिसमवायित्वमिति चेत्–अचेतनयागादावव्याप्तेः । उक्तकृतिसाध्यत्वमिति चेत्–कर्त्रादावव्याप्तेः । सम्बन्धित्वमिति चेत्–निमित्ते अतिव्याप्तेः । अतः पारार्थ्यमपि अशक्यनिर्वचनमिति चेत्–

परोद्देशप्रवृत्तकृतिकारकत्वेन विध्यन्वयित्वस्यैव तत्त्वात् । अस्ति हि स्वर्गोद्देशेन प्रवृत्तस्य पुरुषस्य या कृतिः यागानुकूला तस्यां कारकत्वेन विध्यन्वयो यागे । अतस्स्वर्गाङ्गं यागः ।

प्रयाजादीनां च प्रकरणात् अपूर्वसाधनप्रधानयागोद्देशेन प्रवृत्तपुरुषकृतौ प्रधानानुकूलायां स्वानुकूलायामेव वा कारकीभूतानां विधानात् युक्ता प्रधानाङ्गता, न तु स्वर्गाङ्गता । तदुद्देशेन विधानस्य भावार्थाधिकरणसप्तमाद्ययोः निराकरणात् । कृतिसाध्यत्वाभावेऽपि द्रव्यगुणकर्तृकालादौ उक्तविधकृतिकारकत्वेन विध्यन्वयस्य सत्त्वात् नाव्याप्तिः । अस्ति च द्रव्यस्य क्रियानिर्वाहकत्वेनगुणस्य द्रव्यपरिच्छेदकत्वेन कर्तृकालादेश्च तत्कर्तृत्वाधिकरणत्वादिना यागानुकूलकृतिकारकत्वं,विध्यन्वयश्च । यत्रापि षष्ठ्यन्तस्थले

सम्बन्धसामान्येन विध्यन्वयः तत्रापि कारकविशेषण एव पर्यवसानान्न क्षतिः ।

अत एव क्रमस्यापि पदार्थपरिच्छेदकत्वेन गुणवत् कारकत्वादङ्गत्वम् । निमित्तस्य च क्रियोपलक्षणत्वेन क्रियान्वयिनोऽपि अकारकत्वात्‌ नाङ्गत्वापत्तिः। निमित्तोद्देशप्रवृत्तकृतिकारकत्वेऽपि यागस्य न निमित्ताङ्गत्वम् , लक्षणे ईप्सिततत्वाख्याया एव उद्देश्यतायाः विवक्षितत्वात् । निमित्ते च अनुष्ठापकत्वरूपोद्देश्यतासत्वेऽपि ईप्सितत्वाख्यायाः अभावात् । अस्ति चेदं पशौ प्रयाजादीनाम् । न तु पशुपुरोडाशादीन् प्रति । तत्र पदर्थांशे अतिदेशाकल्पनेन पुरोडाशप्रवृत्तकृतिकारत्वेन विधानाभावात् । एतेन दध्यानयनादेः वाजिनादि प्रति अङ्गत्वं व्याख्यातम् । पुरोडाशकपालस्य तुषोपवापोद्देशप्रवृत्तकृतौ तुषोपवापानुकूलायां कारकत्वेन विधानात् अङ्गत्वोपपत्तिः । नचैतावता तुषोपवापप्रयोज्यत्वापत्तिः । जनकतासम्बन्धेन तुषोपवापोद्देशप्रवृत्तकृतिकारत्वरूपाङ्गत्वसत्वेऽपि उक्तकृतिव्याप्यजन्यत्वरूपप्रयोज्यत्वाभावात् । पुरोडाशं प्रति तु उपादानादिरूपक्रियाव्याप्यत्वात् प्रयोज्यत्वमिति विशेषः । अत्र च कृतिकारकत्वमित्येवेत्युक्तं फलस्यापि कर्मतासम्बन्धेन तत्वात् फलाङ्गत्वापत्तिः । अतः परेत्याद्युक्तम् । अतश्च भोक्तृद्देशप्रवृत्तपुरुषकृतौ कर्मतया फलस्य विध्यन्वयात् परं भोक्त्रङ्गत्वम्, न तु फलाङ्गत्वम् । स्वस्यैव स्वं प्रति परत्वाभावात् । अपूर्वस्यापि फलोद्देशप्रवृत्तकृतौ कारकत्वेनान्वयात् फलाङ्गत्वोपपत्तिः । कृष्यादेरपि च यागोद्देशप्रवृत्तकृतिकारकत्वात् अङ्गत्वापत्तिरिति विध्यन्वयित्वविशेषणम् । तस्याक्षेपलभ्यत्वेन विध्यन्वयाभावात् । एवं च यागादेः भावनां प्रति, तस्याश्च फलं प्रति, शब्दभावनायाश्च अर्थभावनां प्रति,

पश्वादेश्च कारकं प्रति, कारकत्वस्य च क्रियां प्रति, अङ्गत्वव्यवहारस्त्वाक्षे भाक्तः विशेषणत्वमात्रविवक्षया द्रष्टव्यः । कृतेः कृत्यन्तराभावात्, कारकस्य च कारकान्तराभावात् ।

केचित्तु–इष्टोद्देश्यकप्रवर्तनाप्रयोज्यत्वं इष्टं प्रत्यङ्गत्वम् । प्रयोज्यत्वं कार्यतत्कार्यसाधारणम् । प्रवर्तनाकार्यं हि प्रवृत्तिः ; तत्कार्यं च यागादि स्वस्वेष्टं प्रत्यङ्गम् । अतश्च भावनायाः फलाङ्गत्वव्यवहारः सर्वोऽप्युपपन्नः । द्रव्यदेशकालकर्त्रादिरपि करणत्वाधिकरणत्वकर्तृत्वादिप्रवृत्तिद्वारा प्रवर्तनयैव जन्यत इति तस्यापि स्वेष्टं प्रत्यङ्गत्वोपपत्तिरित्याहुः ।

तन्न ; एवमपि शब्दभावनाया अर्थभावनाङ्गत्वस्य दुरुपपादत्वात् । राहूपरागादिवृत्तिनिमित्तत्वस्यापि प्रवृत्तिद्वारा प्रवर्तनाजन्यत्वेन तस्या अप्यङ्गत्वापत्तेश्च ।

यत्तु न्यायरत्नमालायां वैधेष्टसाधनत्वं इत्येवं लक्षणं तस्यापि अस्मदुक्तप्रकार एव तात्पर्यम् । यथाश्रुतत्वे गुणस्यापि आश्रयाङ्गत्वापत्तेः । अत्र च अङ्गत्वलक्षणे सकलप्रयाजादिवृत्तिलक्ष्यतावच्छेदकाननुगमेऽपि न दोषः । अनङ्गभेदसाध्यकानुमाने अङ्गपदाभिधेयसाध्यकानुमाने वा उक्तत्रिधाङ्गत्वहेतोरेव पक्षतावच्छेदकत्वोपपत्तेः ।

वस्तुतस्तु व्यापारभेदेन कारकाणां भेदात् तद्घटिताङ्गत्वस्यापि प्रतिपदार्थं भेदावगमेन तत्तदङ्गत्वं प्रति प्रयाजत्वादेरेव लक्ष्यतावच्छेदकत्वोपपत्तिः ।

यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणगम्यम् । कारकमात्राभिधायित्वात् द्वितीयादेः । तथापि परं तावत् स्वर्गादिपदात्, तदुद्देश्यकत्वं संसर्गादिना, कृतिराख्यातात्, कारकत्वं द्वितीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात् । वि-

धिर्हि विशिष्टभावनां विदधत् अर्थात् विशेषणान्यपि विधत्ते इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयित्वोपपत्तेः।

यत्रापि "विश्वजिता यजेत" त्यादौ स्वर्गादिपदश्रवणाभावः, तत्रापि इष्टसाधनत्वाक्षेपकविधिपदोन्नीतस्वर्गादिपदेनैव परोद्देश्यत्वादिप्रतीतिर्द्रष्टव्या । श्रुत्यादीनां अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वबोधकत्वात् अङ्गत्वप्रामाण्यव्यवहारः। अङ्गित्वं तु अङ्गत्वघटकीभूतोद्देश्यताशालित्वरूपमर्थसिद्धमिति सूत्रकृता नोक्तम् । प्रमाणं विना च पारार्थ्यस्य वक्तुमशक्यत्वात् श्रुत्यादीन्यपि प्रमाणान्यत्रैवोपाक्षिप्तानीति ध्येयम् ॥ २ ॥

इति द्वितीयं शेषलक्षणाधिकरणम् ॥

---

अथ तृतीयं शेषलक्ष्याधिकरणम्॥ (३)(बादर्यधिकरणम्)

## सू—द्रव्यगुणसंस्कारेषु बादरिः ॥ ३–१–३ ॥(पू)

अत्र पूर्वमुक्तस्य शेषत्वस्य लक्ष्याण्युच्यन्ते । तत्र बादरिस्तावत् द्रव्यगुणसंस्कारा एव लक्ष्या इत्याह । तथाहि—उपकारकत्वरूपं पारार्थ्यरूपं वा शेषत्वं तेष्वेव सुवचम्। व्रीह्यादेर्हि द्रव्यस्य, आरुण्यादेर्वा गुणस्य, अवघातादेर्वा संस्कारस्य यागाद्युपकारकत्वं प्रत्यक्षसिद्धम् । परोद्देशप्रवृत्तकृतिकारकत्वेन वा तृतीयादिभिरुक्तानां विध्यन्वयात् पारार्थ्यमपि सुप्रसिद्धम् । अत एव यत्र "व्रीहीन् प्रोक्षती" त्यत्र न प्रत्यक्ष उपकारः तत्र द्वितीयया अदृष्टरूपातिशयलक्षणफलस्य उक्तत्वादुपकारकत्वसिद्धिः। पारार्थ्यघटकीभूतपरोद्देश्यतायाः उक्तत्वाद्वा तत्सिद्धिरपि। त्रितयातिरिक्तेषु तु यागप्रयाजादिषु द्विविधमपि शेषत्वं दुर्वचम्। उपकारकत्वं

तावत् न प्रत्यक्षासिद्धम् । न वा कल्प्यं, द्वितीयाभावात् । नापि पारार्थ्यं,तद्बोधकाभावात् । तथा हि–योग्यतया प्रवृत्त्यनुकूलत्वमेव लिङर्थः । न फलोपहितप्रवृत्त्यनुकूलत्वं, येन प्रवृत्तिविषयस्य यागादेः इष्टोद्देश्यककृतिकारकत्वमाक्षिपेत् । काम्ये कर्मणि कामनायां सत्यामपि विधिश्रवणेऽपि कदाचित् प्रवृत्त्यजननात् । अतश्च प्रवृत्तिजनने योग्यत्वमात्रस्य विधेः स्वविषये इष्टोद्देश्यककृतिकारकत्वानाक्षेपकत्वात् न यागादेः पारार्थ्यसिद्धिः ।

न च कामपदेन स्वर्गोद्देश्यकत्वाद्यवगमः । "परस्त्रीकामः प्रायश्चित्तं कुर्यादि" त्यादौ कामशब्दस्य फलप्रतिपादकत्वाभावेन व्यभिचारात् । अत एव समानपदश्रुत्या यागस्य भाव्यत्वेनैवान्वयो भावनायां, स्वर्गकामस्य कर्तृत्वेन । अत एव फलभावनाभावात् न तस्य पुरुषाङ्गत्वम् । पुरुषस्य तु कर्तृत्वेन द्रव्यत्वात् यागाङ्गत्वमिष्टमेव । विस्तरेण चायमर्थः यागस्य फलसाधकत्वाभावः षष्ठाद्याधिकरणपूर्वपक्षे उपपादयिष्यते । नचैवं तदधिकरणेनास्य पौनरुक्त्यम् । तदधिकरणसिद्धेष्टसाधनत्वमङ्गीकृत्य इह यागादेः लक्ष्यत्वमात्रनिरूपणात् । अत एव (१)भावार्थाधिकरणेनास्य न पौनरुक्त्यम् । तदधिकरणस्य पौनरुक्त्यं तु तेन इष्टसाधनत्वे भावनायां प्रतिपादिते तत्साधनं याग एव न सोमादिरिति भावार्थाधिकरणे तत्प्रतिपादनात् परिहर्तव्यम् ।

## सू–कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ३–१–४ ॥

न द्रव्यगुणसंस्कारा एव लक्ष्याः । अपि तु कर्माण्यपि यागप्रयाजादीनि । तेषामपि स्वर्गक्रतूपकारादि प्रति पारा-

र्थस्य विधिसहकृतेन वाक्यप्रकरणादिना बुद्धत्वात् । विधिर्हि यद्यपि स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलः । तथापि निष्फलस्य स्वरूपयोग्यस्य फलावश्यम्भावनियमात् कदाचिदवश्यं प्रवृत्त्याख्यफलेन भवितव्यम् । तथा च स्वविषयस्य इष्टसाधनतावगमं विना तस्मिन् चेतनप्रवृत्त्ययोगात् तस्य स्वतः प्रमाणत्वेन बाधकाभावे प्रमारूपत्वावगतेः, प्रमायाश्च स्वविषयसत्ताक्षेपकत्वात् प्रवृत्तिविषये यागादावश्यमिष्टसाधनत्वमाक्षेप्तव्यम् । इष्टविशेषश्च योग्यपदान्तरसमभिव्याहारात्, अध्याहारात्, प्रकरणाद्वा अवगम्यते । स्वर्गकामपदं ह्याकांक्षितत्वात् लक्षणया विशेषणप्रधानं सत् स्वर्गस्य साध्यत्वं गमयति । न तु तत्कामस्य कर्तृत्वम् । अतस्सिद्धं कर्मणामपि तु पारार्थ्यम् ॥

## सू—फलं च पुरुषार्थत्वात् ॥३—१—५॥

एवं फलस्यापि भोक्तृपुरुषाङ्गत्वेन पारार्थ्यात् लक्ष्यत्वम् । भोक्ता चोत्सर्गतः विधिवशात् कामनावशात् आत्मनेपदवशाच्च कर्तैव । क्वचिदेव तु प्रमाणान्तरे सत्यन्यः ॥

## सू—पुरुषश्च कर्मार्थत्वात् ॥ ३—१—६ ॥

पुरुषः पुनः कर्तृत्वेन कर्मार्थत्वात् लक्ष्य इति त्वयैवोक्तम् । स्वर्गकामपदस्य कर्तृपरत्वाभावात् आख्याताक्षिप्तस्याशाब्दत्वेन शाब्दविध्यनन्वयात् न पारार्थ्यं सम्भवतीति शङ्कानिरासार्थमिदं सूत्रम् । आक्षिप्तस्यापि लक्षणया शाब्दत्वोपपत्तेः अङ्गत्वोपपत्तिः । क्वचित् पुनः व्यापारान्तरेणापि पुरुषः अङ्गम् । यथा औदुम्बरीसम्मानादिषु यजमानस्साधनत्वेन । इदं चाधिकाशङ्का-

भावात् द्रव्यपदेनैव सङ्ग्रहोपपत्तेः सूत्रकारानभिप्रेतमेव भाष्यकारेणोक्तम् ॥ ३ ॥

इति तृतीयं बादर्यधिकरणम् ॥

अथ चतुर्थं तेषामर्थाधिकरणम् । (४)

## सू—तेषामर्थेन सम्बन्धः ॥३–१–७॥ (सि)

द्वितीयसूत्रे प्रमाणं विना पारार्थ्यस्य लक्षणत्वेन वक्तुमशक्यत्वात् श्रुत्यादीन्यपि षट् प्रमाणानि अङ्गत्वे उपक्षिप्तानीत्युक्तम् । तत्र श्रुत्यादित्रिकस्य अङ्गत्वबोधकतायाः स्पष्टत्वात् (१)तद्भूताधिकरणे श्रुतिवाक्ययोः (२)सामर्थ्याधिकरणे लिङ्गस्य क्रियान्वयबोधकत्वव्युत्पादनाच्च इहाक्षेपसमाधानाद्यकृत्वा तत्प्रामाण्योपयोगिविशेषविचार एव करिष्यते । प्रकरणादित्रिकस्य तु आक्षेपसमाधानादिना प्रामाण्यमुपपाद्य विशेषविचार इति विवेकः ।

अत्र श्रुतिप्रमाणकाविनियोगोपयोगिनिरूपणं प्रथमपादार्थः । श्रुतिश्च अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वयोः अन्यतरस्य प्राधान्येन वाचकश्शब्दः । स च द्वितीयातृतीयादिविभक्तिरूप० । न तु कृदन्तो निष्ठातृजादिः । तस्य स्वपद एवान्योपसर्जनीभूतकारकत्ववाचित्वेन प्राधान्येन तदवाचकत्वात् । अत एव तादृशस्थले षष्ठ्यादौ च भाक्त एव श्रुतित्वव्यवहारः । एवं समानपदश्रुत्यादिष्वपि द्रष्टव्यम् । तत्र द्वितीया व्रीह्यादीनां उद्देश्यतापरा सती प्रोक्षणादेरङ्गत्वे हेतुः ।

यद्यपि च नोद्देश्यत्वं द्वितीयार्थः । तस्याः साध्यत्वमात्रा-

---

१ पू. मी. १–१–७.    २ पू. मी. १–४–२०.

भिधायित्वात्। तथापि घटमानयेत्यादौ चैत्रघटे लक्षणां विनैवानयनान्वयवत् साध्यत्वमात्राभिधानेऽपि तद्विशेषस्य ईप्सितत्वस्य लक्षणां विनैव बोधोपपत्तिः।

वस्तुतस्तु एतादृशविषये तत्वेन बोधार्थं लक्षणाया आवश्यकत्वात् अन्यथा षष्ठीस्थले तदनापत्तेः द्वितीयास्थलेऽपि भाक्त एव श्रुतित्वव्यवहारः। ईप्सिततमत्वं हि (१)"कर्तुरीप्सिततमं कर्म" इत्यानुशासनिकनिरूढलक्षणागम्यत्वात् शक्यतावच्छेदकावच्छिन्नान्तःपाताच्च शक्यतुल्यमिति भाक्तत्वोपपत्तिः। लक्षणे उद्देश्यपददानं तु ईप्सिततमत्वमेव द्वितीयार्थः इत्येतन्मताभिप्रायेण। एवं च पादार्थोऽपि गौणमुख्यसाधारणश्रुतिप्रमाणविनियोगोपयोगिचिन्तनरूपो द्रष्टव्यः।

( संशयः )

तदिह दर्शपूर्णमासप्रकरणे व्रीहिसम्बन्धित्वेन श्रुतानां अवघातप्रोक्षणादीनां आज्यसम्बन्धित्वेन च उत्पवनादीनां, सान्नाय्यसम्बन्धित्वेन च दोहादीनां किं सर्वाङ्गत्वम्? किं वा व्रीहित्वादिसमानाधिकरणसाधनतावच्छिन्नाङ्गत्वमिति विचारः।

( सङ्गतिः )

अङ्गितावच्छेदकनिरूपणाच्च नाप्रतिज्ञातार्थकत्वम्। पादाध्यायसङ्गतिस्तु स्पष्टा। लक्ष्यलक्षणाभ्यामङ्गत्वे निरूपिते तस्याङ्गिनिरूपणाधीननिरूपणीयत्वात् अङ्गित्वस्य चावच्छेदकानिरूपणं विना निरूपणाशक्तेः तन्निरूपणस्यानन्तरसङ्गतिरपि।

( सिद्धान्तः )

तत्रावहन्तीत्येतावन्मात्रश्रवणेऽपि कैमर्थ्यापेक्षायां दृष्टार्थत्वलाभाय वैतुष्यादिरूपार्थसंपादकत्वावगमात् नाज्यादिष्व-

---

१ पा. सू. १-४-४९.

वघातप्रसङ्गः । किमुत यदा व्रीहिरूपार्थसम्बन्धेनैव श्रवणं, कः प्रसङ्ग अन्याङ्गत्व इति सिद्धान्तेनोपक्रमः ॥

## सू—विहितस्तु सर्वधर्मस्स्यात् संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ ३-१-८ ॥ (पू)

( पूर्वपक्षः )

न दृष्टार्थत्वानुरोधेन धर्मव्यवस्था; प्रोक्षणावेक्षणादिषु अव्यापकत्वात्, प्रकृतौ प्रयोजनकल्पितस्य विध्यनुसारवृत्तित्वेन विधेरविशेषतः प्रवृत्तौ सङ्कोचकत्वानुपपत्तेश्च । न हि विधिश्रुतिः व्रीह्यादिविषयस्तवेष्टः; यवादिष्वनापत्तेः, व्रीह्यादिविषयत्वे आनर्थक्यापत्तेश्च । न हि व्रीहिस्वरूपं तत्कार्यं वा पुरोडाशनिष्पत्तिः,यागः अवघातं तन्नियमं तज्जन्यादृष्टं विना न जायते ।

न च फलजनकतासिद्धवैजात्यावच्छिन्नयागोद्देशेन विधानात् संस्काराणामपि तदवच्छिन्नसाधनोद्देशेनैव विधानावगतेः विजातीययागत्वावच्छिन्नस्य च द्रव्यतत्संस्कारादिमन्तरेण उपपत्तौ प्रमाणाभावात् न तत्स्वरूपे आनर्थक्यमिति वाच्यम् । विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात् , तदवच्छिन्नं प्रति च द्रव्यत्वाद्यवच्छिन्नस्य लोकत एव कारणत्वावगतेः सामग्रीवशेन व्रीह्यादिद्रव्यं विनापि द्रव्यान्तरेण विजातीययागोत्पत्तौ बाधकाभावेनानर्थक्यस्य तदवस्थत्वात् ।

अनयैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वं द्रव्यादिविधीनां उपपादनीयम् । अतो द्रव्यतत्संस्कारादिविषयास्सर्वे अपूर्वसाधनीभूतविषया एव । तथा च विशेषणीभूताऽपूर्वं प्रत्यपि अर्थात् जनकत्वावगमात् तस्य च श्रुतद्रव्यतत्संस्कारा-

द्यभावे उत्पत्तौ प्रमाणाभावात् नानर्थक्यापत्तिः । अतश्च नवमाद्यन्यायेन आनर्थक्यापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् तस्य च मदेयघटितत्वेन अपूर्वसाधनत्वरूपस्य उद्देश्यतावच्छेदकस्य प्रकृतेषु यवेष्विव आज्यादिष्वप्यविशेषात् दृष्टविधया अदृष्टविधया वा सर्वशेषत्वम् ।

न चापूर्वसाधनत्वलक्षणायामपि श्रुतव्रीहित्वादेः सागे प्रमाणाभावात् तस्य च शक्त्युपस्थापितस्य युगपद्वृत्तिद्वयविरोधापत्तेः उद्देश्यतावच्छेदकघटकत्वायोगेऽपि विशिष्टलक्षणया तत्त्वोपपत्तेरपूर्वसाधनीभूतव्रीहित्वादिरूपस्य तस्य आज्यादिष्वभावात् कथं सर्वशेषत्वमिति वाच्यम् । एवमपि यवेष्वप्रसङ्गस्य तदवस्थत्वात् । गङ्गात्वस्येव स्वव्यापारकापूर्वसाधनत्वलक्षणोपायत्वेन उपक्षीणस्य व्रीहित्वादेः लक्ष्यतावच्छेदकप्रवेशे गौरवपात्तेश्च।

नचैवमपि व्रीहिपदेन प्रत्यासत्तेराग्नेयापूर्वसाधनत्वस्यैव उक्तसम्बन्धेन लक्षणात् आज्यादिष्वप्राप्तिरिति वाच्यम् । प्रत्यासत्तेरग्नीषोमीयैन्द्राग्नयोरविशिष्टत्वेन तदपूर्वसाधनत्वस्यापि लक्षणीयत्वात् त्रितयवृत्त्येकानुगतधर्माभावेनावान्तरापूर्वविशेषसाधनत्वलक्षणानुपपत्तेः ।

अतो वरं फलजनकीभूतापूर्वसाधनत्वमेवैकं सर्वानुगतं लक्षयित्वा युक्तं सर्वधर्मत्वमाश्रयितुम् । प्रधानत्वाद्वारादुपकारकेषु क्लृप्तप्रयोजकताशक्तेः परमापूर्वस्यैव उद्देश्यतावच्छेदकघटकत्वं युक्तम, नावान्तरापूर्वाणाम् ।

न चात्र दीक्षणीयावाङ्गिनयमन्यायः । दीक्षणीया हि सन्निपत्योपकारकत्वेऽपि न ज्योतिष्टोमोत्पत्त्यपूर्वजनिका । तथात्वे ज्योतिष्टोमतुल्यत्वेन प्राधान्यापत्तेः । किन्तु स्वापूर्वद्वारेण उत्पत्त्यपूर्वसम्पादनानुकूलज्योतिष्टोमगतयोग्यतासम्पादनार्थेत्युक्तम् । अतश्च

दीक्षणीयापदे स्वापूर्वादिद्वारा ज्योतिष्टोमोत्पत्त्यपूर्वप्रयोजकत्वस्य कारणकारणत्वापरपर्यायस्य लक्षणायां लक्षितलक्षणाद्यापत्तेः सा नाश्रिता। प्रकृते तु यागस्य स्वर्गसाधनत्वान्यथानुपपत्त्या द्वारत्वेन कल्पितमुत्पत्त्यपूर्वं प्रतीव परमापूर्वं प्रत्यपि साधनत्वाविशेषात् उत्पत्त्यपूर्वमतन्त्रीकृत्य प्रधानत्वेन फलापूर्वसाधनत्वलक्षणायां बाधकाभावात्।

न चैवमपि एतदधिकरणसिद्धान्तरीत्या अवान्तरापूर्वप्रयुक्तत्वे सिद्धे तदधिकरणपूर्वपक्षानुत्थानमिति वाच्यम्। आग्नेयोत्पत्त्यपूर्वस्य प्रधानजन्यत्वेन प्रयोजकत्वशक्तियुक्तत्वेऽपि दीक्षणीयोत्पत्त्यपूर्वस्याङ्गजन्यत्वेन तदभावशङ्कोपपत्तेः। अतः प्रकृते प्रदेयघटकत्वसम्बन्धेन परमापूर्वसाधनत्वस्यैव इह लक्ष्यतावच्छेदकस्य उद्देश्यतावच्छेदकत्वात् सर्वशेषत्वोपपत्तिः।

न च एकापूर्वसाधनत्वेऽपि प्रतिनियतनिर्देशात् (१)सम्मीलनादिधर्मविधौ बृहद्रथन्तरादित्वविवक्षावत् व्रीह्यादिविवक्षोपपत्तिः। व्रीह्यादिविवक्षायां विकृतौ नीवारेष्ववघातप्राप्त्यनापत्तेः। सम्मीलनादिविधिष्वपि न बृहद्रथन्तरत्वादिविवक्षा। तथात्वे कण्वरथन्तरे तत्प्राप्त्यनापत्तेः। किन्तु तत्तत्पृष्ठस्तोत्रारम्भकीभूतगुणाभिधानजन्यावान्तरापूर्वसाधनत्वाविवक्षैवेत्युक्तं (२)मन्त्राधिकरणे। अतस्सर्वशेषत्वमेव युक्तम्।

---

१ बृहद्रथन्तरयोः साम्नोरेकपृष्ठस्तोत्रापूर्वसाधनत्वेन विहितयोरपि 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' 'बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्' इत्यादिवाक्येषु बृहद्रथन्तरयोः प्रतिनियतनिर्देशात् धर्माणां साङ्कर्यनिवृत्त्यर्थं रथन्तरत्वादेर्विवक्षामङ्गीकृत्य सम्मीलनादेः रथन्तर एव प्राप्तिः, समुद्रध्यानादेः बृहत्येव प्राप्तिः, इत्यङ्गीकर्तव्यम्, तद्वदत्रापि भवत्वित्याशङ्कार्थः।

२ पू. मी. १-२-४.

## सू—अर्थलोपादकर्म स्यात् ॥ ३-१-९ ॥

दृष्टार्थलोपात् अवघातादीनां आज्यादिषु अकर्म स्यात्। अन्यथा एकस्यैव अवघातविधेः व्रीह्याद्यंशे नियमविधित्वं अन्यत्रापूर्वविधित्वमिति वैरूप्यापत्तेः।

अथाविशेषप्रवृत्तविध्यनुरोधेन वैरूप्याङ्गीकरणं, सर्वत्रैव वादृष्टार्थत्वाङ्गीकरणं, तत्राह—

## सू—फलं तु सह चेष्टया शब्दार्थोऽभावात् विप्रयोगे स्यात् ॥ ३-१-१० ॥

यद्यपि च विधिरविशेषप्रवृत्तस्स्यात्। तथापि यत्रैव एकत्र दृष्टफललाभः तत्रैव क्षीणार्थापत्तिकस्सन् नान्यत्रादृष्टं कल्पयेत्। परं तदनुरोधेन संकोचमपि सहेत। अयं पुनर्विशेषप्रवृत्त एव। व्रीह्यादिपदेन प्रत्यासत्त्या आग्नेयाद्यपूर्वसाधनत्वस्यैव लक्षितत्वात्।

यद्यपि परमापूर्वं प्रत्यपि अस्त्येवाग्नेयस्य कारणता। तथापि न निरपेक्षस्य कारणता साक्षात्, अपि तूत्पत्त्यपूर्वद्वारा अग्नीषोमीयादिसापेक्षस्य। अतश्चोत्पत्त्यपूर्वस्य साक्षादन्यनैरपेक्ष्येण चाग्नेयजन्यत्वादतिक्रमकारणाभावेन तत्साधनत्वमेव लक्ष्यते। न च साक्षात्फलसाधनत्वाभावादतिक्रमः। परम्परया तत्साधनत्वेऽपि अनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेः।

न हि व्रीहितण्डुलपिष्टपुरोडाशयागेष्विव तस्मिन्नानर्थक्यम्। तस्य तद्विना जनने प्रमाणाभावात्। अत एव यत्र सप्तदशारत्नित्वादिव्यतिरेकेणापि प्रकृतौ यूपसिद्धिः, प्रथ्मपूर्वसिद्धिर्नावधारिता तत्र नदतिक्रमेणापि परम्परया वाजपेयापूर्वप्रयोजकत्वलक्षणेष्टैव। प्रकृते तु तदभावात् प्रत्यासत्त्या शक्यसम्बन्धानु-

रोधेन व्रीहित्वसमानाधिकरणाग्नेयाद्युत्पत्त्यपूर्वसाधनसम्बन्धिप्रदेयघटकतण्डुलनिष्पत्तिरूपव्यापारकसाधनताश्रयत्वमेव लाघवात् लक्ष्यते । न तु परमापूर्वस्य प्रयोजकत्वम् । अत्र च सर्वत्र तत्तद्व्यापारकसाधनतामात्रमेव लाघवात् विवक्ष्यते । न तु तदवच्छेदकमपि यागत्वपुरोडाशत्वव्रीहित्वादि । तावतापि व्रीहित्वसमानाधिकरणधर्मलाभेनानर्थक्यपरिहारोपपत्तेः । एवं च स्रुवादिष्वपि ऽरूव्यापारकसाधनत्वाभावात् तद्व्यावृत्तिः । चरुनीवारादिषु च वैकृतेषु पुरोडाशत्वव्रीहित्वाद्यभावेऽपि तत्संपत्तिरविकला भवति । यस्तु प्रकृतौ यवेपूक्तविधसाधनताश्रयत्वादातिप्रसङ्गस्स इष्टएव ।

ननु न यवेषु धर्मप्राप्तिस्सम्भवति । व्रीहिनिष्ठसाधनतायाः तेष्वसम्भवात् । न हि तयोरेका साधनता । साधनतावच्छेदकभेदेन तद्भेदस्यावश्यकत्वात् । "व्रीहिभिर्यजेत," "यवैर्यजेत" त्यादौ एकप्रकृत्यर्थावरुद्धकारणतायां प्रकृत्यर्थान्तरस्य निवेशायोगेन शब्दान्तराद्गुणाद्वा भेदोपपत्तेश्च । यत्र हि प्राकृतद्रव्यबाधेन विकृतौ द्रव्यान्तरविधिः तत्रास्तु नाम प्रकृतकारणत्वानुवादेन प्रकृत्यर्थमात्रविधानात् करणतैक्यम् ।

न च तत्राप्येकप्रसरताभङ्गापत्तेः करणताभेदावश्यम्भावः । करणत्वस्य अनुवादत्वेऽपि प्रकृत्यर्थविधेयताघटकत्वेन भावनावदुद्देश्यत्वात् । अतश्च यथैव 'दध्ना जुहोती' त्यादौ त्रापि भावना दाधिनिष्ठविधेयताघटकत्वात् दधिविशिष्टा विधीयमाना नोद्देश्यतां प्रतिपद्यते । न वा भिद्यते । तथैव करणत्वमपि । "वषट्कर्त्तुः प्रथमभक्ष" इत्यादौ भक्षस्तु भावनाकारकभिन्नत्वेन पदार्थान्तरगतविधेयताघटकत्वाभावात् स्वयमेवोद्देश्यतां प्रतिपद्यत इति एकप्रसरताभङ्गभिया भिद्यते । आस्तां वा तत्रापि भिन्ना करणता । व्रीहियवादौ मा निर्विवादैव ।

नचैवं समुच्चयापत्तिः । द्वयोः करणतयोरेकव्यापारकत्वेन विकल्पोपपत्तेः। सा च व्रीह्यादिनिष्ठकरणता अपूर्वसाधनीभूताग्नेयादीनि तत्वेन याजिपदेन उद्दिश्य विधीयते ।

यद्यपि च नेदमुद्देश्यतावच्छेदकम् । अतिप्रसक्तत्वात् व्रीहिनिष्ठकरणतानिरूपितकार्यतावच्छेदकं भवितुमीष्टे । तथापि अपूर्वसाधनीभूताग्नेयत्वादिसामानाधिकरण्येन व्रीह्यादिकरणत्वेऽभिहिते पश्चाद्व्यभिचारपरिहारार्थं कार्यकारणभावकल्पनायां "यजेत स्वर्गकाम" इतिवत् आग्नेयत्वादिव्याप्यस्य वैजात्यस्य कार्यतावच्छेदकत्वं कल्प्यते इति न विरोधः ।

नन्वेवं तत्तद्व्याप्यधर्मावच्छिन्नस्यैवापूर्वं प्रति कारणत्वे व्यभिचारपरिहारार्थं अपूर्वेऽपि वैजात्यापत्तिः । इष्टापत्तौ तद्वदेव स्वर्गेऽपि वैजात्यापत्तिः । तत्रापि इष्टापत्तौ अन्यङ्गान्तरानुरोधेन आग्नेयत्वादिरूपव्यापकधर्माणामपि अपूर्वस्वर्गादिनिरूपितकार्यकारणभावकल्पनावश्यम्भावेन व्याप्यव्यापकधर्मभेदेनानन्तकार्यकारणभावकल्पनापत्तिरिति चेत्—

व्रीहिनिष्ठकारणतानिरूपितकार्यतायामेव व्याप्यधर्मस्य अवच्छेदकत्वकल्पनात् । न तु तस्याप्यपूर्वस्वर्गादीन् प्रति कारणतावच्छेदकत्वमपि । आग्नेयत्वादिरूपव्यापकधर्मावच्छिन्नस्यैव स्वर्गत्वापूर्वत्वादिरूपव्यापकधर्मावच्छिन्नं प्रत्येव कारणत्वोपपत्तेः ।

नचैवं व्रीहियवव्यतिरेकेण गोधूमादिप्रकृतिकपुरोडाशादिघटितसामग्रीवशेनाग्नेयत्वादिरूपव्यापकधर्मावच्छिन्नोत्पत्तौ बाधकाभावेन वैगुण्यानापत्तिरिति वाच्यम् । व्रीह्यादिनियमविध्यनुरोधेन व्रीहियवेतरगोधूमादिप्रकृतिकत्वस्य व्यापकधर्मावच्छिन्नाग्नेयोत्पत्तौ तादृशापूर्वोत्पत्तौ वा प्रतिबन्धकत्वकल्पनात् । व्रीहिय-

वयोस्तु अपूर्वसाधनतावच्छेदकीभूताग्नेयत्वादिव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वादेवापूर्वोपयोग इति न किंचिदनुपपन्नम् ।

तस्मात् सिद्धो व्रीहियवादौ कारणताभेदः ।

संस्कारवाक्येषु तु तण्डुलनिष्पत्तिव्यापारकसाधनताविशेषस्यैव व्रीहिगतस्य लक्ष्यत्वात् विकृतौ नीवारकारणतायाः प्राकृतकार्यापत्त्या धर्मलाभेऽपि प्रकृतौ न यवेषु धर्मप्राप्तिस्सम्भवतीति चेत्—

न । तत्तद्व्यापारकसाधनतामात्रविवक्षणेन साधनतावच्छेदकाविवक्षावत् साधनविशेषस्यापि लाघवेनाविवक्षणात् । तद्विवक्षायामपि व्रीहित्वसमानाधिकरणधर्मलाभेनानर्थक्यपरिहारोपपत्तेस्तुल्यत्वात् । अत एव तस्य शक्यसम्बन्धविधया प्रवेशोऽपि लक्ष्यतावच्छेदके उद्देश्यतावच्छेदके वा अप्रवेशः, गौरवात् । अतश्च युक्ता यवेष्वनुवृत्तिः स्रुवादिभ्यश्च व्यावृत्तिर्धर्माणाम् ।

नन्वेवमपि व्रीहीणामस्त्यपूर्वं प्रति अनेककारणत्वघटितः परम्परासम्बन्धः । अस्ति च कारणतत्कारणाद्यनुगतः कुलालपित्रादिष्विव अन्यथासिद्धिचतुष्टयराहित्यविशिष्टनियतपूर्ववृत्तिताऽपरपर्यायः प्रयोजकत्वाख्यः । स च साक्षात् कारणत्वादपि अन्यथासिद्धिपञ्चकराहित्यघटितात्यत्र लघुः तत्र परम्परासम्बन्धात् लघुरित्यविवादमेव ।

अतश्च यदि व्रीहित्वसमानाधिकरणधर्ममात्रविवक्षा ततः प्रयोज्यत्वशक्यसम्बन्धेन उपस्थितापूर्वप्रयोजकत्वमात्र एव विवक्षापत्तेः स्रुवपुरोडाशाज्यादिव्यावृत्त्यसिद्धिः ।

अथ तु अतिप्रसङ्गभिया परम्परासम्बन्धोऽपि विवक्ष्येत । ततः व्रीहिमात्रनिष्ठसाधनत्वविशेषविवक्षापत्तेः यवानुवृत्त्यसिद्धिः इति

नचैवं समुच्चयापत्तिः । द्वयोः करणतयोरेकव्यापारकत्वेन विकल्पोपपत्तेः। सा च व्रीह्यादिनिष्ठकरणता अपूर्वसाधनीभूताग्नेयादीनि तत्वेन यजिपदेन उद्दिश्य विधीयते ।

यद्यपि च नेदमुद्देश्यतावच्छेदकम् । अतिप्रसक्तत्वात् व्रीहिनिष्ठकरणतानिरूपितकार्यतावच्छेदकं भवितुमीष्टे । तथापि अपूर्वसाधनीभूताग्नेयत्वादिसामानाधिकरण्येन व्रीह्यादिकरणत्वेऽभिहिते पश्चाद्व्यभिचारपरिहारार्थं कार्यकारणभावकल्पनायां "यजेत स्वर्गकाम" इतिवत् आग्नेयत्वादिव्याप्यस्य वैजात्यस्य कार्यतावच्छेदकत्वं कल्प्यते इति न विरोधः ।

नन्वेवं तत्तद्व्याप्यधर्मावच्छिन्नस्यैवापूर्वं प्रति कारणत्वे व्यभिचारपरिहारार्थं अपूर्वेऽपि वैजात्यापत्तिः । इष्टापत्तौ तद्वदेव स्वर्गेऽपि वैजात्यापत्तिः । तत्रापि इष्टापत्तौ अन्वयव्यतिरेकानुरोधेन आग्नेयत्वादिरूपव्यापकधर्माणामपि अपूर्वस्वर्गादिनिरूपितकार्यकारणभावकल्पनावश्यम्भावेन व्याप्यव्यापकधर्मभेदेनानन्तकार्यकारणभावकल्पनापत्तिरिति चेत्—

व्रीहिनिष्ठकारणतानिरूपितकार्यतायामेव व्याप्यधर्मस्य अवच्छेदकत्वकल्पनात् । न तु तस्याप्यपूर्वस्वर्गादीन् प्रति कारणतावच्छेदकत्वमपि । आग्नेयत्वादिरूपव्यापकधर्मावच्छिन्नस्यैव स्वर्गत्वापूर्वत्वादिरूपव्यापकधर्मावच्छिन्नं प्रत्येव कारणत्वोपपत्तेः ।

नचैवं व्रीहियवव्यतिरेकेण गोधूमादिप्रकृतिकपुरोडाशादिघटितसामग्रीवशेनाग्नेयत्वादिरूपव्यापकधर्मावच्छिन्नोत्पत्तौ बाधकाभावेन वैगुण्यानापत्तिरिति वाच्यम् । व्रीह्यादिनियमविध्यनुरोधेन व्रीहियवेतरगोधूमादिप्रकृतिकत्वस्य व्यापकधर्मावच्छिन्नाग्नेयोत्पत्तौ तादृशापूर्वोत्पत्तौ वा प्रतिबन्धकत्वकल्पनात् । व्रीहिय-

वयोस्तु अपूर्वसाधनतावच्छेदकीभूताग्नेयत्वादिव्यापकधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वादेवापूर्वोपयोग इति न किंचिदनुपपन्नम् ।

तस्मात् सिद्धो व्रीहियवादौ कारणताभेदः ।

संस्कारवाक्येषु तु तण्डुलनिष्पत्तिव्यापारकसाधनताविशेषस्यैव व्रीहिगतस्य लक्ष्यत्वात् विकृतौ नीवारकारणतायाः प्राकृतकार्यापत्त्या धर्मलाभेऽपि प्रकृतौ न यवेषु धर्मप्राप्तिस्सम्भवतीति चेत्—

न । तत्तद्व्यापारकसाधनतामात्रविवक्षणेन साधनतावच्छेदकाविवक्षावत् साधनविशेषस्यापि लाघवेनाविवक्षणात् । तद्विवक्षायामपि व्रीहित्वसमानाधिकरणधर्मलाभेनानर्थक्यपरिहारोपपत्तेस्तुल्यत्वात् । अत एव तस्य शक्यसम्बन्धाविधया प्रवेशेऽपि लक्ष्यतावच्छेदके उद्देश्यतावच्छेदके वा अप्रवेशः, गौरवात् । अतश्च युक्ता यवेष्वनुवृत्तिः स्रुवादिभ्यश्च व्यावृत्तिर्धर्माणाम् ।

नन्वेवमपि व्रीहीणामस्त्यपूर्वं प्रति अनेककारणत्वघटितः परम्परासम्बन्धः । अस्ति च कारणतत्कारणाद्यनुगतः कुलालपित्रादिष्विव अन्यथासिद्धिचतुष्टयराहित्यविशिष्टनियतपूर्ववृत्तिताऽपरपर्यायः प्रयोजकत्वाख्यः । स च साक्षात् कारणत्वादपि अन्यथासिद्धिपञ्चकराहित्यघटिताद्यत्र लघुः तत्र परम्परासम्बन्धात् लघुरित्यविवादमेव ।

अतश्च यदि व्रीहित्वसमानाधिकरणधर्ममात्रविवक्षा ततः प्रयोज्यत्वशक्यसम्बन्धेन उपस्थितापूर्वप्रयोजकत्वमात्र एव विवक्षापत्तेः स्रुवपुरोडाशाज्यादिव्यावृत्त्यसिद्धिः ।

अथ तु अतिप्रसङ्गभिया परम्परासम्बन्धोऽपि विवक्ष्येत। ततः व्रीहिमात्रनिष्ठसाधनत्वविशेषविवक्षापत्तेः यवानुवृत्त्यसिद्धिः इति

चेत्, न, प्रयोजकत्वसम्बन्धस्य लघुभूतत्वेऽपि अपूर्ववृत्तिसत्तासमवायाश्रयत्वत्वच्छाब्दबोधे नियमेनोपस्थित्यभावात् विवक्षानुपपत्तेः ।

अतश्च गुरुभूतोऽपि परम्परासम्बन्ध एव तत्तद्वाक्यैर्नियमेनोपस्थितत्वात् विवक्षित इति न किञ्चिदनुपपन्नम् । अत एवापूर्वनिष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितकारणतासामान्यमेव तत्तद्व्यापारकं व्रीह्यादिपदैः लक्ष्यते । अत्र च यागनिष्ठत्वं परिचायकमात्रम् । न तु तेन रूपेण लक्षणा । गौरवापत्तेः । व्यापारश्च स्वप्रदेयप्रकृतिभूतास्तण्डुलाः । स्वपदं यागपरं, न तु पिष्टमपि । तस्य प्रदेयपुरोडाशप्रकृतित्वाभावात् । यथैवह्यामिक्षा न पयसो द्रव्यान्तरं, किन्तु घनीभावापन्नं पय एव । यथा वा सक्तव एव सक्तुपिण्डः, न त्वर्थान्तरम् । जलसंयोगादिकं च पिण्डभावे निमित्तकारणमात्रम् । तथैव जलाग्न्यादिसंयोगस्य पिण्डभावं प्रति निमित्तकारणत्वेऽपि न पिष्टादर्थान्तरं पुरोडाशः । किन्तु तस्यैव पिण्डावस्थामात्रम् । अतस्तण्डुलप्रकृतिक एवेति न पिष्टस्य पृथग्व्यापारमध्ये प्रवेशः । अत एव चरौ पुरोडाशस्थानापन्ने पिष्टप्रकृतिकत्वाभावेऽपि तण्डुलप्रकृतिकत्वादेव धर्मप्राप्त्यविघातः ।

नचैवं पिष्टस्यैव यत्र प्रदेयता, तत्रापि धर्मप्राप्त्यापत्तिरिति वाच्यम् । तत्र तण्डुलप्रकृतिकत्वे प्रमाणाभावेन व्रीहितद्धर्माणां (१)प्राप्त्यभावात् ।

तथा हि—सर्वत्र, "अनो ददाति, वासो ददाति" इति वत् सिद्धस्यैव च पुरोडाशादेः ग्रहणे प्रसक्ते प्रयोगान्तःपातित्वप्रणाविध्यन्यथानुपपत्त्या प्रयोगमध्ये यत्र सम्पादनावश्यकता तत्रै-

१ अप्रसङ्गात् ।

व प्रकृतिद्रव्यस्यैव उपादाने तन्नियमविधिः, तद्धर्मप्राप्तिश्च । यत्र तु पिष्टतण्डुलादौ प्रदेयत्वेन श्रपणप्राप्तिः । पुरोडाशादिपदवाच्यपक्वपिण्डादिघटकपाकप्रयोजनकस्य तदभावे पेषणवत् लोपौचित्यात् तत्र अनोऽश्मादि न्यायेन सिद्धस्यैव पिष्टस्य उपादानात् । तण्डुलेष्विव पिष्टेऽपि प्रयोगमध्ये न तण्डुलोपादानम् । न वा व्रीहिप्रकृतिकत्वनियमः, न वा तद्धर्मप्राप्तिरिति नवमे वक्ष्यते ।

तत्सिद्धं स्वप्रदेयप्रकृतिभूततण्डुलव्यापारककारणतासामान्यमेव संस्कारवाक्यगतव्रीह्यादिपदैर्लक्ष्यते । "व्रीहिभिर्यजेते"ति वाक्ये च स्वप्रदेयप्रकृतिभूततण्डुलानामेव व्यापारत्वेन विवक्षितत्वात् तादृशव्यापारद्वारा अपूर्वसाधनीभूतयागोद्देशेन व्रीह्यादिकरणता विधीयत इति । वस्तुतस्तु तण्डुलेषु प्रदेयप्रकृतित्ववत् अस्ति प्रदेयघटकपाकप्रयोजनकश्रपणविध्याक्षिप्तोपादानकत्वमपि । तस्य धर्मस्य प्रदेयप्रकृतित्वादिरूपधर्मापेक्षया प्रथमोपस्थितत्वम् । श्रपणविध्यभावे सिद्धस्यैव पुरोडाशस्य उपादानेन तण्डुलप्रकृतिकत्वस्य नियमेनानुपस्थितेः । अतश्च व्रीहिभिर्यजेतेत्यादौ स्वप्रदेयघटकपाकप्रयोजनकश्रपणविध्याक्षिप्तोपादानकतण्डुलव्यापारकैव व्रीह्यादिकरणता विधीयते । संस्कारवाक्येषु च उक्तविधव्यापारककारणतासामान्यमेव लक्ष्यते ।

अत एव धानानामुक्तविधया तण्डुलभिन्नत्वेऽपि उक्तविधरूपसत्त्वात् तत्प्रकृतिभूतयवादिष्ववघातप्रोक्षणादिप्राप्त्यविघातः ।

यद्यपि च तण्डुलानामिव पिष्टस्यापि प्रकृतौ श्रपणविध्याक्षिप्तोपादानकत्वाविशेषात् व्यापारकोटिप्रवेशापत्तेः धानासु च तदभावात् नावघातप्राप्ति र्भवेत् । तथापि व्रीह्यादिनियमविधौ अव्यवधानेन तण्डुलानामेव द्वारत्वात् तेष्वपि च निरुक्तोपादानकत्वस्य सत्त्वात् सत्यपि पिष्टस्याऽऽन्तरालिकत्वे

तस्य द्वारत्वप्रवेशे गौरवापत्तेः। न च स्वरूपेण तण्डुलानामेव तद्द्वारत्वावगतेः धानासु अवघातादिप्राप्तिर्नासुलभा। एवं करम्भपदवाच्यसक्तुष्वपि ।

परिवापपदवाच्यलाजेषु तु व्रीह्यवस्थायां श्रपणद्वाराभावेनैव न व्रीहिणामातिदेशिकत्वम्। न वा तत्र धर्मप्राप्तिः। लाजत्वान्यथानुपपत्त्यैव तु व्रीहिग्रहणम्। मौद्गे च चरौ मुद्गानां तण्डुलस्थानपन्नत्वेन व्रीहिस्थानापन्नत्वाभावात् नावघातप्रोक्षणादि। कृष्णले चैवम्। वितुषीभावरूपप्रयोजनाभावात् नावघात इत्यभिधानन्तु व्रीहिस्थानापन्नत्वंकृत्वाचिन्तया युक्त्यन्तरत्वसूचनार्थमिति द्रष्टव्यम्।

नचैवं तण्डुलव्यापारककारणत्वस्य कारणतावच्छेदकीभूतव्रीहित्वसमव्याप्तस्य प्रतिव्रीहि भिन्नत्वात् (१.)हिरण्यशकलाधिकरणपूर्वपक्षन्यायेन प्रतिव्रीहि प्रोक्षणापत्तिरिति वाच्यम्। न्यायतस्तथा प्राप्तावपि अग्नये वो जुष्टं प्रोक्षामीति तन्मन्त्रे बहुवचनश्रवणेन सकृत् प्रोक्षणप्रतीतेः। अत एव तद्वाक्यस्थव्रीहिपदे कारणताकूटलक्षणेति सर्वमनवद्यम्।

यत्तु व्रीहिपदेन आग्नेयाद्युत्पत्त्यपूर्वत्रयसम्बन्धित्वलक्षणायां उद्देश्यतावच्छेदकाननुगमः इत्युक्तम्। तदननुगमेऽपि "सर्वेभ्यो दर्शपूर्णमासावि" त्यादिवत् व्रीहित्वरूपैकोपलक्षणसत्त्वेन उद्देश्यानेकत्वनिमित्तकवाक्यभेदाभावात् अकिञ्चित्करम्।

तस्मात् न सर्वधर्मत्वम् । प्रयोजनं स्पष्टम्।

सूत्रन्तु यत्र दृष्टं फलं चेष्टमात्रेण दृश्यते तत्रैवावघातादिविधिः प्रवर्तते। दृष्टफलविप्रयोगे हि सर्वौषधावघातादौ तदभावप्रमाणकादृष्टकल्पना स्यात्। न हि तदा तां विना शब्दार्थोऽनुष्ठातुं योग्य इति व्याख्येयम्।

इति चतुर्थं तेषामर्थाधिकरणम्।

---

१. ९-१-८

अथ पञ्चमं स्फ्याधिकरणम् । (५)

## सू–द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत॥३-१-११॥

( विषयः )

दर्शपूर्णमासयोः(१)"स्फ्यश्च कपालानि च"इति दश द्रव्याण्यनुक्रम्य(२) "एतानि वै दश यज्ञायुधानि" इति श्रुतम्। "स्फ्येनोद्धन्ती" ति दशानामपि विशिष्य विनियोगा अपि श्रुताः ।

( संशयः )

तत्र किं स्फ्यादीनां अपूर्वसाधनीभूतसाकाङ्क्षक्यक्रियामात्रे विनियोगः ? अथ वा उद्धननादितत्तद्वाक्यप्रमितक्रियाविशेषजन्यव्यापारकापूर्वसाधनीभूताश्रय इति विचारः ।

( सङ्गतिः )

तृतीयायाः करणत्वरूपकारकवाचित्वेन मुख्यश्रुतित्वात् तदुपयोगिनिरूपणस्य पादाध्यायसङ्गती पूर्ववत्। अनन्तरा सङ्गतिः-पूर्वत्र अतिप्रसक्तलक्षणायां प्रमाणाभावेन व्रीहिमात्रजन्यव्यापारकसाधनत्वलक्षणा युक्ता। प्रकृते तु यज्ञायुधवाक्यस्य तात्पर्यग्राहकस्य सत्वादतिप्रसक्तलक्षणैव युक्ता इति पूर्वपक्षोत्थानात्-द्रष्टव्या ।

( पूर्वपक्षः )

तत्र यद्यपि "स्फ्येनोद्धन्ती" त्यादयः विधय एव, तथापि तृतीयया विनियुक्तस्य स्फ्यादेरुद्धननादिस्वरूपे आनर्थक्यात् उद्धननत्वसमानाधिकरणप्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षशक्यक्रियात्वमेव लक्ष्यते । न तूद्धननादिमात्रजन्यव्यापारकसाधनताश्रयत्वम्। यज्ञायुधवाक्येन यज्ञसाधनतया स्फ्यादीनि विनियुक्तानेन उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धत्वात् साक्षात्प्रधानाङ्गत्वेना-

१. २. तै. सं. १-६-८.

विनियोगात् (१)आनर्थक्यतदङ्गन्यायेन प्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षक्रियामात्रे विनियोजकेन तात्पर्यग्रहणात् ।

अत एव अस्यार्थस्याप्राप्तत्वात् वैशब्दोपबद्धमपि यज्ञायुधवाक्यं कर्तव्यतावाचिपदाध्याहारेण विधिरेव । आवश्यकेनानेनैव वा विवक्षितार्थसिद्धेः, "स्फ्येनोद्धन्ती"त्यादीन्यवयुत्यानुवादा उपलक्षणार्थानि वा इत्यपि वक्तुं शक्यम् ।

वस्तुतस्तु उद्धननादिविधीनां बहूनां अनन्यशेषाणामानर्थक्यापत्तेः विधित्वमेव युक्तम् । यज्ञायुधवाक्यस्य तु(२)"यज्ञायुधानि सम्भरती"ति सम्भरणविध्येकवाक्यतापन्नत्वेन अर्थवादस्यापि उद्धननादिवाक्ये विवक्षितलक्षणायां तात्पर्यग्राहकत्वोपपत्तेः । अतश्च तस्यातिप्रसक्तत्वात् यवानामिव क्रियान्तरणामप्युद्देश्यत्वोपपत्तेः सर्वशेषत्वमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—न तावद्यज्ञायुधवाक्यमेव विधिः । वैशब्दोपबन्धात्, यज्ञोद्देशेन साधनविधाने एकप्रसरताभङ्गापत्तेश्च । आयुधशब्दस्य युद्धसाधनवाचिनः यज्ञसाधनलक्षणायां विधौ लक्षणापत्तेश्च । उद्धननादिवाक्यानां अनन्यशेषाणां प्रत्यक्षविधिकानां चानुवादत्वे वैयर्थ्यापत्तेश्च । नापि सर्वेषामेव विधित्वं, अस्य सम्भरणविध्येकवाक्यतापन्नत्वेन पृथग्विधित्वे प्रमाणाभावात् । अभ्युपेत्यापि विधित्वं उद्धननादिविधिना उपसंहारापत्तेश्च । वाक्यप्रमाणकल्प्यविनियोगविध्यनुरोधेन श्रुतिप्रमाणकक्लृप्तविनियोगविधेरुपलक्षणत्वानुपपत्तेश्च । अतएव न यज्ञायुधवाक्यस्यार्थवादस्य सत एव लक्षणातात्पर्यग्राहकत्वम् । उद्धननमात्रसम्बन्धेन प्राप्तयज्ञसाधनत्वानुवादोपपत्तेः । अतश्च

१. पू. मी. ३-१-९ २. तै. सं. १-६-८

अतिप्रसक्तलक्षणायां प्रमाणाभावात् उद्धननमात्रजन्यव्यापारक-साधनताश्रयत्वलक्षणया उद्धननशेषत्वमेव युक्तम्। प्रयोजनं-सिद्धान्तसूत्रं च स्पष्टम्।

इति पञ्चमं स्फ्याधिकरणम्।

अथ षष्ठमरुणाधिकरणम्। (६)

## सू—अर्थैकत्वे द्रव्यगुणयोरैककर्म्यात् नियमस्स्यात॥ ३–१–१२॥

( विषयः )

ज्योतिष्टोमे (१)"अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इति श्रुतम्। तत्र अरुणाशब्दस्तावत् (२) आकृत्यधिकरणन्या-येन अरुणव्यक्तिनानात्वपक्षे अरुणत्वजातिवचनः। जगतीतल-वर्त्येकारुणव्यक्तिपक्षे तु गुणवचनः। स्वशक्यार्थस्यैव च तृतीयो-पात्ते करणत्वे अन्वयः। न तु तदर्थं गुणद्रव्ययोः द्रव्यमात्र-स्यैव वा लक्षणा। द्वितीयादावेव हि परम्परासम्बन्धस्य वृत्तिनि-यामकत्वाभावात् तद्घटितकर्मत्वादौ जातिगुणयोः साक्षादन्वया-योगेन व्यक्तिलक्षणा समाश्रीयत इत्युक्तमाकृत्यधिकरणे॥

ननु—नारुणादिशब्दाः जातिगुणवचनाः। अपि तु त-द्विशिष्टद्रव्यवचनाः। विनापि मतुप्प्रत्ययं शुक्लो देवदत्त इति द्रव्यसामानाधिकरण्यदर्शनात्, व्यतिरेकेण रूपादिशब्दवत्। न च "(३)गुणवचनेभ्यो मतुपो लुगिष्ट" इति स्मरणात

१. तै. सं. ६–१–६. २ पू. मी. १ ३-१०. ३. का. वा. १–४–१०.

लुप्तमतुप एव द्रव्यपरत्वमिति वाच्यम् । लोपमजानतां बोधानापत्तेः । अतः प्रातिपदिकस्यैव द्रव्यशक्तिदृढीकरणार्थं लोपानुशासनम् । गुणवचनशब्दस्तु विशेषणत्वेन गुणाभिधायकः । न तु द्रव्यवाचित्वविरोधी ।

किञ्च भावप्रत्ययस्य प्रातिपदिकार्थवृत्तिधर्मवाचित्वात् यथैव रूपत्वमित्यत्र न रूपवद्वृत्तिधर्मप्रतीतिः, तथैव गोरारुण्यमरुणत्वमित्यादौ द्रव्यवृत्तिधर्मप्रतीत्यनापत्तिः । अस्मन्मते तु घटस्यारुण इति प्रतीत्यनुसारात् शुद्धगुणवाचित्वस्यापि अङ्गीकारेण अरुणत्वमिति पदात् क्वचिद्रूपवृत्तिधर्मप्रतीतावपि न क्षतिः । अत एव गुणवाचित्वे पुँल्लिङ्गता द्रव्यवचनत्वे तु आश्रयलिङ्गवचनतेति चेत्—

अत्र मूलानुयायिनः—आकृत्यधिकरणन्यायेन गुणमात्रवाचित्वसिद्धौ क्वचिद्द्रव्यप्रतीतिर्निरूढलक्षणया । तामादायैव च मतुब्लोपाद्यनुशासनानि । न चैतावता रूपादिपदेष्वपि तदापत्तिः । तत्र प्रयोगाभावेन साम्प्रतिकलक्षणाया अप्यनुपपत्तौ निरूढलक्षणायाः सुतरामनुपपत्तेः ।

नन्वेतद्युक्तम् ; तथात्वे अरुणापदेऽपि विशेष्यतया द्रव्यलक्षणापत्तेः । गुणस्य च शक्त्या विशिष्टलक्षणयैव वा उपस्थितस्य द्रव्य एवान्वयात् विशिष्टस्य च द्रव्यस्य मूर्ततया एकहायन्यादिवत् पार्ष्ठिकान्वयलभ्याभेदसम्बन्धेन क्रय एव निवेशोपपत्तेः ।

यदत्र पूर्वपक्षे गुणस्य अमूर्तत्वेन क्रयसाधनत्वानुपपत्तेः प्राकरणिकद्रव्यपरिच्छेदं प्रति वाक्यं भित्वा करणत्वं, सिद्धान्ते च पार्ष्ठिकान्वयलभ्यद्रव्यपरिच्छेदद्वारा क्रय एव करणत्वमित्युक्तम् । तदनुपपन्नं, दशमे(१) "चतुरो मुष्टीन्निर्वपती"त्यत्र चतुस्संख्याया

१. पू. मी. १०-२-२७.

लक्षितमुष्टिविशेषणत्वापत्तेः सप्तदशशरावे चरौ प्रधानभूतमुष्ट्यनुग्रहापत्तौ सङ्ख्यानुग्रहो वक्ष्यमाणो विरुध्येत ।

किञ्च नैतादृशस्थले द्रव्यलक्षणायां प्रमाणमस्ति । तद्धि न तावत् करणत्वं, तस्य द्रव्यपरिच्छेदरूपव्यापारावष्टम्भेन गुणेऽपि जातिवत् उपपन्नत्वात् । अत एव यत्र वृत्तिघटितस्य कर्मत्वादेः परम्परासम्बन्धेन गुणादावनन्वयः तत्रेष्यत एव व्यक्तिलक्षणेत्युक्तमाकृत्यधिकरणे । नापि लिङ्गसंख्याद्यनुपपत्तिः । तस्याः (१)पाशाधिकरणन्यायेन लक्षणया साधुत्वमात्रेणाश्रयनिष्ठतया वोपपत्तौ प्रातिपदिके लक्षणानापादकत्वात् ।

वस्तुतस्तु चित्राधिकरणोक्तरीत्या आरुण्यस्त्रीत्वोभयवृत्तिकरणत्वद्वयं तृतीययोच्यते । पार्ष्ठिकान्वये च तदाश्रययोस्सामानाधिकरण्येनान्वयः । तत्र स्त्रीत्वगतकरणत्वस्य प्राप्तत्वात् कामं तन्न विधीयताम् । गुणमात्रवृत्तिकरणत्वं च विधीयताम् । नत्वेतावता प्रातिपदिके द्रव्यलक्षणायां किञ्चित्कारणम् । नापि द्रव्यप्रतीतिः । तस्यास्सम्बन्धविषया पार्ष्ठिकभानेनैवोपपत्तेः ।

अतश्चाकृत्यधिकरणन्यायेनारुणस्यैव गुणस्य अरुणादिपदवाच्यस्य द्रव्यपरिच्छेदमुखेन क्वचिदन्वयः, यथा तृतीयान्ते । क्वचिच्च गुणलक्षितव्यक्तेः, यथा द्वितीयादौ । क्वचित् गुणे द्रव्यस्य विशेषणतया, यथा—घटस्यारुण इति । अत एव लक्षणास्थलमादायैव मतुब्लोपान्वाख्यानं भावप्रत्ययस्य च गुणवाचित्वम् । अन्यत्र गुणनिष्ठधर्मवाचित्वम् । गुणवचनानामाश्रयतो लिङ्गवचनानिभवन्तीत्यादौ आश्रायनिष्ठलिङ्गसङ्ख्यावाचिपदप्रयोजकीभूतगुणवचनशब्दार्थस्तु स्वशक्यार्थवि-

१. पू. मी. ९-३-४.

शिष्टव्यक्तिविषयकलक्षणावृत्तियोग्यं यत्प्रकारतया व्यक्त्यनन्य-
त्यर्थकं पदं तद्रूपः। अत्र योग्यान्तमात्रविवक्षायां अजायाः
शुक्लः इत्यादावपि टाबाद्यापत्तिः। तस्य तदा लक्षकत्वा-
भावेऽपि अरण्यस्थदण्डवत् योग्यत्वस्य सत्त्वात्। अतस्तद्व्यावृत्त्य-
र्थमन्त्यविशेषणम्। अत एव तत्राश्रयगतलिङ्गाभावे(१)"गुणे शु-
क्लादयः पुंसी"त्यनुशासनेन पुल्लिङ्गमेव साधुत्वार्थं नियम्यते।
रूपमस्तीत्यादावपि च प्रकारतया द्रव्यानन्वयादाद्यम्। अतश्च
व्यक्तिलक्षणाभावेऽपि टाबाद्युपपत्तेः गुणस्यैव करणत्वान्वय-
परोऽरुणाशब्द इति सिद्धम्।

पिङ्गाक्ष्येकहायनीशब्दौ तु यौगिकत्वात् द्रव्यपरौ।

नन्तु नात्रापि द्रव्ये शक्तिः। अवयवशक्त्युपस्थापितपदार्थानामेव
द्रव्यपरिच्छेदद्वारा अरुणादिवत् करणत्वेनान्वयोपपत्तेः। अथा-
नयोः बहुव्रीहित्वात् तस्य च मतुवर्थे विधानात् तस्यापि च
"सोस्यास्ती" ति स्मृत्या सम्बन्धयर्थकत्वप्रतीतेः अनयोरप्य-
वयवार्थसम्बन्धिद्रव्यवाचित्वमभ्युपगम्यते ? तर्हि आकृत्याधिकर-
णन्यायेन सहैव मतुपा बहुव्रीहावपि सम्बन्ध एव शक्तिरस्तु,
द्रव्यस्य तु व्यक्तिन्यायेन लक्षणया भानोपपत्तेः न शक्यता।

किञ्च व्यक्तिशक्तिवादिनो मते किं शक्यतावच्छेदकं ?।
गोत्वादीति चेत्।, तस्य बहुव्रीहिपदमात्रादनुपस्थितेः। उपस्थि-
तौ वा तस्यैवाकृतिन्यायेन शक्यत्वापत्तेः व्यक्तिशक्तिभङ्गापत्तिः।
अतश्च सकलजनानुभवसिद्धसम्बन्धस्यैव शक्यतावच्छेदकत्वात्
शक्यत्वमिति।

एवं पाचक इत्यादौ कृतोऽपि कृतावेव शक्तिः। न तु
द्रव्ये। औपगवमित्यादितद्धिते च अपत्यतायामेव शक्तिः।

१. अमरकोश. १. ५. १७.

नत्वपत्य इति चेत्--

नायमाकृत्यधिकरणस्य विषयः । तथाहि—सर्वत्र तावत् अनेकार्थबोधके पदे एकत्र शक्तिः अन्यत्र आक्षेप इति अनेकशक्तिकल्पनापरिहाराय अवश्यं अभ्युपेतव्यम् । तत्रापि च गुरुभूतेऽपि प्रधाने शक्तिः । तेन च अप्रधानानामाक्षेप इत्युत्सर्गः । यत्रोभयोरपि प्राधान्यं तत्र नागृहीतविशेषणान्यायः । दुर्बलस्यापि प्रधानस्याभ्यर्हितत्वात् । तच्च प्राधान्यं "भावप्रधानमाख्यातं" "सत्वप्रधानानि नामानि" इति स्मृत्या नियम्यते । इयं हि नाभिधानान्तरार्थापेक्षया प्राधान्यनियामिका । तस्य प्रकृतिप्रत्ययान्वित्येनैव सिद्धत्वात् । अपि तु स्वाभिधेयार्थान्तरापेक्षयेत्युक्तं(?) भावनानिरूपणावसरे ।

अतश्च यथैवाख्यातस्य भावशब्दवाच्यायां भावनायामेव शक्तिः, कर्तुस्त्वाक्षेपः तथैव, कृत्तद्धितमतुबन्तादीनां नामसंज्ञत्वात् विभक्तिवाच्यसंख्यान्वययोग्यस्य सत्वपदाभिधेयस्य द्रव्यस्यैव प्राधान्यात् तद्वाच्यत्वावगतेः न कृदादौ विशेषणे शक्तिः । अत एव न तत्र नागृहीतविशेषणान्यायः । किन्तु यत्र जातिव्यक्त्योः गुणद्रव्ययोर्वा तृतीयाद्वितीयादौ सत्वतावधारणात् उभयोः प्राधान्यं तत्रैव सः । अत एव सत्यपि कृत्यादिरूपे शक्यतावच्छेदके तस्य संसर्गविधया निरूढलक्षणया वा बोधोपपत्तेः न कृदादौ शक्यत्वम् । तेन यौगिकस्थलेऽपि यत्र कृदादिवाचकान्तरसत्वं तत्र सिद्धं यथासम्भवं द्रव्याद्यभिधानम् । यत्र तु न बहुव्रीह्यादौ वाचकान्तरसत्वं तत्र पदद्वयस्यैव स्वार्थविशिष्टान्यपदार्थे अन्यपदार्थमात्रे वा निरूढलक्षणा । न त्वतिरिक्ता शक्तिः । अनन्यलभ्यस्यैव शब्दार्थत्वात् । अत एव कृदावपि

१. पू. मी. २-१-२.

यत्र लोपः प्रकृतिप्रत्ययादेः तत्रावशिष्टभागस्यैव तल्लक्षकत्वम्। यथा—उद्भित्। अधुना, दधि, व्यतिसे, इत्यादौ। नत्वतिरिक्ता शक्तिः।

न च बहुव्रीहेरन्यपदार्थशक्तत्वाभावे अरुणापदात् अविशेषापत्त्या सूत्रे द्रव्यगुणयोरिति निर्देशानुपपत्तिः। निरूढलक्षणातदभावाभ्यामेव विशेषसिद्धेः।

न चैवमेकहायन्यादिपदस्यापि तृतीयान्तत्वात् आरुण्यवदेव अवयवशक्त्यर्थबोधस्यैवान्यपदार्थरूपद्रव्यपरिच्छेदद्वारा करणत्वोपपत्तेः न नियमेन निरूढलक्षणोपपत्तिः। हायनादेरधिकरणतादिसम्बन्धान्तरेणापि करणत्वोपपत्तेः आरुण्यवत् नियमेन द्रव्यपरिच्छेदद्वारकविवक्षितसम्बन्धासिद्धेः तत्सिद्ध्यर्थं निरूढलक्षणानैयत्योपपत्तेः।

अथ वास्तु तत्रापि अरुणान्यायः। सौत्रं तु द्रव्यपदं प्रमाणान्तरप्रमितद्रव्ये पार्ष्ठिकसम्बन्धप्रतिपादनार्थं न विरुध्यते। अतस्सूत्राअस्यार्थं बहुव्रीहौ द्रव्यशक्तिकल्पनमिति केषांचिदुक्तिरपास्ता। पदद्वये लक्षणाङ्गीकारादेव च बहुव्रीहेस्तत्पुरुषापेक्षयापि च दौर्बल्यं द्वीतीयादावुपपादितं भवति। इतरथा वीजान्तरोपादाने क्लेशापत्तेः। एवं च वार्तिककारीयं बहुव्रीहेरन्यपदार्थशक्तत्वाभिधानं अतिशयार्थमेव।

यत्तु कैश्चिद्बहुव्रीहौ अन्यपदार्थे निरूढलक्षणायां पङ्कजपदेऽपि पद्मांशे निरूढलक्षणापत्तेः योगरूढिप्रवादोच्छेदापातात् बहुव्रीहावपि तद्वदेवान्यपदार्थे शक्तिरित्युपपादितं, तत्पङ्कजपदप्रातिबन्ध्या शक्त्यङ्गीकारे समाहारद्वंद्वेऽपि समाहारे शक्त्यङ्गीकारापत्तौ (१)रथघोषाधिकरणसिद्धान्तानुपपत्तिप्रसङ्गादुपेक्षितम्।

१. पू. मी. १०-४-२.

किञ्च लक्षणाप्रतिबन्धा पङ्कजपदे परं लक्षणा भवेत्, न तु तत्प्रतिबन्धा प्रकृते शक्तिः, गौरवात् ।

वस्तुतस्तु नास्मन्मते पङ्कजपदे पद्मांशे शक्तिर्निरूढलक्षणा वा । पङ्कजनिकर्तृत्वाश्रयबोधस्यैवानुभाविकत्वात् । नह्यत्र पद्मत्वमपि प्रकारीभूय भासते । किन्तु पङ्कजनिकर्तृत्वप्रकारक एव पङ्कजपदात् बोधः । स त्ववयवशक्त्याप्युपपन्न एव ।

कथं तर्हि शक्तेः तुल्यत्वात् पद्मान्यविशेष्यकोऽपि तत्प्रकारको न बोधः ? अवयवशक्तिग्रहजन्यतादृशशाब्दबोधं प्रति तादृशपूर्वतरप्रयोगाभावप्रकारकग्रहस्य पद्मविशेष्यकपूर्वतरप्रयोगवत्त्वप्रकारकग्रहस्य वा प्रतिबन्धकत्वाङ्गीकारात् । अवश्यं हि पद्मे शक्तिवादिनापि उक्तग्रहस्य शक्तिकल्पकत्वमङ्गीकृत्य तद्ग्रहस्य निरुक्तशाब्दबोधं प्रति प्रतिबन्धकत्वं वाच्यम् । तद्वरं उक्तपूर्वप्रयोगग्रहस्यैव प्रतिबन्धकत्वमिति । एवञ्च उक्तप्रतिबन्धकसत्त्वेऽपि यदि पद्मान्यविशेष्यकः कदाचित् बोधस्तदा स लाक्षणिकः ।

एवं यदि पद्मत्वमपि प्रकारीभूय कदाचित् भासिष्यते तदा तदपि साम्प्रतिकलक्षणयैव । एवमेव चास्मन्मतमुपपादितं न्यायग्रन्थे अस्माभिश्च(१) उद्भिदधिकरणे ॥

यद्वा पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनावयवशक्तिग्रहजन्यशाब्दबोधं प्रति समवायसम्बन्धेन पद्मत्वस्य हेतुत्वाङ्गीकारान्नातिप्रसङ्गः ।

यदि तु भाविविनष्टपद्मस्थले समवायसम्बन्धेन पद्मत्वाभावात् न बोधोपपत्तिरित्याशङ्क्येत तत उक्तशाब्दबोधं प्रति पद्ममात्रवृत्तिविषयतायाः पद्ममात्रवृत्तिविषयतासम्बन्धेन ज्ञा-

१. पू. मी. १-४-२.

नस्यैव वा हेतुत्वकल्पनायामतिप्रसङ्गः । सम्भवति हि भाविविनष्टप्रत्यक्षेऽपि पद्मविषयकं पङ्कजनिकर्तृत्वप्रकारकं ज्ञानम् । अतस्तस्यैव हेतुत्वोपपत्तेः न किञ्चिद्बाधकमिति न पङ्कजपदे पद्मांशे शक्तिः निरूढलक्षणा वा ।

अतश्च तत्प्रतिबन्ध्या बहुव्रीहौ शक्तिकल्पनायोगात् निरूढलक्षणयैव पिङ्गाक्ष्येकहायनीशब्दाभ्यां प्रतीतद्रव्यविधिः ।

नचैकेन विहिते अपरेण विध्यनुपपत्तिः । एकविशिष्टोपपादकतया युगपत्प्रवृत्तयोः युगपद्विधायकत्वात् । गुणद्वयविध्युपपादकत्वाच्च वैयर्थ्यमपि । तद्विशेषलाभस्तु(१) "गवा ते क्रीणानी"ति क्रयप्रकाशमन्त्रलिङ्गात् द्रष्टव्यः । लक्षणाभावपक्षे तु नैव काचिदनुपपत्तिः ।

( संशयः )

तदिह अरुणगुणः किं वाक्यं भित्त्वा प्राकरणिकद्रव्यमात्रपरिच्छेदकरणत्वेन निविशते? अथ वा क्रय एव एकहायनीद्वारा निविशत इति विचारः ।

( पूर्वपक्षः )

तत्र शाब्दबोधत्वावच्छिन्नं प्रति योग्यताज्ञानस्य कारणत्वात्, आरुण्यस्य चामूर्तस्य साक्षात्सम्बन्धेन क्रियान्वयायोग्यत्वात्, परम्परासम्बन्धाङ्गीकारे च पारिशेष्यात् क्रयभावनासम्बन्धिद्रव्यसम्बन्धस्यैवापत्तेः, तस्य च कारकत्वेन व्युत्पत्त्यभावात् वाक्यं भित्त्वा अधिकाराख्यप्रकरणकल्पितश्रुत्यनुमितैकदेशनिष्पन्नेन—अरुणया ज्योतिष्टोमापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदि—त्याकारकवाक्येन प्राकरणिकसर्वद्रव्याङ्गत्वम् । टाप्चावयुत्यानुवादस्सन् साधुत्वार्थः । नह्यत्र क्रय इव द्रव्यपरिच्छेदरूपायां क्रियायामयोग्यता ।

१. तै. सं. ६-१-१०.

( सङ्गतिः )

अत एव यत्र(१) "अग्निहोत्रहवण्या हवींषि निर्वपती" त्यादौ ल्युडुक्तस्य द्रव्यस्य स्ववाक्योपात्तनिर्वाप एव योग्यता तत्र युक्तं तन्मात्राङ्गत्वम् । अत एव पूर्वोदाहरणप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात् अनन्तरा सङ्गतिः । पादाध्यायसङ्गतिस्तु अविचार्यैव । "स्फ्येनोद्धन्ती" त्यादीनां जातिगुणवाचिपदयुक्तत्वाविशेषात् इह उदाहार्यत्वेऽपि एतद्धिकरणसिद्धान्तरीत्याङ्गीकृत्य वाक्यीयक्रियासम्बन्धं यज्ञायुधवाक्यप्राप्त्या पूर्वत्राप्युदाहरणता न विरुध्यते । तस्माद्युक्तः प्राकरणिकसर्वयोग्यकारकद्रव्येष्वारुण्यस्य निवेशः ।

यत्तु मूले अरुणयेति तृतीयया प्रातिपदिकेनैव वा प्राकरणिककरणीभूतसर्वद्रव्याण्यनूद्य उपसर्जनार्थो गुणो विधीयत इत्युक्तं, तद्द्रव्यलक्षणायामेकहायन्या एव लक्षणापत्तेः परम्परासम्बन्धेन स्ववाक्योपात्तक्रयसम्बन्धसम्भवात् एकप्रसरताभङ्गापत्तेश्चोपेक्षितम् ।

यदप्येकहायन्यादिपदानां द्रव्ये मूलकारैः शक्त्यङ्गीकारादेकहायन्यादिपदोपात्तश्रौतद्रव्यावरोधान्नारुणादिपदलक्ष्यद्रव्यविध्यसंभव इत्युक्तं तदपि सत्यपि बलाबले द्रव्यस्य वस्तुत एकत्वेन विरोधाभावादयुक्तम् ।

न च विहितविधानासम्भवः । पदार्थोपस्थितेः क्रमिकत्वेऽपि क्रियायां खलेकपोतन्यायेन युगपदन्वयात् सर्वेषामेव विधेयद्रव्यसमर्पकत्वोपपत्तेः । यद्यपि च एकहायनीपदमात्रेण पूर्वं द्रव्यविधिस्स्यात् तथापि प्राप्तमपि द्रव्यं विशिष्टविधिसन्दष्टत्वात् कथंचिद्विधीयेत । किमुत यदा प्रबलप्रमाणेनापि प्राप्स्यमानम् ।

---

१. आप. श्रौ. सू. १-१७-१०.

अतएव प्राप्तैकहायन्यनुवादेन गुणविधाने विरुद्धत्रिकद्वयापत्तिरित्यप्यपास्तम् । विशिष्टविध्यङ्गीकारात् । किञ्चैवं सिद्धान्तेऽपि मूलकारैः अरुणापदे टाबन्तयार्थं द्रव्यलक्षणाङ्गीकारात् कथं भवन्मते बलाबलपरिहारः ।

यदप्यत्राजितभवदेवादिभिः परिहृतं लिङ्गसंख्यादेः लक्षितद्रव्य एवान्वयः । करणत्वस्य गुण एव । प्राप्ताप्राप्तविवेके न गुण एव तत्तात्पर्यनिष्कर्षात् । दृश्यते च राजसूयेनेत्यादौ समुदाये लक्ष्ये संख्यान्वयः । समुदायिषु च शक्येषु करणत्वान्वयः । अतश्च गुणस्यैव क्रये करणतासम्बन्धेनारुणादिपदेनोपनयात् एकहायन्यादिपदैरेव च द्रव्यस्योपनयान्न सिद्धान्ते बलाबलमिति ।

तदप्यपेशलम् । विधिफलस्य अज्ञातज्ञापनरूपस्य तात्पर्यनिष्कर्षेऽपि प्रत्ययार्थस्य करणत्वादेः प्रकृत्यर्थविशेष्यान्वयित्वनियमेन विशेषणे निष्कर्षायोगात् । तथाहि गुणो विशेषणं द्रव्यं प्रति ? उत विशेष्यम् ? अथवा द्वयोरपि विशेष्यता ? नाद्यः । अन्योपसर्जनस्य करणत्वान्वयानुपपत्तेः । न द्वितीयः । अन्योपसर्जने द्रव्ये लिङ्गसंख्यान्वयानुपपत्तेः । गुणस्योपसर्जनत्वाभावे मूलकारनिरुक्तगुणवचनशब्दार्थानुपपत्तेश्च ।

अत एव न तृतीयोऽपि । दृष्टान्तेऽपि च एकवचनस्यैव स्वाश्रयसमुदायघटकसमुदायिवृत्तित्वसम्बन्धेन बहुत्वे लक्षणा । न तु प्रधानस्य प्रातिपदिकस्य समुदाये । अरुणापदे तु तृतीयान्ते "आश्रयतो लिङ्गवचनानि भवन्ती" त्यनुशासनात् प्राप्तौ सत्यामाश्रयगतलिङ्गसंख्यानुवादः । अप्राप्तौ तु तद्विधिः । प्रकृत्यर्थान्वयस्तु सामानाधिकरण्यसम्बन्धेन । न तु तदनुरोधेन प्रकृतेराश्रयलक्षकत्वं प्रमाणाभावादित्युक्तम् ।

अतएव प्रकृत्यर्थतदाश्रयद्वाचित्वान्यतरसम्बन्धेनैव सर्वत्र लिङ्गसंख्यादेः पार्ष्ठिकः प्रकृत्यर्थान्वय इत्यपि ध्येयम् ।

अतश्च सिद्धान्त इव पूर्वपक्षेऽपि श्रुतारुणापदे लक्षणाकारणाभावात् औत्तरकालिकं वाक्यभेदं द्रव्यादिवाचिपदाध्याहारं चाङ्गीकृत्य प्राकरणिकद्रव्यमात्रे निवेश इति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—न शाब्दबोधत्वावच्छिन्नं प्रति योग्यताज्ञानस्य कारणत्वम् । तदभावेऽपि अयोग्यतानिश्चयाभावदशायां गृहीतपदपदार्थसङ्गतिकस्य शब्दात् शाब्दबोधोदयात् । अन्यथा यागस्यापि स्वर्गान्वयशाब्दानुदयेनापूर्वकल्पनाया एवानुपपत्तेः । किन्तु अयोग्यतानिश्चयः प्रतिबन्धकः । अतश्च प्रतिबन्धकाभावे सत्यारुण्यस्यापि क्रयभावनान्वयावगतौ पश्चाद्योग्यतागवेषणायां अमूर्तत्वेन साक्षादयोग्यत्वेऽपि द्रव्यपरिच्छेदरूपव्यापारद्वारा करणत्वयोग्यतावधारणं नानुपपन्नम् ।

तथाहि—आरुण्यं क्रियान्वयात्पूर्वं द्रव्यान्वये कारकत्वव्याघातापत्तेः प्रथमतो द्रव्यपरिच्छेदाख्यव्यापारानवगमेऽपि उक्तसामग्रीवशादेकहायनीक्रयसोमादिकारकान्तरवदेव भावनायां संबध्यते । विशिष्टविधानाच्च न विधेयानेकत्वम् । पश्चाच्च क्रयस्य सोमनिरूपितकरणत्वबोधदशायां भावनाप्रत्यासन्नत्वात् एकहायन्यादिवदेव मत्वर्थलक्षणया क्रये सम्बध्यते । न तु द्रव्ये ।

अत एव विशेषणविधिकाले तदङ्गत्वमेवारुण्यस्य । न तु द्रव्याङ्गत्वम् । गुणस्य च द्रव्यपरिच्छेदरूपव्यापारमन्तरेण क्रियाकरणत्वानिर्वाहात् योग्यतया तस्मिन्नवगते द्रव्यविशेषापेक्षायां सामानाधिकरण्यात् एकहायनीरूपद्रव्यविशेषप्रतीतिसिद्धिः । अपेक्षि-

तश्च द्रव्येणाप्यपरिच्छिन्नेन क्रियाजननायोगात् स्वपरिच्छेदार्थं गुणः

यत्रापि हि विशेष्यं पदद्वयमपि च निराकाङ्क्षं तत्राप्यन्यत-राकाङ्क्षया इतराकाङ्क्षामुत्थाप्य गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् अनावृत्तैकक्रियान्वयानुरोधेन वा द्वयोरप्याकाङ्क्षां परिकल्प्य परस्परसाहित्यात्मकः सम्बन्धः कल्प्यते । यथा-(१)"सोमाय पितृमते पुरोडाशं षट्कपालं" इत्यादौ,(२) "अग्नये शुचये" इत्यादौ च । तत्र किमु वक्तव्यं द्वयोरपि द्रव्यगुणयोः स्वत एव परस्परमाकाङ्क्षावत्त्वेनान्योन्यनियम इति ।

अत एव द्रव्यपदसामानाधिकरण्यमपि विशेषणतयैव । नत्वङ्गतया । तत्तु क्रयं प्रत्येवेति । एवमेकवाक्यत्वसम्भवे न वाक्यभेदमङ्गीकृत्य अध्याहारादिना सर्वप्राकरणिकद्रव्याङ्गत्व-कल्पनमुपपत्तिमत् । अतस्सिद्धं क्रयसाधनीभूतैकहायन्यामेवा-रुण्यस्य निवेश इति ।

ननु नारुण्यस्य एकहायन्यामेव निवेशः । वासःप्रभृतिषु क्रयद्रव्यान्तरेष्वपि निवेशोपपत्तेः । यन्मते हि तावत् क्रयैकत्वं तन्मते अपूर्वसाधनीभूतद्रव्यप्राप्त्यनुकूलव्यापारसाधनत्वाविशे-षात् युक्त एव वासःप्रभृतिषु आरुण्यस्य निवेशः । उत्पत्तिशिष्ट-द्रव्यावरोधरूपात् गुणात् क्रयभेदाङ्गीकारेऽपि च द्रव्याणां धर्मिग्राहकप्रमाणेन स्वस्वभेदे क्रये व्यवस्थया निवेशेऽपि आरु-ण्यस्यापि विरुद्धधर्मान्तरवदेव निरुक्तप्रयोजकवशाद्वासःप्रभृतिषु निवेशो नानुपपन्नः ।

यद्यपि च विशिष्टविधित्वान्नात्रोद्देश्यस्य क्रयस्य वाक्या-न्तरेणापूर्वसाधनत्वमवधारितं तथापि विशिष्टविधिवेला-यामवधारितस्य तस्य विशेषणविधिवेलायां लक्षणोपपत्तिः ।

१. तै. सं. १-८-५. २. तै. सं. २-२-४.

एवं सत्यपि यदि क्रयाणां भिन्नकार्यत्वं स्यात् ततो न साङ्कर्यं भवेत् । एकसोमप्राप्त्यर्थत्वात्तु न तत् । समुच्चयस्तु "दशभिः क्रीणाती"ति वचनादविरुद्ध इति चेत्—

न, आरुण्यविशिष्टविजातीयक्रयविध्यन्यथानुपपत्तिबलेन कल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वाऽन्यूनानतिरिक्तवृत्तित्वेनैव कल्पनीयत्वात् । अत एव विजातीयक्रयजन्यानातिविशेषस्य विजातीयक्रयत्वस्यैव वा विवक्षितत्वान्नातिप्रसङ्गः । अविरुद्धधर्मान्तराणां तु वाक्यान्तरीयत्वात् अवान्तरप्रकरणेन सर्वक्रयाङ्गत्वमिति विशेषः । अतश्च युक्तः आरुण्यस्य स्ववाक्योपात्तक्रयसाधनीभूतैकहायन्यां तत्स्थानापन्ने वा त्रिवत्से निवेशः । न तु वासःप्रभृतिषु क्रयान्तरद्रव्येषु । यद्यपि च त्रिवत्सः सर्वसोमक्रयानुवादेन विधीयमानस्तदीयसर्वद्रव्यस्थानापन्न इति(१) दशमे वक्ष्यते । तथापि एकहायनीस्थानापत्तेरपि तावत्सत्वात् "तस्यै शृतमि"तिवत् आरुण्यप्राप्तिरप्यस्मिन्नविरुद्धा ।

ननु—नारुण्यस्य निवेशस्तस्मिन्युक्तः । प्रकृतावेकहायनीद्वारकत्वस्य विवक्षितत्वात् । न हि तत्रैकहायनी उद्देश्या । येन तत्स्वरूपे आनर्थक्यभिया अविवक्ष्येत । द्वारमात्रं तु सा । तृतीयया क्रयं प्रत्येवारुण्यस्य अङ्गत्वावसायात् ।

न च द्वारस्वरूपे आनर्थक्यं, प्रमाणाभावात् । अतश्च त्रिवत्से एकहायन्यभावात् नारुण्यप्राप्तिः । न च द्वाराभावेप्युद्देश्यसद्भावमात्रेण प्राप्तिः । अवघातस्यापि कृष्णलेषु तदापत्तेः । यद्यपि च नैकहायनी प्रकृतौ द्वारं, अपि तु गौः इत्युच्येत, तथापि अजादीनामपि त्रिवत्सराणां समुच्चयेन विकल्पेन वा प्राप्तेः

१. पू. मी–१०–३–१६.

न त्रिवत्समात्रे आरुण्यविधिः सम्भवतीति चेत्—

नः द्वारस्यापि प्रकृतक्रियासाधनद्रव्यत्वेनैव तत्त्वात्। नत्वेकहायनीत्वेन अदृष्टार्थत्वापत्तेः। अत एव पुरोडाशाभावेऽपि यागाङ्गभूतव्रीहीणां चरुप्रकृतिकत्वमविरुद्धम्।

किञ्च यत्र द्वारस्याप्यारुण्यस्य न तत्त्वेनावच्छेदकता, अपि तु प्रकृतक्रियासाधनगुणत्वेनैव। अत एव श्वेतादिगुणान्तरसाध्यक्रयस्थलेऽपि एकहायनीपरिच्छेदकत्वाविरोधः। तत्र किमु वक्तव्यं द्वारस्य तत्त्वेन द्वारतेति।

यदपि चाजादीनामपि त्रिवत्सराणां क्रयान्तरसाधनीभूतानां सत्त्वात् न त्रिवत्समात्रे तत्प्राप्तिरिति, तदपि न। त्रिवत्सवाक्ये हि क्रियानुवादेन त्रिवत्सरत्वाद्यनेकगुणविधौ वाक्यभेदापत्तेः द्रव्यान्तरमेव त्रिवर्षत्वपुंस्त्वैकत्वविशिष्टं विधीयते।

न च प्रतिक्रयं द्रव्यैकत्वस्य प्राप्तत्वात् न तद्वैशिष्ट्यविधिः। तथात्वे द्रव्यबहुत्वापत्तेः बहुषु बहुवचनमित्यनेन बहुवचनापत्तेः। नच किञ्चित् बाधकमस्ति। येन ग्रहं सम्मार्ष्टीतिवत् बहुत्वलक्षणार्थं एकवचनमित्याश्रीयेत। प्रत्येकं प्राप्तस्यापि द्रव्यैकत्वस्य क्रयसमुदाये विधानोपपत्तेः।

अतश्च यथैव (१)"एकादश प्रयाजान् यजति"(२)"चतुर्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्" इत्यादौ प्रत्येकं नोद्देश्यता किन्तु विधेयसामर्थ्यानुरोधेन समुदितस्यैव। तथात्रापि क्रयसमुदाये द्रव्यैकत्वसिद्धिः। तत्र च यथा वर्षगतात्रित्वेन तद्गतैकत्वस्य बाधः, यथा वा पुंस्त्वेन स्त्रीत्वहिण्यत्वादीनां, तथा एकत्वेन तद्गतानेकत्वस्यापि। परिशेषात्तु गोत्वाजात्वजात्योः विकल्पेन प्राप्तौ जातायां गोत्वस्य "गोमिथुनेन क्रीणाति, (३)एकहायन्या क्रीणाती"ति वा-

१. तै. सं. ६-३-७. २. तै. ब्रा. ३-३-५. ३. तै. सं. ६-१-६.

द्रव्यद्वयविहितक्रयद्वयसाधनत्वात्(१) "भूयसां स्यात् सधर्मत्व" मिति न्यायेनैकक्रयसाधनीभूताजात्वबाधकता । क्रयान्तराणां तु अनयैव जात्या प्रसङ्गसिद्धिः ।

नचात्र क्रयाणां प्रयाजानूयाजवत् समुच्चयः । येन प्रसङ्गाभावः शङ्क्येत । अपि तु प्राजापत्ययागवत् तन्त्रतारूपः ; एकसोमप्राप्तिफलकव्यापाररूपाणां तेषां सकृदनुष्ठानोपपत्तेः ।

न च(२)"शुक्रं ते शुक्रेण क्रीणामी"ति करणमन्त्रभेदादावृत्तिः । तेषां मूल्यप्रतिश्रावणमात्रे करणत्वेन सोमप्राप्तिफलकव्यापाररूपे क्रये करणत्वाभावात् । अत एव बौधायनकल्पे(३) "अथैनं गवा पणते" इत्यादिना तेषां विनियोगः । तस्मात् त्रिवत्सेऽपि गोद्रव्यस्यैव सत्त्वाद्युक्तैव तन्मात्रे आरुण्यप्राप्तिः ।

वस्तुतस्तु तदभावेऽपि तत्प्राप्तिरुपपादितैव । अतस्सिद्धमारुण्यस्य क्रय एव निवेश इति ॥

सूत्रप्रयोजने स्पष्टे ॥

॥ इति षष्ठमरुणाधिकरणम् ॥

---

### अथ सप्तमं ग्रहैकत्वाधिकरणम् । (७)

## सू—एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥३-१-१३॥(पू)

( विषयः )

ज्योतिष्टोमादिषु "दशापवित्रेण ग्रहं सम्मार्ष्टि", "(४)यस्य

---

१. पू. मी. १२-२-७.
२. तै. सं. १-२-५.
३. बोधा. श्रौ. ६-१४.
४. आप. श्रौ-९-१५-७. मैत्रा. सं. १-४-३.

"पुरोडाशौ क्षायतः,(१) "यस्य सर्वाणि हवींषि नश्येयुः"(२) "अग्नेस्तृणान्यपचिनोति" इत्यादि श्रुतम् ।

( संशयः )

तत्र किं सम्मार्गादौ द्वितीयाश्रुत्या विनियुज्यमाने प्रातिपदिकार्थस्य ग्रहत्वादेः, वचनाद्यर्थस्य चैकत्वादेः उद्देश्यतावच्छेदकता ? उत प्रातिपदिकार्थस्यैव सा ? एकत्वादेस्तु कथमपि विध्यन्वयासम्भवात् तदनन्वयित्वरूपाविवक्षाविषयत्वात् एकवचनादि प्रातिपदिकार्थगतसंख्यादिपरं सत् साधुत्वार्थमनुवाद इति विचार्यते । यद्यपि च विवक्षितगत्या अपूर्वसाधनताविशेषत्वस्यैव उद्देश्यतावच्छेदकत्वान्न ग्रहत्वादेस्तत्, तथापि तल्लक्षणोपयोगिशक्यसम्बन्धघटकत्वात् तत्त्वेन व्यवहारोऽस्मिन्नधिकरणे ।

( सङ्गतिः )

पादाध्यायसङ्गतिः पूर्ववत् । अनन्तरा तु पूर्वाधिकरणोक्तस्य पार्ष्ठिकान्वयस्य गुणस्य स्ववाक्यगतक्रियासम्बन्धे वाक्यैकत्वस्य चापवादात् द्रष्टव्या ।

( पूर्वपक्षः )

तत्र ग्रहप्रातिपदिकस्य तावत् ग्रहत्वमर्थः, वचनस्य चैकत्वं द्वितीयायाः कर्मत्वम् । तत्र च कर्मत्वे जातेस्साक्षादनन्वयात् तल्लक्षितव्यक्तेः अन्वयः इत्यप्यविवादम् । व्यक्तेरपि च न शुद्धायाः कर्मत्वान्वयः । अपि तु पदश्रुत्युपनीतैकत्वविशिष्टाया एव । अयोग्यत्वेन एकत्वस्य समानाभिधानश्रुत्या कर्मत्वं प्रति साक्षादनन्वयात् "सत्वप्रधानानि नामानी" ति सत्वसमाख्याबलेन प्रातिपदिकार्थे प्रत्ययेनान्वयाच्च ।

---

१. आप. श्रौ ९-१५-१४. २. आप. श्रौ. ६-२३-१.

एवं यत्रापि(?) "यस्योभयं हविरि" त्यादौ संख्यापाधि भिन्नं पदं तत्रापि सामानाधिकरण्यात् गुणवचनपदवाच्योऽयत्वं क्रियान्वयात् पूर्वमेव हविषा अन्वीयते। लिख्यते च समानाधिकरणानां पदानां षष्ठीवत् क्रियान्वयात् पूर्वमपि परस्परान्वयः तन्त्ररत्नादौ। अतश्चैकत्वादिविशिष्टग्रहत्वाद्यवच्छिन्नस्यैव कर्मत्वाद्यन्वयात् सम्मार्गो यथैव ग्रहत्वानवच्छिन्ने चमसादौ नेष्टः तथा एकत्वानवच्छिन्ने ग्रहेऽपि।

न च कारकविशेषणस्य विध्यनन्वयः। "लोहितोष्णीषा" इत्यादौ समासस्थले षष्ठीस्थले वा शतशस्तदङ्गीकारात्। न च विधेयत्वे विशेषणविधिमालाकल्पनया तदुपपत्तावपि उद्देश्यस्थले तदयोग इति वाच्यम्। तत्राप्युद्देश्यं प्रतीव तद्विशेषणं प्रत्यपि सम्मार्गविनियोगमालाकल्पनया तदुपपत्तेः।

इष्यते च प्रोक्षणादेः अपूर्वसाधने विनियोगवत् अपूर्वेऽपि सः। अत एव विशिष्टोद्देशे वाक्यभेदप्रवादोऽपि बीजाभावात् मुधैव। इष्यते च "अश्वाभिधानीमादत्ते" "यत्किंचित्सोमलिप्तं तेनावभृथं यन्ति" इत्यादौ अश्वसोमादिविशिष्टोद्देशः। तस्मात् एकत्वादिकमपि उद्देश्यतावच्छेदककोटिप्रविष्टम्।

अथ वा अस्तु समानाभिधानश्रुत्या एकत्वादेः कारक एवान्वयः। तथापि ग्रहत्वलक्षितव्यक्तेरिव एकत्वलक्षितव्यक्तेरपि कर्मत्वेन भावनान्वयात् संमार्गस्यापि पार्ष्ठिको विनियोगविधिद्वयकल्पनयोद्देश्यद्वयसम्बन्धो नानुपपन्नः।

न चैतावता वाक्यभेदः। विधेयानेकत्वे हि विधिफलस्याज्ञातज्ञापनरूपस्य एकविषयत्वस्वाभाव्यभङ्गापत्तेः युक्तो विधिवाक्यभेदः। उद्देश्यानेकत्वे तु तेषां श्रुतभावनायां अ-

१, तै. ब्रा. ३-७-१-७.

न्वयात् विधेश्चैकविशिष्टभावनाविधायित्वेनानेकविधायित्वाभावादार्थिकैश्च विधिभिः एकक्रियोद्देशेनानेकविशेषणविधिवत् अनेकोद्देशेनैकसम्मार्गविषयानेकविनियोगविधिकल्पनसंभवात् न युक्तो वाक्यभेदः । न च भावनाया एकस्मिन् वाक्ये एकोद्देश्यतावच्छेदकवत्त्वनियमात् तदनेकत्वे वाक्यभेद इति वाच्यम् । (१) "सर्वेभ्यो दर्शपूर्णमासा" वित्यादौ पुत्रत्वपशुत्वाद्यनेकोद्देश्यतावच्छेदकदर्शनेन तदभावात् । न हि तत्र सर्वत्वमेवैकमुद्देश्यतावच्छेदकम् । सर्वत्वमेकमुपलक्षणीकृत्य तदादिवत् सर्वशब्दस्य पुत्रत्वपशुत्वादिनैव शक्तिग्रहात् तत्प्रकारेणैव उद्देश्यतावगतेः । अन्यथा सर्वत्वेन रूपेण एकफलकत्वे (२)योगसिद्ध्यधिकरणविरोधापत्तेः ।

नचैवमपि एकत्वावच्छिन्नस्य विनियोगाभावात् कर्मत्वानुपपत्तिः । ग्रहकार्ये तदवच्छिन्नस्य विनियोगाभावेऽपि "पशुना यजेत"त्यादौ तत्सत्त्वेन कर्मत्वोपपत्तेः ॥

वस्तुतस्तु नोद्देश्यतावच्छेदकावच्छिन्नत्वरूपेणैव विनियोगः संस्कार्यताप्रयोजकः । अपि तु तत्समानाधिकरणधर्मावच्छेदादिनापि । पशुत्वेन विनियुक्तस्यापि लोहितादेः लोहितत्वादिना निरसनसंस्कार्यत्वदर्शनात् । अतश्च बहुत्वावच्छेदेन विनियुक्तेष्वपि ग्रहेषु एकत्वावच्छेदेन संस्कार्यता न विरुध्यते ।

नचैवमपि ग्रहत्वावच्छिन्नैकत्वावच्छिन्नयोरुद्देश्ययोः स्वतो निराकाङ्क्षयोः एकविधिविधेयप्रधानभूतैकक्रियावशीकाराभावात् कथं परस्परनियम इति वाच्यम् । वैकृताङ्गवत् गुणभूतक्रियानुरोधेन पदश्रुत्यवगतसम्बन्धानुरोधेन वा प्रधानयोर-

१ ता. ब्रा. ६-३-२. २. पू. मी. ४-३-९.

प्याकाङ्क्षां परिकल्प्य तदुपपत्तेः। इष्यते च "आग्नेयं चतुर्धा करोती"त्यादौ । यत्र भिन्नविधिविधेयगुणीभूतक्रियानुरोधेनापि उद्देश्ययोरभेदान्वयः, तत्र एकविधिविधेयया शाब्दबोधे मुख्यविशेष्यत्वेन प्रधानभूतया च क्रियया अन्वितयोः नाभेदान्वय इति साहसमात्रम् । प्रकृते तु अविवक्षाभयभीतेन धर्मिणा आनर्थक्यप्रतिहतन्यायेनाप्याकाङ्क्षोत्थापनं नासुलभम् । तस्मादुद्देश्यानेकत्वेऽपि न काचित्क्षतिः ।

अस्तु वा एकग्रहत्वावच्छिन्नद्वसैकत्वमेव व्यासक्तमखण्डोपाधिरूपं कर्मत्वं द्वितीययोच्यते । तेन च प्रधानभूतेन स्वाश्रययोः वशीकारोपपत्तिः ।

अथवा प्रातिपदिकैकवचनाभ्यां (१)"अर्धमन्तर्वेदि मिनोती"तिवत् एकत्वविशिष्टग्रहं लक्षयित्वा तस्य कर्मत्वान्वयान्न वाक्यभेदः । वरं ह्यविवक्षातो लक्षणाश्रयणम् ।

अस्तु वा वाक्यभेदोऽपि । तथापि तस्य वाक्यदोषत्वात्, वाक्यस्य च पदार्थोपस्थितिसापेक्षत्वेन तदुपजीवित्वात् उपजीव्यपदार्थाविवक्षानुपपत्तेः तदङ्गीकारो युक्त एव ।

किञ्च मास्तु उद्देश्यतावच्छेदकत्वमेकत्वस्य, तथापि अविवक्षायां प्रमाणाभावः । गुणत्वेन सम्मार्गं प्रति अन्वयोपपत्तेः । एकत्वविशिष्टसम्मार्गविधानाच्चावाक्यभेदः स्पष्ट एव ।

नचैवमेकत्वांशे द्वितीयया करणत्वलक्षणात् ग्रहांशे च प्राधान्याभिधानात् युगपद्वृत्तिद्वयविरोधः, वैरूप्यं च द्वितीयायामिति वाच्यम् । द्वितीयाया ईप्सितानीप्सितसाधारणकर्मत्वमात्रवाचित्वेन योग्यतया एकत्रेप्सितत्वमपरत्रानीप्सितत्वमिति विशेषा-

---

१. आप. श्रौ. ७-९-६.

वगमेऽपि शाब्दबोधे शक्त्युपात्तकर्मत्वेनैव उभयोरन्वये बाधकाभावात् ।

दृश्यते च स्विष्टकृदादौ उद्देश्यांशस्य अनूयाजदेवतांशे उभयोर्क्ष्यमाणसंस्कारार्थत्वमन्यत्रोपयुक्तसंस्कारार्थत्वमिति विशेषसत्त्वेऽपि प्रकृतापूर्वसाधनीभूतदेवतासंस्कारार्थत्वेनानुगमात् अवैरूप्यं तद्विनियोगविधौ । न ह्ययं संमृजिरकर्मकः ; येन सक्तुवत् करणत्वलक्षणा आपाद्येत । अतश्च कर्मत्वेनान्वितस्य एकत्वस्य प्रयोजनाकाङ्क्षायां सम्मार्गाङ्गत्वमपि आर्थिकेन विधिना नैव विरुध्यते । यत्र तु संख्यायाश्चापि पृथक् पदश्रवणं तत्र न वैरूप्यगन्धोऽपीति गुणपक्षो निराबाधः ।

नचैवमपि सम्मार्गाङ्गभूतस्य एकत्वस्य तदनङ्गभूतग्रहद्वारकत्वासंभवः । श्रपणानङ्गभूतयोरपि इज्यार्थयोः दधिपयसोः श्रपणोपकारकतामात्रेण श्रपणसाधनप्रणीताधर्मद्वारत्ववत् सम्मार्गानङ्गस्यापि ग्रहस्य विषयतया सम्मार्गोपकारकत्वात् तदीयद्वारत्वोपपत्तेः ।

वस्तुतस्तु नोपकारकताप्यङ्गत्वप्रयोज्यत्वादिवत् द्वारत्वप्रयोजिका । तदभावेऽपि दर्शपूर्णमाससम्बन्धितामात्रेण स्वर्गस्य दर्शपूर्णमासाङ्गभूते अगन्मेति मन्त्रे द्वारत्वदर्शनात् । अतः क्रियासम्बन्धितायाः ग्रहेऽपि सत्वात् युक्तमेव द्वारत्वमिति नाविवक्षितमेकत्वम् । यदि चैवं नेष्यते तदा "अष्टवर्षं ब्राह्मणमुपनयीत" (१)"अग्नीनन्वादधाति" इत्यादिष्वपि विशेषणाविवक्षा प्रसज्यते ।

अस्तु वा उद्देश्यविशेषणस्थले कथंचिदविवक्षा । अनुष्ठानोपादेयगतविशेषणस्थले तु न किञ्चिदविवक्षायां कारणं

१. आप. श्रौ. १-१-१.

पश्यामः । तथा हि—

(१)"सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्" इत्यत्र क्त्वाप्रत्ययबलादेव उदवसानसमानकर्तृबहुत्वलाभात् क्रियाविशेषणमात्रविधायित्वाख्याते कर्तृगतबहुत्वसाहित्याद्यविवक्षा (२)दशमे वक्ष्यते । तत्र बहुत्वं तावत् अनूद्यमानत्वात् इन्द्रियकामग्रहैकत्ववदविवक्षितम् । कर्तृसाहित्यस्य तु निमित्तभूते उदवसाने अविवक्षितस्य क्रियायामप्राप्तत्वेन स्वतोऽनूद्यमानत्वाभावात् अनूद्यमानकर्तृगतत्वेनैव अविवक्षा वाच्या । न च तत्र बीजं पश्यामः । उद्देश्यत्वाभावेन तदनेकत्वनिमित्तकवाक्यभेदाभावात् । उभयोरुपादेयत्वेन न गुणत्वपक्षोक्तं वैरूप्यमपि । अनूद्यमानस्य कर्तुः नैराकाङ्क्ष्यमात्रं तु आकाङ्क्षोत्थापनेनैव निरस्तम् । विध्यनुवादत्वकृतवैरूप्यं तु प्राप्ताप्राप्तविवेकन्यायेनापाद्यमानं पृष्ठशमनीय इव नाविवक्षाप्रयोजकम् ।

तस्मात् श्रुतस्यैवंजातीयकस्य पश्वेकत्ववत् विधिश्रुत्या संयोगादविवक्षानुपपत्तेः एकत्वयुक्तमेव ग्रहादि संमार्गादिसंस्कारयुक्तं कर्तव्यमिति सूत्रार्थः ॥

( इति पूर्वः पक्षः )

( अथ सिद्धान्तः )

सू—सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ ३–१–१४ । (सि)

नैतदेकत्वादि विवक्षितम् । विध्यन्वयासम्भवात् । तथाहि—

---

१. तां ब्रा १५–१–६ २. पू. मी. १०–२–११.

स हि किमुद्देश्यत्वेन, (१.)विधेयत्वेन वा ?। आद्येऽपि किं विशिष्टोद्देशेन, स्वतन्त्रोद्देशेन वा ? । न तावदाद्यः कल्पः । क्रियान्वयात्पूर्वं परस्परवैशिष्ट्यस्याव्युत्पन्नत्वात् । तथा हि—यत्र तावत् भिन्नपदोपात्तता तत्र प्रातिपदिकार्थस्य हविष्ट्वोमयत्वरूपस्य स्वस्वप्रत्ययार्थे अन्वयात् तस्य च लिङ्गसंख्याऽयतिरिक्तसुबर्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति भावनाविशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कारकसाधारणव्युत्पत्त्या प्रधानभूताख्यातार्थं भावनायामेव तदन्वयावगतेः परस्परान्वयोऽव्युत्पन्न एव । तन्त्ररत्नाद्युक्तिस्तु अनादरादेव द्रष्टव्या । अन्यथा "पञ्चदशान्याज्यानी" त्यत्रान्वयासम्भवोक्तिर्विरुध्येत । एकपदे वचनाद्युक्तसंख्यान्वयस्तु समानाभिधानश्रुत्या कारक एवेति (२)पशुकत्वाधिकरणे वक्ष्यत इति तस्यापि प्रातिपदिकार्थान्वयोऽव्युत्पन्न एव ।

अत एव यत्र कृदन्तस्थले कारकातिरिक्तसम्बन्धेन, समासस्थले, प्राचीनमते षष्ठीस्थले वा क्रियान्वयात् पूर्वमपि परस्परान्वयो व्युत्पन्नः तत्र भवत्येव विशिष्टोद्देशः । यथा—'सोमालिप्तं' 'अश्वाभिधानीं' 'उत्तरेऽहन् द्विरात्रस्य' इत्यादौ । यदि तु पूर्वोक्तव्युत्पत्त्यनुसारेण षष्ठीस्थलेऽपि क्रियान्वय एवाङ्गीक्रियते तदा तत्रापि नैव विशिष्टोद्देशः । उत्तरेऽहन् इत्यादौ तु द्विरात्रोद्देशेनैव षोडशिग्रहणनियमविधिः । उत्तरेऽहन्निति तु तस्यैवातिरात्रसंस्थाकत्वेन विधेयनियमविषयतया प्राप्तत्वात् अनुवाद इत्यादिपरिहारास्तत्र तत्र उपपादयिष्यामः ।

अतश्च क्रियान्वयात्प्राक् परस्परवैशिष्ट्याभ्युपगमेऽव्युत्प-

१. गुणत्वेन २. पू. मी. ४-१-६.

त्तिनिबन्धनवाक्यभेदापत्तेः न तावत् ग्रहत्वविशिष्टैकत्वस्य एकत्वविशिष्टग्रहस्य वा उद्देश्यत्वम् ।

न द्वितीयः । एकत्वग्रहत्वयोः एकत्वावच्छिन्नग्रहत्वावच्छिन्नव्यक्त्योर्वा प्रत्येकं कर्मत्वे भावनायाः एककर्मककरोतिपर्यायत्वेन प्रतीतिबलाच्च एककर्मकत्वावगतेः तद्भङ्गापत्तिलक्षणवाक्यभेदप्रसङ्गात् । उपपादितं चैतदस्माभि (१)रुसम्मार्गाधिकरणे, (२)रेवत्यधिकरणे च ।

एककर्मकत्वं च एकबोधजनकीभूतयावद्वृत्तिविषयकर्मकत्वम् । अतश्च सत्यामपि सर्वशब्दस्य पुत्रत्वपशुत्वादिना प्रत्येकशक्तौ, सत्यपि च "सर्वेभ्यो दर्शपूर्णमासा" वित्यादौ तत्तदुद्देश्यतावच्छेदकनानात्वे सर्वशब्देन तत्तच्छक्तिभिः सर्वेषां फलानां युगपत् बोधात् एककर्मकत्वोपपत्तिः ।

नचैवमेककर्मत्वभङ्गभयेन अनेकोद्देश्यतानङ्गीकारे फलसंस्कार्यस्थले तदापत्तावपि निमित्तस्थले तदभावात् किमिति नानेकोद्देश्यताङ्गीकारः । तत्रापि निमित्तयोः भेदेनानुष्ठापकत्वात् भेदेनैव भाव्याक्षेपकत्वापत्तेः निमित्तानेकत्वे तदाक्षिप्तभाव्यरूपकर्मानेकत्वप्रसङ्गस्य तुल्यत्वात् । न च तत्र सहितयोरेव निमित्तत्वाङ्गीकारात् नोक्तदोषापत्तिरिति वाच्यम् । साहित्यस्यापि पक्षकोटिप्रविष्टत्वेन पूर्ववदेव निमित्तविशेषणत्वानुपपत्तावर्थात् स्वातन्त्र्येण निमित्तत्वाङ्गीकारापत्तेः तयोस्तस्य च भेदेनैव कर्माक्षेपकत्वप्रसङ्गात् ।

न च त्रयाणामपि तेषां चतुर्धाकरणवत् पार्ष्टिकपरस्परनियमोपपत्तेः एकभाव्याक्षेपकत्वोपपत्तिः । पार्ष्टिकान्वयस्य क्रियान्वयोत्तरकालीनत्वात् तस्याश्च भाव्यान्वयं विना अविधेय-

१. पू. मी. २-१-५. २. पू. मी. २-२-१२.

त्वात् तत्तन्निमित्तेन तत्तद्भाव्याक्षेपावश्यकभावात् सत्यपि भाव्या-नां पार्ष्ठिकान्वयेन परस्परैक्ये एकबोधजनकधावद्वृत्तिविषयकर्मक-त्वरूपैककर्मकत्वभङ्गस्य तदवस्थत्वात् ।

नच यत्र पुरोडाशावित्यादौ द्विवचनादिना साहित्यप्रतीतिः तत्र तस्य भवतु नाम संख्यादिसमानयोगक्षेमता । यत्र तु 'स-र्वस्मै वा' इत्यादौ प्रातिपदिकादेव साहित्यप्रतीतिः तत्र तस्य प्रा-तिपदिकार्थवदेव युगपत् बोधोपपत्तेः तदभावेऽपि वा समा-सवत् साहित्यस्य प्रातिपदिकार्थं एवान्वयाङ्गीकारेण विशिष्टो-द्देशोपपत्तेः कथं संख्यातुल्यत्वमिति वाच्यम् । सर्वत्र प्रातिपदिके-न स्वस्वार्थबोधजननोत्तरं साहित्यस्य लक्षणया बोधजननात् युगपत् बोधानुपपत्तेः पश्चात्प्रतीयमानस्यापि अप्रमस्तप्रातिपदि-कार्थत्वात् प्रधानान्वयस्याभ्यर्हितत्वाच्च शक्यार्थवत् कार-कान्वयस्यैव व्युत्पत्तेः समासवत् विशिष्टोद्देशायोगाच्च ।

अत एव "सर्वेभ्यो दर्शपूर्णमासा"वित्यादौ फलानेकत्वकृता-नेकोद्देश्यताभावेऽपि साहित्यकृतानेकोद्देश्यतासत्त्वात् तदविवक्षा नानुपपन्ना । अतश्च भेदेनैव निमित्तयोः भाव्याक्षेपकत्वात् तदने-कत्वेऽपि फलसंस्कार्ययोरिव एककर्मकत्वभङ्गापत्तिरूपो वाक्यभेद-स्तदवस्थ एव । एतदाशय एव च मूले उद्देश्यानेकत्वे प्रत्युद्देश्यं वाक्यपरिसमाप्तिरूपो वाक्यभेद इति व्यवहारः ।

अत एव(१) "अमावास्यायामपराह्णे" इत्यादौ कालदेशाद्य-नेकोद्देश्यकत्वेऽपि कर्मनानात्वानाक्षेपकत्वात् न वाक्यभेदः । तयोः अनुवादस्थले परं निमित्तत्वाद्यापत्तेः अनेकोद्देश्यतेति विशेषः । अत एव च फलनिमित्तस्थले संस्कार्यनिमित्तस्थले वा सत्यप्यनेकोद्देशे कारकान्तरानाक्षेपकत्वात् न वाक्यभेदः ।

१. आप. श्रौ. १-७-१.

तस्मात् नैकत्वस्य स्वातन्त्र्येणाप्युद्देश्यतेति सिद्धम् ।

यदपि च एकत्वग्रहत्वाद्यवच्छिन्नवृत्तिव्यासक्तमेव कर्मत्वं द्वितीयार्थ इति एककर्मत्वोपपत्तिरित्युक्तम् तत् क्रियाजन्यफलाश्रयत्वरूपस्य कर्मत्वस्याश्रयभेदे ऐक्यानुपपत्तेः देवतात्वकर्तृत्ववदखण्डोपाधिरूपस्य च तस्य साहित्यानवच्छिन्नेषु धर्मिष्वनुपपत्तेः उपेक्षितम् । तथा हि--

तत्र व्यासज्यवृत्तिधर्मकल्पना, यत्र धर्मिणोः साहित्यविशिष्टयोः तन्त्रान्वयो व्युत्पत्तिसिद्धः। यथा–'अग्नीषोमीय'मित्यत्र(१) द्वन्द्वावगतपरस्परसाहित्ययोरग्नीषोमयोर्देवतात्वे । प्रकृते तु एकत्वग्रहत्वयोः तदवच्छिन्नव्यक्त्योर्वा सत्यपि पदश्रुत्या पार्ष्ठिके साहित्यावगमे प्रथमतः प्रत्येकमेव कर्मत्वावगमात् न तद्व्यासज्यवृत्तित्वकल्पनावसरः । अत एव यत्र "हिरण्यशकलैः प्रोक्षति" "(२)अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं" इत्यादौ बहूनां प्रातिपदिकार्थानां पश्चान्निरूढलक्षणया साहित्यावगमेऽपि प्रथमतः प्रत्येकमेव विभक्त्यर्थान्वयान्न व्यासज्यवृत्तिकरणत्वदेवतात्वकल्पनेति ध्येयम् ।

न च दम्पत्योस्साहित्यानवगमेऽपि कर्तृत्वस्य व्यासक्तत्वाङ्गीकारान्नायं नियम इति वाच्यम् । तयोरपि "धर्मे चार्थे च कामे च नातिचरितव्ये" ति वचनेन कर्तव्यमात्रे साहित्यावगमात् "स्वर्गकामो यजेते" ति कर्तृत्ववृत्त्येकत्वबलेन तस्य व्यासक्तत्वाङ्गीकाराच्च । न हि तद्वदिह कर्मत्ववृत्त्येकत्वम् । अपि तु कर्मत्वान्वितमपि तदाश्रयवृत्ति, पदश्रुत्या एकत्वाश्रयस्य पार्ष्ठिकप्रातिपदिकार्थाभेदप्रातिपादनात् । यजेतेत्यादिषु तु संख्यायाः कर्तृत्वाद्याश्रितत्वमेव, न तु शाब्दतदाश्रयवृत्तित्वमित्यु-

१. तन्त्रगतपरस्परसहितयोः ।    २. तै. ब्रा. ३-१-४.

पपादितं (१)भावनानिरूपणे । अतश्चानेकग्रहवृत्तिकर्मत्वमेकत्व-बलेन कर्तृत्ववत् व्यासक्तमित्यनाशङ्कनीयम् ।

यद्यपि चास्मिन् पक्षे सिद्धान्ताभिमतः अनेकग्रहसम्मार्गः सिद्ध्यत्येव, तथापि एकत्वस्य यजेतेत्येकत्ववत् विवक्षाप्रस-ङ्गात् अयं पक्षो निरस्तः ।

ननु—मास्त्वनेकेषु ग्रहेषु व्यासक्तमेकं कर्मत्वम्, एकत्वाव-च्छिन्नग्रहत्वावच्छिन्नव्यक्त्योर्वा तत्, तथापि यथैव "पशुना यजेत" इत्यादौ तृतीयोपात्ते करणत्वे एकस्मिन्नेव साक्षात् स म्बन्धेन पश्वन्वयः, परम्परासम्बन्धेन तु पशुनिष्ठे करणे एक-त्वान्वय इति न वस्तुतः करणभेदः, तथा प्रकृतेऽपि द्विती-योपात्ते कर्मत्वे आश्रयतया ग्रहान्वयः परम्परासम्बन्धेन च तस्मिन्नेव चैकत्वान्वय इति वस्तुतः कर्मकारकभेदाभावात् न एककर्मकत्वभङ्ग इति वाक्यभेदाभावेन एकत्वविवक्षा दुर्वारैव । न ह्यत्र ग्रहस्य परिच्छेदकानाकाङ्क्षत्वात् न तत्कर्मत्वे परम्परास-म्बन्धेन एकत्वान्वय इत्यादि कुशकाशावलम्बनं शङ्कितुं शक्यम् । (२)आकाङ्क्षाभावे वैकृताङ्गवत् अकाङ्क्षोत्पादनसंभवेन तस्याकिञ्चि-त्करत्वादिति चेत्—

न ; एकत्वावच्छिन्नस्य साक्षात्सम्बन्धेनान्वयो ग्रहत्वस्य परम्परया इत्यपि संभवेन ग्रहत्वावच्छिन्नस्य साक्षात्सम्बन्धेनैवा-न्वयः एकत्वस्य परम्परयैवेत्यत्र नियामकाभावात् ।

अतश्च विनिगमनाविरहात् सर्वत्र द्वितीयादिस्थले ग्रहत्वैक-त्वाद्यवच्छिन्नव्यक्त्योरेव कर्मत्वान्वयः । तृतीयादिस्थले च पशुत्वैक-त्वयोरेव परम्परया करणत्वान्वय इति न दृष्टान्तेऽपि भवदुक्तप्रका-रसिद्धिः । उपपादितं चैत(३)दाकृत्यधिकरणे । एवं च यत्रापि

१. पू. मी. २-१-२. २. वाक्यभेदाभावे । ३. पू. मी. १-३-९.

द्रव्यवाच्येव प्रातिपदिकं, तत्रापि क्लृप्तव्युत्पत्तिभङ्गापत्तेः न संख्यायां भवदुक्तप्रकाराङ्गीकरणमिति ध्येयम् । तेनैकत्वाव-च्छिन्नग्रहत्वावाच्छिन्नव्यक्त्योः सत्यपि पार्ष्ठिके परस्परैक्ये प्रथमतः प्रत्येकमेव कर्मत्वान्वयात् सिद्धा तदनेकता ।

नचैवमपि वस्तुतः कर्मत्वस्यैकत्वात् सत्यपि वा तत्तदव-च्छेदकावच्छिन्नवृत्तित्ववैशिष्ट्यरूपेण भेदे एकया द्वितीयया युगपत् बोधात् नैककर्मकत्वभङ्ग इति वाच्यम् । सत्यपि कर्मत्वैक्ये तद्बोधैक्ये वा कर्मत्वपर्याप्त्यधिकरणानामनेकबोधविषयत्वेन त-द्भङ्गावश्यम्भावात् । अत एवैकबोधजनकयावद्वृत्तिविषयकर्म-त्वपर्याप्त्यधिकरणतावच्छेदकधर्मत्वं एककर्मकत्वं विवक्षितम् । अत एव च यत्रा "ध्वर्युयजमानौ वाचं यच्छत" इत्यादौ द्वन्द्वोपात्तोद्देश्यस्थले द्वन्द्वावगतसाहित्यविशिष्टानां अन्वयस्यसं-पादकवाग्यमकर्मत्वान्वयात् देवतात्ववत् व्यासज्यवृत्तिकर्मत्वाव-गतेः सत्यपि तदधिकरणानां भेदेन बोधे तेषां पर्याप्तिसम्ब-न्धेन कर्मत्वाधिकरणत्वाभावात् न एककर्मकत्वभङ्ग इति न तत्रानेकोद्देश्यता ।

नचैवं सति तत्र समासोपात्तसाहित्यस्य विवक्षापत्तेः अ-न्यतरपदार्थबाधे अन्यतरवाग्यमानुपपत्तिः । साहित्यविशिष्ट-योः अध्वर्युयजमानयोरुद्देश्यत्वेऽपि स्वरूपे आनर्थक्यात् अपू-र्वसाधनत्वलक्षणायां प्रत्येकवृत्त्यपूर्वसाधनत्वस्यैव लक्षणीयत्वेन तदनापत्तेः । यदि हि अध्वर्युयजमानयोस्संहितयोरेककार्यजन-कत्वं भवेत् ततस्तथैव लक्षणात् स्यात् भवदुक्तानुपपत्तिः । नत्वेतदस्ति । अतस्समस्तेन प्रातिपदिकेन प्रत्येकवृत्त्यपूर्वसा-धनत्वस्यैव लक्षणात् अविवक्षाफललाभेऽपि ,विवक्षाङ्गीकरणं वाक्यभेदपरिहारार्थं न विरुध्यते । प्रकृते तु व्यासज्यवृत्तित्वा-

(१)भवात् युक्तो वाक्यभेद इत्युक्तमेव ।

यदपि प्रातिपदिकैकवचनाभ्यां विशिष्टलक्षणाद्वाक्यभेद इत्युक्तम् , तदप्येकवचनानुरोधेन प्रातिपदिकेऽपि लक्षणायां प्रमाणाभावात् एकवचनस्यैव प्रत्येकग्रहसम्मार्गे प्रत्येकवृत्तितया शक्यार्थमाप्तिमङ्गीकृत्य प्रातिपदिकार्थगतसंख्यामात्रलक्षकस्य साधुत्वाद्यर्थं प्रयोगोपपत्तेरुपेक्षितम् ।

नह्यत्र (२)"धेमन्तर्वेदि मिनोती"तिवत् एकार्थस्य विवक्षायां इतरार्थस्य अप्राप्तिरस्ति । अतएवैकं पदं तात्पर्यग्राहकं इतराद्विशिष्टार्थलक्षकमित्यप्यपास्तम् । विनिगमनाविरहाच्च तात्पर्यग्राहकस्यापि पृथक् स्वार्थबोधपरित्यागेनाविवक्षातुल्यत्वाच्च ।

अतश्च एकवचनेन विशिष्टार्थलक्षणाङ्गीकारेऽपि मुख्येन प्रातिपदिकेन तात्पर्यग्राहकत्वाङ्गीकारात् न विवक्षितार्थसिद्धिः ।

यदपि च वाक्यभेदस्य वाक्यदोषत्वात् न तदनुरोधेन वाक्योपजीव्यपदार्थाविवक्षा युक्तेत्युक्तं, तदपि वाक्यस्य साधुत्वाद्यर्थकैकवचनोपजीवित्वेऽपि अविवक्षाविषयीभूतैकत्वानुपजीवित्वात् वाक्यार्थस्यापि विवक्षितैकत्वाघटितत्वेन तदनुपजीवित्वादुपेक्षितम् ।

तस्मात् न तावदुद्देश्यत्वेन एकत्वविवक्षा ।

नापि गुणत्वेन दशापवित्रवत् । तथा सति गुणभूतप्रातिपदिकानुरोधेन 'उभयं' 'ग्रह'मित्यादौ द्वितीयादिप्रत्ययेन करणत्वलक्षणापत्तेः, तद्वरमनुवादके तस्मिन्नेव सा । "सक्तून् जुहोती"त्यत्र तु सक्तूनामप्राप्तत्वात् अगत्या प्रत्यये लक्षणाश्रयणम् । ग्रहमित्याद्येकपदे ग्रहांशे कर्मत्वाभिधाने तु युगपद्वृत्तिद्वयविरोधः, वैरूप्यं च ।

---

१. संभवात्

२. आप. श्रौ. ७-९-६.

नचेप्सितानीप्सितसाधारणकर्मत्वमात्राभिधानात् नोक्तदोषप्रसङ्गः। तथात्वे निरुक्तैककर्मकत्वभङ्गप्रसङ्गेन वाक्यभेदापत्तेः। अत एव हि सक्तुषु लक्षणा आश्रिता। न तु जुहोतेरकर्मकत्वात् तन्त्ररत्नाद्युक्तात्। (१)"तृतीया च होश्छन्दसी"त्यादिना तस्य सकर्मकत्वावगतेः।

अतश्च गुणत्वसिध्यर्थं लक्षणाभ्युपगमे पूर्वोक्तदोषस्तदवस्थ एवेति सिद्धम्।

यत्तु 'अष्टवर्ष'मित्यादावपि विशेषणाविवक्षा प्रसज्येतेत्युक्तं; तन्न। यत्र हि संस्कारविधिव्यतिरेकेण विनियोगानवगमः अपि तु तदन्यथानुपपत्त्यैव विनियोगकल्पनं, श्रूयमाणो वा विधिः तदपेक्षः; यथा तत्रैव 'सोधीयीत' इत्यादिः, तत्र कार्यं प्रति तावत् उपादेयत्वोपपत्तेः न विशेषणाविवक्षा। न च प्रथमतस्संस्कारान्वये तदविवक्षायां पश्चात्तत्कल्प्ये कार्यान्वये सुतरामविवक्षापत्तिः। प्राथमिकसंस्कारान्वयेऽपि अप्राप्तत्वेनानुवादायोगात् "अर्धमन्तर्वेदि मिनोती"तिवत् वाक्ये विशिष्टलक्षणामङ्गीकृत्य तस्यैकस्यैव कर्मत्वेनान्वयाङ्गीकारात् विवक्षोपपत्तेः। यत्र हि ग्रहमित्यादौ द्वयोरपि प्राप्तिसंभवः एकवचनस्यैव च प्रातिपदिकार्थगतसंख्यालक्षकत्वे (२)पाशन्यायादिरूपनियामकास्तिता तत्र नोभयत्र लक्षणा। प्रकृते तु द्वयोरप्राप्तत्वात् तदङ्गीकारे न काचित् क्षतिः।

नन्वेवमपि(३) "अग्नीनन्वादधाती"त्यत्र नाग्निसाहित्यविवक्षापत्तिः। तत्र (४)"यदाहवनीये जुहोती" त्यादिवचनैः प्रत्येकं विनियोगस्य पूर्वमवगमात्। यद्यपि च तत्र आहवनीयादिपदवाच्यविशेषो न निर्धारितः तथापि तादृशस्यैव विनियोगेऽवगते तद्विशेषजिज्ञासायां(५) "नक्तं गार्हपत्यमादधाती" त्यादिवाक्यैः

१. पा. सू० २-३-३. २. पू.मी. ९-३-४. ३. आप. श्रौ-१-१
४. तै-ब्रा-१-१-१० ५. तै-ब्रा-१-१-४.

प्रत्येकमेवाधानजन्यादृष्टविशिष्टाग्निवाचित्वे आहवनीयादिपदाना-मवगते उत्पत्तिवाक्यस्थाग्निशब्दस्यापि प्रत्येकमेव तल्लक्षकत्वावसा-यात् आधानस्यापि (१)योगसिध्यधिकरणन्यायेन प्रत्येकमेवो-त्पादकत्वोपपत्तिः। अतश्चाग्निपदेन युगपदभिधानावगनमपि सा-हित्यं नान्तरीयकत्वेन सर्वेभ्य इतिवत् अनुवादादविवक्षितं स्यादिति चेत्—

न, उद्देश्यमर्यादया साहित्याविवक्षायामपि उत्पादकाधान-मर्यादया तद्विवक्षोपपत्तेः। आधानाङ्गतया आयतनेषु संभारान निरूप्य तेष्वग्नीनादधातीत्यनेन विधीयमाने संभारनिवपने उ-पादीयमानायतनसाहित्यतद्बहुत्वयोः विवक्षितत्वाचदनुरोधेन आधानस्यापि समुच्चित्य सर्वाग्न्युत्पादकत्वावगतेः। अतश्च तदनुरोधेनाग्नीनित्युत्पत्तिवाक्येऽपि विशिष्टलक्षणया एककर्म-त्वानिर्वाहात् साहित्यविवक्षोपपत्तिः। तस्मात् सिद्धं यत्र पदद्वयेऽपि लक्षणातात्पर्यग्राहकप्रमाणाभावः तत्र प्राप्तोद्देश्यविशेषणस्य संभवत्प्राप्तिकस्य चाविवक्षेति।

अत एव यत्रोपादेयमपि प्राप्तं तत्र तद्विशेषणस्यापि संभव-त्प्राप्तिकस्याविवक्षा। यथा "सत्रादुदवसाये"त्यादौ कर्तृत्वसा-हित्यादेः। अन्यथा प्राप्तकर्तृत्वानुवादेन साहित्यविधिः निमित्ते पृष्ठशमनीयविधिश्चेति वाक्यभेदापत्तेः।

एवं सत्यपि, यदि साहित्यमसंभवत्प्राप्तिकं स्यात् ततो भवेत् विशिष्टविधिसन्दष्टन्यायेन कथंचित् विशिष्टविधिगौरवापादक-त्वमपि कर्तृत्वविधिमङ्गीकृत्य तत्साहित्यविवक्षा। तत्तु एकपदोपादा-नेन नान्तरीयकतया प्राप्तमनुवदिष्यत इति न विवक्षितम्। अ-तस्सिद्धं प्राप्तविशेषणं संभवत्प्राप्तिकं चाविवक्षितमिति। प्रा-

१. पू.मी.४.३-११.

ग्रहं हि ग्रहे प्रत्येकं संमृज्यमाने एकत्वम् ; पुरोडाशयोश्च द्वयोरेव प्रकरणे सत्वात् द्वित्वम् । एवं हविषामपि बहुत्वसत्त्वादि । अतस्तद्वाचकपदैः लक्षणया प्रातिपदिकार्थगतसंख्यादि साधुत्वाद्यर्थमनूद्यते । अतएव यत्र पृथक्पदश्रवणं तत्र साधुत्वादिप्रयोजनासंभवात् विशिष्टलक्षणया विवक्षामाशंक्य निराकरिष्यते (१)हविरुभयत्वाधिकरणे । "अग्नेस्तृणान्यपचिनोती"त्यत्र अपचयस्य द्वितीयया उपयुक्तपरिस्तरण(२)तृणप्रतिपत्तित्वावगमात् तद्गतं तावत् बहुत्वं न विवक्षितमिति न (३)कपिञ्जलाधिकरणन्यायादरः । अग्नेस्तु अपादानत्वेन गुणत्वेऽपि प्रतिपाद्यतृणानुरोधेन प्रत्येकैकत्वानुवादावगतेः न विवक्षितविशेषणत्वम् ।

यत्तु वार्त्तिके अपचयस्य अग्निमात्रसंस्कारार्थत्वमभ्युपगम्य उभयत्र विशेषणाविवक्षेत्युक्तं, तद्विनियोगभङ्गे प्रमाणाभावादविवक्षोपपादनस्य दुर्घटत्वाच्चोपेक्षितम् । सूत्रे लक्षणत्वात् उद्देश्यत्वादिरर्थः ॥

## सू—चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥३-१-१५॥

"पशुना यजेते"त्यादौ तु उपादेयत्वात् पश्वेकत्वाधिकरणन्यायेन(४) विवक्षितेति विशेषः ।

इति सप्तमं ग्रहैकत्वाधिकरणम् ॥

---

१. पू. मी. ६-४-६. २. तृणेति क्वचिन्नास्ति ।
३. पू. मी. ११-१-६. ४. विवक्षेति पाठान्तरम् ।

## अथाष्टमं चमसाधिकरणम् । (८)

### सू—संस्काराद्वा गुणानामव्यवस्था स्यात् ॥३-१-१६॥(पू)

एकत्ववत् ग्रहत्वस्यापि किमुद्देश्यतावच्छेदकतास्ति ? उत नेति विचार्यते । तत्र सम्मार्ष्टीत्येतावन्मात्रेणैव योग्यताबलेन सोमावसेकानिर्हरणप्रयोजकत्वावगतेः सम्मार्गस्य प्रयोजनानाकाङ्क्षत्वात् सत्यपि पदमात्रस्याप्रमाणत्वेनोद्देश्यबोधकपदसाकाङ्क्षत्वे ग्रहपदेनैव लक्षणया सोमपात्रमात्रोद्देशात् ग्रहत्वमविवक्षितम् । यद्यपि च ग्रहत्वं विवक्षितम् तथापि तल्लक्षितापूर्वसाधनत्वस्याविशेषात् चमसेष्वपि सम्मार्गस्स्यादेव । अभ्यासानामार्थिकत्वे तदपूर्वाणामविधेयप्रयोजनत्वाल्लक्षणागत्वानुपपत्तेः । अतो विधेयस्य यागस्यैकत्वात् तदपूर्वस्यापि एकस्यैव कल्पनीयत्वात् तत्साधनत्वस्य चमसेष्वप्युपपत्तिः । "पयसा मैत्रावरुणं श्रीणाति," "सक्तुभि र्मन्थिनं" इत्यादौ तु प्रतिनियतनिर्देशात्तत्तद्देवताकद्रव्यलक्षणया व्यवस्थां मन्यते ॥

( इति पूर्वः पक्षः )

### सू—व्यवस्था वार्थस्य श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् ॥३-१-१७॥ (सि)

( सिद्धान्तः )

न निराकाङ्क्षत्वं पूर्वाधिकरणे मूलयुक्तिः, वाक्यभेदाद्यभावे आकाङ्क्षोत्थापनसम्भवेन तस्य अप्रयोजकत्वात् । अपि तु वाक्यभेदादिरेव । नचात्र तदस्तीत्यविवक्षा न ग्रहत्वस्य । अभ्यासानां च प्रत्यक्षविध्यभावेऽपि श्रुतविध्यन्यथानुपपत्ति-

गम्यत्वेन तदपूर्वाणामपि प्रयोजकत्वोपपत्तेः व्यवस्थासिद्धिः । न हि ज्योतिष्टोमस्यैकत्वेऽपि तज्जन्यं पृथगुत्पत्त्यपूर्वमस्ति । आवश्यकैरभ्यासापूर्वैरेवोत्तराङ्गोपेतैः परमापूर्वसिध्युपपत्तेः । सूत्रं तु श्रुतग्रहत्वरूपार्थलक्षितापूर्वसाधनत्वस्यैव शब्दप्रमाण-गम्यत्वात् व्यवस्थेति व्याख्येयम् ।

इत्यष्टमं चमसाधिकरणम् ॥

अथ नवममानर्थक्यतदङ्गाधिकरणम् । (९)

## सू–आनर्थक्यात्तदङ्गेषु ॥ ३–१–१८ ॥

( विषयः )

वाजपेये "सप्तदशारत्निर्वाजपेयस्य यूपो भवती"ति श्रुतम् ।

( संशयः )

तत्र किं सप्तदशारत्नित्वं प्रति वाजपेयस्योद्देश्यता ? यूपपदं चाविवक्षितम् ; उत यूपस्योद्देश्यता वाजपेयपदमविवक्षितं ? इति विचार्यते ।

( सङ्गतिः )

पूर्वपक्षे षष्ठीश्रुत्या विनियोगात् तदुपयोगित्वेन वाजपेय-प्रातिपदिकार्थस्योद्देश्यतादिविचारात् पादाध्यायसङ्गतिः । यद्यपि षष्ठी न मुख्या श्रुतिः, कारकत्वाद्यवाचकत्वात् । प्रचुरप्रयोगाद्धि सम्बन्धसामान्यमेव षष्ठ्यर्थः । न तु कर्तृत्वकर्मत्वाद्यपि । अत एव तादृशस्थले मुख्यो वाक्यीय एव विनियोगः, तथापि सम्बन्धसामान्यस्य तद्विशेषस्य वा संसर्गमर्यादया भासमानस्य पदार्थविधयैव भानात् भाक्तश्रुतितया सङ्गत्युपपत्तिः । अनन्तरा तु प्रातिपदिकार्थस्य विवक्षा वचनादेरविवक्षेत्युक्ते यत्र वर्हि

प्रातिपदिकार्थद्वयं तत्र कस्य सेत्येवं जिज्ञासाधिकारात् अ-वसररूपा।

( पूर्वपक्षः )

तत्र सप्तदशारत्नित्वं तावत् न यूपोद्देशेन विधातुं शक्यम्। तदा किं बहुव्रीहिरुद्देश्यसमर्पकः? यूपपदं वा? नाद्यः। एक-प्रसरताभङ्गापत्तेः। नान्त्यः। अन्यपदार्थान्वये समासानुपपत्तेः, अरत्नीनां प्राप्तत्वेन तद्विध्यनुपपत्तेश्च। तदनुवादेन संख्यामात्र-विधौ अतिप्रसङ्गोऽपि। यूपेन विशेषणे वाक्यभेदश्च। अतश्च स-प्तदशारत्निद्रव्यं वाजपेयोद्देशेन विधीयते। षष्ठी च स्वामित्वा-र्थिका सती प्राधान्यपरैव। एवं चाव्यवहितप्रधानान्वयः श्रुति-विनियोगः प्रधानकथंभावानुग्रहश्च संगच्छते। अन्यथा हि दीक्षणीयावाङ्नियमन्यायेन पशुपूर्वार्थत्वं यूपमात्रार्थत्वं वा आप-द्येतेति वाजपेयानङ्गत्वात् तद्बाधापत्तिः।

किञ्च द्वयोः पदार्थयोः मध्ये कस्य कस्य विवक्षेति जिज्ञा-सायां मुख्यत्वात् प्रधानत्वाच्च वाजपेयस्यैव सा युक्ता, न यूप-स्य। नहि द्वयोरपि विवक्षा सम्भवति। यूपस्य वाजपेयेन वि-शेषणे वाक्यभेदात् प्रकरणादेव वाजपेयगतत्वलाभेन तस्य व्यर्थत्वाच्च। अत एव वाजपेयोद्देशेन सप्तदशारत्नित्वविशिष्ट-यूपस्यैव प्राकृतकार्यापन्नत्वेन विधिरित्यपास्तम्। यूपस्य प्रा-प्तत्वेन विध्ययोगात् सुबन्तयोः वैशिष्ट्यासम्भवेन प्राप्ते कर्म-ण्यनेकविध्ययोगाच्च।

अतो वाजपेयोद्देशेनैव सप्तदशारत्निद्रव्यविधौ तस्य यूपस-दृशत्वात् यूपपदं गौण्या तदनुवादः अविवक्षितस्वार्थकः। विशेषेण तस्य वाजपेयासाधारणषोडशिपात्ररूपतया निवेशात् तदीय-खादिरत्वादिलाभेन सादृश्योपपत्तेः। तस्मात् वाजपेयोद्देशेनैव

सप्तदशारत्निरप्यविधिः इति प्राप्ते—

( सिद्धान्तः )

सत्यं द्वयोर्मध्ये जघन्यस्याविवक्षा युक्ता । न तु प्रकृते सा सम्भवति । यूपपदस्य गौणत्वप्रसङ्गात् । यूपस्य तूद्देश्यत्वाङ्गीकारे वाजपेयपदस्य न तत् । षष्ठ्या देवदत्तस्य नप्त्रेत्यादौ परम्परासम्बन्धे दर्शनेन साक्षात् परम्परासाधारणसम्बन्धवाचिन्या अविरोधात् । वरं हि स्वार्थत्यागापेक्षया अनुवादमात्रत्वम् ।

अत एवाऽव्यवहितप्रधानान्वयश्रुतिविनियोगश्च शब्दार्थपरित्यागापत्तिभिया परित्यज्यमानोऽपि न दोषमावहति । प्रकरणानुग्रहस्तु यूपोद्देशेन विधावपि उपपन्न एव । तथा हि—यत्तावत् प्रकरणस्य विनियोजकत्वं तत्तावापि षष्ठ्या विनियोगाभावादनुपपन्नमेव । यत्तु प्रकरणनिवेशो वाजपेयापूर्वप्रयुक्तत्वं वा तन्ममाप्युपपन्नमेव । न हि यूपोद्देशेन विधानेऽपि सर्वयूपार्थत्वं प्रसज्यते । अनुवादस्य पुरोवादसापेक्षत्वेन वाजपेयप्रकृतिवच्छब्देन तत्प्रयोगान्तःपातियूपस्यैवोपस्थितत्वात् ।

अत एव न बृहस्पतिसवं प्रकृतिवच्छब्दोपस्थापितस्योद्देश्यता । तस्य वाजपेयप्रकरणस्थत्वेऽपि प्रदेशान्तरस्थत्वेन पुरोवादत्वानुपपत्तेः । नह्यत्र सप्तदशारत्नित्वं प्रयोगविशेषणम्, येन प्रयोगबहिर्भूते बृहस्पतिसवे सत्यपि सन्निधाने निवर्त्येत । तदभावाच्चु "वेद्यां हवींष्यासादयती"तिवत् अतिप्रसक्तेः प्रदेशान्तरस्थत्वेनैव तन्निवारणम् । तत्र च यूपस्य तत्साध्यपशुपूर्वस्य वा सप्तदशारत्नित्वं विनापि प्रकृतौ तत्सिद्धिदर्शनात् तत्स्वरूपेऽप्यानर्थक्यापत्तेः दीक्षणीयावाङ्नियमं बाधित्वा लक्षितलक्षणया अधिकाराख्यप्रकरणसहकृतेन यूपशब्देन वाजपेयापूर्व-

सम्बन्धित्वस्यैव यूपनिष्ठस्य लक्षणात् वाजपेयापूर्वप्रयुक्तत्वसिद्धिः ।

यत्तु एतत्सिद्ध्यर्थं भवदेवेन वाजपेयशब्देन यूपस्य विशेषणमङ्गीकृतं तत्प्रकारान्तरेण सिद्धौ विशेषणवैयर्थ्यादुपेक्षितम् ।

यदपि कैश्चित् भवदेवमतं विशिष्टोद्देशे वाक्यभेदापत्त्या निरस्तं तत् षष्ठ्यन्तस्थले परस्परवैशिष्ट्यस्य प्राचीनरीत्या व्युत्पत्तिसिद्धत्वेन विशिष्टोद्देशस्य स्वयमेवाङ्गीकृतत्वात् अप्रयोजकम् । अस्मद्रीत्या तदापादने त्विष्टापत्तिः ।

तस्मात् वाजपेयपदं तत्सम्बन्धानुवाद एव । न तु विशेषणम् । सम्बन्धोऽपि च यूपस्य वाजपेयेन साक्षादसम्भवात् तदङ्गपशुयागद्वारा सम्पद्यत इति सूत्रार्थः । विधेयं चात्र सप्तदशारत्निद्रव्यं समासार्थः । तच्च विशेष्यमरत्निपरिमाणं वा यद्यपि अतिदेशतस्सम्भवत्प्राप्तिकं तथापि ततः पूर्वप्रवृत्त्या विधीयते साप्तदश्यविधानार्थम् । तस्य च अभेदसम्बन्धेन यूपोद्देशेनैव विधानात् जनकतासम्बन्धेन वा यूपपदलक्षिततत्कार्योद्देशेन विधानान्नैकप्रसरताभङ्गापत्तिः । वरं च गौणकल्पनातः स्वकार्यलक्षणा । ईदृश एव प्रकारो "लोहितोष्णीषा ऋत्विजः" इत्यादावेकप्रसरताभङ्गपरिहारार्थमाश्रीयते । तस्मात् यूपपदमेवोद्देश्यसमर्पकं, न वाजपेयपदमिति सिद्धम् ॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥

## अथ दशममभिक्रमणाधिकरणम् । (१०)

## सू—कर्तृगुणे तु कर्मासमवायात् वाक्यभेदः स्यात् ॥३—१—१९॥

### ( विषयः )

दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतम्-(१)"अभिक्रामं जुहोति" इति ।

### ( संशयः )

तत्राभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गम् ? उत प्रयाजहोममात्राङ्गमिति विचारः ।

### ( पूर्वपक्षः )

तत्र भाष्यकारेण तावत् अभिक्रमणस्य क्रियारूपत्वेनामूर्त्तत्वान्न जुहोत्युपात्ते होमे कारकत्वेनान्वयः ।

नचारुण्यवदिह द्रव्यमुपात्तं, येन तत्परिच्छेदकद्वारा कारकत्वमभ्युपगम्येत । "अव्ययकृतो भावे भवन्ती" इति स्मृत्या णमुला तावत् कर्तुरनुपात्तत्वात् (२)कर्त्रधिकरणन्यायेनाख्यातेनापि तस्यानुपादानाच्च । न च कारकत्वातिरेकेण वाक्यीयपदार्थान्वयः क्वचिदपि सम्भवति । अतो जुहोत्यन्वयं बाधित्वा प्रकरणात् प्रयाजादिवदेव प्रधानाङ्गत्वे ऽवगते सामर्थ्यात् कर्तुराहवनीयादिप्रत्यासत्तिरूपदृष्टकार्यद्वारा तन्निर्वाहकल्पनात् कर्तुश्चाङ्गप्रधानप्रयोगाङ्गत्वेनाभिक्रमणस्यापि प्राकरणिकसर्वहोमाङ्गत्वोपपत्तिः । जुहोतिश्च प्रयाजहोममात्रानुवादः, प्राकरणिकसर्वहोमानुवादो वा । रूपाभावेन कर्मान्तरविधानानुपपत्तेरित्याशङ्क्य कारकत्वेनान्वयासम्भवेऽपि पूर्वकालिकत्वादिना णमुलन्तस्य जुहोतावेवान्वयोपपत्तेः कारकत्वस्यापि

---

१. तै. सं. २-६-१. २. पू. मी. ३-४-८.

च द्रव्यपरिच्छेदद्वारोपपत्तेः न विच्छेदः। उपादानाभावेऽपि च णमुला, तिपा वा अर्थादाक्षेपेण द्वारत्वोपपत्तिः।

अतश्च स्ववाक्योपात्तहोम एवाभिक्रमणस्य निवेशात् तस्य च सन्निहितप्रयाजहोममात्रविषयत्वात् तन्मात्राङ्गत्वमिति सिद्धान्तितम्--(इति भाष्यकारमतम्)।

तत्र धातुसम्बन्धाधिकारे विहितणमुल्प्रत्ययान्तपदाभिधेयस्याभिक्रमणस्य पूर्वकालतादिसम्बन्धेन स्ववाक्योपात्तहोमान्वयं विना नैराकांक्ष्याभावात् तद्विच्छेदशङ्कानुपपत्तेः, जुहोतेः प्रयाजहोममात्रविषयत्वे च बलवत्तरप्रमाणानुपन्यासेन सिद्धान्तस्याप्यनुपपत्तेररुणाधिकरणन्यायेन गतप्रायत्वाच्च वार्तिककारेणोपेक्ष्यान्यथा व्याख्यातम्—

सत्यपि पक्षद्वये स्ववाक्यीयहोमसम्बन्धे किं प्रकृतमात्रहोमसम्बन्धस्योद्देश्यतावच्छेदकत्वं? उत प्रयाजमात्रहोमत्वस्य? इति विचारः।

( सङ्गतिः )

अत्र यद्यपि अभिक्रमणं वाक्यादेव होमाङ्गं, णमुलः पूर्वकालतादिमात्रशक्तत्वेन कारकत्वावाचिनः मुख्यश्रुतित्वानुपपत्तेः, धातुसम्बन्धस्याप्यङ्गत्वस्य संसर्गविधया गम्यमानत्वेन षष्ठीवत् गौणश्रुतित्वस्याप्यनुपपत्तेश्च, द्वारीभूतकर्त्रङ्गत्वं तु लिङ्गादेवेति न श्रुतिविनियोगः, तथापि णमुलपदाभावे वाक्येनाप्यङ्गत्वायोगात् णमुल्श्रुत्युन्नीतत्वे श्रौतत्वोपचारात् पादसङ्गतिः। अनन्तरा तु साक्षात् प्रधानाङ्गत्वे होमाङ्गत्वश्रवणेन पूर्ववत् बाधिते तद्विशिष्टविचारादवसररूपा।

( पूर्वपक्षः )

तत्र वाक्यात् होमाङ्गत्वे प्रमिते तत्स्वरूपे आनर्थक्यप्रसक्तौ

प्रधानाधिकाराख्यप्रकरणेन कर्तृसंस्कारद्वारा प्रधानापूर्वसम्बन्धिहोमत्वस्य उद्देश्यतावच्छेदकत्वावगतेः कर्तुश्चाङ्गप्रधानसाधारणस्य द्वारत्वेन प्रधानसम्बन्धित्वस्यापि होमे साक्षात्परम्परासाधारण्येनैव विवक्षितत्वात् प्रकृतसर्वहोमाङ्गत्वमभिक्रमणस्य ।

अथ वा "वेद्यां हवींष्यासादयती" तिवत् वाक्यसङ्कोचे प्रमाणाभावात् प्रधानाधिकारवत् अङ्गाधिकारस्याप्यपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वावसायात् प्रकृतसर्वहोमार्थत्वासिद्धिः । अत एव सत्यपि प्रयाजादीनां वाचनिकाङ्गसन्दंशे नावान्तराधिकारेण तन्मात्रस्य तात्पर्यग्राहकत्वम्, वाक्यसङ्कोचापत्तेः । यदि तत्र वाचनिकाङ्गसन्दंशमध्ये अभिक्रामतीत्येवाश्रोष्यत ततो वाक्यव्यापाराभावात् भवेदप्यवान्तरप्रकरणेन प्रयाजाङ्गतामात्रम् । नत्वेतदस्ति ।

वस्तुतस्तु तदापि नैव प्रयाजाङ्गतामात्रम् । प्रयाजानामिष्टफलकत्वाभावे इतिकर्तव्यताकाङ्क्षाभावात् कथंभावात्मकप्रकरणस्य विनियोजकत्वासिद्धेः प्रधानस्येतिकर्तव्यताकाङ्क्षायां प्रयाजानां तेन ग्रहणात् क्रतूपकारभाव्यत्वावगतेः । तेषामितिकर्तव्यताकाङ्क्षाकल्पने तु प्रधानाकाङ्क्षया प्रयाजादीनामिवाभिक्रमणस्यापि प्रथमप्रवृत्तया ग्रहणात् प्रधानमात्राङ्गत्वापत्तिः ।

एवं सत्यपि यद्यङ्गाकाङ्क्षयापि गृह्येत ततः प्रयाजानुयाजानां परस्परा तापत्तेः गृहमेधीये यथाशक्तिप्रयोगे आज्यभागमात्रेणोपपत्तावपि काम्यप्रयोगे आज्यभाग्याङ्गतया प्रयाजादिकरणापत्तिः ।

न च भावनास्वाभाव्येनोत्पद्यमानापि प्रयाजादीनामङ्गाकाङ्क्षा उपजीव्येन प्रथमप्रवृत्तेन च प्रधानकथम्भावेन प्रतिबद्धेति न तथा परस्पराङ्गत्वं, आवश्यकश्रुत्यादित्रयविनियुक्ताङ्गसम्बन्धेन च प्रतिबन्धकनिरोधे सति उज्जीवितया अभिक्रमणस्यापि

तत्सन्दंशपतितस्य ग्रहणोपपत्तिरिति वाच्यम् । वाचनिकाङ्गस-म्बन्धसिद्ध्यर्थं कल्प्यस्य प्रतिबन्धकनिरोधस्य धर्मिग्राहकप्र-माणेन प्रत्येकमेव कल्पयितुमुचितत्वात् अभिक्रमणविषये तन्नि-रोधकल्पने प्रमाणाभावादनुज्जीवितप्रयाजाकाङ्क्षया तद्ग्रहणा-नुपपत्तेः । तस्मान्न तावत् अवान्तरप्रकरणेन प्रयाजाङ्गत्वम् । शुद्धसन्निधिवाचनिकाङ्गसन्दंशरूपाधिकाराख्यसन्निधिभ्यां तु प्रधानाकाङ्क्षारूपमहाप्रकरणविरोधात् अनाशङ्क्यमेव तदङ्गत्वम् । प्रकृते तु वाक्येनैव तद्विनियोगात् कस्यापि प्रकरणस्य विनियो-जकत्वाभावेन वाक्यसङ्कोचपरिहारार्थं सर्वहोमार्थत्वमेव तत्क-र्तृसंस्कारद्वारा युक्तम् ।

सूत्रं तु कर्तृगुणे अभिक्रमणे प्रयाजकर्मण्यसमवाया-त् तद्वाक्यैकवाक्यता न स्यादिति व्याख्येयम् ।

( इति पूर्वपक्षः )

## सू—साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ ३–१–२० ॥ ( सि )

( अथ सिद्धान्तः )

नाभिक्रमणं प्राकरणिकसर्वहोमाङ्गम् । अपि तु प्रयाजहो-माङ्गमेव । तदधिकारस्यैवापूर्वसाधनलक्षणातात्पर्यग्राहकत्वात् । तथा हि—

सर्वत्रैव तावत् फलवतः प्रधानस्यैवाधिकारः व्यापक-त्वेन प्राथमिकत्वात् प्रधानवृत्तित्वाच्च लक्षणातात्पर्यग्राहकः, नत्वङ्गाधिकारः । अत एव वेद्यादिवाक्येष्वपि प्रधानाधिकार-स्यैव तात्पर्यग्राहकत्वम् । तत्तु न तादर्थ्यसम्बन्धेन ; अपि तु

उपकारकत्वमात्रेण इयतः अङ्गानामपि सङ्ग्रहः । ये तु श्रुत्यादि त्रयान्यतरनियुक्ताङ्गविशेषसम्बद्धा धर्माः तेष्वङ्गाधिकारस्यैव तात्पर्यग्राहकत्वम् । यथा "समानयते जुह्वामौपभृतं" "प्रयाजशेषेण हवींष्यभिघारयती" त्यादौ । अत्र हि दीक्षणीयावाक्यनियमन्यायेन प्रधानसम्बन्धायोगात् अङ्गाधिकारस्यैव तात्पर्यग्राहकत्वमावश्यकम् । अतश्च तन्मध्यपतिताभिक्रमणेऽपि स एवाङ्गीकर्तव्यः । उत्तेजनयुक्तो ह्यङ्गाधिकारः धर्मविधौ लक्षणातात्पर्यग्राहकः, नानुत्तेजितः, प्रधानाधिकारप्रतिबद्धत्वात् । उत्तेजकं चान्यानिवेश्यङ्गसम्बन्धानुपपत्तिः ।

न च सा प्रत्येकमुत्तेजिका, लाघवादाद्येनैव कारणतोद्बोधनरूपस्योत्तेजनस्य जननाङ्गीकारात् तदुत्तेजनस्य चान्तिमवाचनिकाङ्गसम्बन्धनाश्यत्वाङ्गीकारात् तन्मध्यपतितेऽप्यभिक्रमणे उत्तेजनयुक्ताङ्गाधिकारसत्त्वेन तस्य तात्पर्यग्राहकत्वोपपत्तिः ।

नचैवं तस्याप्रतिबद्धस्य तात्पर्यग्राहकत्वोपपत्तावपि प्रधानाधिकारस्यापि तथात्वेन तथापत्तिरिति वाच्यम् । अप्रतिबद्धपरोत्पत्तौ तेन पूर्वबाधस्य (१)षाष्ठन्यायनियतत्वात् । अतश्चावान्तराधिकारापेक्षया प्रधानाधिकारस्य दुर्बलत्वात् न तस्य तात्पर्यग्राहकत्वम् । न च वाक्यसङ्कोचपरिहारार्थं तदङ्गीकारः । तस्य स्वोद्देश्ये आनर्थक्यपरिहारार्थतया उपजीव्यप्रबलत्वत्तात्पर्यग्राहकप्रमाणानुरोधवृत्तित्वनैयत्यात् । अन्यथा वेद्यादेरपि अव्यभिचरितक्रतुसम्बन्धमात्रेण प्रकृतिविकृतिसाधारणहविर्मात्रार्थत्वापत्तेः । अतश्च यथैव तत्र ततः प्रबलेन महाधिकारेणैव तात्पर्यग्रहः तथात्र ततोऽपि प्रबलेनाङ्गाधिकारेणैवेति सिद्धं प-

(१) षष्ठपञ्चमसप्तदशाधिकरणस्थापच्छेदन्यायविषयत्वादित्यर्थः ।

याजमात्रहोमाङ्गत्वमभिक्रमणस्य ।

ननु प्रधान इव प्रयाजाद्यङ्गेषु होमविधायकाभावात् कथं तदङ्गत्वमभिक्रमणस्य ? 'चतुर्गृहीतं जुहोती' त्यनारभ्यवादेन होमाद्यनुवादेन चतुर्गृहीतमात्रविधानात् । प्रधाने तु 'चतुरवत्तं जुहोती' त्यनेनावत्तसंस्कारकतया होमविधानात्तदङ्गत्वमेवाभिक्रमणस्येति चेत्—

यजिपदस्याचारात् देवतोद्देशद्रव्यत्यागोभयवृत्तियागत्वजात्यवच्छिन्ने प्रक्षेपाङ्गक एव यागे शक्त्यवधारणेन यजतिचोदनयैव सर्वत्र प्रक्षेपाक्षेपात् । अत एव यत्र 'चतुरवत्तं जुहोती' ति प्रत्यक्षवचनं तत्र नाक्षेपः । तत्प्रयोजनं तु तद्विकृतावाक्षेपप्रतिबन्धद्वारा प्रक्षेपाङ्गाहवनीयप्रणयनादीनामतिदेशसंपादनद्वारा तदाश्रितगुणकामानामप्राप्तिः । यत्र तु पर्यग्निकरणान्ताङ्गविधानं तत्रातिदेशेन प्रक्षेपप्राप्त्यभावात् उद्देशेन च प्रत्यक्षयजिश्रवणाभावात् देवतासम्बन्धेन प्रक्षेपरहितत्यागादेरेवानुमानात् न तत्र प्रक्षेपानुष्ठानम् । गृहमेधीये तु पुनर्विधानात् स इति ध्येयम् । तत्सिद्धं प्रयाजहोमाङ्गत्वमभिक्रमणस्येति ।

एवंच यद्यपि वाचनिकाङ्गसन्दशमध्ये अभिक्रामतीत्येवं णमुल्रहितः प्रयुज्येत तथापि तस्य प्रयाजमात्राङ्गत्वमवान्तरप्रकरणात् स्यादेव । सर्वत्र हि प्रधानभावनावदामिवाङ्गभावनानामपि अस्त्येवेतिकर्तव्यताकाङ्क्षा । सा परं फलवत्प्रधानेतिकर्तव्यताकाङ्क्षालक्षणेन महाप्रकरणेन प्रतिबध्यते सन्निध्याम्नानाविषये । अत एव तदा तन्निवृत्तिरतिदेशेनाक्षेपलभ्यस्वसंपादनेन वा साधारणैर्वा आचमनादिभिरिष्टा ।

यत्र तु वाचनिकाङ्गसन्दंशः तत्राद्याङ्गेन प्रयाजाकाङ्क्षोज्जीवनात् अन्तिमेन च तदुत्तेजननाशात् उत्तेजिताकाङ्क्षाल-

क्षणावान्तरप्रकरणेन पूर्ववद्देवाभिक्रमणस्य प्रयाजाङ्गत्वसिद्धिः । यद्यपि च लोके उत्तेजकाभावेऽप्यग्निमात्रेण दाहदर्शनात् प्रथमतृतीयक्षणयोः उत्तेजकसत्त्वे द्वितीयक्षणे मणिमात्रेण प्रतिबन्धदर्शनाच्च नोत्तेजकस्योत्तेजनं कार्यम्, अपि तु तत्तदुत्तेजकाविरहविशिष्टमणेः प्रतिबन्धकत्वं, तदभावश्चाग्नेः सहकारीत्येव कल्प्यते, तथापि प्रकृते तादृशव्यभिचाराभावात् न तत्तदुत्तेजकाभावकूटस्य प्रतिबन्धकतावच्छेदके प्रवेशः, गौरवात्; अपि तु आद्योत्तेजकस्यैव भावरूपोत्तेजनजनकत्वमन्तिमेन च तन्नाशः, तद्विरहविशिष्टस्यैव च महाप्रकरणस्य प्रतिबन्धकत्वं तदभावश्च सहकारीत्येव कल्प्यते इति न कश्चिद्विरोधः ।

प्रयोजनं पक्षद्वयेऽपि योग्यतारूपलिङ्गात् आहवनीयसमीपप्रापणरूपकर्तृसंस्कारार्थत्वावगतेः प्रतिहोममावृत्त्या अभिक्रमणानुष्ठानात् स्पष्टम् । अत एव णमुलुक्ताभीक्ष्ण्यानुवादोऽप्येवं सङ्गच्छते ।

सूत्रं तु सन्दंशेनाभिव्यक्ताकाङ्क्षमाभिक्रमणवाक्यं प्रयाजवाक्यैकवाक्यं स्यात्, न ह्याद्योत्तेजकमात्रेणाभिव्यक्तेः समाप्तिरस्ति, तस्या अन्तिमनाश्यत्वादिति व्याख्येयम् ॥

इति दशममाभिक्रमणाधिकरणम् ॥

---

अथैकादशमुपवीताधिकरणम् ॥ (११)

## सू-सन्दिग्धे तु व्यवायात् वाक्यभेदस्स्यात् ॥ ३-१-२१ ॥

(विषयसंशयौ)

दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरनुब्रूयात्' इत्यनेन सामिधेनीर्विधाय तासां वाचनिका गुणाः विहिताः । ततो निवि-

दो नाम मन्त्रा(१)"देवेद्धो मन्विद्ध" इत्यादयः। ततः काम्यास्सा-मिधेनीकल्पाः(२)"एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये"त्यादयः। तत उपवीत(३)"उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति। ततः पुनरपि सामिधेनीगुणाः(४)"अन्तरानूच्यं सदेवत्वाय" इत्येवमादयः। तत्र किमुपवीतस्यावान्तरप्रकरणात् सामिधेन्यङ्गत्वं? उत महाप्रकरणात् दर्शपूर्णमासाङ्गत्वमिति विचार्यते। यद्यपि च त्रिसूत्रनवतन्तुयज्ञोपवीतस्य (५) "तस्माद्यज्ञोपवीत्येवाधीयीत याजयेत् यजेत वा" इत्यनारभ्याधीतकाठकवचनेन सर्वकर्मार्थत्वेनैव विधानात् न तद्विषयोऽयं विधिस्संभवति, तथापि वासोविन्यासविशेषरूपस्योपवीतस्यानेन विधानात् विचारोपपत्तिः। पूर्वाधिकरणप्रत्युदाहरणमात्रतया च साक्षात् पादसङ्गत्यभावेऽपि न दोषः।

( पूर्वपक्षः )

तत्राभितस्सामिधेनीवाचनिकाङ्गसङ्कीर्तनात् तदङ्गत्वम्। न च तासामग्निसमिन्धनरूपदृष्टकार्यार्थत्वात् दृष्टरूपेतिकर्तव्यतयैव तदाकाङ्क्षानिवृत्त्युपपत्तेः सत्यपि वाचनिकानां वचनादेवाङ्गत्वे नोपवीतग्राहित्वमिति वाच्यम्। अग्निसमिन्धनस्यापि अपूर्वसाधनत्वोपहितत्वेन भाव्यत्वात् सामिधेनीनां नियमादृष्टजनकत्वाच्च वैधेतिकर्तव्यताकाङ्क्षोपपत्तेः।

नचैवमपि काम्यगुणैस्सन्दंशविच्छेदात् ग्रहणोपपत्तिः। तेषामप्याश्रयत्वेनान्वयसत्वात् सामिधेनीसान्निधिविच्छेदकत्वस्य तावदनुपपत्तेः। आकाङ्क्षाविच्छेदोऽपि किं नाशाख्योऽभिप्रेतः? प्रतिबन्धाख्यो वा? गुणस्य वाक्यात् फलार्थत्वेन व्यापकसा-

१. तै. सं. २-५. ९. २. तै. सं. २. ५. १०
३. तै. सं. २. ५. ११. ४. २. तै. सं. २-५-११.
५. तै. आ. २. १.

मिधेनीतिकर्तव्यताकाङ्क्षया अग्रहणेऽपि तदुत्तरभाविवाचनिकाङ्गदर्शनेन तदाकाङ्क्षानाशकल्पनानुपपत्तेः, गुणस्यैवान्तिमत्वेन प्रतिबन्धकल्पनानुपपत्तेश्च । अत एव गोदोहनाद्युत्तरकालीनवाचनिकाङ्गभाविपदार्थानामसंयुक्तानामपि दर्शपूर्णमासाङ्गत्वासिद्धिः । अतश्च सामिधेनीनामुत्तेजनयुक्तसाकाङ्क्षसन्निधिरूपावान्तरप्रकरणसत्त्वादुपवीतस्य तदङ्गत्वम् ।

नचैवमपि निविन्मन्त्रस्य महाप्रकरणसहकृतेन लिङ्गेन सामिधेनीवदेव समिद्धाग्निप्रकाशकत्वावगतेरवान्तरप्रकरणेन सामिधेन्यङ्गत्वायोगात् अनुपजीव्यान्याङ्गनिविन्मन्त्रेण सामिधेनीप्रकरणविच्छेदोपपत्तेरिति वाच्यम् । उपरितनवाचनिकाङ्गदर्शनेनैव तादृशेनापि तन्नाशकल्पनानुपपत्तेः । अतश्च यथैव पूषानुमन्त्रणमन्त्रेण पूषदेवत्यकर्माङ्गभूतेनाऽपि तदुत्तरं वाचनिकदर्शाङ्गाम्नानात् न दर्शपूर्णमासप्रकरणविच्छेदः, अपितु वाचनिकाङ्गानां तत्पूर्वभाव्यसंयुक्तानां च दर्शाकाङ्क्षयैव ग्रहणम् , पूषानुमन्त्रणमन्त्रस्तु परप्रकरणपठित इति कल्प्यते; तथैव प्रकृते सामिधेनीनामन्ते वाचनिकाङ्गदर्शनेन निविदां परप्रकरणस्थत्वावसायात् सामिधेनीप्रकरणविच्छेदकत्वानुपपत्तेः उत्तरभाविवाचनिकाङ्गानां तत्पूर्वभाव्युपवीतस्य च मध्ये अन्याकाङ्क्षया ग्रहणोपपत्तिः । अत एव निवित्कार्यस्याग्निसमिन्धनस्य निविद्भिरुज्जीविताकाङ्क्षस्यापि निविदामन्तिमत्वेन तदन्वयोत्तरमुत्तेजननाशात् पूषदेवत्ययागस्य पूषानुमन्त्रणमन्त्रोत्तराम्नातानूयाजाद्यग्राहित्ववत् उपवीताग्राहकत्वम् ।

वस्तुतस्तु निविदां लिङ्गादग्निसमिन्धनरूपसामिधेनीफलप्रकाशकानामपि बलवदवान्तरप्रकरणात् सामिधेन्यङ्गत्वोपपत्तिः । इष्यते हि स्वर्गप्रकाशनार्थस्याप्यगन्मेत्यस्य मन्त्रस्य प्रकरणात्

दर्शपूर्णमासाङ्गत्वम् । अतस्स्वाङ्गेन तेन स्वव्यवधानायोगात् उपवीतं सामिधेन्यङ्गमेवेति शङ्कां मन्दविषन्यायेन परिहर्तुमिदं प्रत्युदाहरणसूत्रम् ॥

( सिद्धान्तः )

परिहारप्रकारश्च–भवेत् सामिधेन्यङ्गमुपवीतं यदि तासां निविद्भिः प्रकरणं न विच्छेत्स्येत । तासां तु लिङ्गेन सामिधेनीवदेवाग्निसमिन्धनप्रकाशकत्वावगतेः अवान्तरप्रकरणमात्रेण सामिधेन्यङ्गत्वायोगात् तत्प्रकरणविच्छेदकत्वोपपत्तिः ।

यत्तु स्वर्गमन्त्रवत् फलप्रकाशकत्वेनाविरोध इति, तत् स्वर्गादिफलस्यादृष्टद्वारा साध्यत्वेन सन्दिग्धस्यावश्यंभावनिश्चयरूपकर्मापेक्षश्रद्धाजननार्थत्वेन मन्त्रस्य कर्माङ्गत्वोपपत्तावपि अग्निसमिन्धनरूपसामिधेनीफलस्य दृष्टद्वारा साध्यत्वेनासन्दिग्धत्वात् न तत्प्रकाशकत्वेन मन्त्रस्य सामिधेन्यङ्गत्वोपपत्तिरित्युपेक्षितम् ।

किञ्च सामिधेनीनामपि निवित्फलप्रकाशकत्वस्योद्भावयितुं शक्यत्वान्नियामकाभावः। न च सामिधेनीसन्दंशस्यैव नियामकता । अन्तरानूच्यमित्येवमादीनां अनुवचनमात्रोद्देशेन गुणविधायिनां विशिष्य सामिधेन्यनुपस्थापकत्वेन सन्दंशासिद्धेरेव वक्ष्यमाणत्वात् । अत एव न पूषानुमन्त्रणमन्त्रवत् निविदां परप्रकरणपठितत्वकल्पनाऽभ्युपेया । अपि तु सन्दंशेन परप्रकरणस्थत्वकल्पनावसरः। यत्र हि बहूनां वाचनिकाङ्गानां उत्तरकालमाम्नानं तत्राल्पेन तन्मध्यपतितेनान्याङ्गेन प्रकरणविच्छेदायोगात् एकस्य तस्यैव परप्रकरणस्थत्वकल्पना युज्यते । यत्र तु बहून्यङ्गानि पठित्वा दूरे कचित् वाचनिकाङ्गाम्नानं, तत्राल्पानुरोधेन बहूनि विच्छेदकान्यपनीय प्रकरणानुवृत्तिकल्पनायोगात् अल्पस्यैवा-

नारभ्याधीतन्यायेनान्वयः परिकल्प्यते। अत एव तत्पूर्वभाव्य-संयुक्तस्य विश्वजिदादेः स्वर्गफलकल्पनम्। अन्यथा प्रकरणात् दर्शाङ्गत्वापत्तेः।

नचैवमपि विश्वजित्पूर्वभाविनः अन्यानङ्गस्यैव श्येनादेः वि-श्वजिदङ्गं स्यादिति फलकल्पनाविषयाभावः। यत्र पूर्वोत्तरं विवि-धकर्मपुरस्कारेण वाचानिकसंख्यादिरूपगुणाम्नानं तत्र तन्मध्यप-तितस्य विश्वजितः पूर्वोत्तरभाविकर्माङ्गत्वस्य तद्गुणाङ्गत्वस्य वा आकाङ्क्षानुवर्तकाभावेन वक्तुमशक्यत्वात् फलकल्पनोपपत्तेः। अतश्च प्रकृतेऽपि बहुभिर्निविन्मन्त्रैः व्यवधानात् प्रकरणविच्छे-दोपपत्तेरुत्तराङ्गस्यानारभ्याधीतन्यायेन सामिधेन्यङ्गत्वोपपत्तेः नोपवीतविधौ प्रकरणानुवृत्तिः।

वस्तुतस्तु अन्तरानूच्यमित्यादौ सामिधेनीमात्रवाचिपदा-भावात् अनुवाक्याद्यनुवचनसाधारण्येन सर्वप्रकृताङ्गानुवचन-मात्रोद्देशेन गुणविधानात् न तत्सामिधेनीप्रकरणानुवृत्तिशङ्कापि।

यदपि चान्ते(१)देवा वै सामिधेनीरनूच्येत्याद्यर्थवादे सामिधे-नीकीर्तनं तदप्याधारस्तुत्यर्थत्वात् न सामिधेनीप्रकरणानुवृत्तिसू-चकम्। नचैवं प्रकरणाभावे तासामाश्रयत्वानुपपत्तेः कथं काम्यवाक्ये तदाश्रितस्य गुणस्य फलार्थत्वेन विधानोपपत्ति-रिति वाच्यम्। आश्रयालाभेन तत्रानुवचनान्तरस्यैव संख्यादि-विशिष्टस्य (२)रेवत्यधिकरणन्यायेन गुणात् भिन्नस्य फलं वि-ध्यङ्गीकारात् तस्य च संख्यायुक्तानुवचनत्वसादृश्यात् पञ्चदश-संख्यायुक्तानुवचनप्रकृतिकत्वावगतेः तदीयर्चां त्रिरभ्यासादि-धर्मान्तराणां च प्राप्त्युपपत्तिः।

ननु प्रकृतावनुवचनस्य द्वितीयया ऋक्संस्कारार्थत्वावग-

---

१. तै. स. २-५-१०. २. पू. मी. २-२-१२.

मात् अग्निसमिन्धनप्रकाशकानामृचां प्राधान्येनातिदेशायोगः । न चानुवचनस्य ऋक्संस्कारार्थत्वेन विधाने उद्देश्यविशेषणीभूतायास्संख्यायाः, अविवक्षापत्तिः । एकादशानामृचां प्रकृतौ समाम्नातानां प्रथमोत्तमत्रिरभ्यासेन पाञ्चदश्यस्य प्राप्तत्वेनेष्टापत्तेः । न च पाञ्चदश्यविध्यभावे अनारभ्याधीतसाप्तदश्यस्य ऋगभ्यासेन ऋगन्तरागमेन वा प्रकृतावेव निवेशोपपत्तेः तद्व्यावृत्त्यर्थं पाञ्चदश्यविध्यावश्यकत्वमिति वाच्यम् । तर्हि उच्चारणरूपस्यार्थाभिधानरूपस्य वानुवचनस्य मन्त्रान्तरेष्विव न्यायादेव प्राप्तेः तदनूद्य सामिधेन्युद्देशेन पाञ्चदश्यविधानोपपत्तेः । सर्वथा प्रकृतावृचां प्राधान्यादतिदेशायोगः ।

यद्यपि च तासामनुवचनं प्रति गुणत्वं स्यात् तथाप्यनुवचनफलाग्निसमिन्धनप्रकाशकत्वेनैव तत् सामर्थ्यात् स्यात् । अतश्च द्वारलोपात् विकृतौ तद्बाधः, प्रतिष्ठापरतया ऊहो वा प्रसज्येत, ततश्च नित्यानुवचनस्य प्रसङ्गसिद्धिर्वक्ष्यमाणा विरुद्ध्येतेति चेत्, न; यत एवात्र सर्वं सम्भवत्प्राप्तिकं तत एव वाक्यवैयर्थ्यपरिहाराय सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य सामिधेनीगुणकानुवचनस्यैव सामर्थ्यपरिकल्पिताग्निसमिन्धनार्थत्वेन विध्यङ्गीकारात् ।

न च साप्तदश्यव्यावृत्तिफलकपाञ्चदश्यविधानेनार्थवत्ता । अनारभ्याधीतस्य साप्तदश्यस्य विकृतिपरत्वेनाप्युपपत्तौ प्राकरणिकमन्त्राणां अभ्यासस्य ऋगन्तरागमस्य वा कल्पयितुमशक्यत्वेन तस्य प्रकृतौ प्रसक्त्यभावात्, प्रसक्तावपि वा (३)'सप्तदश वैश्यस्ये'ति वैश्यनिमित्तकसाप्तदश्यविधिवैयर्थ्यापत्तेः तद्बलेनैव व्यावृत्तिसिद्धेश्च । एवञ्च प्राकरणिकेन पाञ्चदश्येनानार-

३. तै. सं. २-१-९.

ध्याधीतसामदश्यबाध इत्याद्यधिकरणानि पाञ्चदश्यविधिं कृत्वा चिन्तया प्रत्यक्षशिष्टप्राकरणिकमन्त्रपाञ्चदश्यपरतया द्रष्टव्यानि ।

अत एवानारभ्याधीतस्य सामदश्यविधेः मित्रविन्दादिप्रकरणस्थविधिना उपसंहारवत् वैश्यनिमित्तकविधिना उपसंहारशङ्कापि इष्टापत्त्यैव परिहृता । अतश्च पाञ्चदश्यस्य प्रकृतौ विध्यभावात् अनुवचनस्यैव सामिधेनीगुणकस्यार्थकर्मतया विध्यवगतेः युक्तो विकृत्यर्थानुवचने ऋचामतिदेशः । गुणत्वमपि च तासां नानुवचनफलप्रकाशकतया, अपित्वनुवचनजनकतयैव लाघवात् । अतश्च न तद्द्वारलोपाद्बाधः ऊहो वा ।

नन्वेवं फलार्थस्यानुवचनान्तरस्य बहिःक्रत्वप्यनुष्ठानोपपत्तेः क्रतुप्रकरणाम्नानवैयर्थ्यापत्तिः । न च प्रकृतौ अनुशब्दवाच्यस्य (१)'नमः प्रवक्त्रे' इत्यादि परप्रयुक्तनिगदानन्तर्यस्याप्यङ्गत्वेन विकृतौ तस्यातिदेशेन प्राप्तेः परप्रयुक्तनिगदाक्षेपायोगात् आनन्तर्यासम्भवेन बहिःक्रतु प्रयोगानुपपत्तिरिति वाच्यम् । तस्य(२) "पञ्चजना मम होत्रं जुषध्वं । तदद्य वाचः प्रथमं मशीय" इत्यादिवाक्यपर्यालोचनया करिष्यमाणसर्वकर्मार्थत्वेन सामिधेनीमात्रार्थत्वेन वा प्रवक्त्रादिप्रार्थनापरत्वावसायात् सामिधेन्यङ्गत्वस्यापि सत्त्वेन बहिःक्रतु प्रयोज्यत्वोपपत्तेः ।

नचैवमपि अनुवाक्यादिवत् 'अग्नये समिध्यमानायानुब्रूही'ति प्रैषानन्तर्यस्यैवानुशब्दार्थत्वावसायात् तस्य चाग्निसमिन्धनप्रकाशकस्य बहिःक्रतु प्रयोगायोगात् तदानन्तर्यलाभार्थमनुवचनान्तरस्यापि क्रतुमध्ये प्रयोगोपपत्तिरिति वाच्यम् । तस्यापि स्वफलार्थमनुवचनानुज्ञापनरूपस्याङ्गस्य विकृतावूहेन प्रयोगो-

१. आश्व. श्रौ. १-२-१.     २. आश्व. श्रौ. १-२-१.

पपत्तेः बहिःप्रयोगेऽप्याक्षेपसम्भवादिति वाच्यम् । अनुशब्देन उत्तरकालवाचिना साङ्गसामिधेनीभावनायां तदङ्गभूतपूर्वपदार्थोत्तरकालत्वस्य विहितत्वात् पूर्वपदार्थस्य च परप्रयुक्तस्याक्षेप्तुमशक्यत्वेन तदुत्तरकालत्वासम्भवात् बहिःक्रतु प्रयोगानुपपत्तेः।

न च पाठप्राप्तपूर्वपदार्थानन्तर्यरूपस्य क्रमस्यानुशब्देनानुवादात् तदभावेऽपि च विकृतौ लुप्तपूर्वपदार्थान्तरभाव्युत्तरपदार्थानुष्ठानवत् बहिःक्रतु प्रयोगे प्रधानभूतानुवचनमात्रस्यानुष्ठानोपपत्तिरिति वाच्यम् । विकृतौ पदार्थप्राप्त्यनन्तरं प्राप्स्यमानस्य क्रमस्य कथमप्यसम्भवेन तं विना पदार्थानुष्ठानेऽपि इह प्रकरणमध्याम्नातस्य वैकृतानुवचनस्य क्रतुमध्यप्रयोगेनापि क्रमानुग्रहसम्भवे काम्यप्रधानमात्रानुष्ठानानुपपत्तेः क्रतुप्रकरणमध्यानुष्ठीयमानवैकृतानुवचनेनैव प्रसङ्गात् प्रकृतानुवचनकार्यसिद्धेः न तस्य प्रधानानुष्ठानापत्तिः । अतश्च काम्यकल्पेष्वपि सामिधेनीप्रकरणानुवृत्त्यनपेक्षणात् न तदनुरोधेनाप्युपवीतविधौ तदनुवृत्तिरिति न सामिधेनीमात्राङ्गमुपवीतम् ।

न च तर्हि काम्याङ्गमेवास्तूपवीतम् । तेषां फलवत्त्वेनानुपहताकाङ्क्षाणामुज्जीवनार्थं दर्शपूर्णमासादिष्विव सन्दंशानपेक्षणात् । पूर्वोत्तरावधित्वेन हि तत्र क्वचित्सन्दंशोऽपेक्ष्यते । न तु तदुज्जीवनार्थम्। अप्रतिबद्धत्वात् । पूर्वोत्तरावधेस्त्विह वाचनिकात्वैव सिद्धेः न सन्दंशापेक्षणमिति वाच्यम् । तेषां विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षत्वात् प्राकृताङ्गानुवादेन प्राकृताङ्गसम्बन्धिगुणविधिमध्यपातेन वा विधिं विना प्रकरणेन ग्रहणायोगात फलवतोऽपि व्यापकमहाप्रकरणमध्यपातेनाकाङ्क्षावश्यंभावाच्च । अतश्च सिद्धं उपवीतस्यान्याङ्गत्वासम्भवात् महाप्रकरणाद् दर्शपूर्णमासाङ्गत्वम् ।

प्रयोजनं अस्यापि कर्तुरवैगुण्यापादकत्वेन तत्संस्कारत्वात् पूर्वपक्षे सामिधेन्यारम्भे तत्कर्त्रा, सिद्धान्ते दर्शपूर्णमासप्रयोगारम्भे तत्कर्तृभिरुपवीतमनुष्ठेयमिति द्रष्टव्यम् । सूत्रं स्पष्टम् ॥

इत्येकादशमुपवीताधिकरणम् ॥

---

अथ द्वादशं वारणादीनां सर्वयज्ञार्थत्वाधिकरणम् ॥ (१२)

## सू—गुणानां च परार्थत्वादसम्बन्धस्समत्वात् स्यात् ॥ ३–१–२२ ॥

( विषयसंशयौ )

आधानप्रकरणे पवमानेष्टिसन्निधौ(१) "वारणो यज्ञावचरः स्यात् न त्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरस्स्यात् जुहुयादेवैतेने"ति श्रुतम् । तत्र अवचर्यते अनुष्ठीयते अनेनेति व्युत्पत्त्या अवचरशब्दः साधनवाची । अतश्च वारणवैकङ्कतजात्योः वाक्येन यज्ञोद्देशेन विधानं पूर्ववाक्ययोः । साक्षाच्च जात्या तदाधारकाष्ठेन वा द्रव्यान्तरावरुद्धयज्ञासम्भवात् तदङ्गभूतप्रक्षेपतदतिरिक्तक्रियाणां वैकङ्कते वारणे च द्वारत्वेन विधानमुत्तरवाक्ययोः । न्यायसुधायां तु वैकङ्कतस्य सर्वक्रियार्थत्वमित्युक्तम् ।

तत्र च यज्ञशब्देनाधानाङ्गपवमानेष्टिमात्रमुद्देश्यत्वेनोच्यते ? किं वा यज्ञमात्रमिति सन्देहः । साधनत्वस्यात्रावचरशब्देनोपादानात् कृदन्तत्वेन मुख्यश्रुतित्वाभावेन गौणश्रुतित्वात् पादाध्यायसङ्गतिः । अनन्तरा तु उपवीतस्य दूरस्थसामिधेन्यसम्ब-

---

१. मै. स. १. ७–७.

न्धेऽभिहिते पात्राणामपि तद्वदेव दूरस्थपवमानेष्टिसम्बन्धप्राप्तनिराकरणात् प्रासङ्गिकी ।

( पूर्वपक्षः )

तत्र वाक्येन वारणवैकङ्कतयोः यज्ञोद्देशेन विधानेऽपि यज्ञस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनलक्षणार्थं प्रकरणानुप्रवेशे प्रसक्ते प्रकृतापूर्वसाधानस्याधनस्य यज्ञत्वाभावात् तस्मिन्नेवानर्थक्यप्रसक्तौ प्रकरणात्तदङ्गभूतानां पवमानेष्टीनां यज्ञत्वात् तत एव प्रकृतापूर्वोपकारकत्वसम्बन्धेन यज्ञपदेनोद्दिश्य वारणादि विधीयते । यद्यपि हि पवमानेष्टीनां प्रदेशान्तरपाठितत्वात् न विशिष्याधिकारोऽस्त्युपस्थापकः, तथापि प्रधानाधिकारेणैव प्रधानांशे बाधितेन तत्सम्बन्धिपवमानेष्ट्युपस्थापनादानर्थक्यतदङ्गन्यायेन वारणादेस्तदर्थताविरोधः । इष्यते च पश्वैवयवावदानसम्बन्धिनो मनोतामन्त्रस्य महाप्रकरणात् ज्योतिष्टोमे प्राप्तावानर्थक्यतदङ्गन्यायेन तदङ्गभूते स्वरूपेणासन्निहितेऽपि सवनीये प्राप्तिः । अत एव तद्व्यावृत्त्यर्थं 'यद्यप्यन्यदेवत्य' इति वचनमिष्टम् । तस्मात् स्वतोऽनुपस्थापितस्यापि प्रधानाधिकारेणोपस्थितत्वात् पवमानेष्टिमात्रार्थत्वं वारणादेरिति प्राप्ते—

( भाष्यकारीयसिद्धान्तः )

भाष्यकारेण तावदेवं सिद्धान्तितम्—सत्यं पवमानेष्टीनामाधानार्थत्वे पात्राणां तत्र निवेशो युक्तः । तासां तु (१)'यदाहवनीये जुहोती' तिवचनेनाग्न्युत्पत्त्यर्थत्वावगमात् आधानेन सम्प्राधान्यावगतेः आनर्थक्यतदङ्गन्यायाभावेन आधानप्रकरणपाठितानां पात्राणां पवमानेष्टिषु निवेशो युक्त इति । तस्यायमाशयः—

---

१. तै. ब्रा. १-१-१०.

यद्यप्यनारभ्याधीतेन 'यदाहवनीये जुहोति' इत्यनेन न पवमानेष्टीनामग्न्यङ्गत्वं प्रतिपत्तुं शक्यम्। सप्तम्याः द्वितीयार्थलक्षणायां प्रमाणाभावात्, पवमानेष्टिवत् क्रत्वन्तराणामप्यङ्गत्वापत्तौ तेषां निष्फलत्वापत्तेश्च। नचानारभ्याधीतस्य वाक्यस्य प्रकृत्यर्थत्वादिहातिदेशेनाग्निप्राप्तावसिद्धत्वेनाङ्गत्वासम्भवेऽपि प्राधान्यकल्पनोपपत्तिः। अप्राकृतकार्यकारितापत्तेः, औपदेशिकेन प्रकरणावगताधानाङ्गत्वेन तद्बाधाच्च। अन्यथा विश्वजिदादिवत् पवमानेष्टीनामपि फलकल्पनया अग्न्यङ्गत्वस्यैवानापत्तेः, तथाप्यनारभ्याधीततुल्येनाधानप्रकरणाधीतवाक्येन सर्वेषामाधानाङ्गतया संभाव्यमानानां पूर्णाहुत्यादिहोमानां साक्षादाहवनीयाङ्गत्वावगमात् पवमानेष्टीनामपि तदङ्गत्वावगतिः। अत एव तत्र द्वितीयार्थे सप्तमी। आहवनीयस्यासिद्धत्वेन होमाङ्गत्वासंभवात्। अतश्चोभयोरप्याधानपवमानेष्ट्योरग्न्यङ्गत्वात् परस्पराङ्गाङ्गिभावाभावेनानर्थक्यतदङ्गन्यायासंभवात् वारणादेः स्वतोऽसन्निहितासु पवमानेष्टिष्वेव निवेशानुपपत्तेः वाक्येन सर्वयज्ञार्थत्वमिति ॥

वार्तिककारस्तु—अश्रुतवाक्यकल्पने प्रमाणाभावात् कल्पनेऽपि वा तेन यज्ञरूपाणां पवमानेष्टीनां आहवनीयाङ्गत्वानुपपत्तेः तासामाधानाङ्गत्वमेव। अत एव कल्पितेन वाक्येनाधानाङ्गभूतानामेव पूर्णाहुत्यादिहोमानामाहवनीयाधिकरणत्वसिद्धिः, न तु तेषां साक्षादाहवनीयाङ्गत्वम्, सप्तम्या द्वितीयार्थलक्षणायां प्रमाणाभावात्। अत एव तदाधानविशेषजन्यपरमापूर्वविशिष्टाग्निवाचिनोऽप्याहवनीयप्रातिपदिकस्यासिद्धार्थकत्वात् आधानजन्योत्पन्नापूर्वविशिष्टाग्नावेव लक्षणेत्यप्यवगन्तव्यम्। न ह्यन्यथा तेषूक्तविधाहवनीयप्रापकमन्यत् प्रमाणमस्ति।

यद्यपि च पवमानेष्ट्यङ्गभूतानां प्राकृतानां होमानामतिदेश-प्राप्तमुख्याहवनीयाधिकरणकत्वबाधेऽपि सति संभवे प्रकृतिदृष्टस्य आधानविशेषप्रयोज्यापूर्वविशिष्टाग्न्यधिकरणकत्वस्य साद्यस्के अग्नीषोमीयानुबन्ध्ययोः पौर्वापर्यस्येव बाधे प्रमाणाभावात् उक्तविधाहवनीयाधिकरणकत्वप्रापकमन्यदस्ति प्रमाणम्। इदमेव च पवमानेष्ट्यङ्गभूतानां हविःश्रपणपिष्टलेपफलीकरणहोमानां उक्तविधगार्हपत्यान्वाहार्यपचनाधिकरणकत्वप्राप्तौ प्रमाणमिष्यते तथापि अप्राकृतानामाधानसम्बन्धिहोमानां उक्तविधाहवनीयाधिकरणत्वसिद्धाविदमेव वाक्यं शरणम्।

यत्तु भवदेवेन प्रधानदेशत्वादङ्गानां तल्लाभ इत्युक्तम्, तदाधानस्य कुण्डत्रयसाधारणत्वात् व्यवस्थालाभे प्रमाणाभावादुपेक्षितम्। तस्मात् सत्यपि वचने पवमानेष्टीनामाहवनीयाङ्गत्वासंभवात् आधानाङ्गभूतासु सतीष्वेतासु प्रकृतयज्ञाभावादनिवेश इत्याह। तत्र चायमभिप्रायः न्यायसुधाकृता विवृतः—

यज्ञशब्दः प्रधानयज्ञानामेवाभिधायकः। (१)"स एष यज्ञः पञ्चविधः—अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमः, इत्यादिवाक्यपर्यालोचनया तथैव शक्तिग्रहात्। न च पशोरङ्गभूतस्यात्रोपादानादसिद्धिः। पशुपदस्य निरूढपशुबंधस्यैवात्र ग्रहणात्। अत एवैकादशे 'पञ्चभिर्युनक्ति पांक्तो यज्ञ' इति यज्ञपदश्रवणात् (२)"अग्निं युनज्मि शवसा घृतेनेति युनक्ती"त्येतद्वाक्यविहितस्याग्नियोगस्य प्रधानमात्रार्थत्वं भाष्यकारेण सिद्धान्तितम्।

वार्तिककारेण च यज्ञसंयोगस्य गुणवाक्यस्थत्वेन तद्दूषितम्। अतश्च पवमानेष्टीनामाधानाङ्गत्वेन यज्ञा-

---

१. ऐ. ब्रा. २. तै. सं. ५-४-१०.

ङ्गत्वाभावात् वारणादेः सार्वत्रिकत्वमिति, तन्न : यज्ञपदस्य यजतिपर्यायस्यातिरिक्तशक्तिकल्पने प्रमाणाभावात् । अन्यथा "(१) सर्वस्वं वा एतद्यज्ञाय गृह्यते" (२)"एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः" इत्यादावपि प्रधानयज्ञग्रहणापत्तौ आज्यभागादिषु धौवाज्यवषट्कारादिप्राप्त्यनापत्तेः । अतएवैकादशे यज्ञशब्दो यागमात्रवचनश्चेदङ्गयागानपि ब्रवीतीति वार्तिककृताभिहितम् ।

तस्मादेवमभिप्रायो वाच्यः—सर्वत्रैव प्रकृतनिवेशः स्वोद्देश्यस्य लक्षणीयापूर्वेण व्यभिचरितसम्बन्धे प्रकरणादङ्गीक्रियते । यथा "व्रीहीन् प्रोक्षति" इत्यादौ । अत एव तादृशस्थले प्रधानसम्बन्धानुपपत्तौ आनर्थक्यतदङ्गन्यायेन स्वतोऽसन्निहितेनाप्यङ्गेन प्रधानोपस्थापितेन धर्मसम्बन्ध इष्ट एव, यथा मनोतामन्त्रस्य सवनीयेन । तत्र ह्यग्नेरव्यभिचरितक्रतुसम्बन्धाभावेन प्रकरणं विना अपूर्वसाधनलक्षणानुपपत्तेः तेन प्रधानसम्बन्धावश्यंभावात् तत्रानुपपत्तौ तदङ्गभूतसवनीयसम्बन्धः कथञ्चिदुपस्थित्याऽङ्गीक्रियते । प्रकृते तु यज्ञशब्देनैवाऽव्यभिचारितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशायोगात् प्रधानसम्बन्धस्यैवाप्रसक्तौ कवयस्तदुपस्थापिताङ्गसम्बन्धः ।

एवं सत्यपि यदि पवमानेष्टिसन्निधावविदमाम्नायेत ततो भवेत्तन्मात्राङ्गं वारणादि । तदा हि अनुवादस्य पुरोवादसापेक्षतायां सति संभवे सन्निहितपुरोवादविषयत्वौचित्यात् तन्मात्रविषयता भवत्येव ।

अत एव "व्रीहिभिर्यजेत," "सप्तदशारत्निर्वाजपेयस्य यूपः" (३)"प्रयाजे प्रयाजे कृष्णलं जुहोति" इति प्रकरणा-

१. तै. ब्रा. ३. ३-५. २. तै. सं. १-६-११. ३. तै. सं २-३ २

तिदेशादिना सन्निहितपुरोवादविषयत्वलाभः। अत्र हि अव्य-भिचरितक्रतुसम्बन्धेनैवापूर्वसाधनत्वोपस्थितेः तदर्थं प्रकरणा-नुप्रवेशाभावेऽपि अनुवादस्य पुरोवादसापेक्षत्वात् तल्लाभः। प्रकृते तु पवमानेष्टीनां स्वतस्सान्निध्यानाभावात् सन्निहितस्य चाधानविधेः पुरोवादत्वाभावात् वाक्यमात्रेण सर्वयज्ञार्थत्वं वा-रणादेः। तत्रापि च यज्ञोद्देशेन विधानात् "एष वै सप्तदशः प्रजापति" रितिवत् न प्रकृतिमात्रार्थत्वम्।

प्रयोजनं पूर्वपक्षे पात्राणामान्तं धारणात् तैरेवोपादानला-घवेन दर्शाद्यनुष्ठानोपपत्तावपि दैवात् तेषां नाशे दर्शाद्यर्थम-नियतानामुत्पत्तिः। सिद्धान्ते वारणानामेवेति द्रष्टव्यम्।

सूत्रं तु गुणानां वारणादीनां आधानभिन्नयज्ञार्थत्वात् तैरे-वासम्बन्धानां तदङ्गभूते अवतारसम्भवात् पवमानेष्टीनां च स्वतस्स-न्निधानाभावे यज्ञान्तरैस्समत्वादसम्बन्ध इति व्याख्येयम्।

अथ वा सर्वयज्ञार्थत्वस्य "पूषा प्रपिष्ट" इतिवदर्थात् पूर्वा-धिकरणे निविदां सामिधेन्यङ्गत्वमाशङ्क्य तन्निराकरणार्थत्वेन व्याख्येयम्॥

इति द्वादशं वारणाधिकरणम्।

अथ त्रयोदशं वार्त्रघ्न्याधिकरणम्(१३)॥

## मू—मिथश्चानर्थसम्बन्धः॥ ३—१—२३॥ (सि)

( विषयसंशयौ )

आज्यभागक्रमे समाम्नातानां वार्त्रघ्नीवृधन्वतीमन्त्राणां किं लिङ्गक्रमौ बाधित्वा (१)"वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृध-

१. तै. सं. २ ५ २.

न्वती अमावास्यायां" इति वाक्याभ्यां प्रधानयागाङ्गत्वम् ? उत-लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वमेव । वाक्यद्वयं तु व्यवस्थार्थमिति विचार्यते ।

( सङ्गतिः )

पूर्वपक्षे च सप्तम्या द्वितीयार्थत्वलक्षणात् गौणश्रुतिविनियोगोपयोगिचिन्तनेन पादाध्यायसङ्गतिः । पूर्वं च वाक्येन दुर्बलप्रमाणोपजीवने समर्थिते तदपवादकरणादनन्तरा ।

( पूर्वपक्षः )

विद्वद्वाक्ये च कर्मान्तरत्वावेदकप्रमाणाभावात् तत्र मन्त्रविनियोजकत्वानुपपत्तावपि आग्नेयादिषु तदुपपत्तेः नानयोः व्यवस्थार्थत्वमित्यधिकाशङ्कोत्थानात् पौर्णमास्यधिकरणेनापौनरुक्त्यम् । तत्र कालकृतव्यवस्थापक्षस्य पौर्णमास्यधिकरण एव निराकृतत्वात् कर्मकृतव्यवस्थापक्षस्य तत्तत्कालीनप्रधानाङ्गभूताज्यभागकर्मत्वलक्षणापवादकत्वेन गुरुभूतत्वात् लाघवेन पौर्णमस्यमावास्यापदाभ्यां निरूढलक्षणया प्रधानानि, सप्तम्या च कर्मत्वमुक्त्वा तदुद्देशेन मन्त्रो विनियुज्यते ।

न च लिङ्गक्रमबाधः । क्रमस्य तावत् दुर्बलत्वेन बाध्यस्य गुणत्वात् । एवं च सामान्यसम्बन्धबोधकप्रमाणाभावेन लिङ्गस्याप्रयोजकत्वाच्च ।

वस्तुतस्तु ब्राह्मणगतवाक्यापेक्षया लिङ्गस्यापि मन्त्रगतस्य दौर्बल्यमेव । अत एव "यद्यप्यन्यदेवत्यः पशु" रिति वाक्येन मनोतामन्त्रस्य लौङ्गिकी सवनीयाङ्गता बाध्यत इति वक्ष्यते । बीजं चात्र (२)बलाबलाधिकरणे वक्ष्यते । प्रशास्तर्यजेति मन्त्रलिङ्गे "मैत्रावरुणः प्रेष्यति चानुचाहे" ति ब्राह्मणवाक्यस्य

२. पू. मी. ३-३-७.

बाधस्तु सामान्यविशेषादिरूपप्रमेयबलाबलेन द्रष्टव्यः । न तु वाक्यदौर्बल्येनेति ध्येयम् । तस्मात् प्रधानमात्राङ्गत्वमेवेति प्राप्ते—

( सिद्धान्तः )

ब्रूमः—दुर्बलस्यापि प्रमाणस्याबाधेनोपपत्तौ तद्बाधे प्रमाणाभावात् नात्र प्रधानाङ्गत्वसम्भवः । न ह्यत्र सोमप्रकाशकस्य मन्त्रस्य कथमपि लिङ्गाविरोधस्संभवति । अमावास्यायां सोमस्याधिष्ठानत्वेनाप्यभावात् ।

न च पौर्णमास्यां सोमस्य देवतात्वाभावेऽपि अग्निप्रकाशकस्य सोमप्रकाशकस्य च मन्त्रस्य समुच्चयाङ्गीकारेणाग्नीषोमदेवताप्रकाशकत्वोपपत्तेः लिङ्गाविरोध इति वाच्यम् । पुरोनुवाक्यामन्वाहेत्युपादेयगतैकत्वस्य विवक्षितत्वात् पुत्रेष्टिवच्च "द्वे द्वे पुरोनुवाक्ये भवत" इति विध्यभावात् एकस्मिन् कर्मणि अनुवाक्याद्वयानुपपत्तेः । क्रमबाधश्चोभयत्र स्पष्ट एव ।

वस्तुतस्तु न केवलमबाधपक्षपातितयैव वाक्येन तयोरबाधः । अपि तु नियमविधिलाघवानुरोधेनापीत्युक्तं पौर्णमास्यधिकरणे । अत एव तदनुरोधेन लक्षणाङ्गीकरणमप्यदोषः ।

एवं च प्रधानक्रमाम्नातानां अनुवाक्यान्तराणां बाधः । आज्यभागयोश्चाश्रुतानुवाक्याकल्पनं नाश्रितं भवति । तस्मात् व्यवस्थार्थमेवेदं वाक्यद्वयम् । सा च कर्मकृतेत्युक्तमेव पौर्णमास्यधिकरणे ॥

प्रयोजनं स्पष्टम् ॥

सूत्रं तु प्रधानस्यानुवाक्यानां च मिथो न प्रयोजनप्रयोजनिसम्बन्धः, लिङ्गादिबाधापत्तेरिति व्याख्येयम् ॥

इति त्रयोदशं वार्त्रघ्न्यधिकरणम् ॥

## अथ चतुर्दशं हस्तावनेजनादीनां कृत्स्न-प्राकरणिकाङ्गताधिकरणम् ॥ (१४)

## सू—आनन्तर्यमचोदना ॥ ३—१—२४ ॥ (सि)

( विषयः )

दर्शपूर्णमासयोः "हस्ताववनेनिक्ते" इति विधाय श्रुतं "उलपराजींस्तृणाती" ति। तत्रावनेजनं द्वितीयाश्रुत्या अदृष्टविधया दृष्टविधयैव वा हस्तसंस्कारार्थम्। तदपि कर्तृत्वांशेन। न तु भोक्तृत्वांशेन, मलापकर्षणार्थत्वात्। यद्यपि पूर्वमेव शुद्ध्यन्तरमप्यनुष्ठितमस्ति तथापि मन्त्रानेकत्वे स्मृतिदार्ढ्यवत् शुद्ध्यन्तरस्यापि बाधकाभावः।

अत एवास्य सिद्धान्ते सर्वार्थत्वेऽपि न पूर्वपदार्थाङ्गत्वमित्यर्थक्रमेण पाठक्रमं बाधित्वा न सर्वादावनुष्ठानम्। ततश्चावनेजनसंस्कृतस्य कर्तृहस्तस्य उपयोगापेक्षायामुत्तरकालभाविपदार्थसाधनत्वमित्यप्यविवादमेव।

( संशयः )

उत्तरपदार्थस्तु किमव्यवहितानन्तर एव, अथवा सर्व एवेति सन्दिह्यते। अत एव श्रुतिविनियोगोपयोगिहस्तनिष्ठापूर्वसाधनत्वविचारात् पादाध्यायसङ्गतिः। तत्प्रसङ्गाच्च ज्योतिष्टोमप्रकरणस्थं "मुष्टीकरोति," "वाचं यच्छती"त्याद्यप्युदाहरणम्।

इदं हि द्वयमपि लिङ्गान्मनःप्रणिधानद्वारा दीक्षितकर्तृसंस्कारकं सत् करिष्यमाणकर्मार्थमेव, दीक्षितत्वपुरस्कारेण विहितस्य सर्वार्थत्वेऽपि पूर्वपदार्थाङ्गत्वानुपपत्तेः। अतस्तत्राप्यव्यवहितोत्तराम्नातदीक्षितावेदनमात्रार्थत्वम्? उत वाग्विसर्गाङ्गुलिविसर्गपूर्वभावियावत्पदार्थत्वमिति विचारः।

( सङ्गतिः )

पादसङ्गत्यभावेऽपि प्रासङ्गिको द्रष्टव्यः । श्रुत्यैव वा मुष्टि वाग्यमयोः संस्कारार्थत्वमित्यपि सुवचम् । मुष्टीकरणस्य वाग्यम-मात्राङ्गत्वशङ्का तु उभयोरपि कर्तृसंस्कारकत्वेन परस्प-राङ्गत्वानुपपत्तेर्नातीवादर्तव्यः । अनन्तरा त्वानन्तर्यरूपक्रमाप-वादात् स्पष्टा ।

( पूर्वपक्षः )

अत्र आनन्तर्यादव्यवहितपदार्थाङ्गत्वमेव । नचानन्तर्यस्य बहुषु पठितेषु कस्यचिदवर्जनीयत्वात् नाङ्गतानियामकत्वमिति वाच्यम् । सन्निधिविशेषाम्नानवैयर्थ्यपरिहारार्थं तस्यापि प्रकर-णादिकल्पनेनाङ्गताग्राहकत्वात् । अन्यथा उपहोमानां विकृत्यङ्ग-त्वानुपपत्तेः । न च सन्निधानस्य नियामकत्वेऽपि प्रकृते सर्वार्थ-ताग्राहकप्रकरणाविरोधात् तदसम्भवः । साधारणस्य प्रकरणस्य विशेषनिष्ठानन्तर्येणोपसङ्कोचोपपत्तेः । अन्यथा "शुन्धध्व"मिति प्रो-क्षणमन्त्रस्यापि प्रकरणात् सर्वप्रधानाङ्गभूतपात्रप्रोक्षणाङ्गत्वा-पत्तेः सन्निधानात् सान्नाय्याङ्गभूतपात्रप्रोक्षणार्थता वक्ष्यमाणा विरुध्येत ।

अतो विरुद्धविषये प्रकरणस्य प्राबल्येऽपि अविरुद्धविषये उपसंहार एवेति पूर्वपक्षवादी मन्यते । अतश्चावनेजनमुलपरा-जिस्तरणाङ्गम् । मुष्टीकरणवाग्यमौ चाध्वर्युकर्तृकदीक्षितावेदनफ-लीभूतज्ञानजननद्वारा आवेदनाङ्गम् । न तु सर्वाङ्गम् ।

( सिद्धान्तः )

सिद्धान्तवादी तु न वाक्यादिमात्रकल्पनया शीघ्रप्रवृत्तेन प्र-करणेन प्रमितस्य सर्वार्थत्वस्य प्रकरणादिकल्पनसापेक्षेण पश्चा-त्प्रवृत्तेन सन्निधिना युक्त उपसंहारः, तथात्वे विकल्पापत्तेः ।

अत एव न यत्र सामान्यशास्त्रस्य प्रथमप्रवृत्तिकत्वं तत्रैवोपसंहार इति वक्ष्यते । शुन्धनमन्त्रस्य तु न प्रकरणात् झटित्येव सर्वप्रधानाङ्गत्वावगमः । द्वारकल्पनासापेक्षत्वात् । साक्षाद्याङ्गता तु सन्निधिना तद्वारस्य तदीयपात्रशुन्धनरूपस्य क्लृप्तत्वात् झटित्यवगम्यत इति युक्तः तत्र सन्निधानेन प्रकरणस्योपसंहारः । प्रकृते तु द्वारक्लृप्तेः सर्वत्राविशेषात् वैपरीत्यमिति वैषम्यम् ।

वस्तुतस्तु अवर्जनीयत्वात् बहुषु किंचिदानन्तर्यस्य नाङ्गताग्राहकत्वमपि । न च सन्निधिविशेषाम्नानवैयर्थ्यम् । क्रमनियमार्थत्वेन तस्योपपत्तेः । अत एव यत्रोपहोमादौ न प्रकरणान्तरेणार्थवत्ता तत्राङ्गताग्राहकत्वमपि । तत्राङ्गत्वे भिन्नप्रयोगविधिपरिग्रहात् क्रमानियामकत्वानुपपत्तिः । अतः आनन्तर्यस्य अनियामकत्वात् प्रकरणेन हस्तावनेजनस्य करिष्यमाणसर्वपदार्थाङ्गत्वमेव । कर्तृसंस्कारकत्वेन प्रधानमात्रार्थत्वशङ्कानुपपत्तेः ।

न च मलापकर्षणार्थत्वादस्य पिष्टलेपप्राग्भाविपदार्थाङ्गत्वमेव युक्तमिति न्यायसुधाकृदुक्तं युक्तम् । हस्तावनेजनप्राग्भाविमलापकर्षणार्थस्यास्य पिष्टलेपसम्बन्धिमलनिवर्तकत्वाभावेऽपि सर्वपदार्थाङ्गभूते तन्मलाभावसम्पादकत्वेन सर्वार्थत्वोपपत्तेः । मुष्टीकरणवाग्यमयोस्तु अङ्गुलिवाग्विसर्गप्राक्कालीनत्वेन यजमानकर्तव्यसर्वपदार्थाङ्गत्वमेव, तदुत्तरकर्तव्यपदार्थसम्बन्धिनः प्रधानस्य पृथक्प्रयत्नापेक्षत्वेन एतज्जन्यत्वाभावात् ।

नचैवं तदुत्तरभाविप्रधानाङ्गत्वस्यैवाभावेन कथं प्रधानप्रकरणेनाङ्गमात्रार्थत्वमिति वाच्यम् । आनर्थक्यतदङ्गन्यायेन तदुपपत्तेः। तस्मात् सर्वार्थत्वम् ॥

सूत्रं स्पष्टम् ॥

ननु प्रकरणस्यापि वाक्येन बाधोपपत्तेः कथं सर्वार्थत्वं ?

नह्याख्यातद्वयघटितवाक्यतुमुन्प्रत्ययाभावे एकवाक्यत्वमेव नास्तीति नियमस्समस्ति । पश्य मृगो धावतीत्यादौ व्यभिचारात्, अत आह—

## सू—वाक्यानां च समाप्तत्वात् ॥ ३—१—२५ ॥

दर्शनभावनायाः कर्मसाकाङ्क्षत्वात् धावनभावनायां तस्यां कर्मत्वेनान्वयोपपत्तेः युक्ता तत्रैकवाक्यता । प्रकृते त्ववनेजनभावनानां सत्यप्यपूर्वसाधनत्वलक्षणातात्पर्यग्रहणार्थं भावनान्तरापेक्षणे शाब्दबोधे हस्तादीनामेव कर्मत्वेनान्वयात् विभज्यमानसाकाङ्क्षत्वाभावेनैकवाक्यत्वानुपपत्तेः ।

प्रयोजनमुलपराजिस्तरणस्याराादुपकारकत्वेन प्रधानमात्रार्थत्वात् गृहमेधीये लोपेन हस्तावनेजनस्यापि लोपः पूर्वपक्षे । सिद्धान्ते तु आज्यभागाङ्गत्वेन करणमिति विस्मृतस्यापि हस्तावनेजनादेः उलपराजिस्तरणानन्तरं करणमित्यपि प्रयोजनं द्रष्टव्यम् ॥

इति हस्तावनेजनाधिकरणम् ॥

## अथ पञ्चदशमाग्नेयचतुर्धाकरणाधिकरणम् ॥ (१५)

## सू—शेषस्तु गुणसंयुक्तस्साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ ३—१—२६ ॥

( विषयः )

दर्शपूर्णमासयोः "आग्नेयं चतुर्धा करोति" इति श्रुतम् ।

तत्र किं हविष्ट्वमेव तदुद्देश्यतावच्छेदकं ? अग्निसम्बन्धिहविष्ट्वं वा ? उत पुरोडाशत्वमेव वा ? उताग्निदेवताकहविष्ट्वम् ? इति विचार्यते ।

( सङ्गतिः )

पादाध्यायसङ्गतिः स्पष्टा। सर्वार्थत्वापवादाच्चानन्तरा।

( पूर्वपक्षः )

अत्र द्वितीयतः चतुर्धाकरणं प्रति प्राधान्यात् तद्धितार्थस्योद्देश्यता प्रतीयते। तस्य च सर्वनामार्थकत्वात् स्ववाक्योपात्ताभावे प्राकरणिकपरामर्शित्वावगतेः प्रकृतप्रधानसाक्षात्सम्बन्धिहविर्मात्रोद्देश्यतावगतेः अग्निसम्बन्धित्वरूपविशेषणस्याप्यविवक्षितत्वात् हविर्मात्रस्य च चतुर्धाकरणम्। नह्यत्र परस्परान्वयो व्युत्पत्तिसिद्धः येन विशिष्टोद्देशः शङ्क्येत। (१)पौर्णमास्यधिकरणे द्रव्यदेवतयोः परस्परानन्वयस्य स्थापितत्वात्।

अस्तु वा कथंचिद्विशेषणविवक्षा, तथापि प्रधानभूतद्रव्यसङ्कोचपरिहारार्थं सम्बन्धसामान्ये तद्धितस्यानुशासनिकीं लक्षणामङ्गीकृत्य अग्निसम्बन्धित्वमात्रं तद्विशेषणम्, (२)'गुणे त्वन्याय्यकल्पने'ति न्यायात्। सम्बन्धस्य च विशेषापेक्षायां हविर्निरूपितदेवतात्वाधिष्ठानत्वकृतत्वसम्बन्धस्याश्रयणात् सर्वेषां पुरोडाशानां अग्नीषोमीयाऽऽस्य "येषां हवींषी"तिवद्वा अग्निसम्बन्ध्यङ्गहविषोऽपि चतुर्धाकरणम्।

अस्तु वा(३) "तच्चतुर्धा कृत्वा पुरोडाशं बर्हिषदं करोती"ति शतपथश्रुतिगतेन वाक्येन सिद्धान्तवदुपसंहारात् अग्निसम्बन्धिपुरोडाशमात्रस्यैव चतुर्धाकरणम्। आग्नेयपदस्य च पुरोडाशमात्रपरत्वेऽपि शाखान्तरीयत्वादस्य वाक्यस्य नानर्थक्यम्।

अस्तु वा लक्षणाभयादत्र आग्नेयमिति देवतातद्धितः। तथाप्यग्नीषोमीयादावप्यस्येवाग्नेः देवतात्वमिति तस्यापि चतुर्धाकरणोपपत्तिः। घटपटावानयेत्यादौ कर्मत्वस्यैव द्वन्द्वान्ते श्रुतस्य

१. पू. मी २-२-३. २. पू. मी. ९. ३-१५. ३. श. ब्रा. १-८-४

तद्धितार्थस्य प्रत्येकमभिसम्बन्धात् त्यज्यमानद्रव्योद्देशकर्मत्वरूपे देवतात्वे व्यासक्तत्वस्य बाधाच्च । अतश्च इत्थं इत्थमातुःहित्थमातृव्यपदेशवत् उभयदेवत्यस्याप्याग्नेयपदव्यपदेश्यत्वोपपत्तेः युक्तं पुरोडाशमात्रस्य चतुर्धाकरणम् ।

अस्तु वा व्यासक्तं देवतात्वम् । तथापि प्रधानभूतद्रव्यसङ्कोचपरिहारायाग्निपदं स्वशक्यघटितमधिष्ठानं लक्षयित्वा तन्निष्ठदेवतात्वमेव हविर्विशेषणत्वेनावगमयतीति न कश्चित् पुरोडाशमात्रचतुर्धाकरणे विरोधः । यदि हि प्रमाणान्तरप्रमितसोमादिसापेक्षस्याग्निप्रातिपदिकार्थमात्रस्यानेन देवतात्वमुच्यते तदा तस्सापेक्षत्वेन तद्धितवृत्तिभङ्ग आपद्येत । अग्निपदेनैव तु मनोतास्थाग्निपदेनेव सोमादेरपि लक्षणायां न कश्चिद्विरोधः ।

अतश्च यथैव(१)"आग्नेयस्य मस्तकं विरुह्य प्राशित्रमवद्यती" त्यस्य सर्वविषयत्वं तथा प्रकृतेऽपीति सिद्धम् ।

सूत्रं तु उद्देश्यविशेषणसंयुक्तश्शेषः साधारणः प्रतीयेत । चतुर्धाकरणाख्यस्य शेषस्याग्नेश्चोद्देश्यविशेषणस्य मिथस्सम्बन्धाभावादिति व्याख्येयम् ॥

इति पूर्वपक्षः ।

सू—व्यवस्था वाऽर्थ(२)स्य श्रुतिसंयोगात् लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥३–१–२७॥

( सिद्धान्तः )

आग्नेयस्यैव वा चतुर्धाकरणम्, प्रचुरप्रयोगेण देवतामात्रशक्तस्य तद्धितस्य सम्बन्धसामान्यलक्षकत्वानुपपत्तेः । अत एव तदनुशासनमपि लाक्षणिकमेव ।

१. आप. श्रौ. ३–१–२. २. अर्थसंयोगादिति भाष्याभिप्रेतः पाठः ।

न च प्रधानभूतसर्वनामार्थकतद्धितार्थद्रव्यसङ्कोचपरिहाराय लक्षणाङ्गीकरणम् । शुक्लः पट इत्यादौ सङ्कोचार्थ एव विशेषणे लक्षणानङ्गीकरणात् । अन्यथा विशेषणमात्रोच्छेदापत्तेः । एतेनाग्निपदेनैव मनोतास्थाग्निपदवत् सोमादिलक्षणेत्यप्यपास्तम् । तत्र केवलाग्निदेवताकत्वाभावेन तदङ्गीकारेऽपि प्रकृते तदङ्गीकारे प्रमाणाभावात् ।

न च देवतावाचित्वाङ्गीकारेऽपि अग्नीषोमीयादौ उभयोरपि देवतात्वसत्त्वाच्चतुर्धाकरणविषयत्वोपपत्तिः । इतरेतरयोगरूपचार्थविहितद्वन्द्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव देवतात्वं प्रत्यन्वयोपपत्तेः । अतएव देवतात्वमप्यखण्डोपाधिरूपम्, न तु त्यज्यमानहविरुद्देश्यत्वमेवेति न व्यासक्तत्वाविघातः । घटपटावानयेत्यत्र उद्देश्यत्वेन तद्विशेषणस्य साहित्यस्याविवक्षितत्वात् प्रत्येकं कर्मतेति विशेषः । अत एव तदभिप्रायेणैव द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति प्रवादः । अतश्चाग्नीषोमीयादावग्नेर्देवतात्वाभावात् केवलाग्निदेवत्यस्यैव चतुर्धाकरणम् ।

यत्तु अग्निदेवताकत्वं प्रकृतद्रव्यविशेषणमविवक्षितमिति, तत्र ब्रूमः—यन्मते सम्बन्धसामान्ये तद्धितः तन्मते तावत्कारकतातिरिक्तसम्बन्धेन परस्परान्वयस्य व्युत्पत्तिसिद्धत्वेन विशिष्टोद्देशे नैव किंचित् बाधकमस्ति । यस्यापि देवतातद्धितस्तस्यापि किमपूर्वसाधनत्वस्य लक्षकं ? प्रकृतद्रव्यमात्रं वा ? प्रकृतहविष्ट्वं वा ? नाद्यः; "सूक्तहविषोरि"ति नियमेन देवतातद्धितस्य द्रव्यमात्रवाचित्वाभावात् । नान्त्यः; हविःपरत्वस्य देवतावाचित्वप्रतीतिं विना अनुपपत्तेः । न हि सूक्ते हविषि वा वाच्ये देवतातद्धितस्तेन नियम्यते । येन हविःपरत्वं प्रथमत एवा-

प्रयुज्येत । सूक्ते हविषि वा वाक्येऽपि अधीतादितद्धितस्य सम्बन्धसामान्यतद्धितस्य वा दृश्यमानत्वात् । अपि तु देवतात-द्धितस्य सतस्सूक्तहविर्वाचित्वनियमः तेन क्रियते । अतश्च उपजीव्यस्य प्रथमावगतस्य देवतात्वस्यैवापूर्वसाधनलक्षकत्वो-पपत्तेः तदेव प्रातीतिकमुद्देश्यतावच्छेदकम् । देवतात्वस्य च नियमेनानुयोगिप्रतियोगिसापेक्षत्वात्(१) हविरार्तिन्यायेनापेक्ष-विषश्च विवक्षाङ्गीकारात् देवतायाश्च द्रव्यान्वयस्याव्युत्पन्नत्वेऽपि "अर्धमन्तर्वेदि मिनोती"तिवत् तद्धितान्तपदेनाग्निदेवताकह-विष्ट्वस्य लक्षणयोद्देश्यतावच्छेदकत्वोपपत्तिः ।

एवं चाग्निदेवताकस्य आज्यभागहविषोऽपि "वेद्यां हवींष्यासाद-यती"तिवत् चतुर्धाकरणप्रसक्तौ शाखान्तरीयेण "तच्चतुर्धा कृत्वे" ति वचनेन तच्छब्दपरामृष्टपुरोडाशपरेणास्य स्वविषये उपसंहारादा-ग्निदेवताकपुरोडाशमात्रस्य चतुर्धाकरणोपपत्तिः । आज्यभागाग्न-स्यापि वा ध्रौवाज्यस्य सर्वार्थत्वेन प्रतिपत्त्यनर्हत्वात् अनेनैव त-स्योपसंहारः । एतादृशोपसंहारे च बीजं विकल्पानापत्तिः, शक्य-तावच्छेदकानवच्छिन्नपदार्थलक्षणानुपपत्तिश्च । अन्यथा उपसं-हारानङ्गीकारे शाखान्तरीयत्वेऽपि विकल्पापत्तिः । आग्नेयपद-स्यैव पुरोडाशमात्रपरत्वलक्षणयोपसंहाराङ्गीकारे तु आग्ने-यपदेन शक्यतावच्छेदकानवच्छिन्नाग्नीषोमीयादिलक्षणापत्तिः । अतः पुरोडाशपदस्यैव शक्यतावच्छेदकावच्छिन्नाग्नेयमात्रपरत्व-लक्षणया उक्तविधमुपसंहाराङ्गीकरणं युक्तम् । तदा हि सामा-न्यशास्त्रस्य क्लृप्तत्वेऽपि प्रथमप्रवृत्तिकत्वाभावात् फलतः परि-संख्यावान्तरभेदः तन्मात्रसंकोचरूपोपसंहारोऽङ्गीक्रियत इति न विकल्पापत्तिः ।

१. पू. मी. ६—४—९.

नचैवमपि परस्परोपसंहारे द्वयोस्सार्थक्योपपत्तावपि अन्यतरेणान्यतरोपसंहारे सामान्यशास्त्रस्यानर्थक्यम् । 'तं चतुर्धा कृत्वे' त्यत्र तु प्राप्तचतुर्धाकरणोत्तरकालत्वविशिष्टबर्हिष्षत्करणकभावनायाः भक्षणाङ्गत्वेन विधानाच्चतुर्धाकरणविध्यभावेन सामान्यविधित्वाभावात् कथमुपसंहार इति वाच्यम् । क्रमविधानार्थमप्यनूद्यमानस्य तेनोपसंहारोपपत्तेः ।

वस्तुतस्तु तस्य शाखान्तरीयत्वात् तच्छाखीयपुरुषान् प्रति चतुर्धाकरणस्यापि विध्युपपत्तिः । नचैवं वाक्यभेदापत्तिः । स्वोद्देश्यसम्बन्धिन्या एव चतुर्धाकरणभावनायाः उत्तरकालतासम्बन्धेनैवोत्तरभावनायां वैशिष्ट्योपपत्तेः । यद्यपि स्वशाखीयवाक्याभावे शाखान्तरीयपुरुषान् प्रति चतुर्धाकरणं प्राप्नोत्येव, तथापि स्वशाखीयवाक्यसत्वे तस्यैवाभ्युदयशिरस्कत्वकल्पनया विधायकत्वकल्पनात् सामान्यशास्त्रत्वोपपत्तिः । एवमेकशाखीयवाक्यद्वयस्थलेऽपि यदि सामान्यवाक्यस्याभ्युदयशिरस्कत्वकल्पनयापि संभवत्प्राप्तिकार्थप्रापणफलकत्वेन सामान्यशास्त्रत्वसंभवः, यथा अनारभ्याधीतसाप्तदश्यवाक्यस्य सामिधेनीसम्बन्धमात्रप्रापकतया तत्रापि युक्तोपसंहारो मित्रविन्दादिप्रकरणस्थसाप्तदश्यवाक्येन । यत्र तु न कथमपि सामान्यवाक्यसार्थक्यं तत्र विकल्प एवागत्याङ्गीक्रियते । तत्रापि वाक्यद्वयप्रमितमभ्युदयकारि भवतीत्येवं कल्पनया उपसंहार एवेत्यन्यदेतत् ।

यत्तु प्राशित्रावदानवत् सत्यप्याग्नेयपदश्रवणे सर्वार्थत्वमित्युक्तम् । तत्प्राशित्रमवद्यतीति सामान्यवाक्येन सर्वहविषां प्राशित्रावदानप्राप्तौ प्रदेशविशेषापेक्षायां आग्नेयस्येतिवाक्येन आग्नेयोद्देशेन मस्तकप्रदेशनियममात्रकरणात् अन्यपरत्वेन सामान्यवाक्योपसंहाराशक्तेः हविरन्तरे प्रदेशनियमाप्राप्तावपि प्राशि-

त्रावदानप्राप्तौ बाधकाभावात् । प्रकृते तु तद्विशेषवाक्यस्यान्यपरत्वा-भावेन उपसंहारस्यावश्यकत्वात् सर्वार्थत्वानुपपत्तेः परिहर्तव्यम् ।

अत एवात्र प्राशित्रावदानस्यावान्तरप्रकरणादेव प्राप्तेः तद-न्यथानुपपत्त्या च त्रिभागापरपर्यायस्य विरुजनस्यापि प्राप्तेः तदनूद्य मस्तकमात्रमाग्नेयोद्देशेनापादानत्वेन विधीयते । अत एव द्वितीयया विभागसंस्कार्यतया प्रतीयमानस्यापि मस्तकस्य दृष्टा-र्थत्वाद्यनुरोधेनापादानत्वलक्षणायामपि न दोषः ।

अस्तु वा आग्नेयमस्तकापादानकस्य त्रिभागस्यैव प्राशित्रावदा-नोद्देशेन विधिः । स्फोटनापरपर्यायो विभागो नार्थप्राप्तः । अ-स्मिंश्च पक्षे विधेयसामर्थ्यादेव प्राशित्रावदानस्याग्नेयमात्रविषय-स्योद्देश्यत्वावगमेऽपि न तस्योत्पत्तिवाक्येऽपि तन्मात्रविषयत्व-मित्यन्यत्र विस्तरः ॥

सूत्रं तु आग्नेय एव चतुर्धाकरणव्यवस्था । दैवतात्वरूप-स्यार्थस्य तद्धितश्रुतिसंयोगात् ।

न चास्यापूर्वसाधनत्वपरिचायकत्वमात्रतया स्वरूपस्याविव-क्षितत्वादनादरः । लिङ्गत्वेऽप्यर्थेनापूर्वसाधनत्वेनान्यूनानतिरि-क्तव्याप्तितया सम्बन्धात् । प्राशित्रावदानवाक्ये तु आग्नेयपदस्य मस्तकोपलक्षणार्थत्वात् न तस्य व्यवस्थेति व्याख्येयम् । प्रयो-जनं स्पष्टम् ॥

इति पञ्चदशमाग्नेयचतुर्धाकरणाधिकरणम् ॥ १५ ॥

श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या शेषाध्याये पाद आद्योयम् ॥

इति पूर्वोत्तरमीमांसापारावारपारीणश्रीरुद्रदेवसूनोः
खण्डदेवस्य कृतौ मीमांसाकौस्तुभे
तृतीयाध्यायस्य प्रथमः पादः ॥
श्रीरस्तु

श्रीः

# मीमांसाकौस्तुभे ।

## तृतीयाध्यायस्य द्वितीयः पादः ॥

सू—अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात् त-
स्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥
३—२—१ ॥ (सि)

( विषय संशयौ )

एवं श्रुतिविनियोगोपयोगिविचारे समाप्ते इदानीं श्रुत्युप-
जीविलिङ्गविनियोगोपयोगिविचारः प्रारभ्यते ।

लिङ्गं नामाङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतर-
वाचकपदकल्पनानुकूला कॢप्तपदार्थनिष्ठा योग्यता । यथा 'स्रु-
वेणावद्यती'त्यत्र कॢप्तपदार्थनिष्ठा द्रवमित्युद्देश्यवाचिपदकल्प-
नानुकूला योग्यता लिङ्गम्, यथा वा संस्कारविध्यन्यथानुपप-
त्त्या संस्कार्यस्य विनियोगकल्पनास्थले द्रव्यनियामकपदकल्प-
नात् कृतिकारकत्ववाचिपदकल्पनानुकूला कॢप्तसंस्कारनिष्ठा यो-
ग्यता लिङ्गम् ।

यद्यपि च तत्रोद्देश्यवाचकमपि पदं कल्प्यते तथापि कृति-
कारकत्ववाचिपदस्य तावत् कल्पनान्न क्षतिः ।

एवं मन्त्रेष्वपि कॢप्तेषु स्वप्रतिपाद्यार्थं प्रत्युद्देश्यताप्रतिपा-

दकपदकल्पनानुकूलास्ति योग्यता । अतस्सापि लिङ्गम् । सा चान्यथानुपपत्तिरूपत्वाद्व्यतिरेकव्याप्तिरूपा । तच्च तत्पदरूपश्रुतिकल्पनाद्वारा तत्तत्पदार्थं प्रति क्लृप्तपदार्थस्य तत्पदार्थस्य वा पदार्थान्तरं प्रति विनियोगे कारणम् । तत्र च वस्तुसामर्थ्यरूपस्य लिङ्गविशेषस्य विचारासम्भवेनैतावतैव प्रायशः पर्यवसानम् । मन्त्रसामर्थ्यरूपे तु विचार्यते—किं तेन शक्त्यैव प्रतिपाद्यमानेऽर्थे विनियोगः ? किं वा लक्षणया विनियोगो ? गौण्या वा प्रतिपाद्यमानेऽपीति ।

( सङ्गतिः )

लिङ्गप्रयोज्यविनियोगोपयोगिचिन्तनस्य पादार्थत्वात् पादाध्यायसङ्गतिस्स्पष्टा । अनन्तरा तु युक्तं प्रत्यक्षश्रुतेर्विशेषनिष्ठत्वादसर्वविषयत्वं चतुर्थीकरणस्य, लिङ्गस्य तु न तथात्वमिति पूर्वपक्षोत्थापनात् द्रष्टव्या ।

( पूर्वपक्षः )

अत्र दर्शपूर्णमासादिप्रकरणे समाम्नातानां श्रुत्यविनियुक्तानां मन्त्राणामधिकाराख्यप्रकरणात् क्रतुसम्बन्धेऽवगते द्वारविशेषे मन्त्रलिङ्गेन विनियोगः क्रियते । तत्रापि योग्यतारूपस्य लिङ्गस्य सत्यपि देवदत्तस्य पाकयोग्यत्वे आकाङ्क्षाभावे पाके विनियोगादर्शनात् आकाङ्क्षापि सहकारिणी । सा च यथैव मन्त्रप्रकरणिनोः, तथा द्वारस्यापि, तदभावेऽपि सम्बन्धानुपपत्तेः ।

एवं च यथैव मुख्यस्य कुशच्छेदनस्य स्मारकापेक्षायां तदर्थस्यैव मन्त्रो 'बर्हिर्देवसदनं दामी'' अयं विनियुज्यते, यथा गौणस्याप्युलपाख्यमुगन्धितृणविशेषच्छेदनस्य स्मारकापेक्षायां विनियुज्यत एव । न हि प्रतिप्रधानं गुणावृत्तिर्विरुध्यते ।

न च जघन्यवृत्तिजन्यशाब्दबोधं मुख्यार्थबाधस्यापि कारणत्वात् कथं तदभावे गौणेऽर्थे विनियोग इति वाच्यम् । "बर्हिः प्रोक्षाय" 'छत्रिणो गच्छन्ती' त्यादौ तदभावे तात्पर्यमात्रेण जघन्यवृत्तिदर्शनेन तात्पर्यानुपपत्तेरेव तत्कारणत्वावसायात् प्रकृते च गौणार्थविषयकस्मारकाकाङ्क्षाया एव तात्पर्यग्राहकत्वात् तस्मिन् विनियोगोपपत्तेः । अत एव मन्त्रस्य मुख्यार्थविनियोगेन निराकाङ्क्षस्यापि न क्षतिः ।

न च गौणार्थस्मारकाकाङ्क्षाया ध्यानाद्युपायान्तरेण निवृत्तिः । आकाङ्क्षायास्तात्पर्यग्राहकत्वमात्रेणाप्युपपत्तावनुपस्थितध्यानाद्याक्षेपकत्वे प्रमाणाभावात् , श्रुतिप्रमापितप्रतिमन्त्रनियमस्याङ्गत्वमित्येकस्यैव विनियोगस्य कल्पनोपपत्तौ ध्यानादीनां तत्कल्पने गौरवाच्च । अत एव गौणमुख्यार्थभेदेन विनियोगकल्पनात् पूर्वपक्षेऽपि गौरवमित्यपास्तम् । तस्मात् सर्वत्र विनियोगः ।

एवं च दर्शपूर्णमासप्रकरणपठितानां पूषानुमन्त्रणमन्त्रादीनां प्रकरण एव गौण्या वृत्त्या निवेशोपपत्तेरुत्कर्षोऽपि नाश्रितो भवति ।

न च मन्त्राणां गौणार्थाकाङ्क्षायां श्रुतिप्रमाप्यप्रवृत्तकल्पनेऽपि प्रकृतेऽग्न्यादिरूपस्य गौणार्थस्य संनिहितमुख्यमन्त्रान्तरेण निराकाङ्क्षत्वात् कथं तत्र पूषानुमन्त्रणमन्त्रस्य गौणस्य निवेश इति वाच्यम् । प्राकरणिकेऽन्यदेवताकेऽनाम्नातमन्त्रके वा कर्मणि निवेशोपपत्तेस्तत्रानुपस्थितध्यानाद्युपायाक्षेपापेक्षयोपस्थितपूषानुमन्त्रणमन्त्रनिवेशकल्पनस्यैवौचित्यादि-

ति प्राप्ते—

( सिद्धान्तः, )

अभिधीयते-मुख्य एवार्थे मन्त्राणां विनियोगः, तत्रैव मन्त्रप्रकरणिद्वाराकाङ्क्षामात्रसहकृतेन लिङ्गेन शीघ्रं श्रुतिकल्पनात्। जघन्यार्थविषये तु तात्पर्यग्रहाख्यकारणापेक्षत्वेन श्रुतिकल्पने विलम्बितत्वम् ।

न च गौणार्थनिष्ठाकाङ्क्षयैव तात्पर्यग्रहः । तस्याः ध्यानादिमुख्योपायान्तरेणैव निवृत्तिसिद्धेः ।

न चाक्षेपकत्वकल्पनागौरवभिया क्लृप्तमन्त्रग्राहकत्वम् । ध्यानादीनामपि स्मृतिकारणतया क्लृप्तानां कारणत्वस्यानाक्षेपात् । अनुष्ठानाक्षेपस्य तु मन्त्रेऽपि तुल्यत्वाच्च ।

न च गौणमुख्यार्थनिष्ठाकाङ्क्षयोर्मन्त्रनियामकत्वे विनिगमनाविरहः; गौणार्थशाब्दबोधं प्रति शक्यसम्बन्धग्रहस्य हेतुत्वेन शक्योपस्थितेः प्राथमिकत्वात् कर्तृनिष्ठाकांक्षाया एव मन्त्रनियाकत्वोपपत्तेः । अतश्च मुख्यसम्बन्धेन निराकाङ्क्षस्य मन्त्रस्य न पश्चादुपस्थितेन गौणेन सम्बन्धः, अन्यतराकाङ्क्षाहेतुकस्वसम्बन्धस्योभयाकाङ्क्षाहेतुकस्वसम्बन्धापेक्षया दौर्बल्यात् ।

न च विकृत्याकाङ्क्षावदन्यतराकांक्षाया अप्यनन्यथासिद्धत्वाद्विनियोजकत्वम् , ध्यानाद्युपायान्तरेणापि गौणार्थविषयकस्मृतिसिद्धेरुक्तत्वात् । अत एव ध्यानादिमुख्योपायान्तरासम्भवे गौणोपायान्तरसाधारण्येनैतन्मन्त्रस्यापि कदाचित्प्राप्तिसंम्भवेऽपि नैतन्मन्त्रनियामकत्वम् , मन्त्राम्नानानन्यथानुपपत्तेः तन्नियमकारणस्य प्रथमावगतमुख्यात्रेनियोगेनैवोपशान्तत्वात् ।

एवं च यत् पूर्वपक्षे गौणमुख्यसाधारण्येनैकैव श्रुतिः क-

रूप्यत इत्युक्तम्, तत् कल्पनयोश्शीघ्रमन्थरप्रवृत्तत्वेनैककालप्रवृत्तिकत्वाभावादपास्तम्।

वस्तुतस्तु उद्देश्ययोस्समकालोपस्थितावप्याग्नेयादिषु प्रयाजादीनां प्रत्येकमेव श्रुतिकल्पनेति वक्ष्यते। तस्मान्मुख्यप्राप्तार्थत्वम्।

सूत्रं तु शक्यसम्बन्धग्रहसापेक्षत्वेन मुख्यार्थाभिधानसंयोगात् खलु गौणार्थशेषताभावे तत्। ततश्च प्रथमावगतेन मुख्येनैव सम्बन्धो युक्तः। स्वेनैवार्थेन नित्यं प्रमाणान्तरमनपेक्ष्य मन्त्राणां संयोगादिति व्याख्येयम्॥

## सू–संस्कारत्वादचोदिते न स्यात्॥ ३–२–२॥

यत्त्वेवं सति पूषानुमन्त्रणमन्त्रादीनामुत्कर्षः प्रसज्येतेत्युक्तम्, तदुत्कर्षस्य गुणत्वादप्रयोजकम्। न हि लिङ्गेन प्रकरणबाध उत्कर्षो दोषः।

न च सामान्यसम्बन्धबोधकप्रमाणाभावः। यागानुमन्त्रणसमाख्याया एव तत्त्वात्।

न च प्रकरणादिनापि तात्पर्यग्रहे लोके मुख्यार्थत्वादर्शनात्कथमुत्कर्षकल्पनेति वाच्यम्। दूरस्थस्यापि साकांक्षस्य कथञ्चिदुपस्थितिसत्त्वे मुख्योपायान्तरनिराकांक्षसंनिधिरूपस्य प्रकरणस्य तात्पर्यग्राहकत्वादर्शनात्। अत एव व्यवहितपदान्वयवत् व्यवहितवाक्यान्वयोऽपि ग्रन्थव्यवहारादौ लोके दृष्टः। यदि तु कथञ्चिल्लोके ईदृशविषयेऽपि गौणप्राकरणिकार्थग्रहणं दृश्येत तदा वक्तृविवक्षायाः प्रकारान्तरेण ज्ञाने सतीति ध्येयम्।

न च प्रकरणे पाठश्शास्त्रप्रकरणिनो प्राप्ताप्रयानेनानेन कृ-
त्यमुपकर्तव्यमित्याकांक्षैव गौणार्थतात्पर्यग्राहिकास्त्विति वाच्यम्।
तस्या अप्यनिर्धारितद्वारिकायाः क्लृप्तद्वारकेण दूरस्थेनाप्यन्व-
योपपत्तौ तद्ग्राहकत्वे प्रमाणाभावात्। अत एव प्रकरणपाठो-
ऽपि पारायणाद्युपयोगी तादृशक्रमसिद्ध्यर्थं न नान्तरीयका-
कांक्षोत्तेजकम्। इदं चोत्कर्षाभिधानं प्रकरणे मुख्यार्थविरो-
धिगुणान्तरसत्त्व एव ज्ञेयम्। तदभावे तु क्लृप्तमुख्यार्थवि-
ध्यभावेऽपि मान्त्रवर्णिकमुख्यार्थविधिकल्पनोपपत्तेः।

अत एवोपांशुयाजादेर्याज्यानुवाक्यामन्त्राणां नोत्कर्षः। तत-
श्चायमत्र क्रमः—मुख्यार्थविधिसत्त्वे तत्रैव विनियोगः। तदभावे
मान्त्रवर्णिकमुख्यार्थविधिकल्पनम्, विरोधिगुणसत्त्वे तूत्कर्षः।
तस्यापि सामान्यसम्बन्धबोधकप्रमाणाभावेनासंभवे प्रकरण
एव गौणार्थविषयकत्वकल्पनम्। तस्याप्यनुपयुक्तलक्षणाद्यस-
म्भवादिनाऽसम्भवे तदर्थाभिधानस्यैवादृष्टार्थत्वकल्पनया जप-
रूपत्वाङ्गीकरणमिति॥

सूत्रं तु विरोधिनि गुणे चोदिते सति यत्र गुणश्चोदितः
तत्रोत्कर्षाभिधानं न दोषस्स्यात्। लिङ्गेन सामान्यसम्बन्ध-
ग्राहकप्रमाणसहकृतेन मुख्यार्थसंस्कारकत्वस्यैवावगमादिति व्या-
ख्येयम्। प्रयोजनं स्पष्टम्॥

इति प्रथमं लिङ्गाधिकरणम्॥

## अथ द्वितीयमैन्द्र्यधिकरणम् (२) ॥

## सू—वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३–२–३ ॥

( विषयः )

अग्नौ श्रुतं—"कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठत" इति ।

( संशयः )

तत्र किमयं मन्त्रः मुख्यसामर्थ्योपष्टब्धतद्धितश्रुत्या इन्द्राङ्गम् ? उत गौणसामर्थ्योपष्टब्धकारकश्रुत्या गार्हपत्याङ्गमिति विचारः ।

( सङ्गतिः )

तत्र गौणसामर्थ्यस्य विनियोजकत्वाभाववद्विनियोजकश्रुतिसहायत्वरूपविनियोगप्रयोजकत्वाभावस्यापि पूर्ववत्प्रसक्तस्यापवादकरणात् पादाध्यायानन्तरसङ्गतयः ।

यत्तु भाष्यकारेण "निवेशनस्सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत" इत्युदाहृतम् । तत् "विश्वा रूपाऽभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे वसूना"मिति मन्त्रशेष उपमार्थेन नकारेणेन्द्रस्योपस्थानतया गुणत्वेन सङ्कीर्तनादग्रे च "वसूनां पावकश्चासमी"ति वसुश्रेष्ठत्वकथनेन प्राधान्यावगतेः मुख्यसामर्थ्यस्यैव कारकश्रुत्युपष्टम्भकतया स्वस्यैव स्वोपमानेन कथञ्चिद्गौणसामर्थ्यस्य च तद्धितश्रुत्युपष्टम्भकतया च वैपरीत्यादुपेक्षितम् ।

न च तद्धितश्रुतिदौर्बल्य एव तस्यास्तदुदाहरणता । तस्य बलाबलाधिकरणसिद्धत्वेनैतदधिकरणाविषयत्वाभावात् गौणसामर्थ्यस्य विनियोजकश्रुत्यसाह्यतामात्रत्वेनैतदधिकरणविषयः । अत एव

न तेन पौनरुक्त्यमपि । अतः पूर्वोक्तमेवोदाहरणम् ।

( पूर्वपक्षः )

तत्र पूर्ववदिहापि तात्पर्यज्ञानस्य लक्षणादिजन्यशाब्दबोधे कारणत्वेन तद्ग्राहकाभावान्न गौणसामर्थ्यस्य द्वितीयाश्रुतिसहायत्वम् ।

न च द्वितीयाप्रमितविनियोगस्यैव तात्पर्यग्राहकत्वम्, शाब्दबोधे योग्यताज्ञानस्य कारणत्वेन गौणसामर्थ्यज्ञानाभावे विनियोगप्रमाण एवानुपपत्तेः, प्रथमोपस्थितैन्द्रतद्धितश्रुत्या इन्द्राङ्गत्वस्यैवावगमेनायोग्यतानिश्चयस्य प्रतिबन्धकत्वाच्च ।

न च प्राथमिकत्वेऽपि तद्धितश्रुतेः कारकश्रुतितो दौर्बल्यम्, तद्धितस्यापि प्राधान्येन मन्त्रप्रतिपाद्यत्वरूपे देवतात्वे शक्तत्वेन दौर्बल्ये प्रमाणाभावात् । अत एव श्रुतिलिङ्गाधिकरणन्यायेन केवलस्य लिङ्गस्य दौर्बल्येऽपि तद्धितश्रुत्यानुकूल्यादिन्द्राङ्गत्वोपपत्तिरिति विशेषाशङ्कासत्त्वान्न तेन पौनरुक्त्यम् ।

अतश्च मन्त्रे गौणत्वस्य तात्पर्यग्राहकाभावात् प्रत्युत द्वितीयान्तपद एव जघन्यवृत्त्याश्रयणे तद्धितश्रुतेस्तात्पर्यग्राहिकायाःसत्त्वात् तत्रैव तदाश्रयणं तेन द्वितीयैव प्रतियोगित्वलक्षिका गार्हपत्यसमीपे स्थित्वेन्द्रं प्रकाशयेदिति 'गुणे त्वन्याय्यकल्पने' ति न्यायाद्गार्हपत्यप्रातिपदिकमेवेन्द्रे गौणम्, यज्ञसाधनत्वसादृश्यात् ।

अथ वा गार्हपत्यप्रातिपदिकं गृहपतेरयमिति व्युत्पत्त्या इन्द्रे यौगिकमस्तु रूढिबलीयस्त्वात् अग्नेरेव कर्मत्वं तत्तु न मन्त्रसाध्याभिधानं प्रति । तस्याशाब्दत्वेनान्वयानुपपत्तेः । अपि तु धातुवाच्यसमीपावस्थानं प्रति ।

न च प्रकाशनाक्रियातिरिक्तक्रियायां मन्त्रस्य करणत्वा-

संभवात्तस्मिन्नन्वयानुपपत्तिः, (१)'उपान्मन्त्रकरण' इत्यनेनोपपूर्वात्तिष्ठतेर्धातोर्मन्त्रकरणके प्रकाशनाख्ये व्यापारे वर्तमानादात्मनेपदविधानेन प्रकाशनपरत्वाभावे आत्मनेपदानुपपत्तिश्चेति वाच्यम् । (२)"प्रकाशनस्थेयाख्ययोश्चे"ति पूर्वसूत्रेणैव प्रकाशनार्थात्तिष्ठतेरात्मनेपदविधानेनैतत्सूत्रे प्रकाशनव्यतिरिक्तस्यापि व्यापारस्य मन्त्रकरणकत्वे आत्मनेपदविध्यर्थत्वात् । अतश्च समीपस्थितावेव मन्त्रः करणम् ।

न च बाधः । एतत्स्मृतिबलेनैव समीपस्थितेरभिधानप्रयोजनकत्वावसायादैन्द्रमन्त्रस्यापि समीपस्थितिसाध्येन्द्राभिधानकरणत्वेन समीपस्थितावौपचारिककरणकत्वोपपत्तेः । अत एव स्वसाध्येन्द्राभिधानसाधकत्वस्य सम्बन्धविधयैव भानोपपत्तेर्न धातोरभिधानलक्षणापि । अतश्च वाच्य एव व्यापारे मन्त्रस्य करणत्वमग्नेश्च कर्मत्वम् ।

न च वाच्यस्य तिष्ठतिधात्वर्थस्याकर्मकत्वात् कथं तत्राग्नेः कर्मत्वेनान्वयः । (३)'अकर्मकाच्च' इत्युत्तरसूत्रेणाकर्मकात्तिष्ठतेरात्मनेपदविधानेनास्मिन् सूत्रे तिष्ठतिवाच्यस्याप्यर्थस्य सामीप्यरूपफलावच्छेदेन सकर्मकत्वविवक्षणात् । एवं सामीप्यस्य प्रतियोगितासम्बन्धेनाग्न्याश्रयत्वादग्नेस्स्थितिकर्मत्वोपपत्तिः । तस्मात् द्वितीयाश्रुतेरन्यथाप्युपपन्नत्वाल्लिङ्गेन तत्सहकृततद्धितश्रुत्या वा इन्द्रप्रकाशकत्वमेव मन्त्रस्येति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—द्वितीयाश्रुत्या गार्हपत्यार्थत्वावगमेन नात्र श्रु-

---

१ पा. सू. १-३-२५. २ पा. सू. १-३-२३. ३ पा. सू. १-३-२६.

स्यार्थकत्वम् ।

न च योग्यताज्ञानाभावाच्छ्रौतविनियोगानुपपत्तिः । अयोग्यतानिश्चयाभावमात्रेण शाब्दबोधोपपत्तौ योग्यताज्ञानस्य कारणत्वकल्पने प्रमाणाभावात् । अतस्सामग्रीसत्त्वेन श्रौतविनियोगोपपत्तेः तस्यैव बलवत्तस्तात्पर्यग्राहकस्य सत्त्वेन मन्त्रगतेन्द्रपदस्य यज्ञसाधनस्वसादृश्यादिन्दातिधात्वर्थानुसाराद्वाग्नौ जघन्यवृत्त्याश्रयणम् ।

न च तद्धितश्रुत्या द्वितीयाश्रुतेर्बाधः । तद्धितात्तस्यापि प्राधान्येन प्रतिपाद्यत्वरूपस्य देवतात्वस्य मन्त्रं प्रति गुणत्वेनोपस्थितत्वाद्विपरीतविशेषणभावकल्पनां विना तद्धितेन झटिति द्वितीयात्वन्मन्त्रस्येन्द्राङ्गत्वप्रमाणानुपपत्तेः, इन्द्रोद्देशेन मन्त्रविधावेकप्रसरताभङ्गापत्तेश्च, मन्त्रस्येन्द्रसम्बन्धे समीपस्थितिं प्रत्यविशेषणत्वेन तां प्रति मन्त्रवैशिष्ट्यासम्भवाद्विशिष्टविध्यसम्भवेन प्रत्येकं गार्हपत्योद्देशेन समीपस्थितिविधौ वाक्यभेदादात्मनेपदविरोधापत्तेश्च, चयने इन्द्रस्यानुपयोगेनोद्देश्यत्वानुपपत्तेश्च ।

एतेन तद्धितस्य स्वतो विनियोजकत्वाभावेऽपि गार्हपत्यपदे लक्षणातात्पर्यग्राहकत्वमात्राङ्गीकरणान्न वाक्यभेदादिदोष इत्यपास्तम् । अनुपयोगीन्द्रप्रकाशनार्थत्वानुपपत्तेः, विना कारणं विधौ लक्षणाङ्गीकारे प्रमाणाभावाच्च तद्धितस्य शक्यार्थबाधकालीनेन्द्रप्रकाशकत्वानुवादमात्रत्वेन लक्षणां विनाप्युपपत्तेः । गार्हपत्यपदस्यावयवयोगेनेन्द्रपरत्वपक्षे रूढित्यागापत्तेश्च । समीपस्थितिं प्रत्येव गार्हपत्यस्य कर्मतेति पक्षस्तु मन्त्रस्यौपचारिककरणत्वापत्तेः समीपस्थितेश्च गार्हपत्यसंस्कारार्थत्वे इन्द्राभिधानार्थत्वायोगान्मन्त्रस्य तद्द्वारौपचारिककरणत्वस्याप्यनुपपत्ता-

वात्मनेपदानुपपत्तेः आत्मनेपदानुरोधेन चेन्द्राभिधानार्थत्वा-ङ्गीकारे गार्हपत्यस्य सक्तुवदनीप्सितकर्मत्वायोगात्, ईप्सितक-र्मत्वाङ्गीकारे चोद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेरयुक्तः। तस्मात् द्वितीयान्ततृतीयान्ते च पदे यथाश्रुते एवाङ्गीकृत्य धातुनैव समीपावस्थानविशिष्टमभिधानमात्मनेपदरूपतात्पर्यग्राहकानुरोधेन लक्षयित्वा तत्रैव मन्त्रस्य करणत्वेन गार्हपत्यस्य च कर्मत्वेना-न्वयोऽङ्गीक्रियते। गार्हपत्यस्य च साधनत्वेन चयने उपयोगा-भावेऽपि संस्कार्यत्वेन तत्सत्त्वादभिधानकर्मत्वोपपत्तिः। तस्मा-द्गौणे गार्हपत्य एव मन्त्रस्य श्रुत्या विनियोगायुक्तमेव गौण-सामर्थ्यस्य तदुपष्टम्भकत्वम्॥

सूत्रं स्पष्टम्॥

## सू—गुणादप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहे-तुत्वात्॥ ३-२-४॥

नन्वस्तु श्रुत्या गार्हपत्ये विनियोगः, तथापि न गौण-त्वाश्रयणम्। श्रुतिशास्त्रस्य शक्तिरूपसम्बन्धतात्पर्यग्रहहेतुत्वे-नाप्युपपत्तेः। अतश्च मुख्यवृत्त्यैव श्रौतविनियोगनिर्वाहे न गौण-त्वाश्रयणमित्याशङ्क्याह—लोकप्रसिद्धगौणवृत्त्याऽप्यभिधानोपप-त्तावन्यपरस्यालौकिकशक्तितात्पर्यग्राहकत्वकल्पनाप्रमाणाभावे-न गौणाभिधानमेव न्याय्यमिति।

प्रयोजनं स्पष्टम्॥

इति द्वितीयमैन्द्र्यधिकरणम्॥

अथ तृतीयं हविष्कृदाह्वानाधिकरणम् ॥ (३)

## सू—तथाह्वानमपीति चेत् ॥ ३—२—५ ॥ (पू)

( विषयसंशयौ )

दर्शपूर्णमासयोः "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती"ति श्रुतम्। तत्र किं हविष्कृदेहीति मन्त्रो वाक्येन गौणेऽवघाते विनियुज्यते? लिङ्गेन वा मुख्य एवाह्वाने ? इति विचारः।

( सङ्गतिः )

गौणसामर्थ्यस्य श्रुतिसहायत्ववत् प्रबलवाक्यसहायत्वस्यापि प्रसक्तस्य वाक्यविनियोगासिद्धापवादकरणात् पादाध्यायानन्तरसङ्गतयः।

( पूर्वपक्षः )

तत्र नाह्वानाङ्गं मन्त्रः। "पत्न्येव हविष्कृदुपोत्तिष्ठति देवानृषीन् पितृन् साऽभिद्रुत्यावहन्ती"तिवचनेनावघातस्य पत्नीकर्तृकत्वेऽपि पत्नी स्वयमेवोपोत्तिष्ठति न त्वाहूतेत्येवकारेण पक्षप्राप्ताह्वानाभावनियमप्रतीतेराह्वानविध्यन्तरस्य चानन्यथासिद्धस्याभावात् मन्त्रस्य तदङ्गत्वानुपपत्तेः।

अत एव तत्र त्रिरभ्यासविधिः, सहायार्थत्वात्, तस्य च प्राप्तावघातकालानुवाद इत्यपास्तम्। विना कारणं काललक्षणायां प्रमाणाभावाच्च। अतो(१) "लक्षणहेत्वोः क्रियायाः" इतिशतृप्रत्ययस्य प्रयोजकत्वापरपर्याये हेतौ स्मृते"रभिचरन् यजेते"तिवन्मन्त्रपाठस्यावघातभावनाङ्गत्वमेव। व्युत्पन्न'श्चोदनं भुञ्जानो गच्छती'त्यादौ शतृप्रत्ययोपात्तक्रियायामपि सुबन्तान्वयः।

न चैवं प्राप्तावघातोद्देशेन मन्त्रत्रिरभ्यासयोर्विधौ वाक्यभेदापत्तिः। अवघातक्रियाया वितुषीभावफलकत्वावश्यंभावेन

---

१ पा. सू. ३-२-१२६

तत्र त्रिरभ्यासविध्यनुपपत्तेः । शाखान्तरे त्रिरभ्यस्तस्यैव मन्त्रस्य पठितत्वेन त्रिरित्यस्यानुवादात् तदनापत्तेः ।

वस्तुतस्तु अवघाते समाख्याप्राप्तस्याध्वर्योर्वाचनिकेन पत्नीकर्तृकत्वेन बाधादवघ्नन्तीति पुंस्त्वस्यापि विधेयत्वापत्तेः मन्त्रपुंस्त्वोभयविशिष्टावघातविधिरेवायम् ।

एवं च पत्नीवाक्येऽपि गुणादवघातान्तरविधिरेव । द्वयोस्त यो 'व्रीहीनवहन्ती' त्यनेन संस्कार्यसम्बन्धेऽपि दृष्टार्थत्वाद्विकल्पः । अत एव पत्नीकर्तृकावघाते "अवरक्षो दिव" इति मन्त्रोऽपि निरस्तप्रत्नः । प्रकृतवाक्यविधेयस्य विशिष्टावघातस्य विधायकत्वाद्वयतिपरः प्रत्यय एव । धातुराख्यातांशश्च साधुत्वार्थमनुवादौ, आख्यातांशस्य "तत्करोति तदाचष्टे" इत्येवंप्रकाशनार्थत्वमङ्गीकृत्य मन्त्रेणाध्वर्युराह्वानमाचष्टे इत्येवं शब्दार्थबोधकालीनाह्वानप्रकाशनस्य प्राप्तस्यानुवादात् । अतो मन्त्र पुंस्त्वविशिष्टावघातभावनैव शतृप्रत्ययोपात्ता विधीयत इति मन्त्रस्य गौणावघाताङ्गत्वमेव । गौणीवृत्तिप्रकारश्चावघातेऽपि कथञ्चित् स्थाली पचतीतिवत् कर्तृत्वमुपचर्य, अचेतनेऽपि चेतनत्वमारोप्य हेऽवघात ! त्वमेहि सम्पन्नो भव इत्यर्थाङ्गीकारेण द्रष्टव्यः ।

सूत्रं आह्वानशक्तोऽपि हविष्कृदेहीति मन्त्रः तथा ऐन्द्रीवदयथार्थे विनियुज्यते इति व्याख्येयम् ॥

( इति पूर्वपक्षः )

## सू—न कालविधिश्चोदितत्वात ॥३–२–६॥ ( सि)

( सिद्धान्तः )

नात्र गौणेऽवघाते मन्त्रस्य विनियोगः । वचनस्य मुख्याह्वानसम्बन्धानुवादकत्वेनाप्युपपत्तेः । मुख्यविशेष्यभूताह्वानभाव-

नासम्बन्धस्याऽभ्यर्हितत्वाच्च त्रिरित्यस्यावघातेऽन्वयानुपपत्तेर-श्रुतमन्त्रपाठक्रियाविषयत्वापत्तेश्च । विना कारणमाख्याते आनुशासनिकया अपि प्रकाशनलक्षणाया धातोस्साधुत्वपारार्थ्य-विशिष्टार्थविध्यादेश्चान्याय्यत्वाच्च ।

नचैवकारेणाह्वानस्य पर्युदासात् तत्र मन्त्रादिसम्बन्धानुप-पत्तेस्सर्वदोषाङ्गीकरणम् । तत्रेतरस्य सर्वस्य प्राप्तत्वेनावघाता-नुवादेन पत्नीमात्रविधानादेवकारार्थविशिष्टपत्नीकर्तृकावघाता-न्तरविधौ गौरवविकल्पाद्यापत्तेः । अत एव 'पत्न्येव हविष्कृदु-पोत्तिष्ठती' त्यत्र पत्न्येव हविष्कृत् न त्वन्येत्येवकारार्थो, न तु पत्नी स्वयमेवोपोत्तिष्ठति न त्वाहूतेत्येवकारार्थः ।

न चैवमनाहूताया अपि स्वपदार्थकरणोपपत्तेराह्वानस्य नित्यप्राप्त्यभावात् कथं तत्र मन्त्रसम्बन्धानुवाद इति वाच्यम् । मन्त्रस्यावघातावान्तरप्रकरणे पठितस्य तत्सम्बन्धनिर्वाहार्थं "बाहुभ्यां सध्यास" मित्यादिमन्त्रवन्मान्त्रवर्णिकक्रियानियम-विधिकल्पकत्वोपपत्तेः ।

अत एव नित्यप्राप्तत्वेऽपि चयनादिवदध्वर्युकर्तृकत्वसिद्ध्यर्थं विधिरिति न्यायसुधोक्तमपास्तम् । विधेयान्तरसत्त्वेन संभव-त्प्राप्तिकायाः क्रियायाः विधौ गौरवात् , मन्त्रपाठस्याध्वर्युकर्तृ-कत्वसिद्धौ पृथक्प्रयत्नानापाद्ये आह्वाने ऽध्वर्युकर्तृकत्वस्यार्थ-सिद्धत्वाच्च । प्रथमस्य तु विधेयान्तराभावात् पृथक् प्रयत्नापाद्य-त्वेनाध्वर्युकर्तृकत्वासिद्धेश्च विधिरिति विशेषः । तेनावघातार्थं त-त्काले आह्वानस्य तत्र च मन्त्रस्य नित्यप्राप्तस्यानुवादात् केवल-माह्वाने त्रिरभ्यासमात्रमस्यां शाखायां विधीयते । आह्वानस्य मन्त्रपाठातिरिक्तप्रयत्नानापाद्यत्वेन च नात्र वेदिप्रोक्षणमन्त्रव-दाह्वानमन्त्रस्य सकृत् पाठप्रसङ्गः । अवघ्नन्निति तु शतृप्रत्ययस्य

लक्षणार्थत्वात् 'शयाना भुञ्जते यवना' इतिवदवघातकर्तृत्वावस्थस्याह्वानकर्तृत्वप्रतीतेरवघाते च पत्नीकर्तृकत्वेनाध्वर्युकर्तृकत्वाभावेऽप्यन्वारम्भविधानेनाध्वर्योः कर्तृत्वोपचारेण तत्कर्तृकस्य वर्तमानस्यावघातस्याह्वानं प्रति कालिकसम्बन्धेन विधित्वावसायादवघातकाले आह्वयतीत्यर्थप्रतीतेस्तस्य चार्थप्राप्तत्वादनुवाद एव । अत एव काललक्षणापि शतृप्रत्ययोपात्तलक्षणत्वघटकतया आपाद्यमाना नातीव दोषमावहति । कालीनत्वस्य सम्बन्धविधया भानोपपत्तेर्न सापि ।

वस्तुतस्तु पत्नीकर्तृकेऽवघातेऽन्वारम्भकर्तृत्वमात्रेणाध्वर्योः कर्तृत्वायोगादवहन्तिधातौ तदर्थसाधनीभूतान्वारम्भलक्षणापत्तेः नायं लक्षणे शतृप्रत्ययः । अपि तु प्रयोजकत्वापरपर्याये हेतौ । अतश्चाभिचरन्यजेतेतिवदवघातफलमाह्वानमित्यर्थोऽनूद्यते । अस्मिंश्च पक्षे शतृप्रत्ययस्य कर्तृत्वार्थकस्य न स्वतन्त्रकर्तृत्वमर्थः । फलीभूतावघातकर्तृभूतायाः पत्न्या आह्वानकर्तृत्वासंभवादवघ्नन्निति पुंस्त्वानुपपत्तेः । अपि तु प्रयोजककर्तृत्वमवघातं कारयन्नाह्वयतीति । सर्वथा अवघ्नन्नित्यस्यानुवादकत्वादाह्वानानुवादेन त्रिरभ्यासमात्रविधानान्न गौणावघाताङ्गत्वं मन्त्रस्येति सिद्धम् ।

सूत्रं नावघाताङ्गं मन्त्रः, अपि तु कालाद्यनुवाद... रभ्यासविधिरेव कालादेरर्थप्राप्तत्वादिति व्याख्येयम् ॥

## सू—गुणाभावात् ॥ ३–२–७ ॥

गुणोऽपि मुख्यार्थसादृश्यं नात्र झटिति प्रतीयमानं किञ्चिद्दृश्यते ।

अथ वा वाक्यादवघाताङ्गत्वासंभवेऽपि लिङ्गादेव तत्संभवं मन्वानं प्रत्युत्तरं सामर्थ्यरूपगुणाभावादिति ॥

## सू—लिङ्गाच्च ॥ ३–२–८ ॥

"वाग्वा हविष्कृद्वाचमेव तदाह्वयती" त्यैकान्तिकस्त्रीलिङ्गायां पत्न्यामेव स्त्रीलिङ्गत्वाकसादृश्यमुपपद्यते । न त्ववघाते ॥

सू—विधिकोपश्चोपदेशे स्यात् ॥ ३—२—९ ॥

अध्वर्युकर्तृकावघाताङ्गतया मन्त्रोपदेशे पत्नीकर्तृकस्य "अत्र रक्षो दिवस्सपत्नं वध्यास" मिति मन्त्रसाध्यस्यावघातस्य तवमते भिन्नत्वात्पक्षे तद्विधिकोपो वैकल्पिकत्वात् स्यात् ॥ प्रयोजनं स्पष्टम् ॥

इति तृतीयं हविष्कृदाह्वानाधिकरणम् ॥

---

अथ चतुर्थं वाग्विसर्गाधिकरणम् ॥ ( ४ )

सू—तथोत्थानविसर्जने ॥ ३—२—१० ॥(सि)

( विषयसंशयौ )

ज्योतिष्टोमे—"उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहरे" ति । तथात्रैव "व्रतं कृणुतेति वाचं विसृजती" ति । दर्शपूर्णमासयोश्च "प्रणीताः प्रणेष्यन् वाचं यच्छति, तां सहविष्कृता विसृजती" तिश्रुतम् । तत्रापि पूर्ववदेव वाक्येन गौणयोरुत्थानवाग्विसर्गयोर्मन्त्रा विनियुज्यन्ते ? उत मुख्येष्वेवार्थेषु लिङ्गादिति संशयः ।

( सङ्गतिः )

पादाध्यायसङ्गतिश्च । आतिदेशिकी त्वनन्तरा ।

( पूर्वपक्षः )

तत्र सर्वत्र मुख्यक्रियान्तरसत्त्वात्तस्याश्च साधुत्वमात्रार्थत्वे प्रमाणाभावादवघ्नाभित्यस्य लक्षणां विनापि हेतुत्वमात्रतयोपपत्तेः श्रिरभ्यासस्य च विधेयान्तरस्य सत्त्वेन प्रबलस्यापि ब्राह्मणवाक्यस्यान्यथोपपत्तिसंभवाद्युक्तो लैङ्गिको विनियोगः । प्रकृते तु विधेयान्तराभावेनोत्तिष्ठन्नित्यस्य लक्षणार्थत्वमङ्गीकृत्य कालस्यैव

तव मते विधेयत्वात्‌ विधौ लक्षणापत्तेरुत्थानस्य च सामर्थ्यात्‌ करिष्यमाणदेशान्तरविहितकार्यार्थत्वेन कृतार्थस्य मन्त्रपाठार्थत्वायोगेन शतृप्रत्ययस्य कारणत्वरूपहेतुत्वार्थत्वायोगादवश्यं फलत्वरूपहेतुत्वार्थमङ्गीकृत्य मन्त्रपाठस्यैव गौणसामर्थ्येनोत्थानाङ्गत्वं युक्तम्‌ । व्रतवाक्ये तु शतृप्रत्ययस्याभावादितिकरणश्रुत्या वा विसर्गाङ्गत्वमेवावगम्यते ।

यद्यपि चेतिकरणस्थले वाक्यीयो विनियोगोऽभ्युपगम्येत तथापि ब्राह्मणवाक्यत्वेनास्य प्राबल्याद्युक्तं विनियोजकत्वम्‌, मन्त्रलिङ्गानुरोधमात्रेण विधौ काललक्षणायां प्रमाणाभावात्‌ । न हीयं शतृप्रत्ययस्थल इवावश्यक्यपि, येन नात्यन्तदोषाय भवेत्‌ । तस्मादत्रापि युक्तो गौणे विनियोगः । हविष्कृद्वाक्ये तु तृतीयैवैन्द्र्येतिवद्विनियोगकर्त्रीति न काचिदनुपपत्तिः ।

काललक्षणायां हविष्कृत्प्रातिपदिकेन मन्त्रपाठलक्षणा तु तवापि तुल्यैवेति मम मन्त्रमात्रलक्षणायामपि न कश्चिद्विरोधः । तस्मात्तत्रापि गौणे विनियोगः । गौणीवृत्तिप्रकारश्चाग्नीन्मन्त्रे तावदग्नीच्छब्देनोत्थानमेव यज्ञसाधनत्वाविशेषेण कथञ्चिदुक्त्वा तत्र च चैतन्यमध्यारोप्य त्वमग्निविहरणादि साधयेत्येवम्‌ । लोटो वा प्राप्तकालतार्थत्वमङ्गीकृत्य विहरणस्य प्राप्तः काल इत्येवम्‌ ।

न चाध्वर्युकर्तृकोत्थानस्याग्नीध्रकर्तृकाग्निविहरणसाधनत्वानुपपत्तिः । अत्रत्यपूर्वपक्षवादिमतेऽस्य मन्त्रस्य प्रैषत्वाभावेनाग्निविहरणादेः "प्रैषेषु पराधिकारात्" इति न्यायविषयत्वाभावादाग्नीध्रकर्तृकत्वानुपपत्तेः समाख्याया आध्वर्यवत्वात्‌ । सिद्धान्ते ह्यस्य प्रैषत्वेन पराधिकारत्वे प्राप्ते मन्त्रवर्णादाग्नीध्रविधिर्युक्तः ।

एवं व्रतमन्त्रेऽपि व्रतं नियमं कृणुत नाशयतेति हिंसार्थकत्वं कृणोतेरङ्गीकृत्य व्याख्येयम्‌ । वागधिष्ठानताल्वादिभेदाद्व

बहुवचनम् । चरतेति पाठेऽपि 'चर गतिभक्षणयो'रित्यनुशासनान्नाशनापरपर्यायभक्षणार्थत्वमङ्गीकृत्य स एवार्थः । हविष्कृन्मन्त्रेऽपि भक्षणेन हविर्नाशकत्वं दन्तादिनिष्ठं वाच्युपचर्य त्वमेहि प्रकटीभवेति व्याख्येयम् । अतोऽत्र गौणे विनियोग इति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—नात्रापि गौणे विनियोगः । प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनाप्युपपत्तेः ।

न च लक्षणा; शतृप्रत्ययस्य लक्षणार्थत्वमङ्गीकृत्य श्रुत्यैवान्वयोपपत्तेः । अत एव कालस्यापि सम्बन्धविधया भानोपपत्तेर्न लक्षणा । अन्यथोत्थत्नाङ्गत्वमपि प्रकाशकत्वसम्बन्धेनेति तस्यापि लक्षणापत्तिः । एवमितिकरणस्यापि मन्त्रस्वरूपमात्रपरामर्शकत्वादव्ययत्वाच्च लुप्तविभक्तिकत्वेन करणत्वादेर्लक्षणयैव भानान्न श्रुतित्वं न्यायसुधोक्तं युक्तम्। ब्राह्मणवाक्यत्वेन प्राबल्येऽपि च सतिसप्तम्यर्थलक्षणया कालिकसम्बन्धेनोपलक्षणार्थत्वोपपत्तौ नावश्यं करणत्वलक्षणयानपेक्षिताङ्गाङ्गिभावपरत्वं युक्तमाश्रयितुम् । हविष्कृद्वाक्ये तु सत्यामप्यैन्द्रीवत् तृतीयया करणत्वोक्तौ वाग्यमापेक्षितावधिसमर्पकत्वेन तद्विधिपदैकवाक्यत्वोपपत्तौ वाक्यभेदे प्रमाणाभावात् तृतीयाया अपीत्थंभूतलक्षणार्थतामङ्गीकृत्य कालविधिरेव । क्लृप्तश्चोत्तरपदार्थविधिपाठक्रमेणोत्थानस्य कालः मन्त्रपाठक्रमेण च व्रतहविष्कृन्मन्त्रयोः। स च तत्र तत्र विधीयते । अतोऽत्रापि ब्राह्मणवाक्यानामन्यपरत्वाल्लिङ्गेन मुख्य एव विनियोगः । सूत्रप्रयोजने स्पष्टे ॥

इति चतुर्थमुत्थानवाग्विसर्गाधिकरणम् ॥

अथ पञ्चमं सूक्तवाकाधिकरणम् ॥ ( ५ )

## ॥ सू–सूक्तवाके च कालविधिः परार्थत्वात् ॥ ३–२–११ ॥ (पू)

( विषयः )

दर्शपूर्णमासयोः सूक्तवाकस्समाम्नातः स किं लिङ्गादिष्टदेवताप्रकाशनार्थ एव ? अथ वा "सूक्तवाकेन प्रस्तरं प्रहरती" ति तृतीयाश्रुत्या प्रहरणाङ्गमपीति विचारः।

( सङ्गतिः )

मुख्यसामर्थ्यस्य विनियोजकत्वं गौणसामर्थ्यस्य च श्रुतिसहायत्वमित्यभिहिते सतिसम्भवे मुख्यसामर्थ्यस्यापि तत्सहायत्वमित्युपपादनात् पादाध्यायसङ्गतिः। कालविध्यपवादाच्चानन्तरा।

( पूर्वपक्षः )

तत्र प्रहरणस्य द्वितीयया प्रस्तरसंस्कारकत्वेनैव सूक्तवाकस्यापि लिङ्गेनेष्टदेवताप्रकाशनार्थत्वेन कृतार्थत्वात् "दर्शपूर्णमासाभ्यामिष्ट्वे" तिवत् वचनस्य कालविधित्वेनाप्युपपत्तेः न प्रहरणाङ्गत्वं सूक्तवाकस्य।

न च तत्र त्वाप्रत्ययेनैवेह कालस्य केनाप्यनुपात्तत्वात् "हविष्कृता वाचं विसृजती" तिवच्च वाक्यभेदादेर्लक्षणाकारणस्याप्यभावात् न तृतीयया प्रहरणाङ्गत्वस्याकाङ्क्षोत्थापनेनाप्युपपत्तिरिति वाच्यम्। (१)"इत्थम्भूतलक्षणे तृतीये" त्यनुशासनेन करणत्वस्येव गमकत्वरूपस्य लक्षणत्वस्यापि तृतीयाशक्यत्वावधारणात् कालिकसम्बन्धेनेह सूक्तवाकस्य लक्षणत्वेन प्रहरणा-

---

१ पा. सू. २-३-२१

न्वयोपपत्तेः लक्षणां विनापि वाक्यस्य कालविधिफलकत्वेना-न्यपरत्वसम्भवात् कृतार्थयोरङ्गाङ्गिभावपरत्वानुपपत्तेः ।

न च ज्ञाननिरूपितजनकत्वरूपस्य लक्षणत्वस्य वाच्यत्वेऽपि ज्ञानस्येहानुपात्तत्वात् तदुपात्तभावनानिरूपितकरणत्वापेक्षया विलम्बोपस्थितिकत्वेन तस्य दौर्बल्यमिति पार्थसारथ्युक्तं युक्तम् । ज्ञाननिरूपितस्यापि शक्यतावच्छेदककोटिप्रविष्टत्वेनोपादानोपपत्तेः । अन्यथा करणत्वानुशासनेनैव करणत्वस्य श्रुतक्रियानिरूपितस्यापि शक्यतावच्छेदकत्वासम्भवे योग्यतयैवाध्याहृतज्ञानक्रियानिरूपितत्वोपपत्त्या लक्षणत्वसिद्धेः पृथगनुशासनवैयर्थ्यापत्तिः ।

न चैवमपि गमकत्वस्याकारकत्वेन धात्वर्थान्वयप्रतीतेः प्रधानभूतभावनानिरूपितकारकत्वापेक्षया दौर्बल्यमिति वाच्यम् । अकारकस्यापि निमित्तादेर्भावनान्वयाङ्गीकारेण गमकत्वस्यापि भावनाविषयत्वेन तुल्यत्वात् । अत एव विशेष्यभूतसुबन्तार्थप्रकारकशाब्दत्वावच्छिन्नं प्रति प्रत्ययजन्योपस्थितिर्भावनाविशेष्यतासम्बन्धेन कारणं लाघवात् । अत उपपदविभक्तितः कारकविभक्तेः प्राबल्ये प्रमाणाभावात् कृतार्थत्वबलेन तृतीयाया इत्थंभूतलक्षणार्थतामङ्गीकृत्य विनैव लक्षणां कालविधिफलकत्वमेव युक्तम् । अस्तु वा लक्षणा, तथापि सिद्धान्ते प्रहरतौ मान्त्रवर्णिकतत्तदग्न्यादिप्रत्येकदेवताविधिकल्पनापूर्वकैकहोमलक्षणाङ्गीकारात् तदपेक्षयानुशासनिकी तृतीयाया इत्थम्भूतलक्षणत्वलक्षणा अपेक्षितविधानापादिका युक्तैव ।

किञ्च तत्र मन्त्रेऽपि लक्षणा, 'अजुषते' ति भूतनिर्देशस्य वर्तमानप्रहरणविषयत्वानुपपत्तेः । अत इदं प्राकरणिकं पुरोडाशादि अग्न्यादिरजुषतेत्येवमिष्टप्रकाशनार्थ एव लिङ्गात् सूक्त-

वाक्यं, न तु प्रहरणाङ्गम् । वचनस्य कालविशिष्टप्रहरणविधिपरत्वात् । कॢप्तश्चानूयाजोत्तरं सूक्तवाक्पाठात्तत्काल इति न किञ्चिदनुपपन्नम् । सूत्रं स्पष्टम् ॥

( इति पूर्वपक्षः )

## सू—उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ ३–२–१२ ॥ ( सि )

( अथ सिद्धान्तः )

तृतीयाश्रुत्या कृतार्थस्यापि प्रहरणाङ्गत्वेनोपदेशः विना कारणं गमकत्वलक्षणाङ्गीकारे प्रमाणाभावात् ।

न च तत्राप्यनुशासनबलाच्छक्तिः; तस्य लाक्षणिकत्वेनाप्युपपत्तेः लाघवात् प्रचुरप्रयोगाच्च करणत्व एव शक्त्यङ्गीकारादुत्तरसूत्रवक्ष्यमाणन्यायेन प्रहरतौ जघन्ये होमलक्षणायाः फलमुखत्वेनादोषत्वाच्च ।

यत्तु मन्त्रेऽपि लक्षणेत्युक्तं, तत् 'अजुषते' स्यस्य पुरोडाशविषयत्वेऽपि अग्न्यादिः पुरोडाशादि सेवितवान् यत्तु यजमान 'आशास्ते' आयुरादि तदनेन प्रत्यक्षनिर्दिष्टेन प्रस्तराख्येन हविषेत्यग्रिमेण सहैकवाक्यत्वाल्लक्षणां विनापि प्रहरणप्रकाशकत्वोपपत्तेरकिञ्चित्करम् ।

यद्यपि चा "ग्निरिद" मित्याद्येव श्रूयेत तथापि न लक्षणा, इदंशब्देन प्रत्यक्षनिर्दिष्टप्रस्तरग्रहणात् ।

एवञ्च पुरोडाशादेर्हुतत्वेनेदंशब्दव्यपदेश्यत्वानुपपत्तेः अजुषतेति भूतनिर्देश "आशंसायां भूतवच्च" त्यनुशासनात् स्तुत्यर्थत्वेन नानुपपन्नः । अतः प्रहरणाङ्गमपि सूक्तवाकः ।

"सूक्तवाक एव याज्या(१)प्रस्तर आहुति" रिति सूक्तवाकस्य व-स्तुतोऽयाज्यारूपस्यापि त्यागसाधनीभूतमन्त्रत्वसादृश्याद्याज्या-शब्दव्यपदेशस्तुत्यर्थमुपपद्यते । कालविधौ तु तदभावादनुपपन्नः।

कथं पुनरस्य न मुख्यमेव याज्यात्वम् ? तदुच्यते—याज्या-त्वं हि याज्ञिकप्रसिद्धेरवयवयोगाच्च होतृप्रवचनविहितत्यज्य-मानद्रव्यसम्बन्ध्युद्देशाङ्गभूतदेवताप्रकाशकमन्त्रत्वरूपमवगम्यते । न च तत्सूक्तवाके होमरूपप्रहरणसाधनीभूते संभवति, यागहो-मयोर्भेदात्। अत्र च मन्त्रत्वग्रहणं याज्यादौ पठ्यमानदेवतापदस्यो-द्देशाख्यस्य याज्यात्वव्यावृत्त्यर्थम् । होतृवेदे विहितस्य "चतुर्हो-त्रा ग्रामकामं याजयेदि" त्यादौ यागसाधनीभूतस्य चतुर्हो-तृमन्त्रस्य याज्यात्वव्यावृत्त्यर्थं देवताप्रकाशकेत्युक्तम् । सूक्त-वाकस्वरूपदेवताप्रकाशनार्थत्वं स्तोत्रमन्त्राणामपीति तद्व्यावृत्त्य-र्थं द्रव्येत्यादि । ऋग्वेदविहितदर्विहोममन्त्राणां सूक्तवाकस्य च व्यावृत्त्यर्थं त्यागविशेषणम् । आवाहनादिमन्त्राणां सूक्तवाकस्य चाग्नेयादियागाङ्गभूतदेवताप्रकाशकत्वात् याज्यात्वप्रसक्तौ वर्तमा-नवाचिशानच्प्रत्ययग्रहणम् । आध्वर्यवाणां "अग्ना३इ पत्नीवाः स-जूर्देवेन त्वष्ट्रा सोमं पिब स्वाहे"ति पात्नीवतादियागमन्त्राणां व्या-वृत्त्यर्थं होतृप्रवचनविहितेति विशेषणम् । मैत्रावरुणादियाज्या-सु तत्सिध्यै प्रवचनेत्युक्तम् ।

न चैवमपि मृगारेष्ट्यादिविकृतिष्वध्वर्युवेदे विहितास्वप्यौप-देशिकयाज्यानां यजुर्वेद एव विधानेन याज्यात्वानापत्तिप्रसङ्गा-द्वषट्कारादितद्धर्मानापत्तिरिति वाच्यम् । तासां स्वरूपेण या-ज्यात्वाभावेऽपि याज्याकार्यविधानेन तद्धर्मप्राप्त्युपपत्तेः ।

यत्तु काचित्कं दर्शपूर्णमासादिमात्रे याज्यादिविधानं तदङ्ग-

१ प्रस्तराहुतेः।

स्नत्वाद्धोत्रस्य ऋग्वेदस्थशाखान्तरविहितयाज्याद्यनुवादकमेवेति न तेष्वप्राप्तिः। अस्तु वा तदनुरोधेन मन्त्रत्वादिवत्प्रसिद्धविषयत्वसमानाधिकरणो याज्यात्वमखण्डोपाधिरूपो धर्मविशेषः।

न चैवं 'सूक्तवाकेऽपि सूक्तवाक एव याज्ये'ति प्रसिद्धेः मुख्याद्याज्यात्वापत्तिः, अस्या एवकारोपबद्धत्वेन विरुद्धत्वात्। न ह्ययं याज्यान्तरनिवृत्त्यर्थः। तस्यापि प्राप्तत्वात्। अतोऽयाज्यात्वेऽप्ययमेव याज्येति स्तुत्यर्थः। अत एव प्रस्तरे आहुतित्वस्य मुख्यत्वान्न तत्रैवकारः प्रयुक्तः। सूक्तवाकस्य च निगदत्वेन प्रसिद्धेः निगदानां च याज्यात्वाभावस्य "अयाज्या वै निगदा" इत्यनेन स्थलान्तरेऽनुवादादयाज्यात्वं स्पष्टम्। अत एव न तत्र तद्धर्माः।

न च याज्यात्वाभावेऽपि सूक्तवाक एव याज्येति नामातिदेशेन तद्धर्मप्राप्तिः। अस्यार्थवादत्वेन प्रसिद्धसादृश्यमात्रेणोपपत्तौ तदन्तर्गतस्य याज्यानाम्न "उपशयो यूपो भवती"तिवदनतिदेशकत्वात्। कार्यापत्त्या तद्धर्मप्राप्तिस्तु प्रहरणे याज्यान्तरस्याविहितत्वादनाशङ्क्यैव। तत्सिद्धं मुख्ययाज्यात्वाभावेऽपि यागसाधनीभूतमन्त्रत्वसाम्याद्याज्यात्वव्यपदेशः प्रहरणाङ्गं तु सूक्तवाक इति॥ सूत्रं स्पष्टम्॥

## सू॰-स देवतार्थस्तत्संयोगात्॥ ३-२-१३॥

नन्वग्न्यादिप्रकाशकेन सूक्तवाकेन तद्रहितप्रहरणप्रकाशनासम्भवात् कथं तस्य तदङ्गत्वम्? अत आह—स सूक्तवाको देवताकल्पनार्थोऽङ्गत्वेन रूपेण प्रहरणं प्रति संयोगात् आघारोपांशुयाजादिमन्त्रवत्। अत्र चाग्नेयादियागेष्वग्न्यादीनां प्रत्येकं देवतात्वेऽप्येतद्यागान्तर्गतोद्देशनिरूपितदेवतात्वस्य पुत्रनिष्ठपुतत्वादिवत्तिफलत्वस्येव लाघवेन व्यासज्यवृत्त्येकस्यैव कल्पनम्। अतश्च

परप्रयुक्ताग्न्यादिवृत्तिना एकेन देवतात्वेनैकस्यैवैतत्प्रस्तरद्रव्यकस्य त्यागस्य कल्पनम् । शाब्दस्त्वार्थं चाजहत्स्वार्थलक्षणया आघारयतिवत् प्रहरतिना लक्षणाद्धोमत्वसिद्धिः । एकहोमकल्पनाच्च सत्यपि मन्त्रे प्रत्येकाधिष्ठानप्रकाशने यजमानेन समस्तान्यधिष्ठानान्युद्दिश्य युगपत् त्यागः कार्यः । याज्ञिकानां त्वेकद्रव्यकत्वेऽपि प्रत्येकत्यागकरणे मूलं न पश्यामः । सूत्रं स्पष्टम् ॥

## सू—प्रतिपत्तिरिति चेत् ॥ ३-२-१४ ॥

ननु–प्रहरतिना होमलक्षणायां तस्योद्देश्यत्यागप्रक्षेपरूपक्रियासमुदायरूपत्वात् तत्र च प्रक्षेपमात्रस्य प्रकृतिप्रतिपत्तित्वेऽपि त्यागस्य स्विष्टकृदादावित्रारादुपकारकत्वापत्तेः प्रस्तरमिति द्वितीयोक्तप्रस्तरकर्मत्वस्य प्रक्षेप एवान्वयात् पदार्थैकदेशेऽन्वयापत्तिः ।

न चोत्तरार्धादितुल्यत्वम् । तत्र पञ्चम्या प्रक्षेपांशं प्रत्यपि गुणत्वेनैवोत्तरार्धे विहिते पश्चात्प्रयोजनाकाङ्क्षायां कल्पितविधौ प्रक्षेपमात्रं प्रत्युत्तरार्धस्य संस्कार्यत्वोपपत्तेः । अतश्च द्वितीयया प्रस्तरस्य प्रहरणमात्रप्रतिपाद्यत्वावगतेः प्रहरतिना होमलक्षणायोगादनाकाङ्क्षितविनियोगस्य सूक्तवाकस्य गौण्या वृत्त्या प्रहरणमात्रे विनियोगानुपपत्तेः तस्मिन् सूक्तवाकस्य कालार्थ एव संयोग इति चेत्—

## सू—स्विष्टकृद्वदुभयसंस्कारस्स्यात् ॥ ३-२-१५ ॥

अत्रापि स्विष्टकृत्तुल्यतैव । न च पदार्थैकदेशेऽन्वयापत्तिः । शाब्दस्य कर्मत्वस्य प्रथमतः पदार्थभूतायां भावनायामेवान्वयेन पश्चात् पार्ष्ठिकान्वयवेलायां प्रक्षेपमात्रान्वयोपपत्तेः ।

न च भावनाख्यस्य यत्नस्यापि जन्यक्रियाभेदेन शब्दान्त-

रविषया भिन्नत्वात् प्रक्षेपमात्रजनकीभूते यत्ने तदन्वयाङ्गीकारापत्तौ तद्दोषतादवस्थ्यमिति वाच्यम् । क्रियाभेदेऽपि जन्यतावच्छेदकस्य होमत्वस्य व्यासज्यवृत्तस्यैकत्वेन जनकीभूतयत्नवैजात्ये प्रमाणाभावेन शब्दान्तरन्यायाविषयत्वात् । समूहालम्बनवदनेकक्रियाजनकीभूतैकयत्नाङ्गीकारेण तदन्वयोपपत्तेः । अतश्च स्विष्टकृद्देव प्रक्षेपांश उपयुक्तप्रस्तरप्रतिपत्त्यर्थः, त्यागांशश्चारादुपकारकः, उद्देशांशेन देवतासंस्कारार्थः । तत्र त्वयं विशेषः—स्विष्टकृति त्यागान्तर्गतस्योद्देश्यस्यानुपयुक्ताग्निस्विष्टकृद्विषयत्वेनारादुपकारकत्वमेव । मन्त्रगतस्य त्विष्टेज्यमानदेवतासंस्कारकत्वम् । प्रकृते तु त्यागान्तर्गतस्यापीति ।

प्रयोजनं स्पष्टम् । पूर्वपक्षे सूक्तवाकपाठकाले प्रहरणं सिद्धान्ते त्वन्त इत्याद्यूह्यं च ॥

इति पञ्चमं सूक्तवाकाधिकरणम् ॥

## अथ षष्ठं सूक्तवाकस्य विभज्य विनियोगाधिकरणम् ( ६ )

### सू–कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ ३-२-१६ ॥

( विषयसंशयसङ्गतयः )

तदेवं श्रुतिप्रमाणके प्रहरणाङ्गत्वे मुख्यसामर्थ्यस्य सहायत्वे निरूपितेऽधुना प्रसङ्गाच्छ्रुतिविनियुक्तस्य सूक्तवाकस्य मुख्यसामर्थ्यादिष्टदेवताप्रकाशनार्थत्वमप्यस्ति ? नवा ? इति चिन्तनात् पादाध्यायानन्तरसङ्गतयः ।

( पूर्वपक्षः )

तत्र प्रबलप्रमाणेन प्रमिते प्रहरणाङ्गत्वे तेनैव निराकाङ्क्षस्य

सूक्तवाकस्येष्टदेवताप्रकाशनविषये लिङ्गेन श्रुतिकल्पनानुपप-त्तेर्न्यायविरोधेऽपीष्टदेवताप्रकाशनाङ्गम् ।

न चात्राविरोधोऽपि । सूक्तवाकपदस्याध्येतृप्रसिध्या समस्ता-नुवाके रूढत्वात् । भवन्मते चेष्टदेवताप्रकाशकपदसमुदायस्यैव पाठेन सूक्तवाकावयवपाठापत्त्या सूक्तवाकपदेऽवयवलक्षणाप्रस-ङ्गेन प्रातिपदिकश्रुतेर्बाधापत्तेः ।

न च सुष्टूक्तं वक्ति असौ सूक्तवाक इति व्युत्पत्त्या सूक्त-वाकशब्दस्य क्लृप्तावयवयोगेनोपपत्तेरस्वतन्त्ररूढिकल्पनानवका-शः । तथात्वे पारायणाध्ययनजपादावपि कतिपयदेवतावाचिप-दानामेवाभितस्तन्त्रपदोपेतानां पाठेन सूक्तवाकपदार्थसम्प-त्त्यापत्तेः ।

अथ तत्राध्येतृप्रसिद्ध्या यावदाम्नातदेवतापदसमूहस्यैव तन्त्रपदोपेतस्य सूक्तवाकपदवाच्यत्वम् , ततो लब्धा-त्मिकायास्समूहरूढेरवयवयोगस्य दुर्बलत्वान्न तद्बलेनैकदेशप्र-योगसिद्धिः । अतश्च श्रुतिविरोधे लिङ्गस्य विनियोजकत्वा-योगान्नेष्टदेवताप्रकाशनार्थत्वं सूक्तवाकस्य । अस्तु वा तत् , तथा-पि नेष्टदेवताप्रकाशनस्य सूक्तवाकप्रयोजकत्वम् , अपि तु प्रहर-णस्यैव विनियोजकप्रमाणद्वयसत्वे प्रबलप्रमाणप्रमितस्यैव विशे-षिणः प्रयोजकत्वकल्पनौचित्यात् । अतश्चायुरादिवदानुषङ्गिकम-स्त्विष्टदेवताप्रकाशनम् । प्रहरणं पुनरिष्टानिष्टदेवतापदसाधार-ण्येन सूक्तवाकप्रयोजनं न विरुध्यते । अतश्च सम्पूर्णस्सूक्तवाकः पौर्णमास्याममावास्यायां च प्रयोक्तव्य इति फलितम् । सूत्रं स्पष्टम् ॥

( इति पूर्वपक्षः )

## सू—यथार्थं वा शेषभूतसंस्कारात् ॥ ३–२–१७(सि)

( सिद्धान्तः )

सत्यं प्रबलप्रमाणप्रमिते दुर्बलप्रमाणस्यानवतारो यदि दुर्बलप्रमाणानुपजीवि प्रबलं भवेत्, यथा ऐन्द्र्यादौ; प्रकृते तूपजीवित्वाद्द्वयोरपि विनियोजकत्वम् ।

तथा हि—श्रुतिर्हि लिङ्गं यदि बाधेत ततो मन्त्रवर्णकल्पितदेवताकहोमान्तर्गतस्य देवतोद्देशस्यानुपयुक्तसंस्कारकत्वानुपपत्तेरारादुपकारकत्वं प्रसज्येत। अतस्तस्य दृष्टविधया सामवायिकत्वलाभार्थं प्रहरणविधिरेव लिङ्गोन्नीतमिष्टदेवतासंस्कारार्थत्वं मन्त्रस्याप्यनुमन्यते । एतेनानुषङ्गिकदेवतासंस्कारार्थत्वपक्षोऽपि निरस्तः । तस्मिन्नपि पक्षेऽनुपयुक्तदेवतापदांशे आरादुपकारकत्वप्रसङ्गस्य तुल्यत्वात् ।

अत एव सूक्तवाकस्येष्टदेवताप्रकाशनमेव प्रयोजकं, न तु होमः । ततश्च विभज्य विनियोगसिद्धिः । इष्टदेवताप्रकाशनस्यापि प्रयोजकत्वं मन्त्रलिङ्गाधीनत्वात् संनिपत्योपकारकत्वकल्पनामूलकत्वाच्च विभज्य विनियोगविषय एव, न तु होमाभावेऽपि सूक्तवाकपाठविषये । यदनेन हविषेति हि मन्त्रे प्रत्यक्षनिर्दिष्टस्य प्रस्तरहविष आयुरादिफलस्य च निर्देशेन तदंशेन होमस्यैव प्रयोजकत्वावगतेः एकदेशपाठस्य साकाङ्क्षत्वेनायुक्तत्वाच्च । अत एवावभृथादौ आज्यभागाङ्गेष्टदेवताप्रकाशनार्थतया न सूक्तवाकपाठः । अपूर्वत्वेन प्रस्तराभावेन च होमाभावात् । प्रस्तरनाशादौ त्वाज्येन होमस्य सत्त्वात् तत्पाठ इष्ट एव । अयं चाविकलो न्याय उत्तमप्रयाजस्विष्टकृन्मन्त्रादिष्वपि ज्ञेयः ।

तत्रापि सत्यपि महाप्रकरणसहकृतेन स्पष्टलिङ्गेनावाहनम-

न्त्रवद्वक्ष्यमाणदेवतासंस्कारार्थत्वे क्रमसहितावान्तरप्रकरणसहकृतेन लिङ्गेन मान्त्रवर्णिकदेवताकल्पनद्वारोत्तमप्रयाजाङ्गत्वमपि तन्मन्त्रस्यावधार्यते ।

अस्तु वा वचनादेव स्विष्टकृन्मन्त्रस्य स्विष्टकृद्यागाङ्गत्वादस्याप्युत्तमप्रयाजाङ्गत्वम् । न हि स्विष्टकृति मान्त्रवर्णिकदेवताकल्पनद्वारा लिङ्गस्य विनियोजकत्वं संभवति । चतुर्थ्युपात्ताग्निस्विष्टकृद्देवतावरोधात् । तेनावश्यं स्विष्टकृति वाचनिक एव मन्त्रविनियोगो वाच्यः । तद्वच्चोत्तमप्रयाजेऽप्यस्तु । अतश्चोत्तमप्रयाजान्तर्गतदेवतोद्देशस्य संनिपत्योपकारकत्वलाभार्थं वचनेनापि वक्ष्यमाणदेवताप्रकाशकलिङ्गोपजीवनाद्विभज्यविनियोगादिसिद्धिः ।

न चैवमपि स्विष्टकृद्देवतोद्देशांशस्यानुपयुक्तदेवताकत्वेनारादुपकारकत्वस्य निश्चितत्वात्तन्मन्त्रस्य लैङ्गिकेष्टयक्ष्यमाणदेवतासंस्कारार्थत्वानुपपत्तिरिति वाच्यम् । स्विष्टकृच्छब्दस्य यौगिकत्वबलेन तत्सिद्धेः ।

तथा हि—यथैव सूक्तवाकशब्दस्य सुष्टूक्तं वक्तीति व्युत्पत्त्या यौगिकत्वाद्विभज्य विनियोग इत्युत्तरसूत्रे वक्ष्यते तथैव स्विष्टकृच्छब्दोऽपीष्टमग्न्यादिदेवतारूपं सुष्ठु करोतीति व्युत्पत्त्या यौगिकस्सन् प्रकृतयागाङ्गभूताग्निविशेषणमिति तावन्निर्विवादम् ।

योगोऽपि च नेष्टदेवतासम्बन्ध्युत्तरार्धादिप्रतिपादकत्वेन । प्रक्षेपस्यैव तत्त्वेनाग्नौ देवताभूते तदभावात् । अतश्च (योगोपपादकापेक्षायां मन्त्र "अयाळग्निरग्नेः प्रिया धामानी"त्यादिना "होतः पावके"त्यादिवाक्यशेषात् स्विष्टकृद्देवतारूपो)ग्निः होतृरूपेणाज्यभागादिसम्बन्ध्यग्न्यादेः प्रियाणि धामान्यधिष्ठानानीष्टवानित्येवमवगतस्य योगस्याश्रयणीयत्वावगतेः स्विष्टकृद्देवताभूता-

( ) एतत्कुण्डलान्तर्गतो भागः 'ख' पुस्तके नास्ति ।

न्यादिविशेषणीभूतेष्टयक्ष्यमाणदेवताद्याचिमुष्टुभावकारित्वरूपध-र्मवशेनापि त्रिभज्य विनियोगादिप्रतीत्युपपात्तिः । तस्मात् सिद्धं सूक्तवाक उद्देशांशस्योपयुक्तदेवतासंस्कारत्वलाभार्थं लिङ्गादपि विनियोग इति । सूत्रं स्पष्टम् ॥

## सू—वचनादिति चेत् ॥ ३—२—१८ ॥

यत्तु सूक्तवाकपदस्य कृत्स्नसूक्तवाके रूढत्वात् प्रातिपदिक-श्रुतिबाधापत्तेः तदनुरोधेनोद्देशांशे आरादुपकारकत्वकल्पनस्या-पि न्याय्यत्वात् न तल्लिङ्गस्य विनियोजकत्वमित्युक्तम् । तत्राह—

## सू—प्रकरणाविभागादुभे प्रति कृत्स्न-शब्दः ॥ ३—२—१९ ॥

अत्र भाष्यकारेणैवं सूत्रं व्याख्यातम्—अभ्युपगम्यैव सू-क्तवाकपदस्य रूढिप्रयोगद्वयवर्तिप्रहरणद्वयोद्देशेन कृत्स्नस्य सूक्त-वाकस्य विधानेऽप्येकैकप्रहरणेऽवयवशः प्रयोगो न विरुध्यते । यथा—"चातुर्विद्येभ्यश्शतं देयम्" "ऐकादशिनान् प्रायणीयोद-यनीययोरालभेर"न्नित्यादौ समुदायोद्देशेन कृत्स्नविधिरेकैकवे-दविदश्च शतचतुर्थांशः, प्रायणीये पञ्च पशवः उदयनीये षडि-त्यवयवशः प्रयोगः तथा प्रकृतेऽपीति ।

तत्त्वेवं दूषितम्—न समुदायस्य फलसाधनता, यज्या-दिपदे लक्षणापत्तेः । अपि तु समुदायिनामेव । तत्र तु फलं प्रत्युपादेयत्वात्तद्विवक्षायामपि नेतिकर्तव्यतान्वये साहि-त्यविवक्षा उद्देश्यत्वात् । अतश्च प्रत्येकमेव षण्णां यागानामि-तिकर्तव्यतान्वयात् प्रयाजादीनामिव प्रत्येकमेव प्रहरणान्व-यः । सूक्तवाकोऽपि च तदङ्गत्वात् प्रत्येकमेव कर्तव्यत-या कृत्स्नः प्राप्नोतीति कालैक्याच्चयाणामर्थे प्रहरणतन्त्रतया

तन्त्रेण प्राप्तावपि तस्य नावयवशः प्रयोगसिद्धिः । शतदानविधौ तु सम्प्रदानस्यासंस्कार्यत्वेनोपादेयत्वात् साहित्यविवक्षा ।

एवं प्रायणीयवाक्येऽपि द्वादशाहाङ्गभूतैकादशिनोद्देशेन प्रायणीयोदयनीयरूपदेशस्य विधेयत्वात् तत्साहित्यविवक्षा । अतश्च तत्र युक्तोऽवयवशः प्रयोगः ।

एवं यत्रोत्पत्तिवेलायामेव व्यक्त्यैकत्वमवधारितम्, यथा-"चतुर्जुह्वां गृह्णाती" त्यादौ चतुर्गृहीतैकत्वस्य तत्रापि प्रयाजत्रयोद्देशेन विधानेऽप्यावृत्त्यनुपपत्तेरवयवशः प्रयोगः । प्रकृते तूत्पत्त्यवगतस्य सूक्तवाकस्वरूपस्यावृत्तावप्यवाधान्नावयवशः प्रयोग इति ।

स्वयं च प्रातिपदिकश्रुतिविरोध एवं परिहृतः-नायमेकस्सूक्तवाकः । देवतापदानां परस्परान्वयाभावेनैकार्थ्यप्रतिपादकत्वाभावादेकवाक्यत्वानुपपत्तेः । अपि त्वभितस्तन्त्रपदोपेता एकैकदेवतापदमध्या बहवस्सूक्तवाकाः । अतश्च विभक्तस्यैव सूक्तवाकत्वेन तृतीयया प्रहरणं प्रति करणत्वेन विधानात्प्रातिपदिकतृतीयाश्रुत्यविरोधः । एकवचनं परं पाशाधिकरणन्यायेन बहुत्वलक्षणार्थम् । एवं चेष्टदेवताप्रकाशनरूपलैङ्गिककार्यानुरोधेनैकप्रहरणप्रयोगे सूक्तवाकत्रयपाठोपपत्तिः । अभितस्तन्त्रपदानां तु लाघवात् सकृत्पाठ इति ।

तदपि पुनर्वार्तिककारेण दूषितम्-न बहवस्सूक्तवाकाः, वैश्वानरादिवाक्यवदुपक्रमोपसंहारैक्येनैकवाक्यत्वोपपत्तेः । न च तत्तद्देवतापदानां संभूयैकार्थप्रतिपादकत्वाभावात्तदसम्भवः । प्रत्येकपदानामेकार्थप्रतिपादकत्वाभावेऽपि यदनेन हविषेत्यनेनैकवाक्यतयैकप्रयोजनत्वोपपत्तेः । उपपादितश्च तदेकवाक्यतया पूर्वाधिकरण एव सूक्तवाकार्थः ।

यद्यपि चेष्टदेवताप्रकाशनस्यैव सूक्तवाकप्रयोजकत्वादर्थ-

तः प्राधान्यं तथापि प्रहरणस्यापि शाब्दबोधेऽङ्गित्वेनार्थतोऽपि वा प्राधान्यसत्त्वादेकप्रयोजनत्वोपपत्तिः । यदि च तत्तद्देवताप्रकाशनानामेव शब्दतोऽपि प्राधान्यमङ्गीकृत्य नानावाक्यत्वमिष्येत ततो "या ते अग्ने" इत्यादिवदभितस्तन्त्रपदानामप्यनुषङ्गेण पृथक् पाठापत्तिः । सूक्तवाकेनेत्येकवचनबलाच्चानियमेनैकस्यैव सूक्तवाकस्य श्रुत्या विनियोगापत्तेः तदंश एव च सन्निपत्योपकारकत्वलाभार्थमिष्टदेवताप्रकाशनार्थत्वकल्पनोपपत्तेर्न सूक्तवाकत्रयपाठसिद्धिः । अतोऽन्यथा परिहृतम्—न सूक्तवाकपदस्य प्रत्येकं समुदाये वा शक्तिः, गौरवात् । अपि तु सुष्ठूक्तं वक्तीति व्युत्पत्त्यैकप्रयोगवृत्तियावदिष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढः । अतश्चेष्टदेवताप्रकाशनकार्यानुरोधेनानिष्टदेवताप्रकाशकपदानुच्चारणेऽपि न सूक्तवाकप्रातिपदिकश्रुतिविरोधः ।

यस्मिन् प्रयोगे यावत्यः प्राकृत्यो वैकृत्यो वा देवता इष्टास्तावत्पदसमुदायस्यैवाभितस्तन्त्रपदोपेतस्यावयवप्रसिध्या सूक्तवाकपदवाच्यत्वावधारणात्तावत एव शाब्दबोधकालीनप्रहरणप्राधान्यमादायैकवाक्यत्वोपपत्तेश्च ।

न चैवमध्ययनादिकाल इष्टत्वाभावेन फलोपहितेष्टदेवताप्रकाशकमन्त्रत्वाभावात् सूक्तवाकपदप्रयोगानुपपत्तेस्तदर्थं स्वरूपयोग्यतामात्रेण शक्त्यङ्गीकारे चानिष्टदेवताप्रकाशकपदानामपि योग्यतामात्रेण प्रयोगोपपत्तेरध्ययनादिकाले च द्वित्रिदेवतापदसहितमन्त्रपाठमात्रेणापि सूक्तवाकत्वसिद्ध्यापत्तौ वैदिकानां यावच्छ्रुतदेवतापदसहितमन्त्रपाठ एव तत्प्रसिद्धिविरोधापत्तेरवश्यं तत्र रूढेरेव कल्पनीयत्वात् तया च योगबाधेन क्रतुकालेऽपि समस्तस्यैव पाठावगतेः कथं न श्रुतिविरोध इति वाच्यम् । सूक्तवाकशब्दस्याध्ययनादिकालीनवैदिकप्रसिद्ध्यनुरोधेन दर्श-

पूर्णमासीयथावद्देवतापदसमुदायसहितमन्त्रे निरूढलक्षणाङ्गीकारात् । अश्वकर्णादौ तु अवयवसम्बन्धप्रतीत्यभावात् क्लृप्तावयवशक्तिबाधेनाप्यतिरिक्तशक्तिकल्पनमिति वैषम्यम् । तस्मात् श्रुतिविरोधाभावात्तुपजीव्यत्वेन मुख्यसामर्थ्यस्यापि युक्तमेव विनियोजकत्वम् ।

प्रयोजनं विभज्य विनियोगादि स्पष्टम् । सूत्रं च प्रकरणस्य प्रकृष्टकरणस्यावयवशक्तिरूपस्याविभागात् प्रत्यभिज्ञानाद्रूढिकल्पनानुपपत्तेरुभे प्रत्यवयवप्रयोगेऽपि कृत्स्नस्सूक्तवाकशब्दार्थो नानुपपन्न इति व्याख्येयम् ॥

इति षष्ठं सूक्तवाकस्य विभज्यविनियोगाधिकरणम् ॥

अथ सप्तमं लिङ्गक्रमसमाख्याधिकरणम् ॥ (७)

सू—लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ ३–२–२० ॥

( विषयसंशयौ )

काम्येष्टिकाण्डे(१)"ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयु"रित्याद्याः काम्येष्टयस्समाम्नाताः । तेनैव क्रमेण मन्त्रकाण्डे तत्तल्लिङ्गा एव काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्याता "इन्द्राग्नी रोचना दिवः" इत्याद्या मन्त्रास्समाम्नाताः । ते किं लिङ्गमात्रादिन्द्राग्न्यादिदैवत्यकर्ममात्राङ्गं ? किं वा क्रमसमाख्यानुरोधेन काम्येष्टिष्वेवेति सन्देहः ।

१. मै. सं. २–१–१.

( सङ्गतिः )

लिङ्गविनियोगोपयोग्युद्देश्यतदवच्छेदकविचारालिङ्गोपजी विप्रमाणान्तरविचाराच्च पादाध्यायसङ्गती। पूर्वं श्रुतेर्जघन्यप्रमाणापेक्षत्वे निरूपिते लिङ्गस्यापीह तन्निरूपणात्प्रासङ्गिकी त्वनन्तरा।

( पूर्वपक्षः )

तत्र स्वाध्यायविध्यध्यापितस्य मन्त्रजातस्य प्रयोजनाकाङ्क्षत्वादाकाङ्क्षासहकृतेन योग्यतारूपेण लिङ्गेन मन्त्रस्येन्द्राग्निप्रकाशनार्थत्वकल्पनोपपत्तेर्न लिङ्गस्य सामान्यसम्बन्धप्रमाणापेक्षा।

न च लिङ्गं सामान्यतः क्रतुसम्बन्धेऽनगवते एव द्वारविशेषविनियोजकमित्यत्रापि किञ्चिन्नियामकमस्ति। श्रुतिवदेव पूर्वं क्रतुसम्बन्धानवगमेऽप्याकाङ्क्षासहकृतलिङ्गेन वहनयोग्यस्य पुरुषस्याकाङ्क्षायां सत्यां वहने विनियोगवदिन्द्राग्नी प्रकाशनेऽपि विनियोगोपपत्तेः। न चेन्द्राग्निप्रकाशनस्वरूपे वैयर्थ्यादस्त्येवापूर्वसाधनत्वकल्पनातात्पर्यग्रहार्थं प्रमाणान्तरापेक्षेति वाच्यम्। श्रुत्यादेरपि तदपेक्षत्वेन लिङ्गस्यैव विशिष्य तदपेक्षत्वोद्घोषे प्रमाणाभावात्। अस्ति चात्रापूर्वसाधनत्वकल्पनातात्पर्यग्राहकं प्रमाणम्। इन्द्राग्न्यादिदेवतानां क्रत्वव्यभिचारित्वेन जुहूवत्क्रतूपस्थापकत्वोपपत्तेः। देवतात्वं हि यागैकनिरूपितं विहितत्वघटितं चेति न लौकिकम्। न च तस्यालौकिकत्वेऽपि तत्त्वेन रूपेण मन्त्रेणाप्रकाशनादधिष्ठानमात्रस्य चेन्द्राग्न्यादेर्मन्त्रार्थवादादौ यागं विनापि स्वर्गमेर्वादिस्थत्वेन प्रतिपादनाल्लौकिकत्वावगतेः कथमव्यभिचरितक्रतुसम्बन्ध इति वाच्यम्। मन्त्रार्थवादादेरन्यपरत्वेन स्वर्गादिस्थत्वे प्रमाणाभावात्। स्वार्थपरेण च तद्धितादिना क्रत्वव्यभिचारित्वेनैव तदुपस्थितेश्च।

किञ्च क्रत्वव्यभिचाराभावेऽप्यस्ति तावत्तेषां क्रतुसम्ब-

न्धः। अतश्च स्मारकविधयैव क्रतूपस्थित्युपपत्तेरानर्थक्यभिया च लौकिकनिराकरणोपपत्तेः परिशेषादेवापूर्वसाधनत्वलक्षणोपपत्ते र्न तदर्थं प्रमाणान्तरापेक्षा। अतो निरपेक्षेण लिङ्गेन क्रमसमाख्ययोर्बाधात् सर्वार्थत्वमित्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—नाकाङ्क्षाभावे योग्यतामात्ररूपस्य लिङ्गस्य विनियोजकशब्दकल्पकत्वं युक्तम्। वहनयोग्यस्यापि पुंसो नैरपेक्ष्ये सति वहने विनियोगादर्शनात्।

न च मन्त्रगतायाः प्रयोजनाकाङ्क्षायास्सत्वान्न क्षतिरिति वाच्यम्। वाचस्तोमादावर्थवृत्तिगुणप्रकाशनद्वारैव विनियोगसत्त्वेन मन्त्राणां स्वतो निराकाङ्क्षत्वात्। अतश्च प्रकरणक्रमादिना पुनराकाङ्क्षामुत्थाप्य सामान्यतः क्रत्वन्तरसम्बन्धेऽवगते द्वारविशेषजिज्ञासायां लिङ्गान्मुख्यगौणाद्यर्थसम्बन्धोपपत्तिः।

इदमेव च लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणसापेक्षत्वं न श्रुत्यादेरित्यत्र बीजम्, आकांक्षां विनापि तत्राङ्गताबोधात्।

न च वाक्येनैव ब्राह्मणगतेन सर्वेषां मन्त्राणां वाचस्तोमाङ्गत्वेन निराकाङ्क्षत्वावगतेर्न प्रकरणादिना दुर्बलेनाकाङ्क्षोत्थापनसम्भवः। तत्तन्मन्त्रविशेषविषयाणां तत्तत्प्रकरणादीनामबाधेनोपपत्तौ सर्वसाधारण्येन तत्तन्मन्त्रपाठकालोत्पन्नप्रयोजनाकाङ्क्षावेलायामनुपस्थितेन वाचस्तोमवाक्येन बाधायोगात्, अन्यत्र वचनविनियुक्तमन्त्रविषये नैराकांक्ष्योत्पादनायोगेन तत्साहचर्यात्प्रकरणादिविनियुक्तविषयेऽपि तदयोगाच्च। अतश्च वाचस्तोमवाक्येन सर्वेषां मन्त्राणां विनियोगेऽपि प्रमाणान्तरेण तत्र तत्राकांक्षोत्थापनादुयुक्तस्तत्र लिङ्गेन विनियोगः। तच्च प्रमाणान्तरं क्वाचिद्वाक्यं—यथा वषट्कारादिमन्त्राणां "एष वै सप्तदशः

प्रजापतिर्यज्ञेऽन्वायत्त" इति । "बर्हिर्देवसदनं दामी"त्यादीनां प्रकरणम् । प्रकृते च क्रमस्समाख्या च । पूषानुमन्त्रणमन्त्रादावपि समाख्येत्युक्तमेव । नच प्रबलप्रमाणेन विनियुक्तस्यापि दुर्बलेनान्यत्राकाङ्क्षोत्थापनेन विनियोगे समाख्यासहकृतमुख्यलिङ्गेनान्यत्र विनियुक्तस्यापि पूषानुमन्त्रणमन्त्रस्य प्रकरणसहकृतगौणलिङ्गेन दर्शपूर्णमासयोरावाहनादिमन्त्रवन्मन्त्रान्तरसमुच्चयेनापि विनियोगोपपत्तिः । तन्मात्रविषयप्रमाणद्वयस्थले मन्त्रपाठकालोत्पन्नप्रयोजनाकाङ्क्षावेलायामुपस्थितेन प्रबलप्रमाणेन दुर्बलस्य बाधोपपत्तेः ।

अत एव गार्हपत्याङ्गताबोधकश्रुत्यैवेन्द्राङ्गत्वस्य बाधो, न तु वाचस्तोमवाक्येन । अतस्सिद्धं सामान्यसम्बन्धबोधकप्रमाणेनैवाकाङ्क्षोत्थापने सति लिङ्गस्य विनियोजकत्वमिति । अतश्च क्रमसमाख्यानुरोधेन काम्येष्टिविषयत्वमेव ।

न चान्यत्राप्यव्यभिचरितक्रतुसम्बन्धरूपव्याप्तिबलेनाकाङ्क्षोत्थापनसम्भवः । प्रकरणपाठादौ ह्येतत्प्रकरणपठितेन मया कथमस्योपकर्तव्यमिति जायतेऽपेक्षा, न त्वव्यभिचरितक्रतुसम्बन्धेऽपि । व्याप्तेर्बोधकत्वनैयत्येऽप्याकाङ्क्षोत्थापकत्वासंभवात् । न हि वह्निविषये निराकाङ्क्षस्य वह्न्यनुमितौ जातायां तद्विषये पुनराकाङ्क्षोपजायते । अत एव जुह्वादिप्रतिपादकस्याप्यनारभ्याधीतस्य मन्त्रस्य सामान्यसम्बन्धबोधकप्रमाणान्तराभावसत्त्वे नैव दर्शाद्यङ्गत्वम्, किन्तु वाचस्तोमाद्यङ्गत्वेवेति ध्येयम् ।

अतश्च यद्यपीन्द्राग्न्यादीनामपूर्वाव्यभिचारस्स्यात् तथापि न तन्मन्त्राणां सर्वार्थत्वम् । किमुत यदा नैव सः ।

ननु—कोऽयमव्यभिचरितसम्बन्धो नाम ? या या जुहूस्सा सा क्रतुसाधनमित्येवं व्याप्तिरूप इति चेत्—हन्त हिरण्यादेरप्यपूर्वसाधनत्वयोग्यत्वात्तदव्यभिचारापत्तिः । सर्वव्यक्तीनां फलो-

पधाननैयत्याभावाद्व्यभिचार इति चेत्—जुह्वादावपि तुल्यमेतत् ।

किञ्चैवमिन्द्रादेः कथं व्यभिचारित्वम्? तस्य स्वर्गमेर्वादिस्थत्वेऽपि क्रतुसम्बन्धाव्यभिचारात् । न ह्येतादृशी काचिदिन्द्रव्यक्तिरस्ति, या नापूर्वीयसूक्तहविर्भाक्, प्रमाणाभावादिति चेत्—न; अपूर्वमात्रनिरूपितसाधनतावच्छेदकीभूतो यो धर्मस्तदवच्छिन्नस्यापूर्वाव्यभिचार इति नियमाङ्गीकारात् । भवति चाकारविशेषत्वरूपजुहूत्वादि तथा कार्यान्तरं प्रति काष्ठत्वादिना साधनत्वेनाकारविशेषत्वादिना तस्य प्रमाणाभावात् । हिरण्यादेस्तु तत्वेनैव कार्यान्तरसाधनतेति वैषम्यम् ।

इन्द्रादिस्थलेऽपि पदस्यैवास्मन्मते देवतात्वादानुपूर्वीयविशेषविशिष्टवर्णत्वस्यापूर्वीयसाधनतावच्छेदकत्वेऽपि कार्यान्तरं प्रत्यपि साधनत्वाद्व्यभिचारः ।

अस्त्येव हि तादृशानुपूर्वीविशेषविशिष्टवर्णत्वेन स्वार्थबोधं प्रत्यपि करणता । अन्यथा तदवच्छिन्नस्य प्रातिपदिकसंज्ञानुपपत्तेः । स्वार्थस्य चापूर्वसाधनत्वकल्पने प्रमाणाभावान्न तद्द्वारापि पदस्यापूर्वाव्यभिचारः । अग्न्यादिपदस्य तु व्यभिचारस्स्पष्ट एव । अतोऽव्यभिचरितक्रतुसम्बन्धस्यैवाभावात् सत्वेऽपि वा तेनाकाङ्क्षानुत्थापनान्न सर्वार्थत्वम् । स्मारकविधया बोधनाकाङ्क्षोत्थापनं तु दूरभ्रष्टमेव । अत एव यत्राध्ययनविधिसिद्धार्थज्ञानस्योपनिषज्जन्यजीवात्मज्ञानस्य वा स्वत एव साकाङ्क्षस्य नाकाङ्क्षोत्थापकप्रमाणापेक्षा तत्र भवत्येव सामर्थ्यमात्रात्प्रमाणान्तराभावेऽपि क्रत्वङ्गता ।

वस्तुतस्तु कृष्यादिवन्नित्यप्राप्तस्य विधिकल्पने प्रमाणाभावेन विधेयत्वाभावान्न तत्राङ्गताबोधः, अपि तु जन्यत्वमात्रबोधः । अङ्गत्वं परं "यदेव विद्यया करोती" त्यनेन कथञ्चिदवधेयम् ।

प्रकृते तु सामान्यसम्बन्धबोधकप्रमाणं विना लिङ्गमात्रेण विनियोगायोगात् क्रमसमाख्यानुरोधेन मन्त्राणां काम्येष्टिविषयत्वमेव ।

न च प्रबलेन क्रमेणैव सामान्यसम्बन्धबोधोपपत्तेः कथं दुर्बलसमाख्यायास्तद्बोधकत्वमिति वाच्यम् । यत्र पाथिकृतीयादिकेवलाग्निदेवत्येष्टावातिदेशिकमन्त्रप्राप्त्या न प्रधाने याज्याद्यपेक्षा, काचनिकसाप्तदश्याम्नानाच्च सामिधेनीष्वाग्नेयऋग्द्वयापेक्षा, तत्र तदिष्टिक्रमाम्नाताग्नेयमन्त्रद्वयस्यापेक्षाक्रमेण प्रथमातिक्रमे कारणाभावेन च सामिधेनीषु निवेशप्रसक्तौ समाख्यया तन्निवर्तनात् । न हि तया क्रमस्य बाधः, सङ्कोचो वा । तस्य याज्यादिकार्ये निवेशेऽप्यविरोधात् । अपि त्वपेक्षितविधानादिरूपस्य न्यायस्यैव । स तु समाख्यातो दुर्बल एवेति न किञ्चिद्बाधकम् ।

न च तर्हि काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्ययैवेष्टासिद्ध्युपपत्तेर्न क्वचित् क्रमस्यासाधारण्येन सामान्यसम्बन्धबोधकत्वमिति वाच्यम् । यत्राग्नावारुणीष्टिक्रमे तत्तद्देवत्ययाज्यानुवाक्ये पठित्वा सोमारौद्रीष्टिक्रमाम्नाततद्देवत्ययाज्यानुवाक्यापाठात्पूर्वमाग्नेय्यो मनो ऋचः पृथुपाजवत्यश्च समाम्नाताः तत्र तासां लिङ्गविनियुक्तमन्त्रान्तरेण बाधादुत्तरेष्टियाज्यादिकार्ये समाख्यामात्रेण विनियोगानुपपत्तेः लिङ्गसहकृतसमाख्ययान्यत्र विनियोगप्रसक्तौ क्रमेण तां बाधित्वोत्तरेष्टिसामिधेनीकार्ये निवेशाङ्गीकारात् ।

न च क्रमः पूर्वस्यामपीष्टौ साधारणः । पूर्वेष्टिसामिधेनीस्थानस्य तदीययाज्यादिपाठेन व्यवधानात् । अत उत्तरेष्टिसामिधेनीकार्य एव क्रमान्निवेशः । एवं च तासां धाय्यासमाख्याप्युपपन्ना भवति ।

अपि च यत्रैन्द्राग्नयागद्वयक्रमे याज्यानुवाक्यायुगलद्वयमाम्नातम् तत्र क्रमानङ्गीकारे पूर्वस्योत्तरं युगलमुत्तरस्य पूर्वमित्येवमपि प्रसज्येतेति तद्व्यावृत्त्यर्थं क्रमग्रहणम् । प्रयोजनं सूत्रं च स्पष्टम् ॥

इति सप्तमं लिङ्गक्रमसमाख्याधिकरणम् ॥

---

अथाष्टममाग्नेय्यधिकरणम् ॥ (८)

सू-अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥३-२-२१॥

( विषयसंशयौ )

ज्योतिष्टोमे—आग्नेय्याऽऽग्नीध्रमुपतिष्ठते, ऐन्द्र्या सदो, वैष्णव्या हविर्धानमित्यादि श्रूयते । तत्र किं प्रकरणे पठितमपठितं वाग्न्यादिप्रकाशकं ऋङ्मात्रं तृतीयया तत्तदुपस्थानाङ्गत्वेन विनियुज्यते ? उत यत् प्रकरणे पठितं कार्यान्तरे च विशिष्य विनियुक्तं यथा—'अग्न आयाहि वीतय' इत्यादि स्तोत्रादौ तदेवात्र विनियुज्यत इति चिन्त्यते ।

( सङ्गतिः )

श्रुतिप्रमाणकेऽप्यत्र विनियोगेऽङ्गतावच्छेदकस्याग्न्यादिप्रकाशकत्वस्य लिङ्गप्रमेयत्वात्तदुपयोगिचिन्तनस्य पादसङ्गत्यविरोधः । अध्यायसङ्गतिस्तु स्पष्टैव । शुद्धस्य लिङ्गस्यापि विनियोजकत्वात् सामान्यसम्बन्धबोधकप्रमाणापेक्षत्वेऽपि श्रुतेस्तदभावे विनियोजकत्वोपपत्तेर्न तदपेक्षेत्येवं पूर्वपक्षोत्थानादनन्तरा ।

( पूर्वपक्षः )

तत्र सर्वत्रैव प्रबलं प्रमाणं न दुर्बलेनाविरोधिनापि सङ्कोचयितुमलम्, सङ्कोचस्यापि बाधापरपर्यायत्वात् । अन्यथा प्रयाजा-

देरव्यानन्तर्यात् पौरोडाशिकसमाख्यया चाग्नेयमात्राङ्गत्वापत्तिः । अतश्चात्र तृतीयया श्रुत्याग्निदेवत्यकाण्डमात्रस्यैव प्रकृताप्रकृतसाधारण्येनाग्नेयीप्रातिपदिकश्रुत्याभिहितस्याग्नीध्रोपस्थानाङ्गत्वेन विशिष्टविध्युत्तरकल्प्यविशेषणविधिना विनियोगान्न प्रकरणादिना सङ्कोचोपपत्तिः । न ह्यत्र "व्रीहीन् प्रोक्षती" त्यादाविव यथाश्रुतार्थे आनर्थक्यम्, येन तत्परिहारार्थमपूर्वसाधनत्वलक्षणातात्पर्यग्रहाय दुर्बलस्याप्यधिकाराख्यप्रकरणस्योपजीवनात्तेन स्वविषये सङ्कोच्येत । उपादेयत्वात्तु न तदाशङ्काप्याग्नेयीपदेऽस्ति । अत एव यत्राग्नीध्रोपस्थानस्वरूपे तदाशङ्का, तत्रास्त्येवापूर्वसाधनत्वलक्षणार्थं तदनुप्रवेशः ।

न चैतावता प्रकृताग्नेयीमात्रग्रहणापत्तिः । अप्रकृताभिरपि प्रकृतापूर्वसाधनीभूताग्नीध्रोपस्थानसम्भवात् । न चाग्नेयीशब्दस्य यौगिकत्वात् सन्निहितव्यक्तिवाचित्वप्रतीतेः प्रकृतमात्रग्रहणोपपत्तिः । यौगिकानामप्यवयवार्थविशिष्टव्यक्तिमात्रवाचित्वेन सन्निहितवाचित्वे प्रमाणाभावात् । पाचकादौ काचित्की संनिहितव्यक्तिप्रतीतिस्तु प्रमाणान्तरादेव ।

न चैवमप्याग्नेयीशब्दस्य तद्धितान्तत्वात् तस्य च सर्वनामार्थवृत्तित्वेन सन्निहितव्यक्तिवाचित्वस्य स्थापितत्वात् कथमप्रकृतग्रहणापेक्षेति वाच्यम् । 'अग्न आयाहि वीतय' इत्यादीनामेकप्रकरणपठितत्वेऽपि प्रदेशान्तरस्थत्वेनासन्निहितत्वात् । पाठसन्निहितपरत्वमात्रं हि सर्वनाम्नां व्युत्पत्तिसिद्धम्, न प्रकरणसन्निहितत्वमपि । असम्बन्धिपदाव्यवधाने तादृशविषये क्वापि प्रयोगादर्शनात् । अतस्सन्निहितवाचित्वासम्भवात् सर्वग्रहणोपपत्तिः ।

यत्तु न्यायसुधाकृता अन्यैश्चाग्निदैवत्यत्वकाण्डत्वसन्निहितत्वादीनां मन्त्रविशेषोपलक्षणत्वादेकेन चोपलक्षणेन प्र-

कृतऋक्कार्यसिद्धौ उपलक्षणान्तरानपेक्षणादाग्निदैवत्यत्वऋक्त्वयो-श्श्रुतत्वाविशेषेणोभयोरप्युपलक्षणत्वेऽपि सन्निहितत्वस्य विग्रह-वाक्यस्थसर्वनामगम्यत्वेन विलम्बितप्रतीतिकत्वादविवक्षावगते-स्सर्वग्रहणमित्येवं समाहितम् । तन्न ; विशेषणत्वेनैवान्वयसम्भ-वे उपलक्षणत्वे प्रमाणाभावात् । अस्तु वोपलक्षणत्वं, तथाप्यु-पादेयस्थले विशेषणत्ववत् सर्वेषामेवोपलक्षणत्वे किं बाधकम् ? किञ्च ऋक्त्वमपि नैव श्रुतं, स्त्रीत्वमात्रस्यैव स्त्रीप्रत्ययेनोक्तत्वात् । अतोऽग्निदेवत्यत्वापेक्षया तस्यापि विलम्बोपस्थितिकत्वादविव-क्षापत्तिः ।

किञ्च सन्निहितोपलक्षितव्यक्तिविशेषत्वमपि न विलम्बितम्, तस्य तद्धितवाच्यत्वेन गुणाधिकरणे व्यवस्थापनात् ।

यदपि भवदेवेन विशेष्यभूते सर्वनामार्थे यत्र विशेषणी-भूतदेवताया विधानं तत्रैव सर्वनाम्नस्सन्निहितावलम्बित्वम्, य-था–आग्नेयोऽष्टाकपाल इत्यादौ । न तु यत्र सर्वनामार्थ एव वि-धीयते विशेषणं तु नैव श्रुतं प्राप्तं वा न तत्र संनिहितावल-म्बित्वमिति । तदपि यदि पूर्वमताभिप्रायकं तदा तद्दूषणेनैव नि-रासः । यदि तु न, तत ईदृशनियमे प्रमाणाभावः 'तेनाक्षमुपा-ञ्ज्या'दित्यादौ व्यभिचारश्चेत्युपेक्षितम् । तस्मादुक्तप्रकारेणैव सर्वग्रहणम् ।

अस्तु वा कथञ्चिदाग्नेयीपदेन प्रकृतग्रहणं, तथापि ब्रह्मोदनप्राशनादौ यत्र 'चतुरो ब्राह्मणान् भोजये'दित्येव श्रुतम् तत्र सर्वनामश्रवणाभावादाधानाङ्गभूतऋत्विङ्मात्रग्रहणे नैव किञ्चिद्बीजम् । नहीदं ब्राह्मणसंस्कारार्थं भोजनम्, अपि तु ब्राह्मौदनिकाग्निसंस्कारकौदनप्रतिपत्त्यर्थम् । तन्नाशे पुनर्भोज-नानुष्ठानादर्शनात् ।

एवं सत्यपि यदि प्रकृतमात्रग्रहणे किञ्चित्प्रमाणं भवेत् ततो "यजमानपञ्चमा" इतिवत्कर्तृनियमांशे स्यादपि संस्कार्यत्वम् , न तु तदस्तीति सर्वग्रहणमेव ।

न चैवं प्रकृतमात्रे नियामकान्तराभावेऽप्यप्रकृतग्रहणे तस्या आग्नीध्रोपस्थानस्वरूपार्थत्वे आनर्थक्यापत्तेरपूर्वार्थत्वकल्पनस्या-प्यावश्यकत्वात् क्लृप्तापूर्वार्थताया: प्रकृताया एवाग्नीध्रोपस्थानरू-पद्वारान्तरसम्बन्धमात्रकरणेन लाघवात्तदुपजीविविधिश्रुत्या च प्रातिपदिकश्रुतेरपि सङ्कोचोपपत्तेः प्रकृतमात्रग्रहणोपपत्तिरिति वाच्यम् । प्रकृताया अपि ग्रहणेऽस्मिन्वाक्य उपस्थानपदेऽपूर्व-साधनत्वलक्षणाया आवश्यकत्वात् । न हि तत् स्वरूपेण द्वारम् , तत्कार्यापत्ते ऊहाद्यनापत्तेः । तावतैव चाप्रकृताया अप्यपूर्वार्थ-त्वोपपत्ते र्नानर्थक्यम् ।

अपि च प्रकृताया अपि न साक्षादपूर्वार्थत्वम् । क्लृप्तत्द्बो-धकप्रमाणाभावात् । न हि प्रकरणं स्वातन्त्र्येण वाक्यान्तरकल्प-नद्वारा वा तत्र प्रमाणम् , गौरवात् । तथात्वे च प्रोक्षणादेरपि तेनैवापूर्वार्थत्वोपपत्ते र्व्रीह्यादीनां यथाश्रुतानामेव द्वारत्वेन ग्र-हणाद्यवादीनां द्वारत्वानुपपत्तेः । अपि त्वपूर्वसाधनीभूतस्तोत्रा-र्थत्वमेव । न च तावतोपस्थानविधौ कश्चिदुपयोगः अपूर्वसाधनी-भूतोपस्थानार्थत्वालाभात् ।

अस्तु वा प्रकृतायास्स्तोत्रादिवाक्येषु स्वातन्त्र्येणापूर्वार्थत्व-क्लृप्तिः, तथापि तस्या दीक्षणीयावाङ्नियमन्यायेन स्तोत्रज-न्यापूर्वार्थत्वस्यैव क्लृप्तेर्ज्योतिष्टोमापूर्वार्थत्वस्योपस्थानजन्यापू-र्वार्थत्वस्य वा क्लृप्तत्वाभावेन तत्कल्पनस्यावश्यकत्वान्नात्र प्रकृ-ताभिर्विशेषः । यत्किञ्चिदपूर्वार्थत्वक्लृप्तिमात्रेण प्रकृतग्रहणे त्वप्र-कृतानामपि तत्र तत्र क्रत्वन्तरे विनियुक्तत्वादविशेषः । तस्मात्

सर्वग्रहणम् । यदि परं प्रकृतानां विशिष्य स्तोत्रादौ विनियोगेन निराकाङ्क्षत्वादन्यतराकाङ्क्षायुक्तसामान्यवाक्येन कथं विनियोग इत्याशङ्क्येत ततोऽस्त्वप्रकृतानामेव प्रयोजनसाकाङ्क्षाणां विनियोगः । सर्वथा न प्रकृतमात्रग्रहणम् ।

सूत्रं तु, अयं मन्त्रविधिरधिकारेऽधिकृतमन्त्रविषयेऽतदाख्येषु तद्भिन्नेषु चावगन्तव्यः । यदि परं विशिष्य शिष्टत्वादधिकृतानां निराकाङ्क्षत्वमाशङ्क्येत ततोऽस्तु तद्भिन्ने एवेति व्याख्येयम् ॥

( इति पूर्वपक्षः )

## सू–तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ ३–२–२२ ॥

( अथ सिद्धान्तः )

नैवञ्जातीयकस्थले सर्वग्रहणम् । प्रातिपदिकश्रुते र्विनियोजकतृतीयादिश्रुतेश्चाविशेषप्रवृत्तावपि सर्वोपजीव्यप्रधानभूतविधिश्रुतेर्लाघवोपजीवनेन प्रकृतमात्रविषयत्वात् । तथा हि–यद्यपि तावदत्र मन्त्रविशिष्टोपस्थानमेवापूर्वसाधनीभूताग्नीध्रमण्डपसंस्कारार्थत्वेन विधीयते तथापि आर्थिकेन विशेषणविधिनोपस्थानोद्देशेन मन्त्रविधानोपपत्तिः । तत्रापि चोपस्थानस्वरूपे आनर्थक्यादपूर्वसाधनलक्षणा समस्त्येव, तथापि सर्वत्रापूर्वसाधनीभूतोद्देशेनाङ्गविधावर्थादपूर्वोद्देशेनापि तद्विधानस्यावश्यकत्वात्तस्य च विधिकल्पनां विनानुपपत्तेः तदप्यावश्यकम् । तदेतदवघातादिविधावगत्याङ्गीकृतम् । प्रकृते त्वप्रकृतग्रहणेऽपूर्वसम्बन्धस्य तत्साधनीभूतसम्बन्धस्य च उभयस्यापि श्रूयमाणेन विधिना श्रूसर्थाभ्यां करणे गौरवापत्तेः प्रकृतग्रहणे च तत्राप्यपूर्वसम्बन्धस्य क्लृप्तत्वात् केवलमपूर्वसाधनीभूतसम्बन्धमात्रस्य करणेन लाघवोपपत्तेस्तद्ग्रहणमेव लाघवोपजीविनी विधिश्रुतिरनुमन्यते ।

अत एव यद्यप्यपूर्वसम्बन्धस्यैवकल्पकेन विशेष्योपस्थितेन च कार्यान्तरसम्बन्धेनैव निराकाङ्क्षः, तथापि चैतदाकाङ्क्षयैव तदुपजीवनं नानुपपन्नम् ।

यद्यपि च प्रकृताग्नेयीमन्त्रस्यापि स्तोत्रापूर्वसम्बन्धक्लृप्ताव-प्युपस्थानजन्यापूर्वसम्बन्धकल्पनावश्यंभावेन गौरवस्याविशिष्ट-त्वान्नानया युक्त्या प्रकृतनियमस्सिद्धान्तयितुं शक्यते तथापि यत्र ब्रह्मौदनप्राशनाङ्गभूतब्राह्मणविधौ प्राशनस्य प्रतिपत्तित्वेन दृष्टार्थत्वादाधानाद्यपूर्वसाधनलक्षणा तत्र तदपूर्वसम्बन्धस्य ऋत्विजां प्रयोगाङ्गत्वेन नित्यप्राप्तत्वात्प्रकृतग्रहणोपपत्तिः ।

अत एव यत्रा 'त्रेयाय हिरण्यं ददाती'त्यादावृत्विक्त्वात्रे-यस्य न नियता प्राप्तिः तत्र विधिश्रुतेरपूर्वसम्बन्धाक्षेपकत्वस्या-वश्यकत्वान्न कदाचित्प्रकृतसत्त्वेऽपि तन्नियमः । तस्मादाक्षेपणी-यापूर्वसम्बन्धस्य कार्यान्तरार्थत्वमप्यन्यत्र नियमेन क्लृप्तौ तन्मा-त्रोपजीवनेनान्यत्र कार्यान्तरसम्बन्धमात्रकरणमित्येतस्यैतद-धिकरणन्यायस्याग्नेयीरूपोदाहरणासम्भवेऽपि न विघातः ।

अत एवा''ग्निमुपनिधाय स्तुवीते''त्यादावाक्षेपणीयस्तोत्रा-पूर्वसम्बन्धस्याहवनीयादावप्राप्तत्वान्न तन्नियमः । प्रत्युताहवनी-यादेर्वचनं विना वहिर्नयने दोपश्रवणाल्लौकिकाग्निनियम एवेति सप्तमे वक्ष्यते । आग्नेयीवाक्ये प्रकृतनियमसाधनप्रकारस्तु यद्य-न्विष्यमाणोऽप्याक्षेपणीयापूर्वसाधनीभूतकार्यान्तरार्थत्वेन विनि-योगो नैव लभ्यते तदैवम् । आग्नेयीातिताद्धितस्य सन्निहितप-रामर्शित्वात्प्रकृतग्रहणमिति ।

न चैकस्मिन्नपि प्रकरणे प्रदेशान्तरस्थत्वेनासम्बन्धित्वा-क्यान्तरव्यवधानात्सन्निहितपरामर्शित्वबाधः । स्वपदसन्निहिता-भावे स्ववाक्यसन्निहितपरामर्शित्ववत्स्ववाक्यसन्निहिताभावे व्य-

वहितवाक्यसंनिहितपरामर्शित्वञ्च तस्याप्यभावे तद्धितेनैकप्रक-रणव्यवहितवाक्यसंनिहितमात्रपरामर्शस्योपपत्तौ तद्बाधे प्रमा-णाभावात् ।

न च संनिहितस्यापि निराकाङ्क्षस्य न परामर्शः । सर्वना-मादिस्थले "एष वाव प्रथमो यज्ञो यज्ञाना"मित्यादौ निराका-ङ्क्षस्याप्यन्यतराकाङ्क्षया संनिहितत्वमात्रे परामर्शव्युत्पत्तेः ।

किञ्चाग्नेयीनां कासाञ्चिद्विशिष्य स्तोत्रादौ विनियोगे-ऽपि ज्योतिष्टोमप्रकरणे पार्थक्येन पाठस्यापि सत्त्वात्तद्बलेन च तासां ज्योतिष्टोमापूर्वसम्बन्धस्यापि क्लृप्तरूपस्थानवाक्येन लाघ-वोपजीविना तासामेव ग्रहणमित्यपि सुवचम् ।

सूत्रमपि तदाख्योऽधिकृत एव मन्त्रादिं नियम्येत । आग्ने-यीस्थले तात्त्प्रकरणस्थत्वमात्रेण तद्धितेन तत्परामर्शात्प्रकर-णपाठेन ज्योतिष्टोमापूर्वसम्बन्धस्य क्लृप्तेश्चान्यत्र च ब्रह्मौदन-प्राशनादिविधौ लाघवाख्योपपत्तेरपि सत्त्वाच्चेति व्याख्येयम् ॥

## सू-अनर्थकश्चोपदेशस्स्यादसम्बन्धात्फलवत्ता नह्युपस्थानं फलवत ॥३-२-२३॥

ननु-नात्रापूर्वसाधनीभूतोपस्थानत्वेनोद्देश्यता येनापूर्वसम्ब-न्धलाभार्थं प्रकृतिनियमस्स्यात्। आग्नीध्रोपस्थानस्य क्रत्वनैकान्ति-कत्वाभावेनाधानवत्तत्स्वरूपार्थत्वेऽपि मन्त्रस्य बाधकाभावात। अ-तश्चोपस्थानजन्यापूर्वार्थत्वस्यैवाभावे सुतरां ज्योतिष्टोमापूर्वार्थत्वा-भावात् किमर्थं पाठोपजीवनमिति चेत् न; उपस्थानस्वरूपार्थत्वे यागादिस्वरूपार्थत्ववन्मन्त्रोपदेशस्यानर्थक्यापत्तेः । आहवनीया-दीनां त्वदृष्टघटितत्वान्न तदिति विशेषः । अतश्चापूर्वसाधनल-क्षणा तावदावश्यक्येव । तत्रापि यद्युपस्थानस्यादृष्टार्थत्वं स्या-

तदा तन्मन्त्रस्यापि प्रोक्षणमन्त्रवदुपस्थानजन्यादृष्टार्थत्वमेव दीक्षणीयावाह्ननियमन्यायेन भवेत् तस्य स्वभिधानफलकस्य करिष्यमाणमण्डपद्युतिपदार्थानुष्ठानोपयोगितया दृष्टार्थत्वादवघातमन्त्रवदेव तन्मन्त्रस्य करणपूर्वार्थत्वमावश्यकम् । अतश्च तल्लाभार्थं युक्तं प्रकरणपाठोपजीवनमिति ।

यदा त्वाग्नीध्रो[illegible] मन्त्रविधिः, उपस्थानं तु मन्त्रस्याभिधानमात्रव्यापारकत्वस्वाभाव्यादग्न आयाहीत्याद्यामन्त्रणविभक्त्यादेश्च समीपस्थितत्वाक्षेपकत्वात्प्राप्तमिति पक्षस्समाश्रीयते, तदा आग्नीध्रस्वरूपस्य जुहूवत्करणत्वव्यभिचारेऽपि लौकिकत्वेन तस्मिन्नानर्थक्यादपूर्वसाधनलक्षणार्थं प्रकरणपाठाद्युपजीवनमावश्यकमेव । अतो युक्तमेव प्रकृतग्रहणम् । सूत्रं स्पष्टम् ॥

यत्तु प्रकृतानां स्तोत्रादिप्रयोजनान्तरनिराकाङ्क्षत्वात्प्रयोजनसाकाङ्क्षाणामप्रकृतानामेव ग्रहणमित्युक्तम् । तत्राह—

## सू—सर्वेषां चोपदिष्टत्वात ॥ ३—२—२३ ॥

वाचस्तोमादौ सर्वेषामेव मन्त्राणामुपदिष्टत्वेन निराकाङ्क्षत्वाविशेषादित्याशयः । प्रयोजनं स्पष्टम् ॥

इति अष्टमाग्नेय्यधिकरणम् ॥

अथ नवमं भक्षाधिकरणम् ॥ ९ ॥ ( भक्षवेदिका )

## सू–लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥ ३–२–२४ ॥ ( पू )

( विषयः )

ज्योतिष्टोमे–"(१)भक्षेहि मा विश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरावसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासं नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषं" "हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः । शिवो मे सप्तऋषीनुपतिष्ठस्व मा मे वाङ्नाभिमतिगाः" "मन्द्राभिभूतिः केतुर्यज्ञानां वाक् जुषाणा सोमस्य तृप्यतु", वसुमद्गणस्य, रुद्रवद्गणस्यादित्यवद्गणस्य, सोम देव ते मतिविदः प्रातस्सवनस्य, माध्यंदिनस्य सवनस्य, तृतीयस्य सवनस्य गायत्रच्छन्दसस्त्रिष्टुब्छन्दसो जगतीच्छन्दसोऽग्निहुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामी"त्ययं मन्त्रो भक्षानुवाक इत्येवं समाख्यातस्समाम्नातः ।

( संशयः )

तत्र मन्द्राभिभूतिरित्यादिर्भक्षयामीत्यन्तस्तावद्भक्षण एव विनियुज्यत इत्यविवादः । साधयिष्यते चोत्तराधिकरणे । पूर्वावयवानां तु किं भक्षमन्त्रैकवाक्यतया भक्षण एव विनियोगाः ? अथ वा सध्यासमित्यन्तो ग्रहणे नृचक्षसमित्यादिरवख्येषमित्यन्तोऽवेक्षणे, 'हिन्वे'त्यादि'रतिगा' इत्यन्तश्च सम्यक्जरण इत्येवं सन्देहः ।

---

१. तै. सं. ३. २. ५

( सङ्गतिः )

सिद्धान्ते लिङ्गविनियोगसत्त्वात्तदुपयोग्युद्देश्यतावच्छेदक-निरूपणाच्च पादाध्यायसङ्गतिः।

अनन्तरा तु क्रतुसम्बन्धरहितद्वारसम्बन्धानुपपत्तेः प्रकृत-ग्रहणेऽभिहिते प्रकृतेतरग्रहणादेरपूर्वसम्बन्धाभावान्न द्वारतेत्येवं पूर्वपक्षोत्थानादूद्रष्टव्या।

( पूर्वपक्षः )

तत्र यद्यपि ग्रहणाद्यर्थत्वे लिङ्गमस्ति प्रमाणं तथापि ग्रह-णादिस्वरूपार्थत्वे मन्त्रानियमस्यानर्थक्यापत्तेर्ग्रणादेरविहितत्वे-न चापूर्वं प्रत्यङ्गत्ववत्साधनत्वस्याप्ययोगादपूर्वसाधनत्वलक्षणा-या अप्यनुपपत्तेः उद्देश्यत्वासंम्भवान्न ग्रहणाद्यङ्गत्वेन मन्त्र-विधिर्युक्तः।

न च साधनत्वासम्भवेऽप्यपूर्वप्रयोजकत्वस्य तावत्सत्त्वा-त्तेन रूपेणोद्देश्यत्वोपपत्तिः ; अवेक्षणस्य भक्षणाजनकत्वेन तद-भावाद्ग्रहणस्यापि नैयत्येन भक्षणजनकत्वाभावाच्च कथञ्चिद्वा ग्रहणमात्रस्य पाक्षिकप्राप्तौ बाहुद्वयकरणकत्वस्य कथमप्यप्राप्ते-श्च। सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षणजनकत्वं तूत्तरकालीनत्वाद्व्याहतमेव। अतोऽपूर्वप्रयोजकत्वस्याभावान्न त-त्त्वेनाप्युद्देश्यता।

न च सम्यग्जरणस्य भक्षणजनकत्वाभावेऽपि तज्जन्यत्व-सत्त्वात् स्वर्गमन्त्रे स्वर्गस्येवापूर्वजनकजन्यत्वेन द्वारत्वोपपत्तिः। सम्यग्जरणस्य भक्षणजन्यत्वेऽपि गलकवलसंयोगरूपस्य भक्ष-णस्यात्र हविःप्रतिपत्त्यर्थत्वेन सम्यग्जरणफलकत्वाभावात्तत्प्र-काशनस्योपयोगाभावेनानुपपत्तेः। अतो न लिङ्गाद्ग्रहणार्थत्वम्।

अत एव च बलाबलाधिकरणवक्ष्यमाणलिङ्गबलीयस्त्वेनापि न पौनरुक्त्यम् ।

वस्तुतस्तु नात्र लिङ्गमपि मुख्यमस्ति । घसेर्हिंसार्थत्वस्मरणेन ग्रहणवाचित्वाभावात् । चक्षिङो भाषणार्थत्वस्मरणेनावेक्षणार्थतानुपपत्तेश्च हिनोतेर्गत्यर्थत्वान्न सम्यग्जरणार्थत्वमपि । अतश्च ग्रहणाद्यर्थत्वेऽपि लक्षणापत्तेर्वरं विहितभक्षणलक्षकत्वमेव ।

वस्तुतस्तु न तदपि, देवस्य त्वेत्यादिपदवत्स्वशक्यार्थस्यैव भक्षणविशेषणत्वोपपत्तेः तद्वदेव च तादृशभक्षणप्रतिपादनस्याभ्युदयकारित्वकल्पनान्नानर्थक्यमपि ।

यद्यपि चाख्यातभेदान्न तद्वदिह विशिष्टशाब्दबोधप्रयोजकीभूताकाङ्क्षारूपलिङ्गसत्त्वं तथा'प्येकं वृणीत' इत्यादिवदेकवाक्यतालाभार्थमासक्तिमात्रेण तत्कल्पनमपि नानुपपन्नम् ।

वस्तुतस्तु सत्यप्याख्यातभेदे उपक्रमोपसंहारैक्ये सत्येकवाक्यताप्रयोजकीभूताकाङ्क्षासत्त्वस्य वैश्वानरवाक्यादौ व्युत्पादनात् तत्रापि च भक्षेहीत्यादिना भक्षस्यैवोपक्रमात् 'भक्षयामी'त्यनेन तस्यैवोपसंहारादुपक्रमोपसंहारैक्यावगतेरेकवाक्यताप्रयोजकीभूताकाङ्क्षारूपलिङ्गोपपत्तिः । इदमेव च मूले वाक्यतापगमनसामर्थ्यपदेन व्यवहृतम् ।

न च 'भक्षेही'त्यस्य ग्रहणार्थत्वेऽप्युपपत्तेरेकान्तत उभयोर्भक्षमात्रविषयत्वानुपपत्तिः । भक्षणस्यैव दीर्घायुष्ट्वादिफलकत्वात्तदन्वयानुरोधेनैवोपक्रमस्य भक्षणार्थत्वावधारणोपपत्तेः । अतश्च युक्तैवोक्तविधलिङ्गादेकवाक्यतादि कल्पयित्वा सर्वस्यापि भक्षणार्थता ।

एवं च भक्षानुवाकसमाख्यापि मुख्यवृत्त्यैवोपपन्ना भवि-

ष्यति। इतरथा भक्षसमुदायाश्रयिषु लिङ्गसमवायाद्भक्षशब्दो गौणस्स्यात्। अतश्च, सर्वस्याप्यनुवाकस्य भक्षार्थत्वमेव। सूत्रं स्पष्टम्॥

( इति पूर्वपक्षः )

( अथ सिद्धान्तः )

## सू—तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात ॥३—२—२५॥ (सि)

न सर्वस्य भक्षणे विनियोगः। किन्तु तत्तदवयवानाम्। तस्मादपकर्ष एव। तत्तदाख्यातेन तत्तदर्थस्य मुख्यविशेष्यतया प्रतीतेरर्थाभिधानरूपेण लिङ्गेन ग्रहणाद्यर्थत्वनिश्चयात्।

यद्यपि चात्रोपक्रमोपसंहाराभ्यामेकवाक्यतोपगमनसामर्थ्यरूपं लिङ्गं क्लृप्तमित्येकवाक्यतावगमस्स्यात्तथापि ग्रहणादिप्रकाशकस्य मन्त्रभागस्य वाक्येनैव भक्षणाङ्गतेति ततोऽपि प्रबलादर्थाभिधानलिङ्गाद्ग्रहणाद्यङ्गत्वनिश्चयस्सुलभ एव। वैश्वानरादिवाक्येषु नैवंविधं किञ्चिदस्ति प्रबलं वाक्यभेदसाधकमिति न तदङ्गीकारः।

वस्तुतस्तूपक्रमस्य साधारणत्वात् प्रत्युत मुख्यसामर्थ्यानुरोधेन ग्रहणविषय एवोपपत्तेर्नात्रैकवाक्यतोपगमनसामर्थ्यमपि।

यत्तु दीर्घायुत्वेत्यादेरनन्वय एव भक्षणार्थत्वतात्पर्यग्राहक इत्युक्तम्। तस्य ग्रहणफलीभूतभक्षणफलत्वेनापि स्तावकतयान्वयोपपत्तेरसाधकम्।

यत्तु सव्यादेर्हिंसाद्यर्थकत्वान्न ग्रहणादौ मुख्यसामर्थ्यमस्तीत्युक्तम्, तन्न; भूसत्तायामितिवद्ग्रहणादावपि वृद्धप्रयोगेण

स्मृतेरुपलक्षणत्वान्मुख्यसामर्थ्योपपत्तेः, प्रकृते च दृष्टार्थतालाभाय ग्रहणाद्यर्थत्वनिर्णयोपपत्तेश्च। हिनोतेस्तु गत्यर्थतास्मरणेनैव सम्यग्जरणफलकतावगतिः। मे गात्राणि हिन्व गच्छ गणानीन्द्रियाणि मा वितृष्णान् कुरु सप्तऋषीन् सप्त प्राणानुपतिष्ठस्व वाङ्नाभिमतिक्रम्य च मा गा इत्येवमर्थावगमाद्गिगात्रगमनफलीभूतसम्यग्जरणावगतिस्सुलभैव। अतो मुख्यसामर्थ्यं युक्तमेव।

यत्तु ग्रहणादेरपूर्वसम्बन्धस्य नियतप्राप्त्यभावान्नोद्देश्यतेत्युक्तम्। तन्न ग्रहणादेर्भक्षविध्याक्षेपेण नियमप्राप्त्यभावेऽपि तत्तन्मन्त्राणां समाख्यासहकृतावान्तरप्रकरणेन भक्षाङ्गत्वेऽवगते तदङ्गत्वेन मान्त्रवर्णिकक्रियाविधिकल्पनोपपत्ते बाहुभ्यां गृहीत्वावेक्षे सम्यग्जरणायेत्येतान्येव वा पदानि भक्षविध्येकवाक्यतया कल्प्यन्ते। तत्र च बहुत्वांशेऽपूर्वविधिः, ग्रहणांशे नियमविधिः, अवेक्षणांशे त्वपूर्वविधिरदृष्टार्थत्वं च। अस्तु वा वमनविरेकसाधनीभूतद्रव्यसंसर्गपरिहारार्थत्वेनावेक्षणविधिर्दृष्टार्थ एव। अवेक्षणस्य दृष्टार्थत्वलाभायैव च भक्षणस्यापि सम्यग्जरणपर्यन्तस्यैव भक्षणविधिना विधानम्। वमनविरेकनिमित्तकप्रायश्चित्ताम्नानादेव सम्यग्जरणपर्यन्तस्य भक्षणस्य प्रतिपत्तित्वावगतिः सम्यग्जरणमन्त्रस्यैतत्र च मान्त्रवर्णिकसम्यग्जरणपर्यन्तत्वकल्पकत्वम्। भक्षणे च कदाचित्सम्यग्जरणपर्यन्तत्वस्य स्वतस्सिद्धत्वेऽपि नैयत्येन तत्सिद्धिफलकता मन्त्रस्य न विरुध्यते। नैयत्येन तत्सिद्धिश्च न भक्षणमात्रेणेति सम्यग्जरणविरोधिविनाडीगतिप्रतिबन्धकफलार्जनावस्थानरूपव्यापारोऽपि तेनैवाक्षिप्यते।

यद्यपि चासौ कदाचिदेवापेक्षितः तथापि विनाडीतिरूपप्रतिबन्धकसम्भावनायां नित्यमनुष्ठेयत्वाद्युक्तस्तत्स्मारकतया नैयत्येन मन्त्रविनियोगः।

यद्यपि च भक्षमन्त्रेण भक्षणस्मरणसत्त्वे तेषामपि ग्रहणादीनां स्मरणं संभाव्यते तथापि तत्तन्मन्त्राम्नानाच्च नियमोपपत्तिः।

यद्यपि चाग्नये जुष्टमिति मन्त्रस्याग्निदेवताकनिर्वापप्रकाशकत्ववदस्यापि ग्रहणादिविशिष्टभक्षणप्रकाशकत्वाङ्गीकारेण मन्त्रैकत्वमभ्युपगम्यापि ग्रहणाद्यङ्गत्वं शक्येत वक्तुम्, तथाप्युपक्रमोपसंहारैक्यादिरूपैकवाक्यतोपगमनसामर्थ्याभावे स्वरसतः प्रतीयमानतत्तदाख्यातगतमुख्यविशेष्यार्थकत्वबाधे प्रमाणाभावात् नात्र भेदाङ्गीकारः। 'एकं वृणीते' इत्यादौ तु सत्यप्याख्यातभेदे विकल्पपरिहारार्थं सर्वेषां विधित्वकल्पनागौरवपरिहारार्थञ्चैकवाक्यत्वाभ्युपगमः। तस्माद्युक्तं भेदेनैव ग्रहणाद्यङ्गत्वम्। समाख्या तु भक्षसम्बन्ध्यनुवाक इति साक्षात्परंपरासाधारण्येनाप्युपपन्ना। समाख्याबलादेव हि मान्त्रवर्णिकग्रहणादेर्भक्षाङ्गत्वसिद्धिः। अन्यथा हि महाप्रकरणात् ज्योतिष्टोमसम्बन्धिग्रहणमात्राङ्गतापत्तिः

अस्तु वा अवान्तरप्रकरणादेव तदङ्गत्वम्। तथापि अनुवादरूपा सती नानुपपन्नैव॥

प्रयोजनं पूर्वपक्षे ग्रहणमन्त्रादेर्नैयत्याभावः। पाठक्रमेण च मन्त्रपाठान्ते भक्षणम्। सिद्धान्ते तु ग्रहणादेर्नैयसेन तत्तन्मन्त्रान्तेऽनुष्ठानम्। हिन्वेत्यस्य च भक्षणान्तेऽर्थक्रमानुरोधेन पाठः इति स्पष्टम्। सूत्रे रूपपदेन लिङ्गं उद्देशपदेन सामान्यसम्बन्धबोधकं प्रमाणं विवक्षितम्। अन्यत्स्पष्टम्॥

इति नवमं लिङ्गसमाख्याधिकरणम्॥

( भक्षाधिकरणम् )

अथ दशमं गुणाभिधानाधिकरणम् ॥ (१०)

## सू—गुणाभिधानान्मन्द्रादिरेकमन्त्रस्स्यात् तयोरेकार्थसंयोगात् ॥ ३—२—२६ ॥

( विषयसंशयसङ्गतयः )

तस्मिन्नेवानुवाके किं 'मन्द्राभिभूति'रित्यादिः तृप्यश्वित्यन्तः तृप्तौ विनियोक्तव्यः ? उत भक्षमन्त्रैकवाक्यतया भक्षण इति सन्देहः । पादाध्यायसङ्गती पूर्ववत् । आपवादिकी त्वनन्तरा ।

( पूर्वपक्षः )

तत्र पूर्ववदेव लिङ्गात् तृप्त्यङ्गत्वम् । न च तस्या भक्षणानुनिष्पन्नत्वेनाननुष्ठेयाया अङ्गित्वानुपपत्तिः । ग्रहणादिवदननुष्ठेयत्वेऽपि सम्यग्जरणवत् तदनुकूलव्यापारस्य भक्षणगतबाहुल्यस्य कृतिसाध्यत्वेनानुष्ठेयत्वोपपत्तेः । अत एव तद्वदिह मन्त्राम्नानसामर्थ्यात् भक्षणस्य तृप्तिपर्यन्तत्वसिद्धिः । तस्य च भक्षणगतबाहुल्यं विनाऽसिद्धेः तन्नियमाक्षेपकत्वमपि ।

अस्तु वा कथमपि तृप्तेरननुष्ठेयत्वम् । तथापि तस्या भक्षणजन्यायाः स्वर्गवन्मन्त्रप्रकाश्यत्वोपपत्तिः । यद्यपि सोमप्रतिपत्त्यर्थत्वात् भक्षणस्य तृप्तिर्न मुख्यं फलम्, तथापि पुरोडाशादिभक्षणवत् कर्तृनियमांशेन क्रियात एव वा कर्तव्यानुष्ठानसामर्थ्यजनकतृप्तिरूपभक्षयितृसंस्कारार्थत्वस्याप्यानुषङ्गिकस्य वक्ष्यमाणत्वात् फलत्वाविघातेन मन्त्रप्रकाश्यत्वोपपत्तिः । यदि कर्तव्यानुष्ठानसामर्थ्याधानाख्य एव भक्षयितुः संस्कार उच्यते ततोऽस्तु तर्पयतिना तल्लक्षणा । सर्वथा स्वतन्त्राख्यातस्यैकवाक्यत्वकल्पना निष्प्रमाणिकैवेत्येवं प्राप्ते—

## ( सिद्धान्तः )

ब्रूमः—'अल्पं भक्षयती' त्यनेनैव भक्षणगतबाहुल्यस्य तृप्तिजनकस्य पर्युदस्तत्वात् न तावत् भक्षणे सम्यग्जरणपर्यन्तत्वस्येव तृप्तिपर्यन्तत्वस्य कल्पनावसरः । अत एव तृप्तेर्भक्षणेनाजननान्न तस्याः स्वर्गवज्जन्यत्वमात्रेण प्रकाश्यत्वोपपत्तिः । फलत्वं त्वस्याः सोमप्रतिपत्त्यर्थत्वात् भक्षणस्य दूरभ्रष्टमेव । न हि तृप्तिकर्तव्यानुष्ठानसामर्थ्यजनकतयाप्यानुषङ्गिकं फलम् । तृप्त्यभावेऽपि भक्षणेनौषधविधयाप्यनुष्ठाने सामर्थ्यजननात् । अत एव तावन्मात्रमेवानुषाङ्गिकं फलम्, न तु तृप्तिपर्यन्तम् । तावन्मात्रस्यापि च न स्वर्गवत्प्रकाशनार्हत्वं, येन तर्पयतिना लक्षणयापि प्रकाश्येत । अनुष्ठानसामर्थ्यजननस्य दृष्टफलत्वेनासम्भवितत्वाशङ्काभावात् तन्निश्चयरूपश्रद्धाजननार्थं स्मारकमन्त्रानपेक्षणात् । स्वर्गस्य त्वदृष्टफलत्वात् तदिति वैषम्यम् । अतश्च लिङ्गविनियोगासम्भवात् असत्यप्येकवाक्येनोपगमनरूपे लिङ्गे स्पष्टे "एकं वृणीत" इतिवत् कथञ्चित् तदनुमायैकवाक्यताकल्पनादिद्वारा स्वार्थस्य भक्षविशेषणत्वप्रतिपादनार्थ एवायं मन्त्रैकदेशः । स्वतन्त्राख्यातश्रवणेऽपि च तृप्तेरितिकरणाद्यध्याहारेण भक्षणविशेषणत्वोपपत्तिः—तृप्यत्वित्येतदर्थं भक्षयामीति । सर्वस्य मन्त्रस्य स्वार्थविशिष्टभक्षणप्रकाशकत्वात् विशेष्यांशे दृष्टार्थत्वेऽपि विशेषणांशेऽदृष्टार्थत्वाङ्गीकारान्न वैयर्थ्यम् ।

अथ वा तृप्यत्वित्यादिना लक्षणया भक्षणस्तुतिरदृष्टार्था । अतश्च सर्वोऽपि मन्त्रः प्राशस्त्यविशिष्टभक्षणं प्रतिपादयति । अस्मिंश्च पक्षे लोट् प्राप्तकालत्वे प्रार्थनायां वा द्रष्टव्यः । तस्मात् तृप्तिपरस्यापि भक्षमन्त्रैकवाक्यतया भक्षणाङ्गत्वमस्त्येवेति सिद्धम् ॥

प्रयोजनं पूर्वपक्षे समन्त्रं भक्षणं कृत्वा तृप्तिमन्त्रपाठः ।

सिद्धान्ते तु यथाम्नानमिति ॥

सूत्रं तु लिङ्गविनियोगासम्भवात् मन्द्रादिर्भक्षयाम्यन्त एव मन्त्रः स्यात् । गुणस्य तृप्तिरूपस्य विशेषणस्य प्राशस्त्यस्य वाऽभिधानेन तयोर्मन्त्रभागयोः विशिष्टैकार्थवृत्तित्वोपपत्तेरिति व्याख्येयम् ॥

इति दशमं गुणाभिधानाधिकरणम् ॥

---

अथैकादशमिन्द्रपीताधिकरणम् ॥ (११)

## सू—लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥३–२–२७॥ (पू)

(विषयसंशयौ)

भक्षमन्त्र एव किं लिङ्गादिन्द्रदेवस्यागाभ्यासमात्राङ्गम् । तद्भिन्नाभ्यासानां तु अमन्त्रकं भक्षणम् ? । उत तेषूहेन मन्त्रः ? उतानूहेनैवेति विचार्यते ।

(सङ्गतिः)

अत्र चानैन्द्रप्रदानेषु लिङ्गप्रमाणकभक्षमन्त्रविनियोगस्य सिद्धान्ताभिप्रेतस्य पूर्वपक्षद्वयेऽप्यनङ्गीकारात् पादाध्यायसङ्गतिः । तेनोहपक्षस्य पादलक्षणासङ्गतत्वान्न स्वतन्त्रकोटित्वम् । अपित्वाद्यकोटिफलीभूतस्यानैन्द्राणाममन्त्रकत्वस्याक्षेपमात्रमिति न्यायसुधाकारोक्तमपास्तम् । अनैन्द्रप्रदानेषु लिङ्गप्रमाणकमन्त्रविनियोगस्य सिद्धान्त्यभिप्रेतस्य प्रतिपक्षतयोहोपन्यासेन सङ्गत्युपपत्तेः । अस्यापि पूर्वपक्षे फलाक्षेपस्य निष्प्रयोजनत्वाच्च । अनन्तरसङ्गतिस्तु भक्षमन्त्रैकवाक्यतया तृप्तिमन्त्रस्य भक्ष-

णाङ्गत्वेऽभिहिते भक्षमात्रस्यैव किंदेवत्यसोमभक्षणाङ्गतेति विचारात्प्रासङ्गिकी ।

( पूर्वपक्षः )

तत्र न तावत्प्रकरणेन सर्वप्रदानाङ्गभूतभक्षणाङ्गत्वम् । इन्द्रपीतस्येति पदेनेन्द्रदेवत्यसोममात्रप्रकाशनेन लिङ्गात्तद्बाधावगतेः । न च इन्द्रेण यस्मिन् सवने पीत इति बहुव्रीहिमङ्गीकृत्येन्द्रपीतपदस्य सवनविशेषणत्वाङ्गीकारादन्यदेवत्यस्यापि च सोमस्योक्तविधसवनसम्बन्धित्वेन प्रकाशनोपपत्तेर्लिङ्गविरोधात्सर्वार्थत्वोपपत्तिरिति वाच्यम् । इन्द्रपीतपदस्येन्द्रेण पीतस्स्वीकृत इति वा इन्द्राय त्यक्त इति वा तत्पुरुषोपपत्तौ बहुव्रीहेरङ्गीकाराभावात् । तत्पुरुषे हि पूर्वपद एव सम्बन्धिनि लक्षणा, बहुव्रीहौ तु पदद्वयेऽप्यन्यपदार्थे लक्षणेति गौरवम् ।

बहुव्रीहावेकस्मिन्पद एव विशिष्टार्थलक्षणा इतरत्तात्पर्यग्राहकमित्यङ्गीकारेऽपि च लक्ष्यतावच्छेदके गौरवात् । तात्पर्यग्राहकस्य च वाक्यार्थान्वय्यर्थप्रतिपादकत्वाद्गौरवं समस्तयेव । न ह्यन्यपदार्थे बहुव्रीहेश्शक्तिः, येन तत्पुरुषादपि लाघवं शंक्येत । एकहायन्यादिपदेऽन्यपदार्थलक्षणाया एवास्माभिः प्रतिपादनात् । अस्तु वा तदाप्यवयवार्थोपस्थितिसापेक्षत्वादन्यपदार्थोपस्थितेर्बहुव्रीहौ गौरवम् । सर्वथा तत्पुरुषो लघुभूत एव ।

किञ्च नात्र बहुव्रीहेर्लक्षणानुगमः । "समानाधिकरणानां बहुव्रीहिरिष्यत," इति कात्यायनस्मरणात् व्यधिकरणपदानां तदनुपपत्तेः । (१) "सप्तमी विशेषणे बहुव्रीहा"विति ज्ञापकबलेन हि कण्ठेकाल इत्यादौ सप्तम्यन्त एव स आश्रितः, नान्यत्र । तत्पुरुषे तु

---

१ पा. सू. २-२-३५

(१)"कर्तृकरणे कृता बहुल"मिति स्मरणाल्लक्षणानुगमो नानुपपन्नः। बहुलग्रहणेन कर्तृकरणातिरिक्तस्य कृता समासाभ्युपगमाच्चतुर्थी तत्पुरुषस्याप्युपपत्तेः।

न चैवमपीन्द्रपीतपदे(२)"बहुव्रीहौ प्रकृत्या पूर्वपद"मिति स्मरणानुसारात्पूर्वपदे प्रकृतिस्वरस्यैकारोदात्तत्वस्य बहुव्रीहिज्ञापकस्य वैदिकैः पठ्यमानत्वाद्बहुव्रीहित्वावगतेस्तत्पुरुषाङ्गीकारे चान्तोदात्तत्वापत्तेः कथं तत्पुरुषाङ्गीकरणमिति वाच्यम्। सत्यपि बहुव्रीहिज्ञापके स्वरे प्रधानभूतस्वार्थानुग्रहाय तत्पुरुषावधारणाच्छब्दधर्मस्य स्वरस्यैवाङ्गगुणविरोधन्यायेन "सुप्तिङुपग्रहलिङ्गनराणा" मित्येवं व्यत्ययेन व्याख्यानात्।

यदि तु 'स्थूलपृषतीमालभेते'त्यादौ महाभाष्यकारेण स्वरान्निर्णयाभिधानात्समासगतलाघवापेक्षयाङ्गधर्मस्यापि स्वरस्यैव प्राबल्यमित्याश्रीयेत तथापीन्द्रपीतपदे बहुव्रीहेरपि सामानाधिकरण्यासम्भवेन स्थूलपृषतीपदवल्लक्षणानुगतत्वाभावादवश्यं समासस्वरयोरन्यतरस्यागतिकत्वे व्याख्येये अङ्गधर्मत्वात्स्वरस्यैव तद्युक्तम्।

वस्तुतस्तु तत्पुरुषेऽपि पठ्यमानस्वरो नैवानुपपन्नः। (३)'तृतीया कर्मणी'त्यनेन कर्माणि क्तान्त उपपदे परे तृतीयान्तपूर्वपदप्रकृतिस्वरमित्यभिधानात् तृतीयासमासे ऽपि विवक्षितस्वरोपपत्तेः।

यद्यपि चात्र पीतपदे तत्कर्तृलक्षणया चतुर्थीसमासोऽङ्गीक्रियेत तथापि(४)'चतुर्थी तदर्थे' इत्यनेन तदुपपत्तिः। यदि तु देवतार्थत्वस्य नवमे निराकरणान्नैतत्प्रवृत्तिरित्याशङ्क्येत तदा

१ पा. सू. २-२-३२ २ पा. सू. ६-२-१
३ पा. सू. ६-२-४८ ४ पा. सू. ६-२-४३

'क्ते चे'ति सूत्रात्पूर्वपदप्रकृतिस्वरत्वसिद्धिर्द्रष्टव्या । अतस्स्वरस्यानिर्णायकत्वाल्लाघवादङ्गभूतसवनपरत्वापत्तेश्च बहुव्रीहित्वानुपपत्तेः प्रधानभूतसोमपरत्वलाभाय तत्पुरुषाङ्गीकरणमेव युक्तम् । ततश्चानिन्द्रदेवत्यसोमभक्षणे लिङ्गविनियोगासम्भवान्न तावदुपदेशप्रमाणेनैव मन्त्रप्राप्तिः ।

नाप्यतिदेशप्रमाणेनोहितस्य । यागाख्यकर्मण एकत्वेन प्रकरणाविशेषाच्च अन्येषां धर्माणां सर्वार्थत्वावगतेरभ्यासानां प्रकृतिविकारभावानुपपत्तेः । अतश्च सत्यपि सामान्यविधौ "व्रीहीणां मेध सुमनस्यमान" इति मन्त्रवदिन्द्रलिङ्गकानां मन्त्राणामिन्द्रदेवत्यसोममात्रभक्षाद्यङ्गत्वावगतेरन्येषाममन्त्रकमेव भक्षणम् । सूत्रं स्पष्टम् ॥

अत्र च सूत्रे भाष्यादौ यद्यपीन्द्रमात्रभिन्नस्यामन्त्रकता प्रतीयते तथापि लिङ्गाविशेषात् पितृदेवत्यप्रदानेषु पितृपीतपदयुक्तस्य नराशंसदेवत्यप्रदानेषु च नराशंसपीतपदयुक्तस्य विभज्य सूक्तवाकवद्विनियोगावधारणादिन्द्रादिभिन्नप्रदानानाममन्त्रकं भक्षणमित्येवमवगन्तव्यम् ।

न च नाराशंसदेवत्यप्रदानस्य बौधायनीयादिकल्पेष्वदर्शनादभावः । वार्तिककृता सिद्धान्ते प्रातस्सवनादिशब्दानां तत्समानाधिकरणानां च वसुमद्गणादिशब्दानां गायत्रच्छन्दःप्रभृतीनामिन्द्रपीतादीनां च प्रतिसवनं क्रमेण विभज्य विनियोगाभिधानेन माध्यन्दिने सवने नाराशंसदेवत्यप्रदानस्यावश्यकत्वेन कल्पान्तरे तत्सद्भावकल्पनोपपत्तेः । अतश्च सवनत्रयस्थेऽप्यैन्द्रप्रदाने प्रातस्सवनादिशब्दानां सामानाधिकरण्यपदान्तरयुक्तानां विनियोगे यथासवनं विभज्य प्रयोगेऽपीन्द्रपीतपदस्य सवनत्रयेऽपि प्रयोगः ।

एवं नाराशंसदेवत्ये पितृदेवत्येऽपि द्रष्टव्यम्। तद्भिन्नानां तु यवेष्विवामन्त्रकत्वम् ॥

( इति प्रथमः पूर्वपक्षः )

सू—यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ ३–२–२८ ॥

( अथ द्वितीयः पूर्वपक्षः )

सत्यमैन्द्रादिष्वेवोपदेशेन मन्त्रः । तद्भिन्नेष्वपि त्वतिदेशेन संभवन् केन वार्येत । सत्यपि यागैकत्वेऽभ्यासानां भेदाच्छ्रयणादिव्यवस्थावत्प्रकृतिविकृतिभावस्याप्युपपत्तेः ।

न च प्रकरणाविशेषात्पारिप्लवत्वम्, मानग्रहणमन्त्रानुरोधेन धर्माणामैन्द्रमात्रप्रदानविषयत्वोपपत्तेः । तथाहि—"इन्द्राय त्वा वसुमते सोमं मिनोमि। इन्द्राय त्वा वसुमते सोमं गृह्णामी" ति सोममानग्रहणमन्त्रयोस्तावल्लिङ्गादैन्द्रप्रदानीयसोममानाद्यङ्गत्वं वादित्रयसिद्धम्। अतस्तत्प्रकाश्ययोर्मानग्रहणयोरपि तन्मात्राङ्गत्वम्। इष्यते च सर्वविषयतया संभाव्यमानस्यापि प्रधानस्याङ्गानुरोधेनाल्पविषयत्वम्। अर्थिमात्रविषयत्वेन प्रतीयमानानामपि क्रतुविधीनामङ्गभूताग्निविद्याजनकाधानाध्ययनानुरोधेन त्रैवर्णिकमात्रविषयत्वाङ्गीकारात् । अत एव मानग्रहणसंस्कार्यस्य सोमस्यापि तन्मात्राङ्गत्वम् । एवं चोत्पत्तिवाक्ये सोमो विजातीययागत्वसामानाधिकरण्येनैव विधीयते न त्ववच्छेदकावच्छेदेन ।

अथ वा नैव तत्र सोमविधिः । संस्कारविध्यनुपपत्त्यैवेन्द्रप्रदानाङ्गतायाः प्राप्तिसम्भवात् । अतश्चोत्पत्तिवाक्यस्थं सोमपदमप्युपदेशातिदेशप्रापितसोमानुवादमात्रमित्यपि ध्येयम् ।

सोमधर्माणां स्वाभिषवादीनां तन्मात्रार्थत्वं निरङ्कुशमेव । तःसंवलितत्वाच्च दीक्षणीयादयोऽपि तन्मात्राङ्गमेवेत्यनैन्द्रप्रदानानां द्रव्यादिधर्मसाकाङ्क्षाणामन्यक्लृप्तत्रसामान्यादैन्द्रप्रदानविकृतित्वोपपत्तेरतिदेशप्राप्तस्य भक्षमन्त्रस्य समवेतार्थत्वादूहन्यायेनोहितस्य प्रयोगस्तत्र नानुपपन्नः ।

एवं च नाराशंसदेवत्यपितृदेवत्यप्रदानेष्वप्यूहेनैव भक्षमन्त्रप्राप्त्युपपत्तौ पुनस्तदाम्नानमूहितस्य मन्त्रत्वसिद्ध्यर्थं न विरुध्यते। एवं च षोडशिन्यतिरात्रे च पितृदेवत्येऽनुष्टुप्छन्दस इति भक्षमन्त्रं नयतीति सामान्यतोऽस्मिन् मन्त्रे पदान्तरनिष्ठतयोहस्य प्राप्तत्वात्तद्विशेषस्य जगतीच्छन्दःपदेऽनुष्टुप्छन्दःपदोहरूपस्य विधानमवकल्पते । इतरथा षोडशिन्यतिरात्रे च भक्षमन्त्रस्यानूहितस्यैव पितृदेवत्यप्रदानत्वेन प्राप्तेर्विशेषविधानं नोपपद्येत।

यद्यपि चाग्निष्टोमान्तप्रदानानामेव समानविधानत्वमिति तत्रत्यपितृदेवत्यप्रदान एव पितृपीतपदयुक्तो मन्त्रः उपदेशेन प्राप्यते तथापि षोडश्यतिरात्रयोस्तातीयसवनिकपितृदेवत्यप्रदानविकृतित्वस्यैव सादृश्यविशेषणावगतेरनूहितस्यैव भक्षमन्त्रस्यातिदेशेन प्राप्त्यापत्तेः विशिष्टविधाने गौरवापत्तिः ।

एवं सवनविशेषणत्वसिद्धान्तेऽपि द्रष्टव्यम् । अस्मन्मते त्वैन्द्रप्रदानस्यैव प्रकृतित्वाद्विकृतौ सत्यपि मन्त्रत्वसिद्ध्यर्थे तदुपदेशे वस्तुतः प्रकृतिप्राप्ते इन्द्रपदस्थानापन्नत्वेन पितृपदस्योहत्वोपपत्तेः युक्तं तद्घटितमन्त्रे ऊहविशेषविधानम् ।

यद्यपि च जगतीच्छन्दःपदे ऊहस्याप्रसक्तत्वान्न तदनुवादेनानुष्टुप्छन्दःपदमात्रविधिर्नमापि शक्यते वक्तुं तथाप्यस्मिन्मन्त्रे पदान्तरेऽपि तावदूहस्य मन्मते प्राप्तत्वाद्युक्तस्तत्रानुष्टुप्पदविशिष्टोहविधिः । छन्दःपदवत्त्वसाधर्म्याच्च जगती-

पदस्थानत्वलाभः। वार्तिकमप्येवमेव व्याख्येयम् । तस्माद्यथादेव-तमूहेन प्रयोगः ॥ सूत्रं स्पष्टम् ॥

( इति द्वितीयः पूर्वपक्षः )

( अत्रान्तरागार्भिणीत्वेन पञ्चाधिकरणानि । तत्र प्रथममभ्युन्नीताधिकरणम् । ) १२ ॥

सू-पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ ३-२-२९ ॥

( विषयसंशयौ )

एवं पूर्वपक्ष एवावस्थिते प्रसङ्गादूहितमन्त्रप्रयोगगतविशेषविचारः क्रियते । प्रातस्सवने तृतीयसवने च सवनमुखीयेषु सर्वेषु चमसेष्विन्द्रार्थं सकृद्धुतेषु ये तावद्धोतृब्रह्मोद्गातृयजमानानां वैकल्पिकसदस्ययुक्तानां मध्यतःकारिणां चमसास्तेष्वनुवषट्कारेऽपि हुतेषु पश्चाद्धोत्रकाणां मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां ये चमसास्तेषु द्रोणकलशात्सोमान्तरं सशेषेष्वेवाभ्युन्नीय तैर्मित्रावरुणादिदेवतान्तरेभ्यो हुत्वा भक्ष्यते । तत्र किं पूर्वहोमदेवताभूतेन्द्रपदमपि भक्षमन्त्रे कीर्तयितव्यं उत नेति विचार्यते । अत्र चाच्छावाकचमसेन प्रातस्सवने तदानीमहोमादनुदाहरणत्वं तृतीयसवने तूदाहरणमेव ।

( सङ्गतिः )

अत्र च भक्षमन्त्रस्य लिङ्गादिन्द्रदेवसपूर्वप्रदानाङ्गत्वस्यैव पूर्वाधिकरणपूर्वपक्षोक्तस्याक्षिप्य समाधानात्पादाध्यायानन्तरसङ्गतयः। आद्यपूर्वपक्षमात्रोपजीवित्वेऽपि वा अस्याधिकरणस्यैतदधिकरणापवादभूताग्रिमाधिकरणस्योहपक्षोपजीवित्वात्तदुत्तरमारम्भः।

( सिद्धान्तः )

तत्र पूर्वदेवताशेषस्य सत्यप्यभ्युन्नीयमानेन संसर्गेऽभ्युन्नीत-स्यैवोत्तरदेवतासम्बन्धेन शेषस्य पूर्वदेवतासम्बन्धानपायादुभ-योरपि भक्षणाख्यसंस्कारावश्यंभावे तन्मन्त्रे उत्तरप्रदानाङ्गभूता-या देवताया ऊहेनोपलक्षणवत्पूर्वप्रदानाङ्गभूतस्यापीन्द्रस्योपल-क्षणं लिङ्गेन न विरुध्यते।

यद्यपि चोभयोरपि संसृष्टत्वान्नात्र भक्षणस्य तन्मन्त्रोच्चा-रणस्य वा पृथगनुष्ठानं तथापि तन्त्रेणैव भक्ष्यमाणे सोमे सूक्त-वाकवदितरपदतन्त्रत्वेऽपि इन्द्राग्निमित्रावरुणपीतस्येत्येवमुभयोरप्यु-पलक्षणत्वं न विरुध्यते। अत एव ब्राह्मणाच्छंसिचमसे पूर्वो-त्तरप्रदानयोरिन्द्रमात्रदेवत्यत्वेऽपि सकृदुच्चारितेन्द्रपदेनैवोभयापू-र्वीयत्वेन तदनुसन्धानं द्रष्टव्यम्।

एवं माध्यन्दिनसवनस्य सवनमुखीयेष्वपि। तत्रापि सर्वच-मसानां पूर्वोत्तरप्रदानयोरिन्द्रमात्रदेवसत्त्वात्। सूत्रं स्पष्टम्॥

( इति सिद्धान्तः )

## सू—अपनयाद्वा पूर्वस्यानुपलक्षणम्॥३-२-३०॥( पू )

( अथ पूर्वपक्षः )

होमकाले तावत्संसृष्टत्वादुभयोरप्याश्रावणप्रत्याश्रावणादि-भिरुक्तदेवतासम्बन्धो ऽवसीयते।

न च संसर्गेऽपि वायव्येन्द्रवायवसोमवद्ग्रहणकालीनविवेक-मात्रेण बुद्ध्या निष्कर्षोपपत्तिः। तत्र ग्रहणकाले देवतासंयोगसत्त्वेन बुद्ध्या निष्कर्षोपपत्तावप्युन्नयने देवताविधेर्बौधायनीयादिकल्पे-ष्वदर्शनेनाभ्युन्नीतमात्रस्योत्तरदेवतासम्बन्धकल्पने प्रमाणाभा-वात्यागकालीनस्य च याज्यामन्त्रवर्णकल्प्यदेवतासम्बन्धा

संसृष्टविषयत्वान्निष्कर्षानुपपत्तेः ।

न चोन्नयने देवताविध्यभावे याज्यामन्त्रवर्णे यागविशेष-तयैव देवताप्राप्तेरव्यक्तत्वभङ्गः। उक्तविधाव्यक्तत्वभङ्गेऽप्युत्पत्ति-वाक्ये विहितदेवताकेष्टिभिन्नयागत्वरूपस्यैव तस्याङ्गीकारात् । अत्रोपांशुयाजव्यावृत्त्यै इष्टिभिन्नेतिविशेषणम् ।

न च शेषस्योत्तरदेवतोद्देशेन त्यागेऽपि पूर्वदेवतासम्बन्ध-स्यापि सत्त्वात्तदुपलक्षणत्वोपपत्तिः। प्रतिगृहीतृत्वाख्यस्य हि देव-तासम्बन्धस्य नवमे निषेत्स्यमानत्वेनानिष्टत्वात्तदुद्देशेन च त्य-क्तत्वरूपस्य च त्यागनाशेन नाशादन्यथा त्यक्तस्य कालान्तरे पर-म्परयापि विनिमयप्रतिग्रहादिना लब्धस्य देवतासम्बन्धानपगमेन 'देवस्वं न गृह्णीया'दिति निषेधातिक्रमापत्तेरेतन्निषेधबलेन देव-तायास्स्वीकाराख्यस्सम्बन्धो वाच्यः ।

न च तत्र प्रमाणाभावः। अस्य यथेष्टविनियोगानर्हतासम्पाद-कत्वापरपर्यायस्य स्वीकारस्य 'देवस्वं न गृह्णीया'दिति निषेधवि-षयीभूतदेवस्वपदालम्बनतयाऽवश्यकल्प्यत्वात् ।

न च यथेष्टविनियोगानर्हत्वस्य त्यागेनैवोपपत्तेस्तत्संपादक-देवतानिष्ठपदार्थान्तरकल्पने गौरवापत्तिः। 'अस्वं न गृह्णीया'दिति निषेधविषयीभूतास्वपदालम्बनस्य यथेष्टविनियोगानर्हत्वस्य त्यागेनैव जननात्तद्व्यतिरिक्तस्य देवस्वपदालम्बनस्य वाक्यद्वय-वैयर्थ्यभयेनावश्यं वाच्यत्वात् । अतश्चानुद्देश्यत्यागस्थले स्वत्वा-भावमात्रं; देवतोद्देश्यकत्यागस्थले देवतास्वीकारोऽपि, मनुष्योद्दे-श्यकत्यागस्थले तद्भोगार्हत्वमप्यधिकमिति विवेकः ।

मास्तु वा देवस्वपदावलम्बनतया देवतास्वीकारसिद्धिः । तथाप्यकृतेऽपि त्यागे याज्ञिकानां निर्वापप्रभृति प्रतिपत्ति-पर्यन्तं देवतासम्बन्धिहविर्व्यवहारदर्शनादवश्यं देवतास-

म्बन्धो द्रव्ये कश्चिदभ्युपेयः । न ह्यसौ देवतोद्देशेनोपकल्पितत्वमात्रं, प्रतिपत्त्युत्तरं लौकिकव्यवहारेण तस्यासंभवात् । अतोऽवश्यं प्रतिपत्तिनाश्यः 'कश्चिद्देवतासम्बन्धोऽभ्युपेयः । तस्य च धर्मिग्राहकप्रमाणेन देवतान्तरसम्बन्धिविरोधित्वावगतेस्तदत्यन्ताभावसमानाधिकरणस्यास्य तत्सामानाधिकरण्यानुपपत्तेरवश्यं शेषस्योत्तरदेवतासम्बन्धे पूर्वदेवतासम्बन्धोऽपगच्छतीत्यभ्युपगन्तव्यम् ।

न चैवं पूर्वदेवतासम्बन्धापगमेऽपि तस्य भूतत्वमात्रेणोपलक्षणत्वोपपत्तिः। मध्यतःकारिचमससाध्येन्द्रप्रदाने विद्यमानस्यैव सम्बन्धस्योपलक्षणत्वेन होत्रकचमससाध्येन्द्रप्रदाने भूतपूर्वगत्या तदुपलक्षणत्वाङ्गीकारे वैरूप्यापत्तेः । अतो मित्रावरुणपीतस्येत्याद्येवोपलक्षणम् । सूत्रं स्पष्टम् ॥

( इति पूर्वपक्षः )

## सू—(१)अग्रहणाद्वाऽनपायस्स्यात् ॥ ३–२–३१ ॥

( पुनस्सिद्धान्तः )

न शेषस्योत्तरदेवतासम्बन्धः , पूर्वदेवतासम्बन्धापनयो वा, उन्नीतमात्रस्यैवोत्तरदेवतासम्बन्धात् ।

यद्यपि च त्यागवेलायां संसृष्टत्वान्न विवेकप्रतीतिः, तथाप्युन्नयनवेलायां विवेकोपपत्तेः वायव्यैन्द्रवायवसोमवत्त्यागवेलायामपि तस्यैव त्यागोपपत्तिः ।

यद्यपि च नोन्नयनवेलायां प्रकृतौ विकृतौ वा देवतास-

---

(१) यद्यपीदं सूत्रं 'ग्रहणाद्वाऽपनयः स्या'दित्येव भाष्यशास्त्रदीपिकामुद्रितपुस्तकेषूपलभ्यते पठितं, तथापि सर्वेषु कौस्तुभादर्शेषु मदीये प्राचीनतमहस्तलिखितभाष्यपुस्तके कुतहलवृत्तौ च 'अग्रहणाद्वाऽनपायः स्या'दित्येवसूत्रानुपूर्वीदर्शनात् मुद्रितपुस्तकपाठस्वीकारे प्रकृतसिद्धान्तविरोधात् । मयापि स एव पाठस्स्वीकृतः ।

म्बन्धस्तथापि प्रकृतौ तावदुन्नयनस्य दृष्टार्थत्वाद्यागीयद्रव्य-संस्कारकत्वावगतेः विकृतावपि प्राकृतोन्नयनानुवादेन द्रोण-कलशापादानकत्वमात्रविधानेन प्राकृतकार्यापन्नतयोन्नयनान-न्तरविधानेन वा पुनरभ्युन्नीतस्यैव फलचमसहृदयादिवद्यागी-यत्वप्रतीतेः पूर्वशेषस्य च यागीयद्रव्याधारभूतपात्रोपलक्षण-तया 'पयसा मैत्रावरुणं श्रीणाती'तिवदभ्युन्नीतसंस्कारमात्र-त्वावगतेः उत्तरयागार्थत्वे प्रमाणाभावः ।

एवं परमसिद्धान्ते प्रकृतिविकाराभावेऽप्युन्नयनस्य दृष्टार्थ-त्वादेव यागीयद्रव्यसंस्कारार्थत्वावगतेः पूर्वशेषस्योत्तरयागा-र्थत्वे प्रमाणाभावो द्रष्टव्यः ।

वस्तुतस्तून्नयनेऽपि चाश्रावणकाले देवतासम्बन्ध इत्यादि भाष्यवार्तिकग्रन्थाद्देवतासम्बन्धविधिःकल्पान्तरेऽस्तीत्यभ्युपग-न्तव्यम् । अन्यथा अव्यक्तत्वनिर्वचनानुपपत्तेः ।

न चोत्पत्तिवाक्येऽविहितदेवताकेष्टिभिन्नयागत्वं तत् उत्पत्ति-वाक्येऽविहितदेवताकज्योतिष्टोमभिन्नयागत्वेन विनिगमनाविर-हात् । अतः स्वाङ्गतयाऽविहितदेवताकत्वमेव तत् ।

न चास्यापि पूर्वोक्तेन विनिगमनाविरहः । 'ऐन्द्रवायवं गृह्णाती'त्यादौ ग्रहणसम्बन्धितयाऽग्रे देवताविधिवैयर्थ्यस्यैव नियामकत्वात् । अतश्चोन्नयनेऽपि देवतासम्बन्धसत्त्वादभ्युन्नी-तस्यैवोत्तरयागार्थत्वं न पूर्वशेषस्येति तस्य पूर्वदेवतासम्बन्धान-पायात्तत्प्रतिपत्तिरूपे भक्षणे कर्तव्ये उपलक्षणीय एवेन्द्रः । यदि ह्युन्नयनस्योन्नीतसंसर्गस्य वा पूर्वशेषप्रतिपत्त्यर्थता प्रयाजशेषा-भिघारणवद्भवेत् ततो विशेषप्रतिपत्त्या सामान्यप्रतिपत्तिरूपस्य भक्षणस्य बाधान्नोपलक्ष्येतापि । न तु तदस्ति । शेषस्य पात्रोपल-क्षणत्वेन श्रुतस्य प्राधान्यलक्षणायां प्रमाणाभावादभ्युन्नीतस्यो-

त्तरयागाङ्गत्वेन विधाने वाक्यभेदाच्च । अतो भक्षणरूपप्रतिपत्ते-रावश्यकत्वादुपलक्षणीय एवेन्द्र इति सिद्धम् ।

प्रयोजनस्य पक्षोक्तत्वेऽप्यूहस्यैन्द्रप्रदानमात्रसम्बन्धित्वस्य वा स्थायित्वाभावादेतद्विचारहेतुभूतस्य पूर्वशेषस्युत्तरयागा-ङ्गत्वसदसद्भावरूपस्य विचारस्य स्थायिनः स्थायिभूतं प्रयो-जनमुत्तरयागकालेऽभ्युन्नीतस्यैव देवतासम्बन्धानुसन्धानमित्ये-वंविधं द्रष्टव्यम् ॥ सूत्रं स्पष्टम् ॥

इत्यन्तरागर्भिण्यां प्रथमं पुनरभ्युन्नीताधिकरणम् ॥

( पुनरभ्युन्नीतपूर्वदेवतोपलक्षणाधिकरणम् ) (१२)

## अथ द्वितीयं पात्नीवते द्विदैवत्यदेवतो-पलक्षणाधिकरणम् ॥ (१३)

## सू—पात्नीवते तु पूर्ववत् ॥ ३—३—३२ ॥

( विषयसंशयौ )

द्विदेवत्यशेषार्धमादित्यस्थालीस्थसोमे प्रातस्सवने सम-वनीय तृतीयसवने संसृष्टादित्यस्थालीस्थसोमेन सह पूर्वगृहीता-ग्रयणस्थालीस्थस्सोमः पात्रान्तरे कृत्वा पुनराग्रयणस्थाल्यां गृह्यते । पश्चाच्चो'पांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाती'ति श्रुतम् । तस्मिन्पात्नीवते तच्छेषे भक्ष्यमाणे किं मन्त्रे तद्देवताग्निः पत्नीवानूहेनोपलक्षणीयः ? उत द्विदेवत्यशेषार्धस्यापि संसृष्टत्वात्त-द्देवता अपि वाय्विन्द्रवायुमित्रावरुणाश्विनोऽपीति विचार्यते ।

( सङ्गतिः )

पूर्वाधिकरणव्युत्पादितस्य पूर्वदेवतासम्बन्धापनयस्यापवा-दादनन्तरसङ्गतिः । अपादानभूताग्रयणापेतरूपाद्वस्तुसामर्थ्या-दनाग्रयणरूपस्यापि पूर्वशेषस्य पात्नीवतयागाङ्गत्वाभिधानाच्च

पादाध्यायसङ्गतिः ।

अत्र च यद्यपीदं सङ्गतित्रयमूहविषयविचारहेतुभूतपूर्वशेषापनयनविचार एव सम्भवतीति नोहविशेषविचारस्येह कश्चिदुपयोगः, तथापि इन्द्रपीताधिकरणमध्ये चिन्तनात्तेनापि सङ्गतिलाभार्थं तदीयद्वितीयपूर्वपक्षोपजीवनेन तत्करणं नातीवासङ्गतम् ।

( पूर्वपक्षः )

तत्र गृह्णातीत्यस्य कर्माकाङ्क्षाया आवश्यकत्वात् स्ववाक्ये कर्मकारकान्तराश्रुतेराग्रयणाख्यसोमस्यैव कर्मत्वेनान्वयात्तस्यैव पत्नीवद्देवतासम्बन्धेन पात्नीवतयागाङ्गत्वप्रतीतेस्तत्संसृष्टस्यापि पूर्वशेषस्योत्तरदेवतासम्बन्धाभावात्पूर्ववत्पूर्वदेवतासम्बन्धापनयानुपपत्तेस्तस्यापि प्रतिपत्त्यर्थं भक्षणावश्यंभावे चमसवद्ग्रहाभ्यासानामप्यैन्द्रयागाभ्यासप्रकृतितयाऽतिदेशप्राप्ते मन्त्रे ऊहेन सर्वदेवतोपलक्षणम् ।

न चाग्रयणादित्यपादानविभक्तिश्रवणाद्द्वितीयाषष्ठ्योरभावेन तस्य कर्मत्वानुपपत्तेरपादानापेतस्य चाग्रयणानाग्रयणसाधारणस्य संसृष्टस्य सोमरसस्य ग्रहणकर्मत्वेनान्वयोपपत्तेः पूर्वशेषस्याप्युत्तरदेवतासम्बन्धोपपत्तिरिति वाच्यम् । अपेतद्रव्यस्याशाब्दत्वेन ग्रहणकर्मत्वेनान्वयानुपपत्तेः । अतश्च तद्वाचकपदाध्याहारापेक्षया पञ्चम्या एव कर्मत्वलक्षणाया न्याय्यत्वाद्युक्तमाग्रयणस्यैव कर्मत्वम् । अस्तु वाऽऽग्रयणापेतस्यैव कर्मत्वं, तथाप्याग्रयणशेषस्यैव तदपेतत्वं न त्वनाग्रयणशेषस्य । तस्य पूर्वशेषादपेतत्वात् । अतस्तस्योत्तरदेवतासम्बन्धाभावेन पूर्वदेवतासम्बन्धानपायात्पूर्ववत्सर्वोपलक्षणमिति सूत्रार्थः ॥

( इति पूर्वपक्षः )

## सू—ग्रहणाद्वाऽपनीतं स्यात् ॥ ३—२—३३॥ (सि)

### ( अथ सिद्धान्तः )

नाग्रयणस्यैव पत्नीवद्देवतासम्बन्धः, तस्यापादानमात्रतया श्रवणेन ग्रहणकर्मत्वाभावात् ।

न च प्रयाजशेषवल्लक्षणा । अपादानत्वेऽप्यदृष्टार्थत्वाभावात् ।

न च कर्माकाङ्क्षावशात्सा । अपादानसामर्थ्येनोपस्थितस्यापेतस्यैव कर्मत्वेनान्वयोपपत्तेः ।

न च तस्याशाब्दत्वम्, उक्तविधयोपस्थितस्य पात्नीवतमिति तद्धितेन परामर्शसंभवात् । यत्त्वाग्रयणावयवस्यैव तदपेतत्वं न त्वनाग्रयणावयवस्येत्युक्तम् । तत् 'वृक्षात् पर्णं पतती'त्यादौ कङ्कुररादिपत्रस्यापि वृक्षपत्रवद्वृक्षापादानकत्वप्रतीतेः प्रकृतेऽप्याग्रयणावयववदनाग्रयणावयवस्याग्रयणापेतत्वोपपत्तेरयुक्तम् ।

न चैवं संसृष्टस्य सोमरसस्याग्रयणापादानकत्ववदनाग्रयणापादानकत्वस्यापि सत्त्वादाग्रयणापादानकत्वरूपस्य विशेषणस्यान्ययोगव्यावर्तकत्वाभावेन विशेषणत्वानुपपत्तिः । स्वसंसृष्टानाग्रयणयोगव्यावर्तकत्वाभावेऽप्ययोगव्यावर्तकत्वेनासंसृष्टान्ययोगव्यावर्तकत्वेन वा विशेषणत्वोपपत्तेः ।

अतश्च नाग्रयणस्यापि पूर्वशेषस्य पत्नीवद्देवतासम्बन्धात्तस्य च पूर्वदेवतासम्बन्धापनयं विना पूर्वाधिकरणपूर्वपक्षन्यायेनानुपपत्तेः अपनीतदेवतासम्बन्धरूपसोमभक्षणेनापनीतसम्बन्धदेवतोपलक्षयितव्या ।

ननु सम्बन्धापनयेऽपि भूतपूर्वगत्योपलक्षणं पूर्वदेवताया युक्तमेव । न च प्रकृतौ तथाऽनुपलक्षणादप्राकृतकार्यापत्तिः । इन्द्रपीतस्येति क्तप्रत्ययेन भूतकालवाचिना भूतस्यैवोपलक्षणीयत्वा-

वगतेः। प्रकृतौ च भूतसम्बन्धाभावेनादिकर्मणि क्तप्रत्ययमङ्गीकृत्य यस्येन्द्रसम्बन्धोत्पत्तिक्षणो वृत्तः तस्येत्यर्थावगमात् प्रकृतौ सम्बन्धसत्त्वकाल इव विकृतौ तन्नाशकालेऽप्युत्पत्तिक्षणवृत्तित्वस्याविशेषादुपलक्षणोपपत्तिरिति चेत्-

न; पीतशब्दस्यात्र स्वीकाराख्यसम्बन्धवाचित्वात्तस्य च लोके नाशदशायां स्वीकृत इत्येवं प्रयोगाभावेन विद्यमानस्यैव प्रत्ययेन कथञ्चिद्वाच्यत्वेनावधारणात्प्रतीतिवशेन विद्यमानफलसमानकालीनव्यापारातीतत्वस्यैव क्तप्रत्ययेन सर्वत्राभिधानाच्च विद्यमानस्यैव सम्बन्धाख्यफलस्य प्रकृतावुपलक्षणेन विकृतौ तदभावादप्राकृतकार्यकारितापातेन विकृतावुपलक्षणानुपपत्तेः। तस्मात्पत्नीवद्देवतैवोपलक्षणीया । स्थायिविचारप्रयोजनं त्यागकाले आग्रयणस्यैवानुसन्धानाभावः। सूत्रं स्पष्टम् ॥

इत्यन्तरागर्भिण्यां द्वितीयं पात्नीवताधिकरणम् (१३)

## अथ तृतीयं पात्नीवते त्वष्टुरदेवतात्वाधिकरणम् (१४)

### सू—त्वष्टारं तूपलक्षयेत्पानात् ॥ ३—२—३४ ॥

(विषयसंशयसङ्गतयः)

तस्मिन्नेव पात्नीवतयागाङ्गभूते भक्षमन्त्रे किं त्वष्टुरप्यूहेनोपलक्षणम्? उत नेति विचार्यते। (१)"अग्ना३इ पत्नीवा३स्सजूर्देवेन त्वष्ट्रा सोमं पिब"इत्याध्वर्यवमन्त्रलिङ्गात्त्वष्टुरपि पात्नीवतयागाङ्गत्वमस्ति न वेति स्थायिविचारस्य पादाध्यायसङ्गतिस्स्पष्टा। पात्नीवतयागे पूर्वं द्रव्यविचारे कृतेऽधुना देवताविचारात्प्रासङ्गिकी। ऊहविचारसङ्गतिस्तु पूर्ववदेव।

१. तै. सं १-४-२७,

( पूर्वपक्षः )

तत्र यद्यपि तावद्विधौ पत्नीवन्मात्रस्य तद्धितेन देवतात्वमुक्तम्, तथापि पत्नीवच्छब्दस्य यौगिकस्य नित्यं विशेष्यसाकाङ्क्षत्वादवश्यं प्रमाणान्तरेण विशेष्यं पूरणीयम् । न च शब्दस्य देवतात्वात्पूरणवैयर्थ्यम्, तथात्वेऽपि प्रातिपदिकत्वसिद्ध्यर्थं तदपेक्षणात् ।

ननु त्यागकालीनोच्चारणविषयत्वरूपदेवतात्वस्य तद्धितार्थत्वात्तदनुरोधेनार्थपरस्यापि प्रातिपदिकस्य लक्षणया शब्दपरत्वमङ्गीकृत्य शब्दस्य देवतात्वमिष्टम् । अतश्च त्यागकालेऽर्थानुसन्धानं विनापि पत्नीवच्छब्दमात्रप्रयोगेण शास्त्रार्थोपपत्तेः यत्र चतुर्थ्यपि न प्रयोक्तव्या तत्र विशेष्यवाचकपदप्रयोगस्य कोपयोगः ? परं प्रथमैव साधुत्वार्थमुच्चारणीयेति चेत्—

न ; अर्थप्रत्ययानुकूलचतुर्थ्यन्तपदोच्चारणरूपस्यैवोद्देशस्य वृद्धव्यवहाराद्यागघटकत्वावगमेन चतुर्थ्यन्तपदोच्चारणवच्छब्दस्यार्थप्रत्ययस्याप्यावश्यकत्वेन तत्र विशेष्यापेक्षायां तद्वाचकचतुर्थ्यन्तशब्दोच्चारणस्यावश्यकत्वात् । अत एव त्यागस्य मानसत्वेऽप्युक्तविधोद्देशस्य निराकाङ्क्षत्वसिद्ध्यर्थं तद्वाचकपदप्रयोगोऽपि याज्ञिकानां सङ्गच्छते । तस्मात्सिद्धं विशेष्यसाकाङ्क्षयौगिकपदस्थले तत्समर्पणं प्रमाणान्तरेणेति ।

तदिह यथैवाग्निरूपस्य विशेष्यस्य मन्त्रवर्णेन समर्पणं तथैव त्वष्टुरपि । तस्यापि मन्त्रवर्णेन देवतात्वाभिधानात् । तथाहि—

यद्यपि तावदग्नेरिव शब्दतः पानपदलक्ष्यस्वीकारः प्रतीयते पत्नीवच्छब्दसामानाधिकरण्यं च तथापि त्वष्टुसहत्ववाचिसजूश्शब्देन साहित्यावगमात्तस्य चैकक्रियान्वयनिमित्तकत्वात्त्वष्टुरप्यर्थाद्विशिष्टविधौ विशेषणविधिवत्स्वीकाराख्यपानसम्ब-

न्धावगतेस्तस्य च तदुद्देशेन त्यागं विनानुपपत्तेर्देवतात्वसिद्धिः ।
अत एव तद्बलेन पत्नीवत्तायामपि तस्य साहित्यम् ।
एवं च देवशब्दोऽपि देवतात्वपरस्सङ्गच्छते । अतश्च मन्त्रे
त्वष्टुरपि स्वीकारान्वयित्वेनाग्निवद्विधौ पत्नीवच्छब्दाद्विशेष्यत्व-
प्रतीतेस्तस्यापि देवतात्वम् । तत्राप्यग्नित्वष्ट्रोर्न व्यासक्ता विशे-
ष्यता । मन्त्रे भिन्नपदोपादानेन प्रत्येकमेव तत्प्रतीतेः । अपि
तु प्रत्येकमेव समुच्चयेन । अतश्च 'पत्नीवतेऽग्नये त्वष्ट्र इदं न मम'-
ति त्यागसिद्धिः । अथ वा मन्त्रे त्वष्टृसाहित्यविशिष्टस्याग्नेरुपा-
दानाद्विधावपि तादृशस्यैव विशेष्यता । तेन पत्नीवते त्वष्टृ-
सहितायाग्नय इति त्यागः । तेन त्वष्टुरप्युपलक्षणम् । सूत्रं
स्पष्टम् ॥

( इति पूर्वपक्षः )

## सू–अतुल्यत्वात्तु नैवं स्यात् ॥ ३–२–३५(सि)

( अथ सिद्धान्तः )

नाग्निना तुल्यस्त्वष्टा । शब्देनपाया तु लक्षितस्वीकारान्वयेन
शीघ्रप्रतीतिविशेष्यत्वेनाग्निना सहभावश्रुत्यन्यथानुपपत्तिकल्पित-
स्वीकारसम्बन्धबललभ्यविशेष्यत्वस्य त्वष्टुस्साम्यानुपपत्तेः ।
न चान्यथानुपपत्तिरपि,

'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।'

इत्यादौ क्रियान्वयाभावेऽपि विद्यमानत्वमात्रेण सहभाव-
दर्शनात् । अतश्च त्वष्टुस्स्वीकारसम्बन्धाभावेऽप्यग्निस्तुत्यर्थं
विद्यमानत्वोपचारेण सहभावसङ्कीर्तनोपपत्तेः न मन्त्रादपि
सहभावप्रतीतिरेकान्तिकी । देवशब्दोऽपि न देवताशब्दादिव
देवतात्वमाह । मनुष्यत्वादिवदिन्द्रादिव्यक्तिजातिवाचित्वात् ।

देवतात्ववाचित्वेऽपि वा यागान्तरगतस्यैव देवतात्वस्याग्निस्तुत्यर्थं सङ्कीर्तनोपपत्तेश्च । तस्मान्न त्वष्टोपलक्षणीयः । स्थायिविचारप्रयोजनं सूत्रं च स्पष्टम् ॥

इत्यनन्तरागाभिंण्यां तृतीयं त्वष्ट्रधिकरणम् ॥ (१४)

---

## अथ चतुर्थं त्रिंशदधिकरणम् ॥ (१५)

## सू—त्रिंशच्च परार्थत्वात ॥ ३–२–३६ ॥

### ( विषयसंशयसङ्गतयः )

तद्यागाङ्गभूतभक्षमन्त्र एव किं त्रयस्त्रिंशद्देवतोपलक्षयितव्या ? नेति विचारः। अत्रापि "एभिरग्ने सरथं याह्यर्वाङ्नाना रथं वो विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वे"ति याज्यामन्त्रवर्णात्तेषां पात्नीवतयागे देवतात्वमस्ति न वेति स्थायिविचारस्य पादाध्यायसङ्गतिः पूर्ववत् । आतिदेशिकी त्वनन्तरा ।

### ( पूर्वपक्षः )

अधिकाशङ्का तु पूर्वं त्वष्टुः पत्नीवच्छन्दसामानाधिकरण्याभावात् प्रत्युत(१) "सहयुक्ते ऽप्रधाने" इत्यनुशासनेन गुणत्वस्यैवावगतेः नाग्नितुल्यत्वमित्युक्तम् । प्रकृते तु यथैवाध्वर्यवमन्त्रे अग्नेः पत्नीवच्छन्दसामानाधिकरण्यं तथाऽग्नीत्प्रयोज्ये याज्यामन्त्रे त्रयस्त्रिंशद्देवानामपीत्यविशेषादुभयोरपि विशेष्यत्वम् ।

न चैवं पात्नीवतमिति विधावग्न्यंशे एकवचनान्तेन विग्रहः उभयांशे त्रयस्त्रिंशदंशे च बहुवचनान्तेनेत्येवं वैरूप्यापत्तिः । अत एव तत्तन्मन्त्रे ऽविशेषेण बहुवचनान्तेनैव विग्रहोपपत्तेः । अत एव तत्तन्मन्त्रे ....

---

१. पा. सू. २–३–१९.

उभयोरपि नैरपेक्ष्येण पत्नीवत्पदसामानाधिकरण्यावगमान्नैरपेक्ष्येणैव विशेष्यत्वावगमेऽपि विधावुभयोस्तात्पर्यग्राहकसहकृतेन पत्नीवच्छब्देन युगपदभिधानादुपादेयसाहित्यस्य विवक्षितत्वादुभयोस्समुच्चयोपपत्तिः ।

वस्तुतस्तु याज्यामन्त्रेऽग्नेः पत्नीवत्पदसामानाधिकरण्याभावेऽपि विशेष्यमात्रस्याग्नेश्श्रवणादेकवाक्योपादानेन त्रयस्त्रिंशद्देवैस्समुच्चयोपपत्तिः ।

अस्तु वा याज्यामन्त्रे उत्तरार्धे हे अग्ने पत्नीवतो देवान्स्वधां सोमाख्यमन्नमनु लक्षीकृत्याऽऽवह मादयस्व चेत्येवमर्थके त्रयस्त्रिंशद्देवानामेव सोमसम्बन्धावगमादग्नेश्च तदावाहनकरणार्थमेव पूर्वार्धे हे अग्ने त्वमेभिस्त्रयस्त्रिंशद्देवैस्सह सरथं समानं रथमधिरुह्य नानारथैर्वा आयाहि, यतस्तेऽश्वा विभवन्तीत्यर्थके आवाहनात् अग्नेर्हविस्सम्बन्धाभावावगमेनाध्वर्यवमन्त्रे च तस्य हविस्सम्बन्धावगमेनाग्नेः पाक्षिकं विशेष्यत्वम् । नत्वेतावता त्रयस्त्रिंशद्देवानां विशेष्यत्वे किञ्चिद्बाधकमस्ति । तेषां याज्यामन्त्रे नित्यमेव हविस्सम्बन्धावगमादिति ।

( सिद्धान्तः )

सा त्वेवं परिहर्तव्या—न त्रयस्त्रिंशद्देवा उपलक्षणीयाः । तेषां याज्यामन्त्रेऽपि त्यागोद्देश्यत्वानवगमेन पत्नीवत्पदविशेष्यत्वायोगात् ।

यद्यपि हि तेषामग्निदत्तेन सोमेन मदश्श्रूयते तथापि यजमानेन तावदग्नय एव दत्त इति गम्यते । अन्यथा अग्निकर्तृकमादनश्रवणानुपपत्तेः । अतश्च यद्यपि तेषां मादनं मुख्यं स्यात्तथापि न यजमानकर्तृकत्यागोद्देश्यत्वावगमः । अग्नेरेव त्वाध्वर्यवमन्त्रवर्णाद्याज्यामन्त्रेऽपि साक्षादग्नीधा आवहनाच्च ।

वस्तुतस्तु माद्नस्याप्यग्निकर्तृकस्याग्निगतस्वामित्वख्यापनार्थमेवोपादानमित्याध्वर्यवमन्त्रवर्णानुसारेण कल्प्यमानत्वादग्नेरेव देवतात्वमविरुद्धम् । तेन न त्रयस्त्रिंशद्देवा उपलक्षणीयाः । स्थायिविचारप्रयोजनं सूत्रं च स्पष्टम् ॥

इत्यन्तरागर्भिण्यां चतुर्थं त्रिंशदधिकरणम् ॥(१९)

## अथ पञ्चममनुवषट्कारदेवतानुपलक्षणाधिकरणम्(१६)

### सू—वषट्कारश्च कर्तृवत् ॥ ३—२—३८ ॥(पू)

### ( विषयसंशयसङ्गतयः )

अनुवषट्कारदेवताभूतोऽग्निर्भक्षमन्त्रे उपलक्षणीयो नवेति विचार्यते । अत्रातिदेशिकी अनन्तरसङ्गतिः ।

### ( पूर्वपक्षः )

तत्रानुवषट्कारयागस्तावन्न ज्योतिष्टोमयागाभ्यासः । अपि तु कर्मान्तरमिस्यविवादम् । 'अग्नये ऽनु यजती'ति तन्त्रसारधृते विधौ प्राप्तयागानुवादेनाग्निदेवताया वषट्कारयागोत्तरत्वस्य चानुशब्दोक्तस्य विधाने वाक्यभेदापत्तेः विशिष्टकर्मविध्यवश्यंभावात् तस्य च "सोमस्याग्ने विहीत्यनुयजती"त्यनेन मन्त्रविधिना मान्त्रवर्णिके सोमाख्यद्रव्ये समर्पिते धर्मान्तराकाङ्क्षायां प्रकरणात् ज्योतिष्टोमाङ्गभूतेऽप्यस्मिन्यागे वैमृधवत्सोमद्रव्यकत्वसादृश्यात्तदीयविध्यन्तप्राप्तेरतिदेशेन यागीयसोमभक्षणे तन्मन्त्रे च प्राप्ते युक्तमेवानैन्द्रपदानोत्तरवत्तदीयदेवताभूताग्न्युपलक्षणम् । तत्रापि "द्विरैन्द्रवायवस्य भक्षयति । द्विर्हि तस्य वषट्करोती"त्यादौ यागभेदेन भक्षणावृत्तिदर्शनादनुवषट्काराङ्गभक्षणस्य पृथगेवानुष्ठानम् । तत्र च तद्देवतोपलक्षणम् ।

अथ वैन्द्रवायवादौ भक्षणावृत्तेर्वाचनिकत्वस्य वक्ष्यमाणत्वादन्यत्र वषट्कारानुवषट्कारयागाङ्गभूतयोस्सोमभक्षयोस्तन्त्रेणानुष्ठानात्तत्रैव देवताद्वयोपलक्षणम् ।

नन्वेतस्यानुवषट्कारयागस्य कर्मान्तरत्वेऽपि पृथक्सोमग्रहणविध्यभावात्कथञ्चिदतिदेशेन तत्प्राप्तिसम्भवेऽपि वा "यद्धविर्वहति तेन शेषेण संयोजयति देवता"मित्यर्थवादेन वषट्कारदेवतायै यद्धविर्वहति तच्छेषेणानुवषट्कारदेवतां संयोजयतीत्यर्थकेन वषट्कारयागीयसोमशेषद्रव्यकत्वप्रतीतेस्तदा चोत्तरार्धादिवत्प्रतिपत्तिलक्षणसत्त्वेनानुवषट्कारयागस्य प्रतिपत्तिकर्मत्वावसायात् ।

यद्वा "सोमस्याग्ने वीहीत्यनुवषट्करोति । तेनैव संस्थितान्सोमान्भक्षयन्ति । स एव सोमस्य स्विष्टकृ"दिति द्रव्यप्रतिपत्त्यर्थस्विष्टकृद्यागरूपत्वसंस्तवादपि च तन्निश्चयावगतेस्सङ्कर्षे च स्विष्टकृद्वत्तन्त्रानुष्ठानमनुवषट्कारयागस्य पूर्वपक्षयित्वा वषट्कारयागानन्तर्यरूपक्रमपृथक्त्वाद्द्विदेवत्येष्वनुवषट्कारानिषेधरूपालिङ्गाच्च वक्ष्यमाणाया आवृत्तेरर्थकर्मत्वे तन्त्रानुष्ठानप्रसङ्गेनानुपपत्तेः प्रतिपत्तिकर्मत्वद्योतकत्वात् प्रतिपत्तिकर्मत्वं तावदविवादम् ।

न च 'तेनैव संस्थितान् सोमान् भक्षयन्ती'त्यत्र सोमस्य भक्षणार्थमवशेषितस्य स्वरूपेण समाप्तिरूपसंस्थानुपपत्तेर्भक्षणस्यापि सोमजन्यत्वेन जन्याभिप्रायेण संस्थावादानुपपत्तेः कार्याभिप्रायेण तद्व्याख्यानस्यावश्यकत्वादनुवषट्कारस्यार्थकर्मत्वाभावे च तेन कार्यसमाप्त्यभिधानानुपपत्तेस्संस्थालिङ्गात्तस्यार्थकर्मत्वमिति केषांचिदुक्तं युक्तम् । अनुवषट्कारस्याप्रतिपत्तिकर्मत्वेन त्यागांशरूपकार्याभिप्रायेण तदुपपत्तेः ।

अतोऽस्य प्रतिपत्तिकर्मत्वात्तस्यार्थकर्मभूतसोमयागविकृति·

त्वानुपपत्तेः कथमप्राप्त एव भक्षे तन्मन्त्रे च देवतोपलक्षण-मिति चेत्—

तत्र प्रतिपत्तिकर्मत्वेऽपि निष्कासावभृथवाजिनयागन्यायेने-तिकर्तव्यताकाङ्क्षायां सोमजन्ययागत्वसादृश्येनातिदेशोपपत्तेः। यथा च वाजिनादियागस्य प्रतिपत्तिकर्मत्वं तथा तत्र तत्र नि-रूपयिष्यामः । अतो युक्तमुपलक्षणमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—सत्यमनुवषट्कारयागः कर्मान्तरम्, वषट्-कारयागाङ्गं प्रतिपत्तिकर्म च, तथापि तस्यानैन्द्रप्रदानेषु ताव-दतिदेशेनैव प्राप्तत्वात्प्रकृतावेवानुपलक्षणेन नोपलक्षणाशङ्का ।

न च प्रकृतावेवानुवषट्कारयागस्यातिदेशप्राप्ते भक्षमन्त्रे देवतोपलक्षणसम्भवः । प्रकृतावैन्द्रयागे होत्रकचमसेष्वनुवषट्-कारस्यैवाभावात् । मध्यतः कारिचमसेषु तत्सत्त्वेऽपि वा तस्य प्रया-जादिवत्कृत्स्नविधानत्वेनेतिकर्तव्यतानपेक्षणादतिदेशानुपपत्तेर्भ-क्षस्य तन्मन्त्रस्य वाऽप्राप्तावूहेन देवतोपक्षलणस्याप्रसक्तेः । यदि तु कथञ्चित् "सोमं भक्षयती"त्यनेन वेदिवार्हिर्न्यायेनाङ्गप्रधा-नसाधारणसोमोद्देशेन भक्षणविधिमङ्गीकृत्यानुवषट्कारयागाङ्ग-भूतस्यापि सोमस्य भक्षणमुपदेशत एव प्राप्तमित्युच्यते तथा-पि तन्मन्त्रस्य "व्रीहीणां मेध" इति वदसामर्थ्येन तत्राविनि-योगादूहप्रसक्तिर्दूरतरैव । अत एवेन्द्रपीताधिकरणसिद्धान्तरी-त्या तद्विनियोगस्तु नैवानिष्टः । अत एवेन्द्रपीताधिकरणप्रयो-जनस्यानुवषट्कारयागोऽपि विषय इत्येवं कथनार्थत्वादस्या-धिकरणस्य पादाध्यायसङ्गतिः । स्थायिविचारप्रयोजनं साधा-रणाङ्गव्यतिरिक्तप्रधानमात्राङ्गानामनुवषट्कारयागाङ्गत्वासिद्धिः ।

सूत्रं त्वनुवषट्कारदेवतापि नोपलक्षणीया । तस्यास्त्वया-

गाङ्गभूतद्रव्यमात्रत्वसत्त्वेऽप्यतिदेशाभावेन प्रकृतकार्यापत्त्यभावात्कर्तृवत् । यथाध्वर्युणा पाने क्रियमाणे पूर्वं होत्रा पीतोऽपि न होतृपीतस्येत्येवमुपलक्ष्यते तद्वदिति व्याख्येयम् ॥

इत्यनन्तरागर्भिण्यां पञ्चमपनुवषट्कारदेवतानुपलक्षणाधिकरणम् ॥ ( १६ )

---

अथानैन्द्राणाममन्त्रकभक्षणाधिकरणम् (१७)

सू—छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥३-२-३८॥

इन्द्रपीताधिकरणाऽऽद्यपूर्वपक्षवादी ऊहपक्षं दूषयति—नानैन्द्रेषूहः । यागैकत्वेन प्रकृतिविकारभावासम्भवात् ।

न चाभ्यासानामेव सोमफलचमसाभ्यासानामिव कथञ्चित्फलवत्त्वेनाङ्गग्राहित्वोपपत्तेः प्रकृतिविकारभावोपपत्तिः । तद्वदिह नित्यानित्यसंयोगविरोधादेस्समानविध्यभावहेतोरभावेन प्रकरणात्सर्वाभ्यासानां समानविधानत्वोपपत्तेः ।

न चेहापि मानग्रहणमन्त्रयोरिन्द्रप्रदानमात्रविषयत्वात्तदनुरोधेन च मानग्रहणयोस्तत्संस्कार्यस्य सोमस्य तत्संस्काराणां चाभिषवादीनां तत्संवलितानां च दीक्षणीयादीनामप्यैन्द्रप्रदानमात्रविषत्वावगतेस्समानविध्यभावोपपत्तिरिति वाच्यम् । अङ्गानुरोधेन प्रधानानां स्वस्वोद्देश्यसङ्कोचकत्वानुपपत्तेः ।

न चाग्निविध्यनुरोधेन क्रतुविध्यधिकारसङ्कोचवत्तदुपपत्तिः। यथाविनियोगमधिकारस्य षष्ठे वक्ष्यमाणत्वादङ्गानुरोधेनाधिकारिसङ्कोचेऽपि तादितरश्रुतस्वोद्देश्यसङ्कोचानुपपत्तेः ।

किञ्चाग्निविद्ययोराधानाध्ययनविध्यनुनिष्पन्नयोः क्रतुविध्यप्रयुक्तत्वेन स्वतस्सिद्धयोरेवोपजीवनात् परप्रयुक्तोपजीविनां

च तदभावे स्वानुष्ठानाभावस्य प्रयुक्तिशक्तिकल्पनाभावेन वि-धिलाघवापादकस्य परप्रयुक्तपूर्वपदार्थानन्तर्याभावे काम्य-सामिधेन्यनुष्ठानाभावस्येव सुप्रसिद्धत्वाद्युक्तमग्निविध्योः क्रतुविध्यधिकारिसङ्कोचकत्वम्। प्रकृते तु मानग्रहणमन्त्रयोस्तदुद्देश्यानां च परप्रयुक्तत्वाभावेन क्रतुविधिप्रयुक्तत्वकल्पनावश्यम्भावात्सर्वाऽभ्यासानां च प्रकरणाविशेषेणाङ्गविनियोगप्रयोगविधिकल्पकत्वोपपत्तेर्न सङ्कोचे किञ्चिन्नियामकमस्ति। अत एव मानग्रहणमन्त्रयोर्लिङ्गाद् 'व्रीहीणां मेध'इतिवदैन्द्रप्रदानमात्रविषयत्वेऽपि मानादीनां पुरोडाशप्रतिष्ठापनस्येव सर्वविषयत्वात्तदीयमानग्रहणयोर्न समन्त्रकत्वम्।

यद्यपि च मानादीनां सर्वाऽभ्यासीयसोमे सकृदेवानुष्ठानान्न तावता कश्चिदनुष्ठानोपयोगः, तथाऽप्यैन्द्रप्रदानोत्तरं सर्वसोमनाशे प्रदानान्तरार्थे सोमान्तरे मीयमाने गृह्यमाणे वाऽमन्त्रकत्वासिद्धिः।

वस्तुतस्तु विधिवाक्ये वसुमत्त्वगुणस्याश्रवणात् 'इन्द्राय वसुमते' इति मन्त्रे तत्प्रतिपादनस्य व्यर्थत्वापत्तेः वसुमत्पदमिन्द्रातिरिक्तप्रकृतदेवतामात्रपरम्। अतश्च मन्त्रावपि सर्वप्रदानविषयावेव।

यत्तु मूले सुब्रह्मण्यानिगदस्थेन्द्रपदस्येव प्रकृतदेवतोपापलक्षणार्थत्वमिन्द्रपदस्येत्येवं पक्षान्तरमुपन्यस्तम्, तत् सदृष्टान्तं लक्षणायां प्रमाणाभावादुपेक्षितम्। सुब्रह्मण्यानिगदोऽपि हि लिङ्गादिन्द्रप्रदानाङ्गमेव। अग्निष्टुत्या'ग्नेयी सुब्रह्मण्ये'ति तु प्राकृतस्येन्द्राभ्यासस्य "आग्नेया ग्रहा भवन्ती"ति वचनेनाग्निदेवत्यत्वान्न्यायेनैवोहप्राप्तेरनुवादः। प्रकारान्तरं च नवमे वक्ष्यते। ततिसद्धं नेन्द्रप्रदानमात्रविषयत्वं धर्माणामिति।

एवं च 'सोमेन यजेते'त्यादौ न सामानाधिकरण्येन वैशिष्ट्यम् । अपि त्ववच्छेदकावच्छेदेनैवेत्यपि सुलभम् । सोमपदानुवादशङ्का तु सक्तुविनियोगविधिकल्पनाव्यावृत्तिफलकतयापि विध्युपपत्तावनुवादत्वे वैयर्थ्यापत्तेः पशुसोमाधिकरण एव निरस्ता । अतः प्रकृतिविकृतिभावाभावाभ्यामोहासिद्धिः ।

यत्तु "अनुष्टुप्छन्दस इति भक्षमन्त्रं नमती"त्यनुवादलिङ्गं तदप्राप्तस्यैवानुष्टुपछन्दःपदविशिष्टस्योहस्य विधानोपपत्तेरसाधकम् । यथापि हि जगतीच्छन्दःपदे ऊहस्याप्राप्तत्वाद्विशिष्टविधिरावश्यक एव । सामान्यतो यत्र कुत्रचिदूहप्राप्तिस्तु न विधिलाघवापादिकेत्यतन्त्रा सा ।

मुख्यं तु नोहः, धर्माणां सर्वाभ्यासगामित्वेन प्रकृतिविकारभावासम्भवात् । यस्तु पूर्वछन्दःप्रतिषेधेन छन्दोऽन्तरविधिस्सयोऽप्युपपन्न इति व्याख्येयम् ॥

इति अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ (१७)

## अथ द्वितीयान्तरागार्भिण्यामैन्द्राग्नभक्षणे मन्त्राभावाधिकरणम् । (१८)

### सू–ऐन्द्राग्ने तु लिङ्गभवात् स्यात ॥३–२–३९॥

### ( विषयसंशयसङ्गतयः )

इहाद्यपूर्वपक्षवाद्युक्तस्यैवानैन्द्रेष्वमन्त्रकत्वस्य कोष्ठशोधनिकार्थं विचार्यते । किं यत्रान्यसहित इन्द्रो देवता, यथेन्द्राग्न्यादौ तत्र इन्द्रपीतस्येति मन्त्रो भवत्युत नेति । पादाध्यायानन्तरसङ्गतयस्स्पष्टाः ।

( पूर्वपक्षः )

तत्र यद्यपि चतुर्थीकरणाधिकरणन्यायेनैन्द्राग्न्योर्व्यास-ज्यवृत्तिदेवतात्वान्नेन्द्रपीतपदेनेन्द्राय त्यक्त इति व्युत्पत्त्ये-न्द्रो देवतात्वेन शक्यो व्यपदेष्टुं तथापि पीतशब्दस्य त्यक्त-त्वलक्षणायां प्रमाणाभावाच्चतुर्थीसमासस्याननुशिष्टत्वेनान्याय्य-त्वात्कथञ्चिदनुशासनेऽपि वा हुताहुतसमुदायस्यैव पूर्वं त्यक्त-स्य होमेन नाशादहुतस्य च भक्ष्यमाणस्यात्यक्तत्वेनेन्द्रपीतपद-व्यपदेशानुपपत्तेः पीतत्वमेव पीतपदेनोच्यते । पानस्य च रसा-स्वादनरूपस्य देवतानिष्ठस्य व्यासज्य त्यक्तेऽपि सोमेऽवयवशः प्रत्येकमुपपत्तेः डित्थमातृवदेवेन्द्रपीतपदेन भक्ष्यमाणार्थस्य बुद्ध्या निष्कृष्टस्य व्यपदेशोपपत्तिः ।

वस्तुतस्तु रसास्वादनरूपस्य पानस्य नवमे निषेत्स्यमान-त्वात्कथञ्चिदङ्गीकारेऽपि वा त्यक्तत्ववत्समुदायस्यैव तत्सम्भवेना-हुतमात्रे तद्व्यपदेशस्यौपचारिकत्वतौल्यापत्तेः न पीतत्वं पीतपदा-र्थः । नाप्याहवनीयमुखप्रक्षेपरूपमौपचारिकं पानं लक्षणया पीतपदार्थः । तथात्वेऽपि हुतस्यैव पीतपदेन व्यपदेशापत्तेः तत्सम्ब-न्धिनो भक्ष्यमाणस्याहुतस्येन्द्रपीतपदेनोपलक्षणार्थम् । इन्द्रपीत-पदे धातूपपदप्रत्ययसमुदाये लक्षणापत्तेः । अतोऽत्र पीतपदेन देवस्वपदालम्बनतया पात्नीवताद्यधिकरणोपपादितो देवतास्वी-कार एव लक्षणया प्रतिपाद्यते ।

एवं चेन्द्रेण स्वीकृत इत्येवं तृतीयासमासेऽपि "कर्तृकरणे कृताबहुल"मित्येव लक्षणानुगतो भविष्यति । स्वीकारस्य च ध-र्मिग्राहकप्रमाणेनावयवावयविसाधारण्येनैव कल्पनाच्च हुतेशप्र-काशने कश्चिदुपचारः ।

लोके च व्यासज्य त्यागेऽपि प्रत्येकमेव सम्प्रदानेन स्वी-

कारदर्शनात् स्वीकारस्य प्रतिदेवताधिष्ठानं भेदेन कल्पनोपपत्तेः डित्थमातृवद्व्यासज्य त्यागेऽर्धस्येन्द्रपीतशब्देन व्यपदेशोपपत्तिः। चतुर्थीकरणे तु तद्धितेन देवतात्वस्यैवोक्तत्वान्न व्यासज्यवृत्तिदेवताकस्य ग्रहणमिति वैषम्यादपौनरुक्त्यं च। सूत्रं स्पष्टम् ॥

( इति पूर्वः पक्षः )

सू—एकस्मिन्वा देवतान्तराद्विभागवत् ॥३–२–४०॥

( अथ सिद्धान्तः )

नान्यसहितेन्द्रदेवताके मन्त्रः। त्वदुक्तरीत्यैव रसास्वादनरूपस्याग्निमुखप्रक्षेपरूपस्य वा पानस्येन्द्रपीतपदेनानभिधानात्। स्वीकृतत्वं तु पीतपदेन लक्ष्यत इति यद्यपि शक्यते वक्तुं तथापि स्वीकारस्य व्यासज्यवृत्तिदेवतास्थले व्यासक्तदेवतानिरूपितस्यैकस्यैव लाघवेन कल्पनोपपत्तौ तन्नानात्वकल्पने प्रमाणाभावाच्चतुर्थीकरणरूपाद्विभागवदेव नैकेन व्यपदेशोपपत्तिः। अत एव सूत्रे देवतान्तराद्देवतान्तरनिरूपितस्वीकारादित्येवं व्याख्येयम्।

यत्तु वार्तिकादौ यथाश्रुतसूत्रस्वारस्यात्त्याग एव यजमानव्यापारः पीतपदेन लक्ष्यत इत्यङ्गीकृत्य सिद्धान्त उपपादितः, स स्वीकारमनङ्गीकृत्यापि सिद्धान्तश्शक्यते वक्तुमिति प्रौढिमदर्शनार्थम्।

वस्तुतस्तु स्वीकाराङ्गीकरणावश्यकत्वस्यापि पात्नीवताधिकरणादावुपपादनात्त्यागस्य च हुताहुतसमुदायविषयत्वेनाहुतमात्रविषयत्वाभावादहुतस्य धातूपपदप्रत्ययसमुदायात्मकेनेन्द्रपीतपदेन पुनरपि लक्षणापत्तेः स्वीकारस्य तु धर्मिग्राहकप्रमाणेनावयवावयविवृत्तित्वेनैव कल्पनाल्लाघवेन पाधातुना स्वीकारमात्रं लक्षयित्वा सिद्धान्त उपपादनीयः।

अमन्त्रकत्वपूर्वपक्षस्य चास्थायित्वेन स्थायिविचारप्रयोजनम्-ऐन्द्राग्नेऽपि सवनविशेषणतया भक्षमन्त्रे प्रयोज्ये तदर्थानुसन्धानवेलायां पीतपदेन व्यासज्यवृत्तिदेवतानिरूपित एकस्वीकारत्वान्न तस्यानुसन्धानं सिद्धान्ते । पूर्वपक्षे भिन्नत्वात्तद्भवसेवेति द्रष्टव्यम् । सूत्रं व्याख्यातम् ॥

इति द्वितीयान्तरागर्भिण्यां प्रथमपैन्द्राग्नभक्षे मन्त्राभावाधिकरणम् । ( १८ )

---

## अथ भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगाधिकरणम् ॥ (१९)

## सू—छन्दश्च देवतावत् ॥३—२—४१॥

### ( विषयसंशयसङ्गतयः )

भक्षमन्त्र एव 'गायत्रछन्दस' इत्यादि श्रुतम् । तच्च गायत्रं छन्दो यस्येति व्युत्पत्त्यानन्तरपदोपात्ततत्तत्सोमविशेषणं, न तु पूर्वपदोपात्तसवनविशेषणम् । सिद्धान्तवदविमृष्टविधेयांशतापत्तेरित्यविवादम् । इदं तु विचार्यते—किमेतत्पदसामर्थ्यानुरोधेन केवलगायत्रछन्दस्केन्द्रप्रदान एव भक्षमन्त्रः । किं वान्यच्छन्दोयुक्तगायत्रछन्दस्केऽपीति । पादाध्यायसङ्गती स्पष्टे । इन्द्रपीतपदेनेव केवलगायत्रच्छन्दस्क एव प्रसक्तस्यापवादादनन्तरा ।

यद्यपि चायं विचारः इन्द्रपीताधिकरणसिद्धान्ते सवनविशेषणत्वे स्थितेऽपि केवलगायत्रच्छन्दस्कप्रदानवत्प्रातस्सवनसन्निधिसोमभक्षण एवायं मन्त्र उतान्यसहितेऽपीत्येव शक्यते कर्तुं तथापि पूर्वाधिकरणापवादतयेहापि सङ्गतिसत्त्वान्नानन्तरा कृत्वा चिन्तारूपेणापि विचारे कश्चिद्विरोधः ।

वस्तुतस्तु सवनविशेषणत्वे गायत्रादिपदानां "गायत्रं प्रातस्सवनं, त्रैष्टुभं माध्यन्दिनं सवनं, जागतं तृतीयसवनमित्याद्यर्थवादान्तरे तत्तत्सवनसामानाधिकरण्यदर्शनेन गौण्या वृत्त्या तत्तत्सवनप्रतिपादकत्वाद्गायत्रच्छन्दःपदे कर्मधारयेणैव तत्सवनविशेषणत्वोपपत्तेर्नोक्तविचारप्रयोजनमस्तीतीहैव सङ्गतिः ।

( पूर्वपक्षः )

तत्र पूर्वाधिकरणवदेव गायत्रच्छन्दःपदस्यान्यसापेक्षगायत्रच्छन्दस्कप्रदानविषयत्वे बहुव्रीहिसमासभङ्गभयेन केवलगायत्रच्छन्दस्कप्रदानसम्बन्धिसोमपरत्वम् ।

न च ज्योतिष्टोमे तादृशप्रदानाभावः । तत्र तदभावेऽपि यत्र बृहस्पतिसवादौ 'गायत्रमेतदहर्भवती'त्यादिश्रुतेः केवलगायत्रादिच्छन्दस्कता तत्रास्योत्कर्षोपपत्तेः ।

न च सामान्यसम्बन्धबोधकप्रमाणाभावः । लौकिकसोमे केवलगायत्रच्छन्दस्कत्वस्य प्रातस्सवनसम्बन्धित्वस्येन्द्रपीतत्वादेश्चासम्भवेन तद्व्यावृत्त्या पारिशेष्यादेव विशेषणसामर्थ्याद्बृहस्पतिसवीयसोमप्रतीत्युपपत्तेस्तत्प्रयोजनाभावात् ।

यत्त्वत्र कैश्चिद्भक्षानुवाकसमाख्यया सामान्यसम्बन्ध इत्युक्तम्, तल्लोकेऽपि भक्षसद्भावादुपेक्षितम् । तस्मात् बृहस्पतिसवीयैन्द्रप्रदान एवायं मन्त्रः । न प्राकृते । सूत्रं स्पष्टम् ॥

( इति पूर्वपक्षः )

## सू–सर्वेषु वाऽभावादेकच्छन्दसः ॥३–२–४२॥ (सि)

( अथ सिद्धान्तः )

उपदेशातिदेशाभ्यां सर्वेष्वेवायं मन्त्रः । प्रकृतावेवायोगव्यावृत्तिमात्रप्रकाशनेन निवेशोपपत्तेः ।

न चैवं छन्दोऽन्तराणामपि सत्त्वेन तत्सापक्षत्वात्समासानु-
-पपत्तिः । प्रकृतौ केवलगायत्रच्छन्दस्कप्रदानाभावेन नित्यसापेक्ष-
त्वात्समासोपपत्तेः ।

न च प्रकृतौ तदभावेऽपि बृहस्पतिसवे तत्सत्त्वान्न नित्य-
सापेक्षता । (१)यस्तस्तम्भे''त्यादिछन्दोऽन्तराणां सूक्तमुखीये
विनियोगेन तदभावात् ।

न च सोमसाध्यप्रदाने गायत्रच्छन्दस्कत्वस्य साक्षात्सम्ब-
न्धेन सम्भवे स्तोत्रादिद्वारकपरम्परासम्बन्धेनान्याय्यत्वात्
बृहस्पतिसवे च सत्यपि परम्परासम्बन्धेन छन्दोऽन्तरे साक्षात्प्र-
दाने तदभावात्केवलगायत्रच्छन्दस्कत्वसत्त्वेनोत्कर्षोपपत्तिः ।
गायत्रं छन्दो यस्येति बहुव्रीहिणा साक्षात्परम्परासम्बन्धसाधा-
रण्येन गायत्रच्छन्दस्कत्वाभिधानात् प्रकृतौ च प्रकरणाख्य-
तात्पर्यग्राहकसत्त्वेन परम्परासम्बन्धेनापि निवेशोपपत्तावुत्कर्ष-
कल्पनानुपपत्तेः ।

न चात्रश्यं परम्परासम्बन्धेन ग्रहणेऽपि सापेक्षता । सत्य-
पि स्तोत्रादौ छन्दोऽन्तरे सर्वच्छन्दसां व्यासज्यसाधनत्वाभावेन
स्वस्वात्रान्तरकार्ये निरपेक्षत्वात् । अतो युक्तः प्राकृत एवैन्द्र-
प्रदाने लिङ्गाद्विनियोगः । इदं च तदीययाज्यायां गायत्रच्छन्द-
स्कता नास्तीति कृत्वा चिन्तयोक्तम् ।

यदा तु प्रातस्सवनस्येन्द्रप्रदान एव ज्योतिष्टोमे गायत्र-
च्छन्दस्कयाज्याम्नानं प्रसिद्धं तदोत्कर्षपूर्वपक्षासम्भवान्नैवेदम-
धिकरणम् ।

अथवा गायत्रच्छन्दःपदं सवनविशेषणमेवाङ्गीकृत्यापवा-
दलिप्सया चान्तरैव किं केवलमेव यस्मिन्सवने गायत्रं

१. यस्तस्तम्भ सहसा विज्मो अन्तान् बृहस्पतिस्त्रिषधस्थो
रवेण । तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥
(ऋ. सं.४-५-६-१.) इति त्रिष्टुप्छन्दस्कानां ऋचामाम्नानादित्यर्थः ।

-छन्दः तत्रायं मन्त्रः ? उतान्यसहितच्छन्दस्केऽपीति सन्दिग्ध समासबलान्मान्त्रवर्णिकताद्दशकर्मान्तरविधिकल्पनयापि केवल-गायत्रच्छन्दस्कप्रातस्सवन एवायं मन्त्र इति पूर्वपक्षिते समा-सस्य पूर्वोक्तरीत्यैवोपपत्तौ विध्यन्तरकल्पने प्रमाणाभावादन्य-सहितगायत्रच्छन्दस्केऽपीति सिद्धान्तः कार्यः । तदा चेन्द्रपी-तपदमपि वस्तुतस्सवनविशेषणत्वादुदाहरणम् । सूत्रं स्पष्टम् ॥

वृत्तमधिकरणम् ॥

( अथेन्द्रपीताधिकरणसिद्धान्तः )

## सू०—सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वा-त्सवनाधिकारो हि ॥ ३—२—४३ ॥

इदानीमिन्द्रपीताधिकरणसिद्धान्तोऽभिधीयते——ऐन्द्रानैन्द्र-प्रदानसाधारण्येन सर्वेषामुपदेशेनैव मन्त्रः । इन्द्रपीतपदस्य बहुव्रीह्यङ्गीकारेण सवनविशेषणत्वात् ।

तथाहि-यद्यपि तत्पुरुषो लक्षणाद्वयापादकबहुव्रीह्यपेक्षया लघुभूतः तथापीह तत्पुरुषोऽपि लक्षणाद्वयापादकत्वादविशिष्टः । तत्पुरुषे हि पूर्वपदे तावदेका लक्षणेत्यविवादम् । अपरा च पीतपदे मुख्यपानासम्भवात् सक्तत्वलक्षणा ।

यद्यपि चेयं बहुव्रीहावपि तुल्या, तथापि तन्मते त्यागविषय-स्य हुताहुतसमुदायस्यैव पीतपदेनोक्तत्वादिन्द्राय त्यक्तसमुदायो यस्मिन् सवने तस्य प्रातस्सवनस्य सम्बन्धी यः पात्रस्थो यत्कि-ञ्चिदेवत्यस्सोमस्तस्यावयवं भक्षयामीत्येवमर्थो नानुपपन्नः । तत्पु-रुषे तु ते इत्यादि पुरोवर्तिनिर्देशस्य पात्रस्थसोमविषयत्वात्तद्वि-शेषणीभूतेनेन्द्रपीतपदेन सक्तसमुदायावयवस्य हुतावशिष्टस्य पुन-रपि लक्षणापत्तिः । यद्यपि(१) "चैन्द्राग्ने तु लिङ्गभावादि"त्यधिक-

१. पू. मी.३-३-३९. ।

रणोक्तरीत्या स्वीकार एव पाधातुना लक्ष्यते, तस्य चावयवावयविसाधारणत्वात् भक्ष्यमाणावयनिष्ठस्यैव स्वीकारस्य पाधातुना लक्षणात्तत्पुरुषेऽपि नोक्तदोषापत्तिः, तथाऽप्यवयवगतस्य स्वीकारस्यावयविस्वीकारोपस्थितिसापेक्षत्वेन विलम्बोपस्थितिकत्वाच्च बहुव्रीहितुल्यत्वमस्त्येव ।

न चैवमपि बहुव्रीहिनियामकाभावः । प्रकरणविशेषस्यैव तत्वात् गायत्रछन्दआदिपदेन गायत्रं प्रातस्सवनमित्यादितात्पर्यग्राहकानुगृहीतसवनैकविशेषणत्वेन प्रायपाठाच्च ।

एतेन प्रातस्सवनादिपदसामानाधिकरण्येऽपि प्रातस्सूयत इति व्युत्पत्त्या प्रातस्सवनादिपदस्यैव सोमविशेषणत्वमित्यपास्तम् । उभयोपपत्तौ प्रकरणविशेषस्यैव नियामकत्वात्, प्रातस्सवनादिपदानां तु रूढ्या यज्ञभागवचनत्वेनावयवव्युत्पत्तिकल्पनायोगाच्च । न चैवमपि बहुव्रीहेस्समानाधिकरणत्वाभावादननुशिष्टत्वम् "सप्तमी विशेषणे बहुव्रीहा"विति ज्ञापकस्य विभक्तिमात्रे बहुव्रीहिद्योतकत्वेनेन्द्रेण यस्मिन्सवने स्वीकृत इत्येवं व्यधिकरणबहुव्रीहेरप्यनुशिष्टत्वात् ।

वस्तुतस्तु विभक्तिमात्रे द्योतकत्वे 'समानाधिकरणानां बहुव्रीहिरिष्यत' इति कात्यायनवचनस्य निर्विषयत्वापत्तेः सप्तमीविषय एव तस्य द्योतकता । प्रकृते त्वर्शआद्यच्प्रत्ययं मत्वर्थीयं भावव्युत्पन्नं पीतशब्दोपरि कृत्वा "पीतप्रतिबद्धवत्सा"मित्यादिवत् पीतमस्यास्तीति पीतः इन्द्रः पीतो यस्मिन्सवन इति व्युत्पत्त्या समानाधिकरण एव बहुव्रीहिरिति न कश्चिद्दोषः । ततश्च वसुमद्गणस्य गायत्रच्छन्दस इन्द्रपीतस्येत्यादित्रिकत्रयं क्रमेण प्रातस्सवनादिविशेषणम्, तच्च सोमस्य, स चावयवद्वारा भक्षणस्य,—उक्तविशेषणयुक्तस्य सवनस्य सम्बन्धी यस्सोमस्तस्यावयवं भक्षयामीति । ततश्च

युक्तस्सर्वेष्वेवानैन्द्रेष्वैन्द्रेषु चाविकारेणैव भक्षमन्त्रः ।

अस्मिंश्च पक्षे वसुमद्गणादित्रिकत्रयस्य प्रातस्सवनादित्रये क्रमेणान्वयात्सूक्तवाकवद्विभज्य विनियोगोऽपि सिद्धो भवति ॥ प्रयोजनं तत्तत्पक्षोपपादनेनैव स्फुटम् ॥

सूत्रं सर्वेषां त्वैकमन्त्र्यं, यतोऽयं सवनाधिकारः तत्र हेतुः पानस्य भाक्तत्वादिति व्याख्येयम् ॥

यदि तु पीतशब्दस्य पूर्वनिपातापत्तिरस्मिन्पक्षे विभाव्यते तदास्त्विन्द्रेण पीतमस्मिन्निति बहुव्रीहिः । तत्रापि तु निष्ठान्तत्वेन पूर्वनिपातशङ्कायां तु तत्पुरुष एवायं लक्षणया सवनपरः । सोमपरत्वे तैत्तिरीयशाखायामिन्द्रपीतपदस्य प्रातस्सवनादिभेदेन पृथक् पाठवैयर्थ्यापत्तेः । लिङ्गादेवेन्द्रपदाने प्रातस्सवनादिपदानां विभागोपपत्तेः । अतस्तस्य लक्षणया सवनपरत्वाद्युक्तमेव सर्वत्रैकमन्त्र्यम् । विभागोऽपि च तैत्तिरीयशाखाक्रमेणैव बोध्यः । याज्ञिकास्तुहमेवामनन्ति ॥

( इतीन्द्रपीताधिकरणम् )

मीमांसाम्बुनिधिं प्रमथ्य सुदृढैन्यायौघैर्निर्जरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम् ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः ॥

श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभाख्या शेषाध्याये द्वितीयाङ्घ्रेः ।

इति श्रीरुद्रदेवसूनुखण्डदेवकृतौ मीमांसाकौस्तुभे तृतीयाध्यायस्य द्वितीयः पादः ॥

श्रीः ।

# मीमांसाकौस्तुभे

## तृतीयाध्यायस्य तृतीयः पादः ॥

### प्रथमं उच्चैस्त्वादीनां वेदधर्मताधिकरणम् । (१)

( उपक्रमाधिकरणम् )

### सू—श्रुतेर्जाताधिकारस्स्यात् ॥३—३—१॥ (पू)

( विषयसंशयौ )

ज्योतिष्टोमे—(१)प्रजापतिरकामयत प्रजास्सृजेयेति स तपोऽतप्यत, तस्मात्तेपानात्त्रयो देवा अजायन्ताग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेद" इत्युपक्रम्य "उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ना, उच्चैर्निगदेनेति श्रुतम् । तत्र किमृचा ऋङ्मन्त्रेण यत् क्रियते तदुच्चैरित्यर्थाङ्गीकारादुच्चैष्ट्वादिकमर्थप्रकाशनादिरूपऋगादिमन्त्रकार्याङ्गत्वेन विनियुज्यते ? किं वा ऋचा ऋग्वेदेनेत्यर्थाङ्गीकारात्तत्तद्वेदविहितकर्माङ्गत्वेनेति विचार्यते ।

( सङ्गतिः )

अत्र च लिङ्गकल्पकप्रमाणगम्यविनियोगोपयोगिचिन्तनं पादार्थः । तानि च वाक्यप्रकरणस्थानसमाख्यारूपाणि । न तु श्रुतिलिङ्गे अपि । यथा चैतत्तथा बलाबलाधिकरणे वक्ष्यते ।

१. ऐ. ब्रा.५-५-६. ।

## ( वाक्यलक्षणम् )

तत्र वाक्यं नामाङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरपदार्थकल्पनानुकूलः श्रुतपदसान्निधिः । यथा 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' 'प्रयाजशेषेण हवींष्यभिघारयती'त्यादौ । अस्ति ह्यत्राङ्गत्वघटकीभूतकर्मत्वकरणत्वादिरूपपदार्थकल्पनानुकूलत्वं श्रुतपदसांनिधेः । कल्पनाशब्देन च संसर्गविधालक्षणासाधारण्येन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितम् । तेन न श्रुतावतिव्याप्तिः । नापि संसर्गविधया भासमानकरणताके 'धेनुर्दक्षिणे'त्यादावव्याप्तिः । 'प्रयाजशेषणे'त्यादौ तु तृतीययैव कर्मत्वस्य धातुना च करणत्वस्य लक्षणात् कल्पना स्फुटैव । श्रुतपदसंनिधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेः योग्यतारूपलिङ्गानुमापकत्वम् । श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण कर्मत्वादिवाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि च श्रुतस्य पदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनाच्छ्रुतिकल्पकत्वोपपत्तिः ।

वस्तुतस्तु एतादृशश्रुतिकल्पनस्य संसर्गविधया भासमानकरणत्वस्थले वक्तुमशक्यत्वाच्छ्रुतितो दौर्बल्यानापत्तेः धेनुदक्षिणापदयोश्च सुबन्तयोः परस्परान्वयस्याव्युत्पन्नत्वादावश्यकभावनान्वयस्य च प्रथमान्तयोर्धेनुदक्षिणापदयोरसंभवादवश्यं धेनुप्रातिपदिकोत्तरप्रथमया करणत्वं, दक्षिणापदेन च तत्कार्यत्वाचिकर्मत्वं लक्षयित्वान्वयस्य वाच्यत्वाल्लक्षणे कल्पनाशब्देन लक्षणाजन्योपस्थितिरेवाभिप्रेता । 'उच्चै'रित्यादौ निपातादिस्थलेऽपि लुप्तविभक्त्यर्थस्य प्रातिपदिकेनैव लक्षणान्नाव्याप्तिः ।

प्रकरणादिस्वरूपं तु तत्र तत्र निरूपयिष्यते । तदिह लिङ्गकल्पकं वाक्यमुच्चैष्ट्वादीनां विनियोजकम् ।

यद्यपि च तत्पूर्वपक्षे सिद्धान्ते च तुल्यं तथापि तदङ्गत्वविनियोगोपयोग्युद्देश्यतावच्छेदकविचारणात्पादाध्यायसङ्गतिः ।

अत एव पक्षद्वयेऽपि 'ऋचा क्रियत' इत्यस्यैवोद्देश्यसमर्पकता । न तु सिद्धान्तेऽपि वेदशब्दस्य । सा तु किं ऋगादिपदवाच्यऋगादिमन्त्राणामेवोद्देश्यघटकत्वेन ? उत ऋक्पदलक्ष्यवेदस्योद्देश्यवाचकत्वेनेत्येतावत्संदिग्धम् । अनन्तरा तु श्रुतिमात्रकल्पकप्रमाणगम्यविनियोगे विचारिते ऽधुनोभयकल्पकप्रमाणगम्यविनियोगविचारावसरात् स्पष्टा ।

( पूर्वपक्षः )

तत्र विधेयाया उच्चैष्ट्वादिभावनायास्संनिहितानन्यपरे उद्देश्य(१)समर्पके संभवति न तावदर्थवादस्थमेव वेदपदमुद्देश्यसमर्पकमिति वक्तुं शक्यम् ।

अथ तस्य तत्प्रतिपादकत्वासंभवेऽपि लक्षणातात्पर्यग्राहकत्वाङ्गीकारादृगादिपदमेव वेदलक्षणयोद्देश्यघटकसमर्पकमित्युच्यते, ततः श्रौतार्थस्यैव ऋगादेरुद्देश्यघटकत्वोपपत्तेर्न तावत्तदनुपपत्तिर्लक्षणाबीजम् । नाप्यार्थवादिकवेदपदसमभिव्याहारानुपपत्तिः । ऋच्यपि वेदत्वस्य पर्याप्तत्वेन व्याप्यधर्मावच्छिन्नसम्बन्धिनोऽपि विधेयस्य व्यापकधर्मवत्सम्बन्धित्वेन स्तुत्युपपत्तेः । नहि वेदत्वं मन्त्रब्राह्मणात्मके ग्रन्थे पर्याप्तं, द्वित्रिवाक्याध्यायिनि शूद्रे वेदाध्ययनप्रयुक्तदोषानापत्तिप्रसङ्गात् । अस्तु वा तत्तथा, तथाप्यवयवसम्बन्धिनोऽपि विधेयस्य परम्परयाऽवयविसम्बन्धस्यापि सत्त्वादपां स्तुत्या वेतसावकास्तुतिवद्वेदपदेन स्तुत्युपपत्तिः । अस्तु वा वेदपदऋगादिपदयोः परस्परविरुद्धार्थकत्वं तथापि न वेदपदानुरोधेन ऋगादिपदे लक्षणा । अपि तु तदनु-

१ प्रतिपादक ।

-रोधेन, वेदपद एव वेदैकदेशस्य, अर्थवादस्य स्वभावत एव लक्षणाभाजनतया तत्रैव लक्षणौचित्यात् ।

न चार्थवादगतस्याप्युपक्रमस्थत्वेनासञ्जातविरोधित्वात्प्राबल्यमिति वाच्यम् । असञ्जातविरोधित्वं हूयुदस्यप्रतिपादकत्वे नियामकमुच्यते ? ऋगादिपदलक्षणातात्पर्यग्राहकत्वे वा ? नाद्यः; वेदपदमात्रश्रवणेन विधेयाचेष्टादिभावनापदश्रवणं विना तत्प्रतियोगिकोद्देश्यत्वनिर्णयायोगात्तदुपस्थितिवेलायां विरोधिनोऽपि ऋगादिपदस्योपस्थितत्वेन निर्णयवेलायामसञ्जातविरोधित्वाभावात् । अत एव विधेयोपस्थितिवेलायामेवोपस्थितस्य ऋगादिपदवाच्यस्यैवार्थस्योद्देश्यघटकत्वोपपत्तौ तस्य लक्षणातात्पर्यग्राहकत्वमिति द्वितीयस्त्वनाशङ्क्य एव ।

अत एव यत्र प्रथमोपस्थितिजन्यनिर्णयोत्तरमेवोत्तरोपस्थितिस्तत्रैव प्रथमस्यासञ्जातविरोधित्वात्प्राबल्यमिति (१)"मुख्यं वा पूर्वचोदना"दित्यत्रैव वक्ष्यते, नत्वत्र । अस्तु वा तत्, तथापि नेहोपक्रमस्य प्राबल्यम्, परत्वेनापच्छेदन्यायेनोपसंहारस्यैव प्राबल्योपपत्तेः ।

न च तद्वदिहार्थवादसापेक्षत्वेन पूर्वनिरपेक्षत्वाभावात्तन्न्यायाप्रवृत्तिः । विधेः स्तुत्यंशे तदपेक्षायामपि वाच्यार्थपरत्वांशे तदपेक्षाभावात् । अतश्च यथैव 'नेदं रजतं' 'न कलञ्जं भक्षये'दित्यादौ निषेध्यप्राप्त्यर्थं भ्रमरागाद्यपेक्षत्वेऽपि तद्गतप्रामाण्याद्यनपेक्षत्वात्परस्यैव प्राबल्यं तद्वदिहापीति न कश्चिद्विरोधः ।

मास्तु वेहाप्यपच्छेदन्यायप्रवृत्तिः, तथाप्युपसंहारस्य विध्यन्तर्गतत्वाद्विधेश्चार्थवादापेक्षया प्राधान्यात्प्राबल्योपपत्तिः । नहि प्रधानमप्युपसंहारस्थं दुर्बलम्, अङ्गगुणविरोधन्यायस्य

---

१. पू. मी. १२-२-२३.

'मुख्यं वा पूर्वचोदना'दिति न्यायापवादकत्वात् । अन्यथा "य इष्ट्या पशुना सोमेन" यत्रोपसंहारस्थस्यापि सोमयागस्य प्रधानत्वात्पर्वानुग्रहो वक्ष्यमाणो विरुध्येत । अतश्च सत्यपि विरोधे नोपक्रमस्य प्राबल्यम् ।

वस्तुतस्तु नेह विरोधोऽपि । वेदत्वस्य प्रत्येकवृत्तितया ऋच्यप्यविरोधात् । अत एव यत्राश्वप्रतिग्रहेष्ट्यादौ विरोधः तत्रोपक्रमानुसारेण दातृविषयत्वमिष्टमेव । तस्मादृगादिकार्योद्देशेनैव ऋगादिवृत्तितयोच्चैष्ट्वादिविधिः ।

सूत्रं तु ऋगादिशब्दस्य श्रुतित्वसत्त्वलाभाय ऋगादिजातस्यैवोद्देश्यत्वेनाधिकारस्स्यादिति व्याख्येयम् ॥

( इति पूर्वः पक्षः )

## सू—वेदो वा प्रायदर्शनात् ३–३–२ ॥ (सि)

( अथ सिद्धान्तः )

नात्र ऋगादिकार्यस्योद्देश्यत्वम्, अपि त्वृग्वेदादिविहितस्यैव, उपक्रमस्थवेदपदविरोधापत्तेः ।

तथाहि—न तावद्वेदत्वं प्रत्येकवृत्ति, वाक्यमात्राध्ययने वेदाध्ययनप्रसिद्ध्यभावात् । न हि द्वित्रिवाक्याध्ययनेन वेदपारायणादिविध्यर्थमनुष्ठितं मन्यन्ते ।

यत्तु द्वित्रिवाक्य(१)श्रवणे शूद्रस्य दोषानापत्तिरिति । तत्रोच्यते—सर्वत्र विधिवाक्ये 'कूश्माण्डं दद्या'दित्यादौ जातेस्तदवच्छिन्नावयविव्यक्तेश्च साधनत्वं तदाक्षिप्तं च जात्यनवच्छिन्नानामप्यवयवानाम् । अवयवावयविसाधनत्वयोश्चैकपदोपादानादुपादेयस्थले साहित्यस्य विवक्षितत्वान्नावयवोपादानमात्रेण

१ वाक्याध्ययने ।

शास्त्रार्थनिष्पत्तिः । अत एव साहित्यरूपाङ्गासम्भवे नित्यादौ तन्मात्रोपादानमिष्टमेव । 'कूश्माण्डं न भक्षये'दित्यादिनिषेधस्थले त्वनुवाद्यगतत्वेन साहित्यस्य विवक्षितत्वादवयवभक्षणेऽपि प्रत्यवायः ।

अतश्चेह शूद्रस्य द्वित्रिवाक्याध्ययनेऽपि दोषः, पारायणादौ तु समस्तग्रहणमिति सिद्धं भवति । 'अहरहस्स्वाध्यायमधीयीते'त्यादौ तु प्रत्यहं सर्वस्वाध्यायपाठासम्भवादेकदेशग्रहणमिति विशेषः । तेन मन्त्रब्राह्मणसमुदायात्मके ग्रन्थे पर्याप्तत्वाद्वेदत्वस्य ऋक्त्वादिनोपसंहारानुपपत्तेः विरोधे सत्युपक्रमस्थत्वाद्वेदत्वस्यैवोद्देश्यघटकत्वम् ।

तथाहि—वेदशब्दस्तावदर्थवादस्थितोऽपि प्रथमोपस्थितत्वात्स्वार्थस्य स्तुतिविषयत्वं बोधयन्नविधेयस्य स्तुत्ययोगाद्विधेयतामेवाक्षिपति । विधियोग्यविधेयान्तरलाभे तु तदपेक्षितोद्देश्यतां तद्घटकतां वा । अतश्च तादृशोच्चैष्ट्वादिरूपविधेयलाभाद्वेदपदार्थ उद्देश्यघटकतां प्रतिपद्यते । ततश्च तस्यासञ्जातविरोधित्वात् पश्चादुपनिपतदृगादिपदं न स्वार्थस्योद्देश्यघटकतां बोधयितुमलम् ।

अतश्च यथैव "यो होता सोऽध्वर्यु"रित्यत्रोपसंहारस्थमध्वर्युपदमेव कार्यलक्षणां भजते तथेहाप्युपसंहारस्थमृगादिपदमेव तदनुरोधेन वेदलक्षकम् । अत एव विधेरुद्देश्यघटकापेक्षायां प्रथमोपस्थितार्थवादोन्नीतवेदरूपोद्देश्यघटकलाभेऽपि तस्य स्तुतिविषयत्वेनान्वितस्योद्देश्यघटकत्वेनान्वयायोगादुपस्थापकपदान्तरापेक्षायां समभिव्याहृतस्य ऋगादिपदस्यैव लक्षणया तदुपस्थापकत्वं न विरुध्यते । अतश्चापेक्षाक्रमेण ऋगादिपदानां प्रमाणान्तरोपस्थितोद्देश्यघटकशाब्दबोधजनकत्वस्यैवावधारणात् तैः स्वशक्यार्थस्योद्देश्यघटकत्वाप्रमापणात्तद्विषय-

उत्पत्तिप्रतिबन्धलक्षणो बाध उपक्रमस्थवेदपदानुरोधेनावगम्यते । अत एवायमप्राप्तबाध इति भण्यते ।

अत एव यत्र परस्यापि सामग्रीसत्त्वे स्वविषयप्रमाजनकत्वमप्रतिबद्धं, तत्र तस्यार्थान्तरे पूर्वसाकाङ्क्षत्वेऽपि स्वविषयप्रमोत्पत्तेरप्रतिबन्धात्तेनैव पूर्वस्य स्वाविरोधिविषयपरत्वमुपकल्प्य स्वविरोधिविषये मिथ्यात्वबोधनाद्बाधः, यथाऽपच्छेदादिस्थले । अत एव स प्राप्तबाध इति भण्यते । नत्वयं प्रकृतेऽस्ति । उत्तरस्य पूर्वविरुद्धविषयकप्रमाजनने विध्यपेक्षाभावेन सामर्थ्यभावात् । अतोऽत्रोपक्रमस्यैव प्राबल्यम् ।

ननु सत्यमुपक्रमापेक्षया तत्प्रतिबद्धात्मलाभस्योपसंहारस्य दौर्बल्यम् । प्रतिबन्ध एव त्विहोपक्रमस्थेनाप्यर्थवादत्वादङ्गभूतेन प्रधानभूतस्य विधेरशक्यसम्पादः । अत एव यत्र नाङ्गप्रधाभावस्तत्रैवैकवाक्यत्वादाविति परस्य प्रथमोपस्थितापेक्षया दौर्बल्यम् , यथा 'यो होता सोऽध्वर्यु'रित्यादौ । प्रकृते तु यथैव 'य इष्ट्ये'त्यादावुपसंहारस्थस्यापि प्रधानभूतस्य सोमस्य धर्मानुग्रहस्तथैव विधेरपीति चेत्—

सत्यं प्रधानभूतस्योपसंहारस्थस्यापि प्राबल्यं, न त्विह तथा, प्रधानभूतस्यो'च्चैः क्रियत' इत्यस्य विधेर्विरोधाभावात् । विरुद्धस्य च ऋगादिपदस्य न विध्यन्तर्भावः । उद्देश्यघटकत्वाप्रमापणात् । अतो नायमङ्गगुणविरोधन्यायस्य विषयः ।

अत एव यत्रोत्तरस्यापि पूर्वाविरोधेन कार्यान्तरपरत्वासंभवः तत्र परस्यापि शक्यार्थपरत्वात्तस्य च प्राधान्यादङ्गगुणविरोधन्यायापवादक उपक्रमन्यायस्य, यथा 'य इष्ट्ये'त्यादौ ।

वस्तुतस्तु न तत्रोपक्रमन्यायोऽपि । यजेतेति प्रत्ययाभिहितसर्वभावनोद्देशेन विविदिषावाक्यवद्वाशब्दार्थविशिष्टकालविधे।

(१)प्रकरणान्तराधिकरणे व्युत्पादितत्वेनेष्ट्यादिपदानामनुवाद-मात्रतया तदभावात् ।

एतेन यत्कैश्चिदेतस्याङ्गगुणविरोधन्यायोदाहरणत्वसिद्ध्य-र्थमिष्ट्यादिवाक्ये वाक्यत्रयमेवाङ्गीकृत्योपक्रमन्यायाभाव इत्युक्तं तदपास्तम्। अस्मदुक्तरीत्यैकवाक्यत्वोपपत्तौ तदङ्गीकारे प्रमाणाभा-वात्। यदपि च तद्ग्रन्थादेकवाक्यत्वे सत्युपक्रमन्यायस्यैव प्राबल्यं तदभाव एव त्वङ्गगुणविरोधन्यायस्येति प्रतीयते तत् "चतुरो मुष्टीन्निर्वपती"त्यादावेकवाक्यत्वेऽपि मुष्टीनां प्राधान्यात्सप्तदश-शरावे चरावनुग्रह इत्येवं पूर्वपक्षकरणं सिद्धान्ते चोभयोः क्रि-यान्वयित्वात्प्राधान्याभावोपपादनं दुर्घटं स्यादित्येवमुपेक्षितम् । तस्मात्सत्यप्यङ्गगुणविरोधन्यायस्योपक्रमन्यायापवादकत्वे प्राधा-न्यापह्नवेनैव प्रकृतसिद्धान्तोपपादनं द्रष्टव्यम् । तत्सिद्धमृग्वेदादि-विहितकर्मोद्देशेन तदीयमन्त्रवृत्तित्वसम्बन्धेनोच्चैष्ट्वादिविधिरिति ।

सूत्रं तु वेदो वोद्देश्यताघटकः प्राये वाक्योपक्रमे वेदश-ब्ददर्शनादिति व्याख्येयम् ॥

## सू—लिङ्गाच्च ॥ ९—३—३ ॥

"ऋग्भिः प्रातर्दिवि देवं ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः" इत्यत्र द्वितीयतृतीयपादस्थयोर्वेदशब्दयोरुपसंहारस्थत्वेऽप्यनेकत्वात्तद-नुरोधेनोपक्रमस्थस्याप्येकस्य ऋक्पदस्यैव लक्षणया वेदपरत्वं, चतुर्थपादे वेदैरिति बहुवचनादप्ययमर्थो निश्चीयते । अतश्च प्रकृतोदाहरणे सत्यपि लक्षणाविशेषे प्रयुक्तत्वादृगादिशब्दा एव वेदपरा न तु वैपरीत्यम् ॥

---

१ पू. मी. कौ. २-३-११. पृ. ८८

## सू–(१)त्रयीविद्या च तद्विदि ॥ ३–३–४ ॥

लोकेऽपि च वेदत्रयीविदि त्रैविद्यशब्दः प्रयुज्यते। त्रयीशब्दश्च ऋग्यजुस्सामसु प्रसिद्धः । अतश्च त्रयीशब्दस्य वेदत्रये लक्षणात् तत्पर्यायाणामृगादिशब्दानामपि तल्लक्षकत्वमवसीयते । अतोऽपि तत्रैव लक्षणा ॥

## सू–व्यतिक्रमे यथाश्रुतीति चेत् ॥ ३–३–५ ॥

नन्वेवं यत्रैकमेव कर्म वेदत्रयेऽपि समाम्नातं तत्र तदङ्गभूते मन्त्रे तव मते उच्चैष्ट्वादीनां विकल्पापत्तिः । मम तु ऋचां यजुर्वेदपाठनिबन्धने व्यतिक्रमेऽपि ऋक्त्वानपायाद्यथाश्रुत्येव स्वरानुष्ठानान्न पक्षे बाध इति चेत् ।

## सू–(२)न सर्वस्मिन्निवेशात् ॥ ३–२–६ ॥

न समाम्नानमात्रेण स्वरप्राप्तिः । ऋचा क्रियत इत्यत्र ऋचा विधानस्यैवोद्देश्यताघटकत्वेनोपादानमित्येवं वक्ष्यमाणत्वात् । विधानं च भूयस्त्वादिना एकस्मिन्नेव वेद इति नानेकस्वरप्राप्तिः । यत्रापि नान्यन्निर्णायकं तत्रापि कर्मान्तरत्वापत्तेर्न तदनेकता। अस्तु वा तत्रागत्या विकल्पोऽपि ।

सर्वस्मिन्निवेशेऽपि न साङ्कर्यमिति सूत्रव्याख्या ॥

## सू–वेदसंयोगान्न प्रकरणेन(३)बाध्यते॥ ३–२–७॥

नन्वस्य ज्योतिष्टोमप्रकरणे पाठाद्वेदधर्मत्वपक्षे प्रकरण-

---

१-एतत्सूत्रात् पूर्वं "धर्मोपदेशाच्च नहि द्रव्येण सम्बन्धः" इति सूत्रमुपलभ्यते भाष्यशास्त्रदीपिकादिषु । परं तु कौस्तुभादर्शेषु सूत्रमिदं अधिकरणान्ते दृश्यते ।

२ सूत्रस्यास्य 'न सर्वस्मिन्नविशेषात्' इति पाठोऽन्यत्र दृश्यते ।

३ बाध्येत ।

बाधः प्रसज्येत। ऋगादिधर्मत्वपक्षे हि ऋक्त्वादिधर्माणां प्रत्येकवृत्तित्वात् ज्योतिष्टोमप्रकरणेऽपि च ऋक्त्वावच्छिन्नजन्यकार्यस्य सत्त्वाद्युक्तः प्रकरणानुप्रवेशः। तत्र तु वेदत्वस्य व्यासज्यवृत्तित्वेन प्रकरणस्थवाक्ये ऽत्र पर्यवसितत्वात्प्रकरणेनोद्देश्यस्य स्वविषय उपसंहारानुपपत्तेर्वाक्यप्रमितोद्देश्यबाधेनैव प्रकरणानुग्रहो वाच्यः। न चासौ युक्तः। तेन वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेन स्वरविधानात् प्रकरणबाध इति चेत्—

न; वाक्येन प्रकरणबाधस्येष्टत्वात्। न चैवं कस्यापि कर्मणो वेदत्वावच्छिन्नविहितत्वाभावात्स्वरविध्यनुपपत्तिः। द्वौ घटौ रूपवन्तौ कर्तव्यावित्यादौ रूपकर्तव्यतायाः प्रत्येकान्वयेऽपि द्वित्वस्य तदितरसंख्यावच्छिन्नव्यावर्तनेनैवोद्देश्यतावच्छेदकत्ववद्वेदत्वस्याप्युपपत्तेः। न ह्यत्र वेदत्वमुद्देश्यविशेषणम्। क्रियते इत्युद्देश्यसमर्पकस्य पदस्य साकाङ्क्षत्वेन हविरार्तिवदुद्देश्यतावच्छेदकत्वप्रतीतेः। अत एव ऋचा ऋग्वेदेन यत्क्रियते विधीयते तत्रोच्चैष्ट्वं कर्तव्यमिति विध्यध्याहारोऽपि ध्येयः। श्रूयमाणस्यैव प्रत्ययस्य विपरिणामेन विधित्वकल्पनेत्यन्ये। सर्वथा प्रकरणबाधो न दोषाय।

सूत्रं वेदसंयोगात्सर्वस्मिन्क्रतौ निवेशः प्राप्तः प्रकरणेन न बाधितुं शक्य इति तदेव बाध्यत इति यत्न च दोषायेति व्याख्येयम्। बाधेतेति पाठे निवेशमुच्चैष्ट्वादिधर्मः प्रकरणानुरोधेन बाधेतेति यत्नेति व्याख्येयम् ॥

## सू—धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥३-३-८॥

ऋग्धर्मत्वपक्षे साम्नोऽपि 'ऋच्यध्यूढं साम गायती'ति वचनेन ऋच्येव गेयत्वात्पुनस्तद्धर्मत्वेनोच्चैष्ट्वविधिरनर्थकः।

यद्यपि च प्रजापतिहृदयाद्यनृक्सामविषयकत्वेन सार्थक्यं

शक्येत तथाप्यल्पविषयत्वं तावत्तदवस्थमेव। वेदधर्मत्वे तु न क-श्चिद्दोषः ॥ प्रयोजनं स्पष्टम् ॥

इत्युपक्रमाधिकरणं प्रथमम् ॥ १ ॥

## अथ द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ॥(२)

## सू—गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ३–३–९ ॥ (पू)

### ( विषयसंशयौ )

आधानं तावद्याजुर्वैदिकमित्यविवादम् । तदङ्गत्वेन च वारवन्तीयादीनि सामान्याम्नातानि। तेषां च पाठस्सामवेदे नि-र्विवादः। अयमेवोत्पत्तिविधिशब्देनाभिप्रेतः। न त्वन्य आग्ने-यादिवदुत्पत्तिविधिरस्ति । विनियोगविधिरपि च भाष्यकारमते तत्रैव। 'य एवं विद्वानग्निमाधत्त' इत्यनूद्याधानं "वारवन्तीयं गाय-ती"ति विधानात्। प्रयोगविधिस्तु सर्वेषामङ्गानां प्रधानविधिविधे-यत्वाद्याजुर्वैदिक एव। 'उच्चैर्ऋचा क्रियते' इत्यत्र च करोतिना तृतीयान्तपदसमभिव्याहाराहग्वेदकरणकव्यापारो विधानाख्यो ऽभिधीयते।

तत्र किमुत्पत्तिविधानरूपस्य विनियोगविधानरूपस्य वा व्यापारस्याभिधानात् साममुच्चैस्स्वरः ? उत प्रयोगविधानरूप-व्यापाराभिधानादुपांशुत्वमिति विचार्यते।

### ( सङ्गतिः )

उद्देश्यतावच्छेदकघटकविशेषचिन्तनाच्च पादाध्यायसङ्गतिः। ऋगादिपदार्थे निरूपिते तदनन्तरभाविकरोतिधात्वर्थनि-रूपणाच्चानन्तरा । उत्पत्तिविनियोगविधिवेदानिबन्धनस्वरङ्गा-

नस्य प्राथमिकस्य बलवत्त्वापवादाद्वा सा ।

( पूर्वपक्षः । )

तत्र प्रयोगविधेर्विनियोगोत्पत्तिसापेक्षत्वात्तयोः पूर्वभावि-त्वेन तन्निबन्धनस्वरस्य शीघ्रोपस्थितिकत्वेनासञ्जातविरोधित्वा-द्बलवत्त्वं पूर्वाधिकरणन्यायेनैव । अत एव प्रयोगविधेस्तत्सापे-क्षत्वान्नापच्छेदन्यायोऽपि । त्रयाणामप्येतेषां सामरूपाङ्गविषयत्वा-न्नाङ्गगुणविरोधन्यायोऽपि । न हि प्रधानभूत आधानेऽस्माभिरु-पांशुत्वं बाध्यते, येन स आपाद्येत ।

किञ्चोत्पत्तिविनियोगयोः प्रतिपदार्थं भिन्नत्वात्तन्निबन्धन-स्वरस्य विशेषविहितत्वमसावकाशत्वं च । अतस्तेनानेकाङ्गप्रधा-नसाधारणप्रयोगविधिनिबन्धनस्वरस्य सामान्यविहितस्यान्यत्र सावकाशस्य च बाध इति प्राप्ते—

( भाष्यकारीयः सिद्धान्तः )

भाष्यकारेण तावत्प्रयोगविध्याश्रयस्य स्वरस्य बलवत्त्व-मित्येवं सिद्धान्तितम् । तस्यायमाशयः—स्यादयमुपक्रमप्राब-ल्यादिन्यायो यद्युत्पत्तिविनियोगकालयोस्स्वरापेक्षा भवेत् । तस्य तु कालादिवत्प्रयोगविधिविशेषणत्वेनापेक्षितत्वात्तन्निबन्ध-नस्यैव स्वरस्य प्राबल्यम् ।

यद्यपि चातद्विशेषणत्वाभावेऽपि तदनन्तरमपेक्ष्यत इत्यु-च्यते तथापि तदपेक्षादशायां प्रयोगस्यैव वा व्यवधानेन पूर्व-मुपस्थितत्वात्तन्निबन्धनस्वरस्यैव ग्रहणम् । अतश्च यथैव प्रमाण-बलाबलस्य पूर्वमुपस्थितत्वेऽपि प्रमेयविरोधसापेक्षत्वात्तदालोच-नदशायां प्रमेयबलाबलस्यैव पुरस्स्फूर्तिकत्वेन निर्णायकत्वं एवमिहापि द्रष्टव्यम् । इष्यते चायं न्यायः उत्पत्तिविनियोगयोः परस्परविरोधे ।

किञ्चोपांशुत्वप्रकृधर्मोऽपि समानप्रमाणकप्रधानवृत्तिताकत्वात्प्रधानप्रत्यासन्नमिति बलवत् । अतस्तेनानीदृशमुच्चैष्ट्वं बाध्यते । अयं च न्यायोऽङ्गगुणन्यायाद्भिन्न एवेति न तेनापि पौनरुक्त्यम् ।

सूत्रं तु मुख्यगुणशब्दाभ्यां समानप्रमाणकप्रधानवृत्तिताकं तद्भिन्नं च विवक्षितत्वाद्व्याख्येयम् ।

वार्तिककाराशयस्तु—न प्रयोगविधिवेदनिबन्धनत्वं स्वरस्य । प्रयोगविधिर्हि न क्वचिदपि वेदे पार्थक्येन श्रुतः । अङ्गवाक्यान्येव हि प्रधानवाक्यैकवाक्यतामापन्नानि प्रयोगविधिशब्दार्थः । अतश्च परिशेषात्तत्तद्वाक्यानां वेदेनैव तस्य वेदविशेषावधारणम् । ततश्च यत्राङ्गप्रधानवाक्ययोरेकवेदस्थत्वं तत्र प्रयोगवेदनिबन्धनस्वराङ्गीकारेऽप्यविरोधान्नैव कश्चिद्विचारः । यत्रापि नानावेदस्थत्वं तत्रापि प्रयोगविधेः प्रधानांशे ऽन्यवेदीयत्वेनान्यस्वरापादकत्वादङ्गांशे च वेदान्तरीयत्वेनोत्पत्तिविनियोगविध्यनुकूलस्वरस्यैवापादनान्नैव कश्चिद्विरोध इति न विचारावसरः ।

न चाङ्गस्य प्रयोगविधिवेदनिबन्धनस्वराविषयत्वेऽपि कालादिवत्प्रयोगान्वयित्वात्स्वरस्य तस्य चाङ्गप्रधानसाधारणत्वात्प्रधानान्वयिस्वरस्यैव वेदत्रयाविहितानुमितविधिविहिताङ्गान्वयवद्वेदान्तरीयाङ्गेऽपि निवेशोपपत्तेः वेदान्तरीयविनियोगविधिनिबन्धनस्वरबाधोपपत्तिरिति वाच्यम् । प्रधानविधिवेदनिबन्धनस्य स्वरस्य प्रधानमात्रोद्देशेनैव विहितस्याङ्गेषु कल्पनीयत्वात्तेषु च क्लृप्तस्य वेदान्तरीयाङ्गोत्पत्तिविनियोगप्रयोगविधिवेदनिबन्धनस्वरस्य बाधानुपपत्तेः ।

अत एव ऋग्वेदादित्रयस्य हौत्राध्वर्यवौद्गात्रसमाख्याभिर्हौत्रादिकर्तृप्राप्तेस्तद्वेदविहिते कर्मणि वक्ष्यमाणत्वाज्ज्योति-

ष्टोमाद्यङ्गभूतस्तोत्रादेराधानाङ्गभूतसाम्नां चोद्गातृकर्तृकत्वसिद्धिः। अन्यथा भवदुक्तयुक्तिनिचयेन तत्राप्यध्वर्युकर्तृकत्वापत्तेः क्लृप्तकल्प्यत्वेनैव च प्रयोगवचनाश्रितस्य चोदकाश्रितापेक्षया दौर्बल्यमिति श्येने उद्गातृमात्रकर्तृकत्वबाधेन नानाकर्तृकत्वसिद्धिः।

अत एव यत्र प्रधानसम्बन्धिन एव धर्मस्याङ्गोद्देशेनापि विधानं तेष्वपि क्लृप्तत्वैव। यथा 'अवभृथेन चरन्ती'त्यादौ तृतीयानिर्देशेन साङ्गस्यैव करणत्वावगमेनाङ्गप्रधानसम्बन्धिन एव धर्मस्याङ्गोद्देशेनाप्यपां विधानात् तत्र चोदकाश्रितस्याग्नेदौर्बल्यमेव।

प्रकृते तूपांशुत्वस्य प्रधानमात्रोद्देशेन विहितस्याङ्गे कल्पनीयत्वात्प्रधानप्रयोगविधेश्च वेदान्तरीययागांशे याजुर्वेदिकत्वाभावेन स्वत उपांशुत्वाप्रापकत्वान्नाधानसाम्नामुपांशुत्वसिद्धिः। अपि तु सामोत्पत्तिविनियोगप्रयोगाणां सामवैदिकत्वादुच्चैष्ट्वादिसिद्धिरेव स्यादिति। अतो ऽन्यथाधिकरणं वर्णितम्—

नाधानसाम्नां सामवेदे विनियोगो वस्तुतस्समस्ति।
कृत्वाचिन्तया विचारस्य तु नैव किञ्चित्फलं पश्यामः।
अपि तु यजुर्वेद एव। पाठापरपर्यायोत्पत्तिरत्र तु सामवेदे।
अतश्च प्रधानप्रयोगविधिरेव मामांशे उत्पत्तिविध्यनुसारेण सामवैदिकस्सन्नुच्चैष्ट्वं विधत्ते उत विनियोगविध्यनुसारेण याजुर्वैदिकस्सन्नुपांशुत्वमिति सन्देहः।

अस्मिश्च पक्षे करोतेः प्रयोगविधिव्यापाराभिधायित्वस्य निर्णीतत्वात्तदर्थविचाराभावेऽपि चापवादिकत्वेनानन्तरसङ्गतिः। पादाध्यायसङ्गतिस्तु पूर्ववदेव।

तत्रोत्पत्तिविनियोगयोरुभयोरप्येकमात्रमात्रविषयत्वात्सावकाशनिरवकाशसामान्यविशेषभावन्याययोरिहासम्भवेऽपि भा-

व्यकारोक्तरीत्यैवोत्पत्तेः प्राथमिकत्वेनासञ्जातविरोधित्ववदुत्तर-भाविविनियोगोपजीव्यत्वाच्च तद्विध्यनुसारेणैव प्रयोगविधेर्वेदविशेषीयत्वनिश्चयात्तद्वेदनिबन्धन एव स्वरो बलवानिति प्राप्ते--

( वार्तिककारीयः सिद्धान्तः )

सिद्धान्तितम्--यद्यप्युत्पत्तिः प्राथमिकी तथापि न तदानीं स्वरापेक्षा। यदा च प्रयोगविधिकाले सा तदा विनियुक्तस्य प्रयोगेन विनियोगविधिरेव पुरस्फूर्तिकः नोत्पत्तिविधिः। विनियोगविधिना व्यवहितत्वाद्विनियोगविधेः फलनिरूपितत्वेनोत्पत्तिविध्यपेक्षया प्राधान्याच्च। अतश्च तदनुसारेणैव प्रयोगविधेर्वेदविशेषीयत्वनिश्चयात्तद्वेदनिबन्धनस्योपांशुत्वस्वरस्यैव बलवत्त्वम्। सोऽयमप्राप्तबाधः।

न चैवं तेनैव न्यायेनाध्वर्युकर्तृकत्वापत्तिः। न्यायेन तदापत्तावपि वचनेनैव वैकल्पिकब्रह्मोद्गातृकर्तृकत्वाङ्गीकारात्।

न चैवं तुल्यन्यायत्वाद्दर्शपूर्णमासाद्यङ्गेष्वपि वेदान्तरोत्पत्तिकेषु विनियोगविधिनिबन्धनस्वरापत्तिः। न्यायेन प्राप्तावपि वचनेन बाधात्।

तथा हि--दर्शपूर्णमासयोरेव तावदङ्गप्रधानयोस्तत्तद्विनियोगविध्यनुसारेण प्रयोगविधित उपांशुत्वादौ प्राप्ते 'मन्द्रमाज्यभागान्तं, परं मध्यमया, उत्तमयानूयाजादीति वचनेन प्राप्तबाधविधया भागधर्मस्य स्वरस्य विधानात् मन्द्रादिस्वरः तत्रापि विशेषवचनादिना क्वचिदुच्चैष्ट्वादीत्येव ध्येयम्।

एवं तद्विकृतीनामप्यकाम्यानां प्रधानांशे प्राकृताङ्गांशे तत्कार्यापन्नाङ्गांशे च तावत्प्रकृतस्वरस्यैव ग्रहणम्।

न च तत्रौपदेशिकनानावेदस्वरस्यैव प्राबल्यम्। "उच्चैर्ऋचा क्रियते" इत्यस्यान्यपरत्वेनाप्युत्पत्तौ क्लृप्तोपकारप्राकृतस्वरस्य

श्येने कर्त्रादिवद्बाधानुपपत्तेः । प्राकृताङ्गांशे औपदेशिकस्वरस्याप्य-भावाच्च । अप्राकृताङ्गांशेऽपि च प्राकृतस्यैव स्वरस्य ग्रहणम् । प्रकृतौ स्वरस्य भागधर्मत्वेन तद्भागारम्भकाप्राकृतद्वात्तित्वेऽप्यप्रा-कृतकार्यकारितानापत्तेः । काम्यासु तु "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या" इति वचने प्रधानमात्रे उपांशुत्वम् । "अप्स्ववभृथेन चरन्ती"तिवत् तृतीयानिर्देशाभावेन साङ्गेऽस्या-प्रवृत्तेः । एवमस्यापवादकानि विशेषवचनानि द्रष्टव्यानि ।

एवं ज्योतिष्टोमेऽपि तत्तद्विनियोगविध्यनुसारेण नानावेदस्व-रे प्राप्ते दर्शपूर्णमासप्राकृताङ्गविषये श्येनन्यायेन प्राकृतेन स्वरेण तस्य बाधः । तत्रापि 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती'त्यनेनाग्नीषोमीयपशुप्राग्भावित्रिपदार्थाङ्गत्वेन विहितमुपां-शुत्वं सामान्यविहितं नानावेदस्वरमिव प्राकृतमपि स्वरं बाधते । तमपि च "यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रू-यात्, मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायामुपांशूपसत्स्वि"त्या-दिनिरवकाशविशेषवचनविहिताः स्वरा दीक्षणीयादिप्रधानमात्रांशे बाधन्ते, न तु तदङ्गांशेऽपि । 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या' इतिवत्प्रधानमात्रोद्देशेन विहितत्वात् ।

अत एव "उच्चैः प्रवर्ग्येणे"त्यनेन "प्स्ववभृथेन चरन्ती"तिव-त्साङ्ग एवोच्चैष्ट्वविधानात्साङ्ग एव प्रवर्ग्ये उपांशुत्वबाधकता ।

न चैवमप्यग्नीषोमीयप्राग्भावित्वादेवोपसत्सूपांशुत्वासिद्धे 'रु-पांशूपसत्स्वि'ति पृथग्विधिर्वैयर्थ्यम् । उपसत्पदस्य निरव-काशविषयातिरिक्तपदार्थमात्रोपलक्षणत्वमङ्गीकृत्यौचित्येन दी-क्षणीयादिस्वरप्रशंसार्थत्वेनाप्युपपत्तौ भिन्नवाक्यत्वापादकवि-ध्यन्तरकल्पने प्रमाणाभावात् । अत एव नानेन तस्योपसंहार इत्यपि ध्येयम् ।

अग्नीषोमीयादौ तु दर्शपूर्णमासप्रकृतिके प्राकृतं त्रैस्वर्यमेव । अतत्प्रकृतिके तु नानावेदस्वर एव । तद्विनियोगविध्यनुसारात् । सुत्यायां त्वङ्गप्रधानसाधारण्येन 'मन्द्रं प्रातस्सवने चरन्ती'-त्यादिवचनाविहितैस्सवनक्रमेण मन्द्रमध्यमोत्तमस्वरैः प्राकृतानां सवनीयादौ स्तोत्रादौ च नानावेदस्वरस्य बाधः ।

न च प्रातस्सवनादिशब्दानामवयवव्युत्पत्त्या सोमयागाभ्यासविशेषवाचित्वान्मन्द्रं प्रायणीयायामितिवत् प्रधानमात्र एव निवेशश्शङ्क्यः । चरन्तीति प्रयोगवाचिधातुसमभिव्याहारात्प्रातस्सवनादिशब्दस्यापि स्वशक्यघटितप्रयोगैकदेशलक्षकत्वावगतेः प्रायणीयादिवैलक्षण्यात् ।

यत्तु वार्तिके सप्तमीनिर्देशाद्यावांस्तत्तदाधारो मन्त्रस्तत्र सर्वत्रायं स्वर इति प्रतीतेरङ्गप्रधानसाधारण्यं सवनस्वरस्येत्युक्तम्, तत् प्रायणीयादिष्वपि तथाप्रसक्तेर्मन्त्रस्य चाकाशाधारस्य सवनाधारत्वानुपपत्तेरङ्गतासम्बन्धेनैव सप्तम्या व्याख्येयत्वादुपेक्षितम् । सुत्योत्तरकालीनेषु तु दर्शपूर्णमासप्रकृतिकेषु प्राकृतोऽपूर्वेषु नानावेदस्वर इति स्पष्टमेव । एतेन ज्योतिष्टोमविकारा व्याख्याताः ।

यत्त्वस्यां स्वरचर्चायां वार्तिके प्रकारान्तरेण स्वरानयनं तदस्थायिभाष्यकारमते स्थित्वा तदुपवर्णनान्न दोषाय । अतश्चातदस्थायिभाष्यकारमते स्थित्वा तदुपवर्णनान्न दोषाय । अतश्चान्यत्र स्वरान्तरप्राप्तावप्याधानस्याप्युपांशुत्वमव्याहतमेव । प्रयोजनं स्पष्टम् ।

सूत्रं गुणमुख्यशब्दाभ्यामुत्पत्तिविनियोगयोर्विवक्षितत्वात्स्पष्टम् ॥

इति द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥

## सू—भूयस्त्वेनोभयश्रुति ॥ ३-३-१० ॥

( विषयसंशयसङ्गतयः )

एवं तावद्यत्र वेदान्तर उत्पत्तिर्वेदान्तरे च विनियोगः तत्र विनियोगविधिनिबन्धनः स्वर इत्युक्तम् । यत्र तु वेदान्तरे फलसम्बन्धश्रवणात् विनियोगः वेदान्तरे च कर्त्रादिश्रवणात्प्रयोगः तत्रापि प्रयोगकाल एव स्वरापेक्षणाद्युक्तितौल्येन विनियोगविधेरपि प्रयोगविधितो दौर्बल्यात्प्रयोगविधिनिबन्धन एव प्रधानांशे स्वर इत्यप्यर्थसिद्धम् ।

न च स्वरस्य प्रयोगविधावनन्वयः । तथात्वे तदाश्रयस्य मन्त्रस्य साङ्गप्रधानसम्बन्धापत्तेरिति केषांचिदुक्तं युक्तम् । प्रयोगविधावेवापेक्षाक्रमेणान्वयेऽपि मन्त्रस्य लिङ्गेन प्रधानमात्र एवान्वयोपपत्तेः ।

एवं यत्र वेदान्तर एव विनियोगो वेदान्तरे चाख्यातसामानाधिकरण्यं विना वसन्ते ज्योतिष्टोम इत्येवं रूपेण कालदेशाद्यन्वयः तत्रापि प्रयोगविधित्वात्तन्निबन्धन एव स्वर इति बोध्यम् । आख्यातसामानाधिकरण्ये सति प्रकरणान्तरन्यायेन कर्मान्तरत्वापत्तेः ।

एवं च यत्र प्रयोगविधिपरिचायकं विनियोगविधिपरिचायकं वा कालफलादिकं भेदेन वेदद्वयेऽप्याम्नातं तत्र विनिगमनाविरहादिनोभयत्रापि तद्विधित्वानिश्चयात्स्वरविकल्पे प्राप्ते यत्रोत्पत्तिस्तद्वेदनिबन्धन स्वर इत्यविवादम् । अतस्तादृशविषये क्वोत्पत्तिरिति विचारणीयम् ।

एवं यत्र कालफलाद्यनुपादाय उत्पत्त्यन्वयी गुणः कर्ममात्रं वोभयत्र श्रुतं तत्राप्येवं विचारः । पादाध्यायसङ्गती पूर्ववत् । प्रासङ्गिकी त्वनन्तरा ।

( पूर्वपक्षः )

तत्र यत्र तावदुत्पत्त्यन्वयी द्रव्यदेवतास्तोत्रशस्त्रादिरुभयत्रापि गुणास्स्ववाक्ये श्रुतः, तत्र विनिगमनाविरहेणोभयत्राप्युत्पत्तिविधिः ।

न चैवमुत्पन्नस्योत्पत्त्ययोगात्कर्मान्तरत्वापत्तिः । पिङ्गाक्ष्येकहायनीशब्दवत्सहप्रवृत्तेर्युगपाद्विधायकत्वात् । तद्वदेव विशेषणांशविधिफलकत्वान्न वैयर्थ्यमपि ।

न चैवं वाजिनादिस्थलेऽपि तथापत्तिः । पाठक्रमस्य नियामकत्वेन सह प्रवृत्त्यभावात् ।

एवं यत्रापि कर्ममात्रं वेदद्वये श्रुतं तत्रापि नाभ्यासात् कर्मान्तरत्वम् , वाक्यान्तरोपात्तगुणान्वयार्थत्वेनानन्यपरत्वाभावात् । नापि तदर्थमेकत्रानुवादः । विनिगमनाविरहादुभयत्र लिङ्गादिसत्वेनैकत्र तदर्थत्यागापत्तेश्च । अतस्तत्राप्युभयत्रोत्पत्तिविधिः ।

यत्र तूभयत्रापि कालादिश्रवणं तत्र विध्यन्तराक्षिप्ताया उत्पत्तेर्वेदविशेषे नियन्तुमेवाशक्यत्वम् । अतश्च सर्वत्रैवंजातीयके स्वरविकल्प इति प्राप्ते--

( सिद्धान्तः )

अभिधीयते--अङ्गबाहुल्येन प्रधानोत्पत्तिविधिनिर्णयः, सेवकबाहुल्येन राजावस्थाननिर्णयवत् ।

वस्तुतस्त्वस्य व्यभिचरितत्वात्कर्मस्वरूपपरिचायकद्रव्यदेवतादिसाकल्यसत्त्वस्यैव तन्निर्णायकत्वम् । तत्रापि द्वैविध्ये बहिरङ्गत्वेऽप्यव्यभिचाराद्देवताया एव, न तु द्रव्यस्य । अतश्च तादृशगुणसत्त्वे तेनैव विधिनिश्चयादन्यत्र स्ववाक्योपात्तोत्पत्त्यन्वयिगुणसत्त्वेऽपि तदनुवादेनैवाविरोधिगुणविधानम् । विरोधिगुणसत्त्वे तु तेन भेद एव ।

न च पिङ्गाक्ष्येकहायनीन्यायः । तद्वदिहैकवाक्यत्वाभावेन सहप्रवृत्त्यभावात् । अतस्तत्र भेद एव । कालफलादिरूपविध्यन्तरान्वयिगुणसत्त्वे तु तस्य प्रयोगादिविधायितामात्रम् । उत्पत्त्यंशे त्वनुवाद एव । यत्र तूभयत्रापि स्ववाक्ये कर्ममात्रश्रवणं वाक्यान्तरे चैकत्र देवतादिविधिरपरत्र तु तदविधायैवाविरोधिगुणान्तरश्रवणं तत्र सत्यप्युभयत्रापि लिङादिश्रवणात्पिङ्गाक्ष्येकहायनीन्यायेन विधित्वे एकत्रैव देवताविधिसमभिव्याहारवत्युत्पत्तिविधितात्पर्यकत्वम् । अपरत्र तु सत्यप्युत्पत्तिविधित्वे न तत्तात्पर्यकता । वाक्यान्तरोपात्तगुणविनियोगोपयोगिप्रकरणोज्जीवनार्थत्वात् । अत एव न तत्रानारभ्याधीतता ।

यत्र तु वेदान्तरे लङन्तेन कर्ममात्रमुक्त्वा वाक्यान्तरे गुणोपादानं तत्र पूर्ववाक्यस्य नैव विधित्वम् । अपि तु अनुवादत्वमेव गुणविधानार्थम् । तत्र तु तस्यानारभ्याधीततेयेतावान् विशेषः ।

वस्तुतस्तु लिङन्तस्थलेऽपि नोभयोर्विधित्वं विहितविधानायोगात् पिङ्गाक्षीन्यायस्यैकवाक्यत्वप्रयुक्तत्वाच्च । अपि तु परिचायकतानुरोधेनैकस्य विधित्वमपरस्यानुवादतेति बोध्यम् ।

अतश्चोत्पत्तिविधिभेदनिबन्धन एव स्वरो बलीयानिति सिद्धम् । वाक्यान्तरे विरोधिस्वसमानगुणश्रवणे तु भेदः । एवमुभयत्र कर्ममात्रश्रवणेऽपि बोध्यम् ।

प्रयोजनं सूत्रं च स्पष्टम् ॥

( वृत्तमधिकरणम् )

## अथ प्रकरणाधिकरणं चतुर्थम् ॥ (४)

## सू—असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ३-३-११ ॥

( विषयसंशयसङ्गतयः )

'शेषः परार्थत्वा'दित्यत्र प्रमाणं विना पारार्थ्यस्य वक्तुमश-
क्यत्वाच्छ्रुत्यादिकमपि प्रमाणमुपक्षिप्तम् । तत्र च श्रुतिवाक्ययोर्लिं-
ङ्गस्य च(१) तद्भूताधिकरणे(२) सामर्थ्याधिकरणे च स्वरूपेण
विनियोजकत्वस्योक्तत्वादङ्गाङ्गितयोरवच्छेदकमात्रं निरूपितम् ।
इदानीं तु प्रकरणादीनां स्वरूपेणैव विनियोजकत्वमाक्षिप्य समा-
धीयते । स्वस्यापि कथञ्चित्स्त्रोपयोगित्वात्पादाध्यायसङ्गतिः ।
अनन्तरा तु पूर्वाधिकरणे वेदान्तरीयशुद्धोत्पत्तिविधेः प्र-
करणोज्जीवनार्थत्वेऽभिहिते प्रकरणस्यैवाक्षेपाद्द्रष्टव्या ।

( पूर्वपक्षः )

तत्र न प्रकरणं नाम किञ्चिदस्ति विनियोजकम् । तद्धि य-
दि सन्निधिमात्रं भवेत् ततो गोदोहनादेरपि दर्शाद्यङ्गत्वप्रसङ्गः ।
अथ साकाङ्क्षत्वमात्रं, ततो विकृतेरपि प्राकृताङ्गविषये सा-
काङ्क्षत्वात् तदङ्गत्वस्य च प्रकरणगम्यत्वापत्तिः ।
अथ साकाङ्क्षत्वे सति सन्निधिपठितत्वम्, ततो विकृतावुप-
होमादौ तदापत्तिः ।
अथोभयाकाङ्क्षाविशिष्टं तत्प्रकरणमित्युच्येत, ततो म-
न्त्राणामपि सन्निधौ पाठात्प्रकरणाद्दर्शाद्यङ्गत्वप्रसङ्गः ।
न चेष्टापत्तिः । अत एव तत्र तत्र मूले तथा व्यवहार
इति वाच्यम् । मन्त्राणां सिद्धरूपत्वेन प्रकरणाविषयत्वात् ।

---

१. १-१-७  २. १-४-१५

अत एव लिङ्गादेव तत्राङ्गत्वम् । प्रकरणं त्वधिकाराख्यं सामान्यसम्बन्धबोधकमेव । अस्तु वा कचिल्लिङ्गाभावे तस्यैव स्थानविधयाङ्गताबोधकत्वं न तु प्रकरणविधया । सिद्धान्ते सिद्धरूपस्य प्रकरणविषयत्वानङ्गीकारात् । अर्थप्रकाशनादिरूपक्रियाविशिष्टत्वेन क्रियारूपत्वं तु लिङ्गाद्यभावादनाशङ्क्यमेव ।

अथेतिकर्तव्यतात्वेन साकाङ्क्षत्वविशिष्टसंनिधौ पाठः प्रकरणमित्युच्यते, तत इतिकर्तव्यतात्वस्यैवाशक्यानिर्वचनत्वम् । तद्धि न तावत्प्रकरणेन फले जन्यमाने सहकारिकारणत्वम्, अग्नीषोमीयादेरप्याग्नेयाङ्गत्वापत्तेः; प्रयाजादीनां प्राधान्यापत्तेश्च ।

न चाग्नेयादीनां फलं प्रति करणत्वेन प्राधान्येऽपि न प्रयाजादीनां तत्प्रति करणता येन प्राधान्यमाशङ्क्येत । अपि त्वपूर्व एव तेन जन्यमाने सहकारिकारणत्वमिति वाच्यम् । तथात्वेऽपि विकृतौ फलकारणत्वेन सौर्ये लब्धेऽप्यपूर्वकारणत्वेन प्रयाजादिवदाग्नेयस्यापि जनकत्वाविशेषादतिदेशापत्तेरपूर्वस्य धर्मिग्राहकप्रमाणेन स्वकार्यजनकजन्यत्वेन क्लृप्तस्य कारणान्तरानपेक्षत्वाच्च ।

एतेन नापूर्वं प्रत्याग्नेयादीनामिव प्रयाजादीनां कारणत्वमात्रम् । अपि तु करणत्वमेव स्वस्वावान्तरादृष्टद्वारा ।(१)तत्श्चाग्नेयादौ तदभावान्न विकृतावतिदेश इत्यपास्तम् । (२)कारणानपेक्षत्ववत्करणानपेक्षत्वस्यापि तुल्यत्वात् । नापि करणजनकत्वमितिकर्तव्यतात्वम्, प्रयाजादिषु तस्य बाधितत्वात्, द्रव्यादावपि तत्सत्त्वेन प्रकरणग्राह्यत्वापत्तेश्च ।

एतेन करणानुग्राहकत्वमितिकर्तव्यतात्वमित्यपि निरस्तम् । करणतद्व्यापारतत्कार्यजनकत्वातिरिक्तस्यानुग्राहकत्वस्य दुर्व-

१. अतएवः । २. कारणान्तरानपे ।

त्वात् । एवमन्योत्पादकस्वभावव्यापारत्वमेवाख्यातार्थो न तु यागानुकूलयत्नत्वम् । तस्य च विशेषापेक्षायां प्रयाजादीनां तत्त्वेनान्वयः । अतश्च व्यापारसामान्यरूपभावनापेक्षितविशेषत्वमेवेतिकर्तव्यतात्वमिति पार्थसारथिमतमपास्तम् । निरुक्तेतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य निरुक्तसम्बन्धबोधकत्वेऽपि तदघटिताङ्गत्वबोधकत्वानुपपत्तेः । प्रयाजानां करणतद्व्यापारतत्कार्यजनकत्वायोगेन करणादीनामन्यप्रदवाच्यत्वायोगात् । प्रयाजादीनामुक्तविधभावनाविशेषत्वानुपपत्तेश्च ।

किञ्च प्रधानवाक्ये ऽपूर्वकल्पनातः पूर्वमाख्यातार्थोपस्थितिदशायामन्यपदार्थो न तावदपूर्वं सम्भवति । यागस्तु प्रयाजाद्यजन्यत्वाद्बाधित एव ।

न च फलम् ,समप्राधान्यापत्तेः । न च फलं प्रति यागस्यैव समानपदश्रुत्या करणत्वं प्रयाजादीनां तु कारणत्वमेवेति न साम्यमिति वाच्यम् । प्रयाजादीनामपि स्वस्वादृष्टरूपव्यापारसत्त्वेन करणत्वस्य दुर्निवारत्वात् । यागस्य साक्षात्फलेन समानपदोपात्तत्वाभावेन भावनाद्वारैव तस्य वाच्यत्वात्तदपेक्षया भावनारूपाणां प्रयाजादीनामेव कारणत्वस्य वक्तुमुचितत्वाच्च । अस्मन्मते तु यागानुकूलस्य यत्नस्यैव भावनापदार्थत्वात्तस्य च यागजननेनैव क्लृप्तप्रयोजनस्य फलकरणत्वकल्पनानुपपत्तेरिति वैषम्यम् ।

किञ्चैवं प्रधानस्य स्वतो निराकाङ्क्षत्वादन्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गत्वापत्तिः । विकृतौ च भावनाया विशेषापेक्षायामक्लृप्तोपकारैरपि सन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिः ।

अतश्चेतिकर्तव्यतात्वस्य दुर्निरूपत्वात्तद्घटितस्य प्रकर-

णस्यापि दुर्निरूपत्वमिति न तेन प्रयाजादीनां दर्शाद्यङ्गत्वम् । अपि तु फलाकाङ्क्षायां विश्वजिन्न्यायेन दर्शपूर्णमासफलानुषङ्गेण वा "वर्म भ्रातृव्याभिभूत्या" इत्यर्थवादेन वा फलं पौरोडाशिकसमाख्यया वा तत्साध्याग्नेयाद्यङ्गत्वं सन्निधानमात्रेण वोपहोमवत् षड्यागाङ्गत्वमिति प्राप्ते--

( सिद्धान्तः )

अभिधीयते-अस्ति प्रकरणं नाम चतुर्थं प्रमाणम् । न च तन्निर्वचनासम्भवः । अवगतफलसम्बन्धसन्निहितवाक्यप्रमितपदार्थवृत्ति यत्पूर्वप्रमाणानवगताङ्गताकविषये इतिकर्तव्यतात्वप्रकारकापेक्षणं तस्यैव तत्त्वात् । अस्ति हि दर्शपूर्णमासादौ प्रयाजादिविषये तत्, दर्शपूर्णमासयोस्स्वर्गादिवाक्यैः फलसम्बन्धस्यावगतत्वात् ।

अत एव फलसम्बन्धानवगतौ न समिद्यागस्य सत्यपीतिकर्तव्यताकाङ्क्षत्वे तनूनपाद्यागाङ्गता । अङ्गिनस्सन्निहितवाक्यप्रमितेति विशेषणाच्च नासन्निहितज्योतिष्टोमाद्यङ्गत्वं प्रयाजादीनाम् । अङ्गस्य पूर्वप्रमाणानवगताङ्गताकेति विशेषणाच्च न प्रोक्षणादीनां श्रुतिलिङ्गवाक्यैरवगतव्रीह्याद्यङ्गभावानां प्रकरणाद्दर्शाद्यङ्गतापत्तिः ।

न चेष्टापत्त्या तत्पदवैयर्थ्यम् । प्रोक्षणादीनां श्रुत्यादिनैवाङ्गत्वावगतौ व्रीह्यादिपदे आकृतावच्छेदकलक्षणातात्पर्यग्राहकतामात्रस्य प्रकरणकृत्यत्वात् । तदपि चेदं नेतिकर्तव्यताकाङ्क्षालक्षणस्य विनियोजकप्रमाणस्य कृत्यम् । अपि तु सन्निध्यपरपर्यायस्याधिकाराख्यस्यैव । लोके तस्यैव तथा क्लृप्तत्वात् ।

न चापूर्वसाधनीभूताङ्गत्वस्य श्रुत्यादिगम्यत्वेऽप्यपूर्वाङ्गत्वस्य यागाङ्गत्वस्य वा कथंभावात्मकप्रकरणगम्यत्वोपपत्तिः । अपूर्वा-

ादिकं प्रति प्रयोज्यत्वमात्रेणैव सम्बन्धोपपत्तावङ्गत्वकल्पने प्रमाणाभावात्, अपूर्वसाधनीभूताङ्गत्वस्यापूर्वाङ्गत्वं विनानुपपत्तेस्तस्यार्थसिद्धत्वेन प्रकरणव्यापारानपेक्षणाच्च । अत्र च प्रकरणोत्तरप्रमाणानां (१)बलाबलाधिकरणवक्ष्यमाणन्यायेन मन्थरप्रवृत्तित्वादङ्गताबोधकत्वानुपपत्तेर्व्यावर्त्याभावात्पूर्वपदं सिद्धानुवादमात्रम् ।

एवं वाक्यपदमध्येकवाक्योपात्तपदसन्निहिते बृहस्पतिसवादावश्यं वाक्यादिप्रमाणेनाङ्गत्वावगमात् तेनैव व्यावृत्तिसिद्धेस्स्पष्टार्थमेव । "वामदेव्यं गायती"त्यादौ च प्रमाणान्तरेणानवगताङ्गताकसामविषयेऽवगतफलस्य स्तोत्रस्य सन्निहितस्य स्वसाधनीभूतऋगक्षराभिव्यक्त्यर्थमपेक्षासत्त्वात्प्रकरणेनाङ्गत्वप्राप्तौ तद्व्यावृत्त्यर्थमितिकर्तव्यतात्वेति विशेषणम् । तस्य ऋगक्षराभिव्यक्त्यर्थं सामापेक्षायामपीतिकर्तव्यतात्वेन सिद्धरूपसामविषयेऽनपेक्षणात् ।

न चेतिकर्तव्यतात्वमेव दुर्निरूपम्, सर्वत्र ह्यशक्तस्य करणत्वायोगात् शक्तिः करणनिष्ठा समस्तीति निर्विवादम् । सा चास्मन्मते पदार्थान्तरमेव दण्डादिधर्मः । धर्मस्य च जन्यधर्मिवृत्तित्वात् जन्यत्वमेव रूपादिवदित्युत्सर्गः । क्वचिदेव तु बाधकसत्वेन कारणानिर्वचनेऽनादित्वमपि । अत एव दण्डादिवृत्तिशक्तिरनवस्थादोषभीत्याऽनादिरेव । यागादिवृत्तिशक्तिस्त्वपूर्वजननानुकूला उत्सर्गतस्स्वकारणमपेक्षमाणा यागस्यैव कारणत्वकल्पनेऽनवस्थापत्तेस्सन्निहितं प्रयोजनापेक्षं प्रयाजादि स्वकारणत्वेन गृह्णातीति इयमेवाकाङ्क्षेतिकर्तव्यताकाङ्क्षा । अत एव यावत्कारणलाभमेव तस्याजन्यत्वकल्पनान्नानवस्थादोषः । द्रव्यदेवतवामदेवादिसिद्धपदार्थस्य तु न कर-

१. पू. मी. ३-३-७.

णवृत्तिशक्तिजनकत्वम्। दृष्टविधयैव करणजनकत्वेन प्रयोजनाना-काङ्क्षत्वात्। स्वस्वानियमादृष्टोपहितस्य तु करणं प्रत्यजनकत्वा-त्तन्निष्ठशक्तिजनकत्वमिष्टमेव । नियमादृष्टोपहितत्वं च नोदा-सीनस्येति अवान्तरक्रियायुक्तस्य द्रव्यादेरितिकर्तव्यतात्व-व्यवहारोऽपि शास्त्रे एतन्मूलक एव। तत्सिद्धं स्वकरणनिष्ठश-क्तिजनकाकाङ्क्षत्वं भावनाया इतिकर्तव्यताकाङ्क्षत्वम्। शक्ति-रेव मूले सामर्थ्योद्बोधपदेन व्यवह्रियत इति द्रष्टव्यम् ।

न चैवमपि वामदेव्यादेस्सामर्थ्यादेव स्तोत्राङ्गतावगमादन-वगताङ्गताकेति विशेषणादेव व्यावृत्तिसिद्धेरितिकर्तव्यतात्व-प्रकारकेति विशेषणानर्थक्यमिति वाच्यम् । सामर्थ्यमात्रस्याति-प्रसक्तत्वात्सामान्यसम्बन्धबोधकप्रमाणाभावाच्चाङ्गताबोधकत्वा-नुपपत्तेः ।

अस्तु वा सूत्रस्वारस्यादितिकर्तव्यताकाङ्क्षत्वमेव प्रक-रणम्। तस्य तु योग्यविषयजिज्ञासायां प्रमाणान्तरानवगतेत्या-दिविशेषणम्। न तु तस्य लक्षणे प्रवेशः।श्रुत्यादिसर्वप्रमाणसाधा-रणस्य व्यावर्तकत्वादाकाङ्क्षाया आसत्तिसहकारेणैव कार-णत्वात् ज्योतिष्टोमाद्यनङ्गत्वस्य तदभावादेवोपपत्तेः संनिहिते-त्यादि विशेषणस्य प्रकरणलक्षणे प्रवेशः ।

अस्तु वा विकृतावातिदेशिकस्य प्राकरणिकत्वव्यावृत्तये सः। सत्यपि प्रकरणे विनिगमनाविरहेणैव नाङ्गताबोधो भवे-दिति प्रतिबन्धकीभूतविनिगमनाविरहनिवृत्त्यर्थं फलवत्त्वविशे-षणं, न तु तस्यापि प्रकरणशरीरत्वम् । तस्मादितिकर्तव्यताका-ङ्क्षत्वमेव स्वसंनिहितप्रतियोगिकं प्रकरणम् ।

न चैवमपि विकृतावुपहोमाकाङ्क्षया कल्पितायामितिकर्त-

ञ्यताकाङ्क्षायामपि प्रकरणत्वापत्तेर्लक्षणे(१) उत्थितत्वमप्याका-
ङ्क्षाविशेषणं देयमिति वाच्यम् । तस्य स्थानकल्पितस्य सत्यपि
प्रकरणत्वे कल्प्यत्वेन शास्त्रे तत्त्वेन व्यवहाराभावेऽपि अलक्ष्यत्वा
भावात् ।

न चैवमप्युक्तविधेतिकर्तव्यतात्वस्याङ्गत्वाघटकत्वात्कथम-
ङ्गत्वे प्रामाण्यं तद्घटितप्रकरणस्येति वाच्यम् । भावनाकरण-
निष्ठशक्तिजनकत्वस्य भावनाकारकत्वरूपतयाङ्गताघटकत्वात् ।
तदयमत्र बोधक्रमः—प्रधानगतेतिकर्तव्यताकाङ्क्षया प्रयाजा-
दिगतप्रयोजनाकाङ्क्षासहकृतया प्रयाजवाक्यस्य प्रधानवाक्यस्य
च स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशत्वरूप-
पदसान्निध्याख्यवाक्यकल्पनया सन्निहितपारिभाषिकपदानां च
पदार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूलयोग्यतानु-
मापकत्वाद्योग्यतारूपलिङ्गकल्पनया श्रुतेतिकर्तव्यतात्ववाचिपद-
रूपां श्रुतिं कल्पयित्वा ऽङ्गत्वघटकीभूतेतिकर्तव्यतात्वरूपं कृतिकार-
कत्वं बोध्यत इति साङ्गत्वबोधे प्रमाणम् । वाक्यैकवाक्यत्वकल्प-
नाप्रकारश्च—समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो
यजेतेति । तस्मात्सिद्धं प्रकरणस्याप्यङ्गत्वे प्रमाणत्वम् ।

प्रयोजनं पूर्वपक्षे तुल्यन्यायतया विकृतेरपीतिकर्तव्यताका-
ङ्क्षाभावादतिदेशासिद्धिः । सिद्धान्ते तु तत्सिद्धिरिति द्रष्ट-
व्यम् । त्रिध्यन्ताधिकरणे तु आकाङ्क्षणीयालाभनिमित्तका-
काङ्क्षाशान्तिरिति पूर्वपक्षोत्थानाद्द्रष्टव्यम् ।

सूत्रे ऽसंयुक्तपदं प्रमाणान्तरसंयुक्तस्य प्रयोजनानाकाङ्क्ष-
त्वात्प्रयाजगतप्रयोजनाकाङ्क्षारूपसहकारिकारणद्योतनार्थं स-
द्विषयपरम् । तच्चेतिकर्तव्यतात्मरूपात्प्रकरणादङ्गमिति शेषः ॥
इति चतुर्थं प्रकरणाधिकरणम् ॥ ४ ॥

---

१. उद्भूत ।

अथ पञ्चमं क्रमाधिकरणम् । ( ५ )

## सू—क्रमश्च देशसामान्यात् ॥३-३-१२॥ ( सि )

( विषयसंशयसङ्गतयः )

अत्र क्रमाख्यस्य प्रमाणस्याक्षेपसमाधानम् । पूर्ववदेव पादाध्यायसङ्गतिः । अनन्तरा त्वस्य प्रकरणकल्पनया विनियोजकत्वात्तदुत्तरमारम्भ इति द्रष्टव्या ।

( पूर्वपक्षः )

तत्र क्रमो नाम सादेश्यस्थानापरपर्यायो द्विविधस्तत्राभिप्रेतः—अनुष्ठानसादेश्यं पाठसादेश्यं च । अन्त्यमपि द्वेधा—यथाक्रमपाठस्सन्निधिपाठश्च । अयमपीदमुभयाकाङ्क्षाङ्गमात्राकाङ्क्षा चेति । प्रधानाकाङ्क्षा चात्रेतिकर्तव्यताकाङ्क्षाभिमाकाङ्क्षा द्रष्टव्या । तस्याः प्रकरणत्वेन स्थानत्वाभावात् ।

न चास्य षड्विधस्यापि विनियोजकत्वं सम्भवति । तथा हि—न तावदनुष्ठानसादेश्यस्य तत्, पशुधर्माणां ह्यग्नीषोमीयाङ्गत्वावगमात्पूर्वमौपवसथ्येऽहन्येवानुष्ठानमित्यत्र प्रमाणमस्ति । सत्यपि तत्र पाठे प्रकरणेनानर्थक्यतदङ्गन्यायमहकृतेन पशुत्रयेऽप्यङ्गत्वावगमात्तेषां कालभेदेन तत्र तत्रानुष्ठानप्रतीतेः । न हि प्रयोजनावगमात्पूर्वमनुष्ठानावगतिः ।

अत एवान्यत्रापि विश्वजिन्न्यायेन स्वर्गकल्पनस्यैवापत्तेः नानुष्ठानसादेश्यस्मरणमस्ति । प्रधानाकाङ्क्षयाऽनुष्ठानसादेश्यं त्वन्यत्र सम्भाव्यमानमपि साक्षाद्वाक्यकल्पकत्वेनैव तस्योपपत्तौ प्रकरणकल्पकत्वे प्रमाणाभावान्न पञ्चमप्रमाणेऽन्तर्भवति । एतेनोभयाकाङ्क्षया पाठक्रमोऽपि व्याख्यातः ।

किञ्च यत्र ब्राह्मणे एकमेव प्रधानं संहितायां चैकमेव त-

दपेक्षितं याज्यानुवाक्यायुगलं तत्र वाचनिकाङ्गसन्दंश-
रूपाधिकारेणैव सन्निधिरूपेण तत्सिद्धेः सङ्कीर्णत्वम् । यत्राप्यने-
कानि प्रधानानि तत्रापि सन्निधानरूपाधिकारस्य साधारणत्वेन
सर्वेषां मन्त्राणां सर्वार्थत्वात् पाठक्रमस्यानिर्णायकत्वम् । न च
धिकारः पाठक्रमाद् दुर्बल इत्यत्र प्रमाणमस्ति, कल्पनाया(१)स्स-
मत्वात्, प्रत्युत तस्यैवेतरनिष्ठाकाङ्क्षासन्निधिकार्यप्रतिबन्धकत्वस्य
नि ष्प्रमाणकस्य कल्पनेन दुर्बलत्वाच्च केषामधिकार इत्येवं विशे-
षजिज्ञासाभावेन स्पष्टस्योपसंहाराविषयत्वाच्च । यत्र दर्शपूर्णमा-
सादौ स्पष्टलिङ्गकयाज्याद्याम्नानेनैवाग्नेयादीनां नैराकाङ्क्ष्यं
तत्र पारिशेषाद्देवोपांशुयाजे साकाङ्क्ष(२)सन्निधिना याज्या-
नुवाक्यायुगलस्याङ्गत्वसिद्धेः कृतं पाठक्रमेण ।
एवं निराकाङ्क्षप्रधानसंनिधिस्थलेऽपि परिशेषादेवोपांशु-
याजे 'दब्धिर्नामासी'त्यनुमन्त्रणमन्त्रस्यान्यतराकाङ्क्षासहकृताधि-
कारेण प्रधानाकाङ्क्षां परिकल्प्य विनियोगोपपत्तेः कृतं पाठक्रमेण ।
एवं संनिधिपाठोऽपि निराकर्तव्यः । साकाङ्क्षप्रधानस्थले
तावत्सान्नाय्यसन्निधिपठितपात्रशुन्धनमन्त्रे साकाङ्क्षबुद्धिविपरि-
वृत्तिरूपाधिकारस्याग्नेयादिसाधारणत्वात् तस्य च पूर्वोक्तयु-
क्त्या "आनन्तर्यमचोदने"तिन्यायेन च प्रयाजादाविवाव्यवहित-
सन्निध्यपेक्षया प्राबल्याम्न केवलसान्नाय्याङ्गत्वम् ।
किञ्चात्र लिङ्गेनैव विनियोगान्न सन्निधेर्विनियोजकत्वम् ।
तस्य सामान्यसम्बन्धबोधकत्वेनाविनियोजकत्वात् । निराकाङ्क्ष-
सन्निधिस्तु विकृतावुपहोमादेर्विनियोजकत्वेनोच्यमानो नैव युक्तः,
विकृतेरितिकर्तव्यताकाङ्क्षाया जागरूकत्वात् ।
न च क्लृप्तप्रयोजनत्वेन प्राकृतैरेव तच्छान्तिः प्रकृतौ याव-

१. स्समानत्वात् ।   २ सन्निधानात् ।

त्वप्रमाणप्रमितत्वेनेतिकर्तव्यताकाङ्क्षानिवर्तकत्वदर्शनाद्विहाप्युपहो-मादिसहकृतानामेव तन्निवर्तकत्वात् ।

पार्थसारथिमते क्लृप्तप्रयोजनत्वस्याकिञ्चित्करत्वेन व्यापार-सामान्यस्य विशेषापेक्षायां सन्निहितोपहोमानामेव तत्त्वेनान्वयो-पपत्तावुभयाकाङ्क्षाया अव्याहतत्वाच्च । तस्मान्न षड्विधस्यापि स्थानस्य विनियोजकत्वमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—क्रमश्च षड्विधोऽपि स्थानापरपर्यायो विनियो-जकः । तथाहि—

अनुष्ठानसादेश्यस्थले तावत्प्रकरणेन क्लृप्तप्रयोजनस्य दैक्ष-पशुयागस्याक्लृप्तप्रयोजनानां च पशुधर्मादीनां समानदेशेऽनुष्ठा-नादेव तेषां फलवदङ्गत्वम् ।

न च प्रमाणासिद्धिः । तदनुष्ठानक्रमनियामकस्याग्नीषोमप्रण-यनविध्यनन्तरपाठस्य सत्त्वेन तदनन्तरमनुष्ठानावगमोपपत्तेः ।

यद्यपि च पाठस्य स्वविरोधफलवत्त्वाप्रतिसन्धाने सत्यनुष्ठा-ननियामकत्वं व्यभिचरितं तथापि तदप्रतिसंधानदशायामुत्प-त्तिवाक्ये इष्टसामान्यस्य भाव्यत्वावगममात्रेणानुष्ठानावगतेः पा-ठस्य तन्नियामकत्वात्तदनुष्ठानसादेश्योपपत्तिः ।

वस्तुतस्त्वङ्गप्रयोगस्य प्रधानवाक्य एव विधेयत्वात्फलवि-शेषानवगमेऽनुष्ठानस्य दुरवगमत्वादेवं वाच्यम्—नाग्नीषोमप्रणयन-स्य पशुधर्मैः क्रमः, भिन्नप्रयोगपरिग्रहस्य भावित्वात् । अपि त्व"ग्नीषोमाभ्यां प्रणीयाथ पशुतन्त्र"मित्यादिकल्पसूत्रानुसारेण श्रुतिवाक्यमपि क्त्वाप्रत्ययान्तमेवास्तीत्यवगम्यते । सोऽपि च कालविधिरेव । न त्वङ्गाङ्गिभावविधिः । पशुधर्माणां श्रुत्यादिभिः

पशुसंस्कारार्थत्वेन क्लृप्तप्रयोजनत्वात् ।

अस्तु वौपवसथ्येऽहनि पशुतन्त्रामिसाकारिका श्रुतिः । सर्वथा कालस्य फलावगमनिरपेक्षस्यैव प्रयोगविधायित्वादनुष्ठानसादेश्योपपत्तिः ।

नन्वेवमपि पशुधर्माणां श्रुत्यादिभिरेवाङ्गत्वावगमान्नानुष्ठानसादेश्यस्य विनियोजकत्वम् । ये त्वारादुपकारकाः पशुप्राकृताङ्गसन्दष्टास्तेषामवान्तरप्रकरणेनैवाग्नीषोमीयाङ्गत्वसिद्धेः नैव तस्य तत् । ये त्वप्राकृतपशुधर्मसन्दष्टा असंदष्टा एव वा, तेषां बलवता महाप्रकरणेन ज्योतिष्टोमाङ्गत्वस्यैवापातात्कृतमनुष्ठानसादेश्येनेति चेत्—

सत्यमेवम्—तथापि पशुधर्माणां तद्विधावपूर्वसाधनलक्षणातात्पर्यग्राहकतामात्रेण विनियोजकत्वव्यवहारो भाक्तो मूले ।

वास्तवं तूदाहरणमेवम्—यत्र फलवदेकं समाम्नातं स्थलान्तरे चानारभ्यविधयाऽफलमारादुपकारकं तयोश्चोभयोरपि वचनद्वयात्स्वतन्त्रैककालकर्तव्यता तत्र तस्याफलस्य फलवदङ्गत्वमनुष्ठानसादेश्यादिति ।

न च तत्राप्यफले विश्वजिन्न्यायादिसर्वप्रमाणाभाव एव तस्योदयात् । अत एव सिद्धमनुष्ठानसादेश्यस्य विनियोजकत्वं तच्च फलवतो दर्वीहोमत्वेनापूर्वत्वे उभयाकाङ्क्षया विकृतित्वे त्वन्यतराकाङ्क्षयेति ध्येयम् ।

एवं पाठक्रमोऽपि । लोके देवदत्तविष्णुमित्रयज्ञदत्तेभ्यो नीलपीतरक्तवस्त्राणि देयानीत्यादौ तेनान्वयदर्शनात् ।

न चाधिकारेण सङ्कीर्णत्वादसङ्कीर्णोदाहरणाभावः । सत्यपि चोपांशुयाजादौ याज्यानुवाक्यादेरनुमन्त्रणादेश्च परिशेषसिद्धाधिकारेणैवाङ्गत्वावगतिसिद्धावुदाहरणान्तरत्वोपपत्तेः ।

परिशेषसिद्धिश्चाग्नेयादौ स्पष्टलिङ्गकयाज्यानुवाक्यानुमन्त्रणैरवरोधात्सुलभैवेति नात्रैवासङ्कीर्णत्वोपपादनाय यतितव्यम् ।

काम्ययाज्यानुवाक्यास्थले तु लिङ्गस्यैव विनियोजकत्वात्क्रमस्य चापूर्वविशेषसम्बन्धित्वलक्षणातात्पर्यग्राहकत्वमात्रत्वेन विनियोजकत्वं स्पष्टमेव । तस्मादीदृगुदाहरणं वाच्यम्—

यत्र विभिन्नफलकानेकप्रधानाम्नानं ब्राह्मणे, मन्त्रे च तेनैव क्रमेण जपादिमन्त्रोच्चारणविधानं तत्र तत्तद्विधीनां पाठक्रमेणैव तत्तत्प्रधानविध्युपस्थापकत्वात्तत्तत्प्रधानाङ्गता तत्तन्मन्त्रोच्चारणस्य पाठक्रमेणैव ।

न चात्राप्यधिकाराशङ्का । मन्त्रकाण्डे वाचनिकाङ्गसन्दंशाथशब्दाद्यभावेन तस्यानुद्भवात् ।

न चैवं मन्त्रपाठक्रमस्यापि नियमेन विवक्षितग्रन्थान्तरस्थप्र-
नविध्युपस्थापकत्वे प्रमाणाभावादङ्गत्वानुपपत्तेः उच्चारणानां विश्वजिन्न्यायेन स्वर्गफलकत्वापत्तिः । आद्यमन्त्रोच्चारणविधितः पूर्वमाद्यप्रधानसम्बन्धितया वाचनिकान्तिमाङ्गाम्नानेन तदुत्तराम्नाताद्योच्चारणविधेर्द्वितीयप्रधानविध्युपस्थापकत्वोपपत्त्या तदुत्तरेषामपि तदुत्तरोपस्थापकत्वोपपत्तेः ।

अत एवाद्यस्यैव वाचनिकेनाधिकारात्तदङ्गत्वमेव सर्वेषामित्यनाशङ्क्यम् । वाचनिकस्यान्तिमत्वेन तदधिकारविच्छेदात् । अत्र जपादिमन्त्रोच्चारणस्यारादुपकारकत्वाल्लिङ्गादिविषयत्वाभावख्यापनायोदाहरणत्वम् । अत्रापि पूर्ववद्दर्विहोमादिरूपत्वे । उभयाकाङ्क्षाविकृतिरूपत्वे त्वन्यतराकाङ्क्षेति द्रष्टव्यम् ।

एवं संनिधेरप्यधिकारापरपर्यायस्य विनियोजकत्वम् । स हि क्वचिद्वाचनिकाङ्गसन्दंशाथशब्दादिना विभाव्यते । क्वचित्तं विनैव फलवत्प्रधानविध्युत्तरं अफलस्याम्नानात् । तस्य च विनियोज-

कत्वोदाहरणं यद्यपि न शुन्धनमन्त्रः संभवति, तस्य लिङ्ग-विनियुक्तत्वेन संनिधानप्रमाणकविनियोगाविषयत्वात्। अत एव तत्र पाठाव्यवहितसंनिधिरपूर्वविशेषलक्षणातात्पर्यग्राहक एव।

न च व्रीह्यादाविव बुद्धिविपरिवृत्तिरूपाधिकारेण गौणप्रक-रणेन सर्वार्थत्वावगमान्नात्यन्तसंनिधेस्सान्नाय्यापूर्वमात्रसम्ब-न्धित्वलक्षणा तात्पर्यग्राहकत्वम्। गौणप्रकरणात् सर्वार्थत्वकल्पने आग्नेयादौ पात्रप्रोक्षणविध्यभावेन मान्त्रवर्णिकतात्क्रियाविधिक-ल्पनया तदापत्तेर्लाघवलिप्सया क्लृप्तो यत्र सान्नाय्ये तदीयपात्र-प्रोक्षणविधिः तत्रैव द्वारस्य क्लृप्तत्वेन निवेशौचित्यात्।

वस्तुतस्तु द्वारगतक्लृप्तत्वेन सान्नाय्यमात्रविषयत्वाङ्गीकारे पाठसंनिधानस्याकिञ्चित्करत्वापत्तेः आग्नेयादिपात्रप्रोक्षणस्यापि समाम्नानाच्च वाचनिकाङ्गतन्देशगम्यावान्तराधिकारेण सांना-य्यमात्रविषयत्वं तस्य चाभिक्रमणन्यायेन महाधिकारापेक्षया शीघ्रोपस्थितिकत्वाद्बलवत्त्वं युक्तमेव।

वस्तुतस्तु तैत्तिरीयशाखायां पुरोडाशपात्रप्रोक्षणे पृथगेत-स्यैव मन्त्रस्य पाठादुभयत्रापि मन्त्रस्संनिधिविनियोज्यस्त-थाप्युपहोमानां विकृत्यङ्गत्वे संनिधिपाठस्योदाहरणत्वं तेषामुक्त-प्रमाणातिरेकेणाविनियोगात्।

न च प्रकरणाद्विनियोगः, प्रथमावगतेन क्लृप्तोपकारप्राकृता-ङ्गसम्बन्धेनैवेतिकर्तव्यताकाङ्क्षाशान्तेः।

यद्यपि च प्रकृतौ वस्तुतो यावत्प्रमाणप्रमितानामिति कर्तव्यताकाङ्क्षाशामकत्वं दृष्टं तथापि न तत्वेन रूपेण तत्, अपि तु संहितप्रयाजादित्वेनैव, तेनैव रूपेण जनकतया क्रतूपका-रोद्देशेन विहितत्वात्, अतश्च तादृशरूपस्य विकृतावपि सत्त्वात्

प्रकरणोपपत्तिः ।

वस्तुतस्तु सहितत्वमपि न तन्त्रम्, अपितु प्रयाजादिजन्यादृष्टत्वमेव । तच्च साङ्गजन्यमेवेति प्रकृतौ साहित्यस्याप्यङ्गत्वान्न तद्विनैकैकेनाङ्गेन तत्सिद्धिः । गृहमेधीयादौ च आज्यभागयोः परप्रयुक्ताङ्गान्तरसाहित्यानाक्षेपकत्वेन स्वतस्तदनपेक्षत्वात्तद्विनैव साङ्गत्वोपपत्तेराकाङ्क्षाशामकत्वोपपत्तिः । विकृत्यन्तरे च प्राकृताङ्गमात्रेणोपहोमानन्वयेऽपि प्रकृतौ तेषामाकाङ्क्षाशामकत्वस्य क्लृप्तत्वाद्विकृत्याकाङ्क्षाशामकत्वं नानुपपन्नम् ।

अत एव तत्रोपहोमविधिं दृष्ट्वा तदन्यथानुपपत्त्यैव विकृतेराकाङ्क्षामुपजीव्य तेषां तदङ्गत्वेऽवगते तत्साहित्यस्याप्यङ्गत्वावगमान्न प्राकृताङ्गमात्रेण क्रतूपकारसिद्धिः । तस्माद्युक्तमिदमुदाहरणम् ।

उभयाकाङ्क्षया संनिधेर्विनियोजकत्वे तु यद्यपि नैवोदाहरणं संभवि । तादृशस्थले सर्वत्र योग्यतारूपलिङ्गस्यैव विनियोजकत्वात् तथापि तस्यापूर्वविशेषोपस्थापनादिना तदुपयोगित्वाद्विनियोजकत्वव्यवहार इति सिद्धं क्रमस्य विनियोजकत्वम् ।

क्रमसामान्यलक्षणं तु—इतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोस्संनिधिः । इतिकर्तव्यतात्वेनायोग्यत्वं द्वेधा—क्वचित्तदाकाङ्क्षाविरहात्, यथा विकृतौ । क्वचिदव्यापारात्मकत्वात्, यथाऽनुमन्त्रणजपादिमन्त्रादौ । अत्र चैकवाक्योपात्तव्रीहियागादिसंनिधेरपि तथात्वप्रसङ्गाद्वाक्यार्थेत्युक्तम् ।

प्रयाजाद्यङ्गवाक्यप्रधानवाक्यार्थयोस्संनिधौ स्थानत्वापत्तिनिरासार्थमाद्यविशेषणम् । अनुष्ठानसादेश्यसङ्ग्रहार्थमर्थपदग्रहणम् । अत्रारादुपकारकस्थले तावद्विकृत्याकाङ्क्षाया एव कल्पनीयत्वात्प्रकरणकल्पनसापेक्षत्वम् । अनुमन्त्रणादिसिद्धपदार्थ

स्थले तु प्रधानाकाङ्क्षा तन्नियमादृष्टद्वारा चेतिकर्तव्यतात्वमिति द्वितयकल्पनसापेक्षत्वम् ।

अत एव सर्वेषु क्रमभेदेष्वयं विभागः निराकाङ्क्षानुष्ठानसादेश्यस्थले तावत्प्रधानाकाङ्क्षाया एव कल्पनीयत्वात्प्रकरणादौर्बल्यं स्पष्टमेव । साकाङ्क्षानुष्ठानसन्निधेस्त्वारादुपकारकस्थले यद्यपि न किञ्चित्कल्प्यं तथापि पाठसंनिधिमात्रघटितात्प्रकरणाद्दौर्बल्यं सुसम्पादमेव । विधिसांनिधानस्य पुरस्स्फूर्तिकतया तद्घटितप्रकरणस्य प्राबल्यात् ।

अत एव तादृशस्थलेऽन्यसमीपेऽनुष्ठीयमानस्यापि पाठसंनिहितफलवदङ्गत्वमेव । अनुष्ठानसंनिहितफलवतस्तु परं साकाङ्क्षत्वे प्रसङ्गेनोपकारः । अनयोस्तु द्विविधयोः परस्परविरोधे निराकाङ्क्षानुष्ठानसादेश्यस्य दौर्बल्यं स्पष्टमेव ।

एवं पाठसादेश्याद्द्विविधादप्यनुष्ठानसादेश्यस्य दौर्बल्यं पूर्वोक्तविधयानुसन्धेयम् ।

पाठसादेश्ययोस्तु परस्परं विरोधे यथाक्रमपाठस्य संनिधिपाठापेक्षया दौर्बल्यमेकग्रन्थस्थताघटितत्वेनेतरस्य प्राबल्यात् । भिन्नग्रन्थस्थसंनिधेस्तु वैपरीत्यम् । तस्मात्सिद्धं षड्विधस्यापि क्रमस्य विनियोगोपयोगित्वम् । सूत्रं प्रयोजनं च स्पष्टम् ॥

इति पञ्चमं क्रमाधिकरणम् ।

अथ षष्ठं समाख्याधिकरणम् ॥ ६ ॥

## सू–आख्या चैवं तदर्थत्वात् ॥ ३–३–१३ ॥ (सि)

( विषयसंशयौ )

दर्शपूर्णमासादिषु याजुर्वैदिकपदार्थेष्वाध्वर्यवमिति समाख्या, आग्वैदिकेषु हौत्रमिति समाख्या। सामवैदिकेष्वौद्गात्रमिति समाख्या वेद एव प्रयुक्ता। तथा होतृचमसः पौरोडाशिकमित्याद्यपि पात्रविशेषे दार्शपौर्णमासिकपदार्थेषु च वेद एव प्रयुक्ता। क्वचिच्च सोमचमस इत्याद्या याज्ञिकप्रयुक्ता लौकिकी। द्विविधापि सा न विनियोगे स्वतन्त्रं प्रमाणमित्याक्षिप्यते।

( सङ्गतिः )

पादाध्यायसङ्गती पूर्ववत्। अनन्तरा तु क्रमकल्पकत्वेन तत्सापेक्षत्वात्।

( पूर्वपक्षः )

तत्र समाख्या तावन्न यौगिकी अध्वर्युकर्तृकलौकिकपदार्थेषु प्रयोगाभावेनावयवार्थव्यभिचारात्। अतश्चाश्वकर्णपङ्कजादिशब्दवद्रूढा योगरूढा वेत्यङ्गीकर्तव्यम्।

न च रूढत्वेऽप्यपेक्षाबलादाध्वर्यवसमाख्यासादृश्येनाध्वर्युसमाख्योपस्थितेर्युक्तस्तया कर्तृनियम इति भर्तृमित्रादिमतं शक्यम्। रूढशब्दसादृश्यमात्रेणोपदेशविषये नियमायोगात्। इतरथा सुतरां कण्वरथन्तरे रथन्तरधर्मातिदेशापत्तेः। अस्तु वारुणाधिकरणानुपपादितरीत्या कुत्रापि योगरूढ्यनङ्गीकारात्समाख्याया यौगिकत्वं तथापि नास्या स्वातन्त्र्येण मानत्वम्, विध्यभावेन पदार्थमात्रवाचिन्यास्समाख्याया विनियोजकत्वायोगात्।

यद्यपि चाप्राप्तार्थत्वेन तत्कल्पनया प्रयोगविध्येकवाक्यत्वेन वा तदुपपत्तिः तथाप्याद्यत्वेनमित्यादौ प्रकृत्याध्वर्युस्ताद्धितेन पदार्था अन्वाधानादयः। (१)कर्तृतादिरूपस्तु सम्बन्धो न कस्यचिद्वाच्य इति कथं तया तन्नियमसिद्धिः।

यदि तु वैयाकरणवत्सम्बन्धसामान्येऽपि शक्तिरिभ्युपगम्यते तदापि विशेषलाभाभावस्तदवस्थ एव।

किञ्चैवं पदश्रुत्यैव विनियोगोपपत्तेः कृतं समाख्यया। न हि 'सोमेन यजेते'त्यादौ समाख्यया यागस्य (२)करणत्वमिष्टम्।

एतेन यद्यपि मीमांसकमते सम्बन्धस्य संसर्गविधया लक्षणया वा भानं तथापि न समाख्यायास्स्वातन्त्र्यम्, पदश्रुतिवदेव वाक्यविधया विनियोजकत्वोपपत्तेः। न ह्या'ग्नेयोऽष्टाकपाल'इत्यादावग्नेरष्टत्वादेर्वा विनियोगस्सामाख्यानिक इष्टः। अस्तु वा सा (३)स्वतन्त्रं मानं, तथापि कथं सा स्थानादिकल्पिका। प्रकृतिप्रत्ययाभ्यां स्वशक्यार्थस्य सम्बन्धसामान्यस्य चोपस्थितातत्राकाङ्क्षादिवशेन कर्तृतादिरूपसम्बन्धविशेषपरत्वप्रमापणोपपत्तेः। यापि हि लौकिकी समाख्या तस्यां श्रुतिन्यायेन मूलश्रुतिकल्पकत्वेऽपि न स्थानादिकल्पकत्वम्। वैदिकयास्तु न तदपीति दुर्लभतरं षष्ठप्रमाणमिति प्राप्ते—

( सिद्धान्तः )

अभिधीयते—समाख्यापि षष्ठं प्रमाणम्। तथा हि—सर्वत्र क्लृप्तावयवशक्तिकं पदं द्विविधं—प्रकृतविधौ वाक्यार्थान्वय्यवयवार्थकं तद्भिन्नं चेति। तत्राद्यं "निर्मन्थ्येनेष्टकाः पचन्ति" "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती"त्यादौ मन्थनप्रोक्षणादेः पाकावघाताद्यन्वयात्तत्र वाक्येनैव विनियोगः। द्वि·

१. कर्तृताख्यस्तु। २. फलकरणत्वं। ३. स्वातन्त्र्येण।

तीयं 'त्वाध्वर्यवमधीते' 'प्रैतु होतुश्चमस' इत्याद्यन्यपरविधिमन्त्रार्थवादादौ । तत्राध्वर्य्वादेः कर्तुर्भक्षणस्य चाध्ययनादावनन्वयात्तत्र च विशेष्यमात्रस्य काण्डपात्रादेः प्रकृतक्रियान्वये जाते विशेष्ये विशेषणरूपावयवार्थोऽन्वयस्य सिद्धवन्निर्देशात्तदन्यथानुपपत्त्या अवयवार्थसम्बन्धबोधकं वाक्यमाकाङ्क्षायोग्यतादिवशेन कल्पयित्वा कर्तृतादिरूपस्सम्बन्धः प्रतीयते । तस्य च न वाक्यादिना प्रमाणान्तरेण सिद्धिरिति सिद्धस्समाख्यानिको विनियोगः ।

यद्यपि चैतादृशे विषये विध्यन्तरानुपपत्तिसिद्धो मान्त्रवर्णिक आर्थवादिको वा कर्तृताविधिरित्यपि शक्यते व्यवहर्तुं तथापि तत्र यौगिकोपमान्यथानुपपत्तेरेव कारणत्वात्तयैव व्यवहारः । यत्र तु याज्ञिकप्रसिद्धिमात्रं तत्र विधेस्तदन्यथानुपपत्तिमात्रकल्पकत्वाद्युक्त एव तया व्यवहारः । अत्र च समाख्ययात्रयवार्थयोस्संसर्गविधादिना सम्बन्धे बुद्धे तन्निर्देशान्यथानुपपत्त्या न स्वतन्त्रविधिः कल्प्यते -अध्वर्युरन्वाधानादि कुर्यादिति; गौरवापत्तेः । अपि त्वन्वाधानादिवाक्यस्याध्वर्युं वृणीते इत्यध्वर्युवाक्यस्य चैकवाक्यतासम्पादकपदमात्रं—यमध्वर्युं वृणीते सोऽग्नीनन्वादधातीति । तच्च द्वयोर्विध्योः कथञ्चिदेकबुद्धिस्थतत्वेत्येवंविधां स्थानकल्पनां विना न सम्भवतीति तत् कल्पयित्वा पूर्वत्रदेवाध्वर्योस्तन्नियमादृष्टद्वारेतिकर्तव्यतात्वं प्रकल्प्यान्वाधानस्य तदाकाङ्क्षारूपप्रकरणकल्पनया द्वयोर्विध्योर्महाविध्येकदेशत्वाख्यपदसंनिधिरूपं वाक्यं कल्प्यते । तश्चाध्वर्युमात्रनिष्ठं योग्यतारूपं लिङ्गं प्रकल्प्यैकवाक्यतासम्पादकपदरूपश्रुतिकल्पनाद्युक्तमस्याः षष्ठप्रमाणत्वम् ॥

प्रयोजनं रूढत्वसम्बन्धानवगमादि पूर्वपक्षेऽन्वाधानादावध्व-

र्यौर्नियमाभावः। श्रुत्याद्यन्तर्भावपूर्वपक्षे स्थानाद्यपेक्षया भाव-त्यम्, सिद्धान्ते नेति द्रष्टव्यम्॥ सूत्रं स्पष्टम्॥

इति षष्ठं समाख्याधिकरणम्॥

---

अथ सप्तमं श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्याधिकरणम्॥
(बलाबलाधिकरणम्) (७)

## सू—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्॥३-३-१४॥

तदेवं श्रुत्यादीनां षण्णां विनियोगहेतुत्वमुक्तम्। इहेदानीं तेषां समवाये कस्य दौर्बल्यमिति चिन्त्यते। समवायश्च विरोधे सत्येकविषयत्वम्, तद्यथा—प्रमाणानां विषयश्शेषः। स यत्रैको द्वयोः प्रमाणयोर्विरुद्धानेक(१)शेष्यन्वयित्वाच्च विरुध्यते, यथा—एकैवैन्द्री श्रुतिलिङ्गयोर्गार्हपत्येन्द्ररूप(२)शेष्यन्वयित्वात्। यत्र वा प्रमाणविषयशेषानेकत्वेऽपि शेषविषयीभूतशेष्ये-कत्वम्, यथा—एकस्मिन् गार्हपत्ये श्रुत्यैन्द्रीशेषः, लिङ्गाच्च तेनैव द्वारेण प्रकरणस्थाऽऽग्नेयी, तत्राऽपि शेषिण एव परम्परया कथञ्चित्प्रमाणाविषयत्वाद्विरुद्धानेकशेषान्वयितया च विरुद्धत्वा-त्समवायः। अयं च शेषसमवायत्वेनैव वार्तिके व्यवहृतः। अस्माभिस्तु सूत्रस्वारस्यात्प्रमाणसमवाय एव कथंचिद्व्यवहि-यते। अत्र च न विरोधमात्रं समवायस्य; सत्यपि विरोधेऽश्वमहि-षादिवदेकविषयत्वाभावे बलाबलस्याभावात्।

---

१ विशेष्यान्वयाच्च। २. विशेष्यान्वयित्वात्।

नाप्येकविषयत्वमात्रम् । सत्यप्यरुणया क्रीणातीत्यादावारुण्यसाधनीभूतक्रयार्थत्वरूपैकार्थविषयत्वे श्रुतिवाक्यप्रकरणानां विरोधाभावेन तदभावात् ।

वस्तुतस्तु श्रुतेरेव तत्र विनियोजकत्वं, वाक्यप्रकरणयोस्तूद्देश्यविशेषणसमर्पणमात्र एव व्यापार इति नैकविषयत्वम् । अतश्च द्वयोः प्रमाणयोरेकविषयत्वमेव समवायशब्दार्थः । तत्र क्वचिदेकस्मिञ्छेषे द्वयोः प्रमाणयोर्विभिन्नशेषिविषयत्वेन ज्ञापकत्वात् । क्वचिच्च द्वयोश्शेषयोरैकरूप्येणैकशेषिविषयत्वेन ज्ञापकत्वात् । अत्र चैकरूप्यग्रहणं वैमृधप्रयाजादीनामेकदर्शपूर्णमासाख्यशेषिविषयत्वेन वाक्यप्रकरणज्ञाप्यत्वेऽपि न समवायः, द्वारैक्याभावात् । अस्मिंश्च स्थलद्वये प्रमाणयोः प्रबलदुर्बलभावे बाध एव । साम्ये त्वाद्ये समुच्चयः, द्वितीये विकल्प इति द्रष्टव्यम् ॥

यत्र त्वेकस्यैव शेषस्यैकशेषिविषयत्व एव प्रमाणद्वयं तत्र वैषम्ये प्रबलस्यैव विनियोजकत्वं न दुर्बलस्येति । तत्रापि नैकविषयत्वाख्यसमवायः । अस्तु वा तत्रापि सः । प्रयोजनाभावात्तु न विचारविषयः । साम्ये त्वेकस्यैव विनियोजकत्वमितरस्य तु पुनश्श्रुतित्वेन प्रयोजनान्तरकल्पनम् । विनिगमकाभावे तु द्वयोरप्यभ्युदयशिरस्कत्वकल्पनया विनियोजकत्वं कर्मान्तरत्वकल्पनया विषयभेद एव वेति द्रष्टव्यम् ॥

तदिह यथैव विनियोजकप्रमाणानां समवाये बलाबलं चिन्त्यते, तथा सामान्यसम्बन्धबोधकप्रमाणानामुद्देश्यविशेषलक्षणातात्पर्यग्राहकाणां च परस्परं समवायेऽपि बलाबलं चिन्तनीयम् । इदं च तत्र तत्र प्रकटीकरिष्यते । तदिह वाक्यादिप्रमाणदौर्बल्यस्य तावत्तद्गम्यविनियोगापवादोपयोगित्वात्पादाध्यायसङ्गतिस्स्पष्टैव । दौर्बल्यं च प्रतियोगिप्रमाणगतप्राबल्य-

सापेक्षमिति तन्निरूपणमर्थसिद्धम् ।

एवं च श्रुतिलिङ्गयोः श्रुत्योर्लिङ्गयोश्च परस्परविरोधे बलाबलविचारः प्रासङ्गिक इति नातीव तत्र पादसङ्गतौ यतितव्यम् । तत्र शेषानेकत्वे तावच्छ्रुत्योः श्रुतिलिङ्गयोश्चेदमुदाहरणम्—

( श्रुतिलिङ्गविरोधोदाहरणम् )

अग्नौ "कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुतम् । तत्रायं मन्त्रः किं तद्धितश्रुत्या लिङ्गेन चेन्द्राङ्गमपि ? किं वा तृतीयया गार्हपत्यस्यैवाङ्गमिति सन्देहः ।

न चास्य विचारस्य प्रासङ्गिकत्वे कथं प्रथमतः कर्तव्यता ? पादसङ्गतस्य विचारस्यैव प्रथमतः कर्तव्यत्वौचित्यादिति वाच्यम् । वाक्यापेक्षया श्रुतिप्राबल्यस्य पूर्वनिराकरणीयत्वेऽपि श्रुतेः श्रुत्यपेक्षया लिङ्गापेक्षया च प्राबल्ये सिद्धे वाक्यापेक्षया तस्य सुखोपपादत्वेनास्य विचारस्य प्राथम्योपपत्तेः ।

अनन्तरा तु पूर्वप्रमाणस्वरूपेऽवगते तद्गतबलाबलविचारोदयात् स्पष्टा ।

तत्र तृतीयाश्रुत्या तावदयं मन्त्रो गार्हपत्याङ्गमित्यविवादमेव ।

न चात्र मन्त्रविशिष्टोपस्थानस्य गार्हपत्याङ्गत्वेन विधानादारुण्यादिवन्मन्त्रस्य धात्वर्थाङ्गत्वमेव तया भवेन्न गार्हपत्याङ्गत्वमिति वाच्यम् । अभिधानस्य मन्त्रसामर्थ्यबलेन समीपस्थितेश्चामन्त्रणविभक्तिबलेन प्राप्तत्वादिह लाघवेन गार्हपत्योद्देशेन मन्त्रमात्रस्यैवेन्द्रियकामवाक्यवत् विधेयत्वात् । अतश्च युक्तमेव तृतीयया तदङ्गत्वेन विनियोगः । द्वितीयायाः श्रुतित्वपक्षे च तथापि सः । इन्द्राङ्गत्वमपि च तद्धितश्रुत्या । स हि प्राधान्येन प्रकाश्यत्वरूपं देवतात्वं वदन्मन्त्रं प्रतीन्द्रस्य प्राधान्यमभिधत्त इति अङ्गत्वघटकीभूतपरोद्देश्यतात्वाचित्वाद्युक्त एव तद्धितश्रुत्या

पदश्रुत्या चेन्द्राङ्गत्वेन विनियोगः । न हि(१) कारकविभक्तेरेव क्वचिदधिको विशेषः ।

न चेन्द्रस्य चयने विनियोगाभावादनुद्देश्यत्वं, तत्र विनियोगाभावेऽपि तदङ्गभूतेन्द्रदेवत्ये ऽविहितमन्त्रके होमे इन्द्रस्योपयोगसम्भवेनोद्देश्यत्वोपपत्तेः । अतश्च समुच्चयेनैवोभयाङ्गत्वम्, प्रतिप्रधानं गुणावृत्तेर्युक्तत्वेन विकल्पस्याप्रसक्तत्वात् । वस्तुतस्तूपक्रमस्थत्वात्ताद्धितश्रुतेरेव प्राबल्यमिति प्राप्ते--

प्राधान्येन प्रकाश्यत्वस्य तद्धितार्थत्वेऽपि प्राधान्यस्य विशेष्यतया तद्धितादनुपस्थितेर्न तस्य वस्तुतो मुख्यश्रुतित्वलक्षणाक्रान्तत्वम् । प्राधान्यमपि च नाङ्गत्वघटकीभूतेप्सिततत्वाख्यं तदर्थः, अपि तु भावनात्वच्छाब्दबोधे विशेष्यत्वमात्रम् । अतश्चोक्तप्राधान्येनेप्सिततत्वाख्यं तल्लक्षयित्वा विनियोगस्ताद्धितश्रुत्या बोध्येतेति कारकश्रुतितो दौर्बल्यम् । अन्यानि च दौर्बल्यकारणान्यैन्द्र्याधिकरण एव निरूपितानि ।

न चैवं तेन पौनरुक्त्यम् । तत्र गौणसामर्थ्यस्य श्रुतिसहायत्वमात्रनिरूपणात् । तत्सिद्धं श्रुत्योर्विरोधे कारकश्रुतेर्बलीयस्त्वमिति ॥

तथा कारकश्रुत्योरपि विरोधे 'आग्नेयं चतुर्धा करोति' 'पुरोडाशं चतुर्धा करोती'त्यादौ बलाबलं सामान्यविशेषभावादिना द्रष्टव्यम् ।

तथा शेषानेकत्वे विजातीयश्रुत्योर्विरोधे 'सोमेन यजेत'-त्यादौ पदश्रुत्यपेक्षया कारकश्रुतेरुपजीवकत्वेन दौर्बल्यं भावार्थाधिकरणे व्याख्यातम् । समानजातीयश्रुत्योर्विरोधे एकस्मिन्नेव पदहोमे सप्तमीश्रुत्या पदेनाहवनीयस्य बाधः ।

१. विभक्तावेव कश्चिदधिकः ।

तदेवं श्रुत्योर्विरोधे बलाबलं वर्णितम् ।

श्रुतिलिङ्गविरोधे तूभयोरपि समबलत्वमेवेत्याशङ्क्यते—

तथाहि—मन्त्रे इन्द्रपदस्य मुख्यसामर्थ्यादिन्द्राङ्गत्वयोग्यतारूपं लिङ्गं तावत्प्रत्यक्षमेव ।

न च तस्याङ्गत्ववाचिपदरूपश्रुतिकल्पनसापेक्षत्वेन दुर्बलत्वम् । तत्कल्पनं विनापि तस्यास्तदङ्गत्वबोधकत्वोपपत्तेः । अतश्चोभयोरपि तुल्यबलत्वात्प्रतिप्रधानावृत्तेर्न्याय्यत्वेनोभयोरपि समुच्चयेनाङ्गता । अस्ति चात्र सामान्यसम्बन्धबोधकं प्रकरणम् । इन्द्रस्य च विनियोगः पूर्ववदेव द्रष्टव्यः ।

किञ्च यद्यपि लिङ्गस्य श्रुतिकल्पकत्वं भवेत् तथाप्यवगतेऽपि मन्त्रस्य गार्हपत्याङ्गत्वे इन्द्रस्य स्मारकाकाङ्क्षयैव सहकृतं लिङ्गं मन्त्रस्येन्द्राङ्गताबोधकम् । इष्यत एव हि प्रबलप्रमाणावगतप्रकृतिसम्बन्धस्यापि प्रयाजादेरन्यतराकांक्षयैव विकृतिसम्बन्धित्वम् ।

न चोपायान्तराक्षेपेण स्मारकाकाङ्क्षाशान्तिः । विकृतावपि दृष्टार्थाङ्गविषये तुल्यत्वात् ।

किञ्च श्रुतेरप्यसमर्थविनियोगायोगेनास्त्येव स्वावगताङ्गतापर्यवसानार्थं गौणसामर्थ्यापेक्षा । तस्य च मुख्यसामर्थ्योपजीवित्वेन श्रुतेरपि स्वपर्यवसानार्थं मुख्यसामर्थ्योपजीवित्वात्तस्य प्राबल्यमेवावगम्यते । अतश्चैन्द्र्यधिकरणपूर्वपक्षन्यायेन कथञ्चिच्छ्रुतिरेव व्याख्येया । सर्वथा न गार्हपत्यमात्राङ्गमयं मन्त्र इति प्राप्ते—

अभिधीयते—न तावल्लिङ्गं(१) स्वत एव प्रमाणं 'वेदोऽखिलो धर्ममूल'मिति स्मृत्या वेदस्यैव क्लृप्तस्यानुमानिकस्य वा

१. स्वतः प्रमाणं.

धर्मबोधकत्वनियमादर्थाध्याहारनिराकरणाच्च ।

किञ्च विहितत्वघटितमङ्गत्वं न विधिकल्पनां विना निर्वहति । स च लिङादिशब्दैकगम्य इत्यवश्यं लिङादिशब्दस्तावत् कल्पनीय एव । अतश्च शब्दोपस्थितस्यैव शब्देनान्वयात्कृतिकारकत्वादिवाचकस्यापि पदस्य कल्पनेति न लिङ्गं स्वतः प्रमाणम् । अत एवाङ्गत्ववाचिपदकल्पनानुकूला योग्यता श्रुतपदार्थनिष्ठा लिङ्गमिष्टमित्युक्तम् ।

किञ्च यद्यप्यङ्गत्वकल्पनानुकूलैव सा लिङ्गमित्याश्रित्य लिङ्गं श्रुतिं च कल्पयेत्तथापि श्रुतिस्थले श्रावणप्रत्यक्षेण विधिवाक्येऽवगते झटित्येवाङ्गत्वरूपार्थावगतिः । लिङ्गस्थले तु प्रत्यक्षेण मन्त्रपदेऽवगते तेन शक्यार्थावगमोत्तरं तदङ्गत्वयोग्यताज्ञानात्तदङ्गत्वप्रतीतिरिति दौर्बल्यम् ।

यत्त्ववगतेऽपि श्रुत्या विनियोगे इन्द्रस्य स्मारकापेक्षयैवास्य विनियोग इति, तन्न स्मारकाकांक्षाया अविशेषोपस्थितध्यानाद्युपायान्तराक्षेपेणापि निवृत्तिसिद्धेः एतन्मन्त्रनियमे प्रमाणाभावात् । विकृतिस्थले तु देवतारूपाङ्गापेक्षाया आक्षेपेणानिवृत्तेः सादृश्यविशेषोपस्थितप्राकृताङ्गनियमो नायुक्तः ।

यदपि श्रुतेरप्यसमर्थविनियोगायोगेन सामर्थ्यापेक्षणमित्युक्तं तद्योग्यतानिश्चयस्य श्रुतशब्दजन्यशाब्दबोधे कारणत्वाभावादयोग्यतानिश्चयाभावमात्रेण श्रौतविनियोगोपपत्तेः उत्तरकालं तदपेक्षायामपि विनियोगप्रमारूपे कार्येऽविप्रकर्षाभावाल्लिङ्गोपजीवित्वाभावेन परास्तम् । तस्मात् श्रुत्यैव गार्हपत्याङ्गत्वेन मन्त्रविनियोगः ।

नन्वङ्गत्वं नाम परोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वम् । तत्र परोद्देश्यताकृतिकारकत्वयोरश्रौतत्वेऽपि परस्परसमभिव्याहृ-

तगार्हपत्यप्रातिपदिकगम्यत्वेन वाक्यीयत्वाल्लिङ्गविरोधस्य तत्कृ-
तत्वेन श्रुतिकृतत्वाभावात्कथमत्र लिङ्गं बाध्यमिति चेत्—न;
एवमपि विधिवाक्यत्वेन तस्य मन्त्रगतलिङ्गापेक्षया प्राबल्यात्।
वक्ष्यते हि 'यद्यप्यन्यदेवत्यः पशु'रित्यादौ तत्।

वस्तुतस्तु यथैव नायं केवलश्रुतिविरोधः, एवं न केव-
लवाक्यविरोधोऽपि । गार्हपत्यपदसमभिव्याहारस्यैन्द्र्यधिक-
रणपूर्वपक्षन्यायेन समीपस्थितिविशेषणत्वादिनाप्युपपत्तेः ।
अतश्चायमुभयविरोधोऽपि सन् कृतिकारकत्वादेर्भावनान्वयि-
तया प्राधान्यात्तद्बोधकतृतीयादेरपि प्राधान्यावगतेः 'प्रधा-
नेन व्यपदेशा भवन्ती'ति न्यायात् श्रुतिविरोध एवेति भण्यते,
न वाक्यविरोधः । अत एव यत्र वाक्यमेव परस्य कृतिकारक-
त्वादेश्च गमकं तत्रैव तद्विनियोगस्तेन प्रमाणान्तरविरोधश्च। प्रकृते
तु केवलं श्रुतिलिङ्गविरोध एवेति युक्तस्तया तस्य बाधः। बा-
ध्यलिङ्गविषयोऽपि चात्र केवलमिन्द्रपदमेव । अवशिष्टपदानां
तु तदेकवाक्यतयेन्द्राङ्गत्वान्न तद्विषयत्वम्। अतश्च तदंशे श्रुति-
वाक्यविरोध एव ।

वस्तुतस्तु श्रुत्येन्द्रपदस्य गार्हपत्याङ्गत्वे प्रमापिते अवशिष्ट-
पदानां तदेकवाक्यतया गार्हपत्याङ्गत्वस्यैवापत्तेर्न तदंशे
श्रुतेर्व्यापार इति सा वस्तुतस्तात्पर्यगत्येन्द्रपदमात्रविषयिण्येवेति
ध्येयम् ॥

एवमेकस्मिञ्छेषिणि शेषानेकत्वस्य श्रुतिलिङ्गविरोधोदा-
हरणं—एकस्मिञ्छेषिणि गार्हपत्ये चयनाधेयतासम्पत्त्यर्थं स्मर-
णापेक्षे प्रकरणपठितासंयुक्ताग्नेय्या लिङ्गेन प्राप्नुवन्त्याः श्रुति-
प्राप्तैन्द्र्या बाध इति द्रष्टव्यम्। तदा चाग्नेयीमन्त्रस्य सामान्यस-
म्बन्धसत्त्वेऽन्यत्राप्युत्कर्षः, नो चेज्जपादौ विनियोग इति ध्येयम्॥

( श्रुतिवाक्यविरोधोदाहरणम् )

श्रुतिवाक्ययोर्विरोधे-'आग्नेय' इत्यादौ सम्बन्धसामान्ये तद्धितमभ्युपगम्य वाक्यादग्नेरष्टाकपालाङ्गत्वं श्रुत्या देवतातद्धितत्वादवगतेन यागाङ्गत्वेन बाध्यते। सर्वत्र चोत्तरोत्तरप्रमाणस्य पूर्वपूर्वप्रमाणकल्पकत्वावश्यकत्वस्य तत्तत्स्वरूपनिरूपणावसर एवोक्तत्वाद्दौर्बल्यम्। वार्तिके त्वारुण्यस्य वाक्यीयमेकहायन्यङ्गत्वं श्रौतेन क्रयाङ्गत्वेन बाध्यत इत्युक्तम्। तदेकहायनीसम्बन्धस्याव्युत्पन्नत्वादव्युत्पन्नपदसन्निधेर्वाक्यत्वानुपपत्तेरुपेक्षितम्।

शेषाानेकत्वे तु क्रमप्रकरणादिनाग्निष्टोमस्तोत्राङ्गतामापन्नगिरापदव्यतिरिक्तप्रगाथैकवाक्यतापन्नगिरापदस्यापि तदेकवाक्यत्वेनाङ्गत्वप्रसक्तौ 'ऐरं कृत्वोद्गेय'मिति विकारार्थतद्धितश्रुत्या इरापदविधानम्।

यद्यपि नेयं मुख्या श्रुतिस्तथापि गौणश्रुतेरेवोदाहरणम्। मुख्यश्रुतेस्त्वन्यन्मृग्यम्।

वस्तुतस्तु गिरापदव्यतिरिक्तप्रगाथस्यैव गिरापदस्यापि तेनैव प्रमाणेन स्तोत्राङ्गत्वोपपत्तेर्नायमेकान्तेन श्रुतिवाक्यविरोधः। किन्तु यत्र तद्व्यतिरिक्तपदानां लिङ्गेन स्वार्थाङ्गत्वं तस्य च देवस्य त्वादिपदवद्वाक्येनैवेतरपदार्थाङ्गत्वं तत्र त[illegible] पदान्तरस्य श्रुत्या विधाने द्रष्टव्यम्।

( श्रुतिप्रकरणविरोधोदाहरणम् )

श्रुतिप्रकरणविरोधे—एकविंशत्याद्यनुवचनानां प्रकरणाद्दर्शाद्यङ्गत्वप्रसक्तौ प्रतिष्ठाकामस्येति गौणषष्ठीश्रुत्या पुरुषार्थत्वम्। द्वादशाहीनस्येति न श्रुतिप्रकरणविरोधोदाहरणम्। अपि तु श्रुतिक्रमविरोधोदाहरणमेव, द्वादशत्वस्य सिद्धरूपत्वेन प्रकरणाविषयत्वात्।

यत्त्वत्र राणकरकारेण प्राकृताङ्गानुवादेन विधानादस्यापि प्रकरणविषयत्वमित्युक्तम् । तदहीने उपसदामातिदेशिकत्वेऽपि ज्योतिष्टोमे औपदेशिकत्वात्तदनुवादेन विहितस्य द्वादशत्वस्य ज्योतिष्टोमप्रकरणविषयत्वानुपपत्तेरुपेक्षितम् ।

शेषानेकत्वे तु प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे प्रकरणात्पाञ्चदश्यानुवचनेऽङ्गत्वेन प्रसक्ते षष्ठीश्रुत्यैकविंशत्यनुवचनविधानम् । यद्यपि चात्र नित्यानुवचनस्याग्निसमिन्धनाङ्गत्वमेव वास्तवम्, न तु दर्शाद्यपूर्वीयप्रयोगाङ्गत्वमपि; तस्योद्देश्यतावच्छेदकत्वेनान्यथासिद्धेः । प्रतिष्ठाकामीयत्वं तु नोद्देश्यतावच्छेदकमपि । एवं काम्यानुवचनस्यापि श्रुत्या प्रतिष्ठाङ्गत्वमेव, न तु तत्कामीयदर्शादिप्रयोगाङ्गत्वं प्रमाणाभावात्, तथापि सम्बन्धमात्रेऽङ्गत्वमुपचर्य वार्तिककारेणोदाहृतमित्युदाहृतम् । वस्तुतस्तु युक्तमुदाहरणमूह्यम् । एवमन्यत्रापि द्रष्टव्यम् ॥

( श्रुतिक्रमविरोधोदाहरणम् । )

श्रुतिक्रमविरोधे–परिव्याणादियूपधर्माणामनुष्ठानसादेश्याद्ग्नीषोमीयाङ्गत्वे तदीययूपाङ्गत्वे वा प्रसक्ते द्वितीयाश्रुत्या यूपसंस्कारार्थत्वावगमात् यूपस्वरूपे चानर्थक्याभावेनापूर्वसाधनत्वलक्षणातात्पर्यग्राहकदुर्बलप्रमाणापेक्षाया अभावादनुवादस्य संनिहितगामित्वसिद्ध्यर्थं तदपेक्षणेऽपि च यूपस्योपदेशातिदेशाभ्यां भिन्नगताङ्गभावस्याप्यग्नीषोमीयप्रयोगान्तःपातोत्पत्तित्वाभावेन भिन्नकालानुष्ठितस्य ज्योतिष्टोमसम्बन्धिसर्वपशुयागार्थं व्यक्तिसाधारणत्वावगतेस्तदुद्देशेन विहितानां परिव्याणादीनां सर्वपशुयागसम्बन्धियूपाङ्गत्वमिति तान्युदाहरणम् । एवं 'रशनया यूपं परिव्ययती'त्यनेनोक्तयूपकर्मकपरिव्याणोद्देशेन विहिताया रशनाया अपि सर्वसम्बन्धिपरिव्याणाङ्गत्वम् । तद्धर्माणां च दर्भमयत्वा-

दीनां तादृशरशनाङ्गत्वम् ।

न च परिव्याणादीनामग्नीषोमीयपशुमात्रसम्बन्धियूपाङ्गत्वेऽपि पश्वन्तरेऽतिदेशेन प्राप्त्युपपत्तेर्यूपस्यैकत्वेन च सकृदनुष्ठितानामेव प्रसङ्गेन सिध्युपपत्तेः सर्वसम्बन्धे फलाभावः । परिव्याणे फलाभावेऽपि रशनात्रिधौ द्वितीयान्तयूपपदसमभिव्याहारमहिम्नैतद्यूपसम्बन्धिपरिव्याणत्वावच्छेदेन रशनातद्धर्मविधानात् सवनीयपश्वर्थापूर्वपरिव्याणान्तरेऽपि रशना तद्धर्मप्राप्तिरूपफलसत्त्वात् । सवनीये हि "आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययती"ति परिव्याणं कालविशेषे विहितम् । तच्च न सर्वार्थम् । एतद्वाक्ये यूपस्वरूपे आनर्थक्येना'ग्निं संमार्ष्टी'तिवदपूर्वसाधनलक्षणार्थमनुष्ठानसादेश्यापेक्षणेन सवनीयार्थत्वस्यैवावगतेः प्रकृतकार्यस्य सिद्धत्वाच्च न तदर्थमपि । अतश्चापूर्वे तस्मिन्नपि रशनातद्धर्मप्राप्तिः फलम् । प्रकारान्तरं चाग्रे निरूपयिष्यते । एवं यथाक्रमपाठस्य सन्निधौ पाठस्य च श्रुतिविरोधे उदाहरणमूह्यम् ।

शेषानेकत्वे तु संनिधानात् पशुकामसाध्यप्रणयनप्रयोगे च सिद्धरूपस्य चमसस्य प्रसक्तौ श्रौतेन गोदोहनेन बाधः । इदमपि च श्रुतिप्रकरणविरोधवत् सम्बन्धमात्रे विरोधादुदाहृतम् ।

( श्रुतिसमाख्ययोर्विरोधोदाहरणम् । )

श्रुतिसमाख्ययोर्विरोधे पौरोडाशिकमिति समाख्याते काण्डे समाम्नात 'इषे त्वे'त्ययं मन्त्रः समाख्यया पुरोडाशाङ्गत्वेन प्रसक्तः "इषे त्वेति शाखां छिनत्ती"तीतिकरणाख्यगौणश्रुत्या शाखाच्छेदनाङ्गत्वेन विनियुज्यते ।

न चात्राधिकाराख्यप्रकरणेन साक्षाद्यागाङ्गत्वावगतेरयं श्रुतिक्रमविरोधः । यागस्य स्पष्टलिङ्गकमन्त्रान्तरावरुद्धत्वेनास्य साक्षात्तत्रानन्वये आनर्थक्यतदङ्गन्यायेनाङ्गेषु प्रसक्तौ समा-

ख्यानुरोधेन पुरोडाशाङ्गतोपपत्तेः । अत एवोपजीव्यसमाख्यानु-
रोधेन क्रमसङ्कोचः ।

अथवा यत्रानारभ्याधीते मन्त्रे क्रतुविशेषाङ्गत्वबोधिका
समाख्या तत्रान्यक्रत्वङ्गत्वे श्रुत्यन्तरमूह्यम् । शेषानेकत्वे तु
हौत्रसमाख्यातायां क्रतुयाजयाज्यायां समाख्यया होतरि प्रसक्ते
यजमानस्य याज्येति गौणषष्ठीश्रुत्या यजमानः कर्तेत्युदाहार्यम् ।
तस्मात्सिद्धं श्रुतेः स्वोत्तरेभ्यः प्राबल्यम् ॥

( द्वयोर्लिङ्गयोर्विरोधे उदाहरणम् )

एवं लिङ्गस्यापि लिङ्गेन विरोधे—मन्त्राणां गौणसामर्थ्येन
गौणार्थाङ्गत्वे प्रसक्ते मुख्यसामर्थ्येन मुख्यार्थाङ्गत्वम् । शेषानेकत्वे
त्वेकस्मिञ्छेषिणि गौणमुख्यसामर्थ्येन मन्त्रद्वयमुदाहार्यम् ॥

( लिङ्गवाक्यविरोधोदाहरणम् )

लिङ्गस्य वाक्येन विरोधे तु "स्योनं ते सदनं कृणोमि घृ-
तस्य धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीही-
णां मेध सुमनस्यमान" इति मन्त्रः पूर्वोत्तरार्धयोरेकत्र संनिधा-
नात्मकेन वाक्येन सदनमात्राङ्गत्वेन प्रसक्तौ लिङ्गेन पूर्वार्धं स-
दने उत्तरार्धं च सादन इत्येवं विभज्य विनियुज्यते ।

न चात्र भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यरूपैका-
र्थस्याख्यातभेदेनाभावादेकवाक्यत्वाप्रसक्तेः कथं लिङ्गेन तस्य
बाध इति वाच्यम् । प्रतीतितः ऐकार्थ्याभावेऽपि तच्छब्दस्य पूर्व-
सापेक्षत्वेन 'ये यज्ञपतिं वर्धानि'त्यादौ यच्छब्दस्येव विभज्यमा-
नसाकाङ्क्षत्वात्तन्मात्रेणैव तद्वदेवार्थैकत्वमपि प्रकल्प्य एकवाक्यत्वो-
पपत्तेः । शक्यते ह्याख्यातोपात्ताया अपि भावनाया भावनान्तरे
प्रकारतया साकाङ्क्षत्वे सत्यन्वयः 'पश्य मृगो धावती'त्यादिव-
त्कल्पयितुम् । अत एवाख्यातस्योत्सर्गतो मुख्यविशेष्यतयैव

स्वार्थप्रतिपादकत्वेऽपि साकाङ्क्षस्थले प्रकारतया तत्कल्पनमपि नातीव दोषाय ।

अत एव प्रकारत्वेन स्वार्थबोधकल्पनाप्यसञ्जातविरोधित्वादाकाङ्क्षास्थापकतच्छब्दश्रवणाभावाच्च न पूर्वाख्याते । अपि त्वीदृशं सदनकरणं यस्य क्वचित्प्रतिष्ठापनं साध्यमित्येवमुत्तरभावनाया एव प्रकारत्वकल्पनादुत्तराख्यात एव ।

एवं च सदनकरणे पूर्वार्धस्य लिङ्गेनैव विनियोगेऽप्युत्तरार्धस्य देवस्य त्वादिपदस्य निर्वापादिपदैकवाक्यतया निर्वाप इव पूर्वार्धैकवाक्यतया सदनकरणे विनियोगो नानुपपन्नः ।

नन्वेवं वाक्यस्य प्रसक्तावपि कथं लिङ्गेन तद्बाधः ? यावता देवस्य त्वादिपदवदस्यापि पृथक्प्रयोगे साकाङ्क्षत्वेनानर्थक्यप्रसङ्ग इति चेत्—तच्छब्दो हि पूर्वप्रसिद्धिमात्रमपेक्षते, न तु वाक्यीयां पूर्वप्रसिद्धिम्, प्रकरणप्रसिद्ध्यापि लोके तद्दर्शनात् । वेदेऽपि 'तप्ते पयसि दध्यानयती'ति वाक्यान्तरप्रापितस्य पयस 'सता वैश्वदेवी'ति तच्छब्देन परामर्शाच्च । यच्छब्द एव हि तच्छब्दार्थं स्ववाक्योपस्थितं नियमेनापेक्षते 'येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुया'दिसादौ तथैव व्युत्पत्तिदर्शनात्, न तु तच्छब्दोऽपि । अतश्च तच्छब्दस्य स्ववाक्योपस्थितमात्रपरामार्शित्वनियमाभावाद्विभज्यमानसाकाङ्क्षत्वाभावेनार्थैकत्वकल्पनानुपपत्तेः युक्तो लिङ्गमात्रेण पुरोडाशसादन एवोत्तरार्धस्य विनियोगः ।

एवं सत्यपि देवस्य वेत्यादिपदस्यानर्थक्यं पृथक् प्रयोगे भवेत ततो भवेदप्युत्तरार्धस्य सदने विनियोगः । लिङ्गावगतापूर्वसाधनीभूतपुरोडाशसादनार्थत्वेन सुतरां सार्थक्यात् । तस्मात्सिद्धमुत्तरार्धस्य लिङ्गात्सादनाङ्गत्वमेव, न तु वाक्यात्सदनाङ्गत्वमिति ।

अत्र च सर्वत्रोत्तरोत्तरप्रमाणस्य पूर्वपूर्वप्रमाणकल्पनाप्रकारस्स-

र्थोऽपि तत्तत्प्रमाणस्वरूपनिरूपणावसरे एव प्रपञ्चित इति नेह पृथक्प्रपञ्च्यते । शेषानेकत्वे त्वेकस्मिन्नेव सदनकरणे शेषिणि वाक्यादुत्तरार्धस्यापि शेषत्वे प्रसक्ते लिङ्गादपूर्वार्थस्यैव तदिती-दमेव भङ्ग्यन्तरेण द्रष्टव्यम् ।

यत्त्वत्र वार्तिककृतोदाहरणान्तरमुक्तं–'होता यक्षन्मित्रावरुणौ प्रशास्तारौ प्रशास्तात्हतुना सोमं पिबतां प्रशास्तर्यजेति प्रैषपाठस्य 'मैत्रावरुणः प्रेष्यति चानुचाहे'ति वाक्येन मैत्रावरुणस्वकर्तृकत्वे प्रसक्ते स्वात्मनि प्रशास्तृशब्दवाच्ये मैत्रावरुणे स्वस्यैव प्रैषासम्भवाल्लिङ्गेनान्यकर्तृकत्वम्, तत्रा 'पीतरमन्यस्तेषां यतो विशेषस्स्या'दिति न्यायेनाच्छावाके प्राप्ते सामान्यसमाख्यया होतुरेव लिङ्गेन प्रतिप्रसव इति; तद्ब्राह्मणवाक्यस्य मन्त्रलिङ्गेन बाधायोगादुपेक्षितम्। न हि मन्त्रलिङ्गं तदपेक्षया प्रबलम्, मन्त्रस्य ब्राह्मणविहितार्थप्रकाशकत्वेन तत्परतन्त्रत्वात्। अन्यथा मनोताम-न्त्रस्यापि सामान्यसम्बन्धग्राहिप्रमाणसत्त्वेन लिङ्गात्सवनीयाङ्गत्वावगपत्तौ "यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्ये"ति वाक्यावगताग्नीषोमीयाङ्गत्वबाधापत्तेः । न हीयं श्रुतिः, येन लिङ्गं बाधेत । तेनात्र श्रौतअन्यदेवत्यपशुशेषत्वस्य समभिव्याहारगम्यत्वात् तेनात्र श्रौतत्वोक्तिरपि वार्तिककारीया नातीवादर्तव्या । यथा च नास्य वाक्यस्य वारुण्यादिपशावूहनिवर्तकत्वं तस्य प्रकृतावन्यायनिगदत्वेनाप्रसक्तत्वात् , किं तूत्कर्षनिवर्तकत्वमेव, तथा मन्त्राधिकरण एव प्रपञ्चितम्, दशमे चोपपादयिष्यते। अतश्च ब्राह्मणवाक्यस्य मन्त्रलिङ्गेन बाधायोगान्नेदमुदाहरणं लिङ्गवाक्यविरोधे सङ्गच्छते।

कथं तर्ह्यस्य प्रैषस्य होतृकर्तृकत्वसिद्धिः ? उच्यते–दुर्बलस्यापि प्रमाणस्य विशेषविषयत्वे तेन प्रबलस्यापि सामान्य-

विषयस्य सङ्कोच इष्टः । 'यस्मिन्देशे मृगः कृष्ण' इत्यादि-स्मृत्या क्रतुस्मृतिश्रुतिसङ्कोचस्य प्रमेयबलाबलत्वन्यायेन साधितत्वात् । तदिहापि ब्राह्मणवाक्यस्य सामान्यविषयत्वान्मन्त्र-लिङ्गस्य विशेषविषयत्वेन बाधकता, न तु लिङ्गत्वेनेति नेदं लिङ्गवाक्योदाहरणं, न वा प्रैषस्य होतृकर्तृकत्वासिद्धिः ।

न च होतुः प्रैषपाठकर्तृत्वे प्रैषार्थस्य याज्यामन्त्रपाठस्य मैत्रावरुणकर्तृकत्वापत्तेर्होता यक्षदिति मन्त्रोपक्रमे होतुर्याज्याम-न्त्रपाठकर्तृत्वलिङ्गानुपपत्तिः । तत्रत्यहोतृशब्दस्या'थ कस्माद-होतृभ्यस्सञ्यो होत्रंशसस्तुभ्यो होता यक्षदिति प्रेष्यती-ति पृष्ट्वा "प्राणो वै होता प्राणस्सर्वर्त्विज, इति प्रतिवचनकरणा-द्गौण्या वृत्त्या मैत्रावरुणपरत्वतात्पर्यावगतेः ।

( लिङ्गप्रकरणविरोधोदाहरणम् )

लिङ्गप्रकरणविरोधे तु—पूषानुमन्त्रणमन्त्रस्य प्रकरणेन दर्शपूर्ण-मासयोर्विनियोगे प्राप्ते समाख्यासहकृतलिङ्गात्पूषदेवत्यकर्माङ्गत्वम्। [illegible] च सिद्धरूपत्वान्मन्त्रस्याधिकाराख्यप्रकरणविरोधे ज्ञेयम् । [illegible] मुख्यप्रकरणविरोधे त्वन्यदूह्यम् । एवमग्रेऽपि । शेषानेकत्वे तु पूषानुमन्त्रण एव प्रकरणादाग्नेये प्राप्ते मुख्यलिङ्गकेनानुमन्त्र-णेन बाधः ।

( लिङ्गक्रमविरोधोदाहरणम् )

लिङ्गक्रमविरोधे—'उपहूत उपह्वयस्वे'त्यनयोर्यथाक्रमं पाठा-त्प्रश्नप्रतिवचनशेषत्वे क्रमेणावगते लिङ्गाद्वैपरीत्यम् । एवं क्रमा-न्तरविरोधेऽपि द्रष्टव्यम् । शेषानेकत्वे त्वन्यदेवत्याविकृतिसन्नि-धावन्यदेवत्यानुमन्त्रणस्याम्नातस्य तद्देवत्यानुमन्त्रणेन बाधः ।

(लिङ्गसमाख्याविरोधोदाहरणम्)

लिङ्गसमाख्याविरोधे-मनो ऋचः पृथुवाजवत्योश्च क्रमस-

हकृतयाज्यासमाख्यया (१)सोमारौद्रयागे याज्यात्वे प्रसक्ते ऽग्नि-प्रकाशनलिङ्गात्क्रमसहकृतात्तदीये सामिधेनीकार्ये निवेश इति ॥ शेषानेकत्वे तु(२) मनोर्ऋचामेव सोमारौद्रयागे याज्यात्वप्रसक्तौ तद्देवत्ययाज्यानुवाक्याभ्यां लिङ्गप्राप्ताभ्यां बाधः।

(वाक्ययोर्विरोधोदाहरणम्)

वाक्ययोर्विरोधे—उपांशुत्वस्य "त्सरा वा एषा यज्ञस्ये"ति व्यवेतयज्ञपदैकवाक्यत्वाद्यज्ञभागधर्मत्वं "तस्माद्यत्किञ्चिदग्नी-षोमीयाच्तेनोपांशु चरन्ती"त्यनेन सन्निहितयत्किञ्चित्पदैक-वाक्यतयावगतपदार्थधर्मत्वेन बाध्यते। शेषानेकत्वे तु 'पञ्चदश सामिधेनीरनुब्रूयात्, सप्तदश वैश्यस्ये'ति।

(वाक्यप्रकरणयोर्विरोधोदाहरणम्)

वाक्यप्रकरणयोर्विरोधे—पूषानुमन्त्रणमन्त्रगतस्या'हं देवयज्य-या पुष्टिमान् भूयास'मिति पदसमुदायस्य प्रकरणाद्दर्शाद्यङ्गत्वे प्रस-क्ते पूषपदैकवाक्यत्वात्पूषदेवत्यकर्माङ्गत्वम्। तथा श्रुतिविनियुक्त-स्यापि सूक्तवाकस्योपजीव्येन लिङ्गेनेष्टदेवताप्रकाशनार्थत्वस्था-पनात्तदनुरोधेन पौर्णमास्यामग्नीषोमादिपदानि, अमावास्यायामि-न्द्राग्न्यादिपदानि विभज्य प्रयोज्यानीत्यस्यापि स्थापितत्वा-दग्नीषोमपदैकवाक्यतापन्नाना'मिदं हविरजुषेता' मित्यादीनाम-मावास्यायां प्रयोगः, इन्द्राग्न्यादिपदैकवाक्यतापन्नानां चे'दं हवि'-रित्यादीनां पौर्णमास्यां प्रयोग इत्येवं प्रकरणादिदं हविरजुष-

१. तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके दशमानुवाके "यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ सोमारौद्रं चरुं निर्वपेत्" इति वाक्यविहितो यागः सामारौद्रयागः।

२. तै.सं.का.१–प्र.८. द्वाविंशेऽनुवाके "प्र बाहवा सिसृतं" इत्यृचोऽनन्तरं "अग्निं वः पूर्व्यं गिरा देवं" इत्याद्या याष्षडृच आम्नाताः ताः मनोर्ऋच इत्युच्यन्ते।

तेत्यस्य द्विरावृत्तिप्रसक्तौ तत्तद्देवतापदैकवाक्य[illegible] विभज्य विनियोग इति। तत्र च मन्त्रपदानां सिद्धरूपत्वात् श्रुतिविनियुक्तत्वाच्च मुख्यप्रकरणविषयत्वाभावेऽप्यधिकाराख्यप्रकरणस्याङ्गताबोधकतयाऽपूर्वसाधनलक्षणातात्पर्यग्राहकतयैतद्विषयेऽपि प्रसक्तत्वाद्युक्तो वाक्येन बाधः।

मुख्यप्रकरणोदाहरणं तु वैमृधस्य प्रयाजादिवद्दर्शाङ्गत्वप्रसक्तौ वाक्येन पौर्णमासमात्राङ्गत्वमिति। यथा चात्र प्रकरणं वाक्यस्यापि कल्पकं तथा तत्स्वरूपनिरूपणप्रसङ्ग एव निरूपितम्। पौर्णमासांशे तु प्रकरणं सदपि दुर्बलत्वादनुवादः। शेषानेकत्वे तु वेदिकरणवृत्तिहविरभिवासनो-[illegible]त्वस्याधिकाराख्यप्रकरणान्मुख्यप्रकरणादेव वा दर्शाङ्गत्वे [illegible] 'पूर्वेद्युरमावास्याया'मित्यनेन पूर्वेद्युः कालः। न हि सप्तम्याः [illegible]न्यमर्थः, येनात्र श्रुतित्वं शंक्येत अधिकरणत्वमात्रस्य तदर्थत्वात्। अत एव सप्तम्यन्तस्थले शेषत्वमेव श्रौतं न तु शेषित्वम्॥

( वाक्यक्रमविरोधोदाहरणम् )

वाक्यक्रमयोर्विरोधे—परिव्याणकरणक्रियमाणानुवादिमन्त्रगतपरिवीरसिपरिवीतपदयोः लिङ्गादेवाग्नीषोमीयक्रमबाधेन यावत्परिव्याणशेषत्वेऽवगते तदेकवाक्यतापन्नपदान्तराणां तथैव क्रमबाधेन वाक्यात् सवनीयपरिव्याणार्थत्वम्। शेषानेकत्वे तु "वृषा पवस्व धारये"ति राजन्यस्य प्रतिपदं कुर्या"दिति इतिकरणरूपगौणश्रुत्याऽऽद्यपादमात्रस्यैव विनियोगाद्द्वितीयमारभ्य यथाक्रमपाठेन नित्यप्रतिपद्द्वितीयादिपादप्रसक्तौ नैमित्तिकप्रतिपदाद्यपादैकवाक्यतापन्नद्वितीयादिपदानां वाक्येन प्राप्तिः॥

( वाक्यसमाख्याविरोधोदाहरणम् )

वाक्यसमाख्ययोर्विरोधे——भक्षानुवाकगतसद्यासमित्यादे-

लिङ्गाद्ग्रहणादौ विनियोगेऽवगते तदेकवाक्यतापन्नशेषपदानां समाख्यया भक्षाङ्गत्वप्रसक्तौ वाक्याद्ग्रहणाद्यङ्गत्वमिति। शेषानेकत्वे तु प्रैषानुवचने समाख्यया होतृप्राप्तेर्वाक्येन मैत्रावरुणविधानमिति॥

( प्रकरणयोर्विरोधोदाहरणम् )

प्रकरणयोर्विरोधे—अभिक्रमणादेर्महाप्रकरणा(१)द्दर्शपूर्णमासाङ्गत्वप्रसक्तौ प्रयाजाङ्गत्वमवान्तरप्रकरणात्। शेषानेकत्वे तु यत्रानेकसमुदाये महाप्रकरणादेकधर्मप्राप्तिरवान्तरप्रकरणाच्च तद्विरुद्धधर्माणां, तादृशस्थलमूह्यम्।

( प्रकरणक्रमयोर्विरोधोदाहरणम् )

प्रकरणक्रमयोर्विरोधे—अनेकेष्टिपशुसोमयागात्मके राजसूयेऽभिषेचनीयो नाम सोमयागः। तत्संनिधौ "अक्षैर्दीव्यती"त्यादिना देवनाद्ययागरूपमाम्नातम्। तस्य चायागत्वादेव राजसूयफलसम्बन्धे बाधितेऽङ्गत्वावश्यम्भावेन संनिधिलक्षणक्रमादभिषेचनीयमात्राङ्गत्वप्रसक्तौ प्रकरणाद्राजसूययागाङ्गत्वम्।

न चाभिषेचनीयस्यापि फलवत्त्वेनाप्रतिबन्धाकाङ्क्षत्वादवान्तरप्रकरणोपपत्तेर्वैपरीत्यशङ्का। तस्य विकृतित्वेन प्राकृताङ्गैरेव परिपूर्णत्वात्तदनुपपत्तेः।

ननु विकृतावपि क्वचिदस्त्येव प्रकरणं यत्र प्राकृताङ्गानुवादेन प्राकृतकार्यापन्नमपूर्वं वाङ्गं विधीयते, यथा—शराः, पृषत्ता चानूयाजेषु। तत्र हि निरङ्गाङ्गस्यैव प्राकृताङ्गस्य विकृत्या ग्रहणे साकाङ्क्षत्वानिवृत्तेरङ्गस्यापि प्राकृताङ्गग्रहणसमय एव ग्रहणम्। अस्तु वा प्राकृताङ्गानुवादेन विहितापूर्वाङ्गस्थले उपहोमादिवत्संनिधाना-

---

१. दर्शपूर्णमासाङ्गत्वमवान्तरप्रकरणाद्बाध्यते।

देव ग्रहणं तथापि प्राकृतकार्यापन्नाङ्गस्थले तावदुक्तमेव प्राकृताङ्ग-ग्रहणसमये ग्रहणम् ।

यद्यपि चात्र वाक्यीय एव विनियोगः, तथाप्यनिवृत्ताकाङ्क्षायामेव विकृत्या ग्रहणान्मूले प्रकरणविनियोज्यत्वव्यवहारः ।

यत्तु तादृशाङ्गसन्दंशपतितमसंयुक्तं क्रियारूपं च तद्विकृतौ प्रकरणेनैव ग्राह्यम्, अनयोश्च सन्निहितप्रतियोगितेतिकर्तव्यताकाङ्क्षाया अनिवृत्तत्वात् ।

यदपि चासंयुक्तं नोक्तविधप्राकृताङ्गसम्बन्ध्यङ्गसन्दष्टम्, अपि तु प्रधानोत्तरमुक्तविधाङ्गात्पूर्वं समाम्नातं तदपि प्रकरणेनैव गृह्यते । उक्तहेतोस्तत्राप्यविशिष्टत्वात् । अतश्च प्रकृतेऽपि प्राकृतमाहेन्द्रस्तोत्रानुवादेन 'माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते' इति वाक्यविहितादभिषेकात्पूर्वमभिषेचनीयोत्तरं विदेवनादीनां पाठात्तेषां प्रकरणग्राह्यत्वोपपत्तिरिति चेत्--

सत्यप्यभिषेकस्य माहेन्द्रस्तोत्राङ्गत्वे तस्याप्राकृतकार्यापन्नत्वेन भवदुक्तरीत्यैव प्रकरणग्राह्यत्वाभावात्तत्पूर्वभाविनामपि प्रकरणग्राह्यत्वानुपपत्तेः ।

वस्तुतस्त्वभिषेचनीयान्तिमप्राकृताङ्गसम्बन्धिवैकृतगुणविध्युत्तरकालं विदेवनादीनामभिषेकस्य चाम्नानात्तादृशोत्पत्तिविधौ च माहेन्द्रस्याश्रवणेन तस्य माहेन्द्राङ्गत्वानुपपत्तिः ।

न चोत्पत्तिवाक्ये तदङ्गत्वाश्रवणेऽपि संनिधिप्रकरणं च बाधित्वा वाक्यान्तरेण तदङ्गत्वोपपत्तिः । तद्वाक्यस्य प्रतिशब्दयोगेनाभिषेके माहेन्द्रस्तोत्रकालतामात्रविधायकत्वेन स्तोत्राङ्गताविधायकत्वाभावात् । एवं सत्यपि यद्ययमेवाभिषेकविधिः स्यात् ततो बृहस्पतिसवादिवदार्थादेतदुन्नीतेन वाक्येन भवेदपि तदङ्गत्वं, न त्वेतदस्तीत्युक्तम् । अतश्चोत्पत्तिवाक्य

एव प्रयोजनजिज्ञासायां सन्निधानात्प्रकरणाद्वा प्रयोजनस्या-वगमान्माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति कालार्थ एव संयोग इति वक्ष्यते । तेनाभिषेकस्यापूर्वत्वविधयापि माहेन्द्रस्तोत्राङ्गत्वाभावात्तत्पूर्वभाविनां विदेवनादीनामभिषेचनी-यप्रकरणविनियोज्यत्वशङ्कानुपपत्तेस्संनिधानादनुष्ठानसादेश्याद्वा-भिषेचनीयाङ्गत्वं वाच्यम् । तच्च दुर्बलं प्रकरणात् । तेन हि विदेवनाद्यभिषेकान्तानां राजसूयाङ्गत्वमवगम्यते ।

ननु राजसूयो नाम न कश्चिदर्थान्तरम् । अपि त्विष्टिपशुसोम-यागा एव । ते च सर्वे प्रत्येकं विकृतित्वान्निराकाङ्क्षा एवेति न प्रकरणं तस्येति चेत्—न प्रत्येकजन्यपरमापूर्वाणां प्राकृतैरङ्गैर्नि-राकाङ्क्षेऽपि सर्वयागजन्यैकपरमापूर्वस्य साकाङ्क्षत्वात्तज्जननानुकू-लप्रत्येकापूर्वनिष्ठयोग्यतासम्पादकत्वेन प्रकरणग्राह्यत्वोपपत्तेः ।

वस्तुतस्तु तादृशपरमापूर्वानङ्गीकारेऽपि पवित्रादारभ्य क्षत्रस्य धृतिं यावद्विधिषु 'राजसूयाय हेना उत्पुनाती'त्यनेनोपक्रमात् "राजसूयेनेजानस्सर्वमायुरेती"त्युपसंहाराद्वाचनिकाङ्गसन्दंशेन राजसूयत्वेन रूपेण सर्वेषामेवाकाङ्क्षोन्नीतेति सर्वप्रकरणोपपत्तिः अत एव विदेवनादीनामारादुपकारकत्वात्तत्काले तन्त्रेणानुष्ठाना-वगतेः प्रकृतौ क्रमबाधफलाभावेऽपि नामातिदेशेन पवित्रादि-विकारे विदेवनादिधर्मप्राप्तिरूपफलोपपत्तिः ।

एवं प्रकरणस्य यथाक्रमपाठेनापि विरोधे उदाहरणं मृग्यम् ।

शेषानेकत्वे तु यथाक्रमं पाठाद्विरापदस्याग्नीषोमस्तोत्राङ्ग-त्वप्रसक्तावधिकाराख्यप्रकरणाद्विरा पदस्य तदङ्गत्वमिति । उदा-हरणान्तरं वा यथापेक्षितमूह्यम् ।

( प्रकरणसमाख्ययोर्विरोधोदाहरणम् )

प्रकरणसमाख्ययोर्विरोधे—पौरोडाशिकसमाख्यया प्रयाजा-

दीनां पुरोडाशाङ्गत्वे तत्साध्याग्नेयादियागमात्राङ्गत्वे वा प्रसक्ते प्रकरणस्थयागाङ्गत्वमिति । शेषानेकत्वे तु यथोचितमूह्यम् ॥

(क्रमयोर्विरोधोदाहरणम्)

क्रमयोर्विरोधे—काम्ययाज्यानुवाक्याकाण्डे संनिधिलक्षण-क्रमाद्द्वयोरैन्द्राग्नयोर्याज्याद्वयेऽप्यनियमेन प्राप्ते यथाक्रमं पाठेना-त्यन्तप्रधानप्रत्यासन्नत्वात्क्रमेण विनियोग इति ।

यद्यपि च क्रमाधिकरणे एकग्रन्थस्थसंनिध्यपेक्षया यथाक्रमं पाठस्य दौर्बल्यमुक्तं तथापि प्रकृते तस्य भिन्नग्रन्थस्थत्वात्तदपे-क्षया पाठस्य प्राबल्यान्निरोधः । क्रमान्तरस्य तु परस्परबलाबलं तत्रैवोक्तम् । उदाहरणं तूह्यम् ।

एवं शेषानेकत्वेऽपीदमेवोदाहरणं 'स्योनं त' इति मन्त्रद्वयो-ज्ज्यम् । क्रमान्तरे तूह्यम् ।

( क्रमसमाख्याविरोधोदाहरणम् )

क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समा-म्नातस्य मन्त्रस्य "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इत्यादे-स्समाख्यया पुरोडाशाङ्गत्वे तत्साध्याग्नेयादियागीयपात्रप्रोक्षणा-ङ्गत्वे प्रसक्तेऽवान्तरसंनिधानात्सान्नाय्यापूर्वसाधनीभूतत्वप्रमा-पणेन तदीयपात्रप्रोक्षणाङ्गत्वम् । तथा चात्र महाधिकाराख्यगौणप्र-करणेन समाख्यां संनिधिं च बाधित्वा न सर्वसम्बन्धिपा-त्राङ्गत्वं तथा क्रमाधिकरण एव व्युत्पादितम् । यथा च समा-ख्यास्थानादिकल्पिका तथा समाख्याधिकरणे ।

एवं क्रमान्तरैस्समाख्याविरोधेऽप्युदाहरण मूह्यम् । शेषाने-कत्वे तु यथोचितमसङ्कीर्णमूह्यम् ।

( समाख्ययोर्विरोधोदाहरणम् )

एवं समाख्ययोरपि सामान्यविशेषभावादिना विरोधः शेष्यनेकत्वे शेषानेकत्वे च चोदाहर्तव्यः ।

( श्रुत्यादीनां प्राबल्यदौर्बल्ये क्वचित् वैपरीत्यमपि )

एवं तावच्छ्रुत्यादीनां पूर्वपूर्वस्य प्राबल्यमुक्तम् । क्वचिच्च विपरीतमपि तत् । तथा पूर्वपूर्वस्यानुमानिकत्वे उत्तरोत्तरस्य च प्रत्यक्षत्वे । अत एव वैदिकमन्यार्थदर्शनरूपमनन्यथासिद्धं लिङ्गं स्मृत्यनुमितश्रुत्यपेक्षया प्रबलम् स्मृतेर्मूलान्तरस्यापि सम्भावितत्वादन्यार्थदर्शनस्याप्यन्यथानुपपत्तिविषयत्वा लिङ्गत्वाच्च । अत्र च मातुलकन्यापरिणयनस्यानुदाहरणत्वेऽप्यन्यदुदाहरणमूह्यम् ।

यत्र च दुर्बलस्यापि प्रमाणस्यात्यन्तमानर्थक्यं विषयाभावात्तत्र प्रबलस्यापि सङ्कोचरूपं बाधमङ्गीकृत्य दुर्बलस्य प्राबल्यम्, यथा वषट्कारानिमित्तभक्षादेः प्रबलेन श्रुत्यादिना प्रतिपाद्यावच्छेदेन प्राप्तस्य यजमानचमस इति समाख्यया विषयान्तरं प्रतिपद्यमानाया यजमानकर्तृकभक्षान्तरस्य सोमसंस्कारार्थत्वेन विधानात्प्रतिपाद्यसोमैकदेशसंस्कारकत्वं वक्ष्यते ।

अत एव पूर्वोक्तबाधविषयाणां दुर्बलप्रमाणानामस्ति कश्चिद्विषय इति युक्तस्तथा बाधः ।

तथाहि—पौरोडाशिकं हौत्रमित्यादिसमाख्यायास्तावत्सामान्यविषयत्वाच्छुन्धनमन्त्रादिव्यतिरिक्तविषयत्वेनाप्युपपत्तिः क्रमप्रकरणवाक्यानां च पारायणाद्युपयोगितयापि क्वचिदाग्नेयोऽष्टाकपाल इत्यादौ पार्ष्टिकान्वयविषयत्वेनापि वाक्यस्योपपत्तिः।

लिङ्गं तु गौणीवृत्त्युपयोगशक्यार्थप्रतिपादनेनोपयुज्यत एव ।

एवं यत्र प्रबलप्रमाणस्याविशेषप्रवृत्तावानर्थक्यं गौरवं वा यथा—'व्रीहीन्प्रोक्षती'त्यादौ 'स्रुवेणावद्यती'त्यादौ तत्र व्रीहिस्वरूपार्थत्वे आनर्थक्यमवदानमात्रार्थत्वे चायसावष्टम्भादियोग्यताकल्पना गौरवमिति तत्र प्रकरणेन स्वाभाविकयोग्यतया च दुर्बलयापि सङ्कोचः प्रबलस्येति ।

## ( प्राप्ताप्राप्तबाधभेदनिरूपणम् )

ननु लिङ्गादेर्मन्थरप्रवृत्तिकत्वेन श्रुतिसत्त्वेऽङ्गताबोधकत्वानु-
त्तेः अप्रसक्तस्य च विनियोगस्य कथं बाध इति चेत्-सत्यम् ।
त एवास्याप्राप्तबाधत्वमिति वदन्ति । तत्त्वं चाङ्गताबोधकलिङ्गा-
द्कल्प्यश्रुतिकल्पनप्रतिबन्धकत्वं श्रुत्या हि गार्हपत्याङ्गत्वे मन्त्र-
य प्रमिते निराकाङ्क्षत्वाल्लिङ्गेन श्रुतिकल्पनानुपपत्तेरिन्द्राङ्गत्व-
प्राप्तमेव ।

एवं दाशमिकोऽपि क्वचिदप्राप्तबाधः । यथा—गृहमेधीये "आ-
ज्यभागौ यजती"त्यनेन प्रयाजादीनां तत्प्रापकप्रमाणकल्पनप्रति-
बन्धकत्वात् । यत्र तु प्रापकप्रमाणं क्लृप्तं तत्र प्राप्तबाधः, यथा-
सामान्यशास्त्रस्य विशेषशास्त्रेण ।

ननु यदि सामान्यशास्त्रेण पदेऽप्याहवनीय इत्यवगतं तदा
कथं तस्य बाधः? न ह्यत्र नेदं रजतमित्यादिवन्मिथ्यात्वबोधरूपो
बाधस्सम्भवति सामान्यशास्त्रस्यापि निर्दुष्टत्वेन तज्जन्यबोधस्य
षाजन्यतया तस्य मिथ्यात्वायोगात् ।

न च करणनिष्ठदोषाभावेऽपि वस्तुतः करणे विशेषविष-
तिरिक्तविषयक एव शेषादर्शनकृतप्रमादरूपप्रमातृदोषेण प्र-
तुः भ्रमरूपतद्विषयकत्वबोधोपपत्तेर्विशेषदर्शनेन तन्मिथ्यात्वो-
त्तिरिति वाच्यम् । एतादृशप्राप्तबाधस्य श्रुतिलिङ्गादिष्वपि सं-
ात् । तत्रापि हि गार्हपत्याङ्गतारूपविशेषादर्शने प्रमातुर्लिङ्गमा-
र्शनेन श्रुतिकल्पनद्वारेन्द्राङ्गताविषयकत्वभ्रमस्य सम्भवात् ।
स्सर्वत्रैव प्राप्तबाधत्वमिति चेत्—न ; प्राप्तबाधत्वं नाम क्लृ-
बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । न चै-
तिलिङ्गादिषु सम्भवति । तत्र बोधिकाया लिङ्गकल्प्यश्रुते-
नाकल्पितत्वात्कदाचित्कल्पिताया अपि प्रत्यक्षश्रुत्या

तस्या एव मिथ्यात्वकल्पनाच्च। सामान्यशास्त्रस्य तु क्लृप्तत्वे-नाकल्पनीयत्वाद्धोमान्तरे आहवनीयाभावापत्त्या च तन्मि-थ्यात्वकल्पनस्याप्ययोगात्क्लृप्तस्य तस्य विशेषशास्त्रेण स्व-विषयाविषयता प्रतिबन्धमात्रं क्रियत इति सोऽयमशास्त्रबाधः। एवं च सामान्यशास्त्रं विशेषविषयातिरिक्तविषयं परिशेषात्सम्प-द्यते। एवमुपदेशातिदेशनित्यनैमित्तिकपौर्वापर्यादिबाधेष्वपि द्र-ष्टव्यम्। अत एव तार्तीयोऽशास्त्रबाध इत्युत्सर्गमात्रम्।

नन्वर्थलोपप्रसाम्नानादिबाधेषु भवेदप्येवं निषेधरूपनाच-निकबाधस्थले तु न प्रापकशास्त्रस्य स्वविषयता प्रतिबद्ध्यते। निषेधस्य निषेध्यप्राप्तिसापेक्षत्वेन प्रापकशास्त्रस्य तद्विषयत्वाव-श्यंभावात्।

न च तत्र भ्रान्तिप्राप्तं निषिध्यत इति शक्यं वक्तुम्। प्रापक-शास्त्रस्य वस्तुतस्तदतिरिक्तविषयकत्वे भ्रमासंभवात्। तथा हि—पदशास्त्रं पदं विधाय चरितार्थं नाहवनीयशास्त्रमपेक्षते। अ-तश्च येन पदशास्त्रं प्रथमतो दृष्टं तस्य पश्चादवगम्यमानेन सामा-न्यशास्त्रेण न भ्रमः, न वा विशेष दर्शनात्तन्निवृत्तिः विशेषादर्श-नाभावे भ्रमकारणाभावात्।

अत एव तदा सामान्यशास्त्रं तद्व्यतिरिक्तविषयतां झटि-त्येव प्रतिपद्यते। येन तु सामान्यशास्त्रं पूर्वमाकलितं तस्य साम-ग्रीसत्त्वाद्भ्रमो जायत इति तन्निवृत्तिर्विशेषदर्शनजन्या। अत एव तत्र तद्व्यतिरिक्तविषयत्वं सामान्यशास्त्रस्य पश्चादेवावगम्यते, न तु प्रथमावगमकाले। बाधश्च तत्र विशेषशास्त्रफलं, न तु वाक्यार्थः। प्रकृते तु बाधो "न तौ पशौ करोती"ति सामान्यशास्त्रस्यैवार्थो न तु फलं, विधेयान्तराभावात्। अतश्च येन तावदतिदेशशास्त्रमेव प्रथमत आलोचितं तस्यास्तु नाम विशेषादर्शनसहकृतप्रापकशास्त्रा-

दाव्यभागयोरपि भ्रान्तां प्राप्तिमालोच्य निषेधशास्त्रार्थावगमो-पपत्तेः पश्चाद्विशेषदर्शने सति प्रापकशास्त्रस्य तद्यातिरिक्तविषय-त्वकल्पनरूपबाधः ।

यदा तु निषेधशास्त्रमेव प्रथमत आलोच्यते तदा तदर्था-लोचनोत्तरं निषेध्यप्राप्त्यपेक्षायां प्रापकशास्त्रालोचनात्तेन च विशेषदर्शनसत्त्वेनाज्यभागभ्रान्तिजननायोगान्निषेधपर्यवसानानु-पपत्तेरवश्यं प्रापकशास्त्रस्याज्यभागप्रमाजनकत्वमेव निषेधनाभ्यु-पगन्तव्यम् । प्रापकशास्त्रस्य विशेषनिष्ठत्वे तु तदावश्यकमेव । तस्माच्छास्त्रप्राप्तस्य निषेधे सर्वत्र प्रमारूपैव प्राप्तिः । अत एव तत्र सर्वत्र विकल्प एवेति मीमांसकमर्यादा ।

न चैवं यत्र रागप्राप्तस्य निषेधस्तत्रापि निषेध्यप्रापकरागस्य बलवदनिष्टाननुबन्धीष्टसाधनप्रमाजनकत्वापत्तेः विकल्पापत्तिः । बलवदनिष्टानुबन्धित्वज्ञानस्य प्रवृत्तिं प्रति प्रतिबन्धकतया तदभाव-स्यैव कारणत्वेन बलवदनिष्टाननुबन्धित्वज्ञानस्याकारणतया रा-गेण तत्प्रमाया अजननादिष्टसाधनत्वप्रमाजननेऽपि तस्य निषेधावग-तानिष्टसाधनत्वेन विरोधाभावान्न तदंशे रागबाधकत्वम् । या तु तत्र सामग्रीसत्त्वे प्रवृत्तिस्सा सामग्र्यभावे न जायत इति दैववशसम्पन्नं बाधकत्वम् । सामग्री हि बलवदनिष्टानुबन्धित्वज्ञानाभावघटिता । अनिष्टसाधनत्वज्ञाने विद्यमानेऽपि हि यदाऽनिष्टगतद्वेषापेक्षयेष्टगत-रागस्योत्कटत्वरूपं बलवत्त्वं तदा सामग्रीसम्पत्तिः । यदा त्विष्टगत-रागापेक्षयाऽनिष्टगतस्योत्कटत्वरूपं बलवत्त्वं तदा तदभावात्प्रवृत्त्य-भावः । अतश्च रागप्रमितेर्विरोधाभावान्न विकल्पापत्तिः । अतः कथं प्राप्तबाधत्वावच्छेदेन प्रापकशास्त्रस्य बाधकशास्त्रेण स्वविषय-कताप्रतिबन्ध इति चेत्—न; प्रयोगे प्रापकशास्त्रीयविषयताप्रतिब-न्धेन बाधकाभावात् । रागप्राप्तनिषेधे त्वर्थवशसम्पन्नप्रवृत्तिप्रति-

बन्धकत्वेऽपि प्रमाणस्य विषयताप्रतिबन्धाभावाद्बाधव्यवहारो भाक्त इत्यनुसन्धेयम् । तस्मात्सिद्धं श्रुतिलिङ्गादावप्राप्तबाध एवेति ॥ सूत्रं प्रयोजनं च स्पष्टम् ॥

इति श्रीपूर्वोत्तरमीमांसापारावारधुरीणश्रीरुद्रदेवसूनुश्रीखण्डदेवकृतौ मीमांसाकौस्तुभे तृतीयाध्याये तृतीयपादे सप्तमं बलाबलाधिकरणम् ॥

समाप्तोऽयं मीमांसाकौस्तुभः ॥

श्रीविश्वेशार्पणमस्तु ॥

मुद्रक :
बब्बर प्रिंटर्स, मौजपुर, दिल्ली-110053.